ऽनित्यत्वप्रसञ्जनम् NyāySu.(Ja.) 415B. 4 (*on* ii. 2.10)

**अनित्यत्वप्राप्ति** (anityatva-prāpti) *f.* undesired possibility of impermanence (दृशः) अंशाभ्यां चेन्मानावधिभावः, अंशाश्च नास्याः, तन्मानाभावात्, अनित्यत्वप्राप्तेरदृक्त्वप्रसङ्गाच्चान्यथा IṣṭaSi. 6. 19; प्रदीपवदेव सविकारत्वेनानित्यत्वप्राप्तौ कृतप्रणाशाकृताभ्यागमप्रसङ्गात् SarvaDaSaṁ. 4. 28.

**अनित्यत्वबोधनार्थ** (anityatvabodhanārtha) *adj.* meant for the sake of indicating non-obligatoriness (नित्यं वृद्धशरादिभ्यः) इह मयडिति भाषायामित्यादि चानुवर्तते। आरम्भसामर्थ्यादेवास्य नित्यत्वे सिद्धे नित्यग्रहणं क्वचिदन्यत्रापि नित्यमयड्विधानार्थमित्याशयेनाह — एकाच इति। शरादिषु मृच्छब्दपाठस्त्वस्यानित्यत्वबोधनार्थः LaŚabdeŚe. ii. 21. 812.

**अनित्यत्वभ्रान्ति** (anityatva-bhrānti) *f.* mistaken notion of non-eternality (देवदत्तादिशब्देऽपि) नित्यैव शक्तिः प्रयोगमात्रमनित्यं तदनित्यतया च शक्तावनित्यत्वभ्रान्तिर्भवति NyāyRa. 674.19 (*on* 5(15). 121)

**अनित्यत्वमात्र** (anityatva-mātra) *n.* mere non-eternality शब्दस्यानित्यत्वं साध्यम् ··· शब्दस्येति ब्रुवता नानित्यत्वमात्रं साध्यत्वेनाभिज्ञायते न धर्मिमात्रम् NyāyVār. 112.17 (*on* i. 1. 33); अनित्यत्वमात्रानुमेयपक्षे कृतकत्वस्य पक्षधर्मता न स्यात् ··· न हि शब्दानित्यत्वयोः कृतकत्वं धर्मः TātpaṬ.(U.) 312. 14 (*on* 5(4).30); PramāMī. 62.9 (*on* ii. 1. 29); कुत एषा प्रतीतिः, इदानीं श्रुतपूर्वः शब्दो नास्तीति अनुमानादिति चेन्न शब्दस्यैव पक्षीकरणे हेतोरनाश्रयत्वात्। अनित्यमात्रसाधनेऽभावस्य नियतकालत्वासिद्धेः NyāyKuA. i. 92. 4; अन्धकूपपतिता वराटिका तदुद्धरणक्लेशस्य तल्लाभसुखादतिशायित्वात् त्यज्यते ··· तस्मादनित्यस्य हेयत्वं नानित्यत्वमात्रप्रयुक्तम् ŚrutaPra. iA. 71.26 (*on* i. 1.1); NyāyPari. 244. 14; न चेदानीं सगुणं दशान्तरे तु निर्गुणम्। तथात्वेऽपि गुणानामनित्यत्वमात्रापत्त्या त्वदभिमतमिथ्यात्वासिद्धेः Nyāyāmṛ. 490A. 1; AdvaiSi. 720. 16.

**अनित्यत्वलक्षण** (anityatva-lakṣaṇa) *adj.* characterised by impermanence सर्वस्यानुमेयस्य वस्तुनो धर्मी प्रतिपादकश्च धर्मः प्रसिद्धो भवति यथा शब्दस्यात्मसत्ता प्रसिद्धा कृतकत्वं च। धर्मस्त्वनित्यत्वलक्षणोऽप्रसिद्धः NyāyVār. 54. 2 (*on* i. 1. 5); *n.* non-eternality as the characteristic, cf. **अनित्यत्वलक्षणपूर्वप्रतिज्ञातस्**.

**अनित्यत्वलक्षणपूर्वप्रतिज्ञातस्** (anityatvalakṣaṇapūrvapratijñā-tas) *adv.* from the earlier assertion regarding non-eternality as the characteristic अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येन व्यभिचारे चोदिते यदि ब्रूयात् युक्तं सामान्यमैन्द्रियकं नित्यं तद्धि सर्वगतम् असर्वगतस्तु शब्दः इति तदिदं शब्देऽनित्यत्वलक्षणपूर्वप्रतिज्ञातः प्रतिज्ञान्तरमसर्वगतः शब्द इति निग्रहस्थानम् SyādvāMañ. 10(154)

**अनित्यत्ववत्** (anityatva-vat) *adv.* like non-eternality ऐहिकानां स्रक्चन्दनादिविषयभोगानां कर्मजन्यतया अनित्यत्ववत् आमुष्मिकानामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो नितरां विरतिः VedāntSā.(Sa.) 3.5.

**अनित्यत्ववादिन्** (anityatvavād-in) *adj.* upholder (of the view) of non-eternality न चानित्यत्ववादिनोऽपि वर्णेषु प्रत्युच्चारणं साक्षाद् भेदाध्यवसानं संमतम् PrakaPañ. 353.15; यदा त्वनित्यादपि शब्दादनित्यत्ववादिनामिवार्थप्रतीतिः सिध्यति ··· तदा किं नित्यत्वसाधनेन NyāyRa. 728. 18 (*on* 6.1); अनित्यत्ववादिशास्त्रसिद्धमित्यर्थः YuktiSneha. 135.24 (*on* i. 1. 6); 133. 22 (*on* i. 1. 6); नास्माभिः प्रत्यभिज्ञा शब्दस्य नित्यत्वे हेतुत्वेनोक्ता येनानैकान्तिकत्वमुच्येत, किं त्वनित्यत्ववादिनं प्रति प्रत्यभिज्ञाप्रत्यक्षविरोधोऽयमुक्तः YuktiSneha. 147.31 (*on* i. 1.6)

**अनित्यत्वविनिश्चयार्थम्** (anityatvaviniścayārtham) *adv.* for the sake of deciding impermanence तत्रानित्यधर्मानुपलम्भो नित्यत्वविनिश्चयार्थमुपदिष्टः नित्यधर्मानुपलम्भोऽनित्यत्वविनिश्चयार्थमुपदिष्टः NyāyKa. 202. 23.

**अनित्यत्वविरोधिन्** (anityatva-virodhin) *adj.* which contradicts non-eternality शब्दोद्देशेन ह्यनित्यत्वमुपादीयमानमनित्यत्वविरोधिधर्मान्तरव्यवच्छेदेनैव विशेषणम् TātpaṬ.(U.) 318.22 (*on* 5(4). 55)

**अनित्यत्वविलक्षण** (anityatva-vilakṣaṇa) *adj.* different from non-eternality यद्यनित्यत्वमेव मिथ्यात्वमुच्यते, तर्हि सिद्धसाधनं मिथ्यात्वानुमानम्। यद्यनित्यत्वविलक्षणं मिथ्यात्वं साध्यते, तर्हि सोपाधिकत्वादिदूषणानि स्युः ŚrutaPra. ii. 244. 20 (*on* ii. 1. 15)

**अनित्यत्वविशिष्ट** (anityatva-viśiṣṭa) *adj.* characterised by non-eternality शब्दस्यैवानित्यत्वविशिष्टस्य साध्यत्वं युक्तम् NyāyRa. 357.16 (*on* 5(4). 37)

**अनित्यत्वविशेषणसार्थक्य** (anityatvaviśeṣaṇa-sārthakya) *n.* meaningfulness of the qualification viz. non-eternality उदयनाचार्यैस्तु ··· इत्यादिकं कुसुमाञ्जलिचतुर्थस्तबकान्ते उक्तम्। तत्प्रौढिमात्रम्, उक्तयुक्तेरनित्यत्वविशेषणसार्थक्यात् GuruCandr. i. 162.18.

**अनित्यत्वविषया** (anityatva-viṣayā) *adj.* (*f.*) pertaining to impermanence परमाणोरनित्यत्वविषया सर्वाप्यनुमितिः अविद्या भ्रमरूपा आभासप्रभवत्वात् Upask. 197. 10 (*on* iv. 1. 5)

**अनित्यत्वव्यतिरिक्त** (anityatva-vyatirikta) *adj.* different from non-eternality अनित्य एव शब्द इत्यवधारणे वा नानित्यत्वव्यतिरिक्तदविरुद्धकृतकत्वाद्यशेषधर्मान्तरनिषेधस्तत्र विधीयते NyāyMañ. ii. 132.27; परमाणुरनित्यत्वव्यतिरिक्तैतन्निष्ठधर्मान्यधर्मवान् PrakaVi. 515. 18.

**अनित्यत्वव्यवहार** (anityatva-vyavahāra) *m.* use of or treatment as being non-eternal स्वेच्छया संज्ञाः क्रियन्त इति च। एतदुपदेशरूपसंकेतात्प्राक्, तत्र संज्ञात्वाग्रहेण तासामनित्यत्वव्यवहारः LaŚabdeŚe. i. 42.15; पाणिन्युपदेशादिरूपसंकेतग्राह्यत्वात्तत्संज्ञात्वस्य संज्ञानामनित्यत्वव्यवहारोऽपि VaiyāSiMañ. 95. 4.

**अनित्यत्वव्यापक** (anityatva-vyāpaka) *adj.* pervasive of non-eternality एवमनित्यत्वव्यापकं कर्मकृतं रूपादिमत्त्वं ब्रह्मणि नास्ति ŚrutaPra. iA. 217. 6 (*on* i. 1. 1); अस्ति ह्यनित्यत्वव्यापकं प्रमेयत्वम् TattvCin. ii(1).318. 1; अनित्यत्वव्यापकमपारमार्थिकत्वम् LaCandr. 404. 36.

**अनित्यत्वव्यापकत्व** (anityatva-vyāpakatva) *n.* the state of being pervasive of non-eternality अथानित्यत्वव्यापकत्वाद्विकाराणामनित्यत्वनिवृत्तये तद्व्यापकविकाररराहित्यमाह ŚrutaPra. iA. 217. 10 (*on* i. 1. 1); शब्देतरत्वस्य अनित्यत्वव्यापकत्वात् उपाधित्वं स्यात् MānaMe. 30.7.

**अनित्यत्वव्यापकत्वाभाव** (anityatvavyāpakatvābhāva) *m.* absence of being pervasive of non-eternality सावयवत्वघटत्वादीनां गुणक्रियादावनित्यत्वव्यापकत्वाभावात् MānaMe. 30. 6.

**अनित्यत्वव्याप्त** (anityatva-vyāpta) *adj.* pervaded by non-eternality यदि चाप्रत्यक्षत्वमनित्यत्वव्याप्तं स्यात्ततो नित्यत्वसंभावनाय प्रत्यक्षत्वमुच्येत NyāyRa. 826. 16 (*on* 6.377); (ब्रह्मणः) तद्रूपस्यानित्यत्वव्याप्तप्राकृतभौतिकरूपविलक्षणत्वेनानित्यत्वाद्यप्रसङ्गात् TattvPrakā. 154B.9 (*on* iii. 2. 15)

**अनित्यत्वव्याप्तता** (anityatvavyāpta-tā) *f.* the state of being pervaded by non-eternality सामान्यमेवानित्यत्वव्याप्ततयाङ्गीक्रियते NyāySu. (Ja.) 415A. 4 (*on* ii. 2.10)

**अनित्यत्वव्याप्ति** (anityatva-vyāpti) *f.* invariable concomitance with non-eternality or impermanence नित्यमस्य ज्ञानं नित्या चेच्छा नित्यश्च प्रयत्न इति चेत्, न सर्वज्ञानेच्छाप्रयत्नानामनित्यत्वव्याप्तेः ŚāstrDī. 116.1 (*on* i. 1. 5); सातिशयत्वेऽपि नित्यत्वं चेश्वरादपकृष्टत्व इव मुक्तान्तरेण साम्य इव च ···। अन्यथोत्कर्षस्याप्यनित्यत्वव्याप्त्या ब्रह्मानन्दोऽप्यनित्यः स्यात् Nyāyāmṛ. 646A.9.

**अनित्यत्वव्याप्य** (anityatva-vyāpya) *adj.* pervaded by non-eternality or impermanence अनित्यत्वव्याप्यकर्मकृतरूपाद्यभावान्नानित्यत्वं ब्रह्मण्यनुमातुं शक्यम् ŚrutaPra. iA. 217.8 (*on* i. 1. 1); नित्येषु चानित्यत्वव्याप्यस्य कार्यत्व ··· [स्यासत्त्वा]दनैकान्तिकत्वमपि नाशङ्कनीयमेव NyāyKu. 91. 9; अनित्यत्वव्याप्यकृतकत्ववांश्चायम् (शब्दः) Upask. 397.5 (*on* ix. 2.2); शब्दो नित्यः कृतकत्वादिति। अत्र कृतकत्वमनित्यत्वव्याप्यं नित्यत्वं बाधते BhāṭṭCin. i. 32. 28 (*on* i. 1.4)

**अनित्यत्वशून्या** (anityatva-śūnyā) *adj.* (*f.*) devoid of non-eternality अनित्यत्वशून्या।··· कुवृत्तीरपहरतुतरामर्हतां वागसौ वः JinaŚ. 4. 18.

**अनित्यत्वश्रुति** (anityatva-śruti) *f.* scriptural statement about non-eternality अनित्य एव जीवः। अनित्यत्वश्रुतेः TattvPrakā. 119A.11 (*on* ii. 3. 30); 119B. 5 (*on* ii. 3. 30)

**अनित्यत्वसंशय** (anityatva-saṁśaya) *m.* doubt regarding non-eternality यथा नित्यः शब्दः अनित्यधर्मानुपलब्धेः अनित्यः शब्दो नित्यधर्मानुपलब्धेरिति शब्दे नित्यानित्यधर्मयोरनुपलम्भान्नित्यानित्यत्वसंशये सति तद्विचारोऽभूत् अन्यतरधर्मग्रहणे तत्त्वनिश्चयाद्विचारस्याप्रवृत्तेः NyāyKa. 202. 20.

**अनित्यत्वसंदेह** (anityatva-sandeha) *m.* doubt regarding non-eternality 'शब्दोऽनित्यः शब्दत्वात्' इत्यादौ यदा शब्देऽनित्यत्वसंदेहस्तदा सपक्षत्वं घटादीनामेव SiddhāMu. 44. 15 (*on* 73)

**अनित्यत्वसमन्वय** (anityatva-samanvaya) *m.* invariable connection with non-eternality अनित्यफलदायित्वं ज्ञानहीनस्य कर्मणः। कूटस्थफलदायित्वं विद्येतस्येति चेन्मतम्। नैवमारभ्यमाणस्य ह्यनित्यत्वसमन्वयात् (प्रत्येकस्य वस्तुतः) TaiUBhāVā. 9. 7(1); न चान्यतम एतेषां मोक्षो युक्त्योपपद्यते। उत्पत्त्यादिप्रकाराणामनित्यत्वसमन्वयात् BṛĀraUBhVā. iii. 3. 27.

**अनित्यत्वसंभव** (anityatva-sambhava) *m.* probability of non-eternality तत्र हि (काठकादिषु) समाख्यानमात्रम्, अत्र तु पारंपर्येणैव सर्वेषामविगीतस्मरणादनित्यत्वसंभवः ŚāstrDī. 39. 18 (*on* i. 3. 7)

**अनित्यत्वसहचरित** (anityatva-sahacarita) *adj.* co-existent with impermanence यदि घटवदनित्यत्वं शब्दस्येष्यते अनित्यत्वसहचरितं सावयवत्व-

मप्यस्य स्यात् NyāyPari. 244.2.

**अनित्यत्वसाधक** (anityatva-sādhaka) *adj.* which proves non-eternality एवमनेकान्तो विरुद्धो वायं हेतुरित्युक्त्वाह। अनित्यत्वसाधकप्रमेयत्वहेतुः प्रमेयत्वप्रस्तुतहेत्वन्यान्यानैकान्तिकान्यः प्रमेयत्वादिति NyāyPari. 241.14.

**अनित्यत्वसाधकता** (anityatvasādhaka-tā) *f.* the state of being what proves non-eternality प्रमेयत्वस्यानित्यत्वेनौत्सर्गिकी व्याप्तिः। अपवादेन त्वाकाशादौ नित्यत्वम्। अपवादाभावाच्छब्दादावनित्यत्वसाधकता (प्रमेयस्य) NyāySu.(Ja.) 158A. 4 (*on* i. 2. 1)

**अनित्यत्वसाधकत्व** (anityatvasādhaka-tva) *n.* the state of being what proves non eternality न हि शब्देऽविद्यमानत्वेनैव चाक्षुषत्वस्यानित्यत्वसाधकत्वाभावे सिद्धे व्याप्तिचिन्ता क्रियते NyāySu.(Ja.) 28A. 8 (*on* i. 1. 1)

**अनित्यत्वसाधन** (anityatva-sādhana) *adj.* which proves impermanence कथमनित्यः शब्द इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते प्रयत्नानन्तरीयकत्वादित्यनेनानित्यत्वसाधनधर्ममात्रमभिधीयते PadārthaSaṁ. 251. 13; तत्र चोपलभ्यमानं कृतकत्वमन्यत्र बुद्ध्यादौ संशयहेतुरिति सर्वमनुमानमनित्यत्वसाधनं न स्यात् NyāyVār. 98. 10 (*on* i. 1. 23); प्रयत्नानन्तरीयकत्वात् पूर्वमसतः प्रयत्नानन्तरमुपलभ्यमानत्वादिति हेतुवचनेनानित्यत्वसाधनधर्ममात्रमभिधीयते NyāyKa. 253.24; साधनाव्यापक इत्येतावदुच्यमानेऽनित्यत्वसाधने कृतकत्वे सावयवत्वमुपाधिः स्यात् TārkiRa. 66. 10; *n.* proving of non-eternality (through inference) अनित्यत्वसाधनमाह TātpaṬ.(Vā.) 456.18 (*on* ii. 2. 21); (शब्दस्य) कार्यत्वादनित्यत्वसाधने वेदवादिनं प्रत्यसिद्धिः PrakaVi. 284. 25; 505. 16; सावयवत्वादनित्यत्वसाधने कृतकत्वस्य कृतकत्वादनित्यत्वसाधने सावयवत्वस्य समव्याप्तहेतुप्रयोगे तत्स्वरूपस्य चोपाधित्वव्युदासाय विशेषणत्रयम् NyāyPari. 109. 1; 285. 2; एतेन सावयवत्वादिना भगवल्लोकादेरनित्यत्वसाधनमप्यपास्तम् Nyāyāmṛ. 498B.10; प्रत्यक्षत्वेन हि नित्यत्वं साधयतो घटादिभिर्व्यभिचारः स्यात्, अप्रत्यक्षत्वेन चानित्यत्वसाधने व्योमादेरप्यनित्यता स्यात् YuktiSneha. 147.29 (*on* i. 1.6)

**अनित्यत्वसाधनव्यतिरेकित्व** (anityatvasādhanavyatireki-tva) *n.* the state of having the absence of that which proves non-eternality कदाचिन्नित्यत्वसाधनव्यतिरेकस्योपाधित्वं कदाचिदनित्यत्वसाधनव्यतिरेकित्वस्येति वस्तुव्यवस्था न स्यात् उपाधेर्नित्यदोषत्वात् TattvCin. ii(1). 400.5.

**अनित्यत्वसाध्यधर्म** (anityatva-sādhyadharma) *m.* the major term or probandum in the form of non-eternality अनित्यत्वसाध्यधर्मस्वरूपविकल्पनेन शब्दनित्यत्वापादनं नित्यसमः प्रतिषेधः NyāyMañ. ii. 186. 19.

**अनित्यत्वसिद्ध** (anityatva-siddha) *adj.* established through impermanence अनित्यत्वसिद्धेन द्रव्यपारतन्त्र्येण द्रव्यकर्मभ्यां विवेचयति (गुणम्) TātpaṬ.(Vā.) 217.21 (*on* i. 1. 10)

**अनित्यत्वसिद्धि** (anityatva-siddhi) *f.* establishment of non-eternality असिद्धे चानित्यत्वे शब्दस्य बलान्नित्यत्वमेव भवति कारणाभावादित्यनित्यत्वसिद्धिकारणस्य प्रयत्नानन्तरीयकत्वस्याभावादित्यर्थः NyāyMañ. ii. 180. 4; SarvaDaSaṁ. 12.178; तस्मात्प्रत्यभिज्ञाबाधेनानित्यत्वसिद्धिः BhāṭṭCin. i. 133. 14 (*on* i. 1.6)

**अनित्यत्वस्मारकत्व** (anityatvasmāraka-tva) *n.* the state of being that which causes the recollection of non-eternality गन्धवत्त्वस्य नित्यात्मादिव्यावृत्तेः कृतकत्वादिवदनित्यत्वस्मारकत्वमनित्याबादिव्यावृत्तेः निरवयवत्वादिवन्नित्यत्वस्मारकत्वमिति NyāyPari. 63. 1.

**अनित्यत्वस्वभाव** (anityatva-svabhāva) *adj.* having the nature of impermanence घटादयोऽनित्य(त्व)स्वभावा अपि नाकस्मादनित्या भवन्ति। तथात्वे चोत्पत्त्युत्तरक्षण एव विनाशप्रसङ्गात् NyāySu.(Ja.) 330B. 2 (*on* ii. 2. 2)

**अनित्यत्वस्वभावत्व** (anityatvasvabhāva-tva) *n.* the state of having the nature of non-eternality (घटादीनाम्) चानित्यत्वस्वभावत्वे द्रव्यत्वव्याघातः TārkiRa. 302. 2.

**अनित्यत्वहेतुक** (anityatvahetu-ka) *adj.* having non-eternality as the middle term or probans यत्पूर्वं हृदि स्थितमिच्छादीनां पारतन्त्र्ये साध्येऽनित्यत्वहेतुकानुमानं, तदुद्घाटयति TātpaṬ.(Vā.) 218. 9 (*on* i. 1. 10)

**अनित्यत्वहेतुत्व** (anityatvahetu-tva) *n.* the state of having non-eternality as the probans आत्मनः किं महती विकृतिरनित्यत्वहेतुत्वादनभ्युपगन्तव्या। किं वा विकृतिमात्रम् NyāySu.(Ja.) 416B. 4 (*on* ii. 2.10)

**अनित्यत्वाङ्गीकार** (anityatvāṅgīkāra) *m.* acceptance of transitoriness न च ... ध्वनीनामपि नित्यत्वं स्यादिति वाच्यम्।... वर्णाभिव्यञ्जकध्वनीनामेवानित्यत्वाङ्गीकारात् BhāṭṭCin. i. 135. 21 (*on* i. 1.6)

**अनित्यत्वातिरिक्त** (anityatvātirikta) *adj.* different from transitoriness शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् मेयत्वात् TattvCin. ii(1).331. 3.

**अनित्यत्वादि** (anityatvādi) *adj.* non-eternality or impermanence etc. अनित्यत्वादयो धर्माः कृतकत्वादयो न हि। ध्वनिनानुगमो नैषाम् ŚlokaVār. 5. 4(30) (355. 5); सोऽन्यदा जातसन्मतिः।... लक्ष्मीतिलकसंज्ञस्य मुनेरानर्च्छ शिष्यताम्।... अनित्यत्वादिभिः कृत्वा चेतनां भावनामयीम् PadmP.(Ra.) 17.159; शब्दस्यात्मभूता अपि कृतकत्वानित्यत्वादयः शब्दग्रहणे न प्रतिभासन्ते TātpaṬ.(U.) 264. 20 (*on* 5(3). 99); 'साध्यधर्मेण' अनित्यत्वादिना 'विशिष्टो धर्मी' शब्दादिः PramāMī. 46. 14 (*on* i. 2.15); अन्येऽप्यनित्यत्वादौ साध्ये कृतकत्वादयो हेतवोऽन्वयव्यतिरेकिणो द्रष्टव्याः TarkBhā.(Ke.) 41. 5; तेषां जडत्वानित्यत्वादिना ब्रह्मणोऽपि दूषणप्रसङ्गात् NyāySu.(Ja.) 180B. 13 (*on* i. 4.2); 424B. 11 (*on* ii. 2.12); रीत्यन्तरेणानित्यत्वादेरेवोक्तत्वात् Vādā. 14. 2; चतुर्विधानां परमाणूनां रूपादिमत्त्वात् ... नित्यत्वादिविपर्ययोऽनित्यत्वादिः प्रसज्येत VedāntKau. 189. 10 (*on* ii. 2. 15); शान्तः (रसः) ...। अनित्यत्वादिनाशेषवस्तुनिःसारता तु या। परमात्मस्वरूपं वा तस्यालम्बनमिष्यते SāhiDa. 192.6; संबन्धस्त्वनित्यत्वसाधनपारतन्त्र्यादिवदवर्जनीयसंनिधिरिति विवरणोक्तं प्रत्युक्तम्।... सुखं मे स्यादिति संबन्ध इवानित्यत्वादौ प्रार्थनाभावात् Nyāyāmṛ. 637A. 6.

**अनित्यत्वादिक** (anityatvādi-ka) *adj.* transitoriness etc. नानाकारं हि तद्वस्तु केनचिदाकारेण नित्यत्वादिकं केनचिच्चानित्यत्वादिकं बिभ्रन्न विरोत्स्यते ŚāstrDī. 101. 29 (*on* i. 1. 5); अनित्यो घट इत्यादौ अनित्यत्वादिकमिव सत्त्वमपि घटगतमेव Nyāyāmṛ. 82B.6.

**अनित्यत्वादिकल्पन** (anityatvādi-kalpana) *n.* assumption of non-eternality etc. अनित्यत्वादिकल्पनात्तैर्विवादस्तत्प्रतिक्षेपश्च क्रियत इति चेन्न ŚatDū. 119. 23.

**अनित्यत्वादिदर्शन** (anityatvādi-darśana) *n.* perception of non-eternality etc. आत्मा ... अनित्यत्वादिदर्शनेनोत्पन्नेहामुत्रार्थभोगविरागः ... वीतशोको भवति ŚvetāUBh. 3.1 (*on* 1.0); 216. 17 (*on* 5.13); चतुर्विधानां परमाणूनां रूपादिमत्त्वात् ... अनित्यत्वादिः प्रसज्येत, रूपादिमतां घटादीनामनित्यत्वादिदर्शनात् VedāntKau. 189.11 (*on* ii. 2.15)

**अनित्यत्वादिदोष** (anityatvādi-doṣa) *m.* defects such as impermanence etc. यदाशङ्क्यते ... भिन्नायतनानां च शुकादीनामनेकत्वसावयवत्वानित्यत्वादिदोषदर्शनाद् ब्रह्मणोऽपि तद्वत्प्रसङ्ग इति, तदपि परिहृतं भवति BrahmSūBh.(Śaṅ.) 103.5 (*on* i. 2.7); 416. 4 (*on* ii. 2. 42); ब्रह्मणो नानात्वयोगे दोषो महान्, को दोषः।... नानारूपेण परिणतत्वादनित्यत्वादिदोषः ... प्रसज्येत SanatBh. 206..12 (*on* 1.20); 255.5 (*on* 2.26); वासुदेवा एवैते संकर्षणादयः ... 'निरवद्या' अनित्यत्वादिदोषरहिताः Bhām. 467. 16 (*on* ii. 2.44); विकारावर्तिब्रह्मप्राप्तिश्चेत्, तत्र विकारावर्तीति कोऽर्थः।... किं वा विकारदेशाद् देशान्तरवर्ति।... चरमे स्वतः परिच्छिन्नत्वेनानित्यत्वादिदोषः PrakaVi. 1078. 24; कथं ब्रह्मणो विलक्षणरूपत्वं येनानित्यत्वादिदोषाभावः TattvPrakā. 154B.13 (*on* iii. 2. 16); 155B.9 (*on* iii. 2.18)

**अनित्यत्वादिधर्मन्** (anityatvādi-dharman) *adj.* [P. iv. 1. 11] possessing the properties of impermanence etc. जातिरप्येवमनित्यत्वादिधर्मा स्यात् ŚāstrDī. 101.28 (*on* i. 1. 5)

**अनित्यत्वादिपरिहार** (anityatvādi-parihāra) *m.* avoidance (of the possibility) of non-eternality etc. परमाणूनाम् ...। अनित्यत्वादिपरिहाराय रूपादिशून्यत्वाङ्गीकारे कारणगुणपूर्वकत्वासिद्धिः BrahmSūBh.(Śrī.) ii. 77. 4 (*on* ii. 2.15)

**अनित्यत्वादिप्रसक्ति** (anityatvādi-prasakti) *f.* undesired contingency of non-eternality etc. त्वंपदार्थस्य च जीवात्मनः ...। अभोक्तृत्वेऽपि नानात्वेनावच्छिन्नत्वाद् अनित्यत्वादिप्रसक्तौ ... तत्पदार्थासंगतिस्तदवस्थैव Bhām. 62. 19 (*on* i. 1.1); परमाणूनाम् ... रूपादिमत्त्वे चानित्यत्वादिप्रसक्तिः VedāntDī. 104. 9 (*on* ii. 2. 16)

**अनित्यत्वादिप्रसक्तिवत्** (anityatvādiprasakti-vat) *adv.* like the undesired contingency of impermanence etc. ब्रह्मण एव विकारित्वे अनित्यत्वादिप्रसक्तिवत् ब्रह्मण एवाधिष्ठानत्वे बाधकाभावेन द्वितीयस्याधिकरणस्याकल्पनात् AdvaiSi. 573. 11.

**अनित्यत्वादिप्राप्ति** (anityatvādi-prāpti) *f.* undesired possibility of impermanence etc. ईश्वरप्राप्तिसाधनभक्त्यर्थं तस्याप्राकृतरूपसमर्थनादस्ति शास्त्रादिसंगतिः। अन्यथानित्यत्वादिप्राप्त्या न तत्र भक्तिरुत्पद्यते TattvPrakā. 154A. 9 (*on* iii. 2. 14)

**अनित्यत्वादिभय** (anityatvādi-bhaya) *n.* fear (of the undesired possibility) of impermanence etc. अनित्यत्वादिभयात् परमाणूनां रूपादिशून्यत्वे कार्यगुणस्य कारणगुणपूर्वकत्वासिद्धिः VedāntSā.(Rā.) 173. 5 (*on* ii. 2. 15); VedāntDī. 104. 8 (*on* ii. 2.16)

**अनित्यत्वादिभ्रम** (anityatvādi-bhrama) *m.* erroneous cognition of impermanence etc. 'अस्तीत्येवोपलब्धव्यः, अजो नित्यः' इत्यादीनाम-

खण्डार्थत्वेऽपि ··· अनित्यत्वादिभ्रमनिवर्तकत्वसंभवात् GuruCandr. i. 303. 16.

**अनित्यत्वादिमत्** (anityatvādi-ma(n)t) *adj.* possessing impermanence etc. स्वप्नादिसमेति चानित्यत्वादिमदित्यर्थः GuruCandr. ii. 307.11.

**अनित्यत्वादिवाद** (anityatvādi-vāda) *m.* view of impermanence etc. (जीवस्य) देहाख्यपिण्डातिरेके सिद्धे अनित्यत्वादिवादस्यायत्नवार्यत्वात् NyāySiA. 211.23.

**अनित्यत्वादिविषय** (anityatvādi-viṣaya) *adj.* pertaining to impermanence etc. अस्य पुरुषश्रेष्ठस्य संसारसमूहेऽनित्यत्वादिविषयं प्रसंख्यानं धीसंततिरूपावर्तते इत्यन्वयः VedāntKa. 40. 20 (*on* i. 1. 1)

**अनित्यत्वादिसर्वदोषप्रसङ्ग** (anityatvādisarvadoṣa-prasaṅga) *m.* undesired contingency of all defects like impermanence etc. भवतां पुनर्वेदवादिनां सृष्टिकर्तृत्वे तत्त्वान्तरपरिणाम एवेत्यात्मनोऽनित्यत्वादिसर्वदोषप्रसङ्गः PraśnaUBh. 297. 14 (*on* 6. 3)

**अनित्यत्वादिसाध्यान्तर** (anityatvādi-sādhyāntara) *n.* other major term or probandum like impermanence etc. एवमनित्यत्वादिसाध्यान्तरेऽप्यूह्यम् NyāyPari. 291. 1.

**अनित्यत्वाद्यनर्थापत्ति** (anityatvādyanarthāpatti) *f.* contingency of undesirable consequence of impermanence etc. परमाणूनाम् ··· रूपादिशून्यत्वाङ्गीकारे कारणगुणपूर्वकत्वासिद्धिः। तत्सिद्धये पुनरपि रूपादिमत्त्वाङ्गीकारे च अनित्यत्वाद्यनर्थापत्तिः BrahmSūBh.(Śrī.) ii. 77. 5 (*on* ii. 2. 15)

**अनित्यत्वाद्यप्रतीति** (anityatvādy-apratīti) *f.* non-cognition of impermanence etc. किं पुनरनेन भेदलक्षणेन सामान्येन स्वलक्षणं समानमिति प्रत्येयम्, अथान्यदेव।··· यदि स्वलक्षणं कथं विकल्पस्य विषयः।··· स्वलक्षणे चानित्यत्वाद्यप्रतीतेरताद्रूप्यम् PramāVāSvopVṛ. 27.10.

**अनित्यत्वाद्यप्रसङ्ग** (anityatvādy-aprasaṅga) *m.* absence of the undesired possibility of impermanence etc. ब्रह्मणः। न च तर्हि तस्यानित्यत्वमरूपश्रुतिवैयर्थ्यं चेति वाच्यम्। तद्रूपस्य···अनित्यत्वाद्यप्रसङ्गात् TattvPrakā. 154B. 10 (*on* iii. 2. 15)

**अनित्यत्वाद्यभाव** (anityatvādy-abhāva) *m.* absence of impermanence etc. न विकल्पविषयेष्वर्थेष्वर्थक्रियाकारित्वम्। नापि स्वलक्षणस्यानित्यत्वाद्यभावः PramāVāSvopVṛ. 27. 26.

**अनित्यत्वाद्यापत्ति** (anityatvādy-āpatti) *f.* undesired contingency of non-eternality or impermanence etc. विपक्षे तु ···। ब्रह्मणो जडत्वानित्यत्वाद्यापत्तिः Nyāyāmṛ. 584A. 7; आत्मनः ··· स्वाभाविकमध्यमपरिमाणे चानित्यत्वाद्यापत्तिः BhedaDhi. 40. 3.

**अनित्यत्वाद्यापात** (anityatvādy-āpāta) *m.* undesired contingency of impermanence or non-eternality etc. न चात्मनि धर्माभावः ···। न परमार्थतो धर्मा इति चेन्न, नित्यत्वाद्यभावेऽनित्यत्वाद्यापातात् Vādā. 138. 5.

**अनित्यत्वाद्यारोप** (anityatvādy-āropa) *m.* superimposition of non-eternality etc. विवर्ताधिष्ठानत्वमिहोपादानत्वम्। तच्च निर्गुणेऽप्यविरुद्धं जात्यादावनित्यत्वाद्यारोपोपलब्धेः VedāntKa. 248. 17 (*on* ii. 1.37)

**अनित्यत्वाध्यवसाय** (anityatvādhyavasāya) *m.* ascertainment of non-eternality न चानित्यगुणस्यापि नभसो नित्यतेति सांप्रतम्, तस्याप्यनुमानागमाभ्यामनित्यत्वाध्यवसायात् NyāyMa. 21. 2.

**अनित्यत्वानुपपत्ति** (anityatvānupapatti) *f.* untenabilitiy of impermanence यदि तु वक्ता जानाति असौ शब्दोऽमुमर्थं प्रत्याययिष्यतीति, ततो नूनमनेनासौ तत्प्रत्यायनसामर्थ्येन प्रागवधृत इति अनित्यत्वानुपपत्तिरित्याह NyāyRa. 792. 16 (*on* 6. 247); व्यक्तीनां भेदादनित्यत्वानुपपत्तिरेव KhaṇḍanKhā. 1084. 13.

**अनित्यत्वानुमा** (anityatvānumā) *f.* inference of non-eternality धीत्वादकर्तृत्वबुद्ध्यनित्यत्वानुमयोश्च सामान्यविषयत्वात् बाधः NayaVi. 191. 3 (*on* i. 1.5)

**अनित्यत्वानुमान** (anityatvānumāna) *n.* inference of non-eternality सत्त्वादिभिरनित्यत्वनान्तरीयककृतकत्वधर्मैरनित्यत्वानुमानं स्यात् TātpaṬ.(Vā.) 188.13 (*on* i. 1. 5); न चाशरीरस्य प्रयत्नः संभवति ··· नित्योऽस्य प्रयत्न इति चेत्, न ··· अनित्यत्वानुमानात् NyāyRa. 661.11 (*on* 5(15). 78); 353.12 (*on* 5(4).22); कार्यत्वेन अनित्यत्वानुमाने ··· असर्वज्ञत्वाद्युपेतकर्तृपूर्वकत्वमुपस्थापयति Kiraṇā. 97. 17; यत्तु — परमाणुमनःसु नित्यम् अणुत्वम् — इति, तत् न, तत्परिमाणस्य मूर्तपरिमाणत्वेन घटपरिमाणवत् अनित्यत्वानुमानात् TarkSaṁ.(Ā.) 66. 6; संशये चानुमानम्, अत्र तु विपर्यय इति चेत्, स कथम्। न तावद् विवक्षितज्ञानविशेषसिद्धौ तस्यानित्यत्वानुमानात् NyāyKu. 90.15; न हि प्रमाणेनागृह्यमाणे धर्मिणि परमाण्वादावनित्यत्वानुमानमिह न संभवति TarkBhā.(Ke.) 92. 6; अनित्यत्वानुमानेन स्वधर्मिसिद्धये परमाणवोऽनुमानसिद्धा अपेक्षणीयाः SarvaDaKau. 48. 15; न चानित्यत्वानुमानेनास्य सत्प्रतिपक्षता YuktiSneha. 146. 3 (*on* i. 1. 6); न च ··· अनित्यत्वानुमानात् कथं नित्यत्वमिति वाच्यम् BhāṭṭCin. i. 14. 10 (*on* i. 1.3)

**अनित्यत्वानुषङ्ग** (anityatvānuṣaṅga) *m.* close association with non-eternality न चोक्तलक्षणकार्यत्वाभ्युपगमेऽप्यात्मनोऽनित्यत्वानुषङ्गात् प्रतिसंधानाभावोऽनुषज्यते SyādvāMañ. 9(101)

**अनित्यत्वान्तरयोग** (anityatvāntara-yoga) *m.* association with another non-eternality अनित्यमनित्यत्वान्तरयोगादनित्यं स्वभावतो वा TārkiRa. 301. 18.

**अनित्यत्वापत्ति** (anityatvāpatti) *f.* undesired contingency of non-eternality or impermanence गोत्वम् ···। न च पिण्डे जायमाने जायते अनित्यत्वापत्तेः TātpaṬ.(Vā.) 400. 21 (*on* ii. 1.36); नेयमादिमत्पुरुषनिमित्ता कठादिसमाख्या ··· अतो नानया शाखानामनित्यत्वापत्तिः NyāyRa. 954.19 (*on* 8. 11); सर्वात्मना प्राक्तनरूपत्यागाद् अनित्यत्वापत्तौ श्रौतनित्यत्वविरोधात् VedāntKa. 227. 9 (*on* i. 4. 23); ज्ञानमप्यात्मनि समवेतं तच्च क्षणिकं ततस्तद्विनाशे आत्मनोऽपि विनाशापत्तेरनित्यत्वापत्तिः SyādvāMañ. 8(170); 16(184); स्वभावभेदादनित्यत्वापत्त्या स्थिरैकरूपताहानिप्रसङ्गः SyādvāMañ. 27(12); न च ··· पुनर्जीवस्यानित्यत्वापत्तिरिति वाच्यम् TattvPrakā. 119B. 6 (*on* ii. 3. 30); 155B. 10 (*on* iii. 2. 18); परमार्थतः ईश्वराज्ञेनाज्ञानकृतजीवत्वानाशात् अनित्यत्वापत्तिर्जीवस्य YuktiSneha. 113. 38 (*on* i. 1. 5); 127.5 (*on* i. 1.5); यदि तु परमाणोः सावयवतायामनित्यत्वापत्त्या ··· सांशत्वं नेष्यते ŚivārkaMaDī. ii. 68.18 (*on* ii. 2. 10); पटे पटत्वम्, इह शुक्लत्वम् इत्यादि प्रतीत्या अयुतसिद्धयोः भेदः, तथा अयं गौः अयं शुक्लः इत्यादिप्रतीत्याभेदस्यापि सिद्धेः। न चैवं व्यक्त्यभेदे जातेरनित्यत्वापत्तेः MīmāKau. i. 146. 18 (*on* i. 3. 33)

**अनित्यत्वापात** (anityatvāpāta) *m.* undesired contingency of impermanence अन्यः कश्चिदाधारार्थोऽस्तु प्रतीतिसिद्धत्वात् प्रतीतेश्चैवमनन्योपपाद्यत्वात्। मैवम्। तदनित्यं वा स्यात् नित्यं वा। नाद्यः ··· गोत्वादिनित्यत्वन्यायसाम्येऽपि अस्यानित्यत्वे तेषामप्यनित्यत्वापातात् KhaṇḍanKhā. 1109. 18; नात्मा शक्तिमान् निरंशत्वात् ···। विकारित्वे चर्मवदनित्यत्वापाताच्च PrakaVi. 17. 18.

**अनित्यत्वापादकत्व** (anityatvāpādaka-tva) *n.* the state of being that which leads to non-eternality अभेदपक्षस्यानित्यत्वापादकत्वेन सूत्रे दूरत एव त्यागः Bhāsk. i. 100. 11 (*on* i. 2. 6)

**अनित्यत्वाप्रकाशत्वोपपत्ति** (anityatvāprakāśatvopapatti) *f.* tenability of non-manifestation of impermanence अनित्यत्वस्य सद्भावेऽपि अवधिद्वयास्वयंप्रकाशत्वादेव अनित्यत्वाप्रकाशत्वोपपत्तेः ŚrutaPra. iA. 138. 20 (*on* i. 1. 1)

**अनित्यत्वाप्रसङ्ग** (anityatvāprasaṅga) *m.* absence of the undesired possibility of impermanence (जीवस्य) न सूर्यकाद्युपमासंभवो नाप्यनित्यत्वापत्तिः।··· उपाध्यायत्तत्वादिसर्वप्रतिबिम्बधर्मानभ्युपगमेनानित्यत्वाप्रसङ्गात् TattvPrakā. 155B. 12 (*on* iii. 2.18)

**अनित्यत्वाबोधकत्व** (anityatvābodhaka-tva) *n.* the state of being the non-conveyer of impermanence नैयोगिकस्यानित्यत्वावगमात्। न चैतच्छ्रुतिविरोधेन तस्यानित्यत्वाबोधकत्वम् AdvaiSi. 874.21.

**अनित्यत्वाभाव** (anityatvābhāva) *m.* absence of non-eternality, absence of temporariness यत्र कृतकत्वं तत्रानित्यत्वम्, अनित्यत्वाभावे कृतकत्वासंभवः NyāyBi. 3. 122; प्रसिद्धे तद्भावे हेतुभावे वा अनित्यत्वाभावे कृतकत्वं न भवति PramāVāSvopVṛ. 11.21; 64.26; यत्र वस्तु साध्यत्वेन प्रतिज्ञायते तत्रावस्तुनो विपक्षत्वादनित्यत्वाभावेन कृतकत्वाभावः शक्यो दर्शयितुम् TātpaṬ.(U.) 223.19 (*on* 5(2). 125); विपरीतव्यतिरेको यथा अनित्यत्वाभावे न भवत्येव कृतकत्वम् PramāMī. 58. 19 (*on* ii. 1. 26); यत्र द्रव्यान्तरसंपर्केण लौहित्यं तथाधीयते यथा यावदाश्रयमवतिष्ठते तत्र अनित्यत्वाभावात् पूर्वेण न प्राप्नोतीत्ययमारम्भः PadMañ. *on* KāśiVṛ. *on* P. v. 4. 32; कर्तव्यैव परमात्मनि भक्तिः, ब्रह्मणो रूपवत्त्वाभावेनानित्यत्वाभावात् TattvPrakā. 154B. 3 (*on* iii. 2. 14); एवम् ··· शब्दे नित्यत्वाभावाभावं (v.l. अनित्यत्वाभावं) नित्यत्वमपि साधयेत् TarkKau. 14. 1.

**अनित्यत्वाभावप्रसङ्ग** (anityatvābhāva-prasaṅga) *m.* undesired contingency of the absence of non-eternality न तु विनाशावच्छिन्नसत्तायोगः प्रागभावे सत्ताहीनेऽनित्यत्वाभावप्रसङ्गात् TarkBhā.(Ke.) 73. 6.

**अनित्यत्वाभिधान** (anityatvābhidhāna) *n.* assertion of non-eternality सावयवत्वादनित्यत्वाभिधानेऽप्यवयवजन्यत्वं फलितम् NyāySiA. 231.15; इन्द्रियाणामनित्यत्वमुक्त्वा विशिष्य मनसोऽनित्यत्वाभिधानात् TattvPrakā. 126B.12 (*on* ii. 4. 4); एतेनेति आश्रयानित्यत्वेनानित्यत्वाभिधानेनेत्यर्थः Upask. 282.13 (*on* vii. 1. 3)

**अनित्यत्वाभ्युपगम** (anityatvābhyupagama) *m.* admission of non-eternality अविरोधाय वा धर्मिणोऽनित्यत्वाभ्युपगमे वैनाशिकपक्षोक्तदोषप्रसङ्गः TātpaṬ.(Vā.) 507. 25 (*on* iii. 1. 5); (प्रकृतेः) हेतुमत्त्वानित्यत्वाभ्युपगमेऽप्य-

नुमानप्रवृत्तिसंभवात् ŚrutaPra. ii. 289. 18 (*on* ii. 2. 10); न चैवं कल्पितस्यानित्यत्वाभ्युपगमविरोधः AdvaiSi. 622. 28.

**अनित्यत्वायोग** (anityatvāyoga) *m.* non-association with impermanence एक एव समवायः सर्वत्र समवेतबुद्धिप्रवर्तकः ··· नित्यः देशकालादिभेदेऽप्यभिन्नस्य सत्तावदेवानित्यत्वायोगात् Upask. 353. 2 (*on* vii. 2. 28)

**अनित्यत्वालोचन** (anityatvālocana) *n.* reflection on non-eternality अर्थित्वं तावन्मोक्षविषयं देवादीनामपि संभवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम् BrahmSūBh.(Śaṅ.) 186. 16 (*on* i. 3.26)

**अनित्यत्वावकाश** (anityatvāvakāśa) *m.* scope for non-eternality साध्यमनित्यत्वम् अनित्यं नित्यं वा। तत्रानित्यत्वे कदाचित् तदभावाच्छब्दो नित्यः स्यादिति न पश्चादनित्यत्वावकाशः TārkiRa. 301. 6; 303.1.

**अनित्यत्वावगति** (anityatvāvagati) *f.* knowledge of non-eternality यज्जन्यं तदनित्यमिति प्रमाणेन अनित्यत्वावगतेः ŚaṅkaVi.(Ā.) 131. 18.

**अनित्यत्वावगम** (anityatvāvagama) *m.* knowledge of non-eternality श्रुत्या नैयोगिकस्यानित्यत्वावगमात् AdvaiSi. 874. 21; VedāntPari. 10.3.

**अनित्यत्वावधारण** (anityatvāvadhāraṇa) *n.* ascertainment of non-eternality न चैवं दुःखादि अपि नित्यमनुमेयं तस्य अनात्मत्वेन अनित्यत्वावधारणात् TarkSaṁ.(Ā.) 111. 5; कार्यजातस्य कृतकत्वेनानित्यत्वावधारणात् प्रमाणविरुद्धं नित्यत्वाभिधानमसंगतम् YuktiSneha. 114. 34 (*on* i. 1.5)

**अनित्यत्वावश्यकत्व** (anityatvāvaśyakatva) *n.* necessity of (acceptance of) non-eternality जलीयादित्रुटावपि — °उक्तगौरवापत्तिग्रहणात् अनित्यत्वावश्यकत्वात् GuruCandr. i. 90.18.

**अनित्यत्वाविनाभाविन्** (anityatvāvinābhāvin) *adj.* invariably connected with non-eternality नो खल्वयं नित्यधर्मान् नित्यत्वाविनाभाविनोऽनित्यधर्मान् वा अनित्यत्वाविनाभाविनः उपलभमानस्तत्र संदिग्धे TātpaṬ.(Vā.) 341. 25.

**अनित्यत्वाविशेषित** (anityatvāviśeṣita) *adj.* not rendered qualified by impermanence तदुक्तवेदस्य प्रामाण्यं यदुक्तं तत्र अनित्यत्वाविशेषितमेव प्रमात्वमुपयुज्यते GuruCandr. i. 162. 19.

**अनित्यत्वाव्यभिचार** (anityatvāvyabhicāra) *m.* non-transgression of impermanence अनात्मनश्च अनित्यत्वाव्यभिचारात् आत्मातिरिक्तत्वानित्यत्वयोः व्याघातात् TarkSaṁ.(Ā.) 74. 12.

**अनित्यत्वाश्रयण** (anityatvāśrayaṇa) *n.* acceptance of non-obligatoriness सर्वत्रानित्यत्वाश्रयणे मानाभावः LaŚabdeŚe. i. 202. 1; वार्णपरिभाषाया अनित्यत्वाश्रयणेनान्तरङ्गत्वात् पूर्वरूपे ततो द्वित्वे उवङ् LaŚabdeŚe. ii. 552. 11.

**अनित्यत्वासाधकत्व** (anityatvāsādhaka-tva) *n.* the state of being that which does not prove non-eternality साधकत्वमिव नित्यत्वासाधकत्वमपि साधयेदित्यभिमतमनित्यत्वासाधकत्वं विरुणद्धि TārkiRa. 258. 8.

**अनित्यत्वासिद्धि** (anityatvāsiddhi) *f.* non-establishment of impermanence न च पक्षतावच्छेदकनानात्वे एव दूषणमिति वाच्यम्। एतस्य परिभाषामात्रत्वात् आद्यमध्यमशब्दयोरनित्यत्वासिद्धेः YuktiSneha. 146.27 (*on* i. 1.6)

**अनित्यत्वैकनिबन्धन** (anityatvaikanibandhana) *adj.* based on impermanence only यदुपलभ्य पुनरनुपलम्भनं तत् घटादिवदनित्यत्वैकनिबन्धनम् Kiraṇā. 316. 6.

**अनित्यत्वोक्तप्रमाण** (anityatvoktapramāṇa) *n.* aforesaid proof regarding impermanence अनित्यत्वोक्तप्रमाणाविघातात् यानि मया अनित्यत्वे प्रमाणान्युपन्यस्तानि तानि न विहन्यन्ते NyāyVār. 275. 22 (*on* ii. 1. 67)

**अनित्यत्वोक्ति** (anityatvokti) *f.* statement of non-eternality नैवैत उत्तिष्ठन्तेऽपि कर्हिचिदित्यादिश्रुतेः अनित्यत्वोक्तिविरोध इति चेन्न TattvPrakā. 143B. 5 (*on* iii. 1. 16)

**अनित्यत्वोपपत्ति** (anityatvopapatti) *f.* tenability of non-eternality प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः NyāySū. v. 1. 36.

**अनित्यत्वोपयोगिविशेषण** (anityatvopayogi-viśeṣaṇa) *n.* qualification which serves (to indicate) impermanence (अनित्ये कार्ये नित्यख्यातिः) अनित्यत्वोपयोगिविशेषणम् — कार्यं इति TattvVai. 61.26 (*on* 2. 5)

**अनित्यत्वोपलब्धि** (anityatvopalabdhi) *f.* perception of non-eternality करकादिगतानां रूपादीनामनित्यत्वोपलब्धेः TātpaṬ.(Vā.) 595. 21 (*on* iv. 1.21)

**अनित्यदत्त** (anitya-datta) *m.* a son surrendered by his parents to another for temporary or preliminary adoption [MW., APTE]

**अनित्यदत्तक** (anitya-dattaka) *m.* a son surrendered by his parents to another for temporary or preliminary adoption [MW., APTE]

**अनित्यदत्रिम** (anitya-datrima) *m.* a son surrendered by his parents to another for temporary or preliminary adoption [MW., APTE]

**अनित्यदर्शन** (anitya-darśana) *n.* finding of what is impermanent अनित्यदर्शनाच्च MīmāSū. i. 1.28; *adj.* occasionally visible स्वप्नमेतन्माध्यमिकं ज्योतिरनित्यदर्शनम् Nir. 5. 3 (93.16)

**अनित्यदर्शिन्** (anityadarś-in) *adj.* who perceives (sound to be) impermanent दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः। अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः VākyaP. 1. 156.

**अनित्यदेव** (anitya-deva) *m.* non-eternal god न तद्युक्तम्। देवानामाद्यन्तवत्त्वे वेदाप्रामाण्याख्यविरोधापातात्। वेदस्य नित्यत्वादनित्यदेवानां तदवाच्यत्वात् TattvPrakā. 54A. 11 (*on* i. 3. 28)

**अनित्यदेशकालसंबन्धित्व** (anityadeśakālasambandhi-tva) *n.* the state of not being permanently related to place and time अनित्यदेशकालसंबन्धित्वस्य सत्त्वान्न सोऽयं देवदत्त इत्याद्युपमा च Tattvodyo. 3B.8.

**अनित्यदेहात्मबुद्धि** (anityadehātma-buddhi) *f.* notion that the impermanent body is the soul आत्मा चिद्वित्सुखात्मानुभवपरिचितः सर्वदेहादियन्ता सत्येवं मूढबुद्धिर्भजति ननु जनोऽनित्यदेहात्मबुद्धिम् ŚatŚlo. 4.

**अनित्यदोष** (anitya-doṣa) *m.* not always a fault, a relative fault (in a literary composition) यद्गुणालंकारव्यतिरिक्तं तच्चारुत्वकारि न भवति। नित्यानित्यदोषा असाधुदुःश्रवादय इव Loc. 5.16 (*on* 1. 1)

**अनित्यदोषता** (anityadoṣa-tā) *f.* the state of not being always a fault (in a literary composition) ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते (श्रुतिदुष्टादयः) हेयाः ···। अन्यथा हि तेषामनित्यदोषतैव न स्यात् Dhvanyā. 214. 6 (*on* 2. 11)

**अनित्यदोषत्व** (anityadoṣa-tva) *n.* I the state of not being always a fault (in a literary composition) तदासाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् KāvyPra. 238. 4; Kāvyānu.(He.) 33.24; अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थापि न स्यात् SāhiDa. 10. 1; II the state of not being always a fault (in logical reasoning) अत एवासाधारणप्रकरणसमयोरनित्यदोषत्वम्। अन्यथा सद्धेतौ बाधादिज्ञाने हेत्वाभासाधिक्यापत्तिः TattvCin. ii(1). 798. 3; अन्यथा बाधस्याप्यनित्यदोषत्वापत्तिः SiddhāMu. 41.12 (*on* 71)

**अनित्यद्रव्य** (anitya-dravya) *n.* impermanent substance अनित्यद्रव्यगुणकर्मसामान्यविशेषाः समवेताः Lakṣaṇā. 1. 9; अनित्यद्रव्येषु तावदाश्रयादिभिरेव विशिष्टबुद्धिरुपपन्नेति ततोऽधिकेषु विशेषेषु प्रमाणाभावः Kiraṇā. 24. 20; नित्यद्रव्येष्वेकत्वं नित्यम्, अनित्यद्रव्येष्ववयवगतैकत्वैर्जन्यम् NyāySiA. 260. 9; गुणाश्च अनित्यद्रव्यगता अनित्या एव NyāySu.(Ja.) 337B. 12 (*on* ii. 2.6); 356B. 5 (*on* ii. 2.6); कालपिण्डसंयोगोऽसमवायी ज्येष्ठत्वकनिष्ठत्वज्ञानं निमित्तं तन्नाशश्च तन्नाशनिमित्तम्। एतेऽनित्यद्रव्य एव TarkKau. 6. 11.

**अनित्यद्रव्यत्व** (anityadravya-tva) *n.* the state of being an impermanent substance चकाराद्विपर्ययेण विशेषरहितद्रव्यत्वमाश्रितद्रव्यत्वमनित्यद्रव्यत्वं चान्यत्र निरवयवद्रव्येभ्य इति Kiraṇā. 34.13; त्वन्मते गगनस्याप्यनित्यद्रव्यत्वेन स्वत एव अंशसंभवात् Nyāyāmṛ. 351B. 8.

**अनित्यद्रव्यवर्जित** (anityadravya-varjita) *adj.* devoid of transient objects नानामणिगणोपेतं तत्रास्ते मन्दिरं परम्।··· षडूर्मिरहितं शान्तमनित्यद्रव्यवर्जितम् ĀdiP. 13. 85.

**अनित्यद्रव्याश्रित** (anityadravyāśrita) *adj.* residing in an impermanent substance अनित्यद्रव्याश्रिता एकत्वादयोऽपि गुणाः किं भेदवन्तः NyāySu.(Ja.) 364A. 6 (*on* ii. 2.6)

**अनित्यद्रव्यासमवेत** (anityadravyāsamaveta) *adj.* not inherent in a non-eternal substance द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वात् TattvCin. ii. 333.3.

**अनित्यद्वार** (anitya-dvāra) *n.* variable way or means न चैवमपि नित्यवच्छ्रुतस्य दानस्यानित्यद्वेष्यभूतऋत्विक्संबन्धो न संभवतीति वाच्यम्। यस्य ऋत्विगन्योऽपि न द्वेष्यः तत्रानित्यद्वारस्यावश्याङ्गीकार्यत्वादिति चेन्न MayūMāli. 669. 18 (*on* x. 2. 16)

**अनित्यद्वारत्व** (anityadvāra-tva) *n.* the state of being a variable way or means नित्यवदाम्नानात् पयोव्रतादिसंस्कृत एव पुरुषः क्रतोरङ्गं नान्यथेति कल्पनान्मन्त्रयोरपि नित्यविहितयोरनित्यद्वारत्वानुपपत्तेः MayūMāli. 520. 10 (*on* vi. 8.28)

**अनित्यद्वाराश्रयण** (anityadvārāśrayaṇa) *n.* resorting to the

variable way or means यदप्यनुष्ठानरूपेणानित्यत्वं तद् व्रीहीणामपि तुल्यमेवेति नित्यद्वाराभावादगत्यावघातादीनामनित्यद्वाराश्रयणं युक्तम् ŚāstrDī. 310.14 (*on* iii. 6.13)

**अनित्यद्वेष्यभूत** (anityadveṣya-bhūta) *adj.* who is not always to be hated नित्यवच्छुतस्य दानस्यानित्यद्वेष्यभूतत्वरविक्रुत्संबन्धो न संभवति MayūMāli. 669.17 (*on* x. 2.16)

**अनित्यधन** (anitya-dhana) *n.* not long-lasting wealth यत् प्रसह्य हरेदन्यस्तत् प्रयच्छेद्दुपायतः। रक्षेत् स्वदेहं यत्नेन का ह्यनित्यधने दया SūktiRa. 156.50.

**अनित्यधर्म** (anitya-dharma) *m.* I property of what is not eternal यदि नित्यधर्मः शब्दे गृह्यते न स्यात्प्रकरणम्। यदि वा अनित्यधर्मो गृह्यते एवमपि निवर्तेत प्रकरणम् NyāyBh. 63.7 (*on* i. 2.7); न खल्वयं नित्यधर्मान्नित्यत्वाविनाभाविनोऽनित्यधर्मान् वा अनित्यत्वाविनाभाविन उपलभमानस्तत्र संदिग्धे, तच्च जिज्ञासते TātpaṬ.(Vā.) 341.25 (*on* i. 2.7); II temporary property (सावस्थस्य तूत्पत्तिः। अतः सर्वावस्थस्य द्रव्यस्य सत्त्वात् सत्कार्यवादो न विरुध्यते) अनित्यधर्मोऽवस्था ŚrutaPra. ii. 253.16 (*on* ii. 1.15)

**अनित्यधर्मत्व** (anityadharma-tva) *n.* I the state of having the property of impermanence सत्यपि चानित्यधर्मत्वे शब्दस्य नानित्यता भविष्यति NyāyRa. 738.15 (*on* 6.35); II the state of being the property of what is impermanent अनित्यधर्मत्वमविशेषणामेव Kiraṇā. 32.9.

**अनित्यधर्मरहितत्व** (anityadharmarahita-tva) *n.* the state of being devoid of the property of what is not eternal शब्दो नित्योऽनित्यधर्मरहितत्वात् TarkBhā.(Ke.) 46.11; ईश्वरो नित्योऽनित्यधर्मरहितत्वात् YatīndraDī. 22.5.

**अनित्यधर्माधान** (anityadharmādhāna) *n.* assignment of an impermanent property नित्यस्यानित्यधर्माधानमेवोपकारो न तु नित्यस्वरूपकरणं येन तदनित्यं स्यात् TātpaṬ.(Vā.) 508.8 (*on* iii. 1.5)

**अनित्यधर्मानुपलब्धि** (anityadharmānupalabdhi) *f.* non-perception of an impermanent property नित्यः शब्दोऽनित्यधर्मानुपलब्धेः NyāyVār. 175.9 (*on* i. 2.48); NyāyMañ. i. 101.21; ii. 159.1; NyāyKa. 202.19; TarkBhā.(Ke.) 91.10; सैव नित्यधर्मानुपलब्धिरनित्यधर्मानुपलब्धिर्वा विचित्राभिसंधितया वादिनां निर्णयायापदिश्यमाना प्रकरणसमो हेत्वाभासः TātpaṬ.(Vā.) 342.1 (*on* i. 2.7)

**अनित्यधर्मानुपलम्भ** (anityadharmānupalambha) *m.* non-perception of an impermanent property नित्यः शब्दः अनित्यधर्मानुपलम्भेः … तत्रानित्यधर्मानुपलम्भो नित्यत्वविनिश्चयार्थमुपदिष्टः NyāyKa. 202.22.

**अनित्यधर्मायोग** (anityadharmāyoga) *m.* non-association with an impermanent property न च भावनाविशेषो जात्यादिषु स्वरूपतो द्रव्यादिकमनन्तर्भाव्य संभवति। नित्यत्वेनाव्यापारत्वात्। अनित्यधर्मायोगेनाव्यापारित्वात् Kiraṇā. 29.9.

**अनित्यध्वनिकार्यत्व** (anityadhvanikārya-tva) *n.* the state of being the product of non-eternal articulatory movements वर्णाः सर्वगतत्वाद्यो न स्वतः क्रमवृत्तयः। अनित्यध्वनिकार्यत्वात् क्रमस्यातो विनाशिता ŚlokaVār. 6.279 (800.6); TattvSaṁ. 2280.

**अनित्यनित्यभाव** (anityanitya-bhāva) *m.* epithet of Śiva (*lit.* of changeful and eternal nature) नमस्तुभ्यं विरूपाक्ष … अनित्यनित्यभावाय नमो नित्यचरात्मने MatsyaP. 250.36.

**अनित्यनित्यरूप** (anityanitya-rūpa) *m.* epithet of Brahmadeva (*lit.* of changeful and eternal form) नमो हिरण्यरूपाय ब्रह्मणे … अनित्यनित्यरूपाय SkandP. iv. 2.38.

**अनित्यनित्याभिमान** (anityanityābhimāna) *m.* strong conviction as non-eternal and eternal (about eternal and non-eternal things respectively) नित्यानित्येऽनित्यनित्याभिमानं भित्त्वा … यात्यात्मीयास्थाम् Kapphiṇā. 20.21.

**अनित्यनिरात्मतादिव्यवच्छेद** (anityanirātmatādi-vyavaccheda) *m.* exclusion of non-eternality, soullessness etc. तत्र कश्चिद्धेतुरनन्वयो नाम। एकव्यवच्छेदस्य विजातीयसिद्धिनान्तरीयकत्वात्। अनित्यनिरात्मतादिव्यवच्छेदेऽपि तथा स्यात्। न। व्यतिरेकव्यवच्छेदस्य भावरूपत्वात् PramāVāSvopVṛ. 103.25.

**अनित्यपक्ष** (anitya-pakṣa) *m.* I view that (something) is not eternal नित्यपक्षोऽभिव्यक्तिर्नोत्पाद एवमनित्यपक्षे उत्पादो नाभिव्यक्तिः TātpaṬ.(Vā.) 695.6 (*on* v. 1.39); SyādvāMañ. 26(1); II the class of non-eternal things नित्यत्वानित्यत्ववन्तमप्याकाशमनित्यपक्षे निक्षिप्य … विनायकस्येव वायुदेवतायाः स्वरूपेण नित्यत्वम् NyāySu.(Ja.) 433B.10 (*on* ii. 3.2)

**अनित्यपक्षसिद्धि** (anityapakṣa-siddhi) *f.* establishment of the view that (sound is) not eternal अनित्यपक्षसिद्धावर्थादापन्नं नित्यपक्षस्य हानिरिति NyāyBh. 322.9 (*on* v. 1.22)

**अनित्यपक्षोल्लेख** (anityapakṣollekha) *m.* mentioning of the view that (something is) non-eternal अत्र च प्रथममादीपमिति परप्रसिद्धया अनित्यपक्षोल्लेखेऽपि यदुत्तरत्र यथासंख्यपरिहारेण पूर्वतरं नित्यमेवैकमित्युक्तं तदेवं ज्ञापयति SyādvāMañ. 5(93)

**अनित्यपतनोच्छ्राया** (anityapatanocchrāyā) *adj.* (*f.*) having an ephemeral fall and rise अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः RājTa.(Ka.) 5.262.

**अनित्यपदप्रक्षेप** (anityapada-prakṣepa) *m.* insertion of the word *anitya* विशेषगुणवद्व्यापकानित्यत्वसाधनं च प्रतिकल्पं जायमानाकाशभेदैरेव सिद्धसाधनम्, अर्थान्तरं चेश्वरवादिनामीश्वरेण, अनित्यपदप्रक्षेपे च पूर्वोक्त एव दोषः TattvPradī.(Ci.) 383.2.

**अनित्यपदार्थ** (anitya-padārtha) *m.* impermanent thing निखिलस्यानित्यपदार्थस्य कार्यत्वेनोत्तरभावित्वात् कारणस्य पशुपतेः पूर्ववर्तित्वात् VedāntKau. 209.17 (*on* ii. 2.39)

**अनित्यपरिमाण** (anitya-parimāṇa) *n.* not a definite or fixed measure अनित्यपरिमाणं संख्याजन्यं परिमाणजन्यं प्रचयजन्यं च SiddhāMu. 62.21 (*on* 110)

**अनित्यपरिमाणवत्त्व** (anityaparimāṇavat-tva) *n.* the state of not having a definite or fixed measure न च – आकाशकालदिगात्मसु महत्त्वं नित्यं – इति युक्तं, तेषामपि परिच्छिन्नत्वेन घटादिवत् अनित्यपरिमाणवत्त्वानुमानात् TarkSaṁ.(A.) 66.12.

**अनित्यपरिसमाप्ति** (anitya-parisamāpti) *f.* completion through a non-obligatory rite अश्वमेधावभृथस्नानमङ्गत्वेन परिसमाप्त्यर्थं वा विधीयेत। न च नित्यस्यानित्यपरिसमाप्तिर्युक्ता BālaKrī. ii. 95.10 (*on* 3.243)

**अनित्यपरिहार** (anitya-parihāra) *m.* avoidance of what is not eternal न च — नित्यानित्यवस्तुविवेकस्य साधनचतुष्टयान्तर्गतस्य ज्ञानं भ्रमः स्यात्, तथा च तेनानित्यपरिहारेण नित्ये प्रवृत्तिर्न स्यादिति वाच्यम् AdvaiSi. 789.17.

**अनित्यपारतन्त्र्यादिविशेष** (anityapāratantryādi-viśeṣa) *m.* distinctions such as non-eternality, dependence etc. अनित्यपारतन्त्र्यादिविशेषरहितं हरिम् … विचिन्तयेत् BṛBrahmaS. i. 12.17.

**अनित्यप्रकाशत्व** (anityaprakāśa-tva) *n.* the state of being a possessor of non-eternal illumination नित्यप्रकाशश्चात्मा प्रमातृत्वात्, अप्रमातृत्वव्यापकवद्धं ह्यनित्यप्रकाशत्वं व्यापकविरुद्धप्रमातृत्वभागिन्यात्मनि नात्मानं लभते ĀtmaSi. 58.8.

**अनित्यप्रकृतिज्ञान** (anityaprakṛti-jñāna) *n.* knowledge of the non-eternal primordial matter अनित्यप्रकृतिज्ञानेन किं फलम्, अथ च तस्याः बहुरूपतोक्तौ … गुणमयी गुणकारणं च सा भवति ŚaṅkaVi.(A.) 136.14.

**अनित्यप्रज्ञत्व** (anityaprajña-tva) *n.* the state of having an unstable judgement एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा। भवत्यनित्यप्रज्ञत्वात् MahāBhā. x. 3.13.

**अनित्यप्रतिज्ञाप्रयोजन** (anityapratijñā-prayojana) *n.* purpose of assertion (that the tenth conjugation suffix *-i* along with the indicatory sounds *ṇ* and *c* is used) as not obligatory जुघुषुरिति। अनित्यप्रतिज्ञाप्रयोजनम्। असति ह्यनित्यत्वे घोषयांचक्रुरिति Nyās. ii. 713.16 (*on* vii. 2.23); cf. **अनित्यण्यन्त**.

**अनित्यप्रतिपत्ति** (anitya-pratipatti) *f.* knowledge of what is not eternal अनित्यप्रतिपत्तिर्या अस्मिन्नपि सर्वदा। भङ्गुरे स्वप्नतुल्यो यस्स स्वप्नो जाग्रत्कारणम् JayāS. 14.61.

**अनित्यप्रतिपादिनी** (anitya-pratipādinī) *adj.* (*f.*) indicating what is non-eternal यदि चापौरुषेय्येषा (समाख्या) नानित्यप्रतिपादिनी ŚlokaVār. 8.11 (954.2)

**अनित्यप्रत्यय** (anitya-pratyaya) *m.* knowledge of what is not eternal यदि च प्राक्प्रध्वंसाभावावनित्येति मन्यसे अनुत्पन्ने वस्तुनि प्रागभावोऽस्ति ऊर्ध्वं च वस्तुनः प्रध्वंसाभावोऽस्ति इत्यसति प्राक्प्रध्वंसाभावेऽनिमित्ततोऽनित्यप्रत्ययः स्यात् NyāyVār. 283.22 (*on* ii. 2.12)

**अनित्यप्रत्यवेक्षा** (anitya-pratyavekṣā) *f.* consciousness that all is passing away [MW.]

**अनित्यप्रपञ्च** (anitya-prapañca) *m.* non-eternal mundane existence न कालत्रयेऽपि सत्त्वं मन्मतेऽप्यनित्यप्रपञ्चे तदभावात् Nyāyāmṛ. 140B.7.

**अनित्यप्रमा** (anitya-pramā) *f.* changing valid knowledge अनित्यप्रमाप्रमोभय(? अनित्यप्रमा प्रमाप्रमोभय)हेतुभिन्नहेतुजन्या जन्यत्वात् अप्रमावत् TattvCin. i. 297.5; एतेन विमता अनित्यप्रमा स्वभावातिरिक्तस्वविरोधिनिवर्तिका

Nyāyāmṛ. 329A.6.

**अनित्यप्रमाण** (anitya-pramāṇa) *n.* changing means of valid knowledge अनपेक्षत्वं सर्वथा चेदनित्यप्रमाणेषु नास्ति NyāySu.(Ja.) 254A. 8 (*on* ii. 1.2)

**अनित्यप्रमात्व** (anityapramā-tva) *n.* the state of being changing valid knowledge अनित्यप्रमात्वम् ... व्यभिचारि TattvCin. i. 297.4.

**अनित्यप्रयत्न** (anitya-prayatna) *m.* transient effort न ह्यनित्यप्रयत्नोऽपि बुद्ध्या शरीरवत् कारणत्वेनापेक्ष्यते NyāyKuA. ii(2). 40.7; अदृष्टैकनियतप्रयत्नमात्रवानीश्वर इति चेत्, जीवस्यैवानित्यप्रयत्नस्यैव तथाविधनियमोपपत्तेः NyāySiA. 230.13.

**अनित्यप्रयत्ननिवृत्ति** (anityaprayatna-nivṛtti) *f.* cessation of transient effort अनित्यप्रयत्ननिवृत्तावेव बुद्धिरपि निवर्तेत NyāyKuA. ii(2). 44. 3.

**अनित्यप्रयत्नपूर्वकत्व** (anityaprayatnapūrvaka-tva) *n.* the state of being preceded by a transient effort अनित्यप्रयत्नपूर्वकत्वप्रयुक्तां व्याप्तिमुपजीवत् कार्यत्वं न बुद्धिमत्पूर्वकत्वेन स्वभावप्रतिबद्धम् NyāyKuA. ii(2). 40. 6.

**अनित्यप्रयत्नहेतुकता** (anityaprayatnahetuka-tā) *f.* the state of having a transient effort as the cause यदि विवादाध्यासितं बुद्धिमद्धेतुकं अभविष्यत् अनित्यप्रयत्नहेतुकतामापत्स्येत Kiraṇā. 102.5.

**अनित्यप्रयत्नहेतुकत्व** (anityaprayatnahetuka-tva) *n.* the state of having a transient effort as the cause अनित्यप्रयत्नहेतुकत्वप्रयुक्तं विशिष्टप्रयत्नचिकीर्षाहेतुबुद्धिमत्पूर्वकत्वमिति तन्निवृत्तौ तदेव निवर्तताम् NyāyKuA. ii(2). 44. 12.

**अनित्यप्रयत्नाजन्यत्व** (anityaprayatnājanya-tva) *n.* the state of not being produced by a transient effort शरीराजन्यत्ववच्चानित्यप्रयत्नाजन्यत्वमिति संक्षेपः NyāyKuA. ii(2). 47. 1.

**अनित्यप्राकृतानेकविशेष** (anityaprākṛtānekaviśeṣa) *m.* many attributes that are both ordinary (material) and not eternal अनित्यप्राकृतानेकविशेषेण समन्वितम्। सविशेषमिह प्रोक्तं तद् ध्येयं योगवर्तकैः BṛBrahmaS. ii. 2. 80.

**अनित्यप्रेमास्पद** (anitya-premāspada) *n.* transient as well as an object of love न च भ्रममात्रस्य द्व्याकारतैव नेति वाच्यम् ... अहं सुखादिमान् अनित्यप्रेमास्पदं इत्यादिरूपेण द्व्याकारत्वस्यानुभाविकत्वात् GuruCandr. i. 8. 20.

**अनित्यफल** (anitya-phala) *adj.* [*f.* -ā] having a transient result 'अहमुक्थमस्मीति विद्यात्' इतिवत् संपन्मात्रमिदमनित्यफलं स्यात् BrahmSūBh.(Śaṅ.) 44. 5 (*on* i. 1. 7); तत्र च मानसी क्रियोपासना विधेयानित्यफला धर्मविशेष एव PañcPā. 59.10 (*on* i. 1. 1); यस्मादेवमनित्यफलमन्यत् तस्मान्नान्यः पन्थाः BrahmSūBh.(Ma.) 22A. 7 (*on* i. 4.21); कर्मस्वनित्यफलेषु विरक्तस्य मुमुक्षोः ... विचार एवाभ्यर्हिते प्रवृत्तिर्युक्ता PrakaVi. 27. 3; यस्मादेवं कर्माद्यनित्यफलं तस्मान्न तन्मोक्षसाधनम् TattvPrakā. 74B. 3 (*on* i. 4.21); काम्यकर्माण्यनित्यफलानि GoviBh. 5. 6 (*on* i. 1. 1); *n.* transient fruit, cf. **अनित्यफलद** etc.

**अनित्यफलकत्व** (anityaphalaka-tva) *n.* the state of having a transient result 'यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इति कर्मणामनित्यफलकत्वम् VedāntKau. 90. 5 (*on* i. 3. 14)

**अनित्यफलचमस** (anitya-phalacamasa) *m.* occasional (use of the) cup containing pounded figs विरुद्धं खल्वेतदभिषवेण नित्यं ज्योतिष्टोम उपकुर्यादनित्यफलचमसद्वारम् ŚāstrDī. 311.2 (*on* iii. 6. 13); न खल्वभिषवेन(?ण) नित्यं ज्योतिष्टोमस्योपकुर्यादनित्यफलचमसद्वारेति युज्यते VidhiRa. 29 (151.23); ŚivārkaMaDī. ii. 423. 6 (*on* iv. 1. 1); अनित्यफलचमसस्य द्वारत्वे उद्देश्यत्व एव वा बाधकाभावात् BhāṭṭDī. ii. 33. 19 (*on* iii. 6.13); नित्यधर्मैः क्रतोरुपकर्तव्यमनित्यफलचमसद्वारेत्येवमन्वयासंभवात् MayūMāli. 313. 3 (*on* iii. 6. 16)

**अनित्यफलता** (anityaphala-tā) *f.* the state of having a transient fruit वेद एव अग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति BrahmSūBh.(Śaṅ.) 7. 2 (*on* i. 1.1)

**अनित्यफलत्व** (anityaphala-tva) *n.* the state of having a transient fruit न अन्यः वरः तुल्यः सदृशः अस्ति एतस्य कश्चिदपि। अनित्यफलत्वादन्यस्य सर्वस्यैव KāṭhUBh. 115. 16 (*on* 1. 22); श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वम् ... दर्शयन्ति BrahmSūBh.(Rā.) 5. 20 (*on* i. 1. 17); ŚrutaPra. iA. 75. 11 (*on* i. 1. 1)

**अनित्यफलद** (anityaphala-da) *adj.* what yields a transient fruit नित्यफलस्य मोक्षस्य कथमनित्यफलदं कर्म साधनम् ŚrutaPra. iA. 45. 19 (*on* i. 1. 1)

**अनित्यफलदत्व** (anityaphalada-tva) *n.* the state of being the bestower of a transient fruit धर्मजिज्ञासयैवेष्टसिद्धौ किं ब्रह्मजिज्ञासयेत्यत्र धर्मस्यानित्यफलदत्वान्निरतिशयानन्तानन्दप्राप्तये तज्जिज्ञासा कर्तव्येत्युच्यते VedāntKau. 2.11 (*on* i. 1.1)

**अनित्यफलदायित्व** (anityaphaladāyi-tva) *n.* the state of being the bestower of a transient fruit अनित्यफलदायित्वं ज्ञानहीनस्य कर्मणः TaiUBhsVā. 9.3(1)

**अनित्यफलवत्त्व** (anityaphalavat-tva) *n.* the state of having a transient fruit वस्तुविरोधः द्वैतवासनाजनकत्वमनित्यफलवत्त्वं च ŚrutaPra. iA. 46. 8 (*on* i. 1. 1)

**अनित्यफलसाधन** (anityaphala-sādhana) *n.* means of accomplishing a transient fruit अनित्यफलसाधनाद्यज्ञादेः सर्वस्मादुत्कृष्टत्वं संन्यासस्योक्तम् SanatBh. 213.17 (*on* 1. 20); 222.9 (*on* 1. 26)

**अनित्यफलहेयता** (anityaphala-heyatā) *f.* abandonability of transient fruits अनित्यफलहेयताज्ञानस्य स्वर्गादिफलजिहासाद्वारेण ब्रह्मविचारोपयोगो वक्तव्यः ŚrutaPra. iA. 72. 17 (*on* i. 1. 1)

**अनित्यफलेप्सु** (anityaphalepsu) *adj.* desirous of a transient fruit किमनित्यफलेप्सुभिर्भवद्भिः संभाषणमपि नाहं कुर्वे ŚaṅkaVi.(Ā.) 225.6.

**अनित्यफलोत्पत्ति** (anityaphalotpatti) *f.* production of a transient fruit कर्मभ्योऽपि न मुक्तिः स्यात्कर्मापि न हि वस्तुनुत्। तस्यानित्यफलोत्पत्तौ प्रभविष्णुत्वकारणात् BṛĀraUBhVā. i. 4. 239.

**अनित्यबल** (anitya-bala) *n.* varying strength महाबलोऽपि रोगाद्यैरबलः क्रियते क्षणात्। इत्यनित्यबले पुंसां युक्तो बलमदो न हि TriṣaŚaPuC. iv. 5. 265.

**अनित्यबाधक** (anitya-bādhaka) *adj.* which annuls what is impermanent कर्मानित्यं पृथग्रूपं नित्यं चानित्यबाधकम् BṛĀraUBhVā. (Sambandha.) 370.

**अनित्यबाह्यविद्वेषिन्** (anitya-bāhyavidveṣin) *m.* occasional external enemy अनित्यबाह्यविद्वेषिनिर्जयस्तुतिसंस्तवः। नित्यान्तःस्थारिसंहर्तुस्तस्य प्रत्युत गर्हणा RājTa.(Jo.) 1002.

**अनित्यबुद्धि** (anitya-buddhi) *f.* notion as impermanent सकलसंपदामाश्रयस्य तस्य चेतसि सर्ववस्तुष्वनित्यबुद्धिरुत्पन्ना SiṁhāDvā. 78. 0(17)

**अनित्यभक्ष** (anitya-bhakṣa) *m.* non-obligatory eating अनित्यभक्षे नित्यवच्छ्रुतगुणविध्ययोगान्नित्य एव भक्ष एष्टव्यः MayūMāli. 286. 6 (*on* iii. 5. 6)

**अनित्यभव** (a-nityabhava) *adj.* not invariably present अनित्यभवः प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् Vār. 2 *on* P. iv. 3. 39; MahāBh. ii. 308. 13 (*on* iv. 3. 39); JaineVyā. 197. 22 (*on* iii. 3.28); KāśiVṛ. *on* iv. 3. 39; Nyās. i. 986.5 (*on* iv. 3. 39)

**अनित्यभव** (anitya-bhava) *m.* non-eternal transmigratory existence कस्यार्थे क्रियते गेहमनित्यभवमध्यगैः SkandP. i(2). 12. 17; अनित्यभवहेतोः कः शास्त्रमुद्रां विलुम्पति PrabhāC. 97. 31.

**अनित्यभाव** (anitya-bhāva) *m.* non-eternal nature नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः NyāySū. v.1. 35; अनित्यभावाद्देवानां मन्त्रोत्पत्तिः पुनः पुनः VāyuP. i. 61.75; BrahmāṇḍP. i. 35. 85; योगजधर्मो न क्षीयत इति चेत् न युक्तम्। उत्पत्तिधर्मकस्य सर्वस्यानित्यभावात् NyāyVār. 89. 5 (*on* i. 1. 22)

**अनित्यभूतविशेषगुण** (anitya-bhūtaviśeṣaguṇa) *m.* non-eternal special quality of a particular element न च श्रोत्रं न नित्यद्रव्यग्राहकम्, अनित्यभूतविशेषगुणग्राहकं वा TattvPradī.(Ci.) 162. 8 (comm. अनित्यो यो भूतविशेषगुणः)

**अनित्यभूतसमूह** (anityabhūta-samūha) *m.* aggregate of non-eternal elements इत्येवमुक्तस्यानित्यभूतसमूहारब्धं वर्ष्म शरीरमनित्यमस्थिरं यस्य पुनर्मोक्षार्थं भवत्यसौ कृती पण्डितः DīpKa. 85.12 (*on* 3. 107)

**अनित्यभोजन** (anitya-bhojana) *n.* non-obligatory (ritualistic) eating पूर्वत्रानित्यभोजनार्थभक्तद्रव्यप्रयुक्तस्य होमस्यानित्यत्वमुक्तम् PrakaVi. 886. 21; अनित्यभोजनाश्रितप्राणाग्निहोत्रवत् नित्यकर्माङ्गाश्रितोपास्तीनां नित्यत्वमिति पूर्वपक्षमाह — यथेत्यादिना VedāntKa. 456. 9 (*on* iii. 3. 42)

**अनित्यम्** (a-nityam) *adv.* not regularly, occasionally अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते VāsiDS. 8. 7; ManuSm. 3. 102; ViṣṇuSm. 67.34; MārkP. 29. 29; अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते ParāSm. 1. 42; अनित्यं स्थित इत्यत्रार्थेऽतिथिपदं निपात्यते ManvaVi. 341. 1 (*on* 3.102)

**अनित्यमति** (anitya-mati) *adj.* having unfixed thoughts or opinions तस्मिंस्तस्मिन्निमित्ते हि मतं भवति केशव। प्राप्तकालं मनुष्येण स्वयं

कार्यमरिंदम। अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा। अनित्यमतयो लोके नराः पुरुषसत्तम MahāBhā. v. 78. 6.

**अनित्यमनोवादिन्** (anityamano-vādin) *m.* upholder of the view that the mind is non-eternal अनित्यमनोवादिभिरपि हि 'अन्नमयं हि सौम्य मन' इति श्रुतिराप्यायनपरतयैव योज्या NyāyPari. 16. 6.

**अनित्यमात्र** (anitya-mātra) *n.* [Loc.] in the sense of any non-eternal thing अनित्यमात्रे चेदानाय्य इति निपात्यते तर्हि घटादिष्वतिप्रसङ्गः। अत आह — दक्षिणाग्नौ Prasā. ii. 483. 20

**अनित्यमात्रनिष्ठ** (anityamātra-niṣṭha) *adj.* residing only in non-eternal (objects) नित्यानित्यविभागोऽयं पृथिव्याः न प्रकल्पते। अनित्यमात्रनिष्ठं हि पृथिवीत्वं प्रतिष्ठितम् TarkSaṁ.(Ā.) 28. 25.

**अनित्यमात्रवृत्ति** (anityamātra-vṛtti) *adj.* residing only in non-eternal (objects) पृथिवीत्वम् अनित्यमात्रवृत्ति, पृथिवीमात्रवृत्तित्वात्, घटत्ववत् — इति अनुमानसंभवः स्यात् TarkSaṁ.(Ā.) 28.26.

**अनित्यमात्रवृत्तित्व** (anityamātravṛtti-tva) *n.* the state of being that which resides only in non-eternal (objects) पृथिवीनिष्ठजातेः अनित्यमात्रवृत्तित्वे पृथिवीत्वन्यूनवृत्तित्वं प्रयोजकमिति चेत्, न, व्यतिरेके दृष्टान्ताभावात् TarkSaṁ.(Ā.) 29.1; 29. 3.

**अनित्ययान** (anitya-yāna) *n.* occasional marching मृगयायां तु व्यायामः ··· मृगाणां चित्तज्ञानमनित्ययानं चेति ArthŚā. iii. 21. 6 (8. 3)

**अनित्ययोग** (anitya-yoga) *m.* association with what is non-eternal नेह ध्रुवं किंचन जातु विद्यते अस्मिँल्लोके कर्मणोऽनित्ययोगात् MahāBhā. vii. 2. 6; viii. 26. 47; प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते इत्यादिस्मृतेश्च। तथा — कादाचित्ककथाविशेषसंदृष्टेरनित्ययोगात् तत्पूर्वोत्तरकाल्योस्तदनन्वयापत्तेः NyāyPari. 383. 12; प्रवचननियता काठकाद्या समाख्या, द्रष्टा मन्त्रादिकर्ता, परिहृत इह चानित्ययोगः प्रवाहैः TattvMu. 4. 112.

**अनित्ययोगादिदोष** (anityayogādi-doṣa) *m.* fault(s) such as association with what is non-eternal तन्नियोगश्च तत्तदृषिकत्वेनानुसंधानादेः कर्मौपयिकत्वात् तेषामपि प्रवाहानादित्वान्नानित्ययोगादिदोषः NyāyPari. 390. 5.

**अनित्यरजतप्रमात्व** (anityarajatapramā-tva) *n.* the state of being uncertain valid knowledge of silver अनित्यरजतप्रमात्वं रजताप्रमाकारणतावच्छेदकरूपानवच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं रजतभ्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववत् TattvCin. i. 313.4.

**अनित्यरूपत्वविवरण** (anityarūpatva-vivaraṇa) *n.* exposition of being that which has an impermanent form 'ब्रह्माह' मित्यनेन परब्रह्मतया नित्यरूपं विवृतम्।··· तदनन्तरमनित्यरूपत्वविवरणम् ŚivārkaMaDī. i. 552. 25 (*on* i. 4. 22)

**अनित्यलोक** (anitya-loka) *m.* non-eternal world अन्येषामनित्योपासकानामनित्यलोकप्राप्तिः ŚaṅkaVi.(Ā.) 129. 5; अनित्यलोकसंबन्धदेहदेवान्तरस्पृहाम्। भोगमोक्षस्पृहां हित्वा ···। नारायणमृते कर्म न कुर्वन्ति मनागपि BṛBrahmaS. iv. 7. 81.

**अनित्यलौकिकवाक्य** (anitya-laukikavākya) *n.* non-eternal secular (i. e. non-Vedic) sentence अनित्यशब्दोऽयमनित्यलौकिकवाक्यसादृश्यपरः सन्नप्रामाण्यमाह तस्मादप्रामाण्यमुच्यते MayūMāli. 8.29 (*on* i. 2.1)

**अनित्यवत्** (anitya-vat) *adv.* **I** as in the case of what is non-eternal घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च NyāySū. ii. 2. 14; **II** like the non-eternal अत्र नित्यवाक्यार्थप्रतिपत्तावार्षोपाख्यानमनित्यवदाभासमानमुपायत्वं प्रतिपद्यते TantrVā. 64. 20 (*on* i. 2.49); 1123.2 (*on* iii. 6. 43)

**अनित्यवर्ण** (anitya-varṇa) *m.* **A** non-permanent or non-fast colour रक्तानित्यवर्णयोः कालाच्च ŚākaṭāVyā. iii. 4.112; SiddhaHe. vii. 3.18; अनित्यवर्णे च SaraKaṇṭhā.(Gr.) v. 4.30; **B** non-eternal sound, cf. **अनित्यवर्णातिरिक्त**.

**अनित्यवर्णातिरिक्त** (anityavarṇātirikta) *adj.* different from non-eternal sound परैस्तु अनित्याच्छब्दात् जगतः प्रभवानुपपत्तेरनित्यवर्णातिरिक्तो नित्यः शब्दस्फोट इति एकदेशिमतेनोपन्यस्य ŚrutaPra. ii. 63. 22 (*on* i. 3. 27)

**अनित्यवस्तु** (anitya-vastu) *n.* transitory object नित्यानित्यपदार्थविवेकात्पुरुषस्य जायते सद्यः। स्रक्चन्दनवनितादौ सर्वत्रानित्यवस्तुनि विरक्तिः SarvaVeSāSaṁ. 23.

**अनित्यवस्तुकृतत्व** (anityavastukṛta-tva) *n.* the state of being brought about by a transient object धनसहायमन्त्रौषधितपोयोगकृतं वीर्यं मृत्युं न शक्नोत्यभिभवितुम्, अनित्यवस्तुकृतत्वात् KenUBh. 48.9 (*on* 2.4)

**अनित्यवस्तुपरत्व** (anityavastupara-tva) *n.* the state of having reference to non-eternal objects पूर्वत्र ब्रह्मक्षत्रशब्दस्य संनिहितमृत्युपदानुसारेणानित्यवस्तुपरत्ववदिहापि VedāntKa. 138. 8 (*on* i. 2.11)

**अनित्यवादिन्** (anitya-vādin) *adj.* **I** upholder of the view that sounds are impermanent तथा चानित्यवादिनः सर्वे शब्दाः तथा NyāyVār. 275.8 (*on* ii. 1. 67); नास्माभिः प्रत्यभिज्ञानं नित्यसाधनमिष्यते। अनित्यवादिनस्त्वेषा प्रत्यक्षेण विरुद्धता ŚlokaVār. 6. 389 (830. 1); **II** upholder of the view that everything is momentary or transient अनित्यवादी नित्यवादिनं प्रति पुनरेवं प्रमाणयति। सर्वं क्षणिकं सत्त्वात् SyādvāMañ. 26(16)

**अनित्यवायुधर्मत्व** (anityavāyudharma-tva) *n.* the state of being the non-permanent property of air-waves अनित्यवायुधर्मत्वे शब्दे कथं नित्यता YuktiSneha. 137. 36 (*on* i. 1.6)

**अनित्यविग्रहोपाधिक** (anityavigrahopādhi-ka) *adj.* having a transient body as an adjunct अनित्यविग्रहोपाधिकानां च 'अनादिनिधनं विष्णु' मिति व्यवहारायोगः VīraMi.(Bhakti.) 170.27.

**अनित्यविज्ञान** (anitya-vijñāna) *n.* understanding (of words) as not permanent अनित्यविज्ञानं तु तस्मादुपसंख्यानम् Vār. 11 *on* P. i. 1. 56; MahāBh. i. 136.12 (*on* i. 1. 56); *adj.* whose knowledge is transitory अनित्यविज्ञान आत्मा सुखी दुःखी इत्यभ्युपगतो लौकिकैः, अतोऽन्यो नित्यविज्ञानस्वरूपादात्मनः KenUVāBh. 74. 18 (*on* 1. 4); 91.1 (*on* 3.1)

**अनित्यवितृष्ण** (anitya-vitṛṣṇa) *adj.* free from desire for what is transient वेदमधीत्य तदर्थानापाततोऽधिगम्य तत्त्ववित्प्रसङ्गेन नित्यानित्यविवेकतोऽनित्यवितृष्णो नित्यविशेषावगतये चतुर्लक्षण्यां प्रवर्तते GoviBh. 5. 13 (*on* i. 1. 1)

**अनित्यवित्त** (anitya-vitta) *adj.* whose wealth is unstable अनित्यचित्तः (v.l. अनित्यवित्तः) पुरुषस्तस्मिन्को जातु विश्वसेत्। तस्मात् प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् MahāBhā. xii. 81.9.

**अनित्यविधि** (anitya-vidhi) *m.* injunction of non-obligatory (rites) नित्यानित्यविधेर्विरुद्धमुभयार्थत्वं ततो नित्यता ···। यद्वा कल्प्या NayaMañ. III. iv. 8. 15.

**अनित्यविशेष** (anitya-viśeṣa) *m.* a kind of unusual happening निपातनाच्च अनित्यविशेषो विस्मयहेतुर्गृह्यते Pradī. v. 142B. 17 (*on* vi. 1. 147)

**अनित्यविशेषगुण** (anitya-viśeṣaguṇa) *m.* temporary specific quality आत्मा कदाचित् ध्वस्ताशेषविशेषगुणः नित्यत्वे सत्यनित्यविशेषगुणाश्रयत्वात् महाप्रलयावस्थायामाकाशवत् TattvPradī.(Ci.) 360. 13; न च पार्थिवपरमाणुः अग्निसंयोगजविशेषगुणवान्, नित्यत्वे सति अनित्यविशेष(गु)णवत्त्वात्, आत्मवत् TarkSaṁ.(Ā.) 62. 21; अनित्यविशेषगुणसंस्कारादीनामुपाधिवृत्तित्वेनासिद्धिः AdvaiSi. 852. 22.

**अनित्यविषय** (anitya-viṣaya) *adj.* having reference to a non-eternal object अथात्मशब्दोऽनित्यविषयो वर्णात्मकत्वात् तथापि नित्यशब्देनानैकान्तिकम् NyāyVār. 347. 7 (*on* iii. 1. 1); TātpaṬ.(Vā.) 503. 16 (*on* iii. 1. 1); अनित्यविषयं वरं नचिकेताः न वृणीते मनसापि KāṭhUBh. 120. 9 (*on* 1. 29)

**अनित्यविषयकता** (anityaviṣayaka-tā) *f.* the state of having reference to a non-eternal object श्रुतौ द्वैतदर्शनस्यानित्यविषयकताप्रतिपादनेन तस्य हेयत्वान्निर्गतं द्वैतं यस्यां सा निर्द्वैता LalitāSaBh. 141. 30 (*on* 182)

**अनित्यविषयाव्याप्ति** (anityaviṣayāvyāpti) *f.* non-pervasion (i.e. non-inclusion) of non-eternal objects अथ मतं किं विषयसत्त्वं तदानीमभिमतमुत पूर्वमथ पश्चाद्यद्वा सर्वदाथवा यदाकदाचित् ··· न चतुर्थः। अनित्यविषयाव्याप्तेः NyāySu.(Ja.) 248A.9 (*on* ii. 1. 2)

**अनित्यवृत्त** (anitya-vṛtta) *adj.* having irregular conduct अनित्यचित्तः (v.l. अनित्यवृत्तः) पुरुषस्तस्मिन्को जातु विश्वसेत्। तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् MahāBhā. xii. 81. 9.

**अनित्यवृत्ति** (anitya-vṛtti) *adj.* existing in what is non-eternal पृथिवीत्वं नित्यानित्यवृत्ति, कृत्स्नपृथिवीवृत्तित्वात्, सत्तावत् TarkSaṁ.(Ā.) 29. 6; नित्यः शब्दः प्रमेयत्वाद् व्योमवत्। अत्र हि प्रमेयत्वं हेतुः स तु नित्यानित्यवृत्तिः TarkBhā.(Ke.) 46. 6.

**अनित्यवृत्तिगुणत्व** (anityavṛttiguṇa-tva) *n.* the state of being an attribute which exists in what is non-eternal यथा शर्करारसोऽनित्योऽनित्यवृत्तिगुणत्वात्। स नित्यः रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात् रसत्ववत् TattvCin. ii(1). 400. 1.

**अनित्यवृत्तिता** (anityavṛtti-tā) *f.* the state of being that which resides in what is not eternal न च गुणत्वावच्छिन्नकार्यसमवायिकारणतावच्छेदकतया तत्सिद्धिः नित्यानित्यवृत्तितया गुणत्वस्य कार्यतानवच्छेदकत्वात् Upask. 56.13 (*on* i. 2.5)

**अनित्यवैशेषिकगुणाश्रयत्व** (anityavaiśeṣikaguṇāśraya-tva) *n.* the state of being the substratum of perishable specific qualities आत्मा

कदाचिदखिलविशेषगुणशून्यः अनित्यवैशेषिकगुणाश्रयत्वात् उत्पद्यमानघटप्रलयाकाशवत् NyāySiA. 221. 20.

**अनित्यव्यक्तिविशेष** (anitya-vyaktiviśeṣa) *m.* particular perishable individual वैदिकशब्दानामनित्यव्यक्तिविशेषवाचित्वशङ्कायाः समाननामरूपत्वादित्यत्रैव निरस्तत्वेनात्र तच्छङ्काया एवानुत्थानात् ŚrutaPra. ii. 655.28 (*on* iv. 4. 22)

**अनित्यव्यक्तिशब्दार्थत्व** (anityavyaktiśabdārtha-tva) *n.* the state of having the ever-changing individuals as the word-meaning प्रत्युच्चारणमर्थान्यत्वं भवेत्तदानित्यव्यक्तिशब्दार्थत्वप्रसङ्गः TantrVā. 453. 3 (*on* ii. 2. 2)

**अनित्यव्यतिरिक्तवस्तु** (anityavyatirikta-vastu) *n.* object different from what is perishable इदं तु मूर्तत्वमनित्यव्यतिरिक्तवस्त्वन्तरपरिचयविरहितमपि न प्रयोजकम् NyāyMañ. ii. 164. 8.

**अनित्यव्यपदेश्यता** (anityavyapadeśya-tā) *f.* the state of being termed as non-eternal यथा कथंचिदिष्टा चेदनित्यव्यपदेश्यता। अनभिव्यक्त्यवस्थातः साभिव्यक्त्यात्मनेष्यते ŚlokaVār. 6. 327 (813. 1); TattvSaṁ. 2316.

**अनित्यव्यभिचारिन्** (anitya-vyabhicārin) *adj.* deviating from what is non-eternal सत्यमसाधारणो वैधर्म्यहेतुः न पुनर्वैधर्म्यं व्यभिचारि गन्धवत्त्वं च नित्यानित्यव्यभिचारि NyāyVār. 127. 19 (*on* i. 1.35)

**अनित्यव्यवहितत्व** (anityavyavahita-tva) *n.* the state of being that which closely occurs with the (verbal base) *an-* 'प्राणिति' इत्यत्रैकादेशस्य परादिवत्त्वेनानित्यव्यवहितत्वं रेफस्यास्ति LaŚabdeŚe. ii. 573. 13.

**अनित्यव्यावृत्त** (anitya-vyāvṛtta) *adj.* not existing in what is non-eternal अपर आहेत्यादिना यावद्द्रव्यभावित्वमित्यनित्यव्यावृत्तं लक्षणान्तरं भाष्ये दर्शितम् LaŚabdeŚe. i. 408. 3.

**अनित्यव्यावृत्तत्व** (anityavyāvṛtta-tva) *n.* the state of being non-existent in what is non-eternal यदि गन्धवत्त्वमनित्यव्यावृत्तत्वान्नित्यत्वं साधयति नित्यादपि गगनाद् व्यावृत्तेरनित्यत्वमपि साधयेत् न चास्त्युभयोः सिद्धिः NyāyKa. 242.6.

**अनित्यव्यावृत्तधर्मवत्त्व** (anityavyāvṛttadharmavat-tva) *n.* the state of possessing properties which are not existing in what is impermanent अथ नित्यव्यावृत्तधर्मत्वादनित्यत्वमनित्यव्यावृत्तधर्मवत्त्वाच्च नित्यत्वं पुरस्कृत्य नित्योऽनित्यो वेति संशेरते तदापि हेतुभूतधर्मद्वयनिमित्तोऽयं संशयः NyāyPari. 64.2.

**अनित्यशब्द** (anitya-śabda) *m.* non-eternal sound ज्वालादिषु च प्रत्यक्षेण क्षयं दृष्ट्वा शब्देऽपि तथा संभावयेत् तथानित्यशब्दसमुदायात्मको वेदः स्यात् ManuBh. ii. 484. 21 (*on* 12.105)

**अनित्यशब्दवादिन्** (anityaśabda-vādin) *adj.* upholder of the view that sound is non-eternal अनित्यशब्दवादिनामागमनित्यत्वानुपपत्तेः TantrVā. 171. 6 (*on* i. 3. 10); अनित्यशब्दवादिनोऽपि हि अत्यन्तसारूप्यापोहरूपं नित्यमेव वाचकं मन्यन्ते NyāyRa. 820. 11 (*on* 6. 354); अत्रापि नित्यशब्दवादिसंमतः शब्दैकत्वैकान्तोऽनित्यशब्दवाद्यभिमतः शब्दानैकत्वैकान्तश्च प्राग्दर्शितदिशा प्रतिक्षेप्यः SyādvāMañ. 14(162)

**अनित्यशब्दाभ्युपगम** (anityaśabdābhyupagama) *m.* acceptance of (the view that) sound is non-eternal अनित्यशब्दाभ्युपगमे काष्ठभेद इत्यत्राप्यण्प्रत्ययो वचनादेव कर्तारमाचष्टे Pradī. iii. 272A. 19 (*on* iii. 4. 67)

**अनित्यशब्दार्थसंबन्ध** (anitya-śabdārthasambandha) *m.* non-permanent connection between the word and (its) meaning तत्र सर्वव्यक्त्यभिधानं तावदयुक्तम् ··· अनित्यशब्दार्थसंबन्धापत्तेः TantrVā. 273.12 (*on* i. 3. 26); तेन च व्यवहाराभावादभिधानानर्थक्यं समुदायिविनाशे च तस्याप्यनित्यत्वादनित्यशब्दार्थसंबन्धप्रसङ्गः TantrVā. 273. 21 (*on* i. 3. 26)

**अनित्यशरीर** (anitya-śarīra) *adj.* having a perishable body अनित्यशरीरे च न भक्तिरुत्पद्यते TattvPrakā. 154A. 12 (*on* ii. 2. 39); *n.* perishable body अतः सिद्धं नित्यानित्येच्छाभेदात् ईश्वरादेर्नित्यानित्यशरीरादिमत्त्वम् NyāySiA. 236.29.

**अनित्यशरीरानर्हत्व** (anityaśarīrānarha-tva) *n.* non-appropriateness of a non-eternal body न चानित्यत्वं तच्छरीरस्य संभवति, जगत्कारणस्यानित्यशरीरानर्हत्वात् VedāntKau. 209.16 (*on* ii. 2.39)

**अनित्यसंयोग** (anitya-saṁyoga) *m.* association with what is non-eternal नित्यस्यानित्यसंत्या( v. l. यो )गाल्लोके तन्मरणं विदुः। न च नित्यस्य जीवस्य विनाशो विद्यते MahāBhā. xiii. App. 15(2281); अनित्यसंयोगान्मन्त्रानर्थक्यम् MīmāSū. i. 2. 31; i. 2. 6; i. 2. 42; ŚābaBh. 112.3 (*on* i. 2.6); सर्वोपाख्यानेष्वन्यपरत्वासंभवात् स्वरूपप्रतिपादनादनित्यसंयोगः TantrVā. 9.21 (*on* i. 2. 6); 33. 22 (*on* i. 2. 18); यत् खलु सूत्रकारेणानित्यसंयोगपरिहारार्थमुक्तम् NyāyRa. 952. 18 (*on* 8. 6); न चानित्यसंयोगेनानित्यसंयोगाभावः साध्यो भवितुमर्हति ··· अनित्यसंयोगप्रसङ्गोऽत्र हेतुर्विवक्षितः NyāySu.(So.) 18.11 (*on* i. 2. 6); 19.11 (*on* i. 2.6); नामरूपयोस्तुल्यत्वादन्यस्य भेदकस्याभावान्नानित्यसंयोगविरोधः AṇuBh. 91. 3 (*on* i. 3. 30); 105.18 (*on* i. 4. 8); इन्द्रो वृत्राय वज्रमुदयच्छदित्यादीनां प्रतीयमानार्थपरत्वे वेदस्यानित्यसंयोगरूपप्रसङ्गः ŚivārkaMaDī. i. 457. 32 (*on* i. 3. 25); स्थानाद्युपाधिकस्य कस्यापि नित्यार्थस्य संभवेन तादर्थ्ये सत्यनित्यसंयोगानवकाशाच्च ··· देवतावादिवेदस्य कथमप्यनित्यसंयोगापरिहारात् SiddhāSi. i. 44. 15; i. 36. 2; MīmāKau. i. 40.22 (*on* i. 3. 7); i. 116. 15 (*on* i. 3. 24); iii(1).14. 15 (*on* i. 2. 6); एतेन स्तेनं मनः ··· इत्यादेः — °अनित्यसंयोगादिदूषणमपास्तम् BhāṭṭCin. ii. 6.13 (*on* i. 2. 1); i. 140. 7 (*on* i. 1.27-32); MayūMāli. 787. 8 (*on* x. 8.14)

**अनित्यसंसर्ग** (anitya-saṁsarga) *m.* contact with what is perishable or what does not exist अनित्यसंसर्गेण मलिनत्वं तद्विशुद्धिश्च विज्ञानस्येति इयं कल्पना ··· प्रमाणशून्या BṛĀraUBh. 540. 11 (*on* iv. 3. 7)

**अनित्यसंसार** (anitya-saṁsāra) *m.* impermanent transmigratory existence अनित्यसंसारस्य किंचिदधिष्ठानमस्तीति इयान् विवेको न तु ब्रह्मेति VedāntKa. 41.2 (*on* i. 1.1); अनित्यसंसारात्मना परिणतशक्तेर्वाच्याया वाचकमक्षरं हकारः SetuBa. 234.9.

**अनित्यसंस्कार्यसंबन्ध** (anityasaṁskārya-sambandha) *m.* connection with what is impermanent as well as fit to be purified निमित्ताभावतो होमो नित्यमङ्ग क्रतोर्भवेत्। नित्यश्चानित्यसंस्कार्यसंबन्धं लभते कथम् ŚāstrDī. 483. 19 (*on* iv. 4. 4)

**अनित्यसंत्याग** (anitya-santyāga) *m.* abandonment of what is not permanent नित्यस्यानित्यसंत्यागाल्लोके तन्मरणं विदुः। न च नित्यस्य जीवस्य विनाशो विद्यते MahāBhā. xiii. App. 15 (2281)

**अनित्यसंनिधि** (anitya-sannidhi) *adj.* whose proximity is not permanent नैवं पुरुषस्य कश्चिदपि प्रवर्तनव्यापारोऽस्ति ··· नाप्ययस्कान्तवत् संनिधिमात्रेण प्रवर्तयेत्, संनिधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात्, अयस्कान्तस्य त्वनित्यसंनिधेरस्ति स्वव्यापारः संनिधिः BrahmSūBh.(Śaṅ.) 358. 14 (*on* ii. 2. 7)

**अनित्यसम** (anitya-sama) *m.* parity through non-eternality (a kind of fallacious reasoning leading to the contingency of non-eternality of everything) साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः NyāySū. v. 1. 32; सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं संपद्यते। सोऽयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति NyāyBh. 325.26 (*on* v. 1. 32); NyāyMañ. ii. 185.27; साधर्म्यादेर्विपक्षाणां सपक्षत्वप्रसञ्जनम्। साधनप्रतिवन्द्या यत स ह्यनित्यसमोदयः।··· विपक्षस्यापि सपक्षत्वापादानमनित्यसमः TārkiRa. 298. 4.

**अनित्यसमा** (anitya-samā) *f.* parity through non-eternality (a kind of fallacious reasoning leading to the contingency of non-eternality of all things) अविशेषसमातोऽनित्यसमा न भिद्यते तत्रापि सर्वाविशेष इहापीति NyāyVār. 551. 5 (*on* v. 1. 32); सर्वभावानित्यत्वोपपादनेन प्रत्यवस्थानमनित्यसमा जातिः PramāMī. 62. 6 (*on* ii. 1. 29)

**अनित्यसमास** (a-nityasamāsa) *m.* non-obligatory compound-formation which has a corresponding uncompounded wordgroup used in the same sense अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे P. vi. 1.169.

**अनित्यसमासता** (anityasamāsa-tā) *f.* the state of being a non-obligatory compound-formation which has a corresponding uncompounded wordgroup used in the same sense नित्याधिकारे यः समासः स नित्यसमासः। नैवं शक्यम्। अव्ययीभावस्य ह्यनित्यसमासता प्रसज्येत MahāBh. i. 418. 12 (*on* ii. 2. 19)

**अनित्यसमासत्व** (anityasamāsa-tva) *n.* the state of being a non-obligatory compound-formation which has a corresponding uncompounded wordgroup used in the same sense यथात्रोत्तरपदस्यान्तोदात्तत्वं नास्त्येवमनित्यसमासत्वमपि Nyās. ii. 308.13 (*on* vi. 1.169)

**अनित्यसंबन्ध** (anitya-sambandha) *m.* **i** non-eternal relationship or connection अनित्यसंबन्धज्ञानानन्तशब्दशक्तिव्यक्त्यभिधानपूर्वकैकसत्ताभिधानकल्पनायाश्च केवलव्यक्त्यभिधानपक्षवदनुपपत्तिः TantrVā. 254.3 (*on* i. 3. 26); सापेक्षत्वस्य नित्यसंबन्धयोगित्वविरुद्धेनानित्यसंबन्धयोगित्वेन व्याप्तत्वात् TattvSaṁPañ. 710. 3 (*on* 2653–2655); **ii** relationship or connection with non-eternal things पदार्थानां नित्यत्वान्न वेदस्यानित्यसंबन्धः AṇuBh. 91. 10 (*on* i. 3.30)

**अनित्यसंबन्धा** (anitya-sambandhā) *adj.* (*f.*) having an unstable relationship पर्यन्तविरसा कष्टा प्रतिक्षणविवर्तिनी।··· अनित्यसंबन्धा हि विलासिनी KathāSaSāg. ix. 2. 287.

**अनित्यसंबन्धिन्** (anitya-sambandhin) *adj.* impermanent cor-

relative नित्यसंबन्धिनोः संबन्धात्मकत्वं स्वरूपमस्तीति चेत् — अनित्यसंबन्धिनोः संबन्धात्मकत्वं स्वरूपं नास्तीत्यनित्यतैव स्यात् ŚrutaPra. ii. 293.16 (*on* ii. 2.13)

**अनित्यसर्वज्ञ** (anitya-sarvajña) *adj.* non-eternal omniscient being अनित्यसर्वज्ञमूलकशाब्दग्रहे च नायं दोष इति चेत्। न TattvCin. ii(2). 86. 5.

**अनित्यसहकारकोरक** (anitya-sahakārakoraka) *m.* temporary (i.e seasonal) mango-blossom जनस्य चेतो भवविकारमुद्धतं समर्पयन्ती ··· मञ्जुभाषिणी पिकी सदानित्यसहकारकोरके NemiNir. 7. 35.

**अनित्यसांसारिकफल** (anitya-sāṁsārikaphala) *n.* transitory worldly consequence or result नित्यानित्यवस्तुविवेकादनित्यसांसारिकफलभोगविरागो नित्यपुरुषार्थेच्छा च स्यात् ŚrutaPra. iA. 47.30 (*on* i. 1. 1)

**अनित्यसाक्षात्कार** (anitya-sākṣātkāra) *m.* non-eternal intuitive perception अतीन्द्रियत्वं च यद्यपि न ··· अनित्यसाक्षात्काराविषयत्वं योगजधर्माद्यजन्यसाक्षात्काराविषयत्वं वा TattvCin. ii(2). 118. 4.

**अनित्यसातिशयफल** (anityasātiśaya-phala) *adj.* bringing about a temporary and superior result दुःखापघातकादुपायात् सोमपानादेरविशुद्धादनित्यसातिशयफलाद्, विपरीतः विशुद्धो हिंसादिसंकराभावाद्, नित्यनिरतिशयफलः (उपायः श्रेयान्) SāṁkhyaTaKau. 79.2 (*on* 2)

**अनित्यसाधन** (anitya-sādhana) *n.* 1 means of proving what is non-eternal वादिप्रतिवादिनौ तावद् विचारयतः किं नित्यसाधनं बलीयः आहोऽनित्यसाधनमिति NyāyVār. 183. 17 (*on* ii. 1. 1); अनित्यसाधनवादिनं प्रत्युत्तरं दर्शयित्वा नित्यसाधनवादिनं प्रत्याह TātpaṬ.(Vā.) 681. 17 (*on* v.1.16); 2 non-eternal means शेवधिः ··· मया जानतापि नित्यमनित्यसाधनैः न प्राप्यते KāṭhUBh. 128.8 (*on* 2.10)

**अनित्यसाधर्म्य** (anitya-sādharmya) *n.* sameness with what is non-eternal सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः NyāySū. v. 1.14; NyāyMañ. ii. 180. 20; अनित्यसाधर्म्यादनित्यत्वोक्तौ नित्यसाधर्म्यान्नित्य इत्यापन्नम् TārkiRa. 285. 18; PramāMī. 61. 12 (*on* ii. 1.29)

**अनित्यसापेक्ष** (a-nityasāpekṣa) *adj.* (subordinate member of a compound) not requiring invariable syntactic connection with an outside word (समासाः) अनित्यसापेक्षाः यथा 'ऋद्धस्य राज्ञः पुरुषः' इति अत्र सापेक्षस्य 'राजन्' शब्दस्य पुरुषशब्देन समासो न युक्त एव Bhāsk. ii. 206. 11 (*on* ii. 4.20)

**अनित्यसुख** (anitya-sukha) *n.* transitory happiness यस्त्वनित्यसुखात्मकः शेवधिः, स एवानित्यैर्द्रव्यैः प्राप्यते KāṭhUBh. 128. 6 (*on* 2. 10); बाह्यानित्यसुखासक्तिं हित्वा ··· अन्तरेव प्रकाशते ĀtmaBo. 51; अनित्यसुखलब्धये क्रतुषु कर्मठाः केचन श्रुतेर्वचनमात्रतः पशुवधं सुखं कुर्वते HariVi. 4.64.

**अनित्यसुखत्व** (anityasukha-tva) *n.* the state of being transitory happiness अनित्यसुखत्वादिरूपेणाज्ञानस्य कदाचित्संपत्त्या तेन रूपेणेव स्वकीयसुखत्वेनापि कदाचित् ज्ञानात्तेन रूपेणेच्छा LaCandr. 888. 30.

**अनित्यसोमपा** (anitya-somapā) *m.* (pl.) a class of *pitṛs* who are not ancient न च नित्ये संभवत्यनित्यसोमपादानं वैदिके कर्मणि युक्तम् ManuBh. i. 290. 28 (*on* 3. 184)

**अनित्यसोमावसेक** (anitya-somāvaseka) *m.* occasional sprinkling or smearing of Soma-juice दशापवित्रेण ग्रहं संमार्ष्टीति नित्यवच्छ्रुतस्य संमार्गस्यानित्यसोमावसेकनिर्हरणार्थत्वानुपपत्तेरदृष्टसंस्कारार्थत्वमेव MayūMāli. 95.25 (*on* ii. 1.1)

**अनित्यस्मृति** (anitya-smṛti) *f.* non-eternal *smṛti*-tradition आगमोऽपि श्रुतिमूलत्वविषयः नित्यो वा स्यात् कृतको वा। नाद्यः, मूलश्रुत्यनुपलम्भात्। नित्यस्यानित्यस्मृतिमूलप्रतिपादनाशक्तेश्च MīmāKau. i. 5. 9 (*on* i. 3. 1)

**अनित्यस्वभाव** (anitya-svabhāva) *adj.* having a non-eternal nature यः कृतकं स्वभावं जनयति, सोऽनित्यस्वभावं सन्तं जनयतीति प्रमाणं दृष्टान्तेनोपदर्श्यते PramāVāSvopVṛ. 11. 16.

**अनित्यस्वरूप** (anitya-svarūpa) *adj.* having a non-eternal form or nature अत एव ह्यनित्यस्वरूपस्य मोक्षसाधनस्यानुष्ठानम् ŚatDū. 75.22.

**अनित्यस्वरूपत्व** (anityasvarūpa-tva) *n.* the state of having an impermanent nature 'सोऽहं नित्यानित्य' इत्यादेरपि तत्र सामान्यतो नित्यानित्यस्वरूपत्वमुक्त्वा 'ब्रह्माह'मित्यनेन परब्रह्मतया नित्यरूपं विवृतम् ŚivārkaMaDī. i. 552.23 (*on* i. 4. 22)

**अनित्यहान** (anitya-hāna) *n.* abandonment of what is non-eternal नित्यस्यानित्यात्तात्त्विकभेदाभावे ··· नित्यानित्यवस्तुविवेको भ्रमः स्यादिति तेनानित्यहानेन नित्ये प्रवृत्तिरयुक्ता स्यात् Nyāyāmṛ. 546A. 8.

**अनित्यहृदया** (anitya-hṛdayā) *adj.* (*f.*) having a fickle mind न कुलं न कृतं विद्या न दत्तं नापि संग्रहम्। स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः Rāmā. ii. 901*(6); SūktiRa. 54.8.

**अनित्यहेतु** (anitya-hetu) *m.* probandum pointing to what is non-eternal अनित्यहेतव इमे किल कथ्यन्ते NyāyMañ. i. 188. 30.

**अनित्यहेतुतस्** (anityahetu-tas) *adv.* because of having an impermanent cause अनित्यहेतुतोऽनित्यं तेन कर्त्रादि लक्ष्यते। निर्हेतु प्रत्यगज्ञानं लक्ष्यते तेन नित्यवत् BṛĀraUBhVā. i. 4. 670.

**अनित्यहेतुता** (anityahetu-tā) *f.* the state of not having a fixed cause यदृच्छा[नित्य]हेतुता ParyāRaMā. 1282.

**अनित्याकारभावन** (anityākāra-bhāvana) *adj.* having the practice of the aspect of impermanence (मनस्कारः) भावनाकारप्रविष्टः ··· तत्र सप्तत्रिंशदाकारभावनः। अशुभाकारभावनो दुःखाकारभावनोऽनित्याकारभावनोऽनात्माकारभावनः स्मृत्युपस्थानेषु MaYānaSū. 57. 14 (11.11)

**अनित्यागमन** (anityāgamana) *adj.* arriving occasionally (नाधीयीत ···। अतिथिं चाननुज्ञाप्य) अनित्यागमनः शिष्टश्चातिथिः ManuBh. i. 373.3 (*on* 4.122)

**अनित्यागमपक्ष** (anityāgama-pakṣa) *m.* view that the Veda is non-eternal अनित्यागमपक्षे स्यादन्योऽन्याश्रयदूषणम् आगमस्य प्रमाणत्वमीश्वरोक्त्येश्वरस्ततः। आगमात् सिध्यतीत्येवमन्योऽन्याश्रयदूषणम् SarvaSiSaṁ. 8. 22.

**अनित्यात्मन्** (anityātman) *adj.* of non-eternal nature स (रसः) द्विविधो नित्यानित्यात्मा। नित्यः परमाणुभूतास्वप्सु। कार्यास्वप्स्वनित्य इति TarkBhā.(Ke.) 68.2.

**अनित्यादि** (anityādi) *adj.* what is impermanent etc. बाह्यार्थवादिनामप्यनित्यादिषु नित्यादिख्यातयो रजतादिविभ्रान्तयश्चावभासमानरूपसद्भावे नाविद्यात्वमश्नुवीरन् BrahmSi. 9. 18; सामान्यविशेषनित्यानित्यादिष्वनुप(ग?)मस्तत्तल्लक्षणज्ञानान्तरभावी NyāyKu. 154. 9.

**अनित्यादिकभावना** (anityādika-bhāvanā) *f.* [Jain.] contemplation as tranistory and suchlike वीतरागं मनोऽम्भोजे विदधानः शुभाशयः। श्रावकोऽर्हन्नयोऽस्मार्षीदनित्यदिकभावनाम् MalliC. 5.48.

**अनित्यादिदोषदर्शन** (anityādidoṣa-darśana) *n.* perception of the defects like impermanence etc. आत्मा ··· अविद्यया ··· नानायोनिषु परिवर्तमानो मुह्यमानः संसरन् कथंचित्पुण्यवशात् ··· अनित्यादिदोषदर्शनेनोत्पन्नेहामुत्रफलभोगविरागः ··· ब्रह्मात्मतत्त्वमवगम्य ··· ब्रह्मरूपोऽवतिष्ठते SanatBh. 174. 6 (*on* 1. 1)

**अनित्यादिफलनिःस्पृह** (anityādiphala-nisspṛha) *adj.* not desirous of a result which is impermanent etc. साध्यं शिवपदप्राप्तिः साधनं तस्य सेवनम्। साधकस्तत्प्रसादाद्योऽनित्यादिफलनिःस्पृहः ŚivaP. i. 3.18 (3B. 11)

**अनित्यादिरूप** (anityādi-rūpa) *n.* the nature of being impermanent etc. एवमनित्यादिरूपेण विद्वाननादरादिना अभिहन्ति कामान् SanatBh. 198. 17 (*on* 1. 12)

**अनित्याद्यगुणान्वित** (anityādya-guṇānvita) *adj.* endowed with qualities such as transient nature तं पराशरभट्टार्यमनैषीदात्मशक्तिकम्। निसर्गतस्त्रिवर्ग(ः)स्यादनित्याद्यगुणान्वितः EI. xiv. 93. 59.

**अनित्याधिकार** (anityādhikāra) *m.* eligibility for non-essential rites न त्वनित्याधिकारोऽस्ति विधेर्नित्येन संबन्धस्तस्मादवाक्यशेषत्वम् MīmāSū. x. 8. 36.

**अनित्यानध्यायत्वसूचन** (anityānadhyāyatva-sūcana) *n.* indication of being an occasional intermission of (Vedic) study 'चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा। दुर्मेधसामनध्यायस्त्वन्तरागमनेषु च' इति हेमाद्रिधृतवचनेन तदितरेषामनित्यानध्यायत्वसूचनादेष्वनध्यायशब्देन न तदतिरिक्तग्रहणम् BālamBha. i. 51. 3 (*on* 1. 14)

**अनित्यानुप्रेक्षा** (anityānuprekṣā) *f.* [Jain.] contemplation as transitory (यशोर्धमहाराजः) सस्मार संसारसागरोत्तरणपोतपात्रदशा द्वादशाप्यनुप्रेक्षाः। तथा हि ··· इत्थं क्षणक्षयहुताशमुखे पतन्ति वस्तूनि वीक्ष्य परितः सुकृती यतात्मा। तत्कर्म किंचिदनुसर्तुमयं यतेत यस्मिन्नसौ नयनगोचरतां न याति। इत्यनित्यानुप्रेक्षा YaśasCam. i. 259. 5; अथानुत्प्रे(?प्रे)क्षा उच्यन्ते — अन्विति ध्यानस्य पश्चात्प्रेक्षणानि — पर्यालोचनान्यनुप्रेक्षाः ··· तथा — कायः संनिहितापायः, संपदः पदमापदाम्। समागमाः, सापगमाः सर्वमुत्पादि भङ्गुरम्। इत्येवं जीवितादेरनित्यस्यानुप्रेक्षा अनित्यानुप्रेक्षेति SthānṬ. 190B. 10.

**अनित्यानुभवत्व** (anityānubhava-tva) *n.* the state of being a transitory experience एतेन प्रमा स्वविरोध्यनुभवप्रतिबन्धकजन्या अनित्यानुभवत्वात् अप्रमावत् TattvCin. i. 303.2.

**अनित्यानुमान** (anityānumāna) *n.* inference (of something) as not eternal तस्याश्च (इच्छायाः) दृष्टयवष्टम्भात् अनित्यत्वमेव युक्तं, विवाद-

स्थलेऽपि — इच्छात्वेन अनित्यानुमानात् TarkSaṁ.(Ā.) 112.6.

**अनित्यान्धकादिवंशाश्रय** ( anityāndhakādivaṁśāśraya ) *m.* recourse to impermanent clans such as *andhaka* etc. कथं पुनर्नित्यानां शब्दानामनित्यान्धकादिवंशाश्रयेणान्वाख्यानम् Pradī. iv. 140A.15 (*on* iv. 1.114)

**अनित्याबादिव्यावृत्ति** ( anityābādi-vyāvṛtti ) *f.* exclusion from (i. e. non-existence in) impermanent water etc. गन्धवत्त्वस्य··· अनित्याबादिव्यावृत्तेः निरवयवत्वादिवन्नित्यत्वस्मारकत्वम् NyāyPari. 63. 1.

**अनित्याभिधायिन्** ( anityābhidhāyin ) *adj.* referring to non-eternal things बर्बरः प्रावाहणिरित्याद्यनित्याभिधायिवेदरूपं दृष्ट्वा ··· पदानामिव शक्या कृतकताध्यवसातुमित्याह अनपेक्षत्वेति NyāyRa. 951. 17 (*on* 8. 2)

**अनित्यामित्रा** ( a-nityāmitrā ) *adj.* (*f.*) (land) not having permanent enemies संपन्ना नित्यामित्रा मन्दगुणा वा भूमिरनित्यामित्रेति ArthŚā. ii. 302. 4 (7.10); यस्या हि भूमेर्बहुदुर्गाश्चोरगणैर्म्लेच्छाटवीभिर्वा नित्याविरहिताः प्रत्यन्ताः, सा नित्यामित्रा। विपर्यये त्वनित्यामित्रा ArthŚā. ii. 303.3 (7. 10)

**अनित्यार्थ** ( anityārtha ) *m.* **i** the sense 'impermanent' बोधिसत्वानामसदर्थोऽनित्यार्थः। यन्नित्यं नास्ति तदनित्यं तेषां यत्परिकल्पितलक्षणम् MaYānaSū. 149.7 (18. 81); **ii** impermanent object यो ह्यनित्यार्थमेव-(? अनित्यार्थ एव) नित्यवदाम्नायते स विरुध्यते TantrVā. 1122.19 (*on* iii. 6.43); 10. 3 (*on* i. 2. 6); विवेकिनो विरक्तस्य ब्रह्मानित्यत्ववेदिनः। तद्भावेच्छोरनित्यार्थे तत्सामग्र्ये कुतोऽरतिः SarvaVeSāSaṁ. 171; *adj.* referring to an impermanent object यथेतरेषामनित्यसंयोगरहितानामापो वै शान्ता इत्यादीनामेकदेशानामक्रियार्थत्वादप्रामाण्यं तथैतेषामनित्यार्थानामप्यक्रियार्थत्वेनैवाप्रामाण्यसिद्धेर्न इतरेतराश्रयत्वम् NyāySu.(So.) 19. 11 (*on* i. 2. 6)

**अनित्यार्थत्वप्रसङ्ग** ( anityārthatva-prasaṅga ) *m.* undesired contingency of having reference to an impermanent object 'इमं मानवमावर्तं नावर्तन्ते', 'तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति। तेषामिह न पुनरावृत्तिः' इति···। इमंशब्देहशब्दौ संनिहितत्वमात्रावलम्बनौ, न तु व्यक्तिविशेषपरौ, श्रुतेरनित्यार्थत्वप्रसङ्गात् ŚrutaPra. ii. 655. 15 (*on* iv. 4.22)

**अनित्यार्थत्ववर्जन** ( anityārthatva-varjana ) *n.* rejection of being an impermanent object कथं नित्यानित्यविकल्पेनानित्यार्थत्ववर्जनम् NyāyRa. 955. 7 (*on* 8. 14)

**अनित्यार्थपरत्व** ( anityārthapara-tva ) *n.* the state of being what refers to an impermanent object अस्मर्यमाणकर्तृकत्वादिना वेदस्य नित्यत्वेऽपि देवादिविग्रहवाचकानां वैदिकशब्दानामनित्यार्थपरत्वमाशङ्क्य ··· वेदस्य नित्यत्वं द्रढयति VedāntKau. 101.10 (*on* i. 3. 29)

**अनित्यार्थप्रतिपादन** ( anityārtha-pratipādana ) *n.* mention of an impermanent object 'किं ते कृण्वन्ति कीकटेषु गावः ··· नैचाशाखं मघवन्रन्धया नः' इत्यादावनित्यार्थप्रतिपादनात् MīmāKau. iii(1). 67.2 (*on* i. 2. 41)

**अनित्यार्थसंयोग** ( anityārtha-saṁyoga ) *m.* connection with an impermanent object शब्दे तु वैदिके विरोधः प्रसज्यते। अनित्यार्थसंयोगात्। विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादेरर्थस्यानित्यत्वमनिवार्यम् BrahmSūBh.(Rā.) 315.18 (*on* i. 3.27); वेदे समुदायस्यानित्यत्वेनानित्यार्थसंयोगप्रसङ्गादप्रामाण्यप्रसक्तेर्नेदृशेनापि गौणत्वेन स्तुत्युपपत्तिः MīmāKau. i. 271.2 (*on* i. 4.23)

**अनित्यार्थाभिधान** ( anityārthābhidhāna ) *n.* denotation of an impermanent object विग्रहवत्त्वे सत्यनित्यत्वं वेदस्य प्राप्नोत्यनित्यार्थाभिधानात् BrahmSūBh.(Bhā ) 63. 25 (*on* i. 3. 29)

**अनित्यार्थाभिधायित्व** ( anityārthābhidhāyi-tva ) *n.* the state of being denotative of an impermanent object नित्यमेव निमित्तं वा कठत्वं जातिरस्ति नः। काठकादिप्रवृत्त्यर्थं व्यावृत्तं चरणान्तरात्। अनित्यार्थाभिधायित्वं स्वयमेवैष मुञ्चति ŚlokaVār. 8. 13 (954.6); अनित्यार्थाभिधायित्वे कृत्रिमत्वेन वेदस्याप्रामाण्यापत्तेः NyāySu.(So.) 19. 4 (*on* i. 2.6); अप्रामाण्ये सति यथाश्रुतार्थपरित्यागकारणाभावादनित्यार्थाभिधायित्वमनित्यार्थाभिधायित्वे बर्बरादिवाक्यानां कृतकत्वेनाप्रामाण्यम् NyāySu.(So.) 19. 9 (*on* i. 2. 6).

**अनित्यालम्बनत्व** ( anityālambana-tva ) *n.* the state of having an impermanent objective basis अनित्यालम्बनत्वेऽपि स्पष्टाभाः स्युस्ततः परे। आलम्बनार्थसद्भावं व्यर्थं पर्यनुयुञ्जते TattvSaṁ. 279.

**अनित्याल्पसुख** ( anityālpa-sukha ) *n.* inconstant and insignificant pleasure अनित्याल्पसुखरूपस्वर्गार्थमायुर्व्ययो न कर्तव्यः Mitā. 29.10 (*on* 1.86); मोक्षमनिच्छतोऽनित्याल्पसुखेऽपीच्छावतः प्रयागमरणं न दोषाय TristhaSe. 52. 8.

**अनित्याल्पस्वर्गादिसुख** ( anityālpa-svargādisukha ) *n.* pleasure in heaven etc. which is impermanent and insignificant आत्मज्ञानेन ··· मोक्षमपि साधयितुं शक्नोति तस्मादनित्याल्पस्वर्गादिसुखार्थमायुषः प्राङ् न प्रेयाद् आयुर्व्ययं न कुर्यान्मोक्षार्थीत्यर्थः TristhaSe. 52.6.

**अनित्यावयव** ( anityāvayava ) *adj.* (body) having perishable limbs तस्मादनित्यावयवे न त्वं शोचितुमर्हसि SkandP. iii(3). 10. 71.

**अनित्यावस्थान** ( anityāvasthāna ) *n.* occasional or unfixed stay अनित्यावस्थानान्न विद्यते द्वितीया तिथिरस्येत्यतिथिरुच्यते ManvaMu. 106. 23 (*on* 3. 102)

**अनित्यावस्थान्तरातिरिक्त** ( anityāvasthāntarātirikta ) *adj.* apart from another impermanent condition अनित्यावस्थान्तरातिरिक्तस्य प्रध्वंसस्याभावात् NyāyPari. 246.8.

**अनित्याव्यापिता** ( anityāvyāpi-tā ) *f.* the state of being impermanent and non-pervasive अनित्याव्यापितायां च दोषः प्रागेव कीर्तितः PramāVār. 1. 263.

**अनित्याशुचिदुःखरूप** ( anityāśuciduḥkha-rūpa ) *adj.* of the nature of impermanence, impurity and misery स ह्यनित्याशुचिदुःखरूपे संसारे नित्यशुचिसुखख्यातिलक्षणेन विपर्यासेन चित्तसत्त्वं मलिनयति Bhām. 46.13 (*on* i. 1. 1)

**अनित्याशुचिदुःखरूपता** ( anityāśuciduḥkharūpa-tā ) *f.* the state of having the nature of impermanence, impurity and misery पापनिवृत्तौ ··· प्रत्यक्षोपपत्तिभ्यां संसारस्यानित्याशुचिदुःखरूपतामप्रत्यूहमवबुध्यते Bhām. 46. 16 (*on* i. 1.1); 687.3 (*on* iii. 4. 26)

**अनित्याशुचिदुःखात्मक** ( anityāśuciduḥkhātma-ka ) *adj.* having the nature of being impermanent, impure and miserable अस्य पुरुषधौरेयस्य ··· तापत्रयपरीतमात्मानं च जीवलोकं चावलोक्यास्मिन् संसारमण्डलेऽनित्याशुचिदुःखात्मकं प्रसंख्यानमुपावर्तते Bhām. 52.15 (*on* i. 1.1)

**अनित्याशुचिदुःखानुविद्धता** ( anityāśuciduḥkhānuviddha-tā ) *f.* the state of being permeated by impermanence, impurity and misery योऽभिध्यायन् अनित्याशुचिदुःखानुविद्धतया चिन्तयन् ··· उत्पतिष्णवो विषयाः तान् निहन्यात् ··· स वै ··· मृत्युरिवात्ति मृत्युम् SanatBh. 198.10 (*on* 1. 12)

**अनित्याशुचिदुःखानुविद्धत्व** ( anityāśuciduḥkhānuviddha-tva ) *n.* the state of being permeated by impermanence, impurity and misery पुरुषार्थपर्यवसायित्वाद्वेदस्य तद्व्यतिरिक्तस्य सर्वस्य अनित्याशुचिदुःखानुविद्धत्वेन पुरुषार्थत्वाभावात् ··· वेदानां प्रामाण्यम् SanatBh. 262. 11 (*on* 2.41)

**अनित्याश्रय** ( anityāśraya ) *adj.* depending on (what is) impermanent अनित्याश्रयमज्ञानमिति च विप्रतिषिद्धम् IṣṭaSi. 83. 13.

**अनित्याश्रयत्व** ( anityāśraya-tva ) *n.* the state of being dependent on an impermanent (object) न चानित्याश्रयत्वाद्युपाधिः, साधनव्यापकत्वात् TarkSaṁ.(Ā.) 66. 6.

**अनित्याश्रयाश्रयहेतुजा** ( anityāśrayāśrayahetu-jā ) *adj.* (*f.*) produced by a cause which is abode of (a power) which resides in impermanent things अश्म्यादौ सिद्धा शक्तिर्भावान्तरेष्वपि कार्यकरेष्वनुमानसिद्धा। सा च नित्याश्रया नित्यैव अनित्याश्रयाश्रयहेतुजा (अनित्या) NayaVi. 136. 6 (*on* i. 1.5)

**अनित्याश्रयाश्रित** ( anityāśrayāśrita ) *adj.* resting on an impermanent substratum अतीन्द्रियमग्नेः स्वरूपम् ···। तस्य च नित्याश्रयाश्रितस्य नित्यत्वम्, अनित्याश्रयाश्रितस्य तदुत्पत्तिकारणादेवोत्पत्तिः PrakaPañ. 219.15.

**अनित्याश्रित** ( anityāśrita ) *adj.* resting on what is impermanent पृथक्त्वम् ··· द्विविधम्। एकपृथक्त्वं द्विपृथक्त्वं च। तत्राद्यं नित्याश्रितं नित्यमनित्याश्रितमनित्यम् TarkBhā.(Ke.) 69. 14; कर्मान्यत्वे सति जातिमात्राश्रया गुणाः रूपरसगन्ध° ··· °धर्माधर्माः। ते चानित्याश्रिता अनित्या एव TattvPrakā. 97B.3 (*on* ii. 2. 11)

**अनित्यासर्वविषयबुद्धिमत्** ( anityāsarvaviṣayabuddhi-ma(n)t ) *adj.* possessing knowledge which is impermanent and which does not cover all objects तनुभुवनाद्यभिज्ञः कर्ता नानित्यासर्वविषयबुद्धिमान् तत्कर्तुस्तदुपादानाद्यनभिज्ञत्वप्रसङ्गात् TātpaṬ.(Vā.) 604. 8 (*on* iv. 1. 21)

**अनित्येच्छापरिग्रह** ( anityecchā-parigraha ) *m.* assumption (of the body) due to impermanent desire शरीराण्यपि कानिचित् नित्यानामीश्वरस्य च नित्येच्छापरिग्रहात् नित्यानि। कानिचिदनित्येच्छापरिग्रहादनित्यानि NyāySiA. 236.8.

**अनित्येच्छावत्** ( anityecchā-vat ) *adv.* like temporary desire अनित्यज्ञानमभावत्वानधिकरणस्वविरोधिसमानाधिकरणं प्रयत्नान्यत्वे सत्यनित्यत्वे सति सविषयकत्वादनित्येच्छावत् Nyāyāmṛ. 329B. 7; AdvaiSi. 567. 8.

**अनित्येश्वर** ( anityeśvara ) *m.* non-eternal god काचिच्च ··· श्रुतिः सिद्धस्य ब्रह्मविष्णुहरादेरेवानित्येश्वरस्याभिमानादिमतोऽपि गौणनित्यत्वादिमत्त्वान्नित्यत्वाद्युपासापरेत्यर्थः SāṁkhyaPraBh. 47.9 (*on* 1. 95)

**अनित्येश्वरज्ञान** ( anityeśvarajñāna ) *n.* impermanent knowledge belonging to god योगसिद्धसर्वज्ञवादिनां द्वितीययोगप्रत्यक्षादौ केषांचिदीश्वरवादिनामनित्येश्वरज्ञाने च व्यभिचाराच्च NyāyPari. 484. 9.

**अनित्यैकग्रह** ( anityaika-graha ) *m.* cognition that things are

**अनिन्दित** ( a-nindita ) *m.* epithet of Śiva (*lit.* blameless) अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु । ... विजयो व्यवसायो ह्यनिन्दितः MahāBhā. xiii. 17.50; LiṅgaP. i. 65. 75; MahāBhā. xiii. 17. 97; हरस्यामिततेजसः । अष्टोत्तरसहस्रं तु नाम्नां शृणुत ... वंशवादी ह्यनिन्दितः LiṅgaP. i. 65.121; i. 65.124.

**अनिन्दितकर्तृकता** ( aninditakartṛka-tā ) *f.* the state of having been constructed by blameless persons अविज्ञाते गाधागाधतया नक्रादिरहिततया च कृत्रिमे[ऽ]निन्दितकर्तृकतया प्रतिष्ठितत्वाप्रतिष्ठितत्वाभ्यां च VīraMi. (Āhnika.) 160. 9; BālamBha. i. 420. 14 (*on* 1. 159)

**अनिन्दितगामिनी** ( aninditagām-inī ) *adj.* (*f.*) walking flawlessly एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् । जग्राह विधिवत्पाणौ ( शकुन्तलाम् ) MahāBhā. i. 67. 19; तामनिन्दितगामिनीम् । अन्तःपुरं प्रवेश्यैव MahāBhā. i. 683*(1)

**अनिन्दितगुण** ( anindita-guṇa ) *adj.* **i** possessing praiseworthy qualities तद्वंशाद् अभवन्ननिन्दितगुणा मुक्तामयाः सद्वताः ...क्षितिभृतः श्रीमद्रपाडादयः [Read श्रीमङ्गपा°( ? )] EI. vi. 137.6; **ii** having strong threads, EI. vi. 137.6.

**अनिन्दितचेष्टिता** ( anindita-ceṣṭitā ) *adj.* ( *f.* ) of blameless conduct उवाच हनुमान् वाक्यं तामनिन्दितचेष्टिताम् ( तापसीम् ) Rāmā. iv. 52.1.

**अनिन्दितत्व** ( anindita-tva ) *n.* the state of being irreproachable अनिन्दितत्वादेकीयपक्षस्य विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्यात् BṛĀraUBh. 72. 10 (*on* i. 3. 27); इदं वेदिसंमानवाक्यं यूपैक्यविधिस्तुत्यर्थं अनिन्दितत्वात् MīmāKau. ii. 128. 2 (*on* ii. 4. 26)

**अनिन्दितद्विजगृह** ( aninditadvija-gṛha ) *n.* house of a noble twice-born अनिन्दितद्विजगृहे ... भिक्षार्थं पर्यटेद्यतिः BṛNāraP. 25. 57.

**अनिन्दितपाक** ( anindita-pāka ) *m.* unobjectionable food, acceptable food परपाकनिवृत्तस्य परपाकरतस्य च । अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत् । अनिन्दितपाकादपि निवृत्तः Aparā. 1177. 9 ( *on* 3.289 )

**अनिन्दितपौरुष** ( anindita-pauruṣa ) *adj.* of blameless valour सुमतयोऽजितचित्रसुरादयो विनयतः समुपेत्य नरेश्वरम् । वचनमित्थमिदं हितमर्थवज्जगदुरेवमनिन्दितपौरुषम् VarāṅgaC. 20. 21.

**अनिन्दितफल** ( anindita-phala ) *adj.* bearing an irreproachable result नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः RaghuVa. 11.90.

**अनिन्दितभाषिणी** ( aninditabhāṣ-iṇī ) *adj.* ( *f.* ) speaking flawlessly एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ( v.1. °भाषिणीम् ) । जग्राह विधिवत्पाणौ MahāBhā. i. 67.19.

**अनिन्दितभोजिन्** ( aninditabhoj-in ) *adj.* eating what is not forbidden कृच्छ्राणां व्रतरूपाणि । ... एकवासोऽनिन्दितभोजी सकृद्भैक्षमिनिन्दितं त्रिषवणम् VāsiDS. 24.5.

**अनिन्दितलोचना** ( anindita-locanā ) *adj.* ( *f.* ) having beautiful eyes इति संचिन्तयन् कामस्तामनिन्दितलोचनाम् । कामातुरोऽसौ संजातः VāmaP. 7. 13.

**अनिन्दितवेशभृत्** ( aninditaveśa-bhṛt ) *adj.* wearing a blameless dress ( मैथिली ) दृश्या मासतमादह्वः प्रागनिन्दितवेशभृत् Bhaṭṭi. 7. 45.

**अनिन्दितशिल्प** ( anindita-śilpa ) *n.* unobjectionable craft भक्ताच्छादनादि ... पत्यौ देशान्तरम् ... । अदत्त्वा पुनर्गते सूत्रनिर्माणादिभिरनिन्दितशिल्पैर्जीवेत् ( स्त्री ) ManvaMu. 377. 6 (*on* 9. 75)

**अनिन्दितहस्त** ( anindita-hasta ) *m.* unprohibited hand, right hand स्मृत्यन्तरम् — ‘... स्वहस्तेनापि चाचामेत् सर्वदा शुचिरेव सः’ । न केवलमनिन्दितहस्तेनेत्यपिशब्दार्थः Aparā. 41. 21 (*on* 1. 21)

**अनिन्दिता** ( aninditā ) *f.* **A** (Jain.) name of one of the eight Dikkumārīs (residing in the nether-world) अधोलोकवासिन्यः ... । दिक्कुमार्यः समाजग्मुरष्टौ ... अनिन्दिता TriṣaŚaPuC. i. 2.274; ii. 2. 163; MalliC. 4. 63; सुवत्सा वत्समित्रा च पुष्पमाला त्वनिन्दिता । एता मेरुरुचकाधोलोकस्था दिक्कुमारिकाः PārśvC. 5.51; **B** name of a *śakti*-goddess शक्तीः ... अम्बुजाक्षीमनिन्दिताम् ।... पूजयेत् षोडशद्वये TantrRā. 19.13.

**अनिन्दितांशु** (aninditāṁśu) *adj.* **i** having agreeable rays वल्गद्ध्रुवं विमलधिष्ण्यमनिन्दितांशुसोमाभिरामम् — दक्षाध्वरं हर इवाम्बरमन्वगच्छत् Surath. 7.38; **ii** having flawless stalks, Surath. 7.38.

**अनिन्दिताङ्ग** ( aninditāṅga ) *adj.* [ *f.* -ī ] having irreproachable (i. e. beautiful) limbs अयं च कामो द्रुपदस्य राज्ञो हृदि स्थितो नित्यमनिन्दिताङ्गाः ( हे पाण्डुसुताः ) MāhāBhā. i. 185.19; तारे विमुञ्च मम वस्त्रमनिन्दिताङ्गि Abhiṣe. 1. 9.

**अनिन्दितात्मन्** ( aninditātman ) *adj.* of unblemished self स नन्दिनीस्तन्यमनिन्दितात्मा ... । पपौ वसिष्ठेन कृताभ्यनुज्ञः RaghuVa. 2. 69; 18. 18; श्रुत्वा सुतावाक्यमनिन्दितात्मा नृपांश्च गत्वा नृपतिर्जगाद DevīBhāP. iii. 22.1; अवाप्तबन्धेन लघुत्वमब्धिना वितर्क्य पित्रा सुरराजकुञ्जरः । प्रसूतमात्मानमनिन्दितात्मनो ब्रवीति VikraDeC. 17. 26; तं चाब्रवीन्निजकलत्रमनिन्दितात्मा ( स्वप्नम् ) ŚaṅkaDigVi.(Mā.) 2. 54; आ त्वारणा नेयमनिन्दितात्मनाम् ŚaṅkaDigVi.(Mā.) 8. 33; 12. 47.

**अनिन्दितामल** ( aninditāmala ) *adj.* praiseworthy as well as pure समाप्नुयुर्योगमिमं महाधियो महर्षयश्चैवमनिन्दितामलाः VāyuP. i. 16.23.

**अनिन्दितोदरी** ( aninditodarī ) *adj.* (*f.*) having a beautiful belly अनङ्गसंतापदशामहापथे समुद्यता गन्तुमनिन्दितोदरी । ... सा UdaySuKa. 101. 14.

**अनिन्दितोष्ठी** ( aninditoṣṭhī ) *adj.* (*f.*) having charming lips तलोदरीं कश्चिदनिन्दितोष्ठीम् ... । तुल्यां प्रियामप्सरसैक्ष्य मेने युद्धाद्गतिं स्वर्गृहयोः समानाम् Rāvaṇā. 14.28.

[1]**अनिन्दु** ( an-indu ) *adj.* moonless अनिन्दुः कौमुदीकान्तिः कुतो नौ सुखयत्यलम् SkandP. iv. 11. 101; ध्वान्तैणनाभ्या ... दिशः ... । मन्दाक्षलक्ष्या निशि मामनिन्दौ सेर्ष्या भवायान्त्यभिसारिकाभाः NaiṣC. 22.32; अनिन्दुरपि दीपाली रजनीदीप्रदीपिका । विधवापि तथा नारी राजते पुत्रदीपिका ŚāliC. 1.23; *m., f.* day of the new-moon सप्तम्यनिन्दुनवमीष्वपि संपदिच्छुः स्नायात् कदाचिदपि नामलकैर्मनुष्यः ŚārṅgaPa. 661; दिवोदासीयोऽपि ‘अनिन्दुरिन्दुपूर्णा च हरिवारो बुधाष्टमी । नाधिमासे परित्याज्याः सीमन्तान्नाशने शिशोः’ इति । अनिन्दुः दर्शः NirṇaSi. 9. 8.

[2]**अनिन्दु** ( a-nindu ) *f.* woman not bearing a dead child, ŚāliC. 1. 23 ( comm. न निन्दुर्मृतपुत्रप्रसविनी )

**अनिन्दुपर्वन्** ( anindu-parvan ) *n.* day of the new-moon अनिन्दुपर्वण्ययुतं जपित्वा द्वारे निखातं गृहरक्षकं तत् IśānŚiPa. i.33.110.

**अनिन्द्य** ( a-nindyá ) *adj.* [ *f.* -ā ] [ AltGr. II. 2. 791 ] **1** not censurable, beyond censure **2** not despicable, faultless, viceless, virtuous **3** not to be prohibited, not to be forbidden, to be permitted **4A** not liable to faults or short-comings, not defective, beautiful **B** not liable to flaws, not to be abused, not defamable, perfect **5** irrefutable, not objectionable, acceptable **6** not evil, not injurious, auspicious **7** not abhorrent **1** not censurable, beyond censure अधा चिद्धि ष्माश्विनावनिन्द्या पाथो हि ष्मा वृषणावन्तिदेवम् ṚV. i. 180. 7; अन्तर्वाणीषु प्र चरा सु जीवसेऽनिन्द्यो वृजने सोम जागृहि ṚV. ix. 82. 4; और्वं तनूजं वि सृजाम्यनिन्द्य तच्छिन्धि वज्रेण भव त्वमीड्यः ।... शक्र Supārṇādhyāya 27.5; त्वमनिन्द्य गोपते त्रिपुरमथन ... पाहि माम् SkandP. v (1). 32. 81; ये संश्रिता हरिमनन्तमनिन्द्यम् ... ते धर्मराजशरणं न विशन्ति धीराः VāmaP. 94. 30; अजमजरमनाद्यं शाश्वतं ब्रह्म नित्यं शिवममलममोघं वन्द्यमुच्चैरनिन्द्यम् YogVā. iii. 9.76; **2** not despicable, faultless, viceless, virtuous स होवाच । अनिन्द्या वै मावृषत सोऽनिन्द्यैर्वृतो नाशकमपक्रमितुमिति तस्माद्‌ हानिन्द्यस्य वृतो नापक्रामेत् ŚatBr. III. v. 1.17; ŚatBr.(K.) IV. v. 1. 10; GopBr. ii. 6. 14 (266. 14); शुचौ देशे ब्राह्मणाननिन्द्यानयुग्मानुदङ्मुखानुपवेश्य ... तिलोदकं ददाति GobhiGS. iv. 2. 31; तस्माद्राजाचार्यावनिन्द्यौ GautDS. ii. 2. 32; प्रशाधीमं स्वजनं राजपुत्रि इक्ष्वाकुराज्यं सुमहच्चाप्यनिन्द्ये MahāBhā. iii. 190. 80; कथं तु भृत्यैः स विनाकृतो वने वसत्यनिन्द्यो रमते च पाण्डवः MahāBhā. iv. 11.11; ऋश्यरोहीमिवानिन्द्याम् ... । सुदेष्णा पर्यपृच्छत्ताम् MahāBhā. iv. App. I. 6 (33); सतां संमतश्च निवासश्च महात्मनाम् । सत्यवादी ह्यदीनश्च (v. 1. ह्यनिन्द्यश्च) धर्मवित्सुविनिश्चितः MahāBhā. v. 10. 25; तन्माभिनन्द्यं (v.1. तन्मामनिन्द्यं) बीभत्सो किमर्थं नाभिनन्दसे MahāBhā. vii. 168.32; भुजपार्श्वान्तरस्थेन कक्षगेन कृशोदरी । पणवेन सहानिन्द्या सुप्ता मदकृतश्रमा Rāmā. v. 8. 39; अनिन्दितैः स्त्री विवाहैरनिन्द्या भवति प्रजा ManuSm 3.42; ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये YājñaSm. 1. 29; SkandP. iv. 36. 16; अर्थैदैरनर्थप्रतिघातिभिश्चानिन्द्यैरिभ्यैरनुबद्धार्थानर्थसंशयान् भूयोभूयः संयोजनम् DaśKuC. 42.19; AṣṭāSaṁ. i. 195. 7 (2. 1); अनिन्द्यः पौलस्त्यो व्रजतु परिवादो मयि पुनः MahāvīC. 5. 28; अनिन्द्यां ते पुरोधाय देवीम् ... आविर्देवता वह्निरासीत् ĀścaCū. 7.19; विद्वांसो ह्यत्र निष्कामाः प्रवृत्तपूर्वा अनिन्द्याश्च लोके ManuBh. i. 52. 30 (*on* 2. 1); वृत्तं तस्मादनिन्द्यस्य नापक्रामेत् BālaKrī. 14. 26 (*on* 1. 7); त्यक्त्वा पद्मामनिन्द्यां मदनशरहतो गोपनारीं सिषेवे SubhāRaSaṁ. 656; सतां विवदमानानां सच्छास्त्रव्यवहारिणाम् । यः समाह्लादकोऽनिन्द्यः स श्रेष्ठस्तं समाश्रयेत् YogVā. vi(2). 97. 21; नैव परपाकरुचिः स्यात् । अनिन्द्येनामन्त्रणं विना Mitā. 38.4 (*on* 1. 112); अनिन्द्यमामन्त्रयितारं वर्जयित्वा परस्यान्नं नाभिलषेत् Aparā. 156. 7 (*on* 1. 112); तेषां ब्राह्मणानाम् अनिन्द्येनामन्त्रणे क्रियमाणे कामम् ... प्रतिश्रवः अभ्युपगमः, कर्तव्यो भवति CaturCin. iii(1). 1159. 11; **3** not to be prohibited, not to be forbidden, to be permitted अनिन्द्यं वै व्रजेद्गेहं निन्द्यं गेहं तु वर्जयेत् NāraPaU. 5. 12; अनिन्द्यं भक्षयेदित्थं वाग्यतोऽन्नमकुत्सयन्

VişņuP. iii. 11. 89; अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः YājñaSm. 1. 90; केशमक्षिकाद्यजुष्टमनिन्द्यमनिन्दन् ··· हितमन्नमश्नीयात् AşţāSaṁ. i. 65. 7 (1. 10); कन्याम् ··· अनघामनिन्द्यामनिन्द्येन विधिनोद्वहेत् AşţāSaṁ. i. 195.7 (2.1); यत्र विधानं पुरुषस्य प्रवर्तमानस्य प्रीत्यतिशयोत्पत्तिप्रयोजनमनिन्द्यम् ManuBh. i. 445.10 (*on* 5. 56); शारदाभ्रचलचंचलमायुः किं ध[नैः] कुरुत धर्म्ममनिंद्य(द्यम्) EI. xxv. 170.20; KathāK. 106.11; तेऽभिगम्या मनुष्याणामनिन्द्ये ये पथि स्थिताः Rāvaņā. 21. 31; यद्यप्यशास्त्रीयतया विभाति तेजस्विनां कर्म तथाप्यनिन्द्यम् ŚaṅkaDigVi.(Mā.) 14.53; **4A** not liable to faults or shortcomings, not defective, beautiful अनेद्यः। <u>अनवद्यः</u> (v. l. अनिन्द्यः) ··· वयुनमिति प्रशस्यस्य [नामानि] Nigh. 3. 8; अनेद्यः। अनिन्द्यः ··· प्रशस्य(स्य) AVPari. 48(1). 62; सांध्यैश्च परिवेषैश्च प्रतिघैः प्रतिसूर्यकैः। जलजैश्चावृतानिन्द्यैः सद्यः संध्या प्रवर्षति AVPari. 65(2). 3; अद्यप्रभृति न केवलमयमनिन्द्यो वन्द्योऽपि प्रकाशितसत्सारः संसारः HarşaC. 319. 11; व्रजति रजनिरेषा तन्मयूखाङ्गरागैः परिमलितमनिन्द्यैरम्बरान्तं वहन्ती ŚiśuVa. 11. 21; अनिन्द्या कुन्दमालिका। सह बालवसन्तेन यदनेन रुमेष्यति BŗKathāŚloSaṁ. 22. 78; साधुः अनिन्द्यः आचारो वाग्व्यवहारादिः कार्यः ManuBh. i. 179.6 (*on* 2. 193); KāvyMī. 18.20; स एव पुरुषार्थः स्याद्यश्चानिन्द्यं न निन्दति GaņeP. ii. 117. 20; शृङ्गारिणीमार्जितदन्तपङ्क्तिकान्त्येव निर्यन्त्रणमुच्छलन्त्या। प्रक्षाल्यमानस्य शनैरवापुरनिन्द्यमिन्दोः किरणाः प्रसादम् VikraDeC. 7.55; यदस्ति किंचित्क्वचिदप्यनिन्द्यमानन्दहेतुर्ज्जगतीह वस्तु EI. i. 360. 60; कमपि विधिवशेन प्राप्य योग्याभिमानं जगदखिलमनिन्द्यं दुर्जनः किं करोति VidaMuMa. 2.38; वक्त्रारविन्दमधुपानपराम् अनिन्द्यां वंशीं कदापि करतो न वियोजयामि GopāKeCan. 84. 7; जहौ ···। अचिन्त्यवृत्तिर्मधुरामनिन्द्याम् Yādavā. 11.11; ŚaṅkaVi.(Ā.) 79. 6; बलानि ··· रेणुभिरन्तरिक्षम्। आच्छादयन्ति स्फुरितायुधानि ब्रध्नस्य रश्मिप्रकरैरनिन्द्यैः VīraBhā. 2. 38; **4B** not liable to flaws, not to be abused, not defamable, perfect अथ पिङ्गलकः ··· अप्रहरणाभरणम् ··· अनिन्द्यम् ··· राजत्वमनुभवन्नास्ते Tantrākhyā. 4. 19; Pañcā. 4. 33; अभ्येत्य चामुमिह पाटलचन्दनार्चा नाकर्षयोऽगमधुरभ्रमणावनिन्द्याम् HarVi. 5. 36; काली ···। लावण्यसौभाग्यगुणैरनिन्द्यैः पुरन्ध्रिचूडामणितामुपेत्य।··· रुरोध ··· धरार्धम् HarVi. 48.87; अनिन्द्यमिदमैश्वर्यं सभार्यासुहृदस्तव BŗKathāŚloSaṁ. 3. 111; 21.70; कलादित्यः ··· स्वीकृत्य ··· उदग्रवेगं स्वीयं सैन्यमनिन्द्यं च सामन्तचक्रम् ··· निर्जगाम UdaySuKa. 6. 18; **5** irrefutable, not objectionable, acceptable कृत्स्नं च वेदाङ्गमनिन्द्यमार्षम् ŖPrāti. 14. 30; नो चेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः ĀtmaTaVi. 529. 4; **6** not evil, not injurious, auspicious नदीतटे समुद्रस्य संगमे वा विशेषतः। अनिन्द्ये दिग्विभागे च ···। भूमिं संशोधयेत् कर्ता AVPari. 21(4). 3; वृषभध्वजाय नमो वानरं ते मुखं रौद्रमनिन्द्यम् AVPari. 40(1). 14; इति वादिन एवास्य होतुराहुतिसाधनम्। अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् RaghuVa. 1. 82; सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन। यश्च द्वितीयं स्वयमद्वितीयो मुख्यः सतां गौणमवाप नाम ŚiśuVa. App. 4; षड् निन्द्याः (रात्रयः) ···। अष्टावन्या अनिन्द्याः BālaKrī. i. 81.22 (*on* 1. 79); नमस्ते ··· गङ्गे ··· अनिन्द्ये दोषवर्जिते BŗDharmaP. i. 5.68; दुर्गम् ···। किमग्रपुरसंस्थानमनिन्द्यं किं च निन्दितम् SamarāSū. 3.13; 10.109; अनिन्द्यास्वप्यष्टासु यासु कासुचिद् रात्रिषु स्त्रियो वर्जयन् रात्रिद्वये एव च स्त्रियोऽभिगच्छन् ब्रह्मचार्येव भवति VīraMi.(Āhnika.) 559.20; **7** (disease) not abhorrent व्याधिम् ··· ख्यापयेत्।··· अनिन्द्यमजुगुप्सितम् JayaMa. 315.25 (*on* 6. 2)

**अनिन्द्य** (a-nindya) *m.* **1** an epithet of Jina (*lit.* beyond censure) त्वाम् ···। नाम्नामष्टसहस्रेण तोष्टुमोऽभीष्टसिद्धये। ··· वन्द्योऽनिन्द्योऽभिनन्दनः MahāP. 25. 167; **2** name of a particular hermitage [PW.]; *n.* property etc. obtained by barter याच्ञाद्रव्ये याचितकं नियमात् संभृतेऽपि तु। आपमित्यकमक्लिष्टमनिन्द्यं चापमित्यकम् ParyāŚaRa. 1175.

**अनिन्द्यकर्मन्** (anindya-karman) *adj.* engaged in unforbidden acts जनैरुपग्राममनिन्द्यकर्मभिः ··· वृताः। भृशं ददर्श ··· स निवेशवीरुधः Kirātā. 4.19; *n.* act not prohibited कुर्यादनिन्द्यकर्माणि नित्यकर्माणि वाचरेत् KulārT. 9.124.

**अनिन्द्यकीर्ति** (anindya-kīrti) *adj.* whose fame is faultless or unstained त्रेताग्निधूमाग्रमनिन्द्यकीर्तेस्तस्येदम् ···। घ्रात्वा ··· समश्नुते मे लघिमानमात्मा RaghuVa. 13. 37; मुनिस्ताभिः ··· वृतस्स कन्याभिरनिन्द्यकीर्तिः VişņuP. iv. 2.94; सः (रावणः)।··· अनिन्द्यकीर्तिः सुखी बभूव SaurP. 47. 76.

**अनिन्द्यकुलोद्भवा** (anindyakulodbhavā) *adj.* (*f.*) born of a blameless or noble family माता भविष्यतो राज्ञोर्नन्दानिन्द्यकुलोद्भवा।··· दीप्ताग्नौ गृहे स्वं निरदाहयत् RājTa.(Ka.) 7.1491.

**अनिन्द्यकृतामन्त्रण** (anindyakŗtāmantraņa) *n.* invitation given by a blameless or noble person अत्र प्रतिप्रसवः 'अनिन्द्यामन्त्रणादृते' अनिन्द्यकृतामन्त्रणं विनेत्यर्थः VīraMi. 203. 8 (*on* 1.112)

**अनिन्द्यगन्धबन्धु** (anindyagandha-bandhu) *m.* companion of excellent fragrance आघ्राय श्रमजमनिन्द्यगन्धबन्धुं निःश्वासश्वसनमसक्तमङ्गनानाम्। आरण्याः सुमनस ईषिरे न भृङ्गैः ŚiśuVa. 8.10.

**अनिन्द्यचरित** (anindya-carita) *adj.* of irreproachable conduct or behaviour धीमाननिन्द्यचरितः कुशलो विनीतः।··· सोऽयं भवेदमलसंयमशास्त्रभागी KalyāKā. 1. 21.

**अनिन्द्यचरिताकृति** (anindya-caritākŗti) *adj.* of praiseworthy character and form होमश्चतुर्भिरथ वेदपुराणविद्भिर्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः।··· कार्यः MatsyaP. 83. 25 = PadmP. v. 21.106; BhaviP. 886B. 10 (iv. 195.26) (Wai Ed.)

**अनिन्द्यजलशकुन्त** (anindya-jalaśakunta) *m.* auspicious aquatic bird अत्रेदमनिन्द्यजलशकुन्तकूजितारावसूचितम् ···सरो दृष्टिगोचरमभूत् UdaySuKa. 143. 27.

**अनिन्द्यजानि** (anindya-jāni) *adj.* having a beautiful wife (रामेण) अनिन्द्यजानिनारूढो निर्जगाम रथः पुरः JānaHa. 10. 46.

**अनिन्द्यतेजस्** (anindya-tejas) *m.* the sun (*lit.* having excellent lustre) अथाससादास्तमनिन्द्यतेजाः Subhāşi. 1898.

**अनिन्द्यत्व** (anindya-tva) *n.* faultlessness, unimpeachability (in litigation) नैवं व्यवहाराख्यनिर्णयवशेन, लेख्यवैगुण्यस्योक्तत्वात् किंतु द्वितीयव्यवहाराख्यनिर्णयात् भोक्तुरनिन्द्यत्वं स्वामिनो निरुत्तरत्वेनास्वामिनो जितत्वात् SmŗtiCan. iii. 156.10.

**अनिन्द्यद्युति** (anindya-dyuti) *adj.* having unblemished or excellent splendour कायस्थो जयवर्म्मदेवनृपतेरीशस्य वि(वि)[भ्र]त्कलाः साहित्यांबु(बु)धिवं(बं)धुरुद्धततमो रुन्धन्ननिंद्यद्युतिः EI. i. 147. 34; *f.* unblemished or excellent splendour तस्मादस्यामनिन्द्यद्युतिरचितफणी(णा)चक्र[भृ]द्वक्रशल्यः श्रीमान् देवः ··· उल्लभाख्यः EI. vii. 89. 10.

**अनिन्द्यपशुबालधि** (anindyapaśu-bāladhi) *m.* tail of a cow (*lit.* tail of an excellent animal) (बस्तिनेत्राणि) अनिन्द्यपशुबालधिप्रतिमवर्तुलान्यग्रतः KalyāKā. 8.49.

**अनिन्द्यप्रथमवृद्धव्यवहार** (anindyaprathamavŗddha-vyavahāra) *m.* linguistic usage of faultless and foremost elderly persons सिद्धार्थानां स्मृतीनां शब्दस्मृतिवदनिन्द्यप्रथमवृद्धव्यवहारमूलत्वसंभवात् किं वेदमूलत्वकल्पनया CaturCin. iii(1). 789. 4; iii(1). 789. 21.

**अनिन्द्यबन्दिन्** (anindya-bandin) *m.* praiseworthy bard तमनिन्द्यबन्दिन इवेन्द्रसुतम् ··· जगतीरुहोऽवचकरुः कुसुमैः Kirātā. 6.2.

**अनिन्द्यबन्दिवत्** (anindyabandi-vat) *adv.* like a praiseworthy bard मुररिपुरयं कतमो यमनिन्द्यबन्दिवदभिष्टुषे वृथा ŚiśuVa. 15. 20.

**अनिन्द्यब्राह्मादिविवाह** (anindya-brāhmādivivāha) *m.* not forbidden (i. e. sanctioned) forms of marriage like *brāhma* etc. अनिन्द्यब्राह्मादिविवाहोढास्वेवैते उत्पन्नाः पुत्राः संतानवृद्ध्या पितृभ्य आनृण्यं कुर्वन्ति BālaKrī. i. 88. 15 (*on* 1. 89)

**अनिन्द्यभास्** (anindya-bhās) *adj.* having excellent lustre दिने दिने रुद्रनराधिपस्य प्रतापलक्ष्मीरुदयं प्रयाति।··· विवस्वता सार्धमनिन्द्यभासा PratāYaBhū. 401.10.

**अनिन्द्यभासा** (anindya-bhāsā) *adj.* (*f.*) having excellent brilliance, PratāYaBhū. 401. 10.

**अनिन्द्यभुक्ति** (anindya-bhukti) *f.* taking inspected (*lit.* noncensurable) food ईर्यासमदाननिसर्गयत्नो वाणीमनोगुप्तिरपि प्रकाशे अनिन्द्यभुक्तिः प्रथमव्रतस्य ता भावनाः पञ्च मुनिप्रणीताः VarāṅgaC. 31.76.

**अनिन्द्यभोजन** (anindya-bhojana) *n.* food offered by an acceptable person सामान्यतः परान्नभोजनं निषिद्धमेव। तथाप्यनिन्द्यभोजनस्यानिषेधादत्र तस्यापि निषेधार्थमधिकदोषार्थं वेदम् VīraMi. (Tīrtha.) 41.1.

**अनिन्द्यमहस्** (anindya-mahas) *adj.* of excellent brilliance तस्मादजायत सुधीः स्फुटहेमकान्तिरिन्दोरनिन्द्यमहसो यशसान्निवासः EI. xviii. 132. 8.

**अनिन्द्यमानत्व** (anindyamāna-tva) *n.* the state of being what is not being forbidden विशुद्धं कर्म वैदिकम् शिष्टैः अनुष्ठीयमानत्वात् अनिन्द्यमानत्वाच्च BrahmSūBh.(Śaṅ.) 557.2 (*on* iii. 1. 25)

**अनिन्द्ययोग** (anindya-yoga) *m.* auspicious conjunction (of heavenly bodies), auspicious astrological conjunction अनिन्द्ययोगेषु ··· सर्वामरस्थापनमुत्तमं स्यात् VasiS. 40. 5.

**अनिन्द्यरसबन्धन** (anindyarasa-bandhana) *n.* formation out of pure mercury रसः खलु रसायनं भवति बद्ध एव स्फुटम् ···। ततस्तु ··· अनिन्द्यरसबन्धनं प्रकटमत्र संबध्यते KalyāKā. 24.8.




**अनिन्द्यरूपिणी** (anindyarūp-iṇī) *adj.* (*f.*) of blameless form (हरिवरवनिताः) प्रियां तव भ्रातुरनिन्द्यरूपिणीमिहानयिष्यन्ति नरेन्द्र जानकीम् Rāmā. iv. 669*(3)

**अनिन्द्यलोचना** (anindya-locanā) *adj.* (*f.*) having lovely eyes ममानुरूपा त्वमनिन्द्यलोचने MahāBhā. iv. 267*(21)

**अनिन्द्यवन्द्य** (anindya-vandya) *adj.* adorable by the pious ones नमाम्यहं देवम् ··· जटाधरम् ···। दूरंगमं वेद्यमनिन्द्यवन्द्यम् SkandP. vii(1). 290. 28.

**अनिन्द्यवरिताकृति** (anindya-varitākṛti) *adj.* [w. r. for **अनिन्द्यचरिताकृति**] BhaviP. 886B.10 (iv. 195.26)

**अनिन्द्यवर्णा** (anindya-varṇā) *adj.* (*f.*) having an excellent complexion तारा ···। व्यवस्यत प्रायमनिन्द्यवर्णा उपोपवेष्टुं भुवि यत्र वाली Rāmā. iv. 20.25.

**अनिन्द्यवर्य** (anindya-varya) *adj.* eminent among the unblamable ones बालेति मत्वा भव भूतनाथ व्यामोह[मुह्य]से किं त्वमनिन्द्यवर्य SaurP. 54.5.

**अनिन्द्यविधि** (anindya-vidhi) *m.* unblamable means मयोचेऽनुद्यमो नायमुपायं चिन्तयत्यलम्। अनिन्द्यविधिना केन प्राप्येयमिति चेतसि SamarāSaṁ. 5. 89.

**अनिन्द्यविवाह** (anindya-vivāha) *m.* approved (form of) marriage अनिन्द्यविवाहेनोढासु ये पुत्रा जायन्ते ते संतानवर्धनाः VīraMi. 162. 2 (*on* 1. 90)

**अनिन्द्यवृत्ति** (anindya-vṛtti) *adj.* of blameless conduct मध्यस्थमप्येतदनिन्द्यवृत्तेर्वलित्रयं मां दहतीति चित्रम् JānaHa. 7.9; अमी वयं तावदनिन्द्यवृत्तयो न बन्धकीधाष्टर्यमिदं सहामहे MadaKeC. 93.

**अनिन्द्यशासन** (anindya-śāsana) *n.* unimpeachable rule गर्ज्जद्गुर्ज्जरमौशौ[ Read मौलि ]शौर्य्यविलयो लंकारयन्नुद्योग[ Read लंकारयन् कारयन्नुद्योगै ]स्तदनिन्द्यशासनमतस्सद्विक्रमो विक्रमः EI. xviii. 246.30.

**अनिन्द्यशीला** (anindya-śīlā) *adj.* (*f.*) of blameless conduct इत्थं विधाय सुरकार्यमनिन्द्यशीला ···। कामेश्वरी ··· बभासे BrahmāṇḍP. iii. 29.145.

**अनिन्द्यशौर्यश्री** (anindya-śauryaśrī) *adj.* of irreproachable valour and glory स द्यामनिन्द्यशौर्यश्रीरारुरोह RājTa.(Ka.) 1. 87.

**अनिन्द्यसर्वाङ्गी** (anindyasarvāṅg-ī) *adj.* (*f.*) whose all limbs are blameless अनिन्द्यसर्वाङ्गीमेकामङ्गनामद्राक्षम् TilaMañ. 379.4.

**अनिन्द्यसुलक्षणाङ्क** (anindyasulakṣaṇāṅka) *adj.* marked with blameless auspicious signs यस्येदृशं वपुरनिन्द्यसुलक्षणाङ्क(? ङ्कं) तस्याधिकं धनमतीव च दीर्घमायुः KalyāKā. 1. 46.

**अनिन्द्यसेवा** (anindya-sevā) *f.* irreproachable profession यद्राष्ट्रे हृष्टपुष्टाश्च दृश्यन्ते सर्वजातयः। अनिन्द्यसेवासंपन्ना विना मृगयुसौनिकान् SkandP. iv. 43. 64.

**अनिन्द्याङ्गी** (anindyāṅg-ī) *adj.* (*f.*) of blameless limbs जयद्रथः। विस्मितस्तामनिन्द्याङ्गीं दृष्ट्वा MahāBhā. iii. 248. 11; तिर्यग्योनिगताश्चापि निरीक्षन्ते सविस्मयाः। तव रूपमनिन्द्याङ्गि किं पुनर्मानवा भुवि MahāBhā. iv. 214*(3); xiii. 40. 55.

**अनिन्द्याजीवकर्मन्** (anindyājīvakarman) *adj.* having unblamable activities for (earning one's own) livelihood अपरोगी च धर्मात्मा दित्सुरव्यसनः शुचिः। अनिन्द्याजीवकर्मा च षड्भिर्दाता प्रशस्यते SkandP. i(2). 4. 64.

**अनिन्द्यात्मन्** (anindyātman) *adj.* of unblemished mind दृढभक्तिरनिन्द्यात्मा श्रुतवान् ··· सर्वत्र पूजितः MahāBhā. xii. 223. 15.

**अनिन्द्यान्वय** (anindyānvaya) *m.* unblemished lineage स्नातकतां प्राप्तो द्वितीयाश्रमकाङ्क्षया। प्रतीक्षेत विवाहार्थमनिन्द्यान्वयसंभवाम् VedavyāSm. 2.1; गोपालवर्मणो जाया नन्दानिन्द्यान्वयोद्भवा RājTa.(Ka.) 5. 245.

**अनिन्द्यामन्त्रण** (anindyāmantraṇa) *n.* invitation (to eat) by an irreproachable person परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते YājñaSm. 1.112 = LaghvāśvaSm. 1. 167; कामं प्रतिश्रवस्तेषामनिन्द्यामन्त्रणे कृते। इति देवलस्मरणात्। अनिन्द्यामन्त्रणे कृते तेषां निमन्त्रितानां काममस्त्विति प्रतिश्रवः प्रतिवचनं कर्तव्यम् SmṛtiCan. v. 197. 6; CaturCin. iii(1). 1001. 6; अनिन्द्यामन्त्रणमवश्यमभ्युपगम्यम् CaturCin. iii(1). 1001. 5; VīraMi.(Śrāddha.) 109.23.

**अनिन्द्यामन्त्रित** (anindyāmantrita) *adj.* invited (to eat) by an irreproachable person अनिन्द्यामन्त्रितः श्राद्धे पित्र्येऽप्याद् गुरुचोदितः VedavyāSm. 1.33; यत्तु यमेनोक्तम् ··· तत् अनिन्द्यामन्त्रितशक्तिविषयमिति पूर्वोक्तेन न विरोधः SmṛtiCan. v. 197. 15; CaturCin. iii(1). 1001. 22.

**अनिन्द्र** (an-indrá) *adj.* [*f.*-ā́] **A** not having faith in Indra द्रुहो॑ दहा॒मि सं म॒हीर॑नि॒न्द्राः ṚV. i. 133.1; द्रु॒हं जिघां॑सन्ध्व॒रस॑मनि॒न्द्राम् ṚV. iv. 23. 7; किं मा॒म॑नि॒न्द्राः कृ॑णवन्ननु॒क्थाः ṚV. v. 2.3; अ॒नि॒न्द्रं परा॑ — नुनुदे अ॒भि



क्षाम्। इन्द्रः ṚV. vii. 18. 16; दर्शन्न्वत्र शृतपाँ अनिन्द्रान्बाहुक्षदः ṚV. x. 27. 6; किं मा॑ निन्दन्ति॒ शत्र॑वोऽनि॒न्द्राः ṚV. x. 48. 7; **B** not having a master अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्ति च MahāBhā. xii. 67. 2 (BhārBhāDī. अराजकम्); ViṣṇuDhaP. ii. 2. 3; **C** not having Indra, devoid of Indra विष्णुना च पुरा राम भृगुपत्नी दृढव्रता। अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता Rāmā. i. 24. 18; एष काव्यो ह्यनिन्द्राय (लोकाय) चरते दारुणं तपः VāyuP. ii. 35. 150 = BrahmāṇḍP. ii. 72. 151; देवी क्रुद्धाब्रवीद्देवाननिन्द्रान् वः करोम्यहम् MatsyaP. 47. 95; *m.* other than Indra एवमिहापि अनिन्द्रे गार्हपत्य इन्द्रशब्दो भविष्यति ŚābaBh. 755.4 (*on* iii. 2.4); कथयानिन्द्राय तथा किं करवाणि कणितुकामः Kāvyālaṅ.(Ra.) 5. 31; अयम्(बालकः) ···। करोतीन्द्रमनिन्द्रं वाशक्तं शक्तं लघुं गुरुम् GaṇeP. ii. 18.29; न चेश्वरपक्षेऽयं विरोधः। योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मेति पैङ्ग्यादिश्रुतेरेव BrahmSūBh.(Ma.) 109A. 3 (*on* ii. 1. 28)

**अनिन्द्रक** (anindra-ka) *adj.* not having Indra, without Indra अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः Rāmā. i. 59.22.

**अनिन्द्रता** (anindra-tā) *f.* the state of not being Indra रथनूपुरधामेशो यथेन्द्रोऽनिन्द्रतां मया। नीतस्तथेममीक्षस्व त्वमनारायणं कृतम् PadmP. (Ra.) 73.122.

**अनिन्द्रत्व** (anindra-tva) *n.* the state of not having Indra (as the chief) तांस्त्रस्तान्वध्यमानांश्च देवैर्दृष्ट्वासुरांस्तदा। देवी क्रुद्धाब्रवीदेनाननिन्द्रत्वं करोम्यहम् VāyuP. ii. 35. 131; BrahmāṇḍP. ii. 72. 131.

**अनिन्द्रदेवत्य** (an-indradevatya) *adj.* [AltGr. II. i.107, P. v. 4. 247] not intended for the deity Indra ततश्चानिन्द्रदेवत्यसोमभक्षणे लिङ्गविनियोगासंभवात् MīmāKau. ii. 279. 4 (*on* iii. 2. 27)

**अनिन्द्रपीत** (an-indrapīta) *adj.* (*savana*) in which there is no drinking (of *soma* offered) to Indra तेष्विन्द्रपीतस्येति मन्त्रोऽनिन्द्रपीतं न शक्नोति वदितुम् ŚābaBh. 787. 5 (*on* iii. 2.28); अनिन्द्रपीतेष्वपि अविकृत एव मन्त्रः प्रयोक्तव्यो नामन्त्रकं भक्षणम् TantrVā. 814. 2 (*on* iii. 2. 44)

**अनिन्द्रिय** (an-indriya) *adj.* **1A** powerless जहि त्वं काम मम ये सपत्ना अन्धा तमांस्यव पादयैनान्। अनिन्द्रिया [अ]रसास् सन्तु सर्वे यथा न जीवात् कतमश्चनैषाम् AV.(P.) xvi. 76. 9; अनिन्द्रियो वा एषोऽपदेवो भवति यमभिशंसन्ति। इन्द्रियावन्तमेवैनमेतेन सदेवं कुर्वन्ति JaimiBr. 1.96; **1B** devoid of the senses यस्मादनिन्द्रियोऽपि सर्वतः पश्यति ··· स सर्वगः सर्वतस्तिष्ठति NṛsiṁPūTāU. 2. 4; एतद्द्वयशब्दमस्पर्शम् ··· अनिन्द्रियमविषयम् ··· अद्वयं पश्यताहं स सोऽहमिति NṛsiṁhoTāU. 9; नानिन्द्रियमधिष्ठानं संभवति AbhidhKoBh. 21. 6 (*on* 1.30); (जातोऽनिन्द्रियः स ज्ञानं सौख्यं च परिणमते) अनिन्द्रिय इन्द्रियविषयव्यापाररहितः। अनिन्द्रियः सन् किं करोति।··· केवलज्ञानमनन्तसौख्यं च परिणमति TātpaVṛ. 27. 7 (*on* 1. 19); सूक्ष्मश्चानिन्द्रियश्चात्मा ···। नित्यं पश्यन्ति तं सिद्धाः SamarāSaṁ. 3. 228; न ह्यनिन्द्रियाणां सुखदुःखानुभवः संभवति MānaMe. 154.2; विगलदवयवं विकारमात्ररहितमनिन्द्रियमक्रियं पुराणम्। त्वमसि तदिति चेतनामथं मामुपनिषदोऽपि बत प्रमोहयन्ति AmṛUda. 4. 74; ब्रह्म त्वनिन्द्रियं कथं विश्वकार्याय क्षमं स्यात् GoviBh. 108.10 (*on* ii. 1. 30); **2** not within (the range of) sense-perception यथा प्रत्यक्षफलमपि धरणिधरकुहरभुवि धूमदर्शनमनिन्द्रियविभावसुबोधसाधनत्वादनुमानम् NyāyMañ. i. 131. 11; **3** not caused by a sense-organ यत्तु पुनरनावरणमनिन्द्रियं ज्ञानम् TattvPradī.(A.) 54.10 (*on* 1.41); कामाश्चानिन्द्रियाः न स्युः, प्रवर्तन्ते स्वभावतः SamarāSaṁ. 9. 61; *n.* other than a sense-organ श्रुतमनिन्द्रियस्य(मनसः) TattvārthāSū. 2. 22; तामसवृत्तिप्रधाना असुरा असुभिः प्राणैरनिन्द्रियैरगृहीतैस्तेषु तेषु विषयेषु रमन्ते Bhām. 591. 9 (*on* iii. 3. 6); 'सर्वार्थग्रहणं मनः' 'अनिन्द्रियम्' इति 'नोइन्द्रियम्' इति चोच्यते PramāMī. 19.10 (*on* i. 1. 24); किमनिन्द्रियाणि (करणानि) विभवन्ति किंचिदपरोक्षबोधजनने NayaMañ. IV. i. 1. 1; अनिन्द्रियेणापि मनसा षट्त्वसंख्यापूरणाविरोधात् VedāntPari. 39.3; [that which is not the senses, the soul, the reason [MW.], Reason (that which is not the senses) [APTE]; *m.* Siddha, Kevalin, Aparyāpta (*lit.* free from (the limitation of) the senses) सेन्द्रियाः — संसारिणः, अनिन्द्रियाः — सिद्धादयः SthānṬ. 39B.1; अनिन्द्रियाः अपर्याप्तकेवलिसिद्धाः SthānṬ. 92B.2; इन्द्रियसूत्रेऽनिन्द्रियाः — अपर्याप्ताः केवलिनः सिद्धाश्चेति SthānṬ. 355A. 9.

**अनिन्द्रियकरणत्व** (anindriyakaraṇa-tva) *n.* the state of not having a sense-organ as the means रूपाद्युपलब्धीनामपि वानिन्द्रियकरणत्वप्रसङ्गः NyāyKuA. ii(1). 238. 9; नाप्यभिलापसंसर्गयोग्यप्रतिभासप्रयुक्तमप्रत्यक्षत्वं शाब्दलैङ्गिकविकल्पानामपि त्वनिन्द्रियकरणत्वप्रयुक्तम् Kiraṇā. 279. 15.

**अनिन्द्रियकामप्रयोग** (anindriyakāma-prayoga) *m.* performance by one who is not desirous of (the power of) the senses अग्निहोत्र-

होमस्यानिन्द्रियकामप्रयोगे साधनभूतदधिप्रयोजकता, इन्द्रियकामप्रयोगे च दध्नेन्द्रिये साध्यमाने द्वारता TristhaSe. 332. 30.

**अनिन्द्रियगुण** ( an–indriyaguṇa ) *adj.* devoid of the properties of the senses अनिन्द्रियगुणं जीवमग्राह्यं मांसचक्षुषाम्। सिद्धाः पश्यन्ति PārśvC. 3. 71; अनिन्द्रियगुणो जीवो, भिन्नश्चास्ति शरीरतः SamarāSaṁ. 3. 241; *m.* not a property of the senses, cf. **अनिन्द्रियगुणत्व.**

**अनिन्द्रियगुणत्व** ( anindriyaguṇa–tva ) *n.* the state of not being a property of the senses शब्दादीनामनिन्द्रियगुणत्वादुत्तरत्र व्यभिचारः Nyāy-Pari. 24. 10.

**अनिन्द्रियगोचर** ( an–indriyagocara ) *adj.* which is not within the purview of the sense-organs बृहत् महच्च तत्प्रकृतं ब्रह्म ···। दिव्यं स्वयंप्रभमनिन्द्रियगोचरम् अत एव न चिन्तयितुं शक्यतेऽस्य रूपम् MuṇḍUBh. 349. 16 (*on* iii. 1.7); ( परस्तस्मात्तु भावोऽन्योऽव्यक्तः ) अन्यः विलक्षणः। स च अव्यक्तः अनिन्द्रियगोचरः GītāBh.(Śaṅ.) 245. 16 (*on* 8. 20)

**अनिन्द्रियगोचरत्व** ( anindriyagocara–tva ) *n.* the state of not being within the purview of the sense-organs अयं त्वात्मा अनिन्द्रियगोचरत्वात् अचिन्त्यः GītāBh.(Śaṅ.) 42.2 (*on* 2. 25); अनद्यतनत्वं त्वकालकलितत्वात्। परोऽक्षत्वं त्वनिन्द्रियगोचरत्वादुपपद्यते SetuBa. 21. 26.

**अनिन्द्रियग्राह्य** ( an–indriyagrāhya ) *adj.* not to be grasped by a sense-organ तत् अव्यक्तमनिन्द्रियग्राह्यम् BrahmSūBh.(Śaṅ.) 601. 8 (*on* iii. 2.23); न चानिन्द्रियग्राह्यश्शब्दस्स्यात्, श्रोत्रग्राह्ये शब्दशब्दप्रयोगात् IṣṭaSi. 173. 15; अनिन्द्रियग्राह्यस्य साक्षिप्रत्यक्षस्याप्याकाशस्य जलादौ प्रतिबिम्बोपलम्भात् SiddhāBi. 22.5.

**अनिन्द्रियज** ( an–indriyaja ) *adj.* not arisen through the senses न चेदमनिन्द्रियजं ( सविकल्पकम् ) ज्ञानम्, इन्द्रियाधीनप्रवृत्तित्वात् PrakaPañ. 166. 6; साक्षात्कारिता तु नानिन्द्रियजस्य ज्ञानस्य संभवति Kāśi. i. 123. 20 (*on* 2. 115); नीलाद्यनुभवात्मानोऽप्यविकल्पका अनिन्द्रियजाः प्रसज्येरन् TātpaṬ. (Vā.) 141.15 (*on* i. 1.4); 144. 8 (*on* i. 1. 4); अनिन्द्रियजं तु परोऽक्षम् NyāyVārPari. 615. 5; इन्द्रियजज्ञानस्वसंवेदनस्येन्द्रियप्रत्यक्षे, अनिन्द्रियजसुखादिसंवेदनस्य मनःप्रत्यक्षे ··· अन्तर्भावात् PramāMī. 16. 13 (*on* i. 1. 20); यल्लैङ्गिकं ( ज्ञानम् ) तदनिन्द्रियजम् Upask. 357. 9 (*on* viii. 1. 2)

**अनिन्द्रियजत्व** ( anindriyaja–tva ) *n.* the state of being what does not arise through the sense-organs निर्विकल्पकज्ञानस्यानन्तरं सविकल्पकं सामान्यावभासं ज्ञानमुत्पद्यते, उत न। यदि नोत्पद्यते, ततस्तदभावादेवाप्रत्यक्षत्वम्, किमनिन्द्रियजत्वेन TātpaṬ.(U.) 152. 17 (*on* 4. 126); अस्मिन्नपि लक्षणेऽनुमानादिप्रमितिः स्वात्मनि, प्रमातरि च न प्रत्यक्षा स्यादनिन्द्रियजत्वात् PrakaPañ. 137. 6; न चेन्द्रियार्थसंनिकर्षाभावेऽपि पूर्वापरावस्थापरामर्षा( ? र्शा )त्मनो विकल्पस्य भावादनिन्द्रियजत्वम् TātpaṬ.(Vā.) 141.13 (*on* i. 1.4); अनिन्द्रियजत्वे तु मतावपि संस्काराद्येव कारणमस्ति TātpaṬ.(Vā.) 514. 10 (*on* iii. 1. 17); भावना ह्यनुभूतगोचरनियतानुभूतेष्वेव निश्चयरूपां स्मृतिं जनयेत्। न च सात्र प्रमाणं स्मृतित्वादेव, नितरां प्रत्यक्षमनिन्द्रियजत्वात् ŚāstrDī. 19. 23 (*on* i. 1. 2)

**अनिन्द्रियजत्वप्रसङ्ग** ( anindriyajatva–prasaṅga ) *m.* undesired contingency of being what does not arise through the sense-organs अन्यथा निर्विकल्पकस्याप्यनिन्द्रियजत्वप्रसङ्गात् ĀtmaTaVi. 417. 12.

**अनिन्द्रियजन्यत्व** ( anindriyajanya–tva ) *n.* the state of being what does not arise through the sense-organs शाब्दधियोऽनिन्द्रियजन्यत्वाद् ध्यानादिसहकृतचेतोऽर्पणद्वारा साक्षात्कारहेतुत्वम् VedāntKa. 512. 20 (*on* iv. 1. 1)

**अनिन्द्रियतावगम** ( anindriyatāvagama ) *m.* knowledge about (the mind as) being different from a sense-organ 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन' इत्यादिश्रुत्या मनसोऽनिन्द्रियतावगमात् VedāntPari. 41. 2.

**अनिन्द्रियत्व** ( anindriya–tva ) *n.* **A1** the state of not being a sense-organ इन्द्रियार्थसंनिकर्षोत्पन्नमित्येवमादिलक्षणमात्मादिषु सुखादिषु च नास्ति। मनसोऽनिन्द्रियत्वादव्यापकमेतत् प्रत्यक्षलक्षणमिति NyāyVār. 39. 22 (*on* i. 1. 4); न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्। तस्यानिन्द्रियत्वात् BrahmSū-Bh.(Rā.) 156. 3 (*on* i. 1. 4); यद्यप्यापाततो मनसोऽनिन्द्रियत्वं प्राप्नोति, तथापि सकलश्रुतिस्मृतिपर्यालोचनया मनसोऽपीन्द्रियत्वमेव PrakaVi. 693. 22; न च अनिन्द्रियत्वेऽप्यालोकादेरपरोऽक्षज्ञानजनकत्वं दृष्टमिति हेतोर्व्यभिचारः ŚrutaPra. iB. 151. 8 (*on* i. 1. 4); वीणाद्यवच्छिन्नस्य नभसः शरीरासंयुक्तत्वेनानिन्द्रियत्वात् TattvCin. i(2). 624.3; मुख्यप्राणो नेन्द्रियमिति चेन्न। तथात्वे चक्षुषोऽनिन्द्रियत्वं किं न स्यात् TattvPrakā. 133A.5 (*on* ii. 4.18); वायुः प्रत्यक्षः महत्त्वानिन्द्रियत्वे सति स्पर्शवत्त्वात् भूतत्वाद्वा घटवत् MānaMe. 158. 4; न च भेदश्रुतेर्मनसोऽनिन्द्रियत्वं शङ्क्यम् GoviBh. 177. 12 (*on* ii. 4. 18); **A11** the state of not being based on the sense-organs अनिन्द्रियत्वपक्षे वासत्प्रत्ययितभाषितम् ŚlokaVār. 2. 106 ( 77. 5 ); यदा प्रत्ययितवाक्यस्यानिन्द्रियत्वमनिन्द्रियविषयता भवति, तदा तस्याप्यसत्यत्वं प्राप्नोतीत्यर्थः Kāśi. i. 114.15 (*on* 2. 105½); **B** the state of not having sense-organs कर्तृत्वं ब्रह्मणो न संभवत्यनिन्द्रियत्वात् GoviBh. 108.9 (*on* ii. 1. 31)

**अनिन्द्रियत्वप्रसङ्ग** ( anindriyatva–prasaṅga ) *m.* undesired contingency of not being a sense-organ मनसोऽपीन्द्रियेभ्योऽस्ति भेदेन व्यपदेश इत्यनिन्द्रियत्वप्रसङ्गः Bhām. 518. 1 (*on* ii. 4. 17); तस्मिन्नेव वाक्ये मनः सर्वेन्द्रियाणीति भेदव्यपदेशान्मनसोऽप्यनिन्द्रियत्वप्रसङ्गः VedāntKa. 337.7 (*on* ii. 4.17)

**अनिन्द्रियत्वसिद्धि** ( anindriyatva–siddhi ) *f.* establishment of not being a sense-organ अतः श्रुत्यविरोधेन मुख्यप्राणस्यानिन्द्रियत्वसिद्धेः Tattv-Prakā. 133B.7 (*on* ii. 4. 20)

**अनिन्द्रियत्वोक्तिविरोध** ( anindriyatvokti–virodha ) *m.* contradiction with the statement of not being a sense-organ न मुख्यप्राणस्य चक्षुरादीनां चाविशेषो मन्तव्यो येन तस्य विशिष्यानिन्द्रियत्वोक्तिविरोधः TattvPrakā. 133A.12 (*on* ii. 4. 19)

**अनिन्द्रियनिमित्त** ( an–indriyanimitta ) *adj.* not caused by the sense-organs अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्ति NyāyBh. 29. 5 (*on* i. 1.16)

**अनिन्द्रियप्रत्यासन्न** ( an–indriyapratyāsanna ) *adj.* not closely connected with the sense-organs तस्मिन्ननिन्द्रियप्रत्यासन्ने निरुपधानत्वादात्मनः सुषुप्त्यवस्थायामनुपलम्भः NyāyKuA. i. 153. 3.

**अनिन्द्रियप्रत्यासन्नता** ( anindriyapratyāsanna–tā ) *f.* the state of not being connected with the sense-organs ज्ञानमेव कुतो न जायत इति चिन्त्यते पश्चाद्वा कथमुत्पत्स्यत इति चेत् — मनसोऽनिन्द्रियप्रत्यासन्नतयाजननात् NyāyKuA. i. 148. 1.

**अनिन्द्रियभाव** (anindriya–bhāva) *m.* the nature of being different from a sense-organ तेजोऽन्तरेणानिन्द्रियभावमापन्नेन सूर्यादितेजो विभातीत्यप्रसिद्धम् Bhām. 227. 7 (*on* i. 3.22)

**अनिन्द्रिययोगिन्** ( an–indriyayogin ) *adj.* not coming into contact with the senses देशान्तरादिगमपि सत् दोषादिन्द्रिययोगमियादिति चेत् — एवमविद्यादोषोऽपि इन्द्रिययोगीव कुर्यात् रूप्यादि असत् अनिन्द्रिययोग्यपीति इष्यताम् IṣṭaSi. 139. 17.

**अनिन्द्रियलिङ्गशब्दकरणत्व** ( anindriyaliṅgaśabdakaraṇa–tva ) *n.* the state of being different from the means of knowledge, viz. a sense-organ, an inferential mark or a verbal testimony न हि तत् ( ईश्वररूपम् ) प्रत्यक्षमनुमानमागमो वा, अनिन्द्रियलिङ्गशब्दकरणत्वात् NyāyKuA. ii(2). 29. 8.

**अनिन्द्रियवाचिन्** ( anindriya–vācin ) *adj.* expressing what is not a sense-organ इह तु अनिन्द्रियवाचिप्राणान्नशब्दसमभिव्याहारात् वाक्यशेषस्येन्द्रियपरत्वे संदेहानपगमात् ŚrutaPra. ii. 124. 27 (*on* i. 4. 12)

**अनिन्द्रियविकल** (an–indriyavikala) *adj.* not deficient in a sense-organ अन्धोऽहमिति प्रतीतिस्त्वनिन्द्रियविकलानां विद्यमानेऽपि श्रोत्राद्यध्यासेऽज्ञायमानतादात्म्याध्यासोपपादिका SiddhāTa. 5. 13.

**अनिन्द्रियविषय** ( anindriya–viṣaya ) *adj.* pertaining to what cannot be perceived by the sense-organs यत्तु लौकिकं वचनं तच्चेत्प्रत्ययितात्पुरुषादिन्द्रियविषयं वावितथमेव तत्। अथाप्रत्ययितादनिन्द्रियविषयं वा तावत्पुरुषबुद्धिप्रभवमप्रमाणम् ŚābaBh. 15.6 ( *on* i.1.2 ); न ह्येतेऽनिन्द्रियविषया अर्थाः ŚābaBh. 857. 8 ( *on* iii. 3. 14 ); यदाप्तवाक्यमपि श्रोतुरनिन्द्रियविषयं प्रमाणत्वेनाभ्युपगतं तदेवाप्रमाणत्वेन प्रत्युदाहरणं स्यात् NyāyRa. 77. 19 (*on* 2. 105)

**अनिन्द्रियविषयता** ( anindriyaviṣaya–tā ) *f.* the state of being what pertains to that which cannot be perceived by the sense-organs यदा प्रत्ययितवाक्यस्यानिन्द्रियत्वम् अनिन्द्रियविषयता भवति तदा तस्याप्यसत्यत्वं प्राप्नोतीत्यर्थः Kāśi. i. 114. 15 ( *on* 2. 105½ ).

**अनिन्द्रियविषयमात्र** ( anindriyaviṣaya–mātra ) *n.* only what is pertaining to that which is not perceptible न ह्यप्रत्ययितवाक्यमात्रमनिन्द्रियविषयमात्रं वा मिथ्या Kāśi. i. 116. 3 (*on* 2. 107)

**अनिन्द्रियविषयोदाहरण** ( anindriyaviṣayodāharaṇa ) *n.* illustration of what pertains to that which is not perceptible 'इन्द्रियविषयं वा' इत्यस्य च यत्प्रत्युदाहरणम् 'अनिन्द्रियविषयं वा' इति तदपि 'तच्चेत्प्रत्ययितात्' इत्यस्य श्रोतुरनिन्द्रियविषयोदाहरणस्य बाधकम् TātpaṬ. (U.) 71. 23 (*on* 2. 106)

**अनिन्द्रियव्यवच्छेद** ( an–indriyavyavaccheda ) *m.* lack of delimitation ( caused ) by the senses जितेन्द्रियो जितश्वासो योऽन्तर्ज्वलति सर्वतः। अनिन्द्रियव्यवच्छेदात् सर्वतः प्रसृतो ज्वलन् AhirbuS. 55. 4.

**अनिन्द्रियसंनिकर्षज** (an-indriyasannikarṣaja) *adj.* not produced through sense-contact नन्वनिन्द्रियसंनिकर्षजमपि भावनाप्रकर्षजं युक्तं साक्षाद्द्विरूपं मेयप्रत्यक्षम् NayaVi. 76.10 (*on* i. 1. 4)

**अनिन्द्रियसंनिकर्षत्व** (anindriyasannikarṣa-tva) *n.* the state of not being sense-contact न हि संस्कारः प्रत्यक्षादिष्वन्तर्भवति। अनिन्द्रियसंनिकर्षत्वादज्ञातकरणत्वाच्चेति NyāySu.(Ja.) 277A. 13 (*on* ii. 1. 2)

**अनिन्द्रियसंनिकृष्ट** (an-indriyasannikṛṣṭa) *adj.* not connected with the senses न पुनरभ्यासतोऽनिन्द्रियसंनिकृष्टमपि च वस्त्वपरोऽक्षं भवति Kāśi. i. 218.20 (*on* 4.29); न च मध्यंदिने समये प्रातःकालिकस्याभावस्यानिन्द्रियसंनिकृष्टस्य संभवति प्रत्यक्षेण ग्रहणम् NyāyRa. 484.7 (5(8). 28)

**अनिन्द्रियसंनिकृष्टत्व** (anindriyasannikṛṣṭa-tva) *n.* the state of of not being connected with the senses न चेदमुपमानं प्रत्यक्षान्तर्गतम्। अनिन्द्रियसंनिकृष्टत्वान्नगरस्थस्य गोः ŚāstrDī. 75. 6 (*on* i. 1.5)

**अनिन्द्रियसौख्ययुक्त** (an-indriyasaukhyayukta) *adj.* not associated with sensual pleasure यत्रासतेऽनिन्द्रियसौख्ययुक्ताः सिद्धा विशुद्धा इति शब्दमानाः VarāṅgaC. 10. 4.

**अनिन्द्रियस्थित** (an-indriyasthita) *adj.* not existing within (the range of) the senses प्रसरन्नायनं तेजो ग्राहकं नानिन्द्रियस्थितम् PrakaPañ. 56.13.

**अनिन्द्रियात्मन्** (anindriyātman) *adj.* of the nature of one who is not within (the range of) the sense-organs नमस्तेऽतीन्द्रियज्ञानसुखायानिन्द्रियात्मने MahāP. 25. 90.

**अनिन्द्रियाधिष्ठानत्व** (anindriyādhiṣṭhāna-tva) *n.* the state of not being the substratum of the sense-organs नेदं निरात्मकं जीवच्छरीरम् अनिन्द्रियाधिष्ठानत्वप्रसङ्गात् NyāyVār. 167.2 (*on* i. 2.4)

**अनिन्द्रियार्थजत्व** (anindriyārthaja-tva) *n.* the state of not being produced by (the contact of) a sense-organ with an object ज्ञानानां परोऽक्षत्वमनिन्द्रियार्थजत्वेन व्याप्तं यथानुमानेऽनिन्द्रियार्थजत्वविरुद्धं चेन्द्रियार्थजत्वं तद्भावभावित्वान्निर्विकल्पकज्ञाने प्रतीयते इति व्यापकविरुद्धोपलब्धिः NyāyKa. 193.8.

**अनिन्द्रियार्थसंनिकर्षज** (an-indriyārthasannikarṣaja) *adj.* not produced by the contact of a sense-organ with an object आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम्। अनिन्द्रियार्थसंनिकर्षजं हि तत् NyāyBh. 15.6 (*on* i. 1. 4); यस्तु विस्फारिताक्षस्य स्थाणुर्वा पुरुषो वेत्यादिः संपद्यते संशयस्तमनिन्द्रियार्थसंनिकर्षजं को नामाचक्षीत NyāyMañ. i. 84. 25.

**अनिन्द्रियार्थसंनिकर्षजत्व** (anindriyārthasannikarṣaja-tva) *n.* the state of not being produced by the contact of a sense-organ with an object किं शब्दार्थावभासित्वगर्भीकृतमसदर्थवाचित्वं तदप्रामाण्यकारणमभिमतमुत संकेतस्मृत्यपेक्षोपनतमनिन्द्रियार्थसंनिकर्षजत्वम् NyāyMañ. i. 88.18.

**अनिन्द्रियार्थसंनिकर्षपूर्वकत्व** (anindriyārthasannikarṣapūrvaka-tva) *n.* the state of not being preceded by the contact of a sense-organ with an object संशयस्यानिन्द्रियार्थसंनिकर्षपूर्वकत्वात्। न हीन्द्रियार्थसंनिकर्षात् संशयज्ञानं भवति NyāyVār. 39.14 (*on* i. 1. 4)

**अनिन्द्रियाश्रयत्व** (anindriyāśraya-tva) *n.* the state of not being the substratum or abode of sense-organs किमिदं शरीरत्वम् ... साक्षात्प्रयत्नवदधिष्ठेयत्वम् ...। अथेन्द्रियाश्रयत्वम्। ... नार्थाश्रयत्वम्। ... अनिन्द्रियाश्रयत्वादभोगायतनत्वात् स्वव्यापारे तदनपेक्षत्वाच्चेति त्रयमप्यन्यथासिद्धम् NyāyKuA. ii(2). 41. 7.

**अनिन्धन** (an-indhana) *adj.* **i** having no more fuel, having the fuel exhausted अनिन्धनं ज्योतिरिव प्रशान्तः स ब्रह्मलोकं श्रयते द्विजातिः ViṣṇuP. iii. 9. 33; BrahmP. 222. 56; क्षीणेषु सर्वदोषेषु क्षीणेष्वेवेन्द्रियेषु च। परिनिर्वाति शुद्धात्मा यथा वह्निरनिन्धनः BrahmāṇḍP. ii. 13. 142; अन लस्त्वनिन्धनो यथा प्रशान्तिं परमां तथा व्रजेत् UpadeSā. 461.27; **ii** free from desires (which are the effects of *rajas* and *tamas*) यस्मिन् मनो लब्धपदम् ...। सत्त्वेन वृद्धेन रजस्त-मश्च विधूय निर्वाणमुपैत्यनिन्धनम् BhāgP. xi. 9.12; **iii** having nothing to digest or consume (देहोष्मा) अनिन्धनोऽन्यथा सीदेदत्युदीर्णतयाथवा। धातूनपि पचेदस्य AṣṭāSaṁ. i. 15.13 (1.4); तस्यां ज्योतिरूपैत्यनिन्धनमिदं दोषत्रयं धक्ष्यति ŚāntiŚ. 3.13; **iv** requiring no fuel, produced without fuel वह्निस्थानम् ...। अनिन्धनस्तत्र सदा ज्वालामाली विभावसुः। ज्वलति VāyuP. i. 38.40; तेजोभिश्चाप्यते कश्चित् कश्चिदेवाप्यनिन्धनः MatsyaP. 128. 8; तस्योरुं सहसा भित्त्वा ज्वालामाली ह्यनिन्धनः। ... अग्निः समपद्यत MatsyaP. 175. 49; सौरो वैद्युतश्च जाठरश्चाप्यनिन्धनः BrahmāṇḍP. i. 24. 14; iii. 36. 3; अनिन्धनस्य प्रसभं समन्युः समाददेऽस्त्रं ज्वलनस्य जिष्णुः Kirātā. 16. 49; यज्वनां मन्दिरेषु ... प्रजज्वलुरनिन्धना वैतानवह्नयः HarṣaC. 185. 6; ऊर्ध्वेक्षणानलमनिन्धनमप्यवैमि धत्ते मया युधि हरः स विजीयमानः HarVi. 35. 38; सोऽयं दुर्लभेष्वनुरागः पुंसाम्, अज्वरमस्वास्थ्यम् ... अनिन्धनं ज्वलनम् NalaCam. 1. 62(3); आसादयिष्यसि च सानुशया मदनायत्ततादोषेण सततमनिन्धनेनाग्निना पच्यमाना ... उपजातजराविनाशम् TilaMañ. 285. 4; भास्करदेवः ...स्थलकमलमिव तं बालकमवलोक्य 'अहो महदाश्चर्यम्। यतः कथम् ... अनिन्धनमपि तेजःपुञ्जम् ... मातुरुत्सङ्गगत इव सुखेन समास्ते' ... इत्यभिधाय ... भावपुरमनुससार YaśasCam. ii. 310. 26; तदनिन्धनमस्नेहमदशावर्तिसंभवम्। महाप्रदीपमालोक्य विस्मयं प्राप पार्वती SkandP. i (3B). 20. 28; सुपार्श्वशिखिशैलयोर्मध्ये ... भौमशिलातलम् ... तस्य मध्ये ... वह्निस्थानं स च सर्वकालमनिन्धनः ... संवर्तको ज्वलति VarāP. 80 (354. 19); अनग्निर्ज्वलते यत्र देशे तूर्णमनिन्धनः। यो राजा तस्य देशस्य सदेशः स विनश्यति AdbhuSāg. 416.16; 416.19.

**अनिन्धनज्वलन** (anindhana-jvalana) *n.* blazing without fuel यदा त्वनिन्धनज्वलनमल्पं भवति तदा राष्ट्रपीडामात्रं फलम् AdbhuSāg. 416. 22.

**अनिन्धनधूमराशि** (an-indhanadhūmarāśi) *adj.* not having fuel and clouds of smoke यस्योर्ध्वलोचनमनिन्धनधूमराशिरध्यास्त एतदनपेक्षितरेणुलक्ष्मा। अक्षुण्ण एव दहनः HarVi. 8. 11.

**अनिन्धनप्रभव** (an-indhanaprabhava) *adj.* not arising from fuel अथेन्धनविशेषप्रभवत्वं स्वभाव इति अनिन्धनप्रभवस्य विद्युदादिप्रभवस्य चोर्ध्वज्वलनं न स्यात् NyāyKa. 88.18.

**अनिन्धनम्** (anindhanam) *adv.* without fuel हृदये त्वनिन्धनमदह्यत विरहाद् वरारोहायास्तस्याः सततम् HarṣaC. 332.7.

**अनिन्धनवह्निवत्** (anindhanvahni-vat) *adv.* like the fire having its fuel exhausted अभ्यसतश्चित्तम् ... यतेः। अनिशं तस्य निर्वाणं यात्यनिन्धनवह्निवत् BhāgP. vii. 15. 34.

**अनिन्धनसमुद्भव** (an-indhanasamudbhava) *adj.* not arising from fuel नृपवल्लभा। अन्यदा शयनीये स्वेसुप्ता ... अद्राक्षीत् ... स्वप्नान् ... अनलम् ...। प्रदक्षिणकृतावर्तमनिन्धनसमुद्भवम् PadmP.(Ra.) 3.139.

**अनिन्धि** (an-indhi) *adj.* [Loc.] when not followed by (the derivatives of) the verbal base *indh-* प्राग्निभ्यामनिन्धौ प्रश्लेषे Vāja-Prāti. 5. 33 (Uvaṭa प्र अग्नि इत्येताभ्यां प्रश्लिष्टसंधाववग्रहो न भवति इन्धि दीप्तौ इत्यमुं धातुं वर्जयित्वा)

**अनिपत्य** (a-nipatya) *ger.* not having fallen down (from one's own status) अविचार्य बलाबलं द्विषामहमित्येव समुद्धतोऽनयात्। चपलः स्वमतेन संपतन्ननिपत्यात्पमना न बुध्यते NītiSā. 12. 57.

**अनिपद्यमान** (á-nipadyamāna, AV a-nipádyamāna) *adj.* **A** not lying down (to sleep), untiring, not resting अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ṚV. i. 164. 31 = x. 177.3; MaiS. iv. 9. 6 (iv. 126. 3); VājaS. 37. 17; अपश्यं गोपामनिपद्यमानम् AV. ix. 10.11; AV. (P.) xvi. 68.10; AitBr. 4. 2 (85); TaiĀ. iv. 7. 1 (ii. 439.1); ĀśvaŚS.1. iv. 6.3; Nir. 14.3 (229. 5); अपश्यं गोपामनिपद्यमानमिति। ... एष हीदं सर्वं गोपायत्यथो न निपद्यते ŚatBr. XIV. i. 4.9; JaimiUBr. iii. 37. 2; TaiĀ. v. 6. 4 (ii. 613. 4); अनिपद्यमानमिति न ह्येष कदाचन संविशति AitĀ. II. i. 6. 9; अनिपद्यमानम् उच्चैर्गच्छन्तम् VīraMi.(Rājanīti.) 112.5; यद् वा ... अनिपद्यमानम् अविनाशिनम् VīraMi.(Rājanīti.) 112.10.

**अनिपात** (a-nipāta) *m.* **1A** other than a *nipāta* (i.e. what shows variation in gender, number and case-ending) निपातश्चानिपातश्चायं तु खल्वन्तराशब्दो दृष्टापचारो निपात एव MahāBh. i. 445. 2 (*on* ii. 3. 4); अनिपातो यस्तृतीयान्तोऽन्तरेणशब्दो यश्च टाबन्तोऽन्तराशब्दस्ताभ्यां योगे द्वितीया न भवति Nyās. i. 402. 2 (*on* ii. 3.4); **1B** other than a *nipāta* (i.e. any preverb) संनिविभ्यः परस्यार्दतेः क्ते नेड्भवति। ... निष्ठायामनिपातेष्वित्यन्ये KātanVṛ. *on* iv. 6.96; **2A** not a fall (i. e. continuance of life), continuity, absence of mishap or death निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे। नश्यतो विनिपाते तावनिपाते त्वनाशिनौ ManuSm. 8.185; ManvaVi. 993.19 (*on* 8. 185); **2B** not bringing down (the weapon), not striking उद्गूर्यानिपाते प्रथमसाहसो दण्डः BālaKrī. i. 277. 1 (*on* 2.220)

**अनिपातगरीयस्** (anipāta-garīyas) *adj.* **i** weightier on account of not falling down अनुक्षितफलोदग्रादनिपातगरीयसः। असंकल्पितकल्पद्रोस्त्वत्तः फलमवाप्नुयाम् Vītarā. 13.5 (Avacūrṇi अनिपातेन अभ्रष्टतया ... गरिष्ठात्) = TriṣaŚaPuC. iii. 1. 346; **ii** more valuable due to non-failure, Vītarā. 13. 5 (Vivaraṇa स्वस्वरूपावस्थितादपि गरीयसो गुरुगौरवार्हात्) = TriṣaŚaPuC. iii. 1.346.

**अनिपातत्व** (anipāta-tva) *n.* the state of being other than a particle or preposition (i. e. the state of being what shows variation in gender, number and case-ending etc.) अनिपातत्वाद् विभक्तिलोपाप्रसक्तेः श्रवणं तस्या भवेत् VaiyāBhū. 210.7 (*on* 44)

सलिलपवनाशी निरशनो जनो रागद्वेषाद्युपहतमनाः स्याद्यदि मुनिः। कपीनां कोलानामनिमिषदृशां किं च फणिनां गिरीणां को भेदः शिव शिव समानव्रतभृताम् Ind. Spr. 4603; *adj.* having unwinking eyes अनिमिषदृशोर्वक्त्रं शश्वद्विलोकयतोर्मिथः ··· भवति पिबतोर्यूनोः प्रेम्णाधरामृतमुत्सवः ŚṛṅgāMañ.(A.) 53. 4.

**अनिमिषदृष्टि** (animiṣa-dṛṣṭi) *adj.* whose eyes do not wink (i. e. having a fixed gaze) तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम्। रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे NāṭyaŚā. 22.186; रेजे जनैः स्नपनसान्द्रतरार्द्रमूर्तिर्देवैरिवानिमिषदृष्टिभिरीक्ष्यमाणः। श्रीसंनिधानरमणीयतरोऽश्व उच्चैरुच्चैःश्रवा जलनिधेरिव जातमात्रः ŚiśuVa. 5. 57; विद्युदादिवदनिमिषदृष्टेर्बुद्धिगतयोरुत्पत्तिविनाशयोरप्रतिभासनात् TātpaṬ.(U.) 133.19 (*on* 4. 55); *m.* god, cf. **अनिमिषदृष्टित्व** B; *f.* unwinking eyes, cf. **अनिमिषदृष्टिसृष्टि.**

**अनिमिषदृष्टित्व** (animiṣadṛṣṭi-tva) *n.* **A** the state of having unwinking or unblinking eyes, the state of gazing without blinking तन्त्रिविष्टपमाख्यातं तन्वङ्गया यद्वलित्रयम्। येनानिमिषदृष्टित्वं नृणामप्युपजायते SūktiMu. 53.62 = Subhāṣi. 1548; **B** the state of being a god, godhood, SūktiMu. 53.62 = Subhāṣi. 1548.

**अनिमिषदृष्टिसृष्टि** (animiṣadṛṣṭi-sṛṣṭi) *f.* creation of the unwinking eye(s) (पुरंदरः) सः ··· मण्डलेनेव शशाङ्कस्य महतातपत्रेण सफलयन्ननिमिषदृष्टिसृष्टिमम्भोजसंभवस्य ··· निर्जगाम तारापथे NīlaVi. 11.4.

**अनिमिषद्रुमाली** (animiṣadrumālī) *f.* row of celestial trees पदावन्योर्वन्ये तव वितरणं वेत्त्य(? त्य)निमिषद्रुमाली त्वल्लीलावनमुपगता नन्दनवनात् JānaCaCā. 86.

**अनिमिषनयन** (animiṣa-nayana) *adj.* whose eyes are not winking अवतरति च विष्णौ सिद्धदेवासुराणामनिमिषनयनानां विप्रसेदुर्मुखानि PadmP. v. 25. 56; कमलदलविलसदनिमिषनयनम् ··· व्यरुचत् ··· जिनवृषभवपुः MahāP. 23.169; अस्यां चाष्टमभक्तिको ग्रामादिबहिरीषदवनतगात्रोऽनिमिषनयनः ··· प्रलम्बितभुजस्तिष्ठति AupaSūṬ. 59.5; तत्रात्रिस्त्रीणि दिव्यान्यकृत कृतधियामग्रणी[ र्वं ]त्सराणामव्याक्षेपात्सहस्रान्य( ण्य )निमिषनयनोऽनुत्तराख्यन्तपस्तत् EI. xviii. 131. 7.

**अनिमिषनयननिरीक्षण** (animiṣanayana-nirīkṣaṇa) *n.* gazing with unwinking eyes अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः। अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र DaśRū. 4. 13 = SāhiDa. 149. 8; जाड्यम्। तत्तूष्णींभावानिमिषनयननिरीक्षणादिभिर्वर्णयेत् Kāvyānu.(He.) 106.6.

**अनिमिषनयनभ्रमर** (animiṣanayana-bhramara) *adj.* having bees in the form of unwinking eyes जिनमुखशतदलमनिमिषनयनभ्रमरम् ··· पपुः ··· सुरयुवतिदृशः MahāP. 23. 170.

**अनिमिषनायक** (animiṣa-nāyaka) *m.* leader of gods उरगनरानिमिषनायकानीकानीतमहामहोत्सवप्रसरम् ··· विस्तार्य स विद्याधरः समस्तमपि नगरं क्षोभयामास YaśasCam. ii. 301. 10.

**अनिमिषनिकाय** (animiṣa-nikāya) *m.* host of gods तदनुचराः ··· तम् ··· अनिमिषनिकायकीर्त्यमानानेकस्तुतिव्यतिकरमितस्ततो महामहोत्सवावतारं च निचाय्य ··· श्रेणिकधरणीश्वरायेदं निवेदयामासुः YaśasCam. ii. 305.20.

**अनिमिषनिवास** (animiṣa-nivāsa) *m.* abode of gods (i. e. heaven) अनिमिषनिवासान्नरलोकसुखतृष्णावतीर्णामिव सरस्वतीम् ··· याममृतमतिमहादेवीमपश्यम् YaśasCam. ii. 31.3.

**अनिमिषनिहिताक्ष** (animiṣa-nihitākṣa) *adj.* who has fixed his gaze unwinkingly अनिमिषनिहिताक्षः ··· प्रहरति परम् ··· ताम्रचूडः ŚṛṅgāSar. 135.

**अनिमिषपति** (animiṣa-pati) *m.* lord of gods, Indra अनिमिषपतेरातन्वानं शरासनमद्भुतम्। ··· तरुणि तरुणं वीक्षस्वारान्मृगं मृगलोचने ĀścaCū. 3. 12.

**अनिमिषपरमांशक** (animiṣa-paramāṁśaka) *m.* last degree of the sign of the zodiac called Pisces or *mīna* अनिमिषपरमांशके विलग्ने शशितनये गवि पञ्चवर्गलिप्ते। भवति हि परमायुषः प्रमाणं यदि सकलाः सहिताः स्वतुङ्गभेषु Bṛhajjā. 7. 6.

**अनिमिषपरिषद्** (animiṣa-pariṣad) *f.* assembly of gods रथाङ्गायुधविलोकनाय अम्बरान्तरविनिहितविलोचनाञ्चला निमिषान्तरेण अनिमिषपरिषद् उपनिषदिव विशेषितपुरुषोत्तमोत्कर्षा ··· सागरान्तरे सारसनाभम् ···अद्राक्षीत् Ānand-Ra. 1.13(2)

**अनिमिषपुरयोषित्** (animiṣapura-yoṣit) *f.* lady from the city of gods, celestial lady अनिमिषपुरयोषिद्दत्तहस्तावलम्बो दिव उपरि विरेजे रक्षसां वाहिनीशः (खरः) Rāgh. 8. 74.

**अनिमिषप्रियाजन** (animiṣa-priyājana) *m.* beloved ladies of gods रुधिरपटलकर्दमेन दूरं रणभुवि दुर्गमतामुपागतायाम्। गमनमनिमिषप्रियाजनस्य प्रियमकरोदवलम्बनानपेक्षम् (विक्रमः) VikraDeC. 6.73.

**अनिमिषप्रेक्षण** (animiṣa-prekṣaṇa) *n.* unwinking look or gaze (अद्भुतः) तस्य नयनविस्तारानिमेष(v.l. °मिष)प्रेक्षण° ··· °चेलाङ्गुलिभ्रमणादिभिरनुभावैरभिनयः प्रयोक्तव्यः NāṭyaŚā. 6. 94; 7. 41 (v.l.); Kāvyānu.(He.) 95. 16.

**अनिमिषप्रेक्षा** (animiṣa-prekṣā) *f.* steady gaze कच्चिन्महामते बुद्धक्षेत्रेऽनिमिषप्रेक्षया धर्मो देश्यते LaṅkāSū. 2. 163 (22) (43.30)

**अनिमिषप्रेक्ष्य** (animiṣa-prekṣya) *adj.* **i** worthy to be seen without winking तं च नन्दनमिवानिमिषप्रेक्ष्यं प्रेक्षमाणः क्षोणीपतिः परं परबलदुर्जयमेवाजीगणत् AvantiKa. 78. 18; **ii** worthy to be seen by gods, AvantiKa. 78. 18.

**अनिमिषभर्तृ** (animiṣa-bhartṛ) *m.* lord of gods, Indra प्रणिपतितशिरोभिस्तुष्टुवद्भिश्च पौरैः। धृतमनिमिषभर्तुः केतुमीशः प्रजानाम् अरिनगरनताग्रं कारयेद् द्विड्वधाय BṛSaṁ. 43. 60.

**अनिमिषभुवन** (animiṣa-bhuvana) *n.* world of gods, heaven अनिमिषभुवने वा व्योम्नि वा भूतले वा समरमुपगतं त्वां वीक्षितुं कः समर्थः RāmāCam. 5. 39.

**अनिमिषम्** (animiṣám) *adv.* [AltGr. III. 116, 323] **1** continuously or incessantly (*lit.* unwinkingly) नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ṚV. i. 24.6 (Sāy. अनिमिषं सर्वदा); **2** (ánimiṣam) without closing the eyes, without winking जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति। आ दृळ्हां पुरं विविशुः ṚV. v. 19.2; प्रोरोर्मित्रावरुणा ···। स्पशो दधाथे ओषधीषु विक्ष्वृधग्यतो अनिमिषं रक्षमाणा ṚV. vii. 61. 3; युवतिः ···। यान्तमनिमिषमतृप्तमनाः पतिमीक्षते स्म ŚiśuVa. 15. 94; यस्मात्तेजः प्रपश्यन्ति चक्षुर्भवति दुर्बलम्। तस्मात्तत्तेजसा युक्तं पश्येदनिमिषं क्वचित् SkandP. v(1). 4. 44; **3** (*fig.*) without flickering, steadily अनिमिषमविरामा रागिणां सर्वरात्रं नवनिधुवनलीलाः कौतुकेनातिवीक्ष्य। ··· दैपमर्चिः ŚiśuVa. 11. 18.

**अनिमिषयोषित्** (animiṣa-yoṣit) *f.* divine lady, celestial lady स भगवान् ··· विहरमाणः ··· अशिशिरकरप्रणामप्रणयिनीनामगमविटपान्तरितवपुषामनिमिषयोषितामलिकतटकुड्मलितहस्तनखशुक्तिभिरिव ··· प्रसूनमञ्जरीभिरुपचितोपरितनविस्तारम् (उद्यानमपश्यत्) YaśasCam. i. 95. 1.

**अनिमिषरक्षिता** (animiṣa-rakṣitā) *adj.* (*f.*) protected by gods नो चेदशुचिभिः स्पृष्टा स्नानादिपरिवर्जितैः। यास्यत्यदृश्यतामेषा सुधानिमिषरक्षिता SkandP. iv. 50.118.

**अनिमिषर्षभ** (animiṣarṣabha) *m.* foremost among the gods (i. e. Viṣṇu) इति निगदेनाभिष्टूयमानो भगवाननिमिषर्षभो वर्षधराभिवादिताभिवन्दितचरणः सदयमिदमाह BhāgP. v. 3. 16.

**अनिमिषलोचन** (animiṣa-locana) *n.* unwinking or steady eye निरीक्षितुं वियति समेत्य कौतुकात् पराक्रमं समरमुखे महीभृताम्। रजस्तताविनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणैः पलाय्यत ŚiśuVa. 17. 62.

**अनिमिषलोचनम्** (animiṣalocanam) *adv.* with steady gaze पत्रलेखामनिमिषलोचनं सुचिरमालोक्य चन्द्रापीडः ··· कञ्चुकिनं प्रेषयामास Kād. 102.3.

**अनिमिषलोचनरमणीय** (animiṣalocana-ramaṇīya) *adj.* **i** pleasing on account of fish प्रविश्य च तस्य तरुखण्डस्य मध्यभागे ··· दिव्यमिवानिमिषलोचनरमणीयम् ··· आह्लादनं दृष्टेरच्छोदं नाम सरो दृष्टवान् Kād. 124. 1; **ii** charming with winkless eyes, Kād. 124.1.

**अनिमिषविलोकित** (animiṣa-vilokita) *n.* unwinking gaze अनिमिषविलोकितेन प्राप्नोति झषी कृतार्थतामेव KuṭṭaMa. 1035.

**अनिमिषविलोचना** (animiṣa-vilocanā) *adj.* (*f.*) whose eyes are not winking राजा ··· पक्ष्मसंपुटास्पन्दनैरनिमिषविलोचनां देवीमिव विभाव्यमानाम् ··· अभिरामदर्शनवतीं चित्रगतां युवतिमद्राक्षीत् UdaySuKa. 52.21.

**अनिमिषविषयसंभूष्णु** (animiṣaviṣaya-sambhūṣṇu) *adj.* [P. iii. 2. 139] coming into being (i. e. existing) (only) in the region of gods मुनिः ··· परिषदि ··· तमवनीश्वरम् ··· उदारैरुपचारैरनिमिषविषयसंभूष्णुभिः ··· संभाव्य सुरसेव्यं देशमाविवेश YaśasCam. ii. 295.25.

**अनिमिषविष्टप** (animiṣa-viṣṭapa) *n.* name of a city (founded by the king Vinami) (*lit.* world of gods) विनमिः पर्यसूत्रयत्। षष्टिं पुराणि सद्योऽपि ··· सगन्धर्वं मुक्तहारं ततोऽनिमिषविष्टपम् TriṣaŚaPuC. i. 3. 203.

**अनिमिषशिल्पिन्** (animiṣa-śilpin) *m.* Viśvakarman, the architect of gods अयं नलस्त्वनिमिषशिल्पिनः सुतः प्रगल्भते परमिह तस्य बन्धने Rāgh. 16. 36.

**अनिमिषसंसद्** (animiṣa-saṁsad) *f.* assembly of gods दाक्षायण्यहम् ···। आदेशादनिमिषसंसदस्त्वदीयां कृच्छ्रेषु स्थितिमवगन्तुमागतास्मि Rāgh. 12. 40.

**अनिमिषसंघ** (animiṣa-saṅgha) *m.* host of gods जगुरनिमिषसंघा

दिक्पुरन्ध्र्यः प्रसेदुस्तुतुषुरखिललोका मङ्गलेनेव पूर्णाः RāghPāṇ.(Ka.) 13.21.

**अनिमिषसूत** (animiṣa-sūta) *m.* bard of the gods जगुरनिमिषसंघा (v. l. °सूताः) दिक्पुरन्ध्र्यः प्रसेदुस्तुतुषुरखिललोका मङ्गलेनेव पूर्णाः RāghPāṇ.(Ka.) 13. 21.

**अनिमिषस्थिति** (animiṣa-sthiti) *f.* **i** winkless state यद्येकदापि श्रीमल्लेर्दृशे रूपवैभवम्। तदा भूमिस्थितेनापि प्राप्यतेऽनिमिषस्थितिः MalliC. 5. 16; **ii** status of gods, MalliC. 5.16.

**अनिमिषस्वामिन्** (animiṣa-svāmin) *m.* Indra, lord of gods यदनीकरजोजालव्याकुलीकृतलोचनः। चक्रन्दानिमिषस्वामी ततः संक्रन्दनः स्मृतः VasaViKā. 4.50.

**अनिमिषहास्य** (animiṣa-hāsya) *n.* laughter of the fish बालसरस्वतीमानाय्यानिमिषहास्यहेतुमपृच्छत् ŚukSa. 29.8.

**अनिमिषहृदयानन्द** (animiṣahṛdayānanda) *m.* joy in the hearts of gods उच्चलिता(? त)ध्वनिरनिशं विप्राणामध्वरे चरत्यखिलम्। अनिमिषहृदयानन्दं कुर्वन् सचिवे सुरारिगुरौ VasiS. 11. 23.

**अनिमिषा** (ánimiṣā) *adv.* [Inst. of *ánimiṣ*, AltGr. III. 116; III. 323; DEBRU. p. 20; GRASSMANN; *but* PW. < *ánimiṣa*] without the closing of the eyes, without winking मित्रः कृष्टीरनिमिषाभि चष्टे ṚV. iii. 59. 1 = TaiS. III. iv. 11. 5 = TaiBr. III. vii. 2. 4; KāṭhS. 23. 12 (ii. 88. 19); 35.19 (iii. 65. 10) = KapiKaS. 48. 17 (307.22) = BhārŚS. ix. 3.8 = ĀpaŚS. ix. 2. 6 = MānŚS. 98.5 = HirŚS. xv. 1. 45 (271. 22); Atharvaprāyaścitta 4.3 (116.6); इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति ṚV. vii. 60.7; धाता कृष्टीरनिमिषाभिचष्टे ĀśvaŚS. I. vi. 14.16.

**अनिमिषा** (animiṣā) *f.* name of a Lokadhātu अनिमिषायां गन्धसुगन्धायां च लोकधातौ समन्तभद्रस्य ... अनिमिषैर्नेत्रैः प्रेक्षमाणास्ते बोधिसत्त्वा महासत्त्वा अनुत्पत्तिकधर्मक्षान्तिं प्रतिलभन्ते LaṅkāSū. 2. 163(24) (44.1) [DBHS.]

**अनिमिषाक्ष** (animiṣākṣa) *adj.* [*f.*-ī] **1** whose eyes do not close क्षीणस्यानिमिषाक्षस्य प्रसक्तं सक्तभाषिणः। न सिध्यत्यर्दितं बाढं त्रिवर्षं वेपनस्य च SuśruS. ii. 1.73; RugVi. 22. 47; BhāvPra.(Bhā.) 8. (23 (? 24)). 67; कृच्छ्रसाध्यः स विज्ञेयो याप्यो वाथ हयो भवेत्।... निश्चेष्टोऽनिमिषाक्षश्च वालैर्वा यो न वीज्यते AśvaVai. 64. 6; **2** having steady gaze समायान्तं चन्द्रगुप्तं दृष्ट्वा द्रागनुरागभाक्। रथस्था नन्ददुहिता देवीवानिमिषाक्ष्यभूत् PariPar. 8. 318.

**अनिमिषाक्षि** (animiṣākṣi) *n.* unwinking eye अनिमिषाक्षिविलोकितविभ्रमां सुरभिमुन्मनसो नवमालिकाम्। सुरवधूमिव वीक्ष्य मनोभुवोऽनवशमा वशमाशु मधौ ययुः HarVi. 3. 32.

**अनिमिषाङ्गना** (animiṣāṅganā) *f.* celestial woman (अवन्तिजनपदे) विभ्रमोल्लासिभिर्यत्र बल्लवीनां विलोकितैः। हृता न बहु मन्यन्ते द्युसदोऽनिमिषाङ्गनाः YaśasCam. i. 198. 6.

**अनिमिषाचार्य** (animiṣācārya) *m.* Bṛhaspati, the preceptor of gods [PW., pw., MW., APTE]

**अनिमिषात्मता** (animiṣātma-tā) *f.* **i** the state of not having the winking (of the eyes) (i. e. the state of being watchful) श्रीकान्तेन समुद्रान्तर्दधतानिमिषात्मताम्। येन स्तेनद्रुहापास्तं निर्वेदत्वं स्वयंभुवि VasaViKā. 4. 30; **ii** the state of having the form of a fish (i. e. the state of having the incarnation of fish), VasaViKā. 4.30.

**अनिमिषान्तर** (animiṣāntara) *n.* a different kind of fish भाकूटः शैलभेदे स्यात् तथैवानिमिषान्तरे NānārthāSaṁ. ii. 26. 170.

**अनिमिषारिवरायुध** (animiṣāri-varāyudha) *n.* the most excellent weapon in the form of the ever vigilant wheel (of time) न वा एतद्विष्णुदत्त महदद्भुतं यदसंभ्रमः ... साक्षाद्भगवतानिमिषारिवरायुधेनाप्रमत्तेन तैस्तैर्भावैः परिरक्ष्यमाणानाम् ... भागवतपरमहंसानाम् BhāgP. v. 9. 20.

**अनिमिषालय** (animiṣālaya) *m.*, *n.* temple (*lit.* abode) of gods दण्डनायकवेलायां प्रभातसमये पुनः। पूजयित्वा रविं भक्त्या व्रजेदनिमिषालयम् BhaviP. 144A. 14 (i. 93. 23)

**अनिमिषित** (a-nimiṣita) *adj.* not winking सा ... तमुपोषिताभ्यामिवानिमिषिताभ्यां लोचनाभ्यां संपीय ... पुरोहितामात्यजनमुखैराहूय तेभ्यस्तमदर्शयत् DaśKuC. 5. 12.

**अनिमिषीभाव** (animiṣī-bhāva) *m.* existence devoid of winking (i. e. godhood) ये त्वां पश्यन्ति भगवन् नेत्रैरनिमिषैर्मुदा। परलोकेऽप्यनिमिषीभावस्तेषां न दुर्लभः TriṣaŚaPuC. i. 5. 376.

**अनिमिषीभू** (animiṣī-bhū-) I. P. to become winkless अयं समागादयमाः समागाज्जना इति स्फारितलोचनाब्जम्। दिशो दशापि प्रविलोकयन्तो यतो भयेनानिमिषीबभूवुः HammīMaKā. 3. 11.

**अनिमिषीयक्रतु** (animiṣīya-kratu) *m.* sacrifice offered to the gods अन्यत्रानिमिषीयक्रतुसंदर्शनादवियुक्तोऽहमुर्वश्या Vikramo. 5.145 (2) (Bollensen's Ed., Leipzig, 1846)

**अनिमिषेक्षण** (animiṣekṣaṇa) *adj.* [*f.* -ā] **i** having vigilant eyes रक्षार्थमेवामृतस्य ददर्श भुजगोत्तमौ। सदा संरब्धनयनौ सदा चानिमिषेक्षणौ MahāBhā. i. 29.7; ते च रक्षन्ति तं देशं सर्वे ह्यनिमिषेक्षणाः। ये निष्य(प)न्दा निराहाराः सात्त्विकाश्च वसन्ति ते PāraS. 10. 295; **ii** having fixed gaze, looking incessantly तदद्भुतम् ...। विस्मितः स जनः सर्वो ददर्शानिमिषेक्षणः MahāBhā. xv. 40. 19; स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः (v. l. भूत्वा चानिमिषेक्षणः) Rāmā. iii. 68.4; ततः स्वरोचिः संक्रुद्धश्चण्डास्त्रमतिभैरवम्। दृष्ट्वा निवेश्य तद्रक्षो ददर्शानिमिषेक्षणः MārkP. 63. 34; अघट्टयत्कलमगोपवधूर्न मृगव्रजम्। श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ŚiśuVa. 6. 49; SūktiMu. 62.31; देवीवानिमिषेक्षणा विलिखति क्षोणीम् ... स्वल्पैरेव दिनैरियं वरतनुः केनापि संशिक्षिता ŚṛṅgāTi.(Ru.) 2. 22; दृष्ट्वा स्वपुरतो वेधा नृत्यन्तीं तां तिलोत्तमाम्। ध्यानाद्भृशं परिप्राप्य ददर्शानिमिषेक्षणः BṛKathāK. 99.47; एवमुक्ता मया सा हि मां दृष्ट्वानिमिषेक्षणा। स्मृत्वा तूष्णीं स्थिता VarāP. 2. 67; अहम्। शिलीभूतः स्थितो मूको योगीवानिमिषेक्षणः BṛKathāMañ. 10. 70; नेत्रपेयं वपुस्तस्याः पश्यन्ननिमिषेक्षणः। पप्रच्छ मन्मथाक्रान्तस्तां नामाभिजनश्रियम् BṛKathāMañ. 16.173; वातायनगताश्चान्याः पश्यन्त्योऽनिमिषेक्षणाः। चक्रुः सकौतुकायातविमानस्थाप्सरोभ्रमम् KathāSaSāg. iii. 4.13; **iii** who never closes the eyes पृथिवीं नास्पृशत्पद्भ्यामनिमे(v. l. मि)षेक्षणो बभौ Rāmā. iii. App. I. 12(45); मांसास्थिक्लेदरहिता देवा अनिमिषेक्षणाः।... स्वच्छन्दगतिधारिणः PadmP.(Ra.) 43. 35; *n.* unwinking or fixed gaze बाष्पो जृम्भाभयक्रोधशीतैरनिमिषेक्षणैः। जायते रोगशोकाभ्यां धूमाञ्जनविजृम्भणैः BhāvPra.(Śā.) 14. 22(1)

**अनिमिषेक्षणचारुरूपा** (animiṣekṣaṇa-cārurūpā) *adj.* (*f.*) having a beautiful appearance because of unwinking gaze रूपं तदेवमतुलं वदनं सुचारु दृष्ट्वाङ्गना निजवपुर्निजकान्तिसह्यम्। हेला निजे वपुषि रूपगणेषु नित्यं कर्तार इत्यनिमिषेक्षणचारुरूपाः ŚivaP. ii(2). 22. 31 (95B. 14)

**अनिमिषेक्षणम्** (animiṣekṣaṇam) *adv.* with unwinking eyes, with fixed gaze दीर्घं मुहुर्निश्वसिति तिष्ठत्यनिमिषेक्षणम्।... इत्थमुन्मादजा भावाः कथिताः BhāvPra.(Śā.) 90.12(4)

**अनिमिषेन्द्र** (animiṣendra) *m.* chief of gods सुतौ चानयोराश्चर्यसौन्दर्यपरितोषितानिमिषेन्द्रौ सिंहचन्द्रपूर्णचन्द्रौ नाम YaśasCam. ii. 345. 5.

**अनिमिषैकचक्षुस्** (animiṣaikacakṣus) *adj.* having one eye open अप्यक्षयं मे यशसो निधानं कच्चिद्ध्रुवो मे कुलहस्तसारः। अपि प्रयास्यामि सुखं परत्र सुप्तोऽपि पुत्रेऽनिमिषैकचक्षुः BuddhaC. 1. 65.

**अनिमिषोद्यान** (animiṣodyāna) *n.* garden of gods, celestial garden पुनः स्वापतेशदिशि ... ईषदुन्मिषदनिमिषोद्यानप्रसूनोपहारहरिचन्दनामोदसनाथगन्धकुटीसमेतम् ... °यात्राधिकरणं समवशरणं विस्तार्य स विद्याधरः समस्तमपि नगरं क्षोभयामास YaśasCam. ii. 301.9.

**अनिमिषोन्मकर** (animiṣonmakara) *adj.* having (earrings like) rising and unwinking crocodiles का वात्मवृत्तिरदनाद्धविरङ्ग वाति विष्णोः कलास्यनिमिषोन्मकरौ च कर्णौ।... ते BhāgP. v. 2. 13.

**अनिमिषोपभोग** (animiṣopabhoga) *m.* **i** enjoyment (i.e. eating) of fish रे रे शिष्ट बकोट नाकतटिनीतीरे तपस्विव्रतं ध्यानेनानिमिषोपभोगमनसा युक्तं करोषीदृशम् SūktiMu. 18.6 = ŚārṅgaPa. 895; **ii** divine or celestial enjoyment, SūktiMu. 18.6 = ŚārṅgaPa. 895.

**अनिमीलनकर** (a-nimīlanakara) *adj.* which does not cause the closing (of all the eyes) अक्षिद्वयगोपनेन करयोरन्यक्रियास्वक्षमः सुत्रामा नयनानिमीलनकरं कर्म्म स्वकं निन्दति EI. ii. 352. 25.

**अनिमीलित** (a-nimīlita) *adj.* not closed, open यत् निमीलिते चक्षुषि स्मरत् रूपं पश्यति, तदेव अनिमीलितेऽपि चक्षुषि द्रष्टृ आसीत् BṛĀraUBh. 522. 15 (*on* iv. 3.6)

**अनिमीलितदिव्याक्ष** (animīlita-divyākṣa) *adj.* whose divine eye is not closed स्वतन्त्रशिवतामेति भुञ्जानो विषयानपि। (योगी) अनिमीलितदिव्याक्षो यावदास्ते मुहूर्तकम् MālinīT. 18. 23.

**अनिमीलितनेत्र** (animīlita-netra) *adj.* having unclosed eyes अनिमीलितनेत्रोऽसौ तथावस्थितविग्रहः। दधार जीवतो रूपं क्वापि प्रहितचेतसः PadmP.(Ra.) 115. 13; तत्र चित्तं समाधाय प्रोक्तकालं विचक्षणः। अनिमीलितनेत्रस्तु भानुबिम्बं निरीक्षयेत् MālinīT. 22. 8; *n.* unclosed (i.e. open) eye अनिमीलितनेत्राच्छनैः शनैर्भ्रमयन्नेव शलाकामपनयेत् AṣṭāSaṁ. ii. 241. 6 (6.17)

**अनिमीलितलोचन** (animīlita-locana) *adj.* [*f.*-ā] **i** whose eyes are not closed निमीलयत चक्षूंषि सर्वे वानरपुंगवाः। न हि निष्क्रमितुं शक्यमनिमीलितलोचनैः Rāmā. iv. 52. 8; शयननिक्षिप्तगात्रयष्टिश्च ततः प्रभृति ... अनि-

मीलितलोचना दुःखदुःखेन क्षणदामनैषीत् Kād. 214.10; मुखमपश्यतो वरस्यानिमीलितलोचना कन्या भवति प्रचण्डा NītiVā. 31.16; **ii** in which the eyes are not closed अलक्षितद्विजं किंचित्किंचित्फुल्लकपोलकम्। स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् SkandP. iv. 37.106.

**अनिमीलितविलोचनपक्ष्मबन्धम्** ( a-nimīlitavilocanapakṣmabandham ) *adv.* without closing the eye-lashes आबद्धकङ्कटकपाणिनिरुद्धपार्श्वभागः सुगन्धिवदनानिलपूर्णरन्ध्रः। तेनानिमीलितविलोचनपक्ष्मबन्धमाध्मायि संयुगरसादथ पाञ्चजन्यः HarVi. 49.3.

**अनिमीलितशुक्लनिश्चलाक्षी** (animīlita-śuklaniścalākṣī) *adj.* (*f.*) whose bright and motionless eyes are not closed अन्याः … अनिमीलितशुक्लनिश्चलाक्ष्यो न विरेजुः शयिता गतासुकल्पाः BuddhaC. 5.60.

**अनिमीलितस्मृति** (animīlita-smṛti) *adj.* wherein the memory (of past birth) is not obscured अहम् … रत्नचूड इति नागदारकः। उदपादि कण्वमुनिशिष्यशापतः शुकता ममेयमनिमीलितस्मृतिः NavaSāC. 10.46.

**अनिमृष्ट** (a-nimṛṣṭa) *adj.* not wiped अनिमृष्टं दर्व्युदायुवनमवधाय HirŚS. v. 3.23 (472.15) (comm. अनिमृष्टम् … अनिष्कासितलेपम्), VaikhāŚS. 9.3 (*but* VIŚVA. **अनिभृष्ट**)

**अनिमेष** (a-nimeṣa) *adj.* [*f.*-ā] **1A** not winking, looking steadily न रु(? रू)क्षवाक् स्यान्न च उत्स्वरं वदेन्न चानिमेषो न च गर्वमाचरेत् MāṇḍūŚi. 12.6; तवापर्णे कर्णेजपनयनपैशुन्यचकिता निलीयन्ते तोये नियतमनिमेषाः शफरिकाः SaundL. 56; **1B** never winking (i. e. divine) वातायनाः किं किममी विमाना जनः समं तेष्विति संशयानः। अबोधि यस्मिन्निमिथुनैस्तु तत्स्थैरेवानिमेषैश्च निमेषिभिश्च HammīMaKā. 11.36; **2** (eyes) not winking, having fixed gaze, having steadfast look सर्वाङ्गसौष्ठवयुतां रूपलावण्यशालिनीम्। पश्यतामनिमेषेण चक्षुषा वनिताम् MahāBhā. iv. 480*(2); नेत्राभ्यामनिमेषाभ्यां तृषिताभ्यां पिबन्निव। उदैक्षत प्रहृष्टात्मा प्रणिपत्य मुहुर्मुहुः PāraS. 10.207; न तथा सार्यपुत्रेण प्रेक्षिता जीर्णकन्यका। नेत्राभ्यामनिमेषाभ्यामार्यपुत्रस्तया यथा BṛKathāŚloSam. 19.58; इत्युदीर्य मघवा विनयर्धिं वर्धयन्नवहितत्वभरेण। चक्षुषां दशशतीमनिमेषां तस्थिवान्मुनिमुखे प्रणिधाय NaiṣC. 5.19; अनिमेषा अपि दृशः समुन्मेषयतां भृशम्। बभूव रभसोत्तालो देवानां तुमुलस्तदा PāṇḍaC. 13.183; पश्यन्नुच्चैःश्रवसमनिमेषेण चक्षुषा, पद्मनाभः … सासूय इव बभूव NīlaVi. 111.1; *m.* **1** non-winking सर्वे भावास्तु देवानां कार्या मानुषसंश्रयाः। तेषां त्वनिमिषत्वं यत्तन्न कार्यं (v. l. अनिमेषस्तु यस्तेषां स न कार्यः) प्रयोक्तृभिः NāṭyaŚā. 13.35; **2** sign of the zodiac called Pisces अनिमेषमेषराशी ह्रस्वौ HorāSā. 1.24; **3** god, divine being (*lit.* who never winks) इन्द्रमेवं समादिश्य भगवान् विश्वभावनः। पश्यतामनिमेषाणां तत्रैवान्तर्दधे हरिः BhāgP. vi. 10.1; तत्र विपश्चिद्भिरप्यनिश्चीयमानजयापजयमनिमेषैरप्यननुसंधीयमानशरसंधानमोक्षमभूदभूतपूर्वं द्वन्द्वयुद्धम् RāmāCam. 3.19(17) [Kośas give the following as the meaning of *animeṣa* — *amara*, Vaija. 266.13; ŚabdaRa.(Vā.) 4403; *sura*, AnekāSaṁ. 4.316 (v. l. PW.); ViśvaLoK. 384.33; ŚabdaRaSaK. 333.11; *suparvan*, NānārthSaṁ. 6.51; *deva*, NānārthāSaṁ. iii. 26.8; MediK. 184.49]; **4** fish, cf. **अनिमेषमण्डल** [Kośas give the following as the meaning of *animeṣa* — *jhaṣa*, Vaija. 266.13; *matsya*, AnekāSaṁ. 4.316 (v. l. PW.); NānārthāSaṁ. iii 26.8; MediK. 184.49; ŚabdaRa. (Vā.) 4403; ViśvaLoK. 384.33; ApūNā. 51A(? 52A). 3; ŚabdaRaSaK. 333.11; *pṛthuroman*, NānārthSaṁ. 6.51 and TrikāŚe. i. 10.8 gives the following as synonyms of *animeṣa* (v. l. according to comm.) — *kaṇṭakin*, *jaleśaya*, *ātmāśin*, *śambara*, *mūka*, *valkava(n)t*]

**अनिमेषक** (animeṣa-ka) *adj.* who does not wink, having steadfast look अनिमिषो देवे मत्स्ये त्रिस्त्वनिमेषके NānārthāSaṁ. iii. 26.7; अनिमेषो द्वयोर्देवे मत्स्ये त्रिस्त्वनिमेषके NānārthāSaṁ. iii. 26.8.

**अनिमेषकम्** (animeṣakam) *adv.* unwinkingly, steadfastly त्वन्मुखाम्भोजगलितमाज्ञामृतरसं नृपः। पिपासुस्त्वां जगन्नाथ पश्यत्येषोऽनिमेषकम् SkandP. ii(2). 29.8.

**अनिमेषचक्षुस्** (animeṣa-cakṣus) *adj.* whose eyes are not winking, having steadfast look अनिमेषचक्षुषि प्रेक्षमाणे पुरुषे तदातनोत्पन्नविनष्टबुद्बुदप्रभृतिष्वतिव्याप्तेः NyāySiA. 209.22.

**अनिमेषण** (a-nimeṣaṇa) *adj.* [*f.*-ā] not winking, looking steadfastly इति संचिन्तयन्ती सा तमैक्षदनिमेषणा PadmP. iv. 59.43; ते सर्वे हृष्टमनसो राजानो ब्राह्मणादयः। रामं तौ दारकौ दृष्ट्वा विस्मिता ह्यनिमेषणाः AdhyāRā. vii. 7.9.

**अनिमेषतस्** (animeṣa-tas) *adv.* because of non-winking, due to steadfast look नेत्राणामनिमेषतः परिहृतो दूरेण वृन्दारकैः।… सन्तानो रजसां रणेसुषु [Read रणेषु] जयिनो यस्य द्युमार्गं गतः EI. xvii. 191.13.

**अनिमेषता** (animeṣa-tā) *f.* **1** the state of being one who never winks, godhood एषां त्वदीक्षणरसादनिमेषतैषा स्वाभाविकानिमिषतामिलिता यथाभूत् NaiṣC. 11.9; देव त्वद्विजये तुरङ्गमखुरव्रातक्षतक्ष्मातलप्रोद्भूते परितः परागपटले दिक्चक्रमाक्रामति।… स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः SaduktiKa. 211.30; यत्सुमनस्त्वसाधनसामग्र्यां त्वय्यनिमेषतैव केवलमवशिष्यते RasSa. 47(4); **2** winklessness नृपतेर्ह्यनिमेषतां दृशावतिमात्रं बिभरांबभूवतुः PṛthvīVi. 12.16; (भुवनपालशङ्कयोः) वियति प्रेक्षमाणाभिरप्सरोभिर्मृधं तयोः। बहु मेने स्वकीयानां चक्षुषामनिमेषता KīrtiKau. 5.46; जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टार्थयोः श्रुतेः। दृष्टेर्वा विरहादेश्च क्रियास्तत्रानिमेषता RasāSu. 121.6 (2.63); **3** (*fig.*) the state of having no closure (of the petals) अभितिग्मरश्मि चिरमा विरमादवधानखिन्नमनिमेषतया।… न्यमिमीलदब्जनयनं नलिनी ŚiśuVa. 9.11 (comm. अपक्ष्मपाततया। दलसंकोच एवात्र निमेषः); **4** (*fig.*) the state of being awake अनिमेषता जनानामनिमेषत्वाय भवतु शिवरात्रौ YātrāPra. 9.7.

**अनिमेषताकरण** (animeṣatā-karaṇa) *n.* **i** effective means of winklessness कथमनिमेषताकरणमन्तरेण सुमनीकरणकर्तृत्वमागमनविलम्बस्य RasSa. 47(3); **ii** act of non-closing, RasSa. 47(3)

**अनिमेषतारक** (animeṣa-tāraka) *adj.* whose pupil is steadfast (i. e. not closed) अहमनवरतपरिवर्तितकन्धरस्य विसृजतः … मदीक्षणयुगे वारंवारमनिमेषतारकं चक्षुरवनिभृत्कुमारस्य तस्य त्वरावता चित्तेन चिन्तयन्ती स्थित्युपायान् … तां वसन्तसेनां पुनरवोचम् TilaMañ. 282.1.

**अनिमेषत्व** (animeṣa-tva) *n.* **i** winklessness (कम्पराजचम्पराजौ) कक्ष्याविभक्तवपुषोश्चारीभिश्चरतोस्तयोः। पश्यद्भिस्सौष्ठवं देवैरनिमेषत्वमादृतम् MadhuVi. 4.80; **ii** the state of being a god, godhood अनिमेषता जनानामनिमेषत्वाय भवतु शिवरात्रौ YātrāPra. 9.7.

**अनिमेषत्वादि** (animeṣatvādi) *adj.* winklessness etc. अत्र प्रियवाक्यश्रवणजनितजाड्यमनिमेषत्वादिना व्यज्यते RasāSu. 121.13 (2.63)

**अनिमेषदर्शन** (animeṣa-darśana) *n.* unwinking gaze, continuous staring अनिमेषदर्शनसुखरसराशिं मन्थरितपक्ष्मणा चक्षुषा पीतमिव कोमलकपोलपालीप्रतिबिम्बितं वहन्तीभिः … वारविलासिनीभिर्विलुप्यमानसौभाग्यमिव … चक्रवर्तिनं हर्षमद्राक्षीत् HarṣaC. 34.27 (Kane's Ed.); अहर्पतेश्चिरमनिमेषदर्शनक्लमादिव स्रुतघनबाष्पशीकरम्। सरोजिनी रजनिपयःपरिप्लुतं बिभर्त्यसौ विकसितमब्जलोचनम् HarVi. 29.42; वर्तमान एव तत्रानिमेषदर्शनस्य कियान्काल इति चिन्त्यताम् NyāyMañ. ii. 35.6; (सात्त्विका भावाः) अश्रु धूमाञ्जनामर्षहर्षानिमेषदर्शनशोकैः NāṭaLaRaK. 2123.

**अनिमेषदर्शनीय** (animeṣa-darśanīya) *adj.* **i** worthy to be seen without winking अनुदिनमनिमेषदर्शनीयं जितमधुरप्सरसां ददर्श नृत्यम् Yādavā. 24.45; **ii** worthy to be seen by gods, Yādavā. 24.45.

**अनिमेषदृश्** (animeṣa-dṛś) *adj.* having unwinking or fixed gaze सुधासारेण लावण्यं विदधेऽस्याः ध्रुवं विधिः। अनिमेषदृशो लोका यदस्यालोकमात्रतः PadyaVe. 189; *m.* god (*lit.* whose eyes never wink), PadyaVe. 189.

**अनिमेषदृष्टि** (animeṣa-dṛṣṭi) *adj.* having unwinking or fixed gaze अभिशौरि काचिदनिमेषदृष्टिना पुरदेवतेव वपुषा व्यभाव्यत ŚiśuVa. 13.45; अनिमेषदृष्टेर्यदुत्पत्तिविनाशरहितानुवृत्ततत्त्वावसायः, स बाधकः TātpaṬ. (U.) 178.8 (*on* 4.233); अयम् (कालः) अनिमेषदृष्टेर्दर्शनविच्छेदानुपग्रहात् तावानेकः स वर्तमान एव भवतु NyāyMañ. ii. 35.15; ii. 35.19; ii. 35.22; तमीक्षितुं प्रतिमुखमाहतोद्यमा विरोधिनः …। नभोगताः … व्यलोकयन् सुखमनिमेषदृष्टयः RāghPāṇ. (Ka.) 4.34; परा प्रभो रूपमवेक्षमाणा रसातिरेकादनिमेषदृष्टिः। सख्याह्वयन्त्या (? सख्या ह्वयन्त्या) अपि पार्श्वगायाः शुश्राव शब्दं बधिरेव नैव NemiC. 10.16; *m.* god, RāghPāṇ.(Ka.) 4.34 (comm. अनिमेषे लोचने येषां ते देवत्वात् तथाभूताः)

**अनिमेषनयन** (animeṣa-nayana) *n.* **i** unwinking or fixed gaze कदाचिदम्भोनिधिरिवोच्चैःस्तननाभिरम्याः, कृतानिमेषनयनविभ्रमाः, सकंदर्पाः, सिषेवे वेलाविलासिनीः NalaCam. 1.39(27); **ii** carrying of fish, NalaCam. 1.39(27)

**अनिमेषनयनत्व** (animeṣanayana-tva) *n.* the state of being one whose eyes do not wink, winklessness स्यात् – रसोऽद्भुतः …। नयनविकासो बाष्पः पुलकः स्वेदोऽनिमेषनयनत्वम् Kāvyālaṁ.(Ru.) 15.10; सुव्यक्तमापदमरत्वमसौ पुरन्ध्रिबिम्बाधरास्पदसुधारसपानसङ्गात्। गाढीभवन्निधुवनोत्सवसंमदेन येनानिमेषनयनत्वमवापि यूना HarVi. 27.106.

**अनिमेषनिरीक्षण** (animeṣa-nirīkṣaṇa) *n.* unwinking or steadfast look जडता नाम — सर्वकार्याप्रतिपत्तिः।… तामभिनयेदकथनाभिभाषणतूष्णींभावानिमेषनिरीक्षणपरवशत्वादिभिरनुभावैः NāṭyaŚā. 7.100; स्तब्धता जडता मता।… अस्यामपि भवेत् सद्यस्त्वनिमेषनिरीक्षणम् SāhiSā. 5.51.

**अनिमेषनिश्चलाङ्गयष्टि** (animeṣa-niścalāṅgayaṣṭi) *adj.* unwinking and having motionless slender body प्रयातं च वर्त्मनि विलोकितुं देवमाकुलाभिरनिमेषनिश्चलाङ्गयष्टिभिरारुह्यारुह्य बालिकाभिरवलम्बिताः सशालभञ्जिका इवाभ्राजन्त सौधाग्रवलभीशातकुम्भस्तम्भाः TilaMañ. 389. 23.

**अनिमेषनेत्र** (animeṣa-netra) *n.* unwinking eye, steadfast look तं दृष्ट्वा परमं रूपं कुमारस्य महात्मनः। उमानिमेषनेत्राभ्यां तमपश्यत भामिनी VarāP. 23. 16; *adj.* having unwinking eyes or steadfast look ततः प्रसन्नांस्त्रिदिवौकसस्तान् आलोकयामास नरेन्द्रकन्या। अस्वेदगात्राननिमेषनेत्रान् Nalābhyu. 5. 42.

**अनिमेषपक्ष्मलदृश्** (animeṣa-pakṣmaladṛś) *f.* celestial lady (*lit.* having long eyelashes which do not wink) प्रसरच्चमत्कृतिविशेषपोषतः पुटयोर्मनाङ्‍ मुकुलतां विवृण्वती। अनिमेषपक्ष्मलदृशां दृशौ हठात्सनिमेषतामिव हलिप्रियानयत ŚrīKaC. 14. 31 (comm. नाकिस्त्रीणाम्)

**अनिमेषपति** (animeṣa-pati) *m.* lord of the gods अथ सुमतिरयम् ··· अवलोकयति स्म ··· निरवधिविभूतिमनिमेषपतिम् YātrāPra. 3. 199(25)

**अनिमेषपिशुन** (animeṣa-piśuna) *adj.* **i** incessantly slanderous दोषालोकननिपुणाः परुषगिरो दुर्जनाश्च घूकाश्च। दर्शनमपि भयजननं येषामनिमेषपिशुनानाम् BṛKathāMañ. i. 1. 3; **ii** incessantly ominous, BṛKathāMañ. i. 1. 3.

**अनिमेषप्रष्ठ** (animeṣa-praṣṭha) *m.* Indra, leader of the gods उमारमण ···। युद्धे सिद्धानवधिविजयोन्मेष एषोऽनिमेषप्रष्ठस्तिष्ठत्यवनतशिराः सोऽलमुग्र त्वदग्रे ŚrīKaC. 16.28 (comm. अनिमेषाणां देवानां प्रष्ठोऽग्रणीः)

**अनिमेषप्रेक्षण** (animeṣa-prekṣaṇa) *n.* unwinking or steadfast look अद्भुतो नाम विस्मयस्थायिभावात्मकः।··· तस्य नयनविस्तारानिमेषप्रेक्षण° ··· °चेलाङ्गुलिभ्रमणादिभिरनुभावैरभिनयः प्रयोक्तव्यः NāṭyaŚā. 6.94.

**अनिमेषप्रेक्षणतस्** (animeṣaprekṣaṇa-tas) *adv.* due to unwinking or steadfast look अनिमेषप्रेक्षणतः शीताद्रोगाद्भवेदास्रम् NāṭyaŚā. 7. 151.

**अनिमेषप्रेक्षित** (animeṣa-prekṣita) *n.* unwinking or steadfast look तस्य (विस्मयस्य) नयनविस्तारानिमेषप्रेक्षित° ··· °साधुवादादिभिरनुभावैरभिनयः प्रयोक्तव्यः NāṭyaŚā. 7. 41.

**अनिमेषभाज्** (animeṣa-bhāj) *adj.* having no winking सानन्दलज्जं मुहुरीक्षमाणास्त्रिलोकनाथं ललनाः सुराणाम्। तदायतानामनिमेषभाजां साफल्यमापुर्निजलोचनानाम् NemiC. 6. 22.

**अनिमेषभाव** (animeṣa-bhāva) *m.* **i** winklessness लावण्यमस्या नियतं सुधैव। यदेतदापीय दृशा प्रपेदे मनुष्यलोकेऽप्यनिमेषभावः RāghPāṇ.(Ka.) 2. 10; **ii** the state of being a god, godhood, RāghPāṇ.(Ka.) 2. 10.

**अनिमेषम्** (ánimeṣam) *adv.* **1A** with vigilance त्वं नो अग्ने ···। त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते ṚV. i. 31. 12; VājaS. 34. 13; VājaS.(K.) 33. 7; **1B** without cessation यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ṚV. i. 164.21; AV. ix. 9.22; AV.(P.) xvi. 67. 12; Nir. 3. 12 (65. 23); **2** without winking, steadfastly त एतेऽनिमेषमन्योऽन्यमीक्षन्ते JaimiBr. 1. 247; तद् यथा पतिं जाया अनिमेषमीक्षेरन्नेवमेवैना एवंविदं दीक्षमाणमीक्षन्ते JaimiBr. 2.52; प्रीत्या भवन्तमनिमेषमवेक्षितुं मे स्नेहान्नवीकृत इवाद्य वयस्यभावः Avimā. 6.1; अनिमेषं पश्यन्ती मत्स्यवधूमनुचकार सा तन्वी KuṭṭaMa. 271; त्वन्मार्गं मम पश्यतोऽनिमेषम्। को मे निकटस्त्वयेक्षितोऽभूद्यत्रासावहमद्य विस्मृतस्ते RāmC. 14. 86; नरपतिमनिमेषं द्रष्टुमाशंसिनीनाम्। सपदि विरचितासीदङ्गनानामपाङ्गैर्दिवि ··· तोरणश्रीः PratāYaBhū. 59.7.

**अनिमेषमण्डल** (animeṣa-maṇḍala) *n.* **i** multitude of fish स्फुरदनिमेषमण्डलरुचा शनकैरसिकतिलोत्तमावनितयैष गिरिः। कटकसरः श्रिया रुचिरया सुमतस्त्रिदिवभुवेव नाक्षिपति कस्य मनः HarVi. 5.7; **ii** multitude of gods, HarVi. 5. 7.

**अनिमेषयत्** (a-nimeṣayat) *adj.* causing not to wink कुमाराः ···। ववन्दिरे भूमिपतिं जनानां विलोचनालीमनिमेषयन्तः RāghPāṇ.(Ka.) 1. 71 (comm. निमेषशून्ययत्नाः)

**अनिमेषलसद्दृष्टि** (animeṣalasad-dṛṣṭi) *f.* winkless and shining gaze बाह्या रतिर्द्विधा ज्ञेया दर्शनात्स्पर्शनात्तदा। अनिमेषलसद्दृष्ट्या दर्शनं दर्शनं स्मृतम् ŚṛṅgāDī. 2. 33.

**अनिमेषलोचन** (animeṣa-locana) *adj.* [*f.*-ā] **i** having unwinking eyes or steadfast gaze अवनिपतिस्तु ··· ताम् ··· अतिशयरूपाकृतिमनिमेषलोचनो ददर्श Kād. 11. 19; निरवाहयदन्धसंहतिं निमिषात्तामनिमेषलोचना (स्वयंप्रभा) RāmC. 13.76; (अहम्) दृष्टवान् ··· अनिमेषलोचनाभिः ··· अमरलोकादुपागताभिः स्वर्गरमणीभिरिव मणिशिलाशालभञ्जिकाभिरध्यासिताभ्रंकषपुष्परागपाषाणस्तम्भशिखरम् ··· एकं दिव्यमायतनम् TilaMañ. 154.12; **ii** whose eyes never wink स्मरात् परासोरनिमेषलोचनाद् बिभेमि तद्भिन्नमुदाहरेति सा।··· तदास्पदे निदर्शनं नैषधमभ्यषेचयत् NaiṣC. 1. 36 (comm. मृतात् अत एवानिमेषलोचनान्निमेषरहितनेत्रात्)

**अनिमेषलोचनचया** (animeṣalocana-cayā) *adj.* (*f.*) possessing a multitude of steadfastly looking eyes यमदूरतस्त्रिजगदेककौतुकव्यवहारसर्गविधिनव्यवेधसम्। अलका विमुद्रबहुसौधसौहृदादनिमेषलोचनचयेव वीक्षते ŚrīKaC. 4.60 (comm. नित्योद्घाटितानि ··· राजगृहाणि तत्परिचयादनिमिषनेत्रेवालका वीक्षते)

**अनिमेषलोचनता** (animeṣalocana-tā) *f.* the state of being one whose eyes do not wink, winklessness अनिमेषलोचनतया रूपालोकनपरैरिव कैश्चिदास्फालितदिव्यन्तर्यैः ··· कृत्रिमसुरसमूहैः परिकरिताम् ··· चिन्तामणिमयीं प्रतिमामपश्यत् TilaMañ. 217. 9; देव ···। साक्षात् तत्र भवन्तमीक्षितवतां कल्याणकाले तदा देवानामनिमेषलोचनतया वृत्तः स किं वर्ण्यते JinaCatur. 24.

**अनिमेषलोचनयुग** (animeṣalocana-yuga) *n.* pair of unwinking or steadfast eyes ब्रह्माण्डोदरदर्पणे ··· संक्रान्तामनिमेषलोचनयुगेनोत्पश्यतः स्वां तनुम्। शौरेर्मीनतनोः ··· शिरः पातु वः SaduktiKa. 29.11.

**अनिमेषवितत** (animeṣa-vitata) *adj.* unwinking and hence wide open कस्यानिमेषवितते नयने दिवौकोलोकादृते जगति BhallaŚ. 78; Subhāṣi. 985.

**अनिमेषविद्याधरपरिषदवलोकित** (animeṣa-vidyādharapariṣadavalokita) *adj.* seen steadfastly by the assembly of Vidhyādharas (गन्धर्वकः) अनिमेषविद्याधरपरिषदवलोकितश्च निश्चलमवस्थाप्य ललाटमङ्घ्रिपीठे ··· दीर्घमनुदीरितध्वनिररोदीत् TilaMañ. 404. 8.

**अनिमेषविलोकनीय** (animeṣa-vilokanīya) *adj.* **i** fit to be seen without winking दृष्ट्वा भवन्तमनिमेषविलोकनीयं नान्यत्र तोषमुपयाति जनस्य चक्षुः BhaktāSt. 11; **ii** fit to be seen by gods, BhaktāSt. 11.

**अनिमेषविलोचन** (animeṣa-vilocana) *adj.* having unwinking eyes or steadfast gaze स राजा ···। उदितमदनविस्मयः स्त्रियं तां चिरमनिमेषविलोचनो ददर्श JātaMā. 83.2(13. 9); बहुसंकल्पमनिमेषविलोचनम्। अपश्यदृषिदत्ता माम् BṛKathāŚloSaṁ. 26.7.

**अनिमेषवीक्षण** (animeṣa-vīkṣaṇa) *n.* unwinking or steadfast gaze आश्लेषोऽधरदानं चुम्बनमनिमेषवीक्षणं सुरतम्। इत्येकैकपणेन क्रीडति मिथुनं जितान्योऽन्यम् SundaŚ. 85.

**अनिमेषवृत्ति** (animeṣa-vṛtti) *adj.* having unwinking condition शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः। अवोचदेनम् ··· रघुः RaghuVa. 3. 43 (comm. अनिमेषवृत्तिभिर्निमेषव्यापारशून्यैः); राघवौ ···। पथिकैरुपसृत्य मार्गतो ददृशाते कुतुकप्रसारितैः। नयनैरनिमेषवृत्तिभिः Rāgh. 3. 5.

**अनिमेषव्रत** (animeṣa-vrata) *n.* vow of not winking अनिमेषव्रतदेशिनी दृशोः। तनुते तनुरीश तावकी स्मरणं विस्मरणं च दुःशकम् Yādavā. 9. 62.

**अनिमेषस्फुरत्तार** (animeṣa-sphurattāra) *adj.* in which the pupil is bright due to non-winking अनिमेषस्फुरत्तारं सर्मं विहसितं विदुः BhāvPra. (Śā.) 120. 1(5)

**अनिमेषहसित** (animeṣa-hasita) *n.* laughter of the fish राजा च तान्मत्स्यहासकारणमप्राक्षीत्। ततस्तदनिमेषहसितं न कोऽपि विपश्चिद्विवेक्तुं शक्नोति ŚukSa. 17. 37.

**अनिमेषह्रेषाघोष** (animeṣa-hreṣāghoṣa) *m.* incessant sound of neighing वाजिनामनिमेषह्रेषाघोषमुखरितसविधसौधोत्सङ्गम् ··· लक्ष्मीविलासतामरसं नाम ··· आस्थानमण्डपमास्थाय ··· कार्याण्यपश्यम् YaśasCam. i. 368. 4 (comm. अनिमेषमनवरतं योऽसौ हेषाघोषो हेषाध्वनिः)

**अनिमेषा** (animeṣā) *f.* name of the tree *Cedrus deodara* or Pinus Devadāru or Deodar अनिमेषा देवदारु ApūNā. 51A(?52A). 3.

**अनिमेषाक्ष** (animeṣākṣa) *adj.* having unwinking eyes शूलाध्मानानिमेषाक्षः कृच्छ्रगामी च जायते।··· सर्वे पूर्वोदिता ह्येते नैव साध्याः प्रकीर्तिताः AśvaVai. 64. 10; प्रावृषि प्रथमायां च द्रव्यस्यास्य कथापि का। दातारोऽप्यनिमेषाक्षाः PariPar. 12.153.

**अनिमेषाक्षता** (animeṣākṣa-tā) *f.* the state of having unwinking eyes or steadfast gaze अथ विप्रलम्भतरला पीयूषयाच्ञापदे। मातः पायय वस्तुपालमिति वाक्प्रान्तेऽनिमेषाक्षतां निन्दन्ती हृदि सा त्रपानतमुखी निःश्वस्य मोहं गता VasaViKā. 14. 18.

**अनिमेषानोकह** (animeṣānokaha) *m.* tree of the gods, divine or celestial tree हतरिपुरनिमेषानोककहो (read °नोकहो) याचकानां होसबि[रु]दरगंडो रायराहत्त (read °हुत्त)मिंडः। महितचरितधन्यो मन्त्रियान्सामुलादिप्रकटितबिदु(रु)दश्रीः पातितारातिलोकः EI. xi. 333. 92; xii. 174.84; xii. 352. 44.

**अनिमेषाप्ति** (animeṣāpti) *f.* obtainment of non-winking वपु-

भगवतो दिव्यं पश्यन्तोऽनिमिषेक्षणाः। नेत्रयोरनिमेषाप्तौ फलं प्रापुस्तदामराः MahāP. 13.59.

**अनिमेषावलोकन** (animeṣāvalokana) *n.* unwinking gaze आनन्दाश्रु सरोमाञ्चमनिमेषावलोकनम्। अनिश्चलत्वं मनसो यस्मात्तन्मानसोऽद्भुतः BhāvPra.(Śā.) 65.22(3)

**अनिमेषिणी** (a-nimeṣiṇī) *adj.* (*f.*) unwinking चला हसितगर्भा च विशत्तारानिमेषिणी। ·· दृष्टिर्हासे प्रकीर्तिता NāṭyaŚā. 8.55(? 58) = BhāvPra.(Śā.) 126.20(5); विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी। अनवस्थिततारा च विकोशा दृष्टिरिष्यते NāṭyaŚā. 8.80 = BhāvPra.(Śā.) 129.17(5); विकोषितोभयपुटफुल्लतारकाममर्षणो दृशमनिमेषिणीं दधौ HarVi. 34.40; महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः।··· दीर्घगात्री दुराचारा मत्स्यशीलानिमेषिणी BhāvPra.(Śā.) 111.14(5); 128.17(5)

**अनिमेषितलोचना** (animeṣita-locanā) *adj.* (*f.*) who has not closed her eyes (सः) अपश्यत्तापसीं कांचित् ·· दक्षिणहस्ततः। ज्ञानमुद्रां च बिभ्राणामनिमेषितलोचनाम् PadmP. iv. 72.27.

**अनिमेषेक्षण** (animeṣekṣaṇa) *adj.* **i** having unwinking or steadfast look वासवः। प्रत्ययं जनयामास जानक्याः संनिधौ ततः। पृथिवीं नास्पृशत्पद्भ्यामनिमेषेक्षणो बभौ Rāmā. iii. App. I. 12(45); **ii** having vigilant look एते ···। अनिमेषेक्षणास्तस्थुः क्षोणीशच्छिद्रकाङ्क्षिणः SkandP. iv. 53.102; *m.* god (कनकपुरी) दृष्टा मया च सा भोगभूमिः सुकृतकर्मणाम्। अनिमेषेक्षणास्वाद्यशोभा शक्रपुरी यथा KathāSaSāg. v. 1.72; *n.* unwinking or steadfast gaze, KathāSaSāg. v. 1.72.

**अनिम्न** (a-nimna) *adj.* [*f* -ā] **i** having no cavity चतस्रः स्रुचस्तासु द्वे रौहिणहवन्यावनिम्ने। इतरे द्वे सनिम्ने VaikhāŚS. 13.7; अनिम्नयोराग्नीध्र उपस्तीर्णाभिघारितौ रौहिणौ पुरोडाशौ पूर्वाह्ले प्राच्यौ स्रुचौ ·· अन्वासादयति VaikhāŚS. 13.11; **ii** not depressed or sunken भालः शिराविरहितः ··। अनिम्नस्त्र्यङ्गुलो नार्याः सौभाग्यारोग्यकारणम् SkandP. iv. 37.118; सावर्तं चाप्यनिम्नं च विशालं चैव वाजिनाम्। ललाटं पूजितं प्राहुः AśvaVai. 3.16; AśvaŚā. 19.15; अनुत्सन्ना ह्यनिम्नाश्च प्रदेशास्तस्य कीर्तिताः (दन्तिनः) Hastyāyur. 423.4 (3.8); **iii** (land) not low मृदु प्रयान्तीयमनिम्ननिम्नयोः सितांशुका कामपि कान्तिमश्नुते NavaSāC. 4.16.

**अनिम्नगण्ड** (animna-gaṇḍa) *adj.* whose cheeks are not sunken भोगी त्वनिम्नगण्डः BṛSaṁ. 68.60; अनिम्नगण्ड उन्नतगण्डः VīraMi. (Lakṣaṇa.) 84.19.

[1]**अनिम्नगात्र** (animna-gātra) *adj.* having unsunken or elevated limbs (i.e. surfaces) (राजा) निम्नगात्रमनिम्नगात्रं च ··· विन्ध्यस्कन्धमुल्लङ्घ्य ··· सह्याचलमवततार NalaCam. 6.60(5)

[2]**अनिम्नगात्र** (a-nimnagātra) *adj.* not protecting rivers, NalaCam. 6.60(5)

**अनिम्ननिम्नगा** (animna-nimnagā) *adj.* (*f.*) (autumn) in which the rivers are not deep अनभ्रा शुभ्रचन्द्रार्का विपङ्कानिम्ननिम्नगा।··· शरदेषा समागता YaśasCam. i. 572.1.

**अनिम्नभू** (animna-bhū) *f.* not low land हर्षाणामथ शोकानां सर्वेषां प्लावकः समम्। भवद्ध्यानामृतापूरो निम्नानिम्नभुवामिव Stotrā. 3.9.

**अनिम्नम्** (a-nimnam) *adv.* not downwards, upwards उत्पादिता तदा वम्री ब्रह्मणा परमेष्ठिना। तया भक्षयितुं तत्र धनुषोऽग्रं धरास्थितम्। भक्षितेऽग्रे तदानिम्नं गमिष्यति शरासनम् DevīBhāP. i. 5.17.

**अनिम्नोच्च** (a-nimnocca) *adj.* neither depressed nor elevated (स्वामिनः ·· पुंश्चिह्नम्) तच्चासिरमनिम्नोच्चमह्रस्वादीर्घमश्लथम्। सरलं मृदु निर्लोम TriṣaŚaPuC. i. 2.700.

**अनिम्नोन्नत** (a-nimnonnata) *adj.* neither depressed nor elevated (i.e. level or even) सुवर्णं पूर्वं निकष्य पश्चाद् वर्णिकां निकषयेत्। समरागलेखमनिम्नोन्नते देशे निकषितम् (न्याय्यं भवति) ArthŚā. i. 212.6 (2.13); अश्रिहीनं समं कृत्वा ··· अयोमयम्। पिण्डं तु तापयेदग्नौ ···। सममनिम्नोन्नतम् SmṛtiCan. iii. 262.9.

**अनिम्नोन्नतपृष्ठ** (animnonnata-pṛṣṭha) *adj.* the surface of which is neither depressed nor elevated (अनुगतराजि समम् ··· स्निग्धदर्शनमिति नखगुणाः) सममनिम्नोन्नतपृष्ठम् JayaMa. 118.8 (*on* 2.4)

**अनिम्रुक्ति** (á-nimrukti) *f.* non-disappearance (i.e. non-escape) यो॓ऽस्मान् द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मस्तम॒तो मा मौ॒गित्या॒हानि॑म्रुक्त्यै॑ TaiBr. III. ii. 9.4 (Bhaṭṭabhāskara अनिम्रुक्त्यै अनन्तर्धानाय)

**अनिम्सन्** (anim-san) (Gr.) desiderative suffix *-san* not prefixed by the augment *-i-* मिमीमादारभलभशकपतपदहिंसार्थराधोऽचोऽनिम्सनीस्खिलोपश्च। एषामच इस् स्यात् खिलोपश्चानिमि सनि। स्यादेः सो लोपः। पित्सति MugdhaBo. 19.9 (127.14)

**अनियङ्कभीम** (aniyaṅkabhīma) *m.* name of a king of the Gaṅga dynasty श्रीमानियङ्कभीमनृपतिर्गङ्गा (Read र्गाङ्गा)न्वयोत्तंसकः ··· स्तुतः पार्थिवैः EI. xi. 150.26; iv. 190.22; स राजा। वृद्धोऽनुजम् ··· राज्येऽभिषिक्तमकरोदनियङ्कभीमम्। स श्रीमानियङ्कभीमनृपतिः साम्राज्यलक्ष्मीपतिः EI. vi. 201.11.

**अनियत** (a-niyata) *adj.* [*f.*-ā] **1Ai** not fixed, not specified, indefinite, uncertain, unsettled, non-constant, varying, doubtful **ii** (whose material cause is) not fixed **Bi** not restricted, not regulated, not governed by a rule **ii** not regulated (i.e. open to unfixed alternatives which cannot be employed simultaneously) **2** not obligatory, not compulsory, not binding, optional **3** not subject to any limitation or restriction (limitation or restriction by the particle *eva* concerns an item other than an item after which *eva* has been used) **4A** not controlled, not subdued, unrestrained, unchecked **B** not intent on **5A** irregular, unusual, accidental, occasional **B** not fixed (in length), not uniform **6** not necessarily predetermined or pre-destined, unpredictable **7Ai** undetermined (i.e. who will learn the doctrine if one hears it preached, not otherwise) **ii** (whose fruition is) undetermined **iii** (*citta* or *asaṁjñika* i.e. mental factors) undetermined **iv** (offence or fault) undetermined **B** undetermined (i.e. mentally constructed or conceptual) **8A** not invariable, not invariably connected, not invariably found **B** not necessary, not required absolutely **9** irrelevant, incoherent **10** unlimited

**1Ai** not fixed, not specified, indefinite, uncertain, unsettled, non-constant, varying, doubtful पित्तप्रस्थं कफस्याढकम् ··· मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषमाहारपरिमाणात् GarbhU. 5; निश्रितोऽनियतोऽव्यापी ···। बालाश्रयो मतस्तर्कः MaYānaSū. 5.10 (1.12); 11.23 (3.6); कायस्य त्वनियतो विषयः AbhidhKoBh. 16.3 (*on* 1.23); बिम्बप्रतिसराणां च व्यासश्चानियतः स्मृतः PāraS. 12.134; यत्र यजतिचोदना, अनियतं च कर्तृपरिमाणं तत्राहीन इति निश्चीयते ŚābaBh. 2013.8 (*on* x. 6.61); येषामनियतं कर्म तस्मिन् काले सुदारुणे। कर्म पञ्चविधं तेषां योज्यम् AṣṭāSaṁ. i. 61.19 (1.9); i. 62.8 (1.9); i. 66.11 (1.10); TantrVā. 224.8 (*on* i. 3.22); अनियतानि हि मरणस्य निमित्तानि असंख्यातानि च BṛĀraUBh. 597.10 (*on* iv. 3.36); यत्राप्यनियतो हेतुर्वृश्चिके गोमयादिकः। अभियुक्तास्तदत्रापि विशेषं न न मन्वते NyāyMañ. ii. 41.28; ii. 126.11; गुणप्रधानभावः ···। कर्मस्वनियतो दृष्टो नान्यथा चोपपद्यते BṛĀraUBhVā. i. 4.1484; 'सस्यान्त'ग्रहणेन च सस्योत्पत्तिरेवाभिप्रेता, नियतत्वात् तस्या निमित्तस्योपपत्तिः। क्षयस्त्वनियतः ManuBh. i. 340.10 (*on* 4.26); रजनीति नैव शयितव्यमिह च्छलयोधिनामनियतः समयः RāmC. 26.94; अनियतान् प्रेक्षणकान् रागाद् वस्त्रादिदानलक्षणं प्रथमे वाहि रङ्गमध्ये नागरकेभ्यो लभेरन् JayaMa. 52.11 (*on* 1.4); नियतेऽनियते वा देशे स्पृष्ट्वा दृष्टिमावर्तयेत् JayaMa. 160.18 (*on* 2.8); दृष्टं च खलु नैयोगिकं फलमैहिकमपि, यथा चित्राकारीर्यादिनियोगानामनियतनियतफलानाम् Bhām. 86.6 (*on* i. 1.4); 116.5 (*on* i. 1.4); यदनियतं न तत् परमार्थसत् — यथा रज्ज्वामारोपितं सर्पत्वम् TātpaṬ.(Vā.) 364.17 (*on* ii. 1.16); पुनश्चानियतं युद्धम् ···। अभवत् तुमुलम् GaṇeP. ii. 64.18; किं नियतेनैवाङ्गाङ्गिभावेन प्रयोग उतानियतेन AbhinBhā. i. 7.24 (*on* 1.5); परिमाणं द्विधा — नियतम् अनियतं च ŚṛṅgāPra. 7.3; न च वाच्यं भ्रान्तेरभ्रान्तिप्रतियोगित्वादनियतस्य वस्तुनः क्वचिदपि प्रमाणागोचरत्वात् ··· सर्वमिदमसमञ्जसमिति NyāyVārPari. 570.4; 205.4; तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम् (यमकम्) KāvyPra. 504.3. Kāvyānu.(He.) 256.1; उभयोः स्थानयोरेकरूपस्यैवोप(? पा)स्यत्वाद् विध्यैक्यमित्यनियते नामनी इति पूर्वः पक्षः VedāntDī. 176.21 (*on* iii. 3.20); वंशसमाचारोऽप्यनियतश्चेत् तदा 'आत्मनस्तुष्टिरेव च' इति यथारुचि कुर्यात् Mitā. 89.29 (*on* 1.253-254); प्रदत्तः। मत्वा यथादीयमानभागभोगकरप्रवणिकरतुरुष्कदंडकुमरगदिआणकप्रभृतिसमस्ता[न्*]नियतानियतादायानाज्ञा(म्) विधेयीभूय दास्यथ EI. ix. 305.15; xix. 294.17; iv. 114.23; vii. 100.27; x. 99.26; स पृच्छकः पिशाचो वा वक्ता वा नितरां ततः। यो न वेत्ति चतुर्बाहुक्षेत्रस्यानियतां स्थितिम् Līlā. 172; अध्वयोगस्तु पुरुषेच्छानुविधायित्वेन अनियतः ChandaśCū. viii. 17.5; सर्वदिक्ष्वपि संबन्धादविभागः पराणुता। तत्संयोगादनियतात् पदार्थानां जनिर्भवेत् AnuVyā. 25B.1 (*on* ii. 2.6) (NyāySu.(Ja.) उक्तनियमरहितात्); किमवस्थाभेदः कार्यकारणयोरनुगत एव, उतानियतः NyāyKu. 144.14; अस्माकं सर्वथाराध्यो युद्धेष्वनियतो जयः PrabhāC. 199.32; न च भोजनगमनादिवदनियतं यत् किंचित् पूर्ववृत्तमपेक्ष्यायमथशब्दप्रयोगः BrahmSūBh.(Śrī.) i. 23.3 (*on* i. 1.1); कृष्णलव्यवहाराणां गुञ्जानां गुरुत्वमनियतमतो यथोक्तमेव कृष्णलं ग्राह्यम्

DaṇḍaVi. 24.1; अनियतो बाध्यबाधकभावः परेणाप्यङ्गीक्रियते UpaParā. 11.11; 21.11; नियतसामग्रीभूतं किंचिदत्र पूर्ववृत्तं सूत्रकृता विवक्षितम् ··· न तु भोजनाद्यनियतं किंचित् ŚivārkaMaDī. i. 23.22 (*on* i. 1.1); ii. 215.14 (*on* iii. 1.23); अतिथिकुमारादीनां तु भोजने पौर्वापर्यमनियतम् VīraMi. (Āhnika.) 455.23; अनियता ग्रहाग्रता, अनियता च या काचित् प्रतिपत् BhāṭṭDī. iv. 26.18 (*on* x. 5.16); सुखदुःखादिकं पुनः प्रवाहधर्मतया शरीरिणामनियतम् Vidvanmo. 2.32(6); माया शक्तिरित्यादिरनियता संज्ञा SetuBa. 57.28; 315.11; 'एतत् पदममुकवाचकम्' इति शक्तिग्रहस्तु स्वस्वप्रसिद्धिमादाय तत्तत्पुरुषस्यानियतः LaŚabdeŚe. i. 234.4; **1Aii** (whose material cause is) not fixed दर्शाद्यनुष्ठानोपपत्तावपि दैवात् तेषां (पात्राणां) नाशे दर्शाद्यर्थमनियतानामुत्पत्तिः MīmāKau. ii. 210.9 (*on* iii. 1.22); BhāṭṭDī. i. 204.17 (*on* iii. 1.12); **1Bi** not restricted, not regulated, not governed by a rule स्नात्वा व्रजति भुक्त्वा व्रजति पीत्वा व्रजतीति। एवं च कृत्वा प्रयोगोऽनियतो भवति। स्नात्वा भुक्त्वा पीत्वा व्रजति MahāBh. ii. 173.9 (*on* iii. 4.21); पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः।··· स्थानान्यस्य पुनस्त्रीणि ···। वक्षःस्थश्चैव मित्राणां स्त्रीणामनियतो भवेत् NāṭyaŚā. 9.130; प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथार्थो दृश्यते तथा विभज्य वचनीयः NyāyBh. 80.15 (*on* ii. 1.11); किमनियतेन क्रमेणाप्ययः, उत उत्पत्तिक्रमेण BrahmSūBh.(Śaṅ.) 442.14 (*on* ii. 3.14); अनियते हि द्वयोरपि प्रयोगेऽयमर्थः स्यात् — सपक्षे योऽस्ति विपक्षे च यो नास्ति स हेतुरिति NyāyBiṬ. 95.5; ये तु रागिणो बहुतरद्रव्यकामाः पूर्वोक्तप्रतिग्रहादिभिरनियतं द्रव्यमार्जयितुं प्रवृत्ताः, तान् प्रत्याह BālaKrī. i. 105.7 (*on* 1.128); ननु सर्गक्रमः किमनियतः TattvVai. 87.20 (*on* 2.19); यद्यदनियतकारणकं कार्यं तत् सर्वमनियतमेव TātpaṬ.(Vā.) 29.17 (*on* i. 1.1); कर्णौ नासिकया तुल्यौ पादौ चानियतौ तयोः BhaviP. 196A.20 (i. 132.8); 187A.27 (i. 125.54); पूर्वपक्षवाद्युत्तरकर्मप्रयुक्तमनियतं विचारमिच्छति TantrRa. 242.1; तथात्वेनानियतायां तु तस्याम् (अर्थप्रतीत्याम्) ··· नार्थेन नियता प्रतीतिः स्यात् NyāyVārPari. 153.3; उत्कर्षापकर्षावगमः पूर्वापरपदार्थनियत एव स्यात्, नानियतः VyaktiVi. 132.13; करकरणचारीमण्डलादि यत् तत्राङ्गोपयोगि तत्स्वरूपेण लयादिव्यवस्थया चानियतमेव Kāvyānu.(He.) 393.10; त्रेधा हि ज्ञानिनो ह वाव भवन्ति विधिनियता अनियताः स्वेच्छानियता इति ··· अनियता हि देवाः BrahmSūBh.(Ma.) 144A.9 (*on* iii. 4.23) (TattvPrakā. अनुष्ठेयानां मध्ये कामचारानुज्ञावन्तः); अङ्गविशेषे निर्वापादौ संशयः किमनियतोऽस्य क्रम उत प्रधानक्रमेण नियत इति VedāntKa. 34.4 (*on* i. 1.1); (वैमृधः) स किं पौर्णमास्या नियतमङ्गम्, उत अनियतम् SaṅkarKāBh. 16.22 (*on* i. 2.13); 124.20 (*on* iii. 1.17); चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः। कुर्यादनियते तस्य संधावपि निवेशनम् SāhiDa. 322.1; द्वन्द्वे च सर्वपदानां प्राधान्यादुपसर्जनाभावादनियते प्राङ्निपाते प्राप्तेऽस्यारम्भः Prasā. i. 623.18; यद्येकः प्रयोगविधिः स्यात् तदा कश्चिदेको वैकल्पिको वानियतः क्रमः स्यात् TristhaSe. 1.26; अपरोक्षप्रमाणस्य तत्साक्षात्कारहेतुता। प्राप्तैव किं त्वनियता VedāntSiSūMañ. 1.6; ईहामृगोऽपि विज्ञेयः चतुरङ्कस्त्रिसन्धिकः। दिव्यावनियतावत्र नायकप्रतिनायकौ SāhiSā. 6.28; **1Bii** not regulated (i. e. open to unfixed alternatives which cannot be employed simultaneously) नियमार्था श्रुतिर्भविष्यति। कोऽयं नियमः। अनियतस्य नियतता ŚābaBh. 1240.11 (*on* iv. 2.24); **2** not obligatory, not compulsory, not binding, optional अश्वतरं साहस्रे सर्ववेदसे च ददाति। अविं ददात्यजां गाम् ··· गर्दभमित्यधिकान्यनियतानि ĀpaŚS. xiii. 5.4; कर्मणाभ्युदयोऽकर्मण्यप्रत्यवायोऽनियतानां तु HirŚS. iii. 1.3 (270.2); अन्नधनदाने त्वत्रानियते HirGS. ii. 15.12; स्त्रीपुंसयोस्तु संबन्धे वरणं प्राग् विधीयते।··· तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् NāraSm. 173.3; SmṛtiCan. i. 218.19; BālamBha. i. 204.11 (*on* 1.65); यस्त्वनियत आहुतिभागो न तमनुध्यायन्तीदं नो भविष्यतीति ŚābaBh. 629.4 (*on* ii. 4.4); 1327.1 (*on* v. 3.21); करणं नाम नियता क्रिया ··· चरणं नाम अनियतमिति विशेषः BṛĀraUBh. 614.2 (*on* iv. 4.5); ऊनद्विवार्षिकादितरपूर्णद्विवर्षो यो मृतोऽसौ श्मशानपर्यन्तं ज्ञातिभिः ··· अनुगन्तव्यः। अस्मादेव वचनादूनद्विवर्षस्यानुगमनमनियतमिति गम्यते Mitā. 323.2 (*on* 3.1); न चात्र फलश्रवणादनियतं भिक्षाचरणमिति वाच्यम् SmṛtiCan. i. 111.11; दर्शादिश्राद्धपाकात् पृथक्पाकेन नित्यश्राद्धं कर्तव्यम् ···। एतच्च श्राद्धान्तरे कृते सत्यनियतम् CaturCin. iii(2). 612.13; वैधमध्ययनं पक्षे प्राप्नोति। अनियते षोडशिग्रह इवानियतेऽध्ययने विध्यभावाल्लोकत एवास्य प्राप्तेः ŚivārkaMaDī. i. 65.26 (*on* i. 1.1); ii. 424.21 (*on* iv. 1.1); यद् वरणं तदनियतमनियामकम् BālamBha. ii. 166.29 (*on* 2.127); **3** not subject to any limitation or restriction (limitation or restriction by the particle *eva* concerns an item other than an item after which *eva* has been used) पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोः सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति। एवमप्ययं जुसि गुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति MahāBh. i. 46.6 (*on* i. 1.3); प्रत्ययनियमे शेषग्रहणं कर्तव्यं परस्मैपदनियमार्थम्।··· प्रत्यया नियताः प्रकृत्यर्थावनियतौ तत्र परस्मैपदमपि प्राप्नोति। तत्र शेषग्रहणं कर्तव्यं परस्मैपदनियमार्थम्। शेषादेव परस्मैपदं भवति नान्यत् इति MahāBh. i. 275.22 (*on* i. 3.12); i. 276.18 (*on* i. 3.12); अथैतस्मिन्नियमार्थे विज्ञायमाने किमयमुपपदनियमः।··· आहोस्वित् पुरुषनियमः। युष्मद्येव मध्यमः। अस्मद्येवोत्तम इति।··· मध्यमोत्तमौ नियतौ युष्मदस्मदी अनियते MahāBh. i. 351.19 (*on* i. 4.105, 107, 108); i. 463.19 (*on* ii. 3.50); धर्म एव पक्षस्येति पक्षो नियतो धर्मोऽनियतः NyāyVār. 130.7 (*on* i. 1.35); 58.20 (*on* i. 1.5); आत्मनेपदं नियतं परस्मैपदमनियतं तत् सर्वतोऽपि स्यात् Prasā. ii. 9.6; **4A** not controlled, not subdued, unrestrained, unchecked मक्षिकान् मशकान् दंशान् व्याघ्रान् सिंहान् सरीसृपान्। प्राप्नोत्यनियतः MahāBhā. iii. 142.27; अनियतासु वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां समर्थं स्यात् तस्य तस्यार्थस्य प्रत्यक्षीकरणाय YogBh. 41.2 (*on* 1.35); अभितैकपटनिवीतानियतस्त्रीपुंसविहितबहुचेष्टम्। नीलाम्बरव्रतमिदं किल कल्पितमासीद् विटैः कैश्चित् NyāyMañ. i. 248.14; स्वात्मनानियतं वस्तु प्रतीपं ह्यात्मनो भवेत् AnuVyā. 11B.6 (*on* i. 2.5); NyāySu.(Ja.) 166B.6 (*on* i. 2.5); अनवस्थिताः अनियताः अनियतवर्गगा नारीः ManvaVi. 1414.7 (*on* 11.138); यत्रैतत् प्रकाश्यं फलं कर्मजन्यत्वेन क्लृप्तं तत्र तत् शक्त्यैव नियतमनियतं वा प्रकाश्यते BhāṭṭDī. ii. 67.22 (*on* iii. 8.6); **4B** not intent on शास्त्रेष्वनियतानां च मूढानामपमृत्यवः JātaPā. 5.39; **5A** irregular, unusual, accidental, occasional मुद्गलं संशितव्रतम्। दुर्वासाः ··· तमथाभ्याजगाम ह। बिभ्रच्चानियतं वेषमुन्मत्त इव MahāBhā. iii. 246.12; पार्श्वशूलं त्वनियतं संकोचायामलक्षणम् CaraS. vi. 8.56 (1941 Ed.); यस्य ह्यनियता प्राप्तिस्तच्छास्त्रेण नियम्यते TantrVā. 193.9 (*on* i. 3.18); 224.5 (*on* i. 3.22); रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः SāhiDa. 163.9; **5B** not fixed (in length), not uniform चतुर्भुजस्यानियतौ हि कर्णौ कथं ततोऽस्मिन्नियतं फलं स्यात् Līlā. 169; **6** not necessarily predetermined or predestined, unpredictable जानास्यनियतामेवं भूतानामागतिं गतिम् Rāmā. iv. 21.5; प्रजाः गुर्वादिभिरभिशप्ता भस्मतामुपयान्ति प्रागेवानेकपुरुषकुलविनाशाय, नियतप्रत्ययोपलम्भादनियताश्चापरे CaraS. iii. 3.23 (1941 Ed.); उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत् तम् CaraS. vi. 9.17 (1941 Ed.); RugVi. 20.17; नियतानियतान् कांश्चिदर्थाननियतानपि। करोति चित्तम् YogVā. v. 24.31; तच्च रिष्टं द्विविधं नियतमनियतं च AdbhuSāg. 516.6; 516.18; **7Ai** undetermined (i.e. who will learn the doctrine if one hears it preached, not otherwise) यस्याप्यनियतो राशिः त्वां प्राप्य ···। पूरयिष्यति MaVastuAva. i. 175.15; तथागतः ··· पश्यति स्म ··· त्रीन् सत्त्वराशीनेकं मिथ्यत्वनियतमेकं सम्यक्त्वनियतमेकमनियतम् LaliVi. 25.33(3); यत् खलु पुनरयमनियतो राशिः, तस्मै स चेद् धर्मं देशयिष्यामि आज्ञास्यति। उत न देशयिष्यामि नाज्ञास्यते LaliVi. 25.33(10); **7Aii** (whose fruition is) undetermined नियतानियतं तच्च ··· कर्म AbhidhK. 4.50; AbhidhKoBh. 229.18 (*on* 4.50); कर्माष्टविधम्। दृष्टधर्मवेदनीयं नियतमनियतं च विपाकं प्रति Sphuṭā. iv. 59.24 (*on* 4.50); **7Aiii** (*citta* or *asaṁjñika* i.e. mental factors) undetermined (असंज्ञिसमापत्तिः) न दृष्टधर्मपर्यायवेदनीया नापि अनियता AbhidhKoBh. 69.12 (*on* 2.42); **7Aiv** (offence or fault) undetermined इमौ खलु आयुष्मन्तौ द्वौ अनियतौ धर्मौ PrātiSū. 14.2; MahāVyu. 259.1; **7B** undetermined (i. e. mentally constructed or conceptual) प्रत्यक्षं ज्ञानं प्रतिभासमानम् ··· नियतमर्थक्रियाक्षमे भावरूप एव व्यवस्थितं दर्शयति। तेन नानर्थं नाप्यनियतं दर्शयतीत्याकूतम्।··· अनुमानमपि नानर्थं नाप्यनियतं भावात्मन्यभावात्मनि वा दर्शयतीति प्रकाशितम् DharmoPra. 21.15; **8A** not invariable, not invariably connected, not invariably found समवायोऽपृथग्भावः ···। स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः CaraS. i. 1.49 (1922 Ed.); इन्द्रियाणि गन्धरसरूपस्पर्शशब्देषु तत्सामान्येषु नियतानि अन्यत्रानियतानि NyāyVār. 76.1 (*on* i. 1.14); धूमस्य कार्यस्य कारणसंबन्धो नियतः, अग्नेस्त्वनियतः PrakaPañ. 202.15; 208.13; न हि विपक्षसपक्षयोरदर्शनाद् वाविनाभावसिद्धिः। तेनानियतस्यापि तत्र वृत्तेः संभवात् Kāśi. iii. 6.16 (*on* 5(4).3); ii. 107.1 (*on* 5(3).32); अनैकान्तिकमिति। अनियतं, व्याप्तिशून्यमित्यर्थः ŚrutaPra. iA. 142.22 (*on* i. 1.1); ii. 557.22 (*on* iii. 4.36); भावानामेव हेतुत्वम् ···। नो चेत् क्वानियतो हेतुः NyāyKu. 164.19; यद्यपि मातृपदेनैवेश्वरोऽपि लभ्यते। तथापि तस्य नियतं प्रमातृत्वम् अन्येषां तु विपर्ययादिसंभवात् अनियतम् NyāySu.(Ja.) 485A.4 (*on* iii. 2.1); **8B** not necessary, not required absolutely कल्पपादपाः। ··· एते च नियतानर्थान् यच्छन्त्यनियतानपि TriṣaŚaPuC. i. 1.236; अनियता च ज्ञानोत्पत्तिः VedāntKa. 32.9 (*on* i. 1.1); वनवासादूर्ध्वं शान्तस्य ··· व्यपगतभय° ··· °मत्सरकलत्रस्य ··· श्रद्धाद्यनियतं भवति CaturCin. iii(2). 809.6; अनियतस्य चाङ्गत्वायोगात् NyāyPari. 171.7; किं तदन्वयज्ञानं प्रवृत्तौ नियतम् उतानियतम् NyāySu.(Ja.) 51A.12 (*on* i. 1.1); केचिन्निरन्वयोपासकानामिह

शरीरपात एव मुक्तिरित्यर्चिरादिगतिमनियतामाहुः BrahmSūBh.(Śrī.) ii. 459. 5 (*on* iv. 2.13); ननु देवदत्तादिपदेष्वपि कदाचित् संकेतादर्थप्रतीतिर्दृश्यत इति चेत्, न। अनियतो हि तत्र संकेतः TantrRaha. 25. 21; यावच्छम्भुमहीपतिर्महितधीर्दुर्मन्त्रिदुश्चेष्टितादात्मानं परिपालयेदनियताद् दुर्योगभोगोद्भवात् ParamāKā. 10. 73; **9** irrelevant, incoherent परिसरणमजस्रम् ··· सततमनियतानां च गिरामुत्सर्गः ··· इति वातोन्मादलिङ्गानि भवन्ति CaraS. ii. 7. 7 (1941 Ed.); **10** unlimited किं नु भयानकोऽयं वल्मीकः, कच्छोऽयं सच्छायः, सरित् पुनरनियता AvantiKa. 70. 11; ग्रासाम्बुनोरन्नपानयोरनियतयोर्वृष्टिरासेचनं निदानमात्मनः ŚvetāUBh. 215. 10 (*on* 5. 11); किमन्नमनियतमेव भोक्तव्यम्। नेत्युच्यते BālaKrī. i. 158. 6 (*on* 1. 236); *m.* not a grave accent (i.e. acute accent) उदात्तपूर्वे नियतस्वरोदये परो विलोपोऽनियतो यदावरः ṚPrāti. 11. 26 (Uvaṭa अनियत उदात्तः)

**अनियतकथनीय** (a-niyatakathanīya) *adj.* not to be described specifically अतिचिरकालप्रार्थितम् अनियतकथनीयमात्मसंवेद्यं सुरतसुखमन्वभूतम् VasaTi. 31. 1.

**अनियतकर्तव्य** (a-niyatakartavya) *adj.* not to be carried out necessarily उपद्रष्टृवचनादिनाप्यनुष्ठानसंभवे चानियतकर्तव्यो विचारः प्रसज्येत SiddhāSi. i. 50. 8.

**अनियतकर्तव्यता** (aniyatakartavya-tā) *f.* the state of being that which is not to be performed necessarily नैमित्तिकेऽपि तत्काले कस्यचित्कामनाविरहिणोऽनियतकर्तव्यतापत्तेः TattvCin. iv(2). 245.6.

**अनियतकर्तृका** (aniyatakartṛ-kā) *adj.* (*f.*) not having a definite agent किं च – प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः अनियतकर्तृका तु प्रयुक्तिर्णिजर्थः PadMañ. *on* KāśiVṛ. *on* P. iii. 1. 26.

**अनियतकर्तृप्राप्ति** (aniyatakartṛ-prāpti) *f.* undesired possibility of indefinite (number of) agents अनियतकर्तृप्राप्तौ समाख्यया लाघवेनापेक्षितनियममात्रकरणात् BhāṭṭDī. ii. 66.7 (*on* iii. 8. 4)

**अनियतकविकन्था** (aniyata-kavikanthā) *f.* poetic composition having no fixed subject-matter सत्यपि च पुराणादावुपदेशदायिनि कर्मफलसंबन्धप्रदर्शके तत्रोच्चावचमनियतकविकन्थाप्रायमिह तु किंचित् प्रयोज्यम् AbhinBhā. ii. 407.14 (*on* 18. 2)

**अनियतकारणक** (aniyatakāraṇa-ka) *adj.* having no specific cause यद्यदनियतकारणकं कार्यं तत्सर्वमनियतमेव यथानियतकालमेघोदयनिबन्धनं वर्षम् TātpaṬ.(Vā.) 29.17 (*on* i. 1. 1); ननु बन्धस्यापि क्षणिकत्वादनियतकारणकोऽभावकारणको वा बन्धोऽस्त्वित्याशयेनापरो नास्तिकः प्रत्यवतिष्ठते SāṁkhyaPraBh. 18. 31 (*on* 1. 34)

**अनियतकारणता** (aniyatakāraṇa-tā) *f.* the state of being that which has no specific cause किमयमेव व्यवहारो भेदाग्रहादन्यस्त्वभेदग्रहात्। उत सर्वोऽपि भेदग्रहादिति। नाद्यः। अनियतकारणतापातात् NyāySu.(Ja.) 50A. 7 (*on* i. 1.1)

**अनियतकारणत्व** (aniyatakāraṇa-tva) *n.* the state of being that which has no specific cause पञ्चसु पक्षेषु कोऽभ्युपगम्यते, इति सौहार्देन पृच्छाम इति चेत्, अस्त्वेषामन्यतमः। तर्हि पुनश्शक्त्युत्पादानियतकारणत्वप्रसङ्गपरिहारः NyāySiA. 255.3.

**अनियतकार्यकल्पन** (aniyatakārya-kalpana) *n.* assumption of the indefinite rite (to be accomplished) प्रयाजानाम् ··· द्रव्याकाङ्क्षाया जौहवस्य कार्याकाङ्क्षायाश्च शान्त्या लिङ्गात्प्रयाजानामनियतद्रव्यकल्पनस्येव जौहवाज्यस्यानियतकार्यकल्पनस्याप्यप्रवृत्तेस्तेन च कार्यनियमेन परिसंख्यापि लभ्यते VidhiRa. 9 (52. 2)

**अनियतकाल** (aniyata-kāla) *m.* time which is not specified or prescribed, any time तेषामनियतकालप्रवेशस्थाननिर्गमनानि स्थापयेत् ArthŚā. ii. 354. 5 (7.17); (अनुयाजाः) तेषामनियतकाले प्राप्ते विशेषमात्रं विधीयते आग्निमारुतादूर्ध्वमिति ṬupṬ. 324.11 (*on* xii. 2. 32); रहस्याधिकारे वसिष्ठः ··· अनियतकालेऽपि दानं तेनैवोक्तम् Mitā. 512. 15 (*on* 3. 309); अनियतकालभाविनौकागमनसमये वैहारिका विहारद्यूतविच्छेदेनापि नदीं तरन्ति PāñcRāRa. 58. 17; अग्निहोत्रादिप्रयोगपूर्वभावितया अनियतकाले प्रसक्तयोराधानोपनयनयोः वसन्तादिकालकत्वे निमित्ते ब्राह्मणादिकर्तृकत्वं विधीयते MīmāKau. ii. 28. 3 (*on* ii. 3. 4)

**अनियतकाल** (aniyata-kāla) *adj.* [*f.* -ā] of which the time is not fixed, of which the time is not regulated or restricted अनियतकालं मरणम् ŚābaBh. 2182.18 (*on* xi. 3.36); नैयमिकहोमव्यतिरिक्तमनियतकालम् ··· होमान्तरम् ··· क्रियते TantrVā. 541. 8 (*on* ii. 2. 25); अनियतकाले प्रहरणे प्राप्ते सह प्रहरतीति विधीयते ṬupṬ. 24. 1 (*on* iv. 2. 11); अनियतकालं तु केशवपनं शूद्रस्यार्थप्राप्तं न निवार्यते ManuBh. i. 93.17 (*on* 2. 35); i. 111. 19 (*on* 2. 69); यथान्यानि वैदिकान्यनियतकालानि फलानि एवमेतत् ManuBh. i. 357. 4 (*on* 4. 71); कालविशेषानुपादानादनियतकालं शूद्रोपनयनमस्तु ManuBh. ii. 329. 29 (*on* 10. 4); अनियतकालाः प्रवृत्तयो विप्लवन्ते KāvyMī. 52. 12; तदप्यविज्ञातकालमनियतकालं प्रवेशनं निष्क्रमणं चोपपन्नम् JayaMa. 282.17 (*on* 5. 4); यद्यदनियतकारणकं कार्यं तत्सर्वमनियतमेव यथानियतकालमेघोदयनिबन्धनं वर्षम् TātpaṬ.(Vā.) 29.18 (*on* i. 1.1); शाखां प्रहरतीत्येतावता ह्यनियतकालं प्रहरणं प्राप्नोतीति प्रस्तरकाले प्रहर्तुं सह प्रहरतीति विधीयते TantrRa. 131.16; MayūMāli. 491. 11 (*on* vi. 4.14); प्रत्यक्षानुमानाभ्यां न कर्मणः फलसाधनत्वमवगम्यत इति न तु तावता फलस्यैहिकत्वं हीयते शब्देनैवानियतकालस्यावगतस्य फलस्य चिरवृत्ते कर्मणीहापि संभवात् TantrRa. 190. 6; एतेन दृष्टादृष्टस्वरूपेण कारणकलापेन गर्भस्याङ्गहीनत्वादिविकारो जन्मन आरभ्यानियतकालो दृष्टः Mitā. 391. 18 (*on* 3. 163); इष्टकाकर्म किं नियतकालमाहोस्वित् अनियतकालमिति संदिह्यते SaṅkarKāBh. 69. 6 (*on* ii. 1. 28); प्रयागमुण्डनं नित्यकाम्यम् — एकस्यां यात्रायामेकमेवानियतकालं चेति तत्तु भ्रान्तभाषितम् TristhaSe. 20. 8; (ब्रह्मयज्ञः) सोऽनिर्दिष्टकालोऽपि अनियतकालोऽपि नृयज्ञात् पूर्वमेवेति नियम्यते BālamBha. i. 104.15 (*on* 1.24)

**अनियतकालकत्व** (aniyatakālaka-tva) *n.* the state of not having any specific time तेन ब्राह्मणादेः कालान्तरनिवृत्तिः, ब्राह्मणाद्यतिरिक्तस्य च शूद्रादेरनियतकालकत्वं सिद्धं भवति MīmāKau. ii. 27.16 (*on* ii. 3. 4)

**अनियतकालकर्तव्यत्व** (aniyatakālakartavya-tva) *n.* the state of being what can be performed at any time अग्नीनामन्ते प्रतिपत्तिविधानेन तत्साधनस्याधानस्य पात्रवत् साधारणत्वापत्त्या प्रयोगात् बहिरेवानियतकालकर्तव्यत्वप्राप्तेः MīmāKau. ii. 28. 1 (*on* ii. 3. 4)

**अनियतकालत्व** (aniyatakāla-tva) *n.* the state of being that which has no fixed time यो नाम स्मृतिप्रतिपादितोऽर्थः कर्मफलसंबन्धवदनियतकालत्वान्न ज्ञायते कदा भविष्यतीति सोऽत्यन्तं प्रत्यक्षाद्यविषयत्वात्केवलशास्त्रमूलत्वेन स्थाप्यते TantrVā. 229.25 (*on* i. 3. 25); अपाक्षिकफलत्वाच्च विद्यायाः अनियतकालत्वाच्च मृत्योः दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम् BrahmSūBh.(Śaṅ.) 816. 19 (*on* iv. 2.20); (प्रायश्चित्तम्) अनियतकालत्वात् संवत्सरं द्वौ त्रीन् वा यथार्हं कल्पनीयम् BālaKrī. ii. 123. 27 (*on* 3. 252(?258)); अनियतकालत्वाद्वैदिकानां शुभाशुभफलानां कर्मणामेवमुच्यते ManuBh. i. 387. 3 (*on* 4.172); फलोपभोगस्यानियतकालत्वेऽपि न दोषः ŚrutaPra. ii. 58.26 (*on* i. 3. 25); तदनन्तरमेवानुष्ठेयत्वे जन्मनश्चानियतकालत्वे नियतकालत्वमेवावसीयते CaturCin. iii(1). 325. 8; काम्यं प्रयागमुण्डनमनियतकालत्वात्प्राप्तिदिनाद्दिनान्तरे प्रयागमण्डलाभ्यन्तरे क्वचिच्छुचिस्थले यूपसमीपे वानुष्ठेयम् TristhaSe. 19. 7; परमेश्वरस्य सर्वत्र करुणासाम्येऽपि विचित्रस्वभावानां तदावरणमलशक्तीनां व्रणानामिव पाकस्यानियतकालत्वात् सर्वेषां मुक्तेरयौगपद्यं चोपपद्यते ŚivārkaMaDī. ii. 50.23 (*on* ii. 1. 35); केवललीलया संकल्पस्यानियतकालत्वेन ŚivārkaMaDī. ii. 58.21 (*on* ii. 2. 3); तौ खल्वग्निहोत्रं जुहुयात्स्वर्गकाम इति विहितकाम्याग्निहोत्रप्रयोगस्यानियतकालत्वप्राप्तौ सायंप्रातःकालविशेषनियमार्थौ VidhiRa. 9 (45. 19); मरणस्यानियतकालत्वेन प्रयोगसमाप्तेः कदाप्यसंभवात् MīmāKau. ii. 104. 11 (*on* ii. 4. 2); युक्तं तद्विकाराणामनियतकालत्वम् BhāṭṭDī. ii. 216. 11 (*on* v. 4. 8); मरणस्यानियतकालत्वात् पात्राणां धारणं भवेत् BhāṭṭDī. iv. 189. 18 (*on* xi. 3.13); iv. 188. 16 (*on* xi. 3.13); 'ततः संवत्सरेऽपूर्णे चूडाकर्म विधीयते। द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनात्'। इति यमोक्तेश्च तस्यानियतकालत्वात् NirṇaSi. 364. 24; MayūMāli. 153. 22 (*on* ii. 2. 11); तस्यानियतकालत्वेन कालविशेषस्योपलक्षयितुमशक्यत्वात् BālamBha. iii. 73.27 (*on* 3.23)

**अनियतकालपरिमाणा** (aniyata-kālaparimāṇā) *adj.* (*f.*) having uncertain duration of time यदि अनियतकालारम्भत्वेन ··· अनियतकालपरिमाणाः ··· सर्वा अपि ब्रह्मविद्या अविशिष्टमुक्तिफलाः PūrvottaVāNaMā. 247.3.

**अनियतकालप्रदेय** (aniyatakāla-pradeya) *adj.* to be given at any time कात्यायनाश्वलायनयोस्त्वेतस्मिन् काल इति वचनमनियतकालप्रदेयगवादिसाम्यनिवृत्त्या कालनियमार्थम् CaturCin. iii(1). 1037. 19.

**अनियतकालप्रमाणायुस्** (aniyatakālapramāṇāyus) *adj.* having life the time-duration of which is uncertain एवं सत्यनियतकालप्रमाणायुषां भगवन्। कथं कालमृत्युरकालमृत्युर्वा भवतीति CaraS. iii. 3.37 (1941 Ed.)

**अनियतकालफल** (aniyatakāla-phala) *adj.* [*f.* -ā] yielding the result at an uncertain time अनियतकालफला हि नैयोगिक्यः प्रवृत्तयोऽदृष्टार्थाः, दृष्टार्थास्तु रागाद्याक्षिप्ताः स्वाभाविक्यः BrahmSi. 29. 15; फलकालागमे सत्यपि फलोदयासंभवात् अनियतकालफलानामेव प्रतिबन्धककर्मान्तरसंवलनमिति नियन्तुमशक्यत्वात् ŚivārkaMaDī. ii. 69. 15 (*on* ii. 2.11)

**अनियतकालमेघोदय** (aniyatakāla-meghodaya) *m.* rise of clouds occurring at an unusual time अनियतकालमेघोदयनिबन्धनं वर्षम् TātpaṬ. (Vā.) 29.18 (*on* i. 1. 1)

**अनियतकालवस्तु** (aniyatakāla-vastu) *n.* entity having no restriction of time (i.e. eternal entity) आगमवाक्यं पुनरनियतकालवस्तुपरिच्छेदकत्वादात्यन्तिकाबाध्यत्वलक्षणमपि सत्यत्वं स्वविषयस्याध्यवस्येत् PramāMā. 12.17; अद्वैतागमस्य त्वबाध्यार्थविषयस्यानियतकालवस्तुपरिच्छेदकत्वादत्यन्ताबाध्यार्थपरिच्छेदकत्वमविरुद्धम् PrakaVi. 429.25.

**अनियतकालविपाक** (aniyatakāla-vipāka) *adj.* having fruition not at a definite time अनादिकालप्रवृत्ता हि कर्माशया अनियतकालविपाकाः क्रमवता तावद्भोगेन क्षेतुमशक्याः Bhām. 719.21 (*on* iv. 1.13); न ··· अनियतकालविपाकस्य च कर्माशयस्याशेषतो भोगक्षयसंभवः NyāyMa. 306. 9; अनादिभवसंचितानामनन्तानामनियतकालविपाकानां विविधशरीरभोग्यानां कर्मणाम् ··· भोगे ··· कर्मतत्फलप्रवाहयोः कदाप्युपरत्यभावेनानिर्मोक्षापत्त्या मोक्षफलेनापेक्षितत्वाच्च Śivārka-MaDī. ii. 440. 20 (*on* iv. 1.13)

**अनियतकालविपाकता** (aniyatakālavipāka-tā) *f.* the state of being that which has no fruition at a definite time न चानियतकालविपाकतया कर्मणां युगपदुपभोगविरोधः TattvPradī.(Ci.) 360.2.

**अनियतकालविशेष** (aniyata-kālaviśeṣa) *adj.* whose particular period of time is not specified अनियतकालविशेषाणां कर्मणां प्रबलकर्मान्तराप्रतिबन्ध एव विपाकः VedāntSā.(Rā.) 171. 5 (*on* ii. 2.11); BrahmSūBh. (Śrī.) ii. 69. 3 (*on* ii. 2.11)

**अनियतकालसंसर्गाभाव** (aniyatakāla-saṁsargābhāva) *m.* relational absence which has no fixed time (i. e. eternal relational absence) संसर्गाभावः प्राक्ध्वंसात्यन्तभेदेन त्रिधा भिद्यते।··· संबन्धिमात्रे संबन्धिमात्रस्यानियतकालसंसर्गाभावोऽत्यन्ताभावः Kiraṇā. 330.9.

**अनियतकालारम्भत्व** (aniyatakālārambha-tva) *n.* the state of not having the beginning at a fixed time अनियतकालारम्भत्वेन यावज्जीविकत्वेन च अनियतकालपरिमाणाः ··· सर्वा अपि ब्रह्मविद्या अविशिष्टमुक्तिफलाः PūrvottaVāNaMā. 247. 2.

**अनियतकालीनफला** (aniyatakālīna-phalā) *adj.* (*f.*) having result not occurring at a definite time अनियतकालीनफला वैधी क्रियेष्यते BṛĀraUBhVā.(Sambandha.) 414.

**अनियतकुशपाणि** (aniyatakuśa-pāṇi) *adj.* having loose *kuśa* blades in hand (कुशपवित्रपाणिः ··· जपं कुर्यात्) कुशपवित्रपाणिः। वामेऽनियतकुशपाणिर्दक्षिणे पवित्रपाणिरित्यर्थः VīraMi.(Āhnika.) 313. 15.

**अनियतकेशवेश** (aniyata-keśaveśa) *m.* not a fixed (i. e. varied) hair-dress शूद्रस्य। अनियता वृत्तिः। अनियतकेशवेशाः सर्वेषां मुक्तशिखावर्जम् VasiSm. 2. 26; *adj.* not having a fixed (i. e. having a varied) hair-dress शूद्रस्य। अनियता वृत्तिः। अनियतकेशवेशाः सर्वेषां मुक्तशिखावर्जम् (v. l. अनियतकेशवेशाः सर्वे चामुक्तकेशः(शाः)) VasiSm. 2. 26.

**अनियतकोट्युपनिपात** (aniyatakoṭy-upanipāta) *m.* occurrence of uncertain alternatives अनियतकोट्युपनिपाते नियतकोटिपरिग्रहस्य यद्यर्थत्वात् Kiraṇā. 260. 12.

**अनियतक्रम** (aniyata-krama) *adj.* [*f.*-ā] **A** consisting of irregular foot-steps उन्मत्तस्यापि कर्तव्या गतिस्त्वनियतक्रमा NāṭyaŚā. 12.123; **B** having an uncertain sequential order तत्रागमे क्रियमाणे किमनियतक्रमाः सर्वा ऋच आगमयितव्या उत काण्डक्रमेण ŚābaBh. 1295. 15 (*on* v. 1. 13); येषां तावत् कृत्स्नशब्दोऽङ्गपरिग्रहार्थस्तेषामनियतक्रमेऽध्ययने प्राप्ते क्रमो नियम्यते ManuBh. i. 163. 3 (*on* 2.168); न ··· अनियतक्रमाणामपि साहित्यमर्थबुद्ध्युपजनने वर्णानामिति सांप्रतम् TattvVai. 141. 15 (*on* 3.17); TantrRa. 254.11; *m.* unrestricted sequential order संवत्सरादित्ययोर्मध्यप्राप्तौ वायुदेवलोकौ किमनियतक्रमेण निवेशयितव्यौ ŚrutaPra. ii. 614. 31 (*on* iv. 3. 2); PāṇiTa-VāNaMā. 105. 7; अनियतक्रमस्वीकारेणैव एकेन कर्त्रानेककर्मानुष्ठानस्य वाच्यत्वान्नात्र पाठक्रमो नियामकः MayūMāli. 436. 5 (*on* v. 3. 12); BhāṭṭCan. 99. 14 (*on* xvi. 1. 1)

**अनियतक्रमक** (aniyatakrama-ka) *adj.* devoid of a sequential order आदित इति वचनेनाचारादिभ्यः प्रागुपदेशः शौचस्य नेष्यते किं तर्ह्यनियतक्रमकाः परस्परमेते ManuBh. i. 111. 17 (*on* 2.69); भावद्वयमपि च न युगपद्भावि कार्यकारणरूपं घटपटवत् क्रमभाव्यपि नानियतक्रमकं नीलपीतादिज्ञानवत् Pratya-bhiVi. ii. 188.2 (*on* ii. 4. 14)

**अनियतक्रमत्व** (aniyatakrama-tva) *n.* **i** the state of not having a fixed word-order येषां च वाक्यमेव समासीभवतीति दर्शनं तेषां वाक्यस्यानियतक्रमत्वात् तद्विकारोऽपि समासोऽनियतक्रमः स्यात् Nyās. i. 396.3 (*on* ii. 2.30); Prasā. i. 471.25; **ii** the state of not having a fixed order अनियतक्रमत्वं सर्गक्रमतुल्यत्वं च पूर्वपक्षीकृत्य प्रलयस्य सर्गप्रतिलोमक्रमत्वं सिद्धान्तितम् ŚrutaPra. ii 351. 23 (*on* ii. 3.17)

**अनियतक्रमयौगपद्य** (a-niyatakramayaugapadya) *adj.* neither having a fixed order (i.e. having a variable order) nor having simultaneity (i. e. not being connected as a whole but individually, with an action or a thing) समुच्चयः ··· तुल्यबलानामनियतक्रमयौगपद्यानामेव (पदानाम्) Nyās. i. 395. 4 (*on* ii. 2. 29); अनेकेषां साधनानामनियतक्रमयौगपद्यानां तुल्यबलानाम् ··· क्रियया संबन्धो यः स समुच्चयः Prasā. i. 622. 10; अनेकेषामनियतक्रमयौगपद्यानां तुल्यबलानामेकक्रियां द्रव्यं गुणं वा प्रति आत्मरूपभेदेनानेकत्वं समुच्चय इति यावत् Prasā. i. 622.14.

**अनियतक्रिय** (aniyata-kriya) *adj.* **1** performance of which is not governed (by a rule) यानि तु म्लेच्छादिसमानानि नियतानियतक्रियाण्यर्थसुखसाधनकृषिसेवावाणिज्यादीनि ··· तेषु नैव कस्यचिद्धर्मत्वाशङ्कास्ति TantrVā. 132. 4 (*on* i. 3. 7); **2** whose action is not specified (इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः) कर्ता निर्दिष्ट इति। संबोधनविषयमनियतक्रियं कर्तृमात्रमित्यर्थः Pradī. ii. 45A.11 (*on* i. 2. 45)

**अनियतगतिप्रमाणवर्णाकृति** (aniyata-gatipramāṇavarṇākṛti) *adj.* whose movement, magnitude, colour and form are irregular ध्रुवकेतुरनियतगतिप्रमाणवर्णाकृतिर्भवति विष्वक् BṛSaṁ. 11. 41.

**अनियतगतिसर्ग** (aniyata-gatisarga) *adj.* whose movements and dispositions are uncertain रविरहनि रजन्यामिन्दुरेष प्रतापी तदापि न तिमिराणां संततेर्मूलनाशः। अनियतगतिसर्गे वैरिवर्गे प्रयुक्तं किमिव भवतु पुंसस्तुङ्गधाम्नोऽपि धाम YaśasCam. i. 607.3.

**अनियतगुण** (aniyata-guṇa) *m.* unspecified quality (शस्त्रीश्यामा देवदत्ता इत्यत्र) श्यामाशब्दस्य देवदत्ताभिधाने चरितार्थत्वाच्छस्त्रीगतो गुणो न निर्दिष्टः स्यादित्यनियतगुणनिमित्तसादृश्यप्रतीतिप्रसङ्ग इत्यर्थः Pradī. ii. 396A.24 (*on* ii. 1. 54); *adj.* whose quality is not determined (यद्युत्तरपदार्थप्रधानः अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति) ब्राह्मणमात्रस्येति इहानियतगुणस्य गुणविशेषप्रतिपादनाय विशेषणं प्रवर्तते न तदुपघाताय Pradī. ii. 423A.34 (*on* ii. 2.6); PadMañ. *on* KāśiVṛ. *on* P. ii. 2. 6.

**अनियतगोत्र** (aniyata-gotra) *adj.* whose religious lineage is uncertain हीनयानपरित्राणत्वमनियतगोत्राणां महायानैकायनीकरणात् MaYānaSū. 35.5 (9. 8); MahāVyu. 61.4.

**अनियतगोत्रक** (aniyatagotra-ka) *adj.* whose (religious) lineage is uncertain अनियतगोत्रकः पुनर्महामते त्रिष्वप्येतेषु देश्यमानेषु यत्रानुनीयते तत्रानुयोज्यः स्यात् LaṅkāSū. 2. 127 (28. 11)

**अनियतग्रहण** (aniyata-grahaṇa) *n.* acceptance of what is not specified लिङ्गानामनुमानविधया निश्चायकत्वं नान्यथा। तच्च न संभवति। वैदिकेऽर्थे व्याप्त्यादिनिश्चायकप्रमाणाभावात् ···। ततश्चाकाङ्क्षाबलादनियतग्रहणं युक्तमिति भावः MayūMāli. 551.10 (*on* viii. 1.1)

**अनियतचार** (aniyata-cāra) *adj.* having irregular movement (सैंहिकेयः) अनियतचारः खलु चेदुपलब्धिः संख्यया कथं तस्य BṛSaṁ. 5. 5.

**अनियतचिकीर्ष** (aniyata-cikīrṣa) *adj.* not having a definite desire to act न हि कुर्यां न कुर्यामित्यनियतचिकीर्षः कर्ता किंचित् करोति Kiraṇā. 260. 16.

**अनियतचित्त** (aniyata-citta) *adj.* having an unrestrained mind तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान्। ··· सैकान् भूभोगो भूपतेरभूत् RājTa.(Ka.) 4. 657.

**अनियतचेष्ट** (aniyata-ceṣṭa) *adj.* having irregular movements अतिचपला अनियतचेष्टाः ··· बलवन्तश्च कल्लोलास्तरङ्गाः VedāntKa. 384. 7 (*on* iii. 2.31)

**अनियतजिज्ञासा** (aniyata-jijñāsā) *f.* inquiry into something which is not definite तर्कः ···। अस्य ह्यविज्ञाततत्त्वो विषयः ··· अनियतजिज्ञासाविच्छेदेन नियतजिज्ञासाजननमनुग्रहः Kiraṇā. 260. 7.

**अनियतज्ञान** (aniyata-jñāna) *n.* uncertain or indefinite knowledge बुद्धीन्द्रियशरीराणां नात्मता सद्भिरिष्यते। स्मृतेरनियतज्ञानात् ŚivaP. vii(1). 5. 44 (507B.4); एकज्ञानात्तत्सदृशं तदधीनं च सर्वमन्यद् ज्ञायत इत्यनियतम्, न हि गोज्ञाने गवयादे राजज्ञाने प्रजादेर्वा नियमेन ज्ञानम्, अनियतज्ञाने च सदृशादेरेव किमित्युपादानम् GuruCandr. ii. 286. 15.

**अनियततदुपाय** (aniyata-tadupāya) *m.* its means which is not prescribed (by rule) वैदिकेषु यवेषु वैदिकस्यैव तदुपायस्य प्रत्यासन्नतया शीघ्रं बुद्धावारोहात् तद्ग्रहणेन नियमसंभवे लौकिकस्यावहननस्य नखविदलनादेरनियततदुपायस्य ग्रहणायोगात् ŚivārkaMaDī. ii. 424. 10 (*on* iv. 1.1)

**अनियतता** (aniyata-tā) *f.* the state of not being restricted यथाकथंचिद्दिवसं प्रत्यनियततया ग्राससंख्या (? संख्याया) मासेनैव त्रिंशतैव तिथिभिर्ग्रासानां शतद्वयं चत्वारिंशदधिकमुपयुञ्जीत Aparā. 1244.8 (*on* 3. 324); [Inst.] with

uncertain nature नियतमनियततया गृह्णन्संशयोऽपि विपर्ययः SāmkhyaTaKau. 480. 1 (*on* 64)

**अनियततोद** (aniyata-toda) *m.* pricking pain at irregular (intervals) स्तम्भशैत्यानियततोद°…° नयनशौक्ल्यादिभिः पित्तम् (वृद्धं सत् पीडयति) AṣṭāSam. i. 101. 19 (1.19)

**अनियतत्व** (aniyata-tva) *n.* **Ai** the state of being indefinite or uncertain, the state of not being fixed or absolute, the state of being variable मुख्यधारणं वा मरणस्यानियतत्वात् MīmāSū. xi. 3.36; शेषत्वं पुनरनियतत्वाद्यागफलपुरुषेष्वप्यस्त्येव TantrVā. 674. 19 (*on* iii. 1. 6); अनित्यत्वादिति नियतपरिमाणत्वस्यानियतत्वात् TantrVā. 895.12 (*on* iii. 3. 29); गुणानां चोद्भवाभिभवयोरनियतत्वादनियतः संयोगनिमित्तोपरमः BrahmSūBh. (Śaṅ.) 363.12 (*on* ii. 2. 10); केवलदोषनिमित्तत्वात्तु भोजनादिकर्मणोऽनियतत्वं स्यात्, दोषोद्भवाभिभवयोरनियतत्वात् BṛĀraUBh. 43. 9 (*on* i. 3. 1); वर्णधर्मा हि जन्मानन्तरमशक्त्या बाध्यमानास्तस्याश्च प्रतिपुरुषमनियतत्वादवध्यर्थनियतकालापेक्षिणस्तत्परत्वेनोपनयनश्रुतिं परिगृह्णन्ति BālaKrī. i. 35. 22 (*on* 1. 15); यदपि आ ज्योतिषो दर्शनाद् इत्युक्तं तदप्युदयोपलक्षणार्थमेव दर्शनस्यानियतत्वात् BālaKrī. i. 42. 15 (*on* 1. 24); ManuBh. i. 160.29 (*on* 2.165); सोऽत्यल्पत्वात् पुरुषेच्छानुविधायित्वेनानियतत्वाच्च नोक्तः MṛtaSam. 238. 1 (*on* 8. 17 (? 34)); VyaktiVi. 29.6; अदृष्टस्याप्यनियतत्वेन सुखादिव्यवस्थानुपपत्तेः ŚrutaPra. ii. 386. 17 (*on* ii. 3. 52); तथाविधम् अयथार्थत्वं परेण वक्तुम् अयुक्त(? क्तम्) … तत्काले च बाध्यत्वस्य सिद्धत्वात् कालान्तरे तद्भावस्यानियतत्वात् TarkSam.(Ā.) 80.22; भवन्ति हि वक्तारो योगिनः शरीरं प्रति घट इति। संकेतानां पुरुषेच्छाधीनतयानियतत्वात् SyādvāMañ. 14(224); NyāySu.(Ja.) 78A. 1 (*on* i. 1. 1); ManvaMu. 143. 13 (*on* 4.1); अनियतत्वं च पदान्तरप्रक्षेपे तत्प्रतिक्षेपे च वाक्यान्तरपरिणामात् TantrRaha. 35. 3; 34. 30; जाठर एव वैश्वानर इति युक्तम्। बहुश्रुतिलिङ्गविरोधे … तस्यानियतत्वात् ŚivārkaMaDī. i. 389.25 (*on* i. 2. 27); एतेषां व्यभिचारिभावत्वेनानियतत्वं ज्ञापयितुं पुनः सर्वत्र भगवत्स्फूर्तिमाह AṇuBh. 251.23 (*on* iii. 3. 44); बोधस्य तत्तद्व्युत्पत्त्यनुसारित्वेनानियतत्वात् VaiyāBhū. 84. 10 (*on* 22); अनयापि रीत्यावरणेषु प्रथमत्वादेरनियतत्वद्योतनार्थं मन्वस्रस्यैव प्राथम्ये बहिर्दशारादेर्द्वितीयत्वाद्युपपत्तिरित्याशयेन द्वितीयावरण इत्युक्तिः SetuBa. 92. 14; यथाकथंचित् पारंपर्यस्यानियतत्वात् BālamBha. i. 190.14 (*on* 1.53); **Aii** the state of not being invariably connected तादात्म्येन च शिंशपाया गमकत्वे तादात्म्याविशेषाद्वृक्षत्वस्यापि शिंशपां प्रति गमकत्वप्रसङ्गः। अथानियतत्वादगमकत्वम्, नियततैव तर्हि गमकत्वे हेतुः, न तादात्म्यम् TātpaṬ.(U.) 306. 12 (*on* 5(4).4); 309.20 (*on* 5(4). 13); 326. 13 (*on* 5(4).87); वादो नावलम्ब्यः। बाहुल्यावकाशत्वादनियतत्वाच्च BhaktiSū.(Nā.) 5. 75; अथानियतत्वान्नायं प्रसङ्गः तर्हि नियम एवानुमानाङ्गं न कार्यकारणभावादि NyāyRaMā. 56.19; GītāBh. (Rā.) 174.5 (*on* 3. 8); TarkSam.(Ā.) 77. 23; अनियतत्वमेवानैकान्त्यम् ŚrutaPra. iA. 156.12 (*on* i. 1.1); ii. 540.33 (*on* iii. 4.9); ii. 566.29 (*on* iii. 4.48); तेनाविभागोऽप्यपृथक्सिद्धिरेवेति सिध्यति, न पुनः स्वरूपैक्यम्, तत्र तद्व्यवहारश्चौपचारिकः। अस्तु वा मुख्यः, तथाप्यनियतत्वादन्यथासिद्धः ŚatDū. 245.6; NyāySu.(Ja.) 299A.7 (*on* ii. 1.6); प्रत्यक्षेण यावता(? तां) भावानामुपलम्भः, तावतां नियतमेव रूपमुपलभ्यते।… अतोऽध्यक्षबाधः … तत्रानियतत्वाभावेऽपि प्रमेयत्वसंभवात्। तत्राप्यनियतत्वेऽपसिद्धान्तः SarvaDaKau. 38. 12; धर्मजिज्ञासाया ऊर्ध्वं च तेषु हि सत्स्विति विवेकादिपूर्वभावनियम उक्तः। धर्मजिज्ञासायाः प्रागपीति तस्या अनियतत्वम् SiddhāSi. i. 12. 8; **Aiii** uncertain occurrence or performance, uncertain happening पतितादीनां दानमनित्यं तेषामनियतत्वात् SmṛtiCan. ii. 584. 9; संस्पृशतीत्यत्रापि संस्पर्शयोग्यदेशस्थितता लक्ष्यते भोजनसमये संस्पर्शाभावात्। अन्यदापि स्पर्शस्यानियतत्वान्नियतदोषत्वानुपपत्तेः ManvaVi. 387. 10 (*on* 3.177); अनुयागस्यानियतत्वव्यञ्जनाय भाष्यकाराणां तदनुक्तिः PāñcRāRa. 167. 10; **Bi** the state of not being restricted (पदार्थसंख्यायाः) अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् SāmkhyaPraSū. 1. 26; यथा अदृष्टस्य सर्वात्मसंनिधावुत्पद्यमानस्यानियतत्वम्, एवं प्राणानामपि सर्वात्मनः प्रत्यनियतत्वम् BrahmSūBh. (Śaṅ.) 494. 12 (*on* ii. 4.1); अनुपासकस्यापि प्रणवेन कर्माङ्गभूतेन कर्मणि कर्तृत्वश्रवणादुपासनकर्मस्वनियतत्वं निश्चीयते VedāntPāSau. 337. 8 (*on* iii. 3. 41); **Bii** the state of being limited or regulated (regulation shown by the particle *eva* concerns that item other than the item after which the particle *eva* is used) ईदृशमवधारणमर्धमन्तर्वेद्येव न त्वर्धमेवान्तर्वेदीति तथा सति चार्धान्तरमनियतत्वात्कदाचिदन्तरपि प्राप्नोति TantrVā. 1136.13 (*on* iii. 7.12(? 14)); बहुष्वर्थेषु बहुवचनमेवेत्यर्थनियमेन प्रत्ययस्यानियतत्वादव्ययेभ्यः स्वादयो विद्यन्त एव PariVṛ.(Sī.) 43.20; **C** the state of not being uniform, the state of being that which does not have equal length लम्बयोः कर्णयोर्वैकमनिर्दिश्यापरान् कथम्। पृच्छत्यनियतत्वेऽपि नियतं चापि तत्फलम् Līlā. 171; 179(1); **D** the state of being that which does not last for a long time पण्यानामनियतत्वादस्थिरार्घादीनां पञ्चरात्रे पञ्चरात्रे गते … नृपतिराप्तपुरुषैरर्घव्यवस्थां कुर्यात् ManvaMu. 360.26 (*on* 8.402)

**अनियतत्वतस्** (aniyatatva-tas) *adv.* because of absence of (marital) bond दाक्षिण्यमानुकूल्यं च धाष्टर्यं चानियतत्वतः। नोचितान्यस्य (उपपतेः) शाठ्यं स्यादन्यचित्तत्वसंभवात् RasāSu. 19. 5 (1.84)

**अनियतदण्डापत्ति** (aniyatadaṇḍāpatti) *f.* undesired contingency of limitless fine विवादादित्यस्य सांनिध्यात् द्विगुणमित्यत्रान्वयः। तदास्पदद्रव्यादित्यर्थे तस्य नियमेन अनियतदण्डापत्तिः BālamBha. ii. 92. 26 (*on* 2. 81)

**अनियतदिक्क** (aniyatadik-ka) *adj.* not having a fixed direction शरद्यनियतदिक्को वायुर्यथा उषःसु ववुराकृष्टजडावश्यायशीकराः … अनिलाः KāvyMī. 99.14; Kāvyānu.(He.) 157.21.

**अनियतदिक्प्रदेश** (aniyata-dikpradeśa) *m.* not a fixed direction and place यदनियतदिक्प्रदेशसंयोगविभागकारणं तद्गमनम् PadārthaSam. 292 6.

**अनियतदिक्प्रभव** (aniyatadik-prabhava) *adj.* emerging from any quarter ब्रह्मसुतो ब्रह्मदण्डनिभः। अनियतदिक्प्रभवोऽसौ (केतुः) VasiS. 10.13.

**अनियतदिक्शब्दाध्याहार** (aniyatadikśabdādhyāhāra) *m.* supplying of any directional word (i.e. preceding or following environment) तत्रानियतदिक्शब्दाध्याहारे प्रसक्ते परशब्दस्यैवाध्याहारः इति तस्मादित्यनेन नियम्यते LaŚabdeŚe. i. 62.1.

**अनियतदिक्संप्रभव** (aniyatadik-samprabhava) *adj.* emerging from indefinite quarter ब्रह्मसुत एक एव। … अनियतदिक्संप्रभवो विज्ञेयो ब्रह्मदण्डाख्यः BṛSam. 11.15.

**अनियतदिगागमन** (aniyatadig-āgamana) *n.* blowing from an indefinite quarter (i. e. blowing from all directions) दिशोऽपि दुःसहाः। यतः सूक्ष्मजलोद्गारिणो वाता इति मन्दमन्दत्वमेषामनियतदिगागमनं च बहुवचनेन सूचितम् Kāvyānu.(He.) 53.11.

**अनियतदिग्देश** (aniyata-digdeśa) *m.* **A** not a specific direction and place अनियतदिग्देशपूर्वकत्वात् (अयोनिजम्) VaiśeSū. iv. 2.6; अनियतदिग्देशसंबन्धिषु गजतुरगस्पन्दनेषु परप्रत्यासत्त्युपगृहीतेषु … वर्तमाना बहुत्वसंख्यैव सेनेत्युच्यते NyāyVār. 79. 8 (*on* i.1. 14); **B** not a specific point of direction अस्त्वपरं सामान्यं गमनत्वमनियतदिग्देशसंयोगविभागकारणेषु भ्रमणादिष्वेव वर्तते PadārthaSam. 296. 13; यदवयविनः संस्कारादनियतदिग्देशैः सर्वतोदिक्कैर्विभागसंयोगनिमित्तं कर्म जायते तद्भ्रमणम् NyāyKa. 307. 20; गमनत्वजातेस्त्वनियतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकम् Upask. 24. 11 (*on* i. 1. 7); *adj.* [*f.* -ā] **A** connected with non-specific direction and place अनियतदिग्देशाः परमाणवो धर्मविशेषजनितकर्माणस्तत्पूर्वकत्वादयोनिजशरीराणाम् Upask. 214. 6 (*on* iv. 2. 6); **B** not having a fixed point of direction स्वयं विद्यमानयोरनियतदिग्देशयोः … युवस्थविरयोः … कालप्रदेशेन … यवीयसि संनिकृष्टा बुद्धिरुत्पद्यते TātpaṬ.(Vā.) 403.25 (*on* ii. 1.39); न च स्मृत्यनन्तरभावित्वादनुमेयप्रतीतिरनियतदिग्देशा स्यात् लिङ्गदर्शनस्य नियामकत्वात् NyāyKa. 206. 14; एते च परत्वापरत्वे अनियतदिग्देशयोरपि पिण्डयोरुत्पद्येते Upask. 343.11 (on vii. 2. 21)

**अनियतदिग्देशसंयुक्त** (aniyatadigdeśa-samyukta) *adj.* connected with unspecific point of direction वर्तमानकालयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयोः … एकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते PadārthaSam. 164.15.

**अनियतदिग्भागागमन** (aniyatadigbhāgāgamana) *n.* blowing (of wind) from an indefinite point of direction (i. e. blowing from all directions) सूक्ष्मजलकणोद्गारिणो वाता इति मन्दमन्दत्वमेषामनियतदिग्भाग(? गा)गमनं च बहुवचनेन सूचितम् Loc. 61. 18 (*on* 2. 1)

**अनियतदिग्व्यवस्थित** (aniyatadig-vyavasthita) *adj.* remaining in not a particular direction (i. e. present in any direction) अनियतदिग्व्यवस्थितयोर्युवस्थविरपिण्डयोरयमस्मादल्पतरकालेन संबद्ध इत्यपेक्षाबुद्ध्यानुगृहीतेन कालपिण्डसंयोगेन यून्यपरत्वम् TarkBhā.(Ke.) 71. 4.

**अनियतदिनकर्तव्य** (a-niyatadinakartavya) *n.* rite(s) other than those to be performed on the (seven) specific or fixed days इति …। नियतसप्तदिनकृत्यम्। अथानियतदिनकर्तव्यानि गयास्थनानातीर्थानि … उच्यन्ते TristhaSe. 368.26.

**अनियतदिवसता** (aniyatadivasa-tā) *f.* the state of not having a fixed (number of) days सौरचान्द्रयोरनियतदिवसतया कल्पनानुपपत्तेर्नियतदिनसावनमासाश्रयो युज्यते CaturCin. iii(2). 23.21.

**अनियतदिवसमास** (aniyatadivasa-māsa) *m.* month not having a fixed (number of) days मासमग्निहोत्रं जुहोति … इत्यादिष्वनियतदिवसमास-

परिग्रहानुपपत्तेर्नियतपदेन सावनग्रहणम् CaturCin. iii(2). 21. 3.

**अनियतदृष्टफल** (a-niyatadṛṣṭaphala) *adj.* not having a definite visible result अनियतदृष्टफले चित्रायागादौ प्रतिनियतजन्मान्तरफले ज्योतिष्टोमादौ च संवादः कथम् NyāyMāVi. 18. 15 (*on* i. 1. 5)

**अनियतदेश** (aniyata-deśa) *adj.* [*f.* -ā] **1** whose position or placement is not fixed येषामेव प्रत्ययानां देशो नियम्यते त एव नियतदेशाः स्युर्य इदानीमनियतदेशः स कदाचित् पूर्वः कदाचित्परः कदाचिन्मध्ये स्यात् MahāBh. ii. 3.20 (*on* iii. 1.2); (सनादीनाम्) उत्पत्तिस्त्वनियतदेशैव स्यात् प्रथमवाक्ये परिभाषानुपस्थानात् PadMañ. *on* KāśiVṛ. *on* P. iii. 1. 2; **2** whose *sthānin* or original form has not a fixed (preceding or following) position तस्मादित्युत्तरस्येत्यस्योपस्थानाभावादनियतदेशो लोपः स्यादिति परभूतलोपार्थमेतद्वचनम् Pradī. iii. 10A. 7 (*on* iii. 1. 2); **3** not having a fixed station or location, not restricted to any one place (स्थापयेत्) एतान् गुल्मान् -- प्रत्यहमनियतदेशान् बहून् ManuBh. ii. 56.25 (*on* 7. 190); मनसैव ज्ञानं ब्रह्मज्ञानसाधनमुपनिषद्ग्रन्थमधीयानो ग्रामादिष्वेकत्रानियतदेशां वसतिमवस्थानं वसेत् कुर्यात् (यतिः) Aparā. 955. 26 (*on* 3.57); *m.* indefinite place विष्वग्देशसंयोगहेतुर्गमनम्। विष्वगित्यनियतदेशः SarvaDaKau. 59. 6.

**अनियतदेशकालनिमित्तत्व** (aniyatadeśakālanimitta-tva) *n.* the state of not having a fixed region, time and cause अयं धर्मः अयमधर्म इति शास्त्रमेव विज्ञाने कारणम्, अतीन्द्रियत्वात्तयोः अनियतदेशकालनिमित्तत्वाच्च BrahmSūBh.(Śaṅ.) 556.12 (*on* iii. 1.25); (कर्मफलानाम्) तत्साधनानां वा पुरुषेच्छानां वा अनियतदेशकालनिमित्तत्वात् ··· फलानां तत्साधनानां च आनन्त्यसिद्धिः BṛĀraUBh. 390.3 (*on* iii. 3. 1)

**अनियतदेशकालविपाकत्व** (aniyatadeśakālavipāka-tva) *n.* the state of being that which does not have fruition at a specific place and time न च युगपत्कायव्यूहेन भोगसंभवः। अनियतदेशकालविपाकत्वात् TattvPrakā. 203B. 11 (*on* iv. 1.13)

**अनियतदेशकालविषय** (aniyata-deśakālaviṣaya) *adj.* not having definite place, time and objects तेषामपि हि सत्यसंकल्पानां विचित्राः संकल्पेच्छादय ईश्वरस्येवानियतदेशकालविषयाः NyāyPari. 499. 5.

**अनियतदेशता** (aniyatadeśa-tā) *f.* the state of not having a specific location येयमागमादनियतदेशतया क्वचिदस्तीति संवित्तिरभूत्सैवेयं गृहाभावे गृहीते बहिरस्तीति संविदधुना संवृत्ता तदतो वैलक्षण्यान्नानुमानमर्थापत्तिः NyāyMañ. i. 35.5.

**अनियतदेशत्व** (aniyatadeśa-tva) *n.* **1** the state of not having a fixed location पार्थिवमेवेदमारोपितं रूपमित्यपि न समीचीनम्।-- तदेव हि धर्म्यन्तरे समारोप्यते पित्तपीतिमवत्। तत्रैव च नियतदेशेऽनियतदेशत्वम् Kiraṇā. 17. 4; **2** the state of being that (*sthānin* or original form) whose (preceding or following) position is not fixed नन्वनियतदेशत्वेऽपि यदा परभूतलोपस्तदानुबन्धासङ्गस्य चरितार्थत्वात्कथं लिङ्गत्वमिति केचिदाहुः Pradī. iii. 10B. 2 (*on* iii. 1. 2)

**अनियतदेशप्रसङ्ग** (aniyatadeśa-prasaṅga) *m.* undesired contingency of an unfixed (preceding or following) position प्रत्ययनियमेऽप्यनियतदेशप्रसङ्गे विशिष्टदेशप्रतिपादनमेव देशनियम इत्यभिप्रेत्यैतदुक्तम् Pradī. iii. 8B.11 (*on* iii. 1.2)

**अनियतदेशविशेषम्** (a-niyatadeśaviśeṣam) *adv.* without having a specific place ऊर्ध्वं चाधश्चाभिमुखं तिर्यग्विष्वगिति क्रमात्। तानि पञ्चापि कर्माणि देशसंयोगहेतवः।··· विष्वगित्यनियतदेशविशेषमित्यर्थः TārkiRa. 158. 6.

**अनियतदेशवृत्ति** (aniyatadeśa-vṛtti) *adj.* not occupying any particular place तस्य (ईश्वरस्य) प्रतिनियतदेशवर्तित्वे त्रिभुवनगतपदार्थानामनियतदेशवृत्तीनां यथावन्निर्माणानुपपत्तिरिति SyādvāMañ. 6(116)

**अनियतदेशसंयोग** (aniyatadeśa-saṁyoga) *m.* contact with an unfixed (directional) point गमनत्वजातिमदनियतदेशसंयोगकारणं कर्म गमनम् SaptaPa. 110(32)

**अनियतदेशावयव** (aniyata-deśāvayava) *adj.* having no resctriction with reference to place and part (of the metrical verse) अनियतदेशावयवं त्व(?तद)परमसंख्यं सदेवास्ति (यमकम्) Kāvyālaṅ.(Ru.) 3. 56; महाकविभिरादृतस्यानियतदेशावयवस्य यमकस्यासंख्यत्वात् (प्रभूततमभेदं यमकम्) Kāvyānu.(He.) 257.21.

**अनियतद्रव्यकता** (aniyatadravyaka-tā) *f.* the state of not having a specific material एवं तर्ह्यनियतद्रव्यकता पर्यग्निकरणपुरोडाशस्येति प्रयोजनम् TantrVā. 393. 12 (*on* ii. 1.12)

**अनियतद्रव्यकत्व** (aniyatadravyaka-tva) *n.* the state of not having a specific material (पर्यग्निकरणस्य) एतदेव प्रयोजनमित्याश्रयणीयम्। अनियतद्रव्यकत्वं वा TantrVā. 393. 18 (*on* ii. 1.12)

**अनियतद्रव्यकल्पन** (aniyatadravya-kalpana) *n.* assumption of unspecific material प्रयाजानां द्रव्याकाङ्क्षाया जौहवस्य कार्याकाङ्क्षायाश्च शान्त्या लिङ्गात्प्रयाजानामनियतद्रव्यकल्पनस्येव जौहवाज्यस्यानियतकार्यकल्पनस्याप्यप्रवृत्तेस्तेन च कार्यनियमेन परिसंख्यापि लभ्यते VidhiRa. 9 (52. 1)

**अनियतद्रव्यगुण** (a-niyatadravyaguṇa) *adj.* not having a specific substance and quality (क्रयः) यदि ह्यसावनियतद्रव्यगुणः स्यात्ततो यत्किंचिदप्यानीयमानं सहेत TantrVā. 710. 2 (*on* iii. 1. 8)

**अनियतद्रव्यदेवता** (aniyata-dravyadevatā) *f.* unspecified material and deity अग्निहोत्रं जुहोतीति विधेरनियतद्रव्यदेवताक्षेपं विना -- वाक्यान्तरविधेयद्रव्यदेवताग्राहकत्वम् UpaParā. 33. 20; 33. 23.

**अनियतद्रव्यसाध्यता** (aniyatadravyasādhya-tā) *f.* the state of being accomplished with any material आनतेरनियतद्रव्यसाध्यतयानत्यर्थत्वे परिमाणनियमोऽनुपपन्नः स्यात् MayūMāli. 664.6 (*on* x. 2. 8)

**अनियतद्रव्योपाय** (aniyata-dravyopāya) *m.* not a specific means of (earning) money तदार्जितद्रव्यस्य क्रत्वर्थत्वेऽपि भोजनाद्यर्थमनियतद्रव्योपायाक्षेपप्रतिबन्धे प्रमाणाभावान्न सर्वस्य द्रव्यस्य ··· क्रत्वङ्गता BhāṭṭDī. ii. 85.12 (*on* iv. 1. 2)

**अनियतनिमित्त** (aniyata-nimitta) *adj.* [*f.* -ā] **A** having an occasional or accidental cause अनियतनिमित्तेऽशुचिस्पर्शनादौ स्नानादि तद्विहितम् ManuBh. ii. 380. 12 (*on* 11.43); अत्राप्यनियतनिमित्तनित्यदार्शिकादि प्रथमं कुर्यात् BālamBha. i. 538. 30 (*on* 1.249); **B** having no specific cause न हि स्वतन्त्रमनियतनिमित्तं ज्ञानं प्रमाणं भविष्यति Kāśi. i. 76.13 (*on* 2. 25); अनियतनिमित्ता हि प्रतिपत्तिः प्रतिभा Kāśi. ii. 9. 24 (*on* 5(1). 15); अनियतनिमित्तमप्रमाणमेव वेदार्थज्ञानम् NyāyRa. 499. 9 (*on* 5(10). 3)

**अनियतनिमित्तक** (aniyatanimitta-ka) *adj.* not having a specific cause शब्दाद्युपायान्तरविरतौ च जायमानमनवद्यं ज्ञानं मानसं प्रत्यक्षं भवति -- अत एव नानियतनिमित्तकं ज्ञानं प्रत्यक्षातिरिक्तस्यार्षनाम्नः प्रत्ययस्याभावात् NyāyMañ. i. 98.33.

**अनियतनिमित्तकत्व** (aniyatanimittaka-tva) *n.* the state of not having a specific cause अनियतनिमित्तकत्वादौत्प्रेक्षिक एव वाक्यार्थबोध इत्यप्रामाण्यं वेदस्य NyāySu.(Ja.) 86A. 1 (*on* i. 1. 1)

**अनियतनिमित्तत्व** (aniyatanimitta-tva) *n.* the state of not having a specific cause न हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म स्वप्नेऽपि संपादयितुं शक्यम्, विद्यायाः कालविशेषाभावादनियतनिमित्तत्वाच्च MuṇḍUBh. 304. 10 (*on* i. 1.0); विषमानेकदृष्टान्तोपादानं मरणस्यानियतनिमित्तत्वख्यापनार्थम् BṛĀraUBh. 597.10 (*on* iv. 3. 36)

**अनियतनिमित्तभाविनी** (aniyatanimittabhāv-inī) *adj.* (*f.*) occurring not due to a specific cause प्रत्यात्मनियताः काश्चित् पुरुषाणां चेतोवृत्तयः अनियतनिमित्तभाविन्यः PramāVāSvopVṛ. 67.25.

**अनियतनिमित्तापेक्षत्व** (aniyatanimittāpekṣa-tva) *n.* the state of being that which does not require any specific cause द्वयोर्यजमानयोरित्यत्र तथैवोपात्तोद्देश्यत्वेऽपि नैमित्तिकप्रतिपन्नमन्त्रविधानस्यानियतनिमित्तापेक्षत्वात् ··· अनियतं यजमानद्वित्वं निमित्तं वक्तव्यम् ŚivārkaMaDī. i. 254. 22 (*on* i. 1. 21)

**अनियतपक्ष** (aniyata-pakṣa) *m.* not a specific view भाष्यकारस्त्वनियतपक्षमुपक्रममात्रमुक्तवान् VedāntKa. 317. 7 (*on* ii. 3. 14)

**अनियतपदार्थाभ्युपगम** (aniyatapadārthābhyupagama) *m.* acceptance of unfixed (number of) categories एतेन सांख्यानाम् अनियतपदार्थाभ्युपगम इति मूढप्रलाप उपेक्षणीयः SāṁkhyaPraBh. 30. 26 (*on* 1. 61)

**अनियतपरत्व** (aniyata-paratva) *n.* inexact (directional) farness अनियतपरत्वासमवायिसमवायित्वरहितपरत्वासमवायिसमवायिमूर्तत्वरहितः कालः Lakṣaṇā. 7.1; गगनम् अनियतपरत्वासमवायिसमवायित्वरहितमूर्तत्वरहितज्ञानसमवायित्वरहितत्वद्रव्यान्यत् अमूर्तत्वादात्मवत् Lakṣaṇā. 7. 3; अनियतपरत्वासमवायिसमवायिनी मूर्तत्वरहिता दिक् Lakṣaṇā. 7. 6.

**अनियतपरधर्म** (aniyata-paradharma) *m.* uncertain property of others कालस्य -- अनियतपरधर्मोपनायकत्वकल्पनायां तु काश्मीरकुङ्कुमपङ्करागं कार्णाटकामिनीकुचकलसं प्रत्युपनयेत् Upask. 114. 14 (*on* ii. 2.10)

**अनियतपरिमाण** (aniyata-parimāṇa) *adj.* **i** having no exact quantitative measure or amount अत्रशिष्टानंशून्भ्यूहेदित्यभ्यूहो योऽनियतपरिमाणस्तदभिप्रायं स्यात् TantrVā. 895.15 (*on* iii. 3.29); **ii** having no fixed size यत्पुनः सर्वत्रैकरूपमनियतपरिमाणं निरवयवावस्थितं तत्रैवं विकल्पयितुमनुचितमेव Śarka. 88. 12; **iii** having no fixed (metrical) extent एतेनैकवाक्यत्वनिर्णयेनानियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यम् NyāyMāVi. 75. 27 (*on* ii.

1. 14); **iv** of unlimited extent (भगवदाकाराः) अनियतपरिमाणास्त्वाकाशवत्परिच्छेदनिरूप्याः AṇuBh. 70. 19 (*on* i. 2. 28)

**अनियतपरिमाणता** (aniyataparimāṇa–tā) *f.* the state of being that which has no fixed quantity सुवर्णरजतयोरनियतपरिमाणतया यथाशक्ति विधानम् CaturCin. i. 419. 18.

**अनियतपरिमाणत्व** (aniyataparimāṇa–tva) *n.* **A** the state of being that which has no fixed quantity यत्पच्यमानानां प्रतिह्सेत पुरीषेण तत्संपूरयेत् अनियतपरिमाणत्वात् पुरीषस्य VaikhāŚS. 18.16; BaudhŚuS. 2.60; ĀpaŚuS. iii. 9. 24; HirŚS. xxv. 3.37 (935.24); **B** the state of not having a definite size अनवधृतस्वरूपश्चैवं सति आत्मा स्यात्, आगच्छतामपगच्छतां च अवयवानामनियतपरिमाणत्वात् BrahmSūBh.(Śaṅ.) 408.7 (*on* ii. 2. 35); अत्र पलसहस्रपरिमितं घृतं घृतकुम्भः प्रसिद्धः कुम्भग्रहणे तस्यानियतपरिमाणत्वादनवस्थितशास्त्रार्थप्रसङ्गात् CaturCin. i. 379. 3; ननु जन्तुशरीरेषु हृदयस्यानियतपरिमाणत्वात्तदपेक्षयापि तथात्वं कथमत्राह मनुष्याधिकारत्वात् VedāntPāSau. 96. 15 (*on* i. 3.25); **C** the state of having an unfixed extent अनियतपरिमाणत्वादायुषश्चतुर्थभागव्यवस्थाविधानमाश्रमिणामनुपपन्नम् ManuBh. i. 327. 5 (*on* 4. 1); ManvaMu. 143. 9 (*on* 4.1); 234. 4 (*on* 6. 33)

**अनियतपर्याय** (aniyata–paryāya) *adj.* not having a fixed order रूपं दृष्ट्वा गन्धं जिघ्रति घ्रात्वा च गन्धं रूपं पश्यति । तदेवमनियतपर्यायं सर्वविषयग्रहणमेकचेतनाधिकरणमनन्यकर्तृकं प्रतिसंधत्ते NyāyBh. 160.3 (*on* iii. 1. 3)

**अनियतपात्रभोजित्व** (aniyatapātrabhoji–tva) *n.* the state of being one who takes food in any vessel लोके कस्यचिच्छिष्यस्य कांस्यभोजित्वं नियतमुपाध्यायस्य त्वनियतपात्रभोजित्वम् VedāntKa. 314. 20 (*on* ii. 3. 10)

**अनियतपात्रभोजिन्** (aniyatapātrabhoj–in) *adj.* who takes food in any vessel अनियतपात्रभोजिनो गुरोर्नियतकांस्यभोजिनः शिष्यस्यानुरोधेन कांस्यपात्रनियमः आद्रियते UpaParā. 24. 1.

**अनियतपुंस्** (aniyata–puṁs) *adj.* not having a fixed person (as the lover) तत्कालहस्तनिपतितमनियतपुंसां मुदे वित्तम् KuṭṭaMa. 644.

**अनियतपुंस्का** (aniyatapuṁs–kā) *adj.* (*f.*) who has no fixed person (as the lover) क्षुद्राभ्य इत्युच्यते का क्षुद्रा नाम । अनियतपुंस्काङ्गहीना वा MahāBh. ii. 259. 8 (*on* iv. 1. 131); क्षुद्रा अङ्गहीना अनियतपुंस्का च Cāndra-Vṛ. *on* ii. 4. 63; (क्षुद्राभ्यश्चेवेतिः) अत्र ह्यनियतपुंस्का विकलाङ्गाश्च स्त्रियः क्षुद्राग्रहणेन गृह्यन्ते Nyās. i. 445. 24 (on ii. 4. 8); शीलहीना इति । अनियतपुंस्का दासीप्रभृतयः PadMañ. *on* KāśiVṛ. *on* P. iv. 1. 131.

**अनियतपुरुषगामिनी** (aniyatapuruṣagām–inī) *adj.* (*f.*) (woman) who approaches any man (for sexual pleasure) दुर्वृत्तेत्यादि । अनियतपुरुषगामिनीर्ब्राह्मण्यादिस्त्रियो हत्वा हत्यानुसारेण यथाक्रमं दद्यात् DīpKa. 102. 1 (*on* 3. 268); ब्राह्मणादीनां दुर्वृत्ता अनियतपुरुषगामिनीर्योषाः प्रमाप्य हत्वा VīraMi. 1011. 11 (*on* 3. 268)

**अनियतपुरुषपरिग्रह** (aniyatapuruṣa-parigraha) *m.* resorting to a man other than the restricted one एकैकस्मिन् पुरुषे नियतानामन्यपुरुषोपभोग उपभोक्तुर्दण्डविधानादनियतपुरुषपरिग्रहो दण्डग्रहणे हेतुरित्युक्तम् Subodhi. 107. 9 (*on* 2. 290)

**अनियतपूर्वापरत्व** (aniyatapūrvāpara–tva) *n.* the state of being that whose preceding and following (elements) are not fixed न च विभक्तिः पदान्तरम्, स्वातन्त्र्येणानियतपूर्वापरत्वेन चाप्रयुज्यमानत्वात् TantrVā. 737. 17 (*on* iii. 1. 14)

**अनियतपौर्वापर्य** (aniyata–paurvāparya) *n.* **i** unfixed word-order वाक्ये अनियतपौर्वापर्येण पदानां प्रयोगः, समासे तु नियतपौर्वापर्यः Pradī. ii. 323A.21 (*on* ii. 1.1); **ii** unfixed sequence अथर्वपुराणेतिहासादीनपि तथैव आरभ्यैकैकं समाप्यापरमारभ्य समापयेत् न पुनर्यदृच्छया यं कंचिदेकदेशम् अनियतपौर्वापर्येण यदाकदाचित् पठेत् VīraMi.(Āhnika.) 329. 13.

**अनियतप्रकृतिद्रव्य** (aniyata–prakṛtidravya) *n.* unfixed substance as a material cause अपि च श्रपणविध्याक्षेपतः प्रकृत्युपादाने प्रसक्ते सत्यनियतप्रकृतिद्रव्योपादानप्राप्तौ 'तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधः सुमनस्यमान' इति पुरोडाशप्रतिष्ठापनमन्त्रवर्णादेव छागो वा मन्त्रवर्णादिति न्यायेन व्रीहिजातीयं प्रकृतिद्रव्यमित्ययमर्थो लभ्यते VidhiRa. 9(62.8); चित्रातण्डुलेभ्यो व्रीहिनियमव्यावृत्तावपि तण्डुलानां प्रकृतिद्रव्याकाङ्क्षानपायाद् व्रीहिनीवाराद्यनियतप्रकृतिद्रव्यप्रापकप्रमाणमवश्यंभाविप्रवृत्तिकमिति तत्र नियममात्रपरिसंख्या ŚivārkaMaDī. i. 66. 10 (*on* i. 1. 1)

**अनियतप्रक्रम** (aniyata–prakrama) *m.* not a fixed number of steps अनियतप्रक्रमेषु शूद्रस्य नियम्यते ŚābaBh. 1378.16 (*on* vi. 1. 31)

**अनियतप्रचयवचन** (aniyatapracaya–vacana) *adj.* (word) expressive of collection not having fixed contents अनियतप्रचयवचनयोरपि बहुगणशब्दयोरर्थप्रकरणादिना यदा विशिष्टेष्वेव दशादिषु वृत्तिः PadMañ. *on* KāśiVṛ. *on* P. v. 4.73.

**अनियतप्रतिपत्तिसाधनत्व** (aniyatapratipattisādhana–tva) *n.* the state of not being the means of definite knowledge अनेन व्युत्पन्नाव्युत्पन्नतया परेषामनियतप्रतिपत्तिसाधनत्वात् स्वप्रतिपत्त्यनुसारेण परो बोधयितव्यः TātpaṬ. (Vā.) 299.12 (*on* i. 1. 38)

**अनियतप्रतिभास** (aniyatapratibhāsa) *adj.* having an indefinite form or appearance (i. e. being mentally constructed) विकल्पविज्ञानं त्वर्थान्नोत्पद्यते । ततः प्रतिभासनियमहेतोरभावादनियतप्रतिभासम् NyāyBiṬ. 49.4 (*on* 1. 5); अनपेक्षं च प्रतिभासनियमहेतोरभावादनियतप्रतिभासम् NyāyBiṬ. 51.3. (*on* 1.5)

**अनियतप्रतिभासत्व** (aniyatapratibhāsa–tva) *n.* the state of having an indefinite form or appearance (i. e. the state of being mentally constructed) असत्यभिलापसंसर्गे कुतो योग्यतावसितिरिति चेत् । अनियतप्रतिभासत्वात् । अनियतप्रतिभासत्वं च प्रतिभासनियमहेतोरभावात् NyāyBiṬ. 49. 1 (*on* 1.5)

**अनियतप्रतियोगिक** (aniyatapratiyogi–ka) *adj.* not having a definite correlative expression, not having a definite correlatum राज्ञ इति केवलपदं उच्चार्यमाणे संबन्धित्वमनियतप्रतियोगिकमवगम्यते PadMañ. *on* KāśiVṛ. *on* P. ii. 3. 50.

**अनियतप्रतियोगिन्** (aniyata–pratiyogin) *adj.* not having a definite correlative expression, not having a definite correlatum राज्ञ इति केवलेऽपि पदे उच्चार्यमाणे संबन्धित्वमनियतप्रतियोगि राज्ञो गम्यते Pradī. ii. 520A.38 (*on* ii. 3.50)

**अनियतप्रदेशवृत्तित्व** (aniyatapradeśavṛtti–tva) *n.* the state of being that which does not exist in a definite place or part अहंभावस्य चात्मन्यनियतप्रदेशवृत्तित्वाच्च ŚrutaPra. ii. 367.20 (*on* ii. 3.32)

**अनियतप्रमाण** (aniyata–pramāṇa) *adj.* not having fixed dimensions एकद्विवृद्धावथ मन्दभद्रौ संकीर्णनागोऽनियतप्रमाणः BṛSaṁ. 67. 4.

**अनियतप्रमाणत्व** (aniyatapramāṇa–tva) *n.* the state of not having a fixed measure चोदितं तु शूर्पं होमे । तस्मादनियतप्रमाणत्वमिति SaṅkarKāBh. 46. 11 (*on* i. 4. 23)

**अनियतप्रमेयविषयत्व** (aniyataprameyaviṣaya–tva) *n.* the state of having indefinite number of objects to be measured अनियतप्रमेयविषयत्वात् प्रमाणानामेकेन प्रमेयेण विशेषणे दुःसंबन्धात् Pradī. iv. 318B. 24 (*on* v. 2.37); PadMañ. *on* KāśiVṛ. *on* P. v. 2. 37.

**अनियतप्राणभृद्भेद** (aniyata–prāṇabhṛdbheda) *m.* limitless variety of living beings तत्सिद्धमेतत् प्रमाणार्थोऽनियतः अनियतप्राणभृद्भेदहेतुकत्वात् TātpaṬ.(Vā.) 29. 17 (*on* i. 1. 1)

**अनियतप्रापणीय** (aniyata–prāpaṇīya) *adj.* optionally applicable गोशब्दस्यानियतप्रापणीयगवादिसर्वद्रव्यलक्षणा भवेत् PūrvottaVāNaMā. 147. 7.

**अनियतप्राप्त** (aniyata–prāpta) *adj.* alternatively or optionally applicable तत्रैकः पक्षो नियम्यते, सर्वस्वं देयमिति । स एष न विधिः । प्राप्तत्वात् । अनियतप्राप्तस्तु नियम्यते ŚābaBh. 1499. 3 (*on* vi. 7. 19); वृष्टिकामादिशब्दलक्षिते सौभरे निधनसाधनत्वेनैव अनियतप्राप्ता हीषादयो नियम्यन्ते ŚāstrDī. 158. 16 (*on* ii. 2.13); तत एव पुरोडाशीयद्रव्यवितुषीकरणार्थत्वेनानियतप्राप्तस्यावहननस्य नियमलाभात् VidhiRa. 25(132. 2); 26(137. 22); 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्त' इत्यादावनियतप्राप्तायाः प्राकृताङ्गपरिसंख्याया नियमः VidhiRa. 26(138.6); सामान्यवचनप्राप्तः षोडशिग्रहनियम एव द्विरात्रान्तरेभ्यो व्यावर्तते । न तु प्रकृतेरतिरात्रादनियतप्राप्तः षोडशिग्रहोऽपि ŚivārkaMaDī. ii. 215.20 (*on* iii. 1. 23)

**अनियतप्राप्ति** (aniyata–prāpti) *f.* optional application वस्तुतस्तु अनियतप्राप्त्याप्येकवाक्यत्वसंभवे हविरुभयत्वादिवद्वाक्यभेदाङ्गीकारस्यायुक्तत्वादस्यार्थवादत्वमेवाङ्गीकृत्य BhāṭṭDī. i. 307.8 (*on* iii. 4. 5); कारकस्य नियतप्राप्तौ विकल्पोऽनियतप्राप्तौ त्वैच्छिकत्वान्नेति विवेकः BhāṭṭDī. iv. 109. 23 (*on* x. 8. 7)

**अनियतप्राप्तिकारण** (aniyataprāpti–kāraṇa) *n.* cause of uncertain meeting (संरब्धं तोटकं वचः) वासवदत्तासंरब्धवचसा सागरिकासमागमान्तरायभूतेनानियतप्राप्तिकारणं तोटकमुक्तम् Avalo. 19. 7 (*on* 1.40)

**अनियतप्राप्तिरहित** (aniyataprāpti–rahita) *adj.* devoid of alternative application यत्र त्वनियतप्राप्तिरहितस्य नियतप्रापकतया प्रवृत्तं तर्कितं वा प्रमाणमपेक्ष्य परिसंख्या तत्र···स्वरूपपरिसंख्या VidhiRa. 26(137. 24)

**अनियतप्रायवाक्यैकदेश** (aniyataprāya–vākyaikadeśa) *m.* rather unspecified part of the sentence क्वचिदनियतप्रायवाक्यैकदेशे कस्मिंश्चिदव्यवधानेऽपि व्यवधानाभावेऽप्येकस्य द्वयोः समुदितयोश्च बहूनाम् — मनोहारिनिबन्धना VakroJī. 82. 1.

**अनियतफल** (aniyata–phala) *adj.* [*f.* -ā] having uncertain result

त्रिविधं कर्म किंचिदैहिकफलमेव किंचिदनियतफलमेव किंचिदामुष्मिकफलमेव NyāyMañ. i. 251. 30; अद्याकृतायां कारीर्यां न हि देवो न वर्षति । … तस्मात्साप्यनियतफला भवतु NyāyMañ. i. 253. 13; i. 254. 5; अनियतफलं तु चित्रादि कैश्चिदुक्तम् NyāyMañ. ii. 75.8; संनिकृष्टफलाः कृष्यादयः। अनियतफलाश्चाष्टकादयः BālaKrī. i. 19. 22 (*on* 1.7); यज्ञादीन्यनियतफलानि Bhām. 699. 5 (*on* iii. 4. 51); NyāyRa. 218. 8 (*on* 5(2). 3)

**अनियतफल** (aniyata-phala) *n.* uncertain or irregular fruit or reward इष्टावपि हविर्विकारादि क्रियाफलं सद्यो भवति मृदूनतस्तु पुंसः सेवाफलमनियतफलम् NyāyMañ. i. 251.12.

**अनियतफलता** (aniyataphala-tā) *f.* the state of having an uncertain result ज्योतिष्टोमस्य फलचोदनादिभिरनियतफलता विहिता। एकस्मिन् प्रयोगे एकफलता केन वार्यते ṬupṬ. 116. 10 (*on* vi. 3.2)

**अनियतफलत्व** (aniyataphala-tva) *n.* the state of having an uncertain result अनियतफलत्वाच्चित्रादेरिह जन्मनि फलादर्शनेऽपि नानृतत्वम् NyāyMañ. i. 252.24; i. 253.9; i. 254.9; यज्ञादीनां कर्मान्तरप्रतिबध्यप्रतिबन्धाभ्यामनियतफलत्वेन तदपेक्षाणां श्रवणादीनामप्यनियतफलत्वं न्याय्यम् Bhām. 700.3 (*on* iii. 4. 51); न च यात्राया अनियतफलत्वेन पुरुषेण प्रवर्तितव्यमित्यत्र हेतुमाह Aparā. 587.3 (*on* 1.347); चित्रायागवत् श्रवणादीनामनियतफलत्वात् PrakaVi. 34.19; अनियतफलयज्ञादिसापेक्षत्वाच्छ्रवणादेरविधेयस्याप्यनियतफलत्वम् VedāntKa. 506. 13 (*on* iii. 4. 51); VivaPraSaṁ. 111. 4.

**अनियतफलदायिन्** (aniyataphaladāy-in) *adj.* which yields any kind of result अनियतफलदायिनि तु दैवे हिताभ्यासरतस्यावकाशमेव न लभते व्याधिः AṣṭāSaṁ. i. 115. 16 (1. 22)

**अनियतफलभक्ष्यभोज्यपेय** (aniyata-phalabhakṣyabhojyapeya) *adj.* in which there is no restriction about fruit, food, eatable (i.e. all kinds of food) and drink अनियतफलभक्ष्यभोज्यपेयं विधिपरिणामविभक्तदेशकालम्।… व्रतमिदमाजगरं शुचिश्चरामि MahāBhā. xii. 172. 27.

**अनियतबर्हिस्** (aniyata-barhis) *adj.* having any kind of sacrificial grass एककपालविध्यभावे ह्याग्रयणे प्रसूनमप्रसूनं वा बर्हिरनियतमैन्द्राग्नादियागानुसारेण प्राप्नोति ऐन्द्राग्नादिषु प्रसूननियमाश्रवणात्।… प्रसूनबर्हिर्ग्रहणेऽप्यनियतबर्हिषामैन्द्राग्नादीनां विरोधाभावात् VidhiRa. 9(50. 1)

**अनियतबहुत्व** (aniyata-bahutva) *n.* plurality not restricted to any specific number (संवात एष उच्यते, चत्वारि त्रिवृन्त्यहानीति। पृथक्त्वनिवेशिनी हि चत्वारीति संख्या) बहुवचनादनियतबहुत्वे चत्वारीति नियम्यते ṬupṬ. 175. 7 (*on* viii. 3.4); भूर्यादीनामेवानियतबहुत्ववाचिनां निवृत्तिः PadMañ. *on* KāśiVṛ. *on* P. i. 1. 23.

**अनियतबहुत्वार्थ** (aniyatabahutvārtha) *adj.* expressive of the sense of plurality not restricted to any specific number शतं देयं सहस्रं देयमपरिमितं देयम् … सोऽपरिमितशब्दः किमनियतबहुत्वार्थः उत सहस्राधिकबहुत्वार्थः UpaParā. 22.7.

**अनियतबोधत्व** (aniyatabodha-tva) *n.* the state of being one who does not have precise knowledge अनुष्ठातार एवादेष्टार इति चेन्न तेषामनियतबोधत्वात् NyāyKuA. ii. 71. 6.

**अनियतभासादि** (aniyata-bhāsādi) *adj.* having no specific appearance etc. तेजसि रूपं रक्तभास्वरम्, सलिले तु शुक्लमभास्वरम्, पृथिव्यां बहुविधमभास्वरम्। अत्रापि संसर्गादनियतभासादि NyāySiA. 252. 1.

**अनियतभिन्नाश्रयदृष्ट** (a-niyatabhinnāśrayadṛṣṭa) *adj.* not seen on specific different substrata नियतभिन्नाश्रयदृष्टविशेषणबहुत्वं विशेष्यैक्यविरोधि, अनियतभिन्नाश्रयदृष्टविशेषणबहुत्वं नैक्यविरोधि ŚrutaPra. iB. 113. 11 (*on* i. 1.2)

**अनियतभेद** (aniyata-bheda) *m.* separation from what is indefinite बुद्धे धर्मेऽवज्ञा कौशीद्यं तुष्टिरल्पमात्रेण। रागे माने चरितं कौकृत्यं चानियतभेदः।… तत्रानियतभेदो बोधिसत्वानामनियतानां महायानाद्भेदः MaYānaSū. 83. 9 (12. 19)

**अनियतम्** (a-niyatam) *adv.* without any restraint, freely स्त्री मेघकाली … कर्तुं महर्षेः किल चित्तमोहम्। बभ्राम तत्रानियतं न तस्थौ BuddhaC. 13. 49; रविस्तप्स्यति निःशङ्कं वास्यत्यनियतं मरुत् Bhaṭṭi. 16.6 (comm. स्वच्छन्दम्)

**अनियतमण्डल** (aniyata-maṇḍala) *adj.* whose circle is not fixed (cf. ArthŚā. ii. 233.9 (6. 2)) उदासीनवदनियतमण्डलोऽपरभूपापेक्षया समधिकबलोऽपि कुतश्चित्कारणादन्यस्मिन्नृपतौ विजिगीषु(?ष)माणे यो मध्यस्थभावमवलम्बते स मध्यस्थः NītiVā. 29. 22.

**अनियतमतिकृत्** (a-niyatamatikṛt) *adj.* not causing cognition of the precise meaning (i.e. not having external correspondence) व्योमाम्भोजादिशब्दोऽप्यनियतमतिकृत् स्यात् पदार्थं त्यजेच्चेत् TattvMu. 4. 25 (*but* comm. अनियतमतिकृत् शब्दात् मुख्यार्थप्रतीतिर्नियता। अमुख्यार्थप्रतीतिस्त्वनियतेति लक्ष्यार्थविषयकबोधकृदित्यर्थः)

**अनियतमान** (aniyata-māna) *n.* not fixed measure बहिस्स्थानां तु वृत्तानामन्तरालं तु यत् स्मृतम्। तच्चानियतमानेन समानं स्यात् परस्परम् PauṣkS. 7. 37.

**अनियतमुक्तिकालत्व** (aniyatamuktikāla-tva) *n.* the state of being one whose time of liberation is not fixed (by any rule) सा विद्वद्रूपावस्था यस्य स तदवस्थस्तस्य संपन्नविद्यस्यानियतमुक्तिकालत्वेनावधृते: VedāntKau. 383. 13 (*on* iii. 4.51)

**अनियतयोगत्व** (aniyatayoga-tva) *n.* the state of being that whose relation is not regulated (by any other word) सा चानियतयोगत्वात् स्थानषष्ठी भविष्यति PadMañ. *on* KāśiVṛ *on* P. i. 1.61; *on* P. i. 1. 67.

**अनियतयोगा** (aniyata-yogā) *adj.* (*f.*) whose relation is not regulated (by any other word) इह शास्त्रे या षष्ठी अनियतयोगा श्रूयते सा स्थानेयोगैव भवति, नान्ययोगा KāśiVṛ. *on* i. 1.49.

**अनियतराशि** (aniyata-rāśi) *m.* group of undetermined (human) beings (i.e. those who will learn the doctrine, if they hear it preached, not otherwise) इति हि भिक्षवस्तथागतेऽभिसंबुद्धे … संवर्णितः सम्यक्त्वनियतो राशिः, विवर्णितो मिथ्यात्वनियतो राशिः, परिगृहीतोऽनियतराशिः LaliVi. 22. 1(6); MahāVyu. 95. 13 [cf. **राशि** DBHS.]

**अनियतरुदितस्मित** (aniyata-ruditasmita) *adj.* having capricious (*lit.* uncertain) crying and smiling अनियतरुदितस्मितम् …। वदनकमलकं शिशोः स्मरामि MālaMā. 10. 9 = UttaRāC. 4.4.

**अनियतरूपत्व** (aniyatarūpa-tva) *n.* the state of not having a definite form इतरथा तन्मात्रभूतादीनां न्यूनतातिरेको वा श्रूयते भ्रान्तेरनियतरूपत्वात् GoviBh. 82. 3 (*on* i. 4. 26)

**अनियतरूपप्राप्ति** (aniyatarūpa-prāpti) *f.* undesired contingency of unfixed colour अश्वः श्यावो दक्षिणेति उपहव्यदक्षिणाविधिः … अश्वस्य … अनियतरूपप्राप्तौ श्यावनियमार्थश्च VidhiRa. 9(46. 2)

**अनियतरूपिणी** (aniyatarūp-iṇī) *adj.* (*f.*) not having a fixed form यदा पुना रविकुलराजकन्यका तदा गता जलनिधिमेव सत्पतिम्। इतीदृशी ह्यनियतरूपिणी शिवा शिवं गता बहुतररूपवल्लभम् BṛDharmaP. i. 52.70.

**अनियतलाभ** (aniyata-lābha) *m.* gain which cannot be fixed नित्यं शुक्लमाच्छादनम् … सहिरण्यभागमलंकरणमिति कुम्भदासीनां लाभातिशयः।… देशकालविभवसामर्थ्यानुरागलोकप्रवृत्तिवशादनियतलाभादियमवृत्तिः KāmSū. 348.20 (6. 5)

**अनियतलिङ्ग** (aniyata-liṅga) *adj.* not having a fixed gender अनियतलिङ्गास्तु लिङ्गमात्राधिक्यस्य। तटः। तटी तटम् SiddhāKau. 131A.3 (*on* ii. 3. 46); अंशत्वमात्रविवक्षायामनियतलिङ्गोऽर्धशब्दः LalitāSaBh. 26. 2 (*on* 52); *n.* not fixed gender अर्धं नपुंसकमिति सूत्रे कः पुनः पुंलिङ्ग इति भाष्यस्यानियतलिङ्गपरत्वेनैव कैयटेन व्याख्यानात् वा LalitāSaBh. 26.3 (*on* 52)

**अनियतलिङ्गत्व** (aniyataliṅga-tva) *n.* the state of not having a fixed gender यदा तु समूहोऽभिधेयस्तदा तस्य वनं सेना संघ इत्यादिवदनियतलिङ्गत्वं प्राप्तमिति वचनम् Pradī. ii. 546B.4 (*on* ii. 4. 30)

**अनियतलिङ्गविषय** (aniyataliṅga-viṣaya) *adj.* relating to words whose gender is not fixed 'सामान्ये नपुंसकम्' इति अनियतलिङ्गविषयम् LaŚabdeŚe. ii. 84. 10; ii. 91. 14.

**अनियतलिङ्गविषयता** (aniyataliṅgaviṣaya-tā) *f.* the state of having reference to words not having a fixed gender अव्ययविशेषणानां नपुंसकत्वं भवति इति … अनियतलिङ्गविषयताया उक्तानुशासनस्य भाष्यादिसंमतत्वात् AlaṅkāKau.(Vi.) 73. 10.

**अनियतवनितार्थमन्त्रयुद्ध** (aniyata-vanitārthamantrayuddha) *adj.* having no fixed rule about women, wealth, counsel and quarrel अनियतवनितार्थमन्त्रयुद्धम् … तदसुरमण्डलमाकुलं बभूव YogVā. v. 37. 18.

**अनियतवर्गगा** (aniyatavarga-gā) *adj.* (*f.*) (sexually) approaching a male of any class (जिनकार्मुकबस्तावीन् पृथग्दद्याद्विशुद्धये। चतुर्णामपि वर्णानां नारीर्हत्वानवस्थिताः) अनवस्थिताः अनियताः अनियतवर्गगाः नारीः ManvaVi. 1414. 7 (*on* 11. 138)

**अनियतवर्णानुपूर्वीक** (aniyatavarṇānupūrvī-ka) *adj.* not having a fixed sequence of words (शब्दाः) लौकिका अनियतवर्णानुपूर्वीका गौरश्वः पुरुषो हस्तीत्येवमादयः। वैदिकास्तु नियतानुपूर्वीकाः शन्नो देवीरभिष्टय इत्येवमादयः Nyās. i. 5. 8 (*on* i. 1. 0)

**अनियतवादिन्** (aniyata-vādin) *adj.* holding the view of non-

restriction (about the members of syllogistic reasoning) (त्रिपञ्चावयवामेव युग्मावयविनीमपि । नियमाद्योऽनुमां ब्रूयात्तं ब्रूयाद्यदि तादृशी) तं ब्रूयाद्यदि परोऽनियतवादीति शेषः NyāySu.(Ja.) 275A.7 (*on* ii. 1. 2)

**अनियतवार** (aniyata-vāra) *m.* unlimited number of times न चैवं लक्षणशास्त्रवैयर्थ्यम् । अनियतवारविशिष्टतत्त्वसाक्षात्कारावधि योगाभ्यासोपदेशवदिहापि निरुपाधिसंबन्धबोधावधिनियमात् NyāyVāiPari. 702. 5.

**अनियतवास** (aniyata-vāsa) *m.* not fixed stay, temporary stay 'विहग इव विप्पमुक्क'त्ति मुक्तपरिकरत्वादनियतवासाच्च AupaSūṬ. 67. 4.

**अनियतविकल्प** (aniyata-vikalpa) *m.* unregulated option, free option अहरहमित्युपनिषदौ रहस्यनामनी उभयत्राप्यनियतविकल्पेन समुच्चयेन वोपसंहार्ये उत यथानिर्देशं व्यवस्थिते ŚivārkaMaDī. ii. 317. 11 (*on* iii. 3.20)

**अनियतविजयश्री** (aniyata-vijayaśrī) *adj.* in which the glory of victory is not certain अनियतविजयश्रियि प्रवृत्ते चिरमिति तत्र महाहवप्रबन्धे । प्रतिसुभटकपालपाटनाय द्विरदमुदञ्चयति स्म राजसूनुः VikraDeC. 6.81.

**अनियतविध्यन्तप्रापक** (aniyatavidhyanta-prāpaka) *adj.* which establishes or enjoins optional subsidiary rites नानियतविध्यन्तप्रापकं किंचित् प्रमाणं प्रवर्तते उपकाराकाङ्क्षाविरहात् ŚivārkaMaDī. i. 66. 14 (*on* i. 1.1)

**अनियतविपाक** (aniyata-vipāka) *adj.* whose (time of) fruition is not fixed (पण्डिताः) श्रद्धामात्रकेणाप्येकान्तिकेनाभिप्रसन्ना अनियतविपाकानां पापानां राशीनभिभूय दैवीं मानुषीं च श्रियमभिभूय निर्वाणपरायणाः संवर्तन्ते AbhidhKoBh. 416.10 (*on* 7. 34); यस्त्वसावेकभविकः कर्माशयः स नियतविपाकश्चानियतविपाकश्च । तत्र ··· अयं नियमो न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य YogBh. 71.6 (*on* 2. 13); 73.6 (*on* 2. 13); अनियतविपाकस्य तु दुर्बलत्वमन्यदा सावकाशत्वात् TattvVai. 73. 22 (*on* 2. 13)

**अनियतविपाककाल** (aniyata-vipākakāla) *adj.* whose time of fruition is not certain प्राचां तु कर्माशयानाम् ··· अनियतविपाककालानां भोगेन क्षपयितुमशक्यत्वादशक्योच्छेदः संसारः स्यात् TattvVai. 68. 20 (*on* 2. 13); सन्नप्यनन्तोऽप्यनियतविपाककालोऽपि प्रसंख्यानदग्धबीजभावो न फलाय कल्पते TattvVai. 68. 26 (*on* 2. 13); SāṁkhyaTaKau. 493.1 (*on* 67); विद्यया ··· निःशेषस्य कर्माशयस्य निवृत्तिरनादिभवपरंपराहितस्यानियतविपाककालस्यासंख्येयत्वात् Bhām. 638.15 (*on* iii. 3. 32); 750. 6 (*on* iv. 3.14)

**अनियतविपाककालत्व** (aniyatavipākakāla-tva) *n.* the state of being that which has no fixed time of fruition कर्मणामनियतविपाककालत्वाच्च प्रतिसर्गावस्थाया इव मुक्त्यवस्थाया अपि प्रत्युदावृत्तिभयं न व्यावर्तते BrahmSi. 21.19.

**अनियतविपाकफल** (aniyata-vipākaphala) *adj.* having the result whose (time of) fruition is not certain अयमनियतविपाकफलान्यपि ··· कर्माणि पिण्डीकृत्य ··· युगपदेव भुङ्क्ते TātpaṬ.(Vā.) 71. 24 (*on* i. 1. 2)

**अनियतविपाकसमय** (aniyata-vipākasamaya) *adj.* whose time of fruition is not certain न्यायमार्गः ··· धर्माधर्मप्रचयमनन्तमप्यनियतविपाकसमयमपि ··· प्रक्षिणोति TātpaṬ.(Vā.) 9.11 (*on* i. 1.1); न हि अनियतविपाकसमयानि कर्माणि NyāyKuA. i. 119. 4; कर्माशयप्रचयोऽनियतविपाकसमयः SāṁkhyaTaKau. 491. 9 (*on* 67)

**अनियतविपाकसमयता** (aniyatavipākasamaya-tā) *f.* the state of being that whose time of fruition is uncertain ननु भोगेन प्रक्षयोऽनुपपन्न एव, कर्मराशेरनन्ततयानियतविपाकसमयतया च NyāyVārPari. 380.8; 83.11.

**अनियतविपाकसमयत्व** (aniyatavipākasamaya-tva) *n.* the state of being that whose time of fruition is uncertain कर्मराशेः उपभोगश्चाशक्यः अनियतविपाकसमयत्वात् NyāyVārPari. 81. 5.

**अनियतविभक्तिकता** (aniyatavibhaktika-tā) *f.* the state of not having a fixed case-termination निष्कौशाम्बिः इत्युदाहरणम् ··· निष्क्रान्ते निष्क्रान्तेनेत्यादिक्रमेण तस्यानियतविभक्तिकतया कौशाम्बीपदस्य तदपेक्षया नियतविभक्तिकत्वादनेनोपसर्जनत्वेन ह्रस्वत्वम् LaŚabdeŚe. i. 528.29.

**अनियतविभक्तिकत्व** (aniyatavibhaktika-tva) *n.* the state of not having a fixed case-termination चित्रगुः इत्यस्य विग्रहे द्वयोरपि नियतविभक्तिकतया किमपेक्षं गोशब्दस्य नियतविभक्तिकत्वं स्यात् । एकस्यानियतविभक्तिकत्वे हि तदपेक्षमन्यस्य तत्त्वं वाच्यम् LaŚabdeŚe. i. 529.16.

**अनियतविभक्तित्व** (aniyatavibhakti-tva) *n.* the state of not having a fixed case-termination अन्यथा सभार्यः इत्यत्रोपसर्जनह्रस्वानापत्तिः । सहशब्दस्याव्ययतया विभक्तिमात्राभावेन ··· अनियतविभक्तित्वाभावात् ··· भार्ययेत्यत्राभावेनोपसर्जनत्वानापत्तिः । मम तु समासस्यानियतविभक्तित्वात्तदपेक्षं तत्त्वमस्त्येवेति न दोषः LaŚabdeŚe. i.529.20.

**अनियतविरोधपौर्वापर्य** (a-niyatavirodhapaurvāparya) *adj.* not involving invariable conflict and sequential relation अपच्छेदन्यायो ह्यनियतविरोधपौर्वापर्यविषयः, उद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति । तत्रापि क्रमेणापच्छेदोऽप्यनियतः ŚrutaPra. iA. 195. 26 (*on* i. 1. 1); अनियतविरोधपौर्वापर्यविषयोऽपच्छेदन्यायो नियतविरोधपौर्वापर्येषु न हि प्रवर्तते ŚrutaPra. ii. 381.27 (*on* ii. 3.42); अनियतविरोधपौर्वापर्ये ह्यपच्छेदनयः अन्यतरापच्छेदे बाधकाभावेन प्रामाण्यसिद्धेः ŚatDū. 200.27; अपच्छेदनयात् पूर्वं त्याज्यमिति चेत्, तस्यानियतविरोधपौर्वापर्यविषयत्वात् NyāySiA. 226. 18.

**अनियतविरोधपौर्वापर्यता** (aniyatavirodhapaurvāparya-tā) *f.* the state of being that which does not involve invariable conflict and sequential relation अनियतविरोधपौर्वापर्यतयान्यतरोदयसंभावनया च प्रयोगान्तरेषु प्रामाण्योपपत्तेः ŚatDū. 97. 30.

**अनियतविशेष** (aniyata-viśeṣa) *adj.* not having a specific feature इह ··· सामान्यव्याप्तिमात्रेणानुमीयमाने यः कश्चिदग्निरस्ति इतिवदनियतविशेषं यत्किंचित् सादृश्यमस्ति इत्येतावदेव भासते MānaMe. 111. 2.

**अनियतविशेषकल्पन** (aniyataviśeṣa-kalpana) *n.* assumption of an unspecific feature न च वाक्यशेषस्थक्षौमादिग्रहणेऽपि तत्राप्यनुष्ठानाय विशेषाकाङ्क्षायामनियतविशेषकल्पनमावश्यकमिति वाच्यम् UpaParā. 21. 14.

**अनियतविशेषकल्पना** (aniyataviśeṣa-kalpanā) *f.* assumption of an unspecific feature अर्थवादान्वयं विना ··· मन्त्रार्पितविशेषग्रहणं तु कथं स्यात् तदन्वयात्प्रागेवानियतविशेषकल्पनया विधिपर्यवसानसंभवात् UpaParā. 33. 13.

**अनियतविशेषवाचिन्** (a-niyataviśeṣavācin) *adj.* not expressive of any particular number पूर्वसूत्रे संख्याग्रहणमनियतविशेषवाचिभूर्यादिनिवृत्त्यर्थम् Pradī. iv. 411A. 22 (*on* v. 4. 19)

**अनियतविशेषविषय** (aniyataviśeṣa-viṣaya) *adj.* relating to an object whose specific features are not ascertained अनध्यवसितविशेषे वस्तुन्यनियतविशेषविषयं विज्ञानं संशयः PrakaPañ. 120. 3.

**अनियतविशेषालिङ्गित** (aniyataviśeṣāliṅgita) *adj.* embraced by non-uniform particulars विशेषश्च तत्र तत्र विभिन्नत्वान्न नियतो निरूपयितुं शक्यत इति अनियतविशेषालिङ्गितयोर्व्याप्तिरिति स्थितिः । ततश्च पर्वतवर्तितया दृष्टो धूमोऽनियतविशेषालिङ्गितमग्निं पर्वतेऽनुमापयति MānaMe. 51. 2.

**अनियतविषय** (aniyata-viṣaya) *adj.* [*f.*–ā] **1** having no specific objects (belonging to specific periods of time) चक्षुरादीनि पञ्च वर्तमानविषयत्वात् पूर्वमुक्तानि । मनस्त्वनियतविषयम् किंचिद्वर्तमानविषयम्, किंचित् त्र्यध्वानध्वविषयम् AbhidhKoBh. 15. 23 (*on* 1. 23); **2** not restricted to specific objects of passion विदिताखिलतत्त्वा अपि मुनयो नैवेह निन्दिताचरणाः । पशवस्त्वनियतविषया दोषस्तस्मान्न शास्त्रस्य KandaCū. vii. 2. 41; **3** having no specific object नन्वर्थिनोऽपि नानियतविषया प्रवृत्तिः अपि तु निर्ज्ञातश्रेयःसाधनभावेऽर्थे NyāyMañ. i. 331.27; आहवनीयशास्त्रस्य पदशास्त्रेणेव संकोच एव न्याय्यः । न तु प्रत्यक्षबाधकता । अन्यथा नेति नेतीत्यनियतविषयभेदश्रुतिः Nyāyāmṛ. 265A.8.

**अनियतविषयता** (aniyataviṣaya-tā) *f.* **1** the state of having the object (of ignorance left) unspecified अथ कतिपयविषयं तदपि न अनियतविषयतया तस्य तस्य व्यभिचारदर्शनात् ĪśvaSi.(Yā.) 77. 12; **2** the state of not having a specific sphere or domain भवत्वनियतविषयतेत्याशङ्क्याह — गुणानां हीति Loc. 134. 25 (*on* 3. 6)

**अनियतविषयत्व** (aniyataviṣaya-tva) *n.* **i** the state of not having a fixed domain or sphere यदि गुणाः संघटना चेत्येकं तत्त्वं संघटनाश्रया वा गुणास्तदा संघटनाया इव गुणानामनियतविषयत्वप्रसङ्गः Dhvanyā. 311. 5 (*on* 3. 6); न चायं राज्ञः स्वदण्डं स्प्रष्टुमीष्टे प्रतिपत्त्या तदाक्षेप इति चेन्न तस्यानियतविषयत्वात् DaṇḍaVi. 55. 11; **ii** the state of not having a fixed object नापि तद्धर्मप्रामाण्यारोपः तस्यानियतविषयत्वे प्रवृत्तिनियमानुपपत्तेः ĀtmaTaVi. 360. 11; विवक्षितपदं तावल्लक्षणे भण्डालेख्यमिव पुरुषेच्छानामनियतविषयत्वात् KhaṇḍanKhā. 528. 10.

**अनियतविहार** (aniyata-vihāra) *m.* unfixed residence अनियतवृत्तिः अनियतविहार इति योऽर्थः SthānṬ. 423A.3.

**अनियतवृक्ष** (a-niyatavṛkṣa) *adj.* not having specific trees (as its cause) त्रयः परिधयोऽनियतवृक्षाः सत्वक्काः HirŚS. i. 2. 60 (88.10) (comm. अनियतवृक्षा नानाजातीयो वृक्ष उपादानं येषां ते)

**अनियतवृत्त** (aniyata-vṛtta) *adj.* whose prior existence is not invariable कर्मफलानित्यत्वमुपश्रुत्य ··· ब्रह्मज्ञानाङ्गकर्मानुष्ठानमपि तथैव संभवतीत्यनियतवृत्तो धर्मविचारो न ब्रह्मजिज्ञासाहेतुः स्यात् SiddhāSi. i. 15. 15.

**अनियतवृत्तपरिमाण** (aniyata-vṛttaparimāṇa) *n.* not a specific metrical measure यद् ··· मात्रासमादिपादैः कलितम् । अनियतवृत्तपरिमाणसहितं प्रथितम् VṛttaRa. 2. 37.

**अनियतवृत्ति** (a-niyatavṛtti) *adj.* **1** not having any regular

occupation or means of livelihood नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः MahāBh. ii. 374.20 (*on* v. 2.21); CāndraVṛ. *on* iii. 4.13; Prasā. i. 706. 10; Agnisvāmin *on* LātyāŚS. viii. 5. 1; नानाजातीयानामनियतवृत्तीनां संघः पूगः CāndraVṛ. *on* iv. 3.88; नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः संघाः पूगाः KāśiVṛ. *on* v.3. 112 = Prasā. i. 937. 21 = SiddhāKau. 318B. 9 (*on* v. 3. 112); अनियतवृत्तय इति । अनियतक्रियाः Nyās. ii. 64.12 (*on* v. 2. 21); गणो विप्रसमूहः, धर्मार्थकामप्रधानानामनियतवृत्तीनां संघो वा DaṇḍaVi. 16. 7; नानाजातीया अनियतवृत्तयः शरीरायासजीविनः संघा व्रातास्तेषां कर्म व्रातम् Prasā. i. 868. 15; LaŚabdeŚe. ii. 384.2; **2** not having any fixed denotation संख्याशब्दा ह्यनियतवृत्तयो भवन्ति ŚābaBh. 1996.24 (*on* x. 6.23); गोघटादिशब्दवत् संस्थानादिभिरनियतवृत्तेः शरीरशब्दस्य क्वचिद् विशेषे नियामकाभावात् सर्वप्रयोगानुगुणमिदमेव श्रुतिसिद्धं व्यापकं लक्षणम् NyāySiA. 208. 8; *f.* not a fixed residence आचारसंपत्, सा च चतुर्धा तद्यथा संयमध्रुवयोगयुक्तता ··· असंप्रग्रहः ··· अनियतवृत्तिः अनियतविहार इति योऽर्थः वृद्धशीलता SthānṬ. 423A.3.

**अनियतवेदनीया** (a–niyatavedanīyā) *adj.* (*f.*) not necessarily to be experienced नियतोभयथावेदनीयत्वादिति ।··· उभयथा वेदनीया निरोधसमापत्तिर्नियतानियतवेदनीयेत्यर्थः । नियतवेदनीया अनागामिनः अनियतवेदनीया अर्हत इहैव परिनिर्वाणात् Sphuṭā. ii. 88.5 (*on* 2. 44)

**अनियतव्यवधान** (aniyata–vyavadhāna) *n.* indefinite intervention न च ··· एकशाखास्थानां पञ्चानामपि मन्त्राणां पाठेन कृप्तक्रमत्वाच्छाखान्तरीयेणाप्यनियतव्यवधाने प्रवृत्तिक्रमबाधापत्तिः BhāṭṭDī. ii. 159. 19 (*on* v. 1.3)

**अनियतशयनाशन** (a–niyataśayanāśana) *adj.* not having any restriction with regard to sleeping and eating अनियतशयनासनः (v. l. °शनः) ··· व्रतमिदमाजगरं शुचिश्चरामि MahāBhā. xii. 172. 32.

**अनियतशयनासन** (aniyata–śayanāsana) *adj.* not having any restriction with regard to sleeping and sitting अनियतशयनासनः ··· व्रतमिदमाजगरं शुचिश्चरामि MahāBhā. xii. 172.32.

**अनियतशास्त्रार्थतापत्ति** (aniyata–śāstrārthatāpatti) *f.* undesired contingency of being non-conclusive meaning of the scripture (उपनयनशब्दस्य) विवक्षाधीनतयानेकत्वसंभवात् अनियतशास्त्रार्थतापत्तेश्च VīraMi. (Saṁskāra.) 334. 14.

**अनियतशिरस्क** (aniyataśiras–ka) *adj.* not having a fixed number of hoods सुरुङ्गायुक्ते वा कूपे नागमनियतशिरस्कं हिरण्योपहारेण दर्शयेद् (दिदृक्षुभ्यः) नागप्रतिमायामन्तश्छिद्रायाम् ArthŚā. ii. 197. 2(5. 2) (comm. त्रिशीर्षपञ्चशीर्षादिम्)

**अनियतशीघ्रप्रतीतिवत्** (aniyataśīghrapratīti–vat) *adv.* like quick knowledge which does not arise necessarily प्रसिद्धिबाहुल्येन अपेक्षितत्वेन वा नियतशीघ्रप्रतीतिरपि अनियतशीघ्रप्रतीतिवदेव न वैदिकशब्दार्थग्रहणे प्रयोजिका PūrvottaVāNaMā. 191.11.

**अनियतषोडशिग्रहप्रापक** (aniyata–ṣoḍaśigrahaprāpaka) *adj.* which enjoins the optional taking of the *ṣoḍaśi*-cup उपकाराकाङ्क्षाविरहात् अनियतषोडशिग्रहप्रापकस्येव नियतविध्यन्तप्रापकस्य कस्यचिच्छास्त्रस्याभावात् ŚivārkaMaDī. i. 66. 15 (*on* i. 1. 1)

**अनियतसंस्थानवत्त्व** (aniyatasaṁsthānavat–tva) *n.* the state of not having any specific shape इष्टकात्वाविशेषात् प्रयोगप्राशुभावायानियतसंस्थानवत्त्वे तासां प्राप्ते ··· साश्रिका एव भवेयुः BhāṭṭCan. 37.8 (*on* xiv. 1.2)

**अनियतसंख्य** (aniyata–saṅkhya) *adj.* not having a fixed number दक्षिणा तु संख्याविशिष्टा चोद्यते, न गवादयः । कुतः । संख्याया दाक्षिण्येनानभिसंबन्धे सत्यनियतसंख्यानां गवादीनां दक्षिणासंबन्धेनानर्थक्यमेव संख्यायाः स्यात् ŚābaBh. 1883. 4 (*on* x. 3. 40); अनियमसृष्टौ किं मानमिति चेत् । साक्षी तावत् । लोष्टादिकार्याणामनियतसंख्यैर्विजातीयैर्विसदृशैश्चारम्भदर्शनेनानुमानं च NyāySu.(Ja.) 350B.11 (*on* ii. 2.6); (क्षराक्षरात्मिका) क्षराण्यनियतसंख्यान्यक्षराणि वर्णा आत्मा स्वरूपं यस्याः LalitāSaBh. 154.23 (*on* 197)

**अनियतसंख्यत्व** (aniyatasaṅkhya–tva) *n.* the state of not having a fixed number न्यूनत्वे त्वङ्गानामेकाङ्क्षतापि स्यात् । तथा च पञ्च संधयो नोपसंह्रियेरन् । आधिक्ये पुनरनियतसंख्यत्वं स्यात् NāṭyaDa. 36. 5(20)

**अनियतसंख्यम्** (a–niyatasaṅkhyam) *adv.* for indefinite number of times यमः ··· गायत्रीं तु जपेन्नित्यम् ···। बौधायनः — 'शतकृत्वोऽपरिमितकृत्वो वा दशावराम्'। अपरिमितकृत्वः — दशोपरि शतादर्वागनियतसंख्यमित्यर्थः VīraMi. 61.10 (*on* 1.22)

**अनियतसंख्याककर्तृकत्व** (aniyatasaṅkhyākakartṛka–tva) *n.* the state of having performers of indefinite number द्विरात्रादिष्वहर्गणेषु यजतिचोदनावत्त्वे सत्यनियतसंख्याककर्तृकत्वेन वैदिकानामहीनशब्दप्रयोगात् BhāṭṭDī. iv. 62. 7 (*on* x. 6. 16)

**अनियतसंख्याकगृहीत** (aniyatasaṅkhyāka–gṛhīta) *adj.* taken for indefinite number of times दर्विहोमेषु चतुर्गृहीतं (आज्यम्) जुहोतीत्यादिनियमानुपलम्भादनियतसंख्याकगृहीते (हविर्द्रव्ये) प्राप्ते प्रथमं गृहीतेनापि होमसंभवात् ··· संख्या नियम्यते BhāṭṭCan. 61. 16 (*on* xiv. 4.6)

**अनियतसंख्याकत्व** (aniyatasaṅkhyāka–tva) *n.* the state of having an unfixed number स्वर्गकामपदेनानियतसंख्याकत्वेन प्राप्तस्याख्यातेन नियतसंख्याया विशेषणे सति कर्त्रधिकारिणोरैक्यात् ··· विशेषणविशेष्यभावादुपपन्नं सामानाधिकरण्यम् MayūMāli. 462. 4 (*on* vi. 2.2)

**अनियतसंख्याकयजमानकत्व** (aniyatasaṅkhyākayajamānaka–tva) *n.* the state of having sacrificers whose number is not definite बहुयजमानकत्वं सत्त्रत्वं षडहेनोपासीतेत्यभिप्लवगतषडहेऽतिव्याप्तिवारणाय बहुयजमानकत्वमुपात्तमेवं यजतिचोदनाचोदितत्वे सत्यनियतसंख्याकयजमानकत्वमिति प्रतीयते MayūMāli. 751. 2 (*on* x. 6. 16)

**अनियतसंख्यावाचिन्** (aniyatasaṅkhyāvāc–in) *adj.* expressive of unspecific number (or quantity) अनियतसंख्यावाचिनां चेद् बहुगणयोरेव इति नियमः LaŚabdeŚe. i. 244. 21.

**अनियतसंख्याविमर्श** (aniyatasaṅkhyā–vimarśa) *adj.* having consideration of undetermined number द्वौ वा त्रयो वा द्वित्राः वार्थेऽयं समासः । वार्थश्च यदि विकल्पः स्यात्, ततो यदि द्वौ भवतस्तदा बहुवचनं न स्यात् । तस्मात् संशयोऽत्र वार्थः स चानियतसंख्याविमर्शः PadMañ. *on* KāśiVṛ. *on* P. ii. 2.25.

**अनियतसंख्याविमर्शिन्** (aniyatasaṅkhyā–vimarśin) *adj.* which takes into consideration undetermined number संशयोऽत्र वार्थो न विकल्पः । स चानियतसंख्याविमर्शीति विमर्शविषयबहुत्वसद्भावाद्बहुवचनम् Pradī. ii. 456B. 36 (*on* ii. 2. 25)

**अनियतसंख्येयत्व** (aniyatasaṅkhyeya–tva) *n.* the state of having indefinite number of items to be counted बहुत्वसंख्यायास्त्वनियतसंख्येयत्वाद् भवति प्रकर्षः बहुतरा इति Pradī. iv. 377B. 31 (*on* v. 3.55)

**अनियतसमयसमागत** (aniyatasamaya–samāgata) *adj.* which has come down from indefinite period of time अनियतसमयसमागतसकलसैद्धान्तिकसमालम्बनीयसुचरितपरिपाकनिवृत्तप्रतिबन्धपरमपुरुषकटाक्षविशेषसमुन्मिषितसत्त्वसामर्थ्येन ··· °विषयमधुविरक्तस्य ··· भगवदुपासनं हिततमं विहितम् NyāyPari. 512.15.

**अनियतसंबद्ध** (a–niyatasambaddha) *adj.* not necessarily connected अज्ञनव्यापारोऽनपह्नवीय एवेति सिद्धमेव निषेधस्य व्यङ्ग्यत्वम् ।··· 'कस्स व ण होइ रोसो —' इत्यादावनियतसंबद्धः Kāvyānu.(He.) 35. 14.

**अनियतसंबन्ध** (aniyata–sambandha) *adj.* [*f.* –ā] **A** not having any necessary relation लक्षणीयस्यार्थस्य···नियतत्वमेव न खलु मुख्येनार्थेनानियतसंबन्धो लक्षयितुं शक्यते । प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसंबन्धः अनियतसंबन्धः संबद्धसंबन्धश्च द्योत्यते KāvyPra. 247. 2; Kāvyānu.(He.) 35.3; ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव । तत्र ··· 'कस्स व ण होइ रोसो' इत्यादौ अनियतसंबन्धः KāvyPra. 250. 1; **B** whose relation is not regulated by any other (word) शास्त्रे या षष्ठ्यनियतसंबन्धा श्रूयते सा स्थानेयोगैव स्यात् Prasā. i. 44. 8.

**अनियतसंबन्धत्व** (aniyatasambandha–tva) *n.* **i** the state of not having an invariable connection न चार्थान्तरचोदनेनार्थान्तरस्य लक्षणम् । न हि संबन्धे सत्यपि दण्डशब्दाद् दण्डिनि प्रतिपत्ति । अनियतसंबन्धत्वात् तत्र न PramāVāSvopVṛ 30. 17; **ii** the state of being that whose relation is not regulated by any other (word) यदा शब्दरूपे विधीयेते तदा सर्वस्येति स्थानषष्ठीयं संपद्यते । अनियतसंबन्धत्वात् षष्ठी स्थानेयोगेति न्यायात् Nyās. ii. 885. 19 (*on* viii. 1. 1)

**अनियतसंबन्धिविषयत्व** (aniyatasambandhiviṣaya–tva) *n.* the state of having reference to an unspecific correlatum वाक्ये हि 'राज्ञः' इति पदम् ··· स्वसंनिहितं योग्यं च पुरुषमपेक्षते ।··· अतो विशेषणविशेष्यभावेन संबन्धोऽनियतसंबन्धिविषयत्वाच्चापेक्षया यो यः संनिहितो योग्यश्च तेन संबध्यते PadMañ. *on* KāśiVṛ. *on* P. ii. 1.1.

**अनियतसंबन्ध्यपेक्षा** (aniyatasambandhy–apekṣā) *f.* requirement of any unspecific correlatum वाक्ये हि 'राज्ञः' इति पदमनियतसंबन्ध्यपेक्षयोद्भूतसंबन्धं विशेषणभूतमर्थमाचष्टे PadMañ. *on* KāśiVṛ. *on* P. ii. 1. 1.

**अनियतसहोपलम्भ** (aniyata–sahopalambha) *adj.* simultaneous cognition of which is not invariable तदनियतसहोपलम्भा एव भावा भेदेनावसीयमाना भिद्यन्ते नेतरे Kāśi. ii. 107. 8 (*on* 5(3). 32)

**अनियतसहोपलम्भत्व** (aniyatasahopalambha–tva) *n.* the state of being that whose simultaneous cognition is not invariable सहोपलम्भ-

नियमोऽपि ज्ञानार्थयोरनियमव्याप्तं भेदं व्यापकविरुद्धोपलब्ध्या प्रतिषेधन्न भेदमुपस्थापयति, भिन्नानां घटपटादीनामनियतसहोपलम्भत्वात् ŚāstrDī. 54. 22 (*on* i. 1. 5)

**अनियतसामप्राप्ति** (aniyatasāma-prāpti) *f.* employment of indefinite number of *sāmans* तत्र तत्र तदुत्तरयोः प्रागवगतं स्तोत्राङ्गत्वं नास्तीति तन्निर्वाहायानियतसामप्राप्त्यभावान्न तत्र सामनियमः VidhiRa. 17 (106. 13)

**अनियतस्थान** (aniyata-sthāna) *n.* uncertain position (in a quarter of a verse) अनियतस्थाने आवृत्तिर्यथा — कमलिनीमलिनी दयितं विना न सहते सह तेन निषेविताम् Kāvyānu.(He.) 257. 17.

**अनियतस्थानिक** (aniyatasthāni-ka) *adj.* whose original form or *sthānin* (which is to be replaced later on by a substitute or *ādeśa*) is not fixed न चेह गुणवृद्ध्योर्विधानम् । अतो नात्र व्यापारस्तस्याः । तेन यस्याप्यनियतस्थानिको वृद्धिसंज्ञक आदिभूतस्तस्यापि संज्ञा सिद्धा भवति Nyās. i. 138. 2 (*on* i 1. 73)

**अनियतस्वभाव** (aniyata-svabhāva) *adj.* [*f.* -ā] of uncertain or changing nature देहोऽयम् ⋯ जातक्षणः क्षणगुणोऽनियतस्वभावः । ⋯ स्वात्मा कथं भवति ViveCū. 157; सामान्येन सर्वेष्वनियतस्वभावेषु जन्तुषु कुतूहलमपि न संभाव्यते TilaMañ. 406.19; शक्तयस्तु पदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावाः TattvVai. 170. 18 (*on* 3. 45); सर्वात्मभावः ⋯ । स तु विप्रयोगभावोदये सत्येव सम्यग् ज्ञातो भवति व्यभिचारिभावैः । ते त्वनियतस्वभावा इति ज्ञापयितुं त्रिविधाः AṇuBh. 257.7 (*on* iii. 3. 50)

**अनियतस्वर** (aniyata-svara) *adj.* whose accent (viz. the acute, the grave or the circumflex) is not fixed (प्रत्ययः) य इदानीमनियतस्वरः सः कदाचिदाद्युदात्तः कदाचिदन्तोदात्तः कदाचिन्मध्योदात्तः कदाचिदनुदात्तः कदाचित् स्वरितः स्यात् MahāBh. ii. 6.12 (*on* iii. 1.3); अनियतस्वरप्रत्ययप्रसङ्गेऽनेकाक्षु च प्रत्ययेषु देशस्यानियमे सति वचनमिदमादेरुदात्तार्थम् KāśiVṛ. *on* iii. 1. 3; अनियतस्वरप्रत्ययप्रसङ्ग इत्यादिना सूत्रारम्भस्य प्रयोजनं दर्शयति। अनियतोऽव्यवस्थितः स्वरो यस्य स तथा Nyās. i. 489. 9 (*on* iii. 1. 3); PadMañ. *on* KāśiVṛ. *on* P. iii. 1. 3; अनियतस्वरो यः प्रत्ययस्तस्य प्रसङ्गे सति वचनमिदमादेरुदात्तार्थम् Nyās. i. 489.11 (*on* iii. 1.3); नास्मिन् कृते सत्यादेशा भवन्तो यत्र स्वरार्थोऽनुबन्धो न विधीयते ⋯ तत्रानियतस्वराः (आदेशाः) प्राप्नुवन्ति Nyās. ii. 616.17 (*on* vii. 1. 2); *m.* unfixed accent (viz. the acute, the grave or the circumflex), cf. **अनियतस्वरप्रसङ्ग**.

**अनियतस्वरत्व** (aniyatasvara-tva) *n.* the state of not having a fixed accent तित्स्वरितं एवेत्यादिकं तत्र तत्र नियमस्वरूपमाश्रयणीयं ततश्च प्रत्ययस्यानियतस्वरत्वमेव PadMañ. *on* KāśiVṛ. *on* P. iii. 1. 3; cf. **अनियतस्वर**.

**अनियतस्वरप्रसङ्ग** (aniyatasvara-prasaṅga) *m.* undesired contingency of unfixed accent (viz. the acute, the grave or the circumflex) अनियतस्वरप्रसङ्ग इति क्वचित् पाठः । तत्रानियतशब्दस्य स्वरशब्देन विशेषणसमासं कृत्वा प्रसङ्गशब्देन षष्ठीसमासः । ⋯ अनियतानामुदात्तादीनां स्वराणां प्रसङ्गे सत्यादेरुदात्तार्थं वचनम् Nyās. i. 489. 12 (*on* iii. 1.3); चिदादीनामनियतस्वरप्राप्तावन्तोदात्त एव चिदित्येवं नियमात् तेषामेव नियतस्वरत्वं स्यात् । अन्येषां त्वनियतस्वरप्रसङ्गः Pradī. iii. 13B. 38 (*on* iii. 1. 3); अनियतस्वरप्रसङ्ग इति पाठे त्वनियतस्य स्वरस्य प्रसङ्ग इत्यर्थः । ⋯ तस्माद् ये एकाचः प्रत्ययास्तेष्वनियतस्वरप्रसङ्गे वचनमिदमुदात्तार्थम् PadMañ. *on* KāśiVṛ. *on* P. iii. 1.3; प्रत्ययः आद्युदात्तः स्यात् । अनियतस्वरप्रसङ्गे अनेकाक्षु च देशस्यानियमे प्राप्ते वचनम् Prasā. ii. 753. 20.

**अनियतस्वरप्राप्ति** (aniyatasvara-prāpti) *f.* undesired possibility of unfixed accent चिदादीनामनियतस्वरप्राप्तावन्तोदात्त एव चिदित्येवं नियमात् तेषामेव नियतस्वरत्वं स्यात् Pradī. iii. 13B. 36 (*on* iii. 1. 3); ऋग्वेदादिविधेयकर्माङ्गमन्त्राणामनियतस्वरप्राप्तौ स्वरविशेषनियमार्था एते विधयः पर्यवस्यन्ति VidhiRa. 13(92.13)

**अनियतस्वरूप** (aniyata-svarūpa) *adj.* having no fixed nature शीतं कदाचित् सुखं कदाचित् दुःखम् । तथा उष्णमपि अनियतस्वरूपम् GītāBh. (Śaṅ.) 26. 5 (*on* 2. 14)

**अनियतस्वामिक** (aniyatasvāmi-ka) *adj.* not having a fixed number of sacrificers द्वादशाहे चास्ति सत्त्रत्वमहीनत्वं चेति धर्मद्वयम् । तत्र ⋯ अनियतस्वामिके यजतिचोदनाचोदिते चाहीनत्वमखण्डोपाधिः BhāṭṭDī. iii. 22. 18 (*on* viii. 2. 5)

**अनियतहेतुक** (aniyatahetu-ka) *adj.* not having a definite cause स्वाभाविकं नाम किमुच्यते किमहेतुकमविज्ञातहेतुकमनियतहेतुकं वा ⋯ नाप्यनियतहेतुकं कार्यं किंचिदस्ति NyāyMañ. ii. 41. 22.

**अनियतहेतुकता** (aniyatahetuka-tā) *f.* the state of not having a fixed or definite cause अनुपलब्धावप्युपलब्धिप्रागभावप्रध्वंसाभावविकल्पेनाभावप्रमितेरनियतहेतुकताया दुष्परिहरत्वात् TattvPradī.(Ci.) 130.7.

**अनियतहेतुकत्व** (aniyatahetuka-tva) *n.* the state of not having a definite cause न च प्रतिबन्धकाभावविशिष्टा सामग्री कारणम्, अभावस्याकारणत्वात् । ⋯ प्राक्प्रध्वंसादिविकल्पेन चानियतहेतुकत्वापातात् NyāyKuA. i. 27. 3; i. 30. 5; प्रमाणार्थः सुखदुःखलक्षणोऽनियतः ⋯ नियमरहितः, अनियतहेतुकत्वात् NyāyVārPari. 205. 5; सत्यज्ञानेऽपि भेदाग्रहादेव व्यवहरतीत्यनियतहेतुकत्वेन युगपत्प्रवृत्तिनिवृत्ती Kiraṇā. 268.16; यदि कार्यस्यानियतहेतुकत्वपरिहाराय भावस्यापि विशिष्टाभावात्मनैकीकरणं साध्यत इति मतम्, हन्त तर्हि क्वचिदप्यनियतहेतुकत्वं न प्रसञ्जनीयम् NyāyKu. 168.11; 162. 19; इतरपदस्य इतरपदार्थसंसर्गज्ञानपरत्वं तात्पर्यम् ⋯ । अत एव शाब्दबोधे नानियतहेतुकत्वम् TattvCin. iv(1). 180.1; NyāySu.(Ja.) 50A. 10 (*on* i. 1. 1)

**अनियतांश** (aniyatāṁśa) *m.* indefinite or alternative element यत्पक्षे विधिमन्तरेण प्राप्नोति तच्छ्रूयमाणमनियतांशे प्रविशन्नियमोऽभिधीयते ṬupṬ. 27.12 (*on* iv. 2.24)

**अनियताकार** (aniyatākāra) *adj.* **i** having a limitless form कस्य चान्यत्राभावावसायः। यो नियताकारोऽर्थः तस्य, न तु अनियताकारः NyāyBiṬ. 204.4 (*on* 3.75); **ii** having no fixed nature नासयाप्यन्धजडया क्षयिण्या परिकल्पितः। पेलवोऽनियताकारो गन्धो नाहमचेतनः YogVā. v. 34. 15; *m.* not a definite form (i. e. constructed or conceptual form) नियताकारं च स्वलक्षणमनियताकारश्चास्यां बुद्धौ चकास्ति PrakaPañ. 74. 11.

**अनियताकारत्व** (aniyatākāra-tva) *n.* **i** the state of not having essential nature, the state of having a conceptualised form नियताकारत्वमेव ह्येकत्वमनियताकारत्वं चानेकता ĀtmaTaVi. 453. 6; **ii** the state of not having a certain nature अनैकान्तिकत्वं चास्तिनास्त्यादिरूपेणानियताकारत्वम् SarvaMaSaṁ. 17.9.

**अनियताकारद्वयोल्लेखिन्** (aniyatākāradvayollekhin) *adj.* which describes two forms indecisively अनियताकारद्वयोल्लेखी तु संशयो भवति स्थाणुर्वा स्यात्पुरुषो वेति NyāyMañ. i. 84. 31.

**अनियताकृति** (aniyatākṛti) *adj.* having no prescribed shape यदि पुनरिष्टकाः सन्तो(? त्यो)ऽनियताकृतय उपादीयेरन् चयनार्थो व्याहन्येत SaṅkarKāBh. 68. 9 (*on* ii. 1.47)

**अनियताक्षर** (aniyatākṣara) *adj.* having no fixed number of syllables अनिबद्धपदं छन्दस्तथा चानियताक्षरम् । अर्थापेक्ष्यक्षरस्यूतं ज्ञेयं चूर्णपदं बुधैः NāṭyaŚā. 14. 40.

**अनियताक्षरत्व** (aniyatākṣara-tva) *n.* the state of not having a fixed number of syllables यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यते Śuklayajuḥsarvānukramaṇikā 1. 1.

**अनियताक्षरपादावसान** (aniyatākṣarapādāvasāna) *adj.* having no fixed number of syllables, feet and end तस्य यजुरेव शिरः। यजुरिति अनियताक्षरपादावसानो मन्त्रविशेषः TaiUBh. 245. 4 (*on* 2. 3); ऋचः नियताक्षरपादावसानाः ⋯ यजूंषि अनियताक्षरपादावसानानि वाक्यरूपाणि MuṇḍUBh. 329. 15 (*on* ii. 1.6)

**अनियताक्षरावसान** (a-niyatākṣarāvasāna) *adj.* having no definite number of syllables and end अनियताक्षरावसानो मन्त्रः पुरस्कृतगानो यजुः VīraMi. 13. 21 (*on* 1. 3)

**अनियताङ्क** (aniyatāṅka) *m.* indeterminable digit अनियताङ्कैरतुल्यैश्च विभेदे करणसूत्रम् बृ( वृ )त्तार्धम् Līlā. 272.

**अनियताङ्गत्व** (aniyatāṅga-tva) *n.* the state of not being a definite subsidiary 'तेनोभौ कुरुत' इति वाक्येनानियताङ्गत्वमपि पूर्वप्रस्तुताप्त्यादिगुणकोद्गीथविद्यामात्रस्योच्यते ŚivārkaMaDī. ii. 358. 28 (*on* iii. 3.41)

**अनियताचार** (aniyatācāra) *adj.* whose conduct is not regulated by rules जीवन्मुक्त ईश्वरदर्शनाह्लादाब्धिमज्जित अनियताचारः स्वतन्त्रः ⋯ आस्ते PārāSū. 30.22.

**अनियताचारम्** (a-niyatācāram) *adv.* **i** without observing a fixed code of conduct, capriciously एषा हि पदमेकत्र न निबध्नाति दुर्भगा। दग्धेवानियताचारमितश्चेतश्च धावति YogVā. i. 13.4; **ii** without a fixed movement, with irregular movement, YogVā. i. 13. 4.

**अनियतात्मन्** (aniyatātman) *adj.* who has not controlled his mind, not self-controlled रजस्वलां प्राप्तवतो नरस्यानियतात्मनः। दृष्ट्यायुस्तेजसां हानिरधर्मश्च ततो भवेत् SuśruS. iv. 24.121; नियतमनियतात्मा रूपमेतद्गृहीत्वा ⋯ अहं जनकनृपसुतां तां हर्तुकामः प्रयामि Prati. 5.7; (अतस्तु विपरीतस्य नृपतेरजितात्मनः। संक्षिप्यते यशो लोके) अत्र हेतुरजितात्मता। यथाशास्त्रमनियतात्मा यः (नृपतिः) ManuBh. ii. 11. 2 (*on* 7.34); यदा द्विपः। भोजनानि निषेवेत रूक्षाण्यजलजानि च। सततं सेवमानस्य द्विपस्यानियतात्मनः।⋯ गुल्मो भवति पित्तजः Hastyāyur. 326. 2 (2. 68); धनलुब्धो ह्यसंतुष्टोऽनियतात्माजितेन्द्रियः। सर्वा एवापदस्तस्य यस्य तुष्टं न मानसम् Ind.Spr. 1291; *m.* [Inst.] with indefinite

character द्वादशाहोऽप्युभयात्मा। तस्योभयविधस्याप्यनियतात्मना सर्वत्र प्रवृत्तिः ŚāstrDī. 564. 10 (*on* viii. 2.5)

**अनियतात्माभिमानबुद्धि** (aniyatātmābhimānabuddhi) *f.* uncertain notion of erroneous identification as the self सर्वस्य लोकस्य कार्यकरणसंघाते तद्वृत्तिषु च अनियतात्माभिमानबुद्धिः यथाविवेकं जायते BṛĀraUBh. 528.3 (*on* iv. 3.7)

**अनियताधार** (aniyatādhāra) *adj.* not having a fixed support तस्मादनियताधाराः सप्त सामयिका इमे। सहजा अपि लीयन्ते बलिष्ठेन तिरस्कृताः BhaktiRaSi. ii. 5.36; प्रागत्रानियताधाराः कदाचित् काप्युदित्वराः। गौणा भक्तिरसाः सप्त लेख्या हास्यादयः क्रमात् BhaktiRaSi. iv. 1. 3.

**अनियताध्ययन** (aniyatādhyayana) *n.* (Vedic) study not in accordance with the stipulated rules इहाप्यनियताध्ययनेन (क्रतुः) विगुणो भवति ṬupṬ. 100.18 (*on* vi. 1.37)

**अनियतानुकार** (aniyatānukāra) *m.* imitation having varied representation (of worldly sentiments) तस्मादनियतानुकारो नाट्यमित्यपि न भ्रमितव्यम् AbhinBhā. i. 37.8 (*on* 1.107)

**अनियतानुपूर्वीकता** (aniyatānupūrvika-tā) *f.* the state of not having any fixed sequential order त्रयाणामार्षेयाणामनियतानुपूर्वीकतयोच्चारणम् SaṅkarKāBh. 96. 4 (*on* xv. 4.4)

**अनियतानुमानोत्पत्तिकारण** (a-niyatānumānotpattikāraṇa) *n.* not the cause of the origination of proper inference वैशेषिकादिसमयसिद्धा अपि कार्यकारणभावादयस्संबन्धप्रकाराः प्रत्युक्ता वेदितव्याः। तेऽपि ह्यनियताननुमानोत्पत्तिकारणम्(?अनियतानुमानोत्पत्तिकारणम्) Kāśi. iii. 8.13 (*on* 5(4). 3½)

**अनियतानुष्ठान** (aniyatānuṣṭhāna) *n.* varied performance or practice अपरे त्वाहुः ··· सुवर्णशब्दस्य ··· परिमाणार्थतैव न्याय्येति एवं च सत्यनियतानुष्ठानप्रसङ्गभङ्गः CaturCin. i. 453. 19.

**अनियतानेककार्यकारित्व** (aniyatānekakāryakāri-tva) *n.* the state of being that which causes many varied products or effects इरापदस्थले तु विकारार्थतद्धितेनानियतानेकपदविकारत्वापत्त्या अनियतानेककार्यकारित्वप्रसक्तौ अनुवादबलेन नियममात्रम्, न त्वपूर्वावगतिरिति वैषम्यम् MīmāKau. ii. 29.13 (*on* ii. 3. 4)

**अनियतानेककार्यप्राप्ति** (aniyatānekakārya-prāpti) *f.* possibility of (the occurrence of) many alternative effects क्वचिदेकस्योपायस्यानियतानेककार्यप्राप्तावेककार्यनियमो यथा 'यद्योन्यां तदुत्तरयोर्गायती'ति VidhiRa. 17(105. 14)

**अनियतानेकद्रव्यकत्व** (aniyatānekadravyaka-tva) *n.* the state of having many alternative substances अर्थादनियतानेकद्रव्यकत्वे प्राप्ते केवलदधिनियमादेकार्थविधानम् TantrVā. 544. 7 (*on* ii. 2. 25); प्रकृतावर्थादनियतानेकद्रव्यकत्वे प्राप्ते व्रीहिखदिरादिश्रवणं नियमार्थम् ŚāstrDī. 767. 4 (*on* x. 7. 16)

**अनियतानेकद्रव्यप्राप्ति** (aniyatānekadravya-prāpti) *f.* possibility of (the employment of) many alternative substances अत्र 'समिधो यजती' त्यादिवाक्यैर्द्रव्यविशेषासंयुक्तत्वेनोत्पन्नानां प्रयाजानां साधनत्वेनानियतानेकद्रव्यप्राप्तौ जौहवाज्येनैव प्रयाजाः कर्तव्या इत्युपायनियमः ŚivārkaMaDī. i. 60.11 (*on* i. 1. 1)

**अनियतानेकद्रव्याक्षेप** (aniyatānekadravyākṣepa) *m.* implication of many alternative substances खदिरविधिरपि नियमविधिरेव। तदभावे — यूपस्य प्रकृत्याकाङ्क्षायामनियतानेकद्रव्याक्षेपस्यानिवार्यत्वात् VidhiRa. 4 (19. 1)

**अनियतानेकपदविकारत्व** (aniyatānekapadavikāra-tva) *n.* the state of having many alternative modifications of words (e. g. *irā* becomes *āyirā* and *oyirā*) अनुवादतो विशेष्यप्राप्त्यङ्गीकारे विशिष्टविधिमात्रोच्छेदापत्तेः। इरापदस्थले तु विकारार्थतद्धितेनानियतानेकपदविकारत्वापत्त्या अनियतानेककार्यकारित्वप्रसक्तौ अनुवादबलेन नियममात्रम् MīmāKau. ii. 29. 12 (*on* ii. 3. 4)

**अनियतानेकर्ग्द्वयप्राप्ति** (aniyatānekargdvaya-prāpti) *f.* possibility of (the employment of) many alternative pairs of *ṛks* स्तोत्राङ्गत्वेनावगतस्य साम्नस्तृचगाननिर्वाहाय तत्संस्कार्यत्वेनानियतानेकर्ग्द्वयप्राप्तावुत्तरयोर्नियमः VidhiRa. 17 (106.1)

**अनियतानेकसामप्राप्ति** (aniyatānekasāma-prāpti) *f.* possibility of (the employment of) various alternative *sāmans* स्तोत्राङ्गत्वेनावगतयोरुत्तरयोः ऋचोः संस्कारकत्वेनानियतानेकसामप्राप्तौ योनिसाम्ना नियमः संभवति VidhiRa. 17 (106. 2)

**अनियतानेकार्थ** (aniyatānekārtha) *m.* many meanings which are not specific or relevant एकधाधिकरणे वैधपदस्यानियतानेकार्थपरताया निरस्तत्वात् LalitāSaBh. 223.17 (*on* 291)

**अनियतानेकोपभोग्या** (aniyatānekopabhogyā) *adj.* (*f.*) who is to be enjoyed (sexually) by many without restriction अनियतानेकोपभोग्या सामान्या (नायिका) SaraKaṇṭhā. 688. 8.

**अनियतानेकोपाय** (aniyatānekopāya) *m.* many alternative means (नियमविधिः) क्वचिदेकस्मिन् कार्येऽनियतानेकोपायप्राप्तावेकोपायनियमः यथा व्रीहीनवहन्तीति VidhiRa. 17 (105. 12); नित्यप्राप्तिश्च तस्य तयोः प्रकरणानुगृहीतमन्त्रलिङ्गकल्प्यविधिलभ्या न तु अनियतानेकोपायकल्पनालभ्या VidhiRa. 26 (136.3)

**अनियतायुस्** (aniyatāyus) *adj.* whose duration of life is uncertain यदृच्छया समापन्नमुत्तार्य नियतायुषम्। भिषङ्मानी निहन्त्याशु शतान्यनियतायुषाम् CaraS. i. 9. 15 (1922 Ed.); ते घुणाक्षरवत् कंचिदुत्थाप्य नियतायुषम्। घ्नन्ति वैद्याभिमानेन शतान्यनियतायुषाम् RasRaSa. 30.113.

**अनियतार्थ** (aniyatārtha) *m.* not a specific object न च नियमे संकेतस्य व्यापारः प्राक्संकेतादनियतार्थप्रत्ययोदयप्रसङ्गात् PrakaPañ. 304. 7; विकल्पविज्ञानं विकल्पवासनोत्थापितमनियतार्थग्राहि मानसमात्मीयमुत्प्रेक्षालक्षणं व्यापारं तिरस्कृत्यानुभवप्रभवतयाभिमन्यन्ते प्रतिपत्तारः TātpaṬ.(Vā.) 133. 24 (*on* i. 1.3); अनियतार्थप्रतीतिजनकं च कथं प्रमाणं नाम NyāyVārPari. 153.5.

**अनियतालय** (aniyatālaya) *adj.* having no fixed abode नानाचीरधरश्चैव रथ्यास्वनियतालयः। उन्मत्तो भवति ह्येवं तस्यैतां कारयेद्गतिम् NāṭyaŚā. 12.127.

**अनियतावधि** (aniyatāvadhi) *adj.* having no fixed limits अयमगाधगभीरगुरुर्गुणैरुपगतोऽनियतावधिरार्द्रताम्। यतिरिवाखिलसत्त्वहितव्रतो जलनिधिः सकलैरवलोक्यताम् RāghPāṇ.(Dha.) 8.2.

**अनियतावधिकत्व** (aniyatāvadhika-tva) *n.* the state of not having a fixed limitation (about origination) निरवधित्वे अनियतावधिकत्वे वा कादाचित्कत्वव्याघातात् NyāyKuA. i. 10. 5.

**अनियतावधित्व** (aniyatāvadhi-tva) *n.* the state of not having fixed limitation (about origination) निरवधित्वे अनियतावधित्वे वा कादाचित्कत्वव्याघातात् नियतावधित्वे हेतुवादाभ्युपगमात् NyāyKuA. i. 12. 6.

**अनियतावयव** (aniyatāvayava) *adj.* **1** not having a fixed number of syllabic parts (in the metre) अनियतावयवं यमकमेतत् Kāvyānu.(He.) 266. 18; **2** not having fixed members of syllogism दृष्टश्चानियमेन भाष्यादिषु प्रयोगः। क्वचित् पञ्चावयवः। क्वचित् त्र्यवयवः।··· अतोऽप्यनियतावयव एव प्रयोगः NyāyPari. 160. 7.

**अनियतावस्थात्मक** (aniyatāvasthātma-ka) *adj.* whose nature is not exactly fixed अनियतावस्थात्मकं स्थायिनमुद्दिश्य ··· आस्वादरूपा प्रतिपत्तिरनुकर्त्रालम्बना नाट्यैकगामिनी रसः Loc. 69. 3 (*on* 2. 4)

**अनियतावस्थान** (aniyatāvasthāna) *adj.* not having fixed camps कुसुमशेखरः ··· अनियतावस्थानहयसप्तिसैन्यसतताशून्यपर्यन्ताम् ··· कांचिनगरीमकरोत् TilaMañ. 82. 20.

**अनियताशङ्का** (aniyatāśaṅkā) *f.* apprehension of being unruly सः चतुरः सृष्ट्वापि वर्णान् नैव व्यभवत् उग्रत्वात्क्षत्रस्यानियताशङ्कया BṛĀraUBh. 147.16 (*on* i. 4. 14)

**अनियताष्टाकपालादिद्रव्य** (aniyatāṣṭākapālādidravya) *n.* unfixed offering material (to be cooked) on the eight potsherds etc. तत्र च निर्वापमात्रोद्देशे अग्न्यादिदेवतानामनियताष्टाकपालादिद्रव्यसंबन्धिनिर्वापसंबन्धापत्तेः MīmāKau. iii(2).224.4 (*on* ii. 2.18)

**अनियताहार** (aniyatāhāra) *adj.* who eats any food अस्पृश्योऽस्तु मलीमसोऽस्त्वनियताहारोऽस्तु ··· काकः ···। भुङ्क्ते भोज्यमुपस्थितं समुपहूयैव स्वयं बान्धवान् AnyāŚ.(Nī.) 82.

**अनियति** (a-niyati) *f.* **1** uncertainty, doubt यथैवास्य परैरुक्तस्तथैवेनं विवक्षति। इत्येषानियतिस्तत्र संबन्धवदनादिता TattvSaṁ. 2678; **2** absence of obligatoriness, optionality प्रत्यासन्नां वावहन्तिनियततामुत्सृज्य नान्यनिवृत्तिफलकल्पनावसरः। तत्प्रसक्तिद्वारा त्ववहन्तेरनियतिरासीदिति नियमान्तर्गतवार्थान्निवृत्तिर्गम्यते TantrVā. 59.19 (*on* i. 2. 42); **3** absence of invariable connection पूर्वस्मिन्नित्यताद्यैरनियतिविहती TattvMu. 4. 6; **4** absence of definiteness स्याद् वानैकान्त्यमेषामनियतिमविसंवादिबाधश्च सूते TattvMu. 4. 33; तत्तच्छब्दप्रयोगेष्वनियतिरुचितैः संघटेतोपचारैः TattvMu. 5. 73; [Inst.] without any rule or restriction विशेषकार्यजनकं यदि कारणमिष्यते। कुतः समानरूपत्वं कार्याणामपि सर्वशः। अतोऽनियत्या यत् किंचिद्यस्य कस्यापि कारणम्। अदृष्टमपि तस्यैव विशेषापादकं कुतः AnuVyā. 29A. 5 (*on* 2. 2); वेदत्रयोक्तधर्माणामृत्विग्भिः संगतिस्त्रिभिः। अनियत्या नियत्या वा NyāyMāVi. 141. 25 (*on* iii. 3. 6); अनियत्या घटो घटस्यैव नीलो नीलस्यैवेति नियतिं विना NyāySu.(Ja.) 392A.6 (*on* ii. 2. 7)

**अनियतिनय** (aniyati-naya) *m.* doctrine of options आत्मा हि तावत् ··· एकं द्रव्यम् ··· अनियतिनयेन नियत्यनियमितौष्ण्यपानीयवदनियतस्वभाव-

भासि TattvPradī.(A.) 370. 10 (*on* 3.75)

**अनियतिविरह** (a–niyativiraha) *m.* absence of the lack of the invariable presence (i. e. invariable presence) भ्रान्तौ रूप्यादिरर्थो विलसति निरधिष्ठान इत्याहुरेके, तत्राधिष्ठानदृष्टेरनियतिविरहात् TattvMu. 4. 29 (Vṛtti अनियतिविरहात् नियमेन स्थितत्वात्)

**अनियतिशमन** (aniyati–śamana) *n.* cessation of indefiniteness संबन्धे सर्वतुल्ये प्रसजति गुणजात्यादिसंकीर्णभावः, तत्तद्द्वन्द्वस्वभावादनियतिशमने निष्फलान्यस्य क्लृप्तिः TattvMu. 5.127.

**अनियतीकृत** (a–niyatīkṛta) *adj.* not made fixed, not rendered restricted पूर्वोक्ता अहिंसादयो यमाः … अनवच्छिन्नाः … अनियतीकृताः RājMār. 34. 12.

**अनियतेच्छाविच्छेद** (aniyatecchā–viccheda) *m.* cessation of indecisive desire कथं हि प्रमाणमप्यनुगृह्णीयात् अनियतेच्छाविच्छेदेनेत्युक्तम् …। अनियतेच्छाविच्छेदे कथं स्मर्यात् Kiraṇā. 260. 15.

**अनियतेच्छाविच्छेदकत्व** (aniyatecchāvicchedaka–tva) *n.* the state of being the destroyer of the indecisive desire ननु तर्कस्य … कथं प्रमाणानुग्राहकत्वमिति चेत्। मैवम्। अनिष्टापादकत्वेनानियतेच्छाविच्छेदकत्वनियमात् TārkiRa. 204. 2.

**अनियतेन्द्रिय** (aniyatendriya) *adj.* whose sense-organs are not controlled शुश्रूषुरपि दुर्मेधाः पुरुषोऽनियतेन्द्रियः। नालं वेदयितुं कृत्स्नौ धर्मार्थौ MahāBhā. x. 5. 1; अविदुषोऽनियतेन्द्रियस्य संसारार्हत्वम् … अभिधाय Vedānt-Kau. 116.3 (*on* i. 4.1)

**अनियतैकतरगोत्र** (aniyataikatara–gotra) *n.* class of people who may not be drawn specifically to any one of the two (alternatives) पुनरपरं महामते पञ्चाभिसमयगोत्राणि।… अनियतैकतरगोत्रम् अगोत्रं च पञ्चमम् LaṅkāSū. 2.127 (27. 19)

**अनियतैकतरावलम्बन** (aniyataikatarāvalambana) *n.* taking recourse to any one of the two (alternatives) यत्र द्वयोरर्थयोर्विरुद्ध(त्वा)त् समुच्चयाभावेन तुल्यबलवत्त्वाच्च एकस्य बाधासंभवादनियतैकतरावलम्बनेन पाक्षिकत्वं स विकल्पः AlaṅkāRa. 88(2)

**अनियतैकत्व** (aniyataikatva) *n.* the state of being unspecific (i. e. many) single individuals सेनावनादौ … न तत्र नियता सहस्रसंख्योत्पद्यते अनियतैकत्वालम्बनत्वात् Kiraṇā. 204. 2; यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते SiddhāMu. 62. 7 (*on* 109)

**अनियतैकार्थक** (aniyataikārtha–ka) *adj.* not having a fixed single purpose एकधाधिकरणे ह्यनियतैकार्थकस्यैव निरासो न पुनर्नियतानेकार्थकस्य Lalitā-SaBh. 223. 20(*on* 291)

**अनियतोदक** (aniyatodaka) *adj.* not requiring a fixed water-place अनियतोदकं दार्षद्वतवदवभृथादि KātyŚS. xxiv. 7.10 (comm. अनियतोदकोऽवभृथः कार्यः, Vyākhyā अत्रावभृथे उदकनियमो न भवति)

**अनियतोद्बोध** (aniyatodbodha) *adj.* having no fixed awakening अनियतोद्बोधस्य संस्कारस्य शक्तिं विना नियतोद्बोधे हेत्वभावात् नियता स्मृतिरेव न स्यात् TattvCin. iv(2). 595. 4.

**अनियतोद्बोधकत्व** (aniyatodbodhaka–tva) *n.* the state of being that which does not rise invariably संस्कारस्यानियतोद्बोधकत्वेऽपि जात्यंशोद्बोधकादेव व्यक्त्यंशोद्बोधनियमकल्पना TattvCin. iv(2). 576. 9.

**अनियतोद्बोधहेतु** (aniyatodbodhahetu) *adj.* having not fixed cause of awakening संस्कारास्त्वनियतोद्बोधहेतवः PrakaPañ. 361. 7.

**अनियतोपक्रम** (aniyatopakrama) *adj.* undertaking of which is not fixed or mentioned आश्वलायनानाम् … क्षत्रियवैश्यकर्तृकपादप्रक्षालनेऽनियतोपक्रमं पादप्रक्षालनम् VīraMi.(Āhnika.) 61.9.

**अनियतोपसर्पणापसर्पण** (aniyatopasarpaṇāpasarpaṇa) *n.* uncertain contact and non-contact, uncertain approach and separation न च … अनियतोपसर्पणापसर्पणकारणप्रयुक्तत्वाच्च संबन्धासंबन्धयोः … अयं विरोधोऽर्थात् सिध्यति ĀtmaTaVi. 160. 10.

**अनियतोपादानक्लृप्ति** (aniyatopādāna–kḷpti) *f.* assumption of varied material causes अनियतोपादानक्लृप्तेर्गुरुत्वात् NyāySiA. 200. 5.

**अनियतोपादानत्व** (aniyatopādāna–tva) *n.* the state of not being the fixed material cause अनियतोपादानत्वादिकं तु तत्त्वेष्वेवानियतोपादानत्ववदागमतदाभासयोः प्रामाण्याप्रामाण्याभ्यां निर्वाह्यम् NyāySiA. 250. 18.

**अनियतोपादानत्वोपादेयत्व** (aniyatopādānatvopādeyatva) *n.* doubtful material causality and producthood वचनेषु च (नित्यानाम्) वर्णानामनियतोपादानत्वोपादेयत्वदर्शनात् NyāySiA. 249.7.

**अनियतोपाध्युन्नायिका** (aniyatopādhy–unnāyikā) *adj.* (*f.*) leading towards unfixed associative condition अनियतोपाध्युन्नायिका दिक् Upask. 115.9 (*on* ii. 2. 10)

**अनियतोपायग्रहण** (aniyatopāya–grahaṇa) *n.* acceptance of any means बहुषूपायेषु … प्रमाणानुपन्यासात् विनिगमनाविरहादनियतोपायग्रहणस्यैव युक्तत्वात् MayūMāli. 727. 33 (*on* x. 5. 13)

**अनियतोपायरूप** (aniyatopāya–rūpa) *adj.* of the nature of an alternative means लोकतः प्राप्तमनियतोपायरूपं विध्यसंस्पर्शात् क्रतोरनङ्गम् PūrvottaVāNaMā. 54. 1.

**अनियतोपायाक्षेप** (aniyatopāyākṣepa) *m.* inference about an alternative means प्रत्यक्षशास्त्रसिद्धेनैकेनोपायेन नैराकाङ्क्ष्यादनियतोपायाक्षेप एव न प्रवर्तते VidhiRa. 1 (3. 21); ŚivārkaMaDī. i. 52. 29 (*on* i. 1. 1)

**अनियतोपायान्वेषण** (aniyatopāyānveṣaṇa) *n.* search for an alternative means न च … नीवारपुरोडाशप्रतिष्ठापनेऽप्येवमनियतोपायान्वेषणप्रसङ्गः ŚivārkaMaDī. ii. 424.26 (*on* iv. 1. 1)

[1]**अनियत्त** (a–niyatta) *adj.* not controlled नरनारायणावेतौ …। अनियत्तौ नियन्तारौ MahāBhā. viii. 63. 54.

[2]**अनियत्त** (an–iyatta) *adj.* unlimited व्योम …। अनियत्तमसंकोचमनन्तं व्यवतिष्ठते AhirbuS. 10.16.

**अनियत्तता** (aniyatta–tā) *f.* the state of having no limitation तन्निर्गतस्तदनु तौलवभूमिपालैरादाय दत्तमनियत्ततया स वित्तम्। आशां कुबेरभरिताम् … प्रायात् Acyutarā. 10. 46.

**अनियत्ता** (an–iyattā) *f.* [Inst.] without any limitation गणभृतां हृदये प्रमिताक्षरापि बत वाग्भवतः। अनियत्तया प्रतिपफाल ŚrīVīraSta. 13.

**अनियद्रूप** (an–iyadrūpa) *adj.* not having this much form, having an unlimited form नेति स सत्यनामादिकम् अनी(? नि)यद्रूपमस्ति GoviBh. 207.13 (*on* iii. 2. 22)

**अनियन्तव्य** (a–niyantavya) *adj.* which cannot be controlled नियन्तव्येत्यनियन्तव्यव्याध्यादिव्यवच्छेदः NyāySiA. 208.26.

**अनियन्तृ** (a–niyantṛ) *adj.* that which does not pervade (*lit.* control) अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः NyāyKuA. i. 224. 5.

**अनियन्तृक** (aniyantṛ–ka) *adj.* not having the controller or the driver (as the causative agent) वहेरनियन्तृके। वहेः प्रयोज्ये कर्तरि नियन्तृरहिते द्वितीया न भवति CāndraVyā. ii. 1. 48.

**अनियन्तृकता** (aniyantṛka–tā) *f.* the state of having no controller or leader नहुषः …। अनियन्तृकताविषादमग्नैरनुमेने कथमप्यमर्त्यलोकैः ŚivLī. 3.15.

**अनियन्तृकर्तृक** (aniyantṛkartṛ–ka) *adj.* not having the controller (or the driver) as the causative agent वहेरनियन्तृकर्तृकस्य Vār. 6 *on* P. i. 4.52; वहति भारं देवदत्तः। वाहयति भारं देवदत्तेन। अनियन्तृकर्तृकस्येति किमर्थम्। वहन्ति यवान् बलीवर्दाः। वाहयन्ति बलीवर्दान् यवान् MahāBh. i. 337. 21 (*on* i. 4.52); KāśiVṛ. *on* i. 4. 52; SaraKaṇṭhā.(Gr.) i. 1. 46.

**अनियन्तृता** (aniyantṛ–tā) *f.* the state of not being a controller यदि कुर्यादसत्कालानियतं नियतं परः। तत् स्यादतिप्रसक्तत्वमन्यथा चानियन्तृता KhaṇḍanKhā. 1094.2 (comm. अनियामकत्वम्)

**अनियन्त्र** (a–niyantra) *adj.* unrestrained पोटारतं खलरतं रतमनियन्त्रं च संप्रोक्तम् KandaCū. ii. 10. 25.

**अनियन्त्रण** (a–niyantraṇa) *adj.* [*f.* -ā] having no restriction, unchecked, uncontrolled अवज्ञानमप्यनियन्त्रणं प्रणयमुत्प्रेक्षते Kād. 235.7; यदि प्रीतिर्मयि तेऽस्त्यनियन्त्रणा MahāP. 7.183; (अनियन्त्रणसंभाषाः) अनियन्त्रणमनिषिद्धं संभाषणं यासां नायकेन सह JayaMa. 265. 20 (*on* 5. 2); गोप्याङ्गस्यादर्शनेऽनियन्त्रणं निधुवनविलसितम् Kāvyānu.(He.) 35. 17; तत् स्वामिन्ननियन्त्रणं विजयते तेजस्विनां चेष्टितम् AlaṅkāRa. 59(5); छुन्दानकादिदेशस्थग्राम्याणामनियन्त्रणः। लोत्रभूम्यपहारेण तद्देशेशोऽपि सोऽभवत् RājTa.(Śrī.) 4. 373; मूढता मुहुरेतेषामापतत्यनियन्त्रणा YātrāPra. 2. 58; राजदारदर्शनेष्वनियन्त्रणः कृतोऽसि महाराजलङ्केश्वरेण AdbhuDa. 5. 32(6); *n.* absence of restriction उचितसंभाषणोऽनियन्त्रणात् सिद्धः JayaMa. 261. 9 (*on* 5.1); अभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ KāvyPra. 611.1; Kāvyānu. (He.) 332.4; योगरूढपदस्य रूढिशक्तेरनियन्त्रणेन … उक्तदोषस्यानुवृत्तेः RasGaṅ. 180. 9.

**अनियन्त्रणता** (aniyantraṇa–tā) *f.* the state of having no restriction अतिगोष्ठी … पुरुषैः सहानियन्त्रणता।… स्त्रीणां विनाशकारणानि KāmSū. 304. 3 (5.6)

**अनियन्त्रणनिर्भरम्** (aniyantraṇa–nirbharam) *adv.* in a manner absolutely free from restriction शिशुजनोचिताभिश्च क्रीडाभिरनियन्त्रणनिर्भरम-

पनीतो बालभावः Kād. 177. 12.

**अनियन्त्रणसंभाषा** (aniyantraṇa–sambhāṣā) *adj.* (*f.*) having no restraint on conversation प्रथमसाहसा अनियन्त्रणसंभाषाश्च स्वयं प्रतार्याः KāmSū. 265. 17 (5. 2)

**अनियन्त्रणस्नेह** (aniyantraṇa–sneha) *m.* unrestricted devotion अनियन्त्रणस्नेहपरवशानुचरः ··· अयमवनिसुरधुरंधरो मन्दिराय मन्दमन्दमस्पन्दत YātrāPra. 4. 27(1)

**अनियन्त्रणा** (a–niyantraṇā) *f.* lack of restriction or control पुरुषैः कैश्चिदनियन्त्रणा नियन्त्रणाभावः। ··· (स्त्रीणां) विनाशकारणानि JayaMa. 304. 7 (*on* 5. 6); स्त्रीत्वं क्षीबत्वमेकान्तः पुंसो लाभोऽनियन्त्रणा। यत्र पञ्चाग्नयस्तत्र वार्ता शीलतृणस्य का KathāSaSāg. vii. 2. 87.

**अनियन्त्रित** (a–niyantrita) *adj.* [*f.* ·ā] **A** not restricted or limited यदि हि न स्यात् कुम्भकृतो 'घटं करवाणि' इति य उत्तरक्रियामपेक्ष्य इच्छाशब्दवाच्यः परामर्शः, एषणीयेन स परामृश्येनानियन्त्रितः PratyabhiVi. i. 237.6 (*on* i. 5.10); यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावाद-नियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यम् SāhiDa. 61. 12; द्वितीयार्थ-वाचकतायामनियन्त्रितायामप्युपमादेर्व्यङ्ग्यत्वस्य निष्प्रत्यूहत्वात् RasGaṅ. 532. 12; (प्रवृत्तिः) नियामकान्तराभावादेव प्रथमस्यानियन्त्रितेति भावः MayūMāli. 410.14 (*on* v. 1 5); **B** not controlled ननु पुरुषेच्छा यद्यनियन्त्रिता तदा पुनरपि स एव प्रयत्नः AbhinBhā. iii. 4.15 (*on* 19.5); **Ci** not fastened, cf. **अनियन्त्रितकीलक**; **Cii** untied अह्नाय काचिदनियन्त्रितमेव कृत्वा बन्धश्लथं चिकुरम् BhikṣāKā. 8. 20; **D** unrestrained अन्योऽन्या(न्यं) विस्रम्भे सात्म्यादनियन्त्रितं तत्तु (रतम्) KandaCū. ii. 10.32 [AbhidhāCin. 1466 gives *aniyantrita* as synonymous with *anargala*, *abādha*, *ucchṛṅkhala* and *uddāma*]

**अनियन्त्रितकीलक** (aniyantrita–kīlaka) *adj.* in which bolt was not fastened, unbolted आवासे कारितेऽत्युच्चैरनियन्त्रितकीलकम्। गवाक्षं कारयित्वा मां भोजनाय न्यमन्त्रयत् SamarāSaṁ. 2. 290.

**अनियन्त्रितत्व** (aniyantrita–tva) *n.* the state of being unrestrained तोयमत्र सर्वत्र हृदयद्रवात्म — अनियन्त्रितत्वात् ParāTri. 264. 10.

**अनियन्त्रितपुरुषेच्छा** (aniyantrita–puruṣecchā) *f.* unregulated desire of a person अनियन्त्रितपुरुषेच्छायत्तोऽपि समयः कथं नियतः स्यात् Loc. 160. 23 (*on* 3. 16)

**अनियन्त्रितप्रवेश** (aniyantrita–praveśa) *adj.* whose entering is not restricted तुमुले चास्मिन् समयेऽनियन्त्रितप्रवेशाः ··· विविशुरन्तर्वंशिकाः पुरुषाः DaśKuC. 35. 3.

**अनियन्त्रितसंभाषा** (aniyantrita–sambhāṣā) *adj.* (*f.*) whose conversation is not restrained अभि(नि)यन्त्रितसंभाषा याः ···। ताः स्युः स्वतो हि साध्याः KandaCū. v. 2. 4.

**अनियम** (a–niyama) *m.* **1** absence of rule or regulation prescribed by any authoritative text, absence of restriction or restrictive condition, absence of governing, absence of limitation, non-confinement **2** (Gr.) non-application of the rule or restriction **3** absence of certainty, non-fixity, absence of ascertainment, non-settlement, indefiniteness, unpredictability, confusion **4** absence of distinction **5** absence of invariable connection **6** absence of restraint or control **7** inconsistency **8** absence of compulsion **9** name of one of the six types of *uktis* **10** name of Śiva **1** absence of rule or regulation prescribed by any authoritative text, absence of restriction or restrictive condition, absence of governing, absence of limitation, non-confinement हुत्वा संस्थाजपेनोपस्थाय तीर्थे निष्क्रम्यानियमः ĀśvaŚS. I. i. 11. 14; ऊर्ध्वं प्रथमाया अग्निप्रणयनीयाया औपवसथ्येऽनियमः Āśva-ŚS. I. iv.1.26; सोमेन यक्ष्यमाणस्यर्तावनियमो नक्षत्रे च MānŚS. 28. 19; मन्त्रान्तैः कर्मादिः सांनिपात्योऽभिधानात्। अनियमं वात्स्यः KātyŚS. i. 3. 6; i. 5. 16; अनियमात् सर्वेषु निधनस्थानेष्विति कौत्सः LāṭyāŚS. x. 2.9; एकवन्म-न्त्रानूहेत्। पेश्यः प्रातरित्यनियमः KāṭhGS. v. 12. 3 (comm. अतिदेशेन नियम-प्राप्तस्यानियमः); अनियमो वा कृष्णस्थानासनपन्थभक्षेषु GobhiGS. iii. 2. 28; स्त्रीपुंयोगेऽभिगदतोऽनियममेके GautDS. i. 6. 6; तत्राथात् कर्तृपरिमाणं स्यादनियमोऽ-विशेषात् MīmāSū. iii. 7.21; vi. 7. 23; अनियमोऽन्यत्र MīmāSū. v. 1. 3 (Bh. क्रमस्य नियमो नास्ति); फलार्थित्वाद् वानियमो यथानुपक्रान्ते MīmāSū vi. 2.14; पौर्णमास्यामनियमोऽविशेषात् MīmāSū. vi. 5. 30 (Bh. नात्र कश्चिद् विशेषवचनः शब्द उपादीयते); vi. 8. 30; अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेक-शब्दभेदाभ्याम् MīmāSū. vi. 8. 36; x. 1.47; x. 3. 46; x. 7. 64; परिमाणं चानियमे न स्यात् MīmāSū. xi. 1.31; xi. 4.4; xii. 4. 33; उपलब्धिवदनियमः BrahmSū. ii. 3. 37; तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् BrahmSū. iii. 3. 42 (Śaṅ. यान्येतानि उद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि ··· नैतानि नित्य-वत् कर्मसु नियम्येरन्); VedāntPāSau. 337.6 (*on* iii. 3. 41); जातिविशेषे चानि-यमात् NyāySū. ii. 1. 57; अनियमे नियमान्नानियमः NyāySū. ii. 2. 55; नियमा-नियमविरोधादनियमे नियमाच्चाप्रतिषेधः NyāySū. ii. 2. 56; नियमानियमौ तु तद्वि-शेषकौ NyāySū. iii. 2. 37; iii. 2. 67; NyāyBh. 235. 12 (*on* iii. 2. 67); अरत्नौ तण्डुलद्रोणः। अर्धाढकं तैलस्य। ··· कङ्कूरस्यानियमः ArthŚā. i. 331. 7(2. 31); (स्वरजातिषु) विकृतास्वनियमः NāṭyaŚā. 28.45(6); आत्मनः सारेण वालंकारं तदीयमात्मीयं वा बिभृयात्। प्रीतिदायेष्वनियमः KāmSū. 248. 13 (4. 2); KandaCū. iv. 2.28; स्वस्थस्य मूढाः कुर्वन्ति वदन्त्यनियमं तु ये। ते तस्य विघ्नकर्तारः पतन्ति नरकेऽशुचौ ParāSm. 6. 58; किमिन्द्रस्य गार्हपत्यस्य वोपस्थानं कर्तव्यमित्यनियम उत गार्हपत्यस्यैव ŚābaBh. 824.1 (*on* iii. 3.14); अनियमे न क्रमः कर्तव्यो यथा पूर्वः पक्षः ŚābaBh. 1288. 9 (*on* v. 1. 1); 1357.20 (*on* vi. 1. 6); 1399. 15 (*on* vi. 2. 19); गवादीनामन्यतमस्य कस्यचिद् द्वादशशतम्। एवमनियमे लाघवं भविष्यति ŚābaBh. 1888. 8 (*on* x. 3. 46); तस्या विदार्याः प्रतिपादमन्त्यस्य समीपे प्रायः भकारो भवति। अत्रानियमः Jānāśra. 5. 61(?62)(2); स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः। अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् Kāvyāda. 1.25; किं य एव सत्संपन्नः स एव प्रतिबुध्यते, उत स वा अन्यो वा इति चिन्त्यते। तत्र प्राप्तं तावत् -अनियम इति BrahmSūBh.(Śaṅ.) 576.8 (*on* iii. 2.9): विशेषणाभावादुपसद-नविधेः पूर्वेषामनियमः MuṇḍUBh. 306. 14 (*on* i. 1.3); विद्यमानस्यैवावृत-त्वादनुपलब्धिः इति चेत् न अनियमात् BṛĀraUBh. 17. 17 (*on* i. 2. 1); अनियमे चागतिहिंसाशब्दार्थहसः KātanVṛ. *on* iii. 2.42; कांस्यभोजिन्यायेन वा मुख्योऽप्यनियमं वारयेत् TantrVā. 710.7 (*on* iii. 1.8); अन्यसंविदा चेदन्या-लम्बना धीरनुमेया, अनियमस्स्यात् IṣṭaSi. 290. 10; पूर्वापरान्वयबलेन हि कारणत्व-कार्यत्वसंगतिमिह प्रतियन्ति लोके। नो चेद् भवेदनियमः SaṁkṣeŚā. 1.373 (i. 276. 9); प्रलयक्रमो निरूप्यते। अनियमो नियमकारिणः शास्त्रस्याभावात् Brahm-SūBh.(Bhā.) 133. 9 (*on* ii. 3.14); 222. 9 (*on* iv. 1.5); गुणप्रधानभावा-नियमादन्योऽन्यसंसृष्टः पदार्थसमुदायो वाक्यार्थः NyāyMañ. i. 334. 3; (शूद्रस्तु यस्मिंस्तस्मिन् वा निवसेत्) यस्मिंस्तस्मिन्नित्यनियममाह ManuBh. i. 81. 30 (*on* 2. 24); दृष्टस्यानियमे नियमे चाभेदाददृष्टादेव भेद इत्यलौकिके शब्दः NayaVi. 15. 2 (*on* i. 1. 1); वाक्यान्तरेणानियमात् तदर्थाप्रतिसंधितः Bhām. 149.20 (*on* i. 1.24); 48. 6 (*on* i. 1.1); ऐकात्म्यमेकत्वं प्राणादीनामित्यनियमः स्यात् TātpaṬ. (Vā.) 223.19 (*on* i. 1. 12); 105. 16 (*on* i. 1. 3); प्रयुज्यमानेष्वेव भूतेषु प्रवृत्ति-निवृत्ती स्यातां न सर्वेषु प्रयोजकेष्वपि शरीरादिष्विति। सेयमनियमोपपत्तिः। सार्वत्रिक-त्वमनियमः TātpaṬ.(Vā.) 570. 10 (*on* iii. 2. 39); पूर्वेषां तु मुक्तकादीनां भाषायामनियमः Loc. 141. 23 (*on* 3. 7); न प्रमाणमन्तरेण प्रयोजनमात्रेण क्रम-नियमः संभवतीत्यनियम एव युक्तः TantrRa. 242. 12; क्रतौ चातदर्थस्यानियमान्न नियमार्थतावकल्पते NyāyRaMā. 22. 8; 176. 20; नियामकाभावादनियमे प्रकृतिदर्श-नाद् वाग्नीषोमीयस्य प्राथम्ये प्राप्ते सवनीयस्येत्याह ŚāstrDī. 411.10 (*on* v. 1. 6); आभिमानिके तु प्रतिसंक्रमेऽनियमः NyāyVārPari. 595.2; आत्मनो विभुत्वे नित्यो-पलब्ध्यनुपलब्धिप्रसङ्गः इत्यादिनोपलब्धेरनियमः उक्तः BrahmSūBh.(Rā.) 535. 7 (*on* ii. 3. 36); अनियमेऽपि न चतस्रः कोटयः PramāMā. 5. 30; आकाशस्यैकस्यैव प्रदेशभेदेन घटादिसंयोगाद् घटादौ गच्छति तस्य च प्रदेशभेदस्यानियमः VedāSaṁ. 104. 2; 'यदा वशमुपागतः' इत्यनेन वशोपगमनात् प्रागनियम इति दर्शितम् Mitā. 116.15 (*on* 1. 343); तत्राप्यनियमो दृष्टः प्रबन्धे महतामपि SuvṛTi. 2.5; प्रमीत-पितृक इति वचनाज्जीवत्पितृकस्यानियमो गम्यते Aparā. 418. 11 (*on* 1. 218); कुर्द खुर्द गुर्द क्रीडायामेव। ·· क्रीडायामेवेत्येवकारादन्यत्रार्थनिर्देशेष्वनियमोऽनुमीयते Dhātu-Pra. 1. 23 (10.10); किं हविष्कृदेहीति अध्वर्युरुच्यते, अथ वागेव ··· अथवा अनियमः SaṅkarKāBh. 10.17 (*on* i. 1. 30); 45.20(*on* i. 4.21); 120.17 (*on* iii.1. 6); 125. 12 (*on* iii. 1. 20); अनियमसर्वातिदेशयोश्चाष्टमे निराकृतत्वात् NyāySu.(So.) 35. 30 (*on* i. 2.7); यमके तुल्यरूपत्वस्य नियमनादिहानियमः AlaṅkāRa. 3(1); KhaṇḍanKhā. 317. 7; इदं ज्ञास्यामीत्यनियमः प्रतीयते BrahmSūBh.(Ma.) 37B. 5 (*on* ii. 3.37); सर्वत्रानियमे प्राप्ते क्वचिन्नियमार्थमाह SmṛtiCan. i. 64. 13; ii. 354.1; इतरयोस्तु तत्साहित्यवचनात् तदानन्तर्यं मिथस्त्वनियमः VedāntKa. 33. 24 (*on* i. 1.1); अनियमोऽपि न संभवति, प्रत्येकं स्वविषयनियतत्वात् NyāyKu. 54. 15; (विदुषा ब्राह्मणेन) प्रयत्नतोऽवश्यमध्येतव्यम्। अन्ययोस्त्वनियमः ManvaVi. 78. 12 (*on* 1. 103); पञ्चाप्यवयवाः प्रयोक्तव्या इति नैयायिकाः। ... उदाहरणोपन-यावेवेति तु सौगताः। वयं त्वनियमं ब्रूमः NyāyPari. 159. 13; YatīndraDī. 21. 2; NyāyPari. 345. 8; स्वातन्त्र्यपारतन्त्र्यनिमित्तौ नियमानियमौ TattvPrakā. 121B. 6 (*on* ii. 3. 38); 172A.13 (*on* iii. 3.29); वणिक् शतं प्रति पञ्चकं लाभं गृह्णीयात्। परदेशागते तु दशकं यदि सद्यः क्रयविक्रयो भवेद् विलम्बिते त्वनियमः DīpKa. 69. 13 (*on* 2. 252); पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। गुरु षष्ठं च पादानां शेषेष्वनियमो मतः ChandoMa. 4. 14; जीवन्मुक्तिपुरस्सरमेव परममुक्ति-रित्यनियमात् SarvaDaKau. 135. 18; उठाम् एव कुर्यान् न तु खेलनम्। एतत्तु

प्रवेशे चतूराजीकाले इतरत्र[ ापि ]ज्ञेयम्। [अन्य]त्र त्वनियमः CaturDī. 22. 4; अनियतस्वरप्रसङ्गे अनेकाक्षु च देशस्यानियमे प्राप्ते वचनम् Prasā. ii. 753.20; समर्थः पदविधिः इति सूत्रेण तावत् पदमात्रसंबन्धिविधौ सामर्थ्यं विधीयत इति निर्विवादम्। … एतस्य परिभाषारूपत्वेन प्रकरणेनानियमात् MīmāKau. iii(1). 51.14 (*on* i. 1. 27); सहत्वविधानाद् वा सर्वेषां यौगपद्यमित्यनियमे प्राप्ते BhāṭṭDī. iii. 215. 12 (*on* x. 2. 4); iv. 257. 11 (*on* xii. 2. 14); इच्छाद्वेषयोरनियम एव स्यात् RasGaṅ. 688. 6; नेयमसंशयमैक्यान्तरचापज्या … अनियमात् SiddhāTaVi. 68. 2; विशेषाभावादनियमं प्रापय्योत्तराग्रन्थे संज्ञारूपेण प्रसिद्धिः VaiyāBhū. 67. 22 (*on* 17); नैव ते साम्यभाजः — कुतः । स्वरूपसाम्येऽपि तद्दृष्टानामनियमात् GoviBh. 169. 2 (*on* ii. 3. 49); 247. 14 (*on* iii. 3.43); उपनीतं विशेषणतयैव भासते, मानसे त्वनियम इति वदन्ति MaṇiKa. 26. 15; उद्गीथभक्तिगानमुद्गातेवेति प्राप्ते श्रौतानेव स कुर्यात् …। आर्थेषु त्वनियमः BhāṭṭCan. 7. 16 (*on* xiii. 1. 14); परिभाषाणामनियमे नियमकारिणीत्वादाह अनिर्धारितेति LaŚabdeŚe. i. 57.12; i. 526.14; ii. 122. 16; ब्राह्मणस्येत्यादि प्रेतविशेषणम्, अनेन शूद्रेऽनियमः सूचितः BālamBha. iii. 10. 12 (*on* 3.3); **2** (Gr.) non-application of the rule or restriction अनेकप्राप्तावेकस्य नियमोऽनियमः शेषेषु Var. 2 *on* P. ii. 2. 34; MahāBh. i. 436. 13 (*on* ii. 2.34); PrakriKau. i. 624. 1; स्त्रियां चानियमः Vār. 4 *on* P. iv. 1.93 (MahāBh. स्त्रियां च युवत्यां नियमो न प्राप्नोति।… नियमाद्धि स्त्री पर्युदस्यते); नियमवचनात् सिद्धमिति चेत् सर्वनामस्थानप्रकरणे नियमवचनादन्यत्रानियमः Vār. 2 *on* P. vi. 4.12-13; किमयं तन्त्रं तरनिर्देश आहोस्विदतन्त्रम्। किं चातः। यदि तन्त्रं द्वयोर्नियमो बहुष्वनियमः MahāBh. i. 435.19 (*on* ii. 2. 34); अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। उष्ट्रखरम् … बहुष्वनियमः । अश्वरथेन्द्राः। इन्द्ररथाश्वाः KāśiVṛ. *on* ii. 2.33; PrakriKau. i. 624.5; धर्मादिष्वनियम इष्यते । अर्थशब्दौ। अर्थधर्मौ PrakriKau. i. 626.5; नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः। इष्यते त्वनियमः LaŚabdeŚe. i. 310. 5; गुणयोः क्रिययोर्गुणक्रिययोश्चानियम एव LaŚabdeŚe. ii. 40.3; ii. 40. 10; **3** absence of certainty, non-fixity, absence of ascertainment, non-settlement, indefiniteness, unpredictability, confusion अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् MīmāSū. xi. 1. 33; प्रतिषेधः न स्मरणकालानियमात् NyāySū. iii. 2. 30 (NyāyBh. किंचित् क्षिप्रं स्मर्यते किंचित् चिरेण); iii. 2.65; सम्यगसम्यक्च समारब्धं कर्म सिध्यति व्यापद्यते वानियमेन, तुल्यं भवति ज्ञानमज्ञानेन CaraS. i. 15. 4; न चैवमनियमेन धर्मत्वावधारणमुक्तम् TantrVā. 196. 13 (*on* i. 3.18); 666. 20 (*on* iii. 1. 1); किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्ति, उताल्पमल्पमिति तत्रानियमः BrahmSūBh.(Śaṅ.) 553.16 (*on* iii. 1.23); सर्वधर्माणां सर्वधर्मधर्मित्वं सर्ववस्तुधर्माणां च सर्ववस्तुधर्मत्वमित्यनियमो धर्मधर्मिणां स्यात् IṣṭaSi. 102. 3; क्रियासमनन्तरं फलोत्पत्तेरनियममाह ManuBh. ii. 28. 11 (*on* 7. 86); (चित्रसूत्रे) आयामोच्छ्रायमानवर्णनः … प्रत्यङ्गविभागो भवति …। पालिरनियमेन (कर्णस्य लुटिकापालिः) ViṣṇuDhaP. iii. 36. 1; त्रिवृत्शब्दमृषयः स्तोत्रीयानवके प्रयुञ्जते। आर्यास्तु लताविशेषे। सोऽयमनियमो न स्यात्स्वाभाविके संबन्धे TātpaṬ.(Vā.) 420. 15 (*on* ii. 1. 56); NyāySu.(Ja.) 77B. 13 (*on* i. 1.1); TātpaṬ.(Vā.) 513.5 (*on* iii. 1. 15); पदार्थसामर्थ्यादनियमेनानेकवाक्यार्थपरिप्लवे … परस्परसमभिव्याहारादेव विशिष्टवाक्यार्थावगतिसिद्धिः NyāyRaMā. 83. 9; प्रमाणमेव सीमा व्यवहारनियमस्य तदतिक्रमे त्वनियम एव ĀtmaTaVi. 190.2; एव। इति नियमानियमौपम्योत्प्रेक्षासु …। अद्येव (?अद्यैव)। इहेव (? इहैव) GaṇRa. 1. 4(5); स्रष्टुर्दृष्टः स्फुटमिति गतीनामनियमः RājTa.(Ka.) 8. 1275; प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः। तद्भावे जन्मान्तराणीत्यनियमः BrahmSūBh.(Ma.) 66A. 4 (*on* iii. 4. 51); अहमिदं करिष्ये, इदं नेति संकल्पादिष्वप्येवमनियमः VedāntPāSau. 239. 19 (*on* ii. 3. 51); विशेषकाभावादनियमेन सर्वसंविन्मिथ्यात्वं सर्वसंवित्सत्यत्वं वा प्रसजेत् ŚatDū. 117. 19; 136. 5; सर्वगत्वादनियमो नित्यगत्वादुपद्रवः। अदृष्टानियमे नित्ययत्नोऽत्राजागलस्तनः NyāySiA. 230. 16; मुक्तः स्वसंकल्पादेव शरीरादिकं सृजतीत्यनियमः VedāntKau. 430.5 (*on* iv. 4.13); नवत्वादेरनियमे साधु समर्थितमात्मनस्तीर्थकरत्वम् SarvaDaSaṁ. 4. 20; ब्रह्मणैकीभूतस्योद्धरणासंभवादनियमः NyāySu.(Ja.) 500A. 7 (*on* iii. 2. 6); गुणकर्मणोस्त्वनियमः Upask. 31. 11 (*on* i. 1. 14); मुक्तेर्यत्फलं भक्तिरसानुभवस्तस्यानियमस्तस्य भगवदिच्छाधीनत्वात् AṇuBh. 300.10 (*on* iii. 4.51); किमिहैव जन्मनि चित्रादीनां फलं उतेह वा जन्मान्तरे वेत्यनियमः YuktiSneha. 118.21 (*on* i. 1. 5); 'तेनोभौ कुरुत' इति वाक्येन क्रत्वङ्गाश्रितोपासनानामनियम उच्यते ŚivārkaMaDī. ii. 358. 16 (*on* iii. 3. 41); तत्र हि फलनिरूपकत्वं किं यागस्य, उत सोमादेरित्यनियमे प्राप्ते MīmāKau. iii(2).132. 2 (*on* ii. 1. 49); यदि तु ततःशब्दादानन्तर्यस्यैव प्रतीतिः न तु समानकर्तृकत्वस्यापीति विभाव्यते ततोऽस्त्वनियमः BhāṭṭDī. iii. 228.2 (*on* x. 2.16); iv. 125.1 (*on* x. 8.15); iv. 190. 21 (*on* xi. 3. 13); कदाचिद्गां दोग्धि पयः, कदाचिच्च गोभ्यो दोग्धि पय इत्यत्र नानियमः VyutpaVā. 124. 17; जयस्यानियमादितः। … मारीचो सानुगः प्रेषयिष्यते JānaPa. 1.23; अभितः पदस्योभयत इत्यर्थकस्य देशवादे कतरयोर्दिशोर्ग्रहणम्। अनियमे विकल्पापत्तिः BhāṭṭCan. 6. 6 (*on* xiii. 1. 10); **4** absence of distinction अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् BrahmSū. iii. 3.31; प्राकृते पुंनपुंसकयोरनियमः Loc. 21.13 (*on* 1. 4); अन्यत्रापि च यत्र वार्तिके प्रामाण्योत्पत्तिज्ञप्त्योरनियमेन साधनदूषणप्रवृत्तिः NyāyKu. 33. 5; **5** absence of invariable connection कथं पुनरन्यविषयं करणम् अन्यविषयां क्रियां करोति । शाल्यादिविषयस्य मुशलादेः करणस्य श्यामाकेऽभिहतिर्भवति। नानियमादिति यद्विषयं करणं तद्विषया क्रियेति न नियमोऽस्ति NyāyVār. 46.15 (*on* i. 1.5); यद्यप्यस्मिन् जन्मनि वृष्ट्यादिसिद्धेरनियमस्तथाप्यनियमादेव नियोगसिद्धिरवश्याश्रयणीया VedāSaṁ. 150. 7; कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणविशेषः। अनियमे कार्यानुत्पत्तिः BrahmSūBh.(Ma.) 30A. 9 (*on* ii. 2. 23); **6** absence of restraint or control गोष्ठी पूरुषसंनिधावनियमो वासो विदेशे तथा। … नाशस्य हेतुः स्त्रियाः Hitopa. 1. 85; RatiRaha. 4. 22; स्वैरिण्याश्चानियमं पश्यन्नपि परीक्षितत्वात्…स्वमातुः नियमं निश्चिनोति Nyāyāmṛ. 138B.7; **7** inconsistency सिद्धान्ताविरुद्धग्रहणेन सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः NyāyMañ. ii. 151.2; **8** absence of compulsion तवाद्वैते यत् ज्ञानमुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तव्यमित्यत्र ममानियमात् KhaṇḍanKhā. 142.19; **9** name of one of the six types of *uktis* (*lit.* non-restriction) उक्तिः सा कथ्यते यस्यामर्थः कोऽप्युपपत्तिमान्। … धिनोति हृदयं सताम्। … नियमानियमावपि। … तदीयाः षडर्थोक्तयः AgniP. 341.28; **10** name of Śiva (*lit.* beyond control) अनियमो नियताश्रयः। … एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरिः ŚivaP. iv. 35.34 (391B. 8); [Abl.] **1** inconsistently सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः NyāySū. v. 2.23; **2** without any regulation प्रत्यक्षेणैतदवगम्यते नियमादनियमाच्चार्जितं द्रव्यं पुरुषं प्रीणयतीति ŚābaBh. 1195. 13 (*on* iv. 1. 2); अस्य वक्त्रस्य सर्वेषु पादेषु …। आद्योऽनियमात् लघुर्वा गुरुर्वा भवति Jānāśra. 2.20(2); समय एव संबन्ध इति युक्तम्, तदुक्तं जातिविशेषे चानियमात् NyāyMañ. i. 224. 15; [Loc.] when there is no rule or limitation (applicable or required) होमे …। अजस्यानियमे चेन्द्रोऽधिश्रयणं विवस्वतः। पर्यग्निकरणे चैव उद्वाहे मातरः स्मृताः BhaviP. 375B.23 (ii(2). 15 (?14).17); (अर्थदोषानाह) अविशेषे विशेषश्चानियमे नियमस्तथा SāhiDa. 412.13; [Inst.] **1** alternatively हिंकारादीनामनियमेनाभ्यासेन विकल्पेन च तत्कालमेव प्रयोगः KāmSū. 150. 4 (2.7); न चैवमनियमेन धर्मत्वावधारणमुक्तम् TantrVā. 196.13 (*on* i. 3.18); यः क्षत्रियो बहुविवाहान् कुरुते स कांचिद् गान्धर्वेण विवाहेन परिणयते कांचिद् राक्षसेनेत्येष मिश्रपक्षः।… अनेन चैतज्ज्ञायते। क्षत्रियस्यानयोरेवानियमेन प्रवृत्तिः ManuBh. i. 219.20 (*on* 3.26); एकत्र विधावितरत्र श्रवणस्य गुणार्थत्वाद् वेदद्वयेऽप्यनियमेन विधाने स्वरद्वयस्याप्यनियमः MayūMāli. 235.6 (*on* iii. 3.3); परः पूर्वो वेत्यत्रानियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थमिदम् LaŚabdeŚe. i. 171. 2; **2** without any restriction तत्र तैः परिक्रीतैः कर्तव्येष्वनियमेन कर्तृपरिमाणं स्यात् ŚābaBh. 1089. 2 (*on* iii. 7. 21); 2098. 1 (*on* xi. 1.1); अनादेशाद् यद् यत् कामयते फलमनियमेन तस्य तस्योपायत्वेन विधीयमानत्वात् सर्वार्थता ṬupṬ. 34.5 (*on* iv. 3. 13); उपसंहार एवान्यनिवृत्तिसाम्यान्नियम इत्युक्तम्। न ह्यत्र प्रकरणादनियमेन प्रैषानुवचनयोरन्यत्र दण्डः प्राप्नोति यतो नियम्येत TantrRa. 141. 17; परिक्रयोपात्तानामृत्विजां पदार्थेष्वनियमेन कर्तृत्वप्राप्तौ आध्वर्यवादिसमाख्यया नियमः क्रियते NyāyRa. 950. 21 (*on* 8. 1); अनियमेनोपादाने च लक्षणानुगमापातात् KhaṇḍanKhā. 512. 10; उक्तौ नियमोऽनियमेन यः। … तच्च स्यात् परिभाषणम् AnekāK. 255; ततस्त्वनियमेनैव खण्डावयविनां भवः। ततश्चानियमेनैव सर्वावयविसंभवः AnuVyā. 24A.11 (*on* 2.2); NyāySu.(Ja.) 337A. 2 (*on* ii. 2. 6); उपासनस्यासकृदावृत्तिः कर्तव्येति प्रागुपपादितमिदानीं तदनुष्ठानमनियमेन कुर्यात्, उतासीन एवेति चिन्त्यते VedāntKau. 389. 11 (*on* iv. 1. 7); न तु सजातीयविजातीयाभ्यामेव उपचयापचयाविति नियमः, पार्थिवादिभिर्दोषाणामनियमेन उपचयापचयदर्शनात् NyāySiA. 199. 10; ब्रह्मणो वेदनेन सर्वरक्षणं वदन्ती श्रुतिरुद्गातृप्रभृतीनां वेदनस्यानियमेनानङ्गतां दर्शयति BrahmSūBh.(Śrī.) ii. 383.1 (*on* iii. 3.64); प्रत्याहाराननियमेन प्रसक्तान् नियमयति ते चेति Prasā. i. 19.12; i. 504 18; ये त्वविवृद्धस्तोमकाः … तेषु … यत्तदङ्गत्वेनौपदेशिककौत्सादिसामाम्नातं तन्निवेशार्थमनियमेनाप्राकृतसामोद्वापे प्राप्ते MīmāKau. iii(1). 82.19 (*on* i. 2. 44); iii(2). 294. 11 (*on* ii. 2.27); iii(2). 298. 20 (*on* ii. 2. 28); हीषादयः सौभराङ्गभूतास्तद्द्वारेण वृष्टिकामादीनां पुरुषाणामनियमेन शेषभूताः प्राप्ता नियम्यन्ते MayūMāli. 58. 1 (*on* i. 4.2); 137.18 (*on* ii. 2.6); तृतीयेन तु विशेषणेनानियमेन कतिपयदिवसपर्यन्तपाठादेव तादृशफललिप्सा निरस्ता LalitāSaBh. 206.32 (*on* 251); चित्रेष्टौ … एता वै देवताः पुष्टिपतय इति श्रुतं तत्रानियमेन केचित्पुष्टिलिङ्गा उपादेयाः BhāṭṭCan. 61. 12 (*on* xiv. 4.5); गच्छेदनियमेनैव सदैवान्तःपुरं नरः ŚukraNī. 3. 297; **3** without any regulation न च तत्र तन्निबन्धनः कश्चित् स्वभावोऽस्ति …। अनियमेन तर्हि स्यात्। न ह्यनिमित्तं भवत् क्वचिद् भवति क्वचिन्न भवतीति नियममर्हति PramāVāSvopVṛ.

53.26; इतरक्रतुप्रतिघातार्थम् अनियमेनाप्युपात्तं क्षुधं विहन्त्येव ṬupṬ. 2.9 (*on* iv. 1.2); मुद्गराद्दियोगात् पूर्वमपि कपालसंततिजननं तद्योगेऽपि वा सति घटसंततिजननमनियमेन दृश्येत NyāyMañ. i. 57.8; पत्नीत्यत्र क्रत्वर्थेषु यया कयाचिदुपात्तया सिद्धिरनियमेन प्राप्ता ManuBh. i. 216.16 (*on* 3.18); द्रव्यार्जनं क्रत्वर्थमिति कल्प्यते। 'इतरत्र' पुरुषार्थत्वपक्षे क्षुत्प्रतिघातार्थं द्रव्यमनियमेनाप्युपात्तं क्षुधं व्याहन्त्येव TantrRa. 17.10; न च 'ब्रह्मचारी भूत्वा गृही भवेद् गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेत्' इति नियम्यते। अनियमेनाश्रमान्तरस्वीकारदर्शनात् Aparā. 79.16 (*on* 1.52); अनियमेनोपादाने च लक्षणाननुगमापातात् KhaṇḍanKhā. 512.10; येषां तु मते पञ्चकः प्रातिपदिकार्थस्तत्पक्षे ··· प्रातिपदिकाद् विधीयमानाः स्वादयो निर्दिष्टार्थत्वेनैकत्वादौ स्युः। ततस्त्वनियमेन प्राप्ता अनेन नियम्यन्ते Prasā. i. 122.4; अनियमेन घटादेरपि प्रकारान्तरेणोपस्थितिसंभवात् ··· वृत्त्या शब्दादुपस्थितमेव शाब्दबोधविषय इति कल्पनीयम् VaiyāBhū. 130.12 (*on* 26); **4** without any distinction, indiscriminately, without any specification, at random आकीर्णकरस्य द्रव्यस्यानियमेन प्रतिपादने प्राप्ते यागेन प्रतिपाद्यते ṬupṬ. 9.10 (*on* iv. 1.18); सगुणासु विद्यासु गतिरर्थवती ···। तत्र संशयः — किं यास्वेषा गतिः श्रूयते, तास्वेव नियम्येत, उत अनियमेन सर्वाभिरव ··· विद्याभिरभिसंबध्येत BrahmSūBh.(Śaṅ.) 665.17 (*on* iii. 3.31); सर्वस्य वा एकैकमनियमेन कारणं स्यादिति कार्यकारणनियमो न स्यात् IṣṭaSi. 53.18; अत्र पुराणम् ··· तर्पणं कुर्याद् देवानां तु यदृच्छया।··· यदृच्छयापि अनियमेनेत्यर्थः SmṛtiCan. ii. 288.8; वागादयोऽप्यर्थवादवाक्ये संनिहिताः तेषामनियमेन वादो हविष्कृच्छब्देन SaṅkarKāBh. 11.8 (*on* i. 1.34); मोक्षः···। किमनियमेन सर्वज्ञानिप्राप्य उत केषांचिदस्ति केषांचिन्नेति संदेहः TattvPrakā. 173A.1 (*on* iii. 3.32); एषामत्यन्तमुपादेयानामनियमेन सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात् SāhiDa. 291.10; नियमे सौर्यादीनामितिकर्तव्यताकाङ्क्षामनियमेन यतः कुतश्चिदितिकर्तव्यताग्रहणप्रसक्तौ ŚivārkaMaDī. i. 66.2 (*on* i. 1.1); यतस्ततः। अनियमेन BālamBha. iii. 118 20 (*on* 3.216); **5** not invariably न च प्रमेयस्य प्रमाणेन व्याप्तिः। सा हि कात्स्न्येंन वा स्यात्, एकदेशेन वा स्यात्।··· न द्वितीयः ···। अनियमेन असिद्धेः, न हि सर्वस्य सर्वदा सर्वथात्र प्रमाणं नास्तीति निश्चयः शक्यते NyāyKuA. i. 159.1; **6** without any obligation श्राद्धेषु नियमेनाधिकारो नास्तीति वक्ष्यते। अनियमेन तु कृपया स्नेहेन वा भवति CaturCin. iii(1). 100.12; **7** not regularly, irregularly पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे ··· अबाधितयावत्संबन्धभानापत्तिरिति चेद्, न, ··· क्वचित् कस्यचिद् भानं क्वचित् कस्यचिदभानमित्यनियमेन ··· उक्तस्यैव संसर्गभाननियामकत्वात् ŚaktiVā. 39.10.

**अनियम** (a–niyama) *adj.* **1** not having any restriction about (quality such as coolness and hotness) भूतानां गुणसंख्यानम् ···निशामय।··· वायोरनियमः स्पर्शो वादस्थानं स्वतन्त्रता MahāBhā. xii. 247.6; **2** unregulated, independent बलवन्तो ह्यनियमा नियमा दुर्बलीयसाम् MahāBhā. xiv. 22.23; **3** not having a fixed or respective order नरदिव्यावनियमौ नायकप्रतिनायकौ SāhiDa. 357.16; **4** not obligatory आरब्धस्यापरित्यागवचनं नित्ये विप्रतिषिद्धम्, तस्मादनियमः प्रक्रमः SaṅkarKāBh. 17.8 (*on* i. 2.14)

**अनियमकथा** (aniyama–kathā) *f.* debate without stipulated conditions अनित्यः शब्द इत्यादिप्रयोगस्तु विपर्यासेऽपि शीघ्रान्वयप्रतिपत्तेरनियमकथायां वादे च सोढव्यः NyāyPari. 196.1.

**अनियमकारणत्व** (aniyamakāraṇa–tva) *n.* the state of being a cause of non-regulation न च निष्कारणमनियमे कदापि मोक्षाभावप्रसङ्गः। प्रारब्धप्रतिबन्धभावाभावयोरनियमकारणत्वात् TattvPrakā. 197B.13 (*on* iii.4.51)

**अनियमकोटि** (aniyama–koṭi) *f.* alternative view of non-restriction एवं च संदेह(?हे) अनियमकोटिरपि द्रष्टव्या MayūMāli. 764.13 (*on* x. 7.13)

**अनियमगौरव** (aniyama–gaurava) *n.* complexity caused by absence of restriction नियमे संभवत्यनियमगौरवमयुक्तम् VidhiRa. 30(171.18)

**अनियमग्रह** (a–niyamagraha) *m.* non-acceptance of any restriction तस्मिन् काले साधकस्य भोज्येष्वनियमग्रहः ŚivS. 3.54.

**अनियमज्ञापन** (aniyama–jñāpana) *n.* indication of non-restriction तद्वचनादेव दण्डापूपवद् बालवचनाद्वा कन्यकाप्राप्तौ पुनर्वचनं स्ववासिनीनां तत्रानियमज्ञापनार्थम् BālaKrī. i. 96.3 (*on* 1.104)

**अनियमतस्** (aniyama–tas) *adv.* because of no fixed rule अनियमतोऽपि प्रपञ्चस्य स्वतोऽध्यासोपपत्तेः ŚatDū. 174.20.

**अनियमदर्शन** (a–niyamadarśana) *n.* non-observation of invariable concomitance यदुक्तम् — कार्यकरणसंघातसमानजातीयमेव ज्योतिरन्तरमनुमेयम् ··· तदसत्, उपकार्योपकारकभावस्यानियमदर्शनात् BṛĀraUBh. 523.6 (*on* iv. 3.6); प्रथमे द्वयमपि अनैकान्तिकम् अनियमदर्शनात् ĀtmaTaVi. 154.13; 794.7; वस्तुतः परिच्छिन्नानामपि देशकालपरिच्छेदस्य न्यूनाधिकभावेनानियमदर्शनात् BrahmSūBh.(Rā.) 438.9 (*on* ii. 1.15); 'यश्चैतदेवं वेद यश्च न वेद' इत्यनियमदर्शनं किं पुरुषार्थतामवगमयति, नेति ŚrutaPra. ii. 513.11 (*on* iii. 3.41); ii. 535.18 (*on* iii. 3.64)

**अनियमदर्शिन्** (a–niyamadarśin) *adj.* not admitting restriction अनियमदर्शी खल्वयमृषिर्नियमेन प्रतिषेधं प्रत्याचष्टे। त्रैकाल्ये चायुक्तः प्रतिषेध इति NyāyBh. 83.3 (*on* ii. 1.15)

**अनियमन** (a–niyamana) *n.* **1** absence of a rule or restriction तस्यापि (योषिद्ग्राहस्यापि) ··· अनेकविधत्वादनियमने किं सर्वे योषिद्ग्राहा ऋणापाकरणेऽधिकारिणः Subodhi. 28.6 (*on* 2.51); तात्पर्यबलादप्रस्तुतोऽप्यर्थोऽभिधयैवावगम्यते, तात्पर्यार्थसत्त्वेन शक्तेरनियमनात् AlaṅkāMañ. 93.23; **2** absence of control प्राणापानानां नियमने जीवनमात्रम्। अनियमन आकुञ्चनादि AṇuBh. 125.21 (*on* ii. 1.20)

**अनियमनियमकारिन्** (aniyama–niyamakārin) *adj.* which causes restriction in the absence of any restriction किमादित्यादिदृष्टयो ब्रह्मणि कार्याः किंवा ब्रह्मदृष्टिरादित्यादिष्विति। सामानाधिकरण्यस्योभयथोपपत्तेः। तत्रानियमनियमकारिणः शास्त्रस्याभावात् NyāySu.(Ja.) 617A.2 (*on* iv. 1.2)

**अनियमनिरास** (aniyama–nirāsa) *m.* refutation of non-restriction पञ्चमे तेषु चिरमचिरं वावस्थानमित्यनियमनिरासव्याजेन व्रीह्यादिषु सुखभोगरहितमचिरावस्थानं दृढीकृतम् ŚivārkaMaDī. ii. 224.27 (*on* iii. 2.1)

**अनियमन्याय** (aniyama–nyāya) *m.* rule about non-restriction नहि एवम् उभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति, अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः BrahmSūBh.(Śaṅ.) 842.13 (*on* iv. 3.15)

**अनियमपक्ष** (aniyama–pakṣa) *m.* alternative view of absence of restriction प्राकृते प्रणयने स्थिते संशयाभावः। अनियमपक्षस्य चानुत्थानम् ṬupṬ. 159.8 (*on* vii. 3.24); अनियमपक्षेऽप्यस्तित्वेऽप्यस्तित्वान्तरमित्यनवस्थानात् Nyāyāmṛ. 564A.12; अत्र भाष्योक्तोऽप्यनियमपक्षो मन्दत्वान्नोक्तः MayūMāli. 428.3 (*on* v. 2.11); 549.5 (*on* vii. 4.2); 605.2 (*on* ix. 2.5); 764.14 (*on* x. 7.13)

**अनियमपरिवृत्तित्व** (aniyamaparivṛtti–tva) *n.* the state of being an exchange (of limitation) for non-limitation एवं चानियमपरिवृत्तित्वादेरप्यधिकपदत्वादेर्भेदो बोद्धव्यः SāhiDa. 419.14.

**अनियमपाठ** (a–niyamapāṭha) *m.* absence of uniform textual order तत्र पाठक्रमो नात्राङ्गमत एवानियमपाठात् ManuBh. ii. 297.17 (*on* 9.180)

**अनियमपूर्वपक्ष** (aniyama–pūrvapakṣa) *m.* prima facie view maintaining non-restriction तत्रानियमपूर्वपक्षं भाष्याद्युक्तमपि दुर्बलत्वादुपेक्ष्य प्रकारान्तरेण पूर्वपक्षमाह MayūMāli. 413.20 (*on* v. 1.9); 553.9 (*on* viii. 1.4)

**अनियमप्रकारार्जित** (aniyamaprakārārjita) *adj.* obtained by illegal procedure नियमानियमप्रकारार्जितस्यापि (धनस्यापि) क्रतूपयोगयोग्यत्वे प्रसक्ते नियमान्यप्रकारार्जितस्य क्रतूपयोगयोग्यत्वाभावो वचनेनोच्यते CaturCin. iii(1). 535.13.

**अनियमप्रतिपादन** (aniyama–pratipādana) *n.* conveying of non-restriction उत्तरत्रानियमप्रतिपादनाय प्राप्तिमात्रं क्रियते MayūMāli. 881.23 (*on* xii. 4.11)

**अनियमप्रदर्शन** (aniyama–pradarśana) *n.* **1** indication of the absence of certainty, indication of doubt केचिदाहुः। अनियमप्रदर्शनार्थमेव प्राथम्यात्पूर्वोपादानम् TantrVā. 757.6 (*on* iii. 1.24); **II** indication of non-restriction (regarding the sequence of cuttings) 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस' इत्यथाग्रशब्दाभ्यां क्रमस्य विवक्षितत्वात् न तथेह क्रमो विवक्षितः। श्रुत्या तथैवानियमप्रदर्शनात् Bhām. 48.6 (*on* i. 1.1)

**अनियमप्रवृत्ति** (aniyama–pravṛtti) *f.* inclination to act without any certainty धनकामाधिकारे च रागात्प्रवृत्तो न नियतं प्रवर्तते। अनियमप्रवृत्तेर्न तद्विध्यानर्थक्यम् BālamBha. ii. 126.29 (*on* 2.113)

**अनियमप्रसक्ति** (aniyama–prasakti) *f.* **I** undesired contingency of absence of specification or restriction द्वितीयस्यार्धस्य पुनरप्यनियमप्रसक्तौ अर्धं बहिर्वेदीत्यपि विधातव्यम् TantrVā. 1136.2 (*on* iii. 7.14); 487.13 (*on* ii. 2.10); अवयवशः प्रत्यहं दानेऽपि क्रतुदक्षिणाया अन्त एव समाप्तेस्तदुत्तरकालीनस्य प्रासनस्य प्राप्तेर्नानियमप्रसक्तिः BhāṭṭDī. iv. 179.7 (*on* xi. 3.6); यत्र च प्राग्विधेरनियमप्रसक्तिस्तत्र नियमविधिः प्रवर्तते MayūMāli. 361.23 (*on* iv. 1.14); अग्न्यादिदेवतावाचकपर्यायाणामनियमप्रसक्तौ वैधशब्दनियमनस्य न्याय्यत्वेऽपि नियतलब्धशब्दबाधस्यान्याय्यत्वात् BhāṭṭCan. 106.10 (*on* xvi. 1.13); LaŚabdeŚe. i. 47.1; **II** undesired possibility of absence of definite order भूतभाविप्रवृत्तिक्रमाभ्यामनियम-

from the aspect of Aniruddha अनिरुद्धांशसंभूतं महाविद्यासमुद्भवम्। मिथुनं मानसम् LakṣmīT. 5.11.

**अनिरुद्धात्मक** (aniruddhātma-ka) *adj.* having the form of Aniruddha एकार्णवजले तस्मिन् वैराजपुरुषः स तु। अनिरुद्धात्मकः शेते नागेन्द्रशयने प्रभुः SkandP. ii(9).25.39; विश्वं जाग्रत्पदेशानं सर्वेन्द्रियसमीरकम्।… अनिरुद्धात्मकं तं च चिन्तयेत् प्रथमाक्षरम् LakṣmīT 24.27; यस्य नाभिसमुद्भूतनालगर्भकृतालयः। क्वासौ स पुरुषः साक्षादनिरुद्धात्मकः परः BṛBrahmaS. ii. 1.53; एते वै द्वादशादित्या ह्यनिरुद्धात्मका मताः BṛBrahmaS. iii. 10.23.

**अनिरुद्धात्मज** (aniruddhātmaja) *m.* son of Aniruddha द्वारकां तु गतो रेमे उग्रसेनादियादवैः। अनिरुद्धात्मजो वज्रः AgniP. 12.53.

**अनिरुद्धात्मन्** (aniruddhātman) *m.* [Inst.] (Viṣṇu) in the form of Aniruddha (i.e. by way of being Aniruddha) त्यक्तमुद्रारवच्छास्त्रं प्रद्युम्नेन महात्मना। आदाय विधृतं तद्वै अनिरुद्धात्मना हृदि PauṣkS. 39.30; *adj.* (Viṣṇu) having the form of Aniruddha उपाङ्गं पञ्चमं (मन्त्रम्) विद्धि अनिरुद्धात्मनो विभोः JayāS. 6.197; (परमेश्वरः) स्वयमेवानिरुद्धात्मा योजयेच्छाश्वते पदे (साधकम्) JayāS 31.37.

**अनिरुद्धादि** (aniruddhādi) *adj.* **A** Aniruddha (a descendant of Kṛṣṇa) etc. प्रद्युम्नसाम्बप्रमुखाः…। अनिरुद्धादयश्चान्ये पृथुर्विपृथुरेव च।… वज्रैस्ते निजघ्नुः परस्परम् ViṣṇuP. v. 37.46; BrahmP. 210.42; प्रद्युम्नस्तनयोऽपि पौत्रनिवहो यस्यानिरुद्धादयः। सोऽयं श्रीपतिः … धत्ते चारुसुदर्शनश्रियम् RasāSu. 3.16(1.18); **B** Aniruddha etc. (as five presiding deities of five elements) (पृथिव्यादिभूतानां देवताः) अनिरुद्धादयः पञ्च सत्यपूर्वाः पुरोदिताः। शक्तित्वेन च वर्तन्ते JayāS. 10.22; **C** (the four *mantras*) beginning with Aniruddha आ पादाज्जानुपर्यन्तमा जानोर्मध्यमस्तकम्। आ वस्तिमूर्ध्नो हृदयमा हृदो मस्तकावधि। अनिरुद्धादयो मन्त्राश्चत्वारो विनिवेश्य च PauṣkS. 27.237

**अनिरुद्धादितस्** (aniruddhāditas) *ind.* [Vār. 1 *on* P. v. 4.44] beginning with Aniruddha सपिण्डीकरणं कुर्यादनिरुद्धादितः क्रमात्। चतुर्भिर्वासुदेवान्तैर्मन्त्रैर्मन्त्रविदां वर PauṣkS. 27.560.

**अनिरुद्धादिनप्तृ** (aniruddhādi-naptṛ) *m.* Aniruddha and other grandsons (of Kṛṣṇa) रुद्रताक्ष्योद्धवादीनां प्रीतिः सख्येन मिश्रिता। अनिरुद्धादिनप्तृणामेवं केचिद्बभाषिरे BhaktiRaSi. iii. 4.33.

**अनिरुद्धादिभेद** (aniruddhādi-bheda) *m.* [Inst.] with the division headed by Aniruddha तथारूपं तु तं ध्यायेच्चतुर्धा भेदभावितम्। बहुभिन्नान्नशक्तिभ्य उत्तरोत्तरतां गताः। अनिरुद्धादिभेदेन वासुदेवावसानतः JayāS. 23.124.

**अनिरुद्धादिरूपा** (aniruddhādi-rūpā) *adj.* (*f.*) having the forms of Aniruddha and others (i.e. Pradyumna and Saṅkarṣaṇa) एतास्तिस्रो दशास्तिस्रः शक्तीः संप्रीणयन्तिं ताः। अनिरुद्धादिरूपास्ता भोक्तृशक्तीर्विचिन्तयेत् AhirbuS. 51.32.

**अनिरुद्धादिवासुदेवावसानक** (aniruddhādivāsudevāvasāna-ka) *adj.* (the ten days of funeral rites) which begin with (the *mantra* of) Aniruddha and end with (that of) Vāsudeva (द्वितीयदिनमारभ्य यावद्दशमदिनं कर्तव्यविधिः) आरभ्य शिरसो यावदस्त्रमन्त्रैस्तु नारद। अथोर्ध्वमनिरुद्धादिवासुदेवावसानकम्। दशाहमेवं निर्वर्त्य JayāS. 23.88.

**अनिरुद्धादिशक्ति** (aniruddhādi-śakti) *f.* the four *śaktis* such as Aniruddha etc. शक्तयः केशवादीनां द्वादशानां पृथक् पृथक्। चतस्रो ह्यनिरुद्धादिशक्तयः समुदाहृताः BṛBrahmaS. i. 9.6.

**अनिरुद्धादिसत्यान्त** (aniruddhādi-satyānta) *adj.* (the four *mantras*) beginning with (that of) Aniruddha and ending with (that of) Satya (शान्तिहोमविधानम्) अनिरुद्धादिसत्यान्तैर्मन्त्रैः पादादि होमयेत् JayāS. 20.290.

**अनिरुद्धाद्य** (aniruddhādya) *adj.* **A** (the four deities) beginning with Aniruddha अर्चनीयं सदैव हि। दक्षिणे त्वनिरुद्धाद्यं गरुडासनपश्चिमम् PauṣkS. 33.8; **B** (the sounds *ś*, *ṣ*, *s* and *h* regarded as representing the four *vyūhas*) Aniruddha etc. शषसहोऽनिरुद्धाद्या विज्ञेयास्त्रिदशेश्वर LakṣmīT. 19.17.

**अनिरुद्धाद्युपाङ्ग** (aniruddhādy-upāṅga) *n.* (five) *upāṅgamantras* Aniruddha etc. पाशं च तत्समीपे तु गदाया निकटेऽङ्कुशम्। अनिरुद्धाद्युपाङ्गानि पत्राग्रेषु तु विन्यसेत् JayāS. 12.92.

**अनिरुद्धाधिदैवत** (aniruddhādhidaivata) *adj.* having Aniruddha as the presiding deity भवेत् प्रथमरात्रं तु वासुदेवाधिदैवतम्। संकर्षदैवतं विद्धि द्वितीयं तु, तृतीयकम्। प्रद्युम्नदैवतं, चान्यदनिरुद्धाधिदैवतम् PāraS. 17.97.

**अनिरुद्धान्त** (aniruddhānta) *adj.* **A** (*mantra*) ending with (that of) Aniruddha मन्त्राः … चत्वारश्चानिरुद्धान्ता योक्तव्या वा महामते। प्रणवेन हृदि ब्रह्मन् PauṣkS. 27.239; **B** (the group of five *mantras* corresponding to five elements) ending with (that of) Aniruddha सत्याद्यमनिरुद्धान्तं पवित्रं मन्त्रपञ्चकम्। उपाङ्गसंज्ञं यो वेत्ति स सत्यं वेत्ति नान्यथा JayāS. 6.198; 11 17.

**अनिरुद्धान्तिम** (aniruddhāntima) *adj.* having Aniruddha as the last one तुर्यादिजाग्रदन्तं यत् प्रोक्तं पदचतुष्टयम्। वासुदेवादिना व्याप्तमनिरुद्धान्तिमेन तु LakṣmīT. 11.9.

**अनिरुद्धापहारज** (aniruddhāpahāra-ja) *adj.* arising from the carrying away of Aniruddha अत्रान्तरे द्वारकायामनिरुद्धापहारजः। वृष्णीनामभवत् क्षोभः DaśāvaC. 8.297.

**अनिरुद्धार्कज** (aniruddhārka-ja) *adj.* originating from the unobstructed sun परमायुः शतं तस्य तयाहोरात्रसंख्यया। दैनंदिनसृष्ट्यर्थमनिरुद्धार्कजो विधि। भूस्थितानां च जीवानां न स्थिराम्बरवासिनाम् SiddhāTaVi. 5 10.

**अनिरुद्धार्था** (aniruddhārthā) *adj.* (*f.*) whose goal is not obstructed स्वात्मनो ह्यनिरुद्धार्था निरुपाधिविभूतिका। सर्वाकाराभिमानेन ममेतिदृढसक्तिना। सर्वाकारममापत्तिरनन्तैवोपजायते ŚivDṛ. 7.67.

**अनिरुद्धावसानतस्** (aniruddhāvasāna-tas) *ind.* ending with (the *vyūha*) Aniruddha यो वै ब्रह्माधिपत्येन चातुर्व्यूहव्यवस्थितः। वासुदेवादिभेदेन त्वनिरुद्धावसानतः PauṣkS. 10.3.

**अनिरुद्धेच्छाप्रसर** (aniruddhecchāprasara) *adj.* advance of whose willpower is not obstructed, having free course of willpower आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः। अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ŚivDṛ. 1.2.

**अनिरुद्धोपदेश** (aniruddhopadeśa) *m.* teaching or instruction of (the teacher) Aniruddha स राजपुंगवो (बल्लालसेनः) ग्रन्थम्…। अनिरुद्धोपदेशेन प्रणिनाय BallāC. 16.18.

**अनिरुध्य** (a-nirudhya) *ger* **A** not having checked or restrained (oneself) अथवानुग्रहार्थं च लीलार्थं वा तदा मुनिः। अनिरुध्य विचेष्टेद् यः सोऽप्येवं हि सुखी भवेत् LiṅgaP. i. 9.57; **B** not having restricted व्रीहिभिर्यवैर्वा यष्टव्यमिति विकल्पोपदेशे … वाकारस्य तस्मिन् धर्मिणि सर्वात्मना प्रतिक्षेपो नार्थः। किंतु तस्मिन् धर्मिणि प्रयोगान्तरे तत्प्राप्तिमनिरुध्य तत्तत्प्रयोगे प्रतिक्षेपः ŚivārkaMaDī. i. 107.25 (*on* i. 1.2)

**अनिरुध्यमानरूपा** (anirudhyamāna-rūpā) *adj.* (*f.*) whose nature is not being controlled यं (श्रीकण्ठं) माया क्वचिदनिरुध्यमानरूपा न स्प्रष्टुं प्रभवति ŚrīKaC. 17.28.

**अनिरुप्त** (a-nirupta) *adj.* not apportioned, not poured out अनिरुप्तं स्थालीपाकं श्रपयित्वाग्निमुपसमाधाय … प्राजापत्यचैतमग्निमुपतिष्ठेत BaudhŚS. iii. 218.17; iii. 219.8; (हविषि) अनिरुप्तेऽभ्युदिते (चन्द्रमसि) प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यः ĀpaŚS. ix. 4 7; HirŚS xv. 1.77 (277.17); आहवनीयमनिरुप्तेनाज्येन यजमानः प्राच्यां प्रत्यङ्मुखस्तिष्ठन् यूपशकलेनानक्ति VaikhāŚS. 10.8; MīmāSū. vi. 5 16; न च मुष्टिमात्रेण निरुप्तेन न प्रयोजनम्। न ह्येकस्मिन्ननिरुप्ते चत्वारः संभवन्ति ŚābaBh 1312.2 (*on* v. 2.4); नानिरुप्ते प्रायश्चित्तम् ŚāstrDī. 495.20 (*on* vi. 5.3)

**अनिरुप्ताभ्युदित** (aniruptābhyudita) *adj.* (moon) arisen when (paddy is) not apportioned or poured out अनिरुप्ताभ्युदिते कतमाभ्यो देवताभ्यो निर्वपेत् BhārŚS. ix. 6.3.

**अनिरुप्य** (a-nirupya) *ger.* not having apportioned or poured out सोऽह वा एषानुवित्तिर्नामेष्टिर्यद् आग्नावैष्णवः। स यमाग्नावैष्णवमनिरुप्य दीक्षयन्त्यननुवित्तयज्ञमुहैव तं दीक्षयन्ति VādhūŚS. iv. 22.14; स यमाग्नावैष्णवमनिरुप्य दीक्षयन्ति, बहिर्धा तस्य यज्ञाच्छिद्रमन्नाद्यं दधति VādhūŚS. iv. 23.3; नारत्नपाणिर्नास्नातः … नाहुत्वा देवताभ्यो नानिरुप्य पितृभ्यो नादत्त्वा गुरुभ्यः … अन्नमाददीत CaraS. i. 8.20; नानिरू(?रु)प्य देवताभ्यो न पितृभ्यः … हितमन्नमश्नीयात् AṣṭāSaṁ. i. 65.3 (1.10); बहुषु व्रीहिषु निर्वापः प्राप्नोति तावन्मात्रांस्त्वनिरू(?रु)प्यैव व्रीहीन् शक्यते पुरोडाशः संपादयितुम् TantıRa. 305.3.

[1]**अनिरूढ** (a-nirūḍha) *adj.* not purged अनिरूढस्य लक्षणम्। तथैव व्या(व्या)धिरात्मा(ध्मा)नं शूलं विण्मूत्रनिग्रहः BhelaS. 247.4 (8.3)

[2]**अनिरूढ** (a-nirūḍha) *adj.* not established, not settled इह त्वनिरूढो ज्ञानसंस्कारः संस्कार्यस्य कालस्य क्लृप्तमानान्तरलभ्यविनियोगादृते न निर्वहति सक्त्वधिकरणन्यायात् CaturCin. iii(2). 337.2. व्रीहीणां तत्प्रकृतितयान्वये सति निरूढं प्रत्यनिरूढस्य शेषतेति न्यायादवहननादीनां द्वारद्वारिभावेनान्वयः TantrRaba. 64 21.

**अनिरूढकार्य** (anirūḍha-kārya) *n.* rite which is not settled न च निरूढकार्यं प्रत्यनिरूढकार्यस्य शेषता MayūMāli. 183.26 (*on* iii. 1.1); 183.27 (*on* iii. 1.1)

**अनिरूढता** (anirūḍha-tā) *f.* the state of being that which is not settled न च निरूढकार्यं प्रत्यनिरूढकार्यस्य शेषता निरूढानिरूढता च शास्त्रयोर्भेदे सत्येव भवति MayūMāli. 183. 26 (*on* iii. 1.1)

**अनिरूढत्व** (anirūḍha-tva) *n.* the state of not being the conventional sense साध्यत्वं द्वितीयार्थं इति सक्त्वधिकरणे व्यवस्थापितत्वेन वाजपेयाधिकरणोक्तन्यायेनैकस्यां क्रियायां साध्यद्वयासमवायात् काष्ठैस्तण्डुलं पचतीत्यादावपि मत्वर्थलक्षणाया आवश्यकत्वान्निरूढत्वानिरूढत्वे अपि समे VaiyūBhū. 129. 19 (*on* 26)

**अनिरूढत्वविशिष्टसामानाधिकरण्य** (anirūḍhatvaviśiṣṭa-sāmānādhikaraṇya) *n* coreferentiality qualified by 'not being popularly known' अनिरूढत्वविशिष्टसामानाधिकरण्यरूपस्य पूर्वाधिकरणव्युत्पादितनामधेयत्वहेतोरत्राभावात् MīmāKau. i. 173. 21 (*on* i. 4. 3)

**अनिरूढत्वोपपत्ति** (anirūḍhatvopapatti) *f.* tenability of not being well-settled अरुणया क्रीणातीत्यादावनिरूढकार्यस्यापि शेषित्वस्वीकाराद्वाक्यभेदमात्रादेव निरूढानिरूढत्वोपपत्त्या तत्र शास्त्रभेदस्याप्रयोजकत्वाच्च MayūMāli 183. 28 (*on* iii. 1. 1)

**अनिरूपक** (a-nirūpaka) *adj.* who does not explain इह खलु अप्रतिभः कविः अप्रगल्भो विवदिषुः, अ(ति? नि)रूपको व्याचिख्यासुः … इत्यकिंचित्करो वर्गः AvantiKa 73. 9

**अनिरूपण** (a-nirūpaṇa) *n.* non-determination, non-ascertainment, non-defining, non-investigation, non-comprehension, non-description, non-justification, non-explanation न च प्रत्ययमात्रत्वं किंचिदस्त्यनिरूपणात् ŚlokaVār. 5(2). 47 (228. 6); भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ŚlokaVār. 5(2). 118 (245. 8); तदानीं तस्याकृतित अन्यत्वेनानिरूपणात् TantrVā. 259. 4 (*on* i. 3. 26); कारकं नाप्यसिद्धत्वान्नाप्यन्यदनिरूपणात् BṛĀraUBhVā. (Sambandha.) 623; त्रयमेषितव्यं विशेषहेतोरनिरूपणेन SaṁkṣeŚā. 3. 187 (ii. 261. 11); न चैवं ज्ञानेऽप्यभिव्यक्त्यपेक्षा संभवति … रूपान्तरेण ज्ञानस्यानिरूपणात् Kāśi. i. 90.11 (*on* 2. 47); ii. 8. 12 (*on* 5(1). 15); iii. 87.20 (*on* 5(4). 146); संविदस्तत्संबन्धाधीनः स धर्मः इति चेत् कस्तया संबन्धः … न विषयविषयिभावस्तस्यैवानिरूपणात् ĀtmaSi. 59. 22; NyāyKuA. ii(2). 78. 11; NyāyRa. 228.18 (*on* 5(2). 47); 246. 14 (*on* 5(2). 118); कस्तर्हि वाक्यार्थः, न हि बाह्यो वाक्यार्थः, पदार्थेभ्योऽन्यस्य तस्यानिरूपणात् NyāyRa. 939.10 (*on* 7. 330); न च कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वम्, भवत्पक्षे शेषित्वस्यानिरूपणात् BrahmSūBh.(Rā.) 129.10 (*on* i. 1.1); ŚrutaPra. iB. 94. 1 (*on* i. 1. 1); स्वाभावव्यवच्छेदस्य भावरूपपरिच्छेदादन्यत्वेनानिरूपणात् NyāyMa. 41.9; NyāySu.(So.) 10. 34 (*on* i. 2. 2); TattvPradī. (Ci.) 180. 5; 237. 9; सिद्धत्वाद्धेतुफलयोर्गतत्वादनिरूपणात्। अयथार्थेऽपि तद्भावान्नेदं तत्त्वमुपेयते TarkSaṁ.(Ā.) 6. 6; 27. 27; TattvCin. ii(1). 427. 1; ŚatDū. 190.8; स्वकाले यदि बाधः स्यान्नाशस्याप्यनिरूपणम् NyāyPari. 51. 2; स्वरूपहेतू न स्तोऽत्र स्तो वा नैवानिरूपणात् NyāyMāVi. 109. 20 (*on* iii. 1.2); 141. 16 (*on* iii. 3. 6); VivaPraSaṁ. 272. 1; NyāySu.(Ja.) 72B. 8 (*on* i. 1. 1); Vādā. 15.3; Nyāyāmṛ. 189A. 8; AdvaiSi. 334. 6; उपसंहारेण प्राप्तिमनिरूपणे हेतुं चेद् ब्रवीषि तत्र वदामः AṇuBh. 211. 5 (*on* iii. 3. 3); अतिदेशस्यापि अङ्गत्वप्रमाणत्वे इहानिरूपणेऽपि न क्षतिः MīmāKau. ii. 134. 10 (*on* iii. 1. 1)

**अनिरूपणासहत्व** (anirūpaṇāsahatva) *n.* impossibility of non-justification विशेषणविशेष्यभावस्य द्रव्यादिष्वनन्तर्भावादनिरूपणासहत्वादाश्रयासिद्धिः PrakaVi. 437. 21.

**अनिरूपणीयत्व** (anirūpaṇīya-tva) *n.* the state of being that which cannot be defined or justified सांकेतिकत्वे … शोध्यशोधकभावाद्यनुपयोगात् अनिरूपणीयत्वमेव स्यात् ParāTri. 125.15.

**अनिरूपणीयस्वरूप** (anirūpaṇīya-svarūpa) *adj.* having the form which cannot be described किमिदं तिरोधानम्।… अनिरूपणीयस्वरूपमन्यदेव वा किंचिदिति ŚatDū. 144.27.

**अनिरूपित** (a-nirūpita) *adj.* [*f.* -ā] **1** not seen, not perceived निजौजसोज्जासयितुं जगद् द्रुहामुपाजिहीथा न महीतलं यदि। समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश मादृशाम् ŚiśuVa. 1. 37; **2** not mentioned, not described श्रुतौ पुराणे यासां च चरित्रमनिरूपितम्। तासु को विश्वसेत्प्राज्ञः BrahmVaiP. ii. 16. 47; BhāvanāVi. 25. 1; अर्थभेदाधीननिरूपणो ग्रहणभेदो नार्थभेदमन्तरेण शक्यो निरूपयितुं, न च भेदेनानिरूपितः शक्योऽभिभाव्याभिभावकभावेन प्रत्येतुम् TātpaṬ.(Vā.) 451. 16 (*on* ii. 2.14); मातः …। त्वं वेदैरनिरूपिते कुरु जगत्कल्याणमीशप्रिये GaṇeP. i. 83. 34; स्वरूपं किं न जानासि ब्रह्माद्यैरनिरूपितम्। मयूरेशस्य GaṇeP. ii. 122. 16; प्रवृत्त्या हि प्राजापत्येषु पशुषूपाकरणादीनां प्रकृतावनिरूपित एव क्रमो निरूप्यते TantrRa. 233.19; परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतोऽपरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः … निखिलप्रपञ्चम् … करिष्यामीति संकल्पयति VedāntPari. 285. 3; निरूपितेषु यत्किंचिद्विशेषेषु प्रयोजनाभावादप्रवर्तमानो निषेधो वक्ष्यमाणेष्टविषय एव संपद्यते। अनिरूपितेषु तु सुतराम् RasGaṅ. 565. 20; **3** not ascertained, not explained, not justified अनवाप्तविशेषांशं यत्किमप्यनिरूपितम् TattvSaṁ. 931 = ŚlokaVār. 5(13). 49(579.4); पुरुषाधीनविज्ञानस्तेभ्यः प्रागनिरूपितः। यः संज्ञासंज्ञिसंबन्धः स चेष्टश्चेत् ध्रुवं कृतः ŚlokaVār. 5(10). 45(509. 5); उपमानं त्वदृष्टेऽर्थे सदृशे चानिरूपिते नैवेष्टम इति तेनापि न मूलश्रुतिसाधनम् TantrVā. 71.8 (*on* i. 3.9); किं तर्हि संनिहितो विशेषः स एव व्यवहारक्षमः नानिरूपितं द्रव्यमात्रम् TantrVā. 532. 3 (*on* v. 2.23(?22)); न दैव एवेत्यभिप्रायः। किं च दैवस्वरूपमप्यनिरूपितमायुष्मता BālaKrī. i. 195.19 (*on* 1. 344); यत्तु नानिरूपितमदर्शनमभावं निश्चाययति, सुषुप्ते प्रसङ्गादिति Kāśi. iii. 193. 7 (*on* 5(8). 1); संबन्धिद्वयाधारो हि संबन्धो नानिरूपितयोस्तयोः निरूपयितुं शक्यते NyāyRa. 510.16 (*on* 5(10). 1); ŚatDū. 142.4; किं प्रामाण्यमप्रामाण्यं चोभयं स्वत एवावगम्यते, अथवान्यतरदपि स्वभावेनानिरूपितं कारणगुणदोषप्रत्ययाभ्यामवगम्यते ŚāstrDī. 20. 7 (*on* i 1.2): अनिरूपितश्च विशेषो न विधिनान्वेतुं योग्यः ŚāstrDī. 134.8 (*on* ii. 2. 5)

**अनिरूपित** (a-nirūpita) *n.* absence of mentioning (in verbal agreement) यत्तु प्राग्विवाहाद्दानं तदुपसंवादनवचनमात्रम्। न हि तस्मिन्नक्रियमाणेऽभिप्रेतकालेऽवश्यं विवाहनिर्वृत्तिः। कश्चित्प्रागनिरूपिते न दद्यादपि, इतरो वा कदाचिन्न प्रतिगृह्णीयात् ManuBh. i. 220. 12 (*on* 3. 27)

**अनिरूपितकरणत्व** (anirūpitakaraṇa-tva) *n.* the state of not having the denotation of Instrumental case-relation यत्तूक्तं भावनाविषयत्वप्रतीतेः करणत्वहानिः, तदनिरूपितकरण(त)त्वस्य (v. l. त्वात्) BhāvanāVi. 132. 3.

**अनिरूपितकल्पन** (anirūpita-kalpana) *adj.* the procedure of which is not specified अनिरूपितकल्पनं भेषजं कल्कीकुर्यात् AṣṭāSaṁ. ii. 168.18 (5. 8)

**अनिरूपितकारित्व** (anirūpitakāri-tva) *n.* the state of being one acting without giving proper thought तत्राङ्गुलीविचलनभ्रूशिरोवक्रतादयः। अनिरूपितकारित्वमुन्मादः परिकीर्तितः SāhiSā. 5.34.

**अनिरूपितकारिन्** (anirūpitakār-in) *adj.* acting without giving proper thought, acting thoughtlessly श्रुत्वा पञ्चत्वमायातां महादेवीं नरेशिना। छिन्नं आम्रवनं रोषादनिरूपितकारिणा BṛKathāK. 102*6.9.

**अनिरूपितकार्य** (anirūpita-kārya) *n.* action which is not well considered or thought about तदत्र कारणं चिन्त्यं त्वया धीमन्निरंतया। अनिरूपितकार्याणां नेह नामुत्र सिद्धयः MahāP. 34.28; *adj.* who cannot see anything (yet) to be done (i. e. who has fulfilled his mission or work) भस्मसात्कृतविपक्षमुपेतं वीक्ष्य कान्तमनिरूपितकार्यम्। तस्य चेतसि सुखाकृतचेष्टा प्रीतिमाधित परां जिनकान्ता Rāvaṇā. 17.50.

**अनिरूपितकाल** (anirūpita-kāla) *adj.* the time for which is not fixed or specified अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः। कृतकालोऽपनेयश्च यावद्देयोद्यतस्तथा … यावद्देयमुद्यतो यावद्देयोद्यतः गृहीतधनप्रत्यर्पणावधिरनिरूपितकाल इत्यर्थः Mitā. 173.28 (*on* 2. 57)

**अनिरूपितकालत्व** (anirūpitakāla-tva) *n.* the state of being that the time of which is not fixed or determined, the state of being of uncertain time जीवनपरिमितस्य कालस्यान्तरा किंचित् कर्मावयवं यदा कदाचिद् कुर्वाणः ततो मरणस्यानिरूपितकालत्वाद्यदि कथं चिदन्त्यायामवस्थायां समापयेत् न च म्रियेत TantrVā. 632. 4 (*on* ii. 4.2)

**अनिरूपितगोत्व** (anirūpita-gotva) *adj.* the cowness of which is not defined अनिरूपितगोत्वव्यक्तिविशेषसादृश्यमेकस्य गोत्वम् NyāyKu. 155. 12.

**अनिरूपिततत्त्व** (anirūpita-tattva) *adj.* who has not thought upon or investigated the real nature तेन तद्वचनत्वे हि संदेह उपजायते। अनिरूपिततत्त्वानां यावद्दृष्टानुसारिणाम् TantrVā. 146.3 (*on* i. 3. 8)

**अनिरूपितत्व** (anirupita-tva) *n.* the state of not being explained or made clear अब्रह्मविद्या वा ब्रह्मविद्या वेति निरूपणमपेक्षितम्। तस्यानिरूपितत्वात् बुभुत्सितापरीक्षणं स्यात् ŚrutaPra. ii. 74. 14 (*on* i. 3. 32)

**अनिरूपितनिमित्त** (anirūpita-nimitta) *adj.* the cause of which is not defined or specified (यादृच्छिकत्वात्स्वप्नस्य तूष्णीमास्येत पण्डितैः) अनिरूपितनिमित्तं हि स्वप्नसुखं न तदभिसंधाय प्रवृत्तिः संभवति NyāyRa. 220.15 (*on* 5(2). 12)

**अनिरूपितनियोगव्यापार** (anirūpita-niyogavyāpāra) *adj.* who has not understood or ascertained the operation of *niyoga* (i. e. imposed duty) नञर्थपर्यवसाय्येव हि प्रतिषेधविधिः, न पुनस्तदर्थस्यान्यार्थतामवगमयितुं क्षमः। अत्राह — अनिरूपितनियोगव्यापारस्येदं चोद्यम् Bṛha. 38. 8 (*on* i. 1.2)

**अनिरूपितपरावर** (anirūpita-parāvara) *adj.* who has not taken into consideration what follows and what precedes (in the text) तदि-

दमनिरूपितपरावरस्य परिचोदितम् SphoṭSi. 15.1 (comm. न निरूपितः परो ग्रन्थ उत्तरो ग्रन्थः, अवरश्चाधस्तनो ग्रन्थो येन)

**अनिरूपितपरिमाणपूर्व** (anirūpitaparimāṇa-pūrva) *adj.* whose amount (of fee) is not fixed previously अनिरूपितपरिमाणपूर्वे चार्थदाने विहितमध्यापनम् ManuBh. i. 274.25 (*on* 3.146)

**अनिरूपितप्रत्यय** (anirūpita-pratyaya) *adj.* trustworthiness of which is not proved yet अस्ति नः कुलक्रमागतः शल्यसमुद्धरणप्रथितमहिमा नाम पवित्रो मन्त्रः। परं कदाचिदप्यनिरूपितप्रत्ययः KaumuMi 2. 6(27)

**अनिरूपितप्रमाणकत्व** (anirūpitapramāṇaka-tva) *n.* the state of being that for which proof cannot be pointed out तथा च प्रयोगः— विवादपदं भेदसंवेदनं न प्रमाणनिबन्धनम् अनिरूपितप्रमाणकत्वात् NyāyMa. 55. 8; न च पराभिमतं कार्यं तत्त्वतोऽस्ति अनिरूपितप्रमाणकत्वात् PrakaVi. 75. 13.

**अनिरूपितप्रमाणप्रमेयतत्त्व** (anirūpita-pramāṇaprameyatattva) *adj.* who has not ascertained the real nature of the means and object (of valid knowledge) न च लौकिकेन दृष्टान्तेन वैदिकोऽर्थो निरूपयितुं शक्यतेऽनुमानादीनामविषयत्वात्। यदप्युक्तं भेदाभेदयोर्विरोध इति। तदभिधीयते अनिरूपितप्रमाणप्रमेयतत्त्वस्येदं चोद्यम् BrahmSūBh.(Bhā.) 16. 27 (*on* i. 1. 4)

**अनिरूपितबल** (anirūpita-bala) *adj.* whose strength is not ascertained भुक्तं जीर्णाशनं कामं रात्रावप्यनुवासयेत्। केवलानिलनिपीडितं त्वशुद्धमप्यनिरूपितबलं चाप्यनुवासयेदात्ययित्वाद् व्याधेः AṣṭāSaṁ. i. 148. 1(1.28)

**अनिरूपितब्रह्मस्वरूप** (anirūpita-brahmasvarūpa) *adj.* who has not ascertained the essential nature of Brahman अनिरूपितब्रह्मस्वरूपस्य ब्रह्मदृष्टिरूपासु तासु चिन्तनानवकाशात् ŚatDū. 74. 25.

**अनिरूपितभेद** (anirūpita-bheda) *m.* distinction that is not ascertained न चानिरूपितभेदाः संवेद्यभेदमलमुपस्थापयितुम् TātpaṬ.(U.) 245. 8 (*on* 5(3).20)=NyāyRa. 274. 10 (*on* 5(3).20); *adj.* difference amongst which is not taken into consideration एकदेशपरिचिता वृक्षा एवानिरूपितभेदा अपि बहवो वनशब्दवाच्याः SiddhāSi. i. 28. 14.

**अनिरूपितमूलाग्र** (anirūpita-mūlāgra) *adj.* the beginning and the end of which is not ascertained यानि चान्यानि वाक्यानि ··· अनिरूपितमूलाग्रेषु वा पुराणेषु प्रक्षिप्य पठन्ति पापिष्ठाः, तानि प्रत्यक्षश्रुत्यादिपरिशीलनशालिनीषु गरिष्ठगोष्ठीषु नावकाशं लभन्ते ŚatDū. 240. 11.

**अनिरूपितरमणीयत्व** (anirūpita-ramaṇīyatva) *n.* beauty which cannot be described अनिरूपितरमणीयत्वव्यावहारिकत्वादिविडम्बनमप्यम्बरकुसुमायते ŚatDū. 142. 15.

**अनिरूपितरूप** (anirūpita-rūpa) *adj.* [*f.* –ā] whose form or nature is not clearly ascertained नानिरूपितरूपमर्थान्तरं किंचिदपि शक्यमस्तीत्यभ्युपगन्तुम् BrahmSūBh.(Śaṅ.) 119.5 (*on* i. 2.18); इष्यत एव सर्वमनिरूपितरूपमिति चेत् ··· प्रपञ्चस्यानिरूपितरूपत्वासिद्धिः IṣṭaSi. 79.9; अस्तु वा विकल्पप्रत्यक्षयोरनिरूपितरूपः कश्चिदेकः प्रवृत्तिसंवादयोग्यो विषयः तथापि विकल्पः प्रमाणत्वं नातिवर्तते NyāyKa. 191.10; ननु ब्रह्मसंबन्धिनी जिज्ञासेत्युक्ते कर्मानिर्देशादनिरूपितरूपा जिज्ञासा स्यात् VedāntKa. 42.21 (*on* i. 1. 1)

**अनिरूपितरूपत्व** (anirūpitarūpa-tva) *n.* the state of being that the nature or form of which is not ascertained भ्रान्तिबाधयोः स्वरूपस्य तयोर्निवर्त्यनिवर्तकभावस्य निवृत्तेश्च अनिरूपितरूपत्वात् तदसिद्धौ प्रपञ्चस्यानिरूपितरूपत्वासिद्धिः IṣṭaSi. 79. 11.

**अनिरूपितरूपसंपद्** (anirūpita-rūpasampad) *adj.* whose richness of nature cannot be ascertained अनिरूपितरूपसंपदस्तमसो वान्यभृतच्छदच्छवेः। तव सर्वगतस्य संप्रति क्षितिपः क्षिप्नुरभीशुमानिव ŚiśuVa. 16.50.

**अनिरूपितवस्तुका** (anirūpitavastu-kā) *adj.* (*f.*) having an object which is not ascertained सत्कायदृष्टिर्निरूपितवस्तुका वक्तव्या अनिरूपितवस्तुका (वा) वक्तव्या। अनिरूपितवस्तु(का) वक्तव्या रज्ज्वां सर्पबुद्धिवत् AbhichSa. 8. 12.

**अनिरूपितवस्त्ववलम्बन** (anirūpitavastv-avalambana) *adj.* based on objects not ascertained अनिरूपितवस्त्ववलम्बनानां बुद्धिशब्दान्तरादीनां शुक्तिकारजतबुद्धिशब्दादिवद्भ्रान्तिमूलत्वेन वस्त्वन्तरसद्भावासाधकत्वात् BrahmSūBh.(Rā.) 422. 12 (*on* ii. 1. 15); ŚrutaPra. ii. 245. 22 (*on* ii. 1. 15)

**अनिरूपितविशेषणा** (anirūpita-viśeṣaṇā) *adj.* (*f.*) in which the attributes are not determined न ह्यनिरूपितविशेषणा विशिष्टबुद्धिराविरस्ति ĀgaPrā. 79. 7.

**अनिरूपितविषमसमभूमिभाग** (anirūpita-viṣamasamabhūmibhāga) *adj.* who has not paid attention to the uneven and even regions of the ground कृतनिश्चयस्तद्दर्शनाशया पुनरपि प्रतीपमगमम्। अनिरूपितविषमसमभूमिभागश्च गत्वा सत्वरस्तं प्रदेशम् ··· तामन्वेषितवान् TilaMañ. 251. 19.

**अनिरूपितशक्ति** (anirūpita-śakti) *adj.* who has not ascertained the denotative power (of the words) शास्त्रस्था ह्यनिरूपितशक्तयो न शास्त्रार्थमनुष्ठातुं शक्नुवन्ति Kāśi. iii. 231. 10 (*on* 5(10).26½)

**अनिरूपितसंबन्धमात्राश्रयण** (anirūpitasambandhamātrāśrayaṇa) *n.* acceptance of mere relation which is not specified भवेदेवमैन्द्रवायवादिषु परिहारो मरुत्वतीयादिषु देवतायामेव च्छविधानादवश्यं देवतासंबन्ध एवाङ्गीकर्तव्यः। तथा चैन्द्रवायवादिष्वपि तथास्तु किमनिरूपितसंबन्धमात्राश्रयणेन ŚāstrDī. 137.7 (*on* ii. 2.6)

**अनिरूपितसाधारणधर्मस्वरूप** (anirūpita-sādhāraṇadharmasvarūpa) *adj.* who has not ascertained the nature of the common property अप्रतिपन्नसंस्थानस्यानिरूपितसाधारणधर्मस्वरूपस्य च सादृश्यावगमासंभवात् VyakiVi. 127. 26.

**अनिरूपितस्थानास्थानप्रवर्तिन्** (anirūpita-sthānāsthānapravartin) *adj.* who is active in proper or improper places without any consideration सद्यःप्राणापहारक्षमेणाकालमृत्युनानिरूपितस्थानास्थानप्रवर्तिना ··· स्वयोनिना कामेन ··· देवीशरीरमुपेक्षितम् Kād. 258. 7.

**अनिरूपितस्थानास्थानवादिन्** (anirūpita-sthānāsthānavādin) *adj.* who utters words at proper or improper places without any consideration येनैवं खलु हतविधात्रा केनाप्युपदर्शितमुखरागः स्वपक्षपातमात्रप्रवृत्तिरनिरूपितस्थानास्थानवादी शुक इव वक्तुमेवं शिक्षितः Kād. 311. 18.

**अनिरूपितस्वरूपक** (anirūpitasvarūpa-ka) *adj.* whose form is not specified यो विद्यमानं प्रधनमनादिष्टस्वरूपकम्। आकाशभूतमादध्यादादिष्टं नैव तद्भवेत् ···। अनादिष्टस्वरूपकम् अनिरूपितस्वरूपकम् SmṛtiCan. iv. 338. 13.

**अनिरूपितहेतुविशेष** (anirūpita-hetuviśeṣa) *adj.* specific cause of which is not ascertained असति च संबन्धे वस्त्वन्तरस्य वस्त्वन्तरबोधकत्वासंभवादनिरूपितहेतुविशेषं स्वप्नज्ञानवद्यादृच्छिकं शब्दार्थज्ञानं न प्रमाणं भवितुमर्हति ŚāstrDī. 90.11 (*on* i. 1. 5)

**अनिरूपितांश** (anirūpitāṁśa) *m.* part which is not described विद्याविषये पूर्वमनिरूपितांशश्च निरूप्यते ŚrutaPra. ii. 570. 17 (*on* iv. 1. 1)

**अनिरूपिताकार** (a-nirūpitākāra) *adj.* nature of which is not defined शब्दार्थयोस्तु न कश्चिदेवमाकारस्संबन्धस्यावगम्यते। न चानिरूपिताकारस्संबन्धोऽस्ति Kāśi. iii. 127. 18 (*on* 5(5). 72)

**अनिरूपिताकारविशेषा** (anirūpitākāraviśeṣā) *adj.* (*f.*) whose particular form is not described अत एवोक्तमनाकारामेव बुद्धिमनुमिमीमह इति। अनाकारामनिरूपिताकारविशेषामनिर्दिष्टस्वलक्षणामित्यर्थः PañcPā. 8. 4 (*on* i. 1.1)

**अनिरूपिताधिकारिता** (anirūpitādhikāri-tā) *f.* the state of being that for which the eligible person is not specified अनिरूपिताधिकारितया प्रतिपत्तृशून्यस्य विधेरनुपपत्तेश्च SiddhāSi. i. 8. 16.

**अनिरूपितान्यतररूप** (anirūpitānyatararūpa) *adj.* whose one or the other nature is not ascertained त्रेधा खल्वपि वक्तारो निरूपिताप्तभावो निरूपितानाप्तभावोऽनिरूपितोभयरूपश्च ··· अनिरूपितान्यतररूपेऽपि (वक्तरि) शब्दान्निश्चय एव Kāśi. i. 73. 11 (*on* 2. 21)

**अनिरूपिताभिधान** (anirūpitābhidhāna) *n.* statement of what is not ascertained न चैते (तूष्णींभावादयः) हेत्वाभासोद्भावनस्य पुरस्तात्तनाः तस्मादेतदप्यनिरूपिताभिधानाद्यत्किंचित् TātpaṬ.(Vā.) 707.9 (*on* v. 2. 5)

**अनिरूपितावस्थ** (anirūpitāvastha) *adj.* whose state is not specified (by sense-perception) तेनावश्यमनिरूपितावस्थ एव वक्तृज्ञाने पुरुषवाक्यमागमरूपेणैवार्थं प्रतिपादयतीत्यङ्गीकर्तव्यम् NyāyRa. 417. 13 (*on* 5(5). 42)

**अनिरूपितोभयरूप** (anirūpitobhayarūpa) *adj.* whose both forms are not ascertained त्रेधा खल्वपि वक्तारो निरूपिताप्तभावो निरूपितानाप्तभावोऽनिरूपितोभयरूपश्च Kāśi. i. 73. 9 (*on* 2. 21)

**अनिरूप्य** (a-nirūpya) *adj.* **A1** indescribable कस्य नामानिरूप्योऽसौ न मनो लोभयेन्मृगः Rāmā. iii. 41.27; **A11** not possible to be ascertained, beyond description अनिरूप्यमदृश्यं च ज्ञानभेदं मनः स्मृतम् BrahmVaiP. ii. 25.20; (विश्वम्)अनिरूप्यमभूतार्थं मायया जायते स्फुटम् SkandP. iii(3). 19. 63; अनिरूप्यः कृष्णगुणः PañcaRā.(Nā.) ii. 3. 17; **B** which cannot be explained अनिरूप्यो धर्मविधिविषयः TantrVā. 260. 2 (*on* i. 3. 26); न हि जातिवत् व्यक्तिमन्वयमन्तरेण पदार्थस्वरूपमनिरूप्यम् NyāyRaMā. 100. 15; अनिरूप्या निरूप्या वा यागहोमददातयः NyāyMāVi. 239. 24 (*on* iv. 2. 12)

**अनिरूप्य** (a-nirūpya) *ger.* **A** not having considered carefully निर्वहणमनिरूप्यैव स्वबलावष्टम्भेन सहसा प्रसह्य यत् क्रियते, तत् साहसम् BālaKrī. i. 206.19 (*on* 2. 12); प्रायः स्वशक्तिमन(नि)रूप्य कृता प्रवृत्तिः शक्तिं निजामपि शरीरभृतां क्षिणोति BhikṣāKā. 4. 24; चैद्याद्यास्तात्कालिकद्वेषमनिरूप्य ··· भगवता मोचिताः NyāySu.(Ja.) 606A.12 (*on* iii. 4.5); **B** having disregarded

कैकेय्यमकार्यकारिका । ननु वेत्यनिरूप्य कैतवं मतिमक्षैकजयेऽकरोत्प्रभुः RāghPāṇ. (Dha.) 4.35 (comm. अनिरूप्य अविचार्य); **C** not having known, RāghPāṇ.(Dha.) 4.35 (comm. अनिरूप्य अपरिज्ञाय); **D** not having described, not having explained विनापि च नियमपदप्रवेशं कार्यगतैकरूप्यमनिरूप्यानिस्तारः KhaṇḍanKhā 591.18; आनन्दात्मकत्वमग्रे निरूपणीयमिति अधुना तदनिरूप्य AṇuBh. 24.23 (*on* i. 1.11); 44.8 (*on* i. 1.23)

**अनिरूप्यत्व** (anirūpya-tva) *n.* the state of being indescribable or inexplicable आशयस्याप्यन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात् BrahmSūBh. (Śaṅ.) 382.11 (*on* ii. 2.18); अनारोपितं रूपं तर्हि तत्त्वम् — इति चेत्, न, आरोपस्यानिरूप्यत्वादुभयत्राप्यसंभवात् TarkSaṁ.(Ā.) 5.26; तद्भेदेनानिरूप्यत्वात् ज्ञानाकारोऽर्थ इष्यताम् AdvaiSi. 434.23.

**अनिरूप्यत्वतस्** (anirūpyatva-tas) *adv.* on account of being indescribable जगतोऽसत एवमेव युक्त्या त्वनिरूप्यत्वत एव कल्पितत्वात् । तदधिष्ठितभूतरूपमेष्यम् ŚaṅkaDigVi. (Mā.) 15.56.

**अनिरूप्यमाण** (a-nirūpyamāṇa) *adj.* not being described न वाक्यार्थस्यायमेवंविध इत्येवं केनचिद्रूपेणानिरूप्यमाणस्य संभवत्युपसर्गैर्विशेषणम् NyāyRa. 870.21 (*on* 7.89)

**अनिरूप्यमाणतदात्वायतिविभाग** (anirūpyamāṇa-tadātvāyativibhāga) *adj.* wherein the distinction between the present and future is not being considered कन्यान्तःपुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानमनिरूप्यमाणतदात्वायतिविभागम् ··· आकुलीबभूव DaśKuC 35.1.

**अनिरूप्यमाणार्थत्व** (anirūpyamāṇārtha-tva) *n.* the state of having the meaning that cannot be determined नित्यसत्त्वासत्त्वयोरन्यतरप्रसक्तिनिवारकत्वम् (कारणत्वम्) इति चेन्न । निवारकपदावयवस्य प्रत्ययस्य कारणत्वनिर्वचनं विनानिरूप्यमाणार्थत्वात् KhaṇḍanKhā. 1206.22.

**अनिरूप्यस्वरूप** (anirūpya-svarūpa) *adj.* the nature of which cannot be described or is beyond description अनिरूप्यस्वरूपं यत् मनोवाचामगोचरम् ।··· एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन AdbyāU. 63; ViveCū. 471.

**अनिरूहत्** (a-nirūhat) *adj.* not taking away, not removing अग्निमृद्धृत्यानिरूहन् शिक्यादुखामापो देवीः प्रति गृह्णीत भस्मैतदिति तिसृभिरप्सु भस्म प्रवेशयति ĀpaŚS. xvi. 12.11.

**अनिरोध** (a-nirodha) *m.* **1** (in wooing a girl) freedom or liberty (*lit.* absence of obstruction) अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु P. iii. 1.101; पण्यावद्यवर्याविक्रेयगर्ह्यानिरोधेषु Kātan. iv. 2.15; SaraKaṇṭhā. (Gr.) i. 3.144; वर्येति वृङो यो भवत्यनिरोधेऽर्थे JaineVyā. 98.15 (*on* ii. 1.88); अनिरोधः अप्रतिबन्धः KāśiVṛ. *on* iii. 1.101 (Nyās प्रसराविघात इत्यर्थः); PrakriKau. ii. 477.10; **2** non-obstruction, non-stoppage, non-hindrance दृष्टश्चानिरोधो भर्जनकपालादौ तेजसः पच्यमानद्रव्यपाकसिद्धेः कलशे च निषिक्तानामपां बहिः शीतस्पर्शग्रहणात् अनिरोधः NyāyMañ. ii. 51. 19. द्रुमास्ते तिष्ठन्त्यनिरोध एव मरुतामन्तं नयन्तो रजः ŚrīKaC. 4.56; छिद्राणामनिरोधाज्जलपरिपूर्णं पतत्यधः सततम् PraboSu. 56; [Inst.] without obstruction एवमेव पर्यटन्नस्वप्नसुन्दरीसौन्दर्यमुद्रां निद्रयाप्यतिशय्य शय्यागृहे कृतसंवेशं वेशयुवतिपरिवृतमवरोधवधूजनमप्यनिरोधेन निरीक्ष्य RāmāCam. 5.14(2) **3** non-restriction य एव निरोधोऽनागत आसीत्, स एव संप्रति वर्तमानो न तु निरोधोऽनिरोध इत्यर्थः TattvVai. 126.22 (*on* 3 13); ननु सर्ववृत्तिनिरोधो योग इत्युक्ते संप्रज्ञाते व्याप्तिर्न स्यात् । तत्र सत्त्वप्रधानायाः सत्त्वपुरुषान्यथाख्यातिलक्षणाया वृत्तेरनिरोधात् SarvaDaSaṁ. 15.257; *adj.* **i** (Buddh.) free from cessation तदत्रानिरोधाद्यष्टविशेषणविशिष्टः प्रतीत्यसमुत्पादः शास्त्राभिधेयार्थ PrasaPa. 3.11; **ii** free from obstruction अनिरोधे निरोधे सत्यस्पत्राकृनाश्च ते । नृजलस्य प्रवाहेण जनः सर्वोऽपि विस्मितः PrabhāC. 181.12.

**अनिरोधक** (a-nirodhaka) *m* one of the four types of Sāraṅga yogins *lit.* not controlling the breath) योगिनस्त्रिविधा भवन्ति सारङ्गा एकार्ष्या विसरगाश्चेति । अनिरोधका निरोधका मार्गगा विमार्गगाश्चेति चतुर्विधाः सारङ्गाः VaikhāDS i 10.2: *adj.* which does not obstruct न बलं न च नैपुणम् । भवेत्कार्याय पर्याप्तं कालश्च ह्यनिरोधकः । ये सनाथाश्च दातारो गीतवाद्यैरुपस्थिताः । ये चानाथाः परान्नादाः कालस्तेषु समक्रियः ŚivaP. vii 7.19 (510A. 15)

**अनिरोधतस्** (anirodha-tas) *adv.* without obstruction, freely वायुः परिचितो यस्मादग्निना सह कुण्डलीम् । बोधयित्वा सुषुम्णायां प्रविशेदनिरोधतः HaṭPra. 4.19; पुनः पिङ्गलया पूर्वं पूरयेदुदरं शनैः ।··· यथा त्यजेत्तथापूर्वं धारयदनिरोधतः ŚārṅgaPa 4460.

**अनिरोधधर्मन्** (anirodha-dharman) *adj.* not having the property of destruction परिज्ञातानि समुच्छिन्नमूलानि तालमस्तकवदनाभासगतानि आयत्यामनुत्पादानिरोधधर्माणि ĀryaŚāS. 19.7.

**अनिरोधसंभव** (anirodha-sambhava) *m.* possibility of freedom or liberty (in wooing a girl) (अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु) 'वृङ् संभक्तौ' इत्यस्येदं निपातनम्, तत्रैवानिरोधसंभवात् PadMañ. *on* Kāś Vṛ. *on* P. iii. 1.101.

**अनिर्गच्छत्** (a-nirgacchat) *adj.* **i** not flowing out मैथुनविघातादतिमैथुनाद्वा शुक्रं चलितमनिर्गच्छद्विमार्गगमनादनिलोऽभितः संगृह्य मेढ्वृषणयोरन्तरे संहरति SuśruS. ii. 3.12. **ii** not going out दत्तदीपाऽनिर्गच्छन्नन्तर्गेहादिनेष्वपि । दाक्षिण्याद्दर्शनं प्रादाद्भृत्यानां भोजनक्षणे (नृपः) RājTa. (Ka.) 8.833.

**अनिर्गत** (a-nirgata) *adj.* [*f.* -ā] **Ai** who or which has not come out अग्रतो ह्यस्य पाञ्चालास्तत्रानीके महात्मनः । अनिर्गते सारबले मागधेभ्यो गिरिव्रजात् MahāBhā. ii. 156*(2); दैत्योऽपि दुर्मतिः । जले त्ववध्यमात्मानं विदित्वा न विनिर्गतः । अनिर्गतं तं तु तदा विज्ञाय मधुसूदनः । नौबन्ध एवमुदितो विवेशाथ सुरैः सह NīlaP. 163; अधाक्षुस्ते च तं वृक्षं कूटहंसावली च सा । दग्धां हंसावलीमत्र मेने तस्मादनिर्गताम् KathāSaSāg. xii. 4.177; मर्मकर्माणि चत्वारि पूर्वोक्तानि ··· तेषु विद्धस्य नागस्य शल्यं सद्विप्रणश्यति । अनिर्गतेषु तं प्राप्य निर्गते न स जीवति HastvĀyur. 470.20 (3.12); 470.24 (3 12); चन्द्रं प्रत्येषोक्तिः । अत्र च अस्ति मम प्रियायाः कदापि बहिरनिर्गतायाः, अत एव त्वयाप्यदृष्टाया आननं त्वत्सदृशमिति प्रतीयमाना उपमा RasGaṅ. 237.5; **Aii** which has not gone out ग्रामेष्वन्तः सार्थिका ज्ञातसारा वसेयुः । (सारद्रव्यम्) मुषितं प्रवासितं चैषामनिर्गतं रात्रौ ग्रामस्वामी दद्यात् ArthŚā. ii. 178.2 (4.13); **B** which has not departed असर्वगतपक्षे स्याज्जीवो देहादनिर्गतः । अणुः शरीरमात्रो वा TantrVā. 3.8.18 (*on* ii. 1.5); स मुमूर्षुः यावदस्माच्छरीरादनुत्क्रान्तः अनिर्गतः भवति तावत्पुत्रादीञ्जानाति ChāndoUBh. 504.5 (*on* viii. 6 4) **C** which has not gone forth विषयविषयिभावमात्रे नियामिका वृत्तिश्चेदनिर्गताया ऐन्द्रियकवृत्तेस्तन्नियामकत्वं नातिप्रसंग्रा- (? संगा) वहम् SiddhāLeSaṁ. 127.4; आवरणविच्छेदः स्पष्टता तामनिर्गता । करोतु तुल्यविषया तत्तदज्ञानमेदिनी VedāntSiSūMañ. 1.118.

**अनिर्गतदशरात्रा** (anirgata-daśarātrā) *adj.* (*f.*) who has not gone through or completed ten days (*lit.* nights) (गौः) अनिर्दशा प्रसवप्रभृत्यनिर्गतदशरात्रा Aparā. 246.3 (*on* 1.170)

**अनिर्गतदशाह** (anirgata-daśāha) *adj* [*f.* -ā] who or which has not gone through or completed ten days (of impurity) अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म वा । अनिर्गतदशाहं तु शेषाहोभिर्विशुध्यति BṛhaspaSm. 357.32; अशुच्यशुचिना दत्तमाममृच्छकलादिना अनिर्गतदशाहास्तु प्रेता रक्षांसि भुञ्जते Karmapradīpa i. 10.13; अनिर्दशम् अनिर्गतदशाहम् SmṛtiCan. vi. 47.1; (धेनुः) अनिर्दशा अनिर्गतदशाहा नवप्रसूता DīpKa. 21.8 (*on* 1.170); गौरनिर्गतदशाहा DīpKa. 60.20 (*on* 2.163); सूतिका प्रसवोत्तरमनिर्गतदशाहा (गौरदण्ड्या) VīraMi. 642.11 (*on* 2.163); BālamBha. ii. 281.24 *on* 2.163); *m.* ten days which have not elapsed मृतम् ··· अनिर्गतदशाहाद्यशौचकालं यः शृणोति स यदवशिष्टं दशरात्राद्याशौचस्य तावत्कालमविशुद्धो भवति ManvaMu. 209.19 (*on* 5.75)

**अनिर्गतदोष** (anirgata-doṣa) *adj.* from which the affliction has not disappeared न वानिर्गतदोषेऽक्षिण धावनं संप्रयोजयेत् ŚārṅgaS. iii. 13.118.

**अनिर्गतद्वादशाह** (anirgata-dvādaśāha) *adj.* who has not gone through or completed twelve days (विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । ·· तावदेवाशुचिर्भवेत्) अनिर्दशम् अनिर्गतदशाहम् । एतदनिर्गतद्वादशाहादेरुपलक्षणार्थम् SmṛtiCan. vi. 47.1.

**अनिर्गतवृत्ति** (anirgata-vṛtti) *f.* mental function which has not gone forth विषयावच्छिन्नचैतन्यगतस्य तदावारकाज्ञानस्यानिर्गतवृत्त्या निवृत्त्यभ्युपगमेऽप्यनतिप्रसङ्गात् SiddhāLeSaṁ. 218.7.

**अनिर्गतवृत्त्यवच्छिन्न** (anirgatavṛtty-avacchinna) *adj.* delimited by the mental function which has not gone forth परोक्षस्थल इवानिर्गतवृत्त्यवच्छिन्नसाक्षिणैव घटादेरपि प्रकाशोपपत्तेः SiddhāLeSaṁ. 214.5; अनिर्गतवृत्त्यवच्छिन्नचैतन्यमेव ··· विषयगोचरमगत्यार्थादभ्युपगम्यत इति SiddhāLeSaṁ. 215.6.

**अनिर्गताशौच** (anirgatāśauca) *adj* who has not gone through or completed (the period of) impurity (अनिर्दशं च प्रेतान्नम्) प्रेतान्नं शवान्नमनिर्दशमनिर्गताशौचम् ManvaVi. 562.13 (*on* 4.217); अनिर्गताशौचं च सूतकान्नम्, अतुष्टिकरमेव च न भुञ्जीत ManvaMu. 184.30 (*on* 4.217)

**अनिर्गति** (a-nirgati) *f.* not coming off, not slipping नेत्रवस्त्राञ्चलाग्राणि रज्जूकृत्य निवेशयेत । रन्ध्रेऽग्राणामनिर्गत्यै ग्रन्थिं च रचयेद् दृढम् SaṁgīRa. iii. 489.9 (6.1173

**अनिर्गम** (a-nirgama) *m.* **A** non-coming out, non-emergence (अहं तु नष्टं न ज्ञात्वा ···) उद्विग्नमानसो जातस्तस्य भ्रातुरनिर्गमात् Rāmā. iv. 182*; न चालेपं रात्रौ प्रयुञ्जीत, मा भूच्छैत्यविहतोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति SuśruS. i. 18.12; अनिर्गमात् पुनरक्षराणामास्यात AvantiKa. 181.2; **Bi** non-going out दुरारोहं तु गिरिजं दुर्गमावेष्ट्य सेनया । अप्रवेशात्

धान्यानां दुर्गस्थानामनिर्गमात्। अन्नक्षयान्निरोधाच्च ··· गिरिदुर्गं जयेन्नृपः Mānaso. ii. 20. 1061; अथ व्रीडा ··· अनिर्गमो बहिःक्वापि दूरादेवावगुण्ठनम् RasāSu. 123.5 (2. 65); **Bii** absence of outlet सर्वेन्द्रियावरोधादुद्योगशतैरनिर्गमं वीक्ष्य। शान्तं तिष्ठति चेतो निरुद्यमत्वं तदा याति PraboSu. 76; **C** absence of going forth प्रमाणवृत्तीनामेव तन्निवर्तकत्वाभ्युपगमात। ननु, नायमपि नियमः। परोक्षवृत्तेरनिर्गमेनाज्ञानानिवर्तकत्वात् SiddhāL-Sam. 147. 3; *adj.* [*f.* -ā] **1** which cannot come out विश्रब्धस्य ··· अधरमवगृह्य दशनान्तर्गतमनिर्गमं कृत्वा हसेत् KāmSū. 109. 20 (2. 3); स प्राह कोऽपि नर्मोक्त्या किं मातेव विपद्यते। शल्यं बिल्वकवन्मेऽभूदित्याजन्माप्यनिर्गमम् PrabhāC. 127.26; **2** not having an outlet हर्म्यकोटिस्फुरत्कोटिध्वजजालान्तरस्थिता। जलजन्मतयेव श्रीर्यस्मादासीदनिर्गमा PrabhāC. 1·1. 15.

**अनिर्गमन** (a-nirgamana) *n.* **i** not coming out ब्रह्माण्डगर्भमपि योऽधिवसन्त्रिजाण्डपिण्डादनिर्गमनमेव विरांचकार HarVi. 36.28; **ii** non-departure वागादीनां नियमेन तत्तज्जीवसांनिध्यं स्वतश्चानिर्गमनं मृत्युरूपश्रमेण तत्र लयः··· नोपपद्येत AṇuBh 162.18 (*on* ii. 4. 14)

**अनिर्गुण** (a-nirguṇa) *m.* name or epithet of Śiva (*lit.* not devoid of attributes) (नामभिश्छान्दसैश्चैव इदं स्तोत्रमुदीरयत्) नमो विकृतवेशाय क्रूरामर्षणाय च।··· दीप्तायानिर्गुणाय च LiṅgaP. i. 21. 69; *adj.* not devoid of attributes or qualities शंकरः परमेश्वरः।··· निर्गुणोऽनिर्गुणोऽपि सः ŚivaP. ii(1). 4.32 (41A. 11)

**अनिर्ग्रन्थ** (a-nirgrantha) *adj.* not freed from ties or hindrances काषायिणोऽप्यनिर्ग्रन्थाः कापाली बहुलास्त्विह।··· उत्पद्यन्ते तदा ते वै संप्राप्ते तु कलौ युगे LiṅgaP. i. 40.39.

**अनिर्ग्राह्य** (a-nirgrāhya) *adj.* not to be taken in, to be avoided मद्यपेयमनिर्ग्राह्यमिति। अनिर्ग्राह्यम् अस्वीकार्यम् VīraMi.(Āhnika.) 549. 16.

**अनिर्घात** (á-nirghāta) *m* **i** non-destruction (i. e. preservation) इन्द्रियं मे वीर्यं मा निर्वधीरित्याशिषमेवैतामाशास्त इन्द्रियस्य ··· पशूनामनिर्घाताय TaiS. III. i. 8 3; III. ii. 4. 2; BaudhŚS. ii. 158. 16; यद्रुक्ममन्तर्दधातीन्द्रियस्य वीर्यस्यानिर्घाताय MaiS. iv. 4. 4 (iv. 54. 16); TaiBr. I. viii. 9.1; **ii** absence of annihilation or eradication एवमन्येऽपि च गदा व्यावर्तन्ते पुनर्गताः। अनिर्घातेन दोषाणाम् CaraS. vi. 3. 338 (1941 Ed.)

**अनिर्घातितत्व** (anirghātita-tva) *n.* the state of not being pressed अत्र च हृदि स्थितस्यान्नि(? नि)र्घातितत्वविशेषणस्यासिद्धया त्वसिद्धिर्भाषायां दोषः VīraMi. 406. 13 (*on* 2. 7)

**अनिर्घात्य** (a-nirghātya) *adj.* not to be forced or brought out [PW., pw., MW.]

**अनिर्जय** (a-nirjaya) *m.* absence of complete victory अनिर्जयेन द्विषतां यस्यामर्षः प्रशाम्यति। पुरुषोक्तिः कथं तस्मिन् Kirātā. 11. 71.

**अनिर्जरितचन्द्रिकम्** (a-nirjaritacandrikam) *adv.* in such a manner that the moonlight has not been rendered feeble (लङ्का) यस्यामनिर्जरितचन्द्रिकमर्कपादैः ··· उषसि व्यलासि MahāN. 9.116.

**अनिर्जित** (a-nirjita) *adj.* [*f.* -ā] **Ai** not overpowered, invincible तं न बुध्यसि गोविन्दम् ··· तेजोराशिमनिर्जितम् MahāBhā. v. 128.51; HariVaṁ. 90.2; विषयैः कषायरागद्वेषमोहैरनिर्जिताः। भूयास्म त्वत्प्रसादेन TriṣaŚaPuC. iv. 4.220; अनिर्जिताः सन्ति वसुंधरायां त्वया बुधाः केचिदुदारविद्याः ŚaṅkaDigVi.(Mā ) 7.52; **Aii** (person) not defeated स शम्बर इति ख्यातः शतमायो महासुरः। ददौ शक्रस्य संग्रामं देवसंघैरनिर्जितः Rāmā. ii. 9. 11; वामो बाहुश्च मे विष्णुर्नित्यं युद्धेष्वनिर्जितः BrahmāṇḍP. i. 26. 58; पूर्वाभिमुखो निबध्यते यः क्षिप्रं प्रकरोति विक्रमम्। राज्ञः समरेष्वनिर्जितो दीर्घं चायुरवाप्नुयान्नरः YogYā 10.30. अनिर्जितो भ्राता विकर्ण एष मम पणः BālBhā. 2.33(2); तारको नाम दैत्येन्द्रः सुरशत्रुरनिर्जितः SkandP. v(1). 18.9; PadmP. v. 40. 58; यस्तेनानिर्जितो युद्धे विष्णुना प्रभविष्णुना। कथमस्मद्विधस्तस्य स्थास्यते समरेऽग्रतः LiṅgaP i. 101 22; (गजाः) ते (ये)षां मुक्ता विषाणेषु पुरीषेषु च रोचना। यस्य स्युस्ते च नृपतेः स राजा स्यादनिर्जितः Hastyāyur. 436. 19 (3.8); **Aiii** not won over पुरा धूर्तैः प्रसिद्धोऽहं युक्त्या धूर्तैरनिर्जिताम्। अवापं विप्रतनयाम् BṛKathāMañ. 10. 272; **Bi** (battle) not conquered तस्मिन्ननिर्जिते युद्धे प्राणान्यदि ह मोक्ष्यसे। अन्यं देहं समास्थाय पुनस्तेनैव योत्स्यसे MahāBhā. xii. 16.22; **Bii** not acquired, not reclaimed दोषान् व्याधींस्तथा मोहमाक्रान्ता भूरनिर्जिता। विवर्धयति नारोहेत्तस्माद्भूमिमनिर्जिताम् MārkP. 39.39; ŚārṅgaPa. 4469; **Biii** not subdued, not prevailed over, not controlled रागादयः कथं जेतुं शक्या वर्षशतैरपि। न योगयोग्यं भवति मन एभिरनिर्जितैः BhaviP. 109A. 30 (i. 61.8); त्वत्प्रसादादनिर्जितैः। रागादिभिरमर्त्यत्वं प्रापुः प्रक्षीणकल्मषाः BhaviP.111A. 3 (i. 62. 17); कुलघाताय पाताय बन्धाय च वधाय च। अनिर्जितानि जायन्ते करणानि शरीरिणाम् YogŚā. 4.27 [Kośas give *anirjita* as the meaning of following words — *ajita*, AnekāSaṁ. 3.229; NānārthaSaṁ. ii. 50.44; ViśvaLoK. 132.77; ViśvaPra. 62. 73; *aparājita*, ViśvaPra. 74. 226; *gaṇādhipati*, ViśvaLoK. 161.249; *acyuta*, ViśvaPra. 62. 73; MediK. 63. 78; ŚabdaRaSaK 136 8]

**अनिर्जितदिगन्त** (anirjita-diganta) *adj.* who has not conquered the ends of the quarters इदं दिग्विजयप्राप्तराजसूयस्य भूपतेः। अनिर्जितदिगन्तेन लङ्घ्यते कथमासनम् BṛKathāMañ. iii 1. 175.

**अनिर्जितरिपु** (anirjita-ripu) *adj.* who has not conquered the enemies (भूः) अनिर्जितरिपुः सापि न तस्यावरता मदात् HarVi. 43.65.

**अनिर्जिताखिलगोगण** (anirjitākhilagogaṇa) *adj.* who has not controlled the whole group of sense-organs अयं व्याधः पापरतः ··· अनिर्जिताखिलगोगणः BrahmP. 169. 28

**अनिर्जितात्मचित्त** (anirjitātmacitta) *adj.* who has not controlled one's own mind अनिर्जितात्मचित्तानां समन्ताद्दुःखदा दशाः YogVā. v. 14. 41.

**अनिर्जितात्मन्** (anirjitātman) *adj.* who has not controlled oneself ग्राम्यभुजां तथैवानिर्जितात्मनाम्। ब्राह्मणक्षत्रियविशां शूद्राणां च स्वकर्मतः। परिच्युतानां या चेष्टा परलोकार्थमि(? मी)प्सताम्। तस्याश्च यत्फलं सर्वं तत्ते यक्ष भविष्यति MārkP. 50. 59.

**अनिर्जितेन्द्रिय** (anirjitendriya) *adj.* who has not controlled the sense-organs राज्यं हि नाम।··· नानिर्जितेन्द्रिये ··· पदमेवादधाति Kād. 297.19; (नराः) अनिर्जितेन्द्रियाः कामवशगाः पापकारिणः BṛBrahmaS. ii. 3. 54.

**अनिर्जितोपभोग्य** (anirjitopabhogya) *adj.* **1** to be enjoyed without restraint (इदम् उद्यानम्) हृदयमिव दुरात्मनामगुप्तं नवमिव राज्यमनिर्जितोपभोग्यम् Mṛcch. 8. 4; **2** to be enjoyed though not conquered, Mṛcch. 8.4.

**अनिर्जित्य** (a-nirjitya) *ger.* **A** not having conquered अनिर्जित्य रणे सर्वानेतान् ···। अशक्यः ··· हन्तुं दुर्योधनस्त्वया MahāBhā. iii. 37. 17; न चाहं समरे तात कृतवर्मा तथैव च। अनिर्जित्य रणे पाण्डून्व्यपयास्याव कर्हिचित् MahāBhā. x. 4.17; न खल्वनिर्जित्य रघुं कृती भवान् RaghuVa. 3.51; VakroJī. 90. 8; मामनिर्जित्य भूभागे न स्थानं ते कदाचन DevīBhāP. v. 13. 13; न ते स मामनिर्जित्य निर्वाहमवगाहते PāṇḍaC. 8.225; अथवैतमनिर्जित्य दिशं दक्षिण दक्षिणाम्। गतिर्यद्यस्त्यरिस्तत्राप्यनवर्द्धिनृपो बली ĀnandRa. 6.24; **B** not having won or captured न हि शक्ष्याम्यनिर्जित्य गाः प्रयातुं पुरं प्रति MahāBhā. iv. 36. 22; **Ci** not having subdued or controlled कामक्रोधावनिर्जित्य कथं ब्रह्मत्वमिच्छसि Rāmā. i. 1173*(52); **Cii** having kept intact (*lit.* not having destroyed) स्वकारणमनिर्जित्य कार्यार्थं मुनिपुङ्गव।··· प्रेरितं नाभिरन्ध्रेण मया हार्दं कुशेशयम् JayāS. 2. 34.

**अनिर्जीर्ण** (a-nirjīrṇa) *adj.* not completely destroyed तत्र कर्मणि अक्षीणे अनिर्जीर्णे — जीवप्रदेशेभ्योऽपरिशटिते इच्छेत् मानुषं लोकमागन्तुं न च शक्नोति SthāṇṬ. 187A.13; अनिर्जीर्णाः — तत्प्रदेशानां जीवप्रदेशेभ्योऽपरिशटनात् AupaSūṬ. 208. 9.

**अनिर्ज्ञात** (a-nirjñāta) *adj.* **A** not known, not fully known, not exactly known अनिर्ज्ञातेऽर्थे गुणसंदेहे च नपुंसकलिङ्गं प्रयुज्यते MahāBh. i. 250. 3 (*on* i. 2. 69); मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयतेऽनिर्ज्ञातमर्थं ज्ञास्यामीति MahāBh. i. 397. 10 (*on* ii. 1.55); i 427. 9 (*on* ii. 2. 25); निर्ज्ञातोऽर्थो निमित्तमनिर्ज्ञातोऽर्थो निमित्ती। इह च प्रत्ययोऽनिर्ज्ञातः MahāBh. ii. 1. 17 (*on* iii. 1. 1); ii. 379. 13 (*on* v. 2.41); ii 420. 2 (*on* v. 3.67); ii. 428. 2 (*on* v. 3. 92-93); यस्य निर्ज्ञातः कालस्तस्यानुवादः। यस्य त्वनिर्ज्ञातस्तस्य विधिः ŚābaBh. 1456. 7 (*on* vi. 4. 44); विशेष्यं स्यादनिर्ज्ञातं निर्ज्ञातार्थो विशेषणम् VākyaP. 3 (4). 7; अन्यथा भवत्यश्वोऽजापय इत्येवमादिषु नामाख्यातसारूप्यादनिर्ज्ञातं कथं क्रियायां कारके वा व्याक्रियेतेति YogBh. 146 5 (*on* 3. 17); यथा स्थाणावनिर्ज्ञाते, न स्थाणुरिति पुरुष एवायमिति प्रतिपद्यते विपरीतम् BṛĀraUBh. 38. 16 (*on* i. 3. 1); अनिर्ज्ञाते हि ब्रह्मस्वरूपे किं संपादयेत् BṛĀraUBh. 126. 12 (*on* i. 4. 10); अनिर्ज्ञातं लक्ष्यं भवति। निर्ज्ञातं लक्षणम् ManuBh. ii. 332. 9 (*on* 10.5); न चानिर्ज्ञातोऽर्थो ज्ञाने विशेषमापादयति PrakaPañ. 245.7; अनङ्गमाश्रितस्य येषामनिर्ज्ञातमङ्गत्वं तदाश्रितस्य क्रमस्याङ्गत्वे कल्प्यमाने तस्य तावत्स्वयमङ्गता कल्प्येत TantrRa. 254.16; सर्वत्र संबन्धविधाने ज्ञातयोः संबन्धमात्रं विधीयते अनिर्ज्ञातयोस्तु संबन्धिनोः अन्तर्भाव्य तावर्थौ संबन्धविधानमिति SaṅkarKāBh. 81. 19 (*on* ii. 2. 14); निर्ज्ञातस्वरूपस्यापि यागस्य फलभावनाकरणत्वेनानिर्ज्ञातस्य या आकाङ्क्षा — सा विवक्षिता MayūMāli. 523. 29 (*on* vii. 1. 1); **B** not recognised एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते SvapnVā. 1.3(7)

**अनिर्ज्ञातकर्तृक** (anirjñātakartṛ-ka) *adj.* whose agent is not known अनिर्ज्ञातकर्तृकेषु भक्षेषु पूर्वपक्षोत्थानम् ṬupṬ. 125. 14 (*on* vi. 4. 4)

**अनिर्ज्ञातकर्तृत्व** (anirjñātakartṛ-tva) *n.* the state of having an

**अनिर्धारितैकपरत्व** (anirdhāritaikapara-tva) *n.* the state of having reference to any one (of the many) which is not determined संयोगाद्यन्यतमस्य चानिर्धारितैकपरत्वे भागासिद्धिः TattvCin. i(1). 540. 2.

**अनिर्धारितैकबाधप्राप्ति** (anirdhāritaikabādha-prāpti) *f.* undesired possibility of the sublation of the undecided one अनिर्धारितैकबाधप्राप्तौ ह्येकबाधानुकूलकल्पनायां विनिगमकस्तर्को भवति TattvCin. ii(1).662.2.

**अनिर्धारितैकान्ता** (anirdhāritaikāntā) *adj.* (*f.*) whose exclusive end (i. e. success) is not sure उपायस्यापायशङ्कायाश्च भावादनिर्धारितैकान्ता फलप्राप्तिः प्राप्त्याशा Avalo. 6.5 (*on* 1.21)

**अनिर्धारितैकाप्रामाण्य** (anirdhāritaikāprāmāṇya) *n.* invalidity of the one (of the two alternatives) that is not determined यदेव हि विरुद्धार्थग्राहकत्वं तर्कविनाकृतमनिर्धारितैकाप्रामाण्यानुमितिमजीजनत्तदेव तर्कसहकृतम् TattvCin. ii(1).663.4.

**अनिर्धारितोभयरूपता** (anirdhāritobhayarūpa-tā) *f.* the state of being one both features of which are undetermined प्रमाणादप्रमाणाद्वेति वदन्ननिर्धारितोभयरूपतां विकल्पस्य दर्शयति Kāśi. iii. 90. 10 (*on* 5(4).154)

**अनिर्धारितोभयरूपभावना** (anirdhāritobhayarūpa-bhāvanā) *f.* productive operation both aspects of which are not determined आकाङ्क्षाविरहेणानिर्धारितोभयरूपभावनामात्रस्य गुणफलाभ्यामन्वयानर्हत्वात् Mayū-Māli. 71.2 (*on* i. 4. 6)

**अनिर्धारितोभयरूपा** (anirdhāritobhayarūpā) *adj.* (*f.*) both aspects of which are undetermined (भावना) अनिर्धारितोभयरूपा तु नैकेनाप्यन्वीयते ŚāstrDī. 71. 2 (*on* i. 4.6)

**अनिर्धार्य** (a-nirdhārya) *ger.* not having ascertained क्षणादनिर्धार्य निदानभेदं दत्तापहासैर्वनदेवताभिः। मृगायितं तत्र मृगेन्द्रमुख्यैः सिंहायितं गोकुलसारमेयैः Yādavā. 5. 17.

**अनिर्धार्य** (a-nirdhārya) *adj.* which cannot be ascertained अव्यपदेश्यमनिर्धार्यम् … किंचिदधरोत्तरयति विश्वमिदम् NīlaVi. 99.5 [not to be agreed upon, MW.]

**अनिर्धार्यमाण** (a-nirdhāryamāṇa) *adj.* not being determined or fixed कथंचित्काशकुशावलम्बनं यदि ब्रह्मादयो निर्धारयितुं शक्यन्ते तेषु त्वनिर्धार्यमाणेषु कषामेको दीक्षयितेत्युच्यते NyāyRaMā. 154. 7.

**अनिर्धार्यमिथोविशेष** (anirdhārya-mithoviśeṣa) *adj.* having the difference between each other undistinguishable प्रसादभाजोरुभयोरभूतामुभावनिर्धार्यमिथोविशेषौ। नभःस्थले शीतरुचिः सतारे सकैरवे तत्प्रतिमा च तोये Yādavā. 2. 86.

**अनिर्धार्यमूल** (anirdhārya-mūla) *adj.* source of which cannot be ascertained ऐतिह्यं वृद्धवाक्यं बहुदिवसगतैर्यत्त्वनिर्धार्यमूलम् TattvMu. 4. 130.

**अनिर्धूय** (a-nirdhūya) *ger.* not having completely dispelled अनिर्द्ध(? धू)य तमो नैशं यथा नोदयतेऽंशुमान् MahāP. 9. 119.

**अनिर्बद्ध** (a-nirbaddha) *adj.* (sound) not restrained or regulated (i. e. either too high or too low) अनिर्बद्धं तूच्चावचम् Vaija. 32.17.

**अनिर्बन्धगामित्व** (anirbandhagāmi-tva) *n.* the state of being that which comes without restriction (लाभः) सामवायिकानामनिर्बन्धगामित्वात् पुरोगः ArthŚā. iii. 70.3 (9. 4)

**अनिर्बन्धपूर्वकम्** (a-nirbandhapūrvakam) *adv.* without any insistence or compulsion भृतकाध्यापनस्य निषेधादाह। अर्पणेति। अनिर्बन्धपूर्वकं यथा तथेत्यर्थः BālamBha. i. 150. 22 (*on* 1.28)

**अनिर्बन्धरुष्** (a-nirbandharuṣ) *adj.* not having persistent anger, not inexorable in anger प्रह्वेष्वनिर्बन्धरुषो हि सन्तः RaghuVa. 16. 80 (comm. अनियतकोपाः)

**अनिर्बन्धविषय** (a-nirbandhaviṣaya) *m.* not a domain of insistence अयमनिर्बन्धविषयो राशिः ĀścaCū. 3. 9(3)

**अनिर्भक्त** (á-nirbhakta) *adj.* not excluded from the share यावद्धै भागिनं स्वेन भागधेयेन न निर्भजन्त्यनिर्भक्तो वै स तावन्मन्यते ŚatBr. XI. vii. 4. 2; स ह वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यनिर्भक्तो ह वै स यमभागं निर्भजन्त्युत ŚatBr.(K.) II. viii. 3. 27; अथैतत् सोमाय हविष्करोति तथातोऽनिर्भक्तः सोमो भवति ŚatBr.(K.) V. iv. 4. 1.

**अनिर्भया** (a-nirbhayā) *adj.* (*f.*) completely free from fear मन्दराघातसंत्रासात्यक्तक्षीरार्णवस्थितिः। कला सुधाकरस्याथ कुहूराहुभयार्दिता। सीमन्तिनीस्वरूपेण तिष्ठेः काश्यामनिर्भया SkandP. iv. 96.138.

**अनिर्भरा** (a-nirbharā) *adj.* (*f.*) excessively filled with, fully endowed with [cf. [5]अ] मत्सुतेयमिति ज्ञात्वा सिषेवे मातृवर्चसा। हिमाचलप्रिया मेना सर्वार्द्धिभिरनिर्भरा ŚivaP. ii(3). 1. 5 (124A. 5); [not excessive, little, slight, light, MW.]

**अनिर्भाग** (á-nirbhāga) *m.* non-exclusion from the share, giving of the share ता वा एता उज्जितयो व्याख्यायन्ते। यज्ञस्य सर्वत्वाय। देवतानामनिर्भागाय TaiBr. I. iii. 2.6. (Bhaṭṭabhāskara अनिर्भागाय निर्भागत्वं मा भूदिति)

**अनिर्भाव्या** (a-nirbhāvyā) *adj.* (*f.*) inconceivable, indescribable (i. e. fictitious) (कलनाः) प्रतिभासाच्चिदाकाशे सत्त्वशून्यं भवन्ति ताः। प्रकचन्ति ह्यनिर्भाव्याः प्रभापिण्ड इव प्रभाः YogVā. iii. 80. 58 (comm. अनिर्भाव्या इति यौक्तिकदृशा अनिर्वचनीया इत्यर्थः)

**अनिर्भास** (a-nirbhāsa) *adj.* not having a formal appearance, not envisaging a form अनिर्भासं सनिर्भासमन्यनिर्भासमेव च। विजानाति न च ज्ञानं बाह्यमर्थं कथंचन TattvSaṁ. 1999 2082.

**अनिर्भासमान** (a-nirbhāsamāna) *adj.* not appearing परिणत इति। स्वेन रूपेणानिर्भासमान इत्यर्थः Loc. (KSS. Ed. 135) 424. 17 (*on* 3. 33)

**अनिर्भिण्ण** (á-nirbhiṇṇa) *adj.* [AltGr. I. 2. 190; II. 1. 136] **1** not differentiated, not separated (i. e. not become manifest separately) य आण्डकोशे भुवनं बिभर्ति। अनिर्भिणः(? ण्णः) सन्नथो लोकान् विचष्टे। … तेन कल्पोऽमृतेनाहमस्मि TaiĀ. iii. 11. 4 (311. 1); अनिर्भिण्णं यस्येदमासीदुदकात्मकम् ParamāU. 10.7; **2** not pierced, not wounded शस्त्रवृष्टिं परैर्मुक्तां शरौघैर्यदवारयत्। न च तत्राप्यनिर्भिन्नः (v. l. °ण्णः) कश्चिदासीद् विशां पते MahāBhā. vi. 77. 41; न तस्यासीदनिर्भिन्नं (v. l. °ण्णम्) गात्रेष्वङ्गुलमात्रकम् MahāBhā. vi. 114. 80; vii. 150 51 (v. l.); ततः शरध्वस्तमभूत् कुरूणां सुमहद्बलम्। न तत्रासीदनिर्भिन्नो (v. l. °ण्णो) रथो वाजी नरो गजः MahāBhā. viii. 916*(2); न मे शस्त्रैरनिर्भिन्न(v. l. °ण्ण)मङ्गे द्व्यङ्गुलमन्तरम् MahāBhā. xii. 78.27, cf. **अनिर्भिन्न.**

**अनिर्भिन्न** (a-nirbhinna) *adj.* **1A** not pierced, not wounded न ह्यत्रासीदनिर्भिन्नो रथः सादी हयो गजः MahāBhā. viii. 915*(2); vi. 77. 41; vi. 114.80; vii. 150.51; viii. 916*(2): xii. 78. 27; न ह्यविद्धं तयोर्गात्रं बभूवाङ्गुलमन्तरम्। नानिर्भिन्नं न चास्तब्धमा कराग्रादजिह्मगैः Rāmā. vi. 35. 20; **1B** not piercing (the target) (i. e. not reaching the target) नानिमित्तो (v. l. नानिर्भिन्नो)ऽभवद् बाणो नातिभेत्ता न निष्फलः Rāmā. vi. 95.24; **2** not broken asunder चिरोत्पन्नमति(? नि)र्भिन्नमण्डं त्वष्ट्रा विदारितम् BrahmāṇḍP. ii. 59.27; **3** not revealed अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः। पुटपाकप्रतीकाशो रामस्य करुणो रसः UttaRāC. 3. 1 (KANE'S Ed., Bombay, 1929) (comm. अनिर्भिन्नः अप्रकाशः); **4** not differentiated अनिर्वाच्यमनिर्भिन्नमपरिच्छिन्नमव्ययम्। ब्रह्मेव सुजनप्रेम दुःखमूलनिकृन्तनम् Ind Spr. 3473

**अनिर्भिन्नगभीरत्व** (anirbhinna-gabhīratva) *n.* unperturbed or undisturbed gravity अनिर्भिन्नगभीरत्वादन्तर्गूढघनव्यथः। पुटपाकप्रतीकाशो रामस्य करुणो रसः UttaRāC. 3. 1.

**अनिर्भिन्नत्वच्** (anirbhinna-tvac) *adj.* whose skin was not pierced आक्रम्योरसि दक्षस्य शितधारेण हेतिना। छिन्दन्नपि तदुद्धर्तुं नाशक्नोत् … शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचं हरः BhāgP. iv. 5. 23.

**अनिर्भिन्नार्थ** (anirbhinnārtha) *adj.* not revealing the meaning, having obscure meaning अनिर्भिन्नार्थगम्भीरम् …। त्वदिदं समुपश्रुत्य साकम्पमिव मे मनः JātaMā. 172.15 (26. 26)

**अनिर्भुजा** (a-nirbhujā) *adj.* (*f.*) (Sāma-chanting) in the recitation of which hands are not lifted away (from the knees), with hands placed on knees अथैतास्तिस्रः संहिता भवन्ति। शुद्धादुःस्पृष्टानिर्भुजेति SaṁhiUBr. 1. 17 (Dvijarājabhaṭṭa जानुबाह्यनिर्गतभुजद्वयेन हस्तद्वयेन अधीयत इति निर्भुजा। जानूपरिस्थापितेन हस्तद्वयेन प्रयुज्यमाना अनिर्भुजा); 1.20.

**अनिर्भेत्तृ** (a-nirbhettṛ) *adj.* not piercing (the target) (i. e. going away from the target) नानिमित्तोऽभवद् बाणो नातिभेत्ता (v. l. नानिर्भेत्ता) न निष्फलः Rāmā. vi. 95.24.

**अनिर्भेद** (a-nirbheda) *m.* non-disclosure, non-revelation अथानीतेनामुना मन्मोचनाय शपथः कृतो मया च रहस्यानिर्भेदाय DaśKuC. 61. 15.

**अनिर्भेद्य** (a-nirbhedya) *adj.* impenetrable (स एवं विद्वानस्माच्छरीरभेदादूर्ध्वं उत्क्रम्य … अमृतः समभवत्) शरीरस्य … आयसवदनिर्भेद्यस्य … परमात्मज्ञानामृतोपयोगजनितवीर्यकृतभेदात् … शरीरविनाशात् AitUBh. 284. 5 (*on* 4. 6)

**अनिर्भेद्यगिरिव्यूह** (anirbhedya-girivyūha) *m.* impenetrable military array called *giri* आजौ प्रवर्तमानायामन्धकान्धकवैरिणोः। अनिर्भेद्यगिरिव्यूहवज्रव्यूहाधिनाथयोः (अन्धकः … बभाषेदम्) SkandP. iv. 16. 7.

**अनिर्भेद्यपविव्यूह** (anirbhedya-pavivyūha) *m.* impenetrable military array called *pavi* प्रवर्तमाने समरे शंकरान्धकयोस्तयोः। अनिर्भेद्यपविव्यूहगिरि-

-व्यूहाधिनाथयोः। पुरा जयो बभूवापि दैत्यानाम् ŚivaP. ii(5). 47.10 (277A. 13)

**अनिर्मथितसमुद्रम्** (a-nirmathitasamudram) *adv.* without churning the ocean मन्त्री च तस्य ··· विभूतिवर्धनो नाम। यो नूनमनिर्मथितसमुद्रम्··· प्रज्ञागुणेनाकृष्य लक्ष्मीं निजस्वामिनः सततमुरःस्थलनिवाससुस्थितामकरोत् UdaySu-Ka. 24 26.

**अनिर्मथ्य** (a-nirmathya) *ger* not having destroyed or crushed न च नाम विमानितः। बहु मन्ये तनुत्यागमनिर्मथ्यापकारिणम् RājTa.(Ka.) 4.570.

**अनिर्मद** (a-nirmada) *adj* not free from excitement (i. e. agitated or excited) स्पर्शैर्दिशन् कुसुमकार्मुकनर्मकर्म ···। यत्राश्लिषन्मरुदनिर्मदनर्मदाम्बुकल्लोलशीकरकरालितशैलसानुः Kapphiṇā. 1. 22

**अनिर्मल** (a-nirmala) *adj.* **1A** not perspicuous, not clear व्यक्ता नोक्तास्तु ये ह्यर्था लीना ये चाप्यनिर्मलाः। लेशोक्ता ये च केचित् स्युस्तेषां चापि प्रसाधनम् SuśruS vi. 65.6 (comm. 'अमर्मोपहते देशे सिरास्नाय्वस्थिवर्जिते' इत्यादिका ह्यर्था अनिर्मलाः); **1B** not faultless, faulty तन्मया कृतमध्यक्षमर्चितं यदनिर्मलम्। क्रियायोगादसंपूर्णं तन्मे निर्मलतां नय PauṣkS. 30. 149 = PāraS. 12. 387; **1C** impure (चित्तम्) यत्त्वनुद्रिक्तत्वात् ··· सुखदुःखमोहात्मकमनिर्मलं तत्तस्मिन् कर्मानुरूपे शुद्धे सत्त्वे ··· संवेद्यतामापादयति RājMār. 76. 19; अत्यन्तनिर्मलात् पुरुषादनिर्मले सत्त्वे कथं प्रतिबिम्बनमुपपद्यते RājMār. 77. 7; 77. 12; **1D** dark (*lit.* unclean) न केवलं ते बहिरेव नीलिमा नितान्तमभ्यन्तरमप्यनिर्मलम्। यदध्वगस्त्रीवधपातके घन प्रयासि मन्त्रित्वमयुग्मपत्रिणः VikraDeC. 13. 59; **2** not clean निपातयन्त्यः परितस्तटद्रुमान् ··· सलिलैरनिर्मलैः। ··· प्रयान्ति नद्यः ṚtuSaṁ. 2.7 (comm. अनिर्मलैः कलुषैर्मलिनैर्वा); **3** sputtered (*lit.* unclean) निम्नो जर्जरितश्चैवानिर्मलो गद्गदः स्वरः।··· अनिर्मलः सनिष्ठीवः VīraMi. (Lakṣaṇa.) 32.13.

**अनिर्माय** (a-nirmāya) *ger.* not having performed देवपूजामनिर्माय मुनीननुपचर्य च। यो भुञ्जीत गृहस्थः सन् स भुञ्जीत परं तमः YaśasCam. ii. 386.23.

**अनिर्मार्ग** (á-nirmārga) *m.* [AltGr. I. 2. 161] absence of wiping off, non-destruction यत् पुरस्ताद् याजुषं वदति धृत्या अनिर्मार्गाय MaiS. i. 8.5 (i. 121.15); पशुरप्यालभ्यः शान्त्या अनिर्मार्गायैतै वै पशवो यद्व्रीहयश्च यवाश्च यद्व्रीहिमयः पुरोडाशो भवति तेनैव पशुरालभ्यते शान्त्या अनिर्मार्गाय MaiS. ii. 3. 1 (ii. 26.14); iv. 3. 6 (iv. 45. 5); iv. 4. 1 (iv. 50. 13); एतैरेवेन्द्रियैर्वीर्यैरात्मानमभ्यतिषजत्यनिर्मार्गाय KāṭhS. 12.5 (i. 167. 11); 12.8 (i. 170. 22); यन्निर्युत्वत आरम्भणमेव कुरुतेऽनिर्मार्गाय KāṭhS. 12.13 (i. 176.9); यत्र शान्तमिवानङ्गारं स्यात्तदुपवपेच्छान्त्या अनिर्मार्गाय KapiKaS. 37. 7 (200.11); एवमेवैतत् पूर्वेषु स्तोत्रेषु षोडशिनमनुनियु[न]क्त्यनिर्मार्गाय JaimiBr. 1. 201; 2. 31; 2. 133; 3. 92; तिस्रोऽग्निष्टोमस्योपसदः स्युः शान्त्या अनिर्मार्गाय GopBr. ii. 2. 8 (173. 11)

**अनिर्माल्य** (a-nirmālya) *adj.* [*f.* -ā] **I** not having withered or faded flowers अनिर्माल्या स्मृता पूजा यद्धरेः पूजनं हृदि AgniP. 201. 13; **II** not fading, fresh अस्ति क्षीरार्णवोद्भूतमपां पुष्पमनुत्तमम्। अम्लानं यदनिर्माल्यमाधत्ते शिरसीश्वरः EI iii. 37. 6

**अनिर्माल्यनमस्कार** (anirmālya-namaskāra) *m.* salutation in the absence of fresh flowers सोपानत्कश्चरेत् पादं कृच्छ्रस्य द्विरभोजनम्। पुष्पाभावेऽर्चनं स्नानं देवस्पर्शं च कारयन्। अनिर्माल्यनमस्कारं(v. l. °रे Varanasi Ed.) स्नानं पञ्चामृतेन तु VarāP 179.15.

**अनिर्माल्या** (anirmālyā) *f.* the plant *Trigonella corniculata* [PW], *Trigonella corniculata Lin* [pw.], *Mendicago esculenta* [MW.], name of a medicinal plant, पिण्डिका [APTE]

**[1]अनिर्मित** (a-nirmita) *adj.* innumerable अमत्रं पात्रम्। अमा अस्मिन्मदन्ति। अमा पुनरनिर्मितं भवति Nir. 5.1 (91.16)

**[2]अनिर्मित** (a-nirmita) *adj* **1** not created (i. e. self-existent) अनिर्मितः सत्यजितः पुरुष्टुतः स नो ब्रह्माभिजिता नोऽभिरक्षतु AVPari. 1(40). 5; शंभुर्हरेः शूलं दानवार्थं समग्रहीत। ··· नित्यरूपमनिर्मितम् BrahmVaiP. ii. 20.17; **2** not constructed संकल्पनगराकारमेतत् सदपि नैव सत्। अनिर्मितमरागं च एतद्वै चित्रमुत्थितम् YogVā. iii. 13.41; *m.* an epithet of Śiva (*lit.* not created, i. e. self-existent) (अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु) बाहुस्त्वनिन्दि(v. l. र्मि)तः शर्वः शंकरः MahāBhā. xiii. 17.99.

**अनिर्मितपञ्चयज्ञ** (anirmita-pañcayajña) *adj.* who has not performed the five (daily) sacrifices यस्त्विह ··· अश्नाति ··· अनिर्मितपञ्चयज्ञः ··· स परत्र ··· नरकाधमे निपतति BhāgP. v. 26.18.

**अनिर्मितान्त्र** (anirmitāntra) *adj.* having no intestines (*lit.* in which the intestines are not created) अतिजवत्रुटनभयादनिर्मितान्त्राणीवोदराणि वृत्तानि धारयद्भिः ··· तुरङ्गैरारचितां मन्दुरां विलोकयन् HarṣaC. 100. 6.

**अनिर्मितोत्तरवैक्रिय** (anirmitottaravaikriya) *adj.* who has not formed an *uttaravaikriya* (body needed by gods for descending to the earth) सोऽमरः समजायत।··· सुखशय्यामधिष्ठितः।··· अनिर्मितोत्तरवैक्रियः TriṣaŚaPuC. ii. 1. 308.

**अनिर्मिमाण** (a-nirmimāṇa) *adj.* not performing, not doing तत्पित्रा च स पुत्रः कुलक्रमागतकुलालकर्माण्यनिर्मिमाणः प्रतिदिनं दुर्वाग्भिरुपालेभे TīrthaKa. 33.11.

**अनिर्मुक्त** (a-nirmukta) *adj.* [*f.* -ā] not freed from ऋषिदेवमनुष्याणां परिमुक्तोऽस्मि धर्मतः। पित्र्यादृणादनिर्मुक्तस्तेन तप्ये तपोधनाः MahāBhā. i 111. 15; i. 1179*; न च कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः, कर्तृत्वस्य दुःखरूपत्वात् BrahmSūBh.(Śaṅ.) 470.4 (*on* ii. 3 40); प्रजाः ··· कर्मभिर्भाविताः पूर्वैः कुशलाकुशलैस्तु ताः। ख्यात्या तया ह्यनिर्मुक्ताः संहारे ह्युपसंहृताः ViṣṇuP. i. 5. 28; MārkP. 48 2; PadmP. v. 3. 77.

**अनिर्मुक्तक** (anirmuktaka) *m.*, *n.* one of a list of plant names (in a cpd.) [DBHS.], cf. **अनिर्मुक्ता**.

**अनिर्मुक्तकौतुका** (anirmukta-kautukā) *adj.* (*f.*) **I** who has not given up eagerness (for creation) निवृत्तकुतूहलः पुमानिति चेत्, प्रकृतिरनिर्मुक्तकौतुका(? का)भिनववधूरिव स्थितैव NyāyMañ. ii. 62. 23; **II** whose marriage-thread is not yet removed, NyāyMañ ii 62. 23.

**अनिर्मुक्तमन्दरमथनसंस्कार** (anirmukta-mandaramathanasaṁskāra) *adj.* who is not freed from the impression of the churning by the Mandara (mountain) अद्याप्यनिर्मुक्तमन्दरमथनसंस्कारमिवावर्तभ्रान्तिभिः ··· जलनिधिमपश्यत् VāsaDa. 268. 7.

**अनिर्मुक्तमहाशुच्** (anirmukta-mahāśuc) *adj.* who is not freed from the great grief अनिर्मुक्तमहाशुचम्। ऊचे सुषेणः सुग्रीवं प्रत्यग्रौपयिकं वचः RāmC. 31. 146.

**अनिर्मुक्ता** (anirmuktā) *f.* name of a herb अस्त्यनिर्मुक्ता नामौषधिः। तया गृहीतया सर्वपरोपक्रमभयानि न भवन्ति GaṇḍVyū. 398.18 [DBHS.]

**अनिर्मुक्ताहंकारममकार** (anirmuktāhaṅkāramamakāra) *adj.* who has not abandoned the notions of 'I' and 'mine' तृष्णाविद्यावतोऽनिर्मुक्ताहंकारममकारस्याभिसंहितपरिमितफलप्राप्तिः ManuBh. i. 522.28 (*on* 6. 75)

**अनिर्मुक्तिप्रसङ्ग** (anirmukti-prasaṅga) *m.* undesired contingency of absence of emancipation यद्यात्मनः संसरणमनाद्यन्तं तर्ह्यनिर्मुक्तिप्रसङ्गः Mitā. 383. 21 (*on* 3. 125)

**अनिर्मूल्य** (anirmūlya) *m.* an epithet of Viṣṇu अनिर्मूल्यो महामूल्यो निर्मूल्यः सुरभिः सुखी।··· नाम्नां सहस्रं नामेदं विष्णोरतुलतेजसः SkandP. v(1). 63.151.

**अनिर्मृष्ट** (a-nirmṛṣṭa) *adj.* [*f.* -ā] not wiped, not cleansed (अग्निहोत्रहवण्याम्) अनिर्मृष्टायामासिच्य विष्णोर्मनसा पूते स्थ इतिप्रभृतिभिर्व्याख्यातमुत्पवनम् MānŚS 13. 12; अनिर्मृष्टायामासिच्य सर्पान् पिपीलिकाः प्रीणामि सर्पपिपीलिकाभ्यः स्वाहेति प्रागुदीचीस्त्रिरपो निःसारयति MānŚS. 36. 4; अनिर्मृष्टायामग्निहोत्रहवण्यां प्रोक्षणीं संस्कृत्य हविष्यं प्रोक्षत्यनभिप्रोक्षन्नग्निम् · अग्नये वो जुष्टान्प्रोक्षाम्यमुष्मै वो जुष्टानिति यथादेवतम् VārāŚS. I. ii. 4. 38; निष्कासितां कुम्भीं निदधात्यनिर्मृष्टं दर्व्युदायुवनमवधायोदनानुद्धृतानभिघारितानुत्पूतानलंकृतानन्तर्वेद्यासादयति VaikhāŚS. 9. 2.

**अनिर्मोक्ष** (a-nirmokṣa) *m.* **1** absence of emancipation or liberation, non-release ईश्वरश्चेत् कारणं स्यात् पुरुषकर्मान्तरेणापि सुखदुःखोपभोगौ स्याताम्, ततश्च कर्मलोपोऽनिर्मोक्षश्च NyāyVār. 460. 6 (*on* iv. 1. 20); संसारित्वादनिर्मोक्षो नेष्टत्वादप्रसिद्धितः PramāVār 2. 191; चित्रो[त्तौ]विचित्राकारायां प्रपञ्चात्मतयैव हि। अनिर्मोक्षस्तथा च स्यादथवा नित्यतापतेत् VibhraVi. 34; (ब्रह्म) तद्धि सदा विशुद्धं नित्यप्रकाशमनागन्तुकार्थम्, अन्यथा ब्रह्मभूयं गतस्यापि नाविद्या निवर्तेत, तत्रानिर्मोक्षः BrahmSi. 12. 4; मिथ्याज्ञानादनिर्मोक्षः NyāyVi. 2.451; अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात्, तथा च अनिर्मोक्षः प्रसज्येतेति BrahmSūBh.(Śaṅ.) 487 11 (*on* ii 3.50); नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यभोक्तव्यत्वादनिर्मोक्षः स्यात् BrahmSūBh.(Śaṅ.) 787. 5 (*on* iv. 1. 13); अचेतने हि निरङ्कुशे प्रधाने बन्धरि सुतरामनिर्मोक्षः स्यात् NyāyMañ. ii. 62. 21. ii 62 16; ii 98. 4; कर्त्रादिश्चेत्स्वभावः स्यात्प्रत्यक्षाकर्तृरूपिणः। प्रत्यक्षादिविरोधः स्यादनिर्मोक्षस्तथैव च BṛĀraUBhVā.(Sambandha.) 141; 50; 1054; आगन्तु चेदिहाज्ञानमनिर्मोक्षः प्रसज्यते BṛĀraUBhVā i. 4.361: iii. 2. 14; पूर्वपूर्वाज्ञानाक्षय उत्तरोत्तराज्ञानाक्षयाच्चानिर्मोक्षः IṣṭaSi. 332.24; 250.15; मोहान्तराच्चेदानन्त्यं मोहानां स्यादतोऽक्षयः। यदि दग्धोऽपि मोहस्स्यादनिर्मोक्षः प्रसज्यते IṣṭaSi. 376. 19; नन्वात्मनि नित्ये स्थिते नित्यात्मदर्शिनः सुखतृष्णापरिप्लुतस्य सुखसाधनेषु रागो दुःखसाधनेषु द्वेषस्ताभ्यां प्रवृत्तिनिवृत्ती ततो धर्माधर्मौ ततः संसार इत्यनिर्मोक्षः

NyāyKa. 89. 4; किं च ब्रह्मणोऽज्ञानानुभवः किं स्वतोऽन्यतो वा। स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात् BrahmSūBh.(Rā.) 89.21 (*on* i. 1.1); नोदासीनस्य दृश्यदर्शनमपि स्याद्, योग्यतया तद्दर्शने सर्वदा तत्प्रसङ्गादनिर्मोक्षः NyāyMa. 285.5; 352.8; ब्रह्मैव तद्दर्शनमूलं स्यात्। तस्य नित्यत्वादनिर्मोक्ष एव VedāSaṁ. 99. 3; अनादिरनुत्पत्तिरात्मा, न ह्यस्यान्तरात्मनः संभूतिः कारणमस्ति। न च नित्यस्यापि पूर्वोक्तचक्रेण स्वाभाविकसमवाययोगित्वादनिर्मोक्षो वाच्यः Aparā. 994.24 (*on* 3.124); PrakaVi. 480.13; ब्रह्मणि च सकलकरणागोचरे प्रमाणान्तरेण प्रत्यक्षज्ञानानुत्पत्तेर्वाक्याच्चापरोक्षज्ञानानुत्पत्तावनिर्मोक्षः स्यात् TattvPradī. (Ci.) 345.17; अवैशद्यं च किं स्वभावः, उत अविद्याकल्पितम्। स्वभावत्वे चानिर्मोक्षः NyāyKu. 125.9; संसारित्वस्य पारमार्थ्येऽपि स्वरूपत्वाभावादनिर्मोक्षस्वरूपनाशौ न स्याताम् ŚrutaPra. ii. 627.6 (*on* iv. 3.15); अशुद्धिनाशे तत्तदशुद्धिहेतुभूताविद्याख्योपाधिविगमे च प्रतिबिम्बस्थानीयो जीवस्तिष्ठति वा न वा। तिष्ठति चेदाविद्यकभेदस्थितेरनिर्मोक्षः ŚatDū. 173.12; 184. 4; अत्यन्तविशदस्वरूपे च वस्तुनि बाधकप्रत्ययावसेयविशेषाभावेन[ नित्यमोक्ष ]अनिर्मोक्षासंसारयोरन्यतरप्रसङ्गात् NyāySiA. 227. 3 किं च प्रकृतिः प्रवृत्तिस्वभावा निवृत्तिस्वभावा वा। आद्येऽनिर्मोक्षः। स्वभावस्यानपायात् SarvaDaSaṁ. 11.138; ब्रह्मज्ञानाभावेन शास्त्रवैयर्थ्यमनिर्मोक्षश्च स्यादिति चेन्न NyāySu.(Ja.) 114A.10 (*on* i. 1.5); स्वभावस्य निवर्तयितुमशक्यत्वात् अनिर्मोक्ष एव पुरुषस्य स्यात् SarvaDaKau. 105. 14; प्रकृतेरङ्गित्वे त्वनिर्मोक्षः AṇuBh. 131. 15 (*on* ii. 2.8); 153.3 (*on* ii. 3. 9); 310. 16 (*on* iv. 1.13); ननु कर्तृत्वादिरूपापरोक्षाध्यासस्य परोक्षप्रमयानिवृत्तेरौपनिषदे ब्रह्मणि मानान्तराप्रवृत्तेः शब्दादपरोक्षज्ञानानुत्पत्तावनिर्मोक्षः स्यादिति चेन्न Nyāyāmṛ. 628B.11; अविद्यायां सत्यामपि शक्त्यभिभवाद्वा तूलाज्ञाननाशाद्वा ... भीरुभटवदपसरणाद्वा, कटवत्संवेष्टनाद्वा, आवरणभङ्गानिर्मोक्षबाधानामुपपत्तिः AdvaiSi. 487.11; ननु भोगमन्तरेण यदि कर्मक्षयो न स्यात्तदा भोगार्थं शरीरग्रहणे तत्रापि कर्मान्तरार्जनावश्यंभावादनिर्मोक्षः स्यात् ŚivārkaMaDī. ii. 439. 25 (*on* iv. 1.13); **2** non-escape (from the objection raised in logical argument) यद्यपि क्वचिद्विषये तर्कस्य प्रतिष्ठितत्वमुपलक्ष्यते, तथापि प्रकृते तावद्विषये प्रसज्यत एवाप्रतिष्ठितत्वदोषादनिर्मोक्षस्तर्कस्य BrahmSūBh.(Śaṅ.) 303 18 (*on* ii. 1.11); यथानवस्था न भवति तथानुमेयं जगत्कारणमनुमानादिभिश्च हेतुभिः प्रधानं प्रतिष्ठाप्यते न तत्रानवस्थेति चेदेवमप्यनवस्थादोषादनिर्मोक्षस्तर्काणाम् BrahmSūBh.(Bhā.) 92. 11 (*on* ii. 1. 11); पुरुषबुद्धिमूलतर्कैकावलम्बनस्य तथैव देशान्तरकालान्तरेषु त्वदधिकतमतर्ककुशलपुरुषोत्प्रेक्षिततर्कदूष्यत्वसंभावनया तर्काप्रतिष्ठानदोषादनिर्मोक्षो दुर्वारः BrahmSūBh.(Rā.) 415.14 (*on* ii. 1. 12); न चैवमनिर्मोक्षः, योगजधर्मप्रत्यासत्त्या सामान्यलक्षणया वा व्याप्तिज्ञानरूपस्यानुव्यवसायस्यापि स्वविषयत्वाभ्युपगमात् TattvCin. i. 802. 5; तत्राप्येवं प्रतितर्ककलहसंभावनया प्रतिष्ठितत्वाभावदोषादनिर्मोक्ष एव प्रसज्यते BrahmSūBh.(Śrī.) ii. 15. 3 (*on* ii. 1. 12); तर्कान्तरोन्नयनप्रयासेऽप्यप्रतिष्ठितत्वदोषादनिर्मोक्ष एव प्रसज्यते ŚivārkaMaDī. ii. 15.10 (*on* ii. 1. 12)

**अनिर्मोक्षता** (anirmokṣa-tā) *f.* the state of not having (attainment of) liberation, unliberatedness तस्मात् स्वप्नो भूत्वा मृत्युमतिक्रामन्येव ... अतः न मृत्योः आत्मस्वभावत्वाशङ्का ... स्वभावश्चेत् क्रिया स्यात, अनिर्मोक्षतैव स्यात् BṛĀraUBh. 556. 4 (*on* iv. 3.15); 556. 9 (*on* iv. 3 15); अविद्याया अनिवृत्तेरनिर्मोक्षतैव स्यात् SarvaDaKau. 131. 5.

**अनिर्मोक्षत्व** (anirmokṣa-tva) *n.* the state of not having liberation, unliberatedness य पुनरीश्वरं कर्मानपेक्षं कारणत्वेन प्रतिपद्यते तस्यानिर्मोक्षत्वादिदोषः NyāyVār. 460.14 (*on* iv. 1. 21)

**अनिर्मोक्षदोष** (anirmokṣa-doṣa) *m.* defect of the absence of liberation स्मृतिबीजाच्चिदाकाशे पुनरुद्भूय दृश्यधीः। लोकशैलाम्बराकारं दोषं वितनुतेऽतनुम्। इत्यनिर्मोक्षदोषः स्यान्न च तस्येह संभवः YogVā. iii. 4. 64.

**अनिर्मोक्षप्रसक्ति** (anirmokṣa-prasakti) *f.* undesired contingency of the absence of liberation अकस्माद्भवतः सक्तेर्मुक्तावप्यनिषेधतः। अनिर्मोक्षप्रसक्तिर्वस्तथा सति समापतेत् BṛĀraUBhVā.(Sambandha.) 52; अनिर्मोक्षप्रसक्तिः स्याद्यविद्या परात्मनः BṛĀraUBhVā. ii. 3. 131; iii. 5. 22; v. 3. 320

**अनिर्मोक्षप्रसक्तित्व** (anirmokṣaprasakti-tva) *n* the state of being that which has the undesired contingency of non-liberation न च कारणमात्रत्वं रूपमिष्टं परात्मनः। अनिर्मोक्षप्रसक्तित्वाच्छ्रुत्यनारम्भसक्तितः BṛĀraUBhVā. iv. 4. 499.

**अनिर्मोक्षप्रसङ्ग** (anirmokṣa-prasaṅga) *m.* **1** undesired contingency of the absence of liberation यदि कर्म रागादीन् निर्वर्तयेत सर्वदा रागादिभिर्भवेदित्यनिर्मोक्षप्रसङ्गः NyāyVār. 503. 1 (*on* iv. 1. 69); प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यम् — भोगो वा स्यात्, अपवर्गो वा, उभयं वेति। भोगश्चेत् — कीदृशोऽनाधेयातिशयस्य पुरुषस्य भोगो भवेत् अनिर्मोक्षप्रसङ्गश्च BrahmSūBh.(Śaṅ.) 357. 11 (*on* ii. 2.6); न स्वाभाविकं कर्तृत्वमात्मनः संभवति, अनिर्मोक्षप्रसङ्गात् BrahmSūBh.(Śaṅ.) 470. 2 (*on* ii. 3. 40); BrahmSūBh.(Bhā.) 139.19 (*on* ii. 3. 40): BrahmSūBh.(Śaṅ.) 543. 16 (*on* iii. 1.8); 837. 4 (*on* iv. 3. 14); आत्मनः बन्धमुक्तावस्थे ...। क्रमभावित्वे च, निर्निमित्तत्वे अनिर्मोक्षप्रसङ्गः GītāBh.(Śaṅ.) 364.15 (*on* 13. 2); 389 16 (*on* 13. 19); ननु च साधारणविशेषात्मकस्य कर्मणोऽनादिनिधनत्वाद् यथैवानादिः शरीरसंबन्धः, तथैवानन्तोऽपि। ततश्चानिर्मोक्षप्रसङ्गात् तत्प्रतिपादनप्रयासानर्थक्यमेव स्यात् BālaKrī. ii. 60. 2 (*on* 3.156(? 166)); न च कैवल्यात्पुनरुत्थानं न्याय्यमनिर्मोक्षप्रसङ्गात् NaiṣkaSi. 140.12; अज्ञानं चानाद्युक्तम्, अन्यथा अज्ञानमेव तन्न स्यात्, प्राङ्मुक्तानां बन्धहेत्वज्ञानाभावे पुनरपि तद्भावादनिर्मोक्षप्रसङ्गात् IṣṭaSi. 195.21; 70. 11; 78. 6; 209. 16; यद्यनादिरविद्या तदानीमनिर्मोक्षप्रसङ्गः तस्या उच्छेत्तुमशक्यत्वात् ब्रह्मवत् BrahmSūBh.(Bhā.) 19. 8 (*on* i. 1. 4); वैदिकीनां विधिनिषेधचोदनानामानर्थक्यम् ईश्वरेच्छात एव शुभाशुभफलोपभोगसंभवात्, अनिर्मोक्षप्रसङ्गश्च NyāyMañ. i. 177. 27; i. 187. 20; न च बोधस्वभावत्वादेवास्य संस्काराधायकत्वम् अनवरतोपचीयमानसंस्कारतयानिर्मोक्षप्रसङ्गात् ĀtmaSi. 56. 10; प्रधानस्यैकत्वेन तदुच्छेदे सर्वोच्छेदोऽनुच्छेदे वा न कस्यचिदित्यनिर्मोक्षप्रसङ्गः Bhām. 285. 13 (*on* i. 4. 3); 387.4 (*on* ii. 2. 6); यदि च स्वाभाविक्यविद्या, नासौ केन चिदुच्छे( ? च्छि )द्यत, तत्रानिर्मोक्षप्रसङ्ग इति NyāyRa. 663. 22 (*on* 5(15). 85); ब्रह्मणि तु सहावस्थानादविरुद्धाविद्या न तेनोच्छेत्तुं सा शक्या। ततश्चानिर्मोक्षप्रसङ्गः ŚāstrDī. 41. 22 (*on* i. 1. 4); न हि चितिरेव विषयबन्धनस्वभावा, अनिर्मोक्षप्रसङ्गात् NyāyKuA. i. 50. 3; उपाधिविगमेऽप्यात्मनः कर्तृत्वमापद्येतेत्यनिर्मोक्षप्रसङ्गः PrakaVi. 645. 10; 484. 24; प्रमाणसिद्धेऽपि मोक्षे अन्यथानुमेयत्वादनिर्मोक्षप्रसङ्गः BrahmSūBh.(Ma.) 24B. 4 (*on* ii. 1. 12); अनिर्मोक्षप्रसङ्गपरिहाराय ब्रह्मव्यतिरिक्तत्वम्, अनवस्थापरिहाराय पारमार्थिकत्वम् ŚrutaPra. iB. 5. 3 (*on* i. 1. 1); अविद्या ब्रह्माश्रितेति चेन्न, तस्य तद्विरोधित्वात्। अविरोधित्वे चानिर्मोक्षप्रसङ्गात् NyāyKu. 125.2; (तर्कानवस्थानात्) तार्किकविप्रतिपत्त्यानिर्मोक्षप्रसङ्गाद्वेदोक्तस्यैवोपादेयत्वमिति सिद्धम् VedāntPāSau. 157.8 (*on* ii. 1.11); कपिलकणादादीनां परस्परविरोधेनानिर्मोक्षप्रसङ्गः स्यात्। न च तन्मध्येऽप्यन्यतमस्य कदाचिज्जये सति नानिर्मोक्षप्रसङ्ग इति वाच्यम्। पुरुषाणां मध्ये एकतमस्य नियतजयित्वासंभवात् VedāntKau. 157.19 (*on* ii. 1. 11); ज्ञानाभावेऽनिर्मोक्षप्रसङ्गात् VedāntRaMañ. 1. 4 (60. 7); (अविद्या) न च सा ब्रह्मस्वरूपानुप्रवेशिनी, भेदप्रतिभासानुवृत्तेरनिर्मोक्षप्रसङ्गात् ŚatDū. 63. 5; (ब्रह्मणः) तस्य स्वरूपातिरिक्ताविद्यानुभवः किं स्वतः। उतान्यतः नाद्यः, स्वानुभवैकतानत्वव्याघातात् अनिर्मोक्षप्रसङ्गाच्च ŚatDū. 106. 5; 146. 15; 175. 16; चीर्णप्रायश्चित्ते दुःखप्रागभावो नास्त्येव, अन्यथा तस्य प्रतियोगिनाश्यत्वेनानिर्मोक्षप्रसङ्गात् TattvCin. ii(2). 170. 17; किं प्रधानं केवलं भोगार्थं प्रवर्तते किं वा केवलमोक्षार्थमाहोस्विदुभयार्थम्। न तावदाद्यः कल्पोऽवकल्पते। अनाधेयातिशयस्य कूटस्थनित्यस्य पुरुषस्य तात्त्विकभोगासंभवात्। अनिर्मोक्षप्रसङ्गाच्च SarvaDaSaṁ. 16.34; तमोगुण एव प्रतिबन्धकः स्यात् इति चेत, न, तस्य ब्रह्मज्ञानादनिवृत्तावनिर्मोक्षप्रसङ्गात् VivaPraSaṁ. 26. 9; तस्य ब्रह्मणः पुनर्जगदाकारपरिणामस्वभावित्वात् अनिर्मोक्षप्रसङ्गः VivaPraSaṁ. 259.18; न चात्मनस्तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति युक्तम्। तथा सति विकारित्वापत्तेः। ततश्चानित्यत्वप्रसक्तेस्तेन चानिर्मोक्षप्रसङ्गात्तथा च शास्त्रवैयर्थ्यापातादिति भावः TattvPrakā. 104A.9 (*on* ii. 2.35); अज्ञानारोपः स्वाभाविकः सहेतुको वा। आद्येऽनिर्मोक्षप्रसङ्गः। स्वाभाविकस्य निवृत्त्यनुपपत्तेः NyāySu.(Ja.) 61B.10 (*on* i. 1.1); (पुरुषस्य) विषयसंबन्धः स्वभावान्न भवति। चिद्रूपस्य तस्य विषयसंबन्धस्वभावत्वे अनिर्मोक्षप्रसङ्गात् SarvaDaKau. 105.13; 141. 25; कर्तृत्वादेर्वास्तवत्वे अनिर्मोक्षप्रसङ्गात् SiddhāBi. 34. 6; 27. 2; 30. 2; 62.5; अविद्यावत्तन्निवृत्तिरप्यनिवाच्यैव न च तदनुवृत्तौ तदुपादानाज्ञानस्याप्यनुवृत्तिनियमात् अनिर्मोक्षप्रसङ्गः SiddhāLeSaṁ. 436. 4; 400. 1; नन्वनाद्यन्तं चेत् संसारचक्रं तदानिर्मोक्षप्रसङ्गः VīraMi. 870.1 (*on* 3. 125); **2** undesired contingency of non-escape (from the objection raised in logical argument) क्लृप्तप्रकारात् प्रकारान्तरेण प्रधानमनुमेयमिति चेत्, एवमपि ततोऽधिककुतर्ककुशलसंभावनया अप्रतिष्ठितत्वादनिर्मोक्षप्रसङ्गो दुर्वारः स्यात् VedāntSā.(Rā.) 147. 2 (*on* ii 1. 12); तस्य स्ववचनव्याघातादनिर्मोक्षप्रसङ्गः NyāySu.(Ja.) 291B. 1 (*on* ii. 1. 4); सुखदुःखप्राप्तिपरिहारार्था लोकप्रवृत्तिर्दृष्टेति चेत एवमप्यनिर्मोक्षप्रसङ्गः।... तर्काप्रतिष्ठानदोषादनिस्तारः स्यात् GoviBh. 94.9 (*on* ii. 1. 11)

**अनिर्मोक्षप्रसङ्गतस्** (anirmokṣaprasaṅga-tas) *adv.* due to the undesired contingency of the absence of liberation (कामसंकल्पादीनाम्) स्वपरोभयहेतुत्वे ह्यनिर्मोक्षप्रसङ्गतः BṛĀraUBhVā.(Sambandha.) 154; न त्वागन्तुकि चेयमनिर्मोक्षप्रसङ्गतः BṛĀraUBhVā. iv. 3.1208.

**अनिर्मोक्षवादिन्** (anirmokṣa-vādin) *adj.* upholder of the view of absence of liberation किं विप्रतिपन्नं प्रत्यागमेनैव साध्यते उत तर्केण। नाद्यः। अनिर्मोक्षवादिनागमप्रामाण्यानभ्युपगमात् TattvPrakā. 85A. 1 (*on* ii. 1. 12)

**अनिर्मोक्षादिप्रसङ्ग** (anirmokṣādi-prasaṅga) *m.* undesired contingency of the absence of liberation and the like स्वत एव चेदात्मनः परिणामस्तर्हि सर्वावयवावच्छेदेन सर्वदा वृत्तिप्रसङ्गादनिर्मोक्षादिप्रसङ्गः YogVār. *on* 1. 4.

**अनिर्मोक्षापत्ति** (anirmokṣāpatti) *f.* undesired contingency of the absence of liberation साप्यन्यया कयाचिदुल्लेख्येत्यत्र प्रमाणाभावश्चानिर्मोक्षापत्तिश्च KhaṇḍanKhā. 93.15; ब्रह्मज्ञानेनापि विक्षेपमात्रप्रविलये सति अनिर्मोक्षापत्तिः VivaPraSaṁ. 24.4; किं च दुःखशक्तितिरोभावमात्रस्य मोक्षत्वे कदाचिद्योगीश्वर-संकल्पादिना शक्त्युद्भवस्य भृष्टबीजेष्विव मुक्तेष्वपि संभवेनानिर्मोक्षापत्तिरिति SāṁkhyaPraBh. 11.8 (*on* 1.11); कर्मतत्फलप्रवाहयोः कदाप्युपरत्यभावेना-निर्मोक्षापत्त्या मोक्षफलेनापेक्षितत्वाच्च ŚivārkaMaDī. ii. 440.21 (*on* iv. 1.13)

**अनिर्मोच्य** (a-nirmocya) *ger.* not having redeemed गोचर्ममात्राधिकां भुवमन्यस्याधीकृतां तस्मादनिर्मोच्यान्यस्य यः प्रयच्छेत्स वध्यः ViṣṇuSm. 5.181.

**अनिर्यन्त्रण** (a-niryantraṇa) *adj.* having no restriction, unrestricted तत्र (स्थगने) सति गोप्याङ्गस्यादर्शनेन अनिर्यन्त्रणं निधुवनविलसितम् KāvyPra. 251.3.

**अनिर्याच्य** (á-niryācya) *ger.* not having asked or begged यो वै यमं देवयजनमस्याः अनिर्याच्याग्निं चिनुते यमायैनं स चिनुते TaiS. V. ii. 3.1; यद्रुद्रात् पशूननिर्याच्याग्निं चिन्वीत रुद्रोऽस्य पशूनभिमानुकः स्यात् MaiS. iii. 1.3 (iii. 4.6); iii. 2.3 (iii. 18.2); यो वा अस्या अधिपतिं देवयजनमनिर्याच्याग्निं चिनुते KāṭhS. 20.1 (ii. 18.8) = KapiKaS. 31.3 (150.4); KāṭhS. 30.9 (ii. 191.4); दैवा वै व्रात्याः … ते ह वा अनिर्याच्य वरुणं राजानं देवयजनं दिदीक्षुः PañcBr. xxiv. 18.2.

**अनिर्याण** (a-niryāṇa) *n.* **1** absence of going forth रूपादेरस्वभावत्वं तदभावस्वभावता। तदजातिरनिर्याणं शुद्धिस्तदनिमित्तता AbhisaAlaṅ. 1.31; यथोद्देशमनिर्याणे मार्गामार्गावधारणे। सनिरोधे समुत्पादे वस्तुयोगवियोगयोः AbhisaAlaṅ. 5.15; **2** not arriving at सर्वज्ञाताचित्तासंप्रमोषान्यथानानिर्याणसंपूर्णवशितासर्वप्रकारसत्त्वार्थसंप्रापणवैशारद्यम् MahāVyu. 28.4 [DBHS.]

**अनिर्यातितवर्णालंकार** (aniryātita-varṇālaṅkāra) *adj.* in which the *varṇas* and *alaṅkāras* (i.e. accents and different types of ornamental intonations) are not restored तत्र साकाङ्क्षं नाम तारादिमन्द्रान्तमनियुक्तार्थमनिर्यातितवर्णालंकारं कण्ठोरःस्थानगतम् NāṭyaŚā. 17.112 (AbhinBhā. वर्णा उदात्तादयोऽलंकाराश्चोच्चनीचदीप्तादयोऽपरिसमाप्ताः)

**अनिर्यातिता** (a-niryātitā) *adj.* (*f.*) (fee) not given दत्त्वा … वसुधां प्रीत्या प्रसन्नं मनः स्मृत्वा ताम्यति दक्षिणां विधिवशादुर्वीमनिर्यातिताम् CaṇḍaKau. 3.4 (comm. अनिर्यातिताम् अदत्ताम्)

**अनिर्यान्ती** (a-niryāntī) *adj.* (*f.*) not going out भीमस्तुतीरिव क्रष्टुमनिर्यान्तीररिं प्रति। क्षिपन्तमङ्गुलीर्वक्त्रे तं जीवन्तममुञ्चत PāṇḍaC. 10.276.

**अनिर्याप्य** (a-niryāpya) *ger.* not having caused to vanish (i.e. not having avenged) राज्येन कारणं किं मे त्वनाक्रम्य त्रिविष्टपम्। अनिर्याप्य सुरैवैरं का शान्तिर्हृदये मम MatsyaP. 148.32.

**अनिर्याय** (a-niryāya) *ger.* not having decided किं चैवं श्रूयते उत्तरामुपवसेदनिर्यायेति। तस्यार्थः किं पूर्वामुपवसेदुत्तरां वेत्यनिर्याय यत्र एतादृशं निश्चितं ज्ञानं नास्ति तत्रोत्तरामेवोपवसेदिति CaturCin. iii(2). 356.13.

**अनिर्यास** (a-niryāsa) *adj.* not having fluidity, not fluid तत्कन्या वा क्षालिताङ्गाः …। मधुपिङ्गमनिर्यासमसान्द्रमगरुद्रवम्। बाहुमूले च कण्ठे च विलिप्य सान्द्रमेव च। … शुभाः स्युः PadmP. iv. 110.211.

**अनिर्युक्त** (aniryukta) *m., n.* (music) 'unspecified'—a type of musical composition in which *rāga, rasa, tāla, bhāṣā,* metre and syllables etc. are not specified छे(भे)द्यकमिष्यते निर्युक्तं पदनिर्युक्तमनिर्युक्तं तथैव च। त्रिविधं चापि विज्ञेयम् NāṭyaŚā. 31.322; बहिर्गीताङ्गहीनं चाप्यनिर्युक्तमिति स्मृतम् NāṭyaŚā. 31.323; अनिर्युक्तश्च निर्युक्तः प्रबन्धो द्विविधो मतः। छन्दस्तालाद्यनियमाद्यः SaṁgīRa. ii. 212.8 (4.21); iii. 30.4 (5.58); त्यक्तोपोहनप्रत्युपोहनम्। वस्तुमात्रैरनिर्युक्तम् SaṁgīRa. iii. 31.2 (5.59)

**अनिर्युक्ताक्षरा** (aniryuktākṣarā) *adj.* (*f.*) (speech) in which the intonation of syllables is not specified अनिर्युक्ताक्षरा वाणी साकाङ्क्षेति निगद्यते SāhiSā. 5.1.

**अनिर्युक्तावसान** (aniryuktāvasāna) *adj.* in which the end is not specified अनिर्युक्तावसानश्च तद्यजुः परिकीर्तितम् Chandonukramaṇī of MaiS. 7 (JRAS. London, 1932)

**अनिर्यूह** (aniryūha) *adj.* without abandonment, riddance, withdrawal, giving up [DBHS.]

**अनिर्लुठित** (a-nirluṭhita) *adj.* not prolapsed (from the womb), not manifest क्रिया नामेयमत्यन्तापरिदृष्टा। अशक्या क्रिया पिण्डीभूता निदर्शयितुं यथा गर्भो निर्लुठितः(? गर्भोऽनिर्लुठितः) MahāBh. (Vani Vilas Prakashan, 1987) i. 254.16 (*on* i. 3.1) (Uddyota आद्ये अनिर्लुठित इति च्छेदः); MahāBh. ii. 114.11 (*on* iii. 2.102); अनिर्लुठितगर्भवत् यथा गर्भोऽनापन्नसत्त्वभावः कललावस्थायामाशयतः पृथगाख्यातुं न शक्यते, तथा क्रियापि साधनेभ्यः साध्यावस्थायाम् SṛṅgāPra. 126.21; अस्त्येवासौ (गुणगुणिनोर्भेदः), न तु स्फुटतरोऽनिर्लुठितगर्भतया(? °गर्भवत्) NyāyVārPari. 477.10.




**अनिर्लुठितकार्य** (anirluṭhita-kārya) *m.* result which is unmanifest किं हि प्रति कारणतां प्रत्यक्षमुल्लिखेत्। न तावदनिर्लुठितकार्यमप्रतीतेः KhaṇḍanKhā. 1215.1

**अनिर्लोचित** (a-nirlocita) *adj.* not carefully looked at, not considered [MW.]

**अनिर्लोडितकार्य** (anirloḍita-kārya) *adj.* who has not taken into consideration the effect अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ŚiśuVa. 2.27 (comm. अनिर्लोडितं नालोकितं कार्यं येन तस्य, कार्याकार्यमजानत इत्यर्थः)

**अनिर्वक्तव्य** (a-nirvaktavya) *adj.* not possible to be explained, indescribable (implying falsity) नामरूपयोः … तत्त्वान्यत्वेनानिर्वक्तव्ययोः सर्वावस्थयोः संसारत्वम् BṛĀraUBh. 310.1 (*on* ii. 4.10); महदादि जगत् सर्वम् …। अनिर्वक्तव्यमेवेदं सत्त्वासत्त्वविवेकतः SkandP. ii(2). 27.18.

**अनिर्वक्तव्यता** (anirvaktavya-tā) *f.* the state of being that which is not possible to be explained, indescribability (implying falsity) न च स्नेहो युक्तो युक्तिविपर्ययात्। अनिर्वक्तव्यता तस्य वक्तव्या युक्तिगौरवात् TarkSaṁ.(Ā.) 116.2; आत्म(नि) जातस्य जगतो जडा(डता ?)दिना। अनिर्वक्तव्यता ज्ञेया तेनाज्ञाननिदानता TarkSaṁ.(Ā.) 137.6.

**अनिर्वक्तव्यताख्याति** (anirvaktavyatā-khyāti) *f.* cognition of indescribability (implying falsity) अनारोपितं रूपं तर्हि तत्त्वम्-इति चेत्, न, — आरोपस्यानिरूप्यत्वादुभयत्राप्यसंभवात्। अनिर्वक्तव्यताख्याताव(नि)र्वक्त(व्य)तास्थितेः TarkSaṁ.(Ā.) 5.27.

**अनिर्वक्तव्यतापक्ष** (anirvaktavyatā-pakṣa) *m.* view of indescribability पृथिवीति प्रथा कथम्। अनिर्वक्तव्यतापक्षे प्रविष्टा प्रकृतिं गता TarkSaṁ.(Ā.) 36.2.

**अनिर्वक्तव्यतावाद** (anirvaktavyatā-vāda) *m.* theory of indescribability वस्तुधीव्यवहारयोः। … अनिर्वक्तव्यतावादपादसेवागतिस्तयोः KhaṇḍanKhā. 568.5; न च आलोकसंसर्गाभावे … व्यञ्जकत्वानुपपत्तिः आशङ्कितव्या … अनिर्वक्तव्यतावादे च – प्रतीत्यनुसारिणो व्यङ्ग्यव्यञ्जकभावस्य सुवचत्वात् TarkSaṁ.(Ā.) 21.24.

**अनिर्वक्तव्यतास्थिति** (anirvaktavyatā-sthiti) *f.* stationary position of indescribability अनारोपितं रूपं तर्हि तत्त्वम् – इति चेत्, न, …। अनिर्वक्तव्यताख्याताव(नि)र्वक्त(व्य)तास्थितेः TarkSaṁ.(Ā.) 5.27.

**अनिर्वचन** (a-nirvacana) *n.* **AI** non-utterance आशिषामनिर्वचनम्। नामधेयाग्रहणं च ŚāṅkhāŚS. x. 1.16; **AII** non-mention देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण MīmāSū. x. 8.52 (ŚābaBh. तूष्णींभावः); **B** non-explanation यथो एतद् वैश्वानरीयो द्वादशकपालो भवतीत्यनिर्वचनं कपालानि भवन्ति Nir. 7.24 (145.8); अप्राप्त्यात्यन्तिकत्वयोरनिर्वचनादयुक्तमपूर्वविधिलक्षणम् VidhiRa. 16 (104.9); अनिर्वाच्यत्वं सत्यस्य लक्षणादेरनिर्वचनम् LaCandr. 473.23.

**अनिर्वचनमात्र** (anirvacana-mātra) *n.* mere non-description यत्तु निर्वचनाभावेन विषयस्यानिर्वाच्यत्वकथनं न युक्तम्, न हि स एव तत्, किं तु सदसद्विलक्षणत्वादिरूपम्, अन्यथा मुखादिसंस्थानस्यानिर्वचनमात्रादनिर्वाच्यता स्यात् GuruCandr. ii. 112.7.

**अनिर्वचनवादिन्** (anirvacana-vādin) *adj.* upholder of the theory that everything is indescribable बाधे दृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम्। क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम् KhaṇḍanKhā. 500.11.

**अनिर्वचनीय** (a-nírvacanīya) *adj.* [*f.* -ā] **1** indescribable, inexplicable, indeterminable (implying falsity of the world) नानिर्वचनीयस्य, तदभावात् SāṁkhyaPraSū. 5.54 (Bh. सत्त्वेनासत्त्वेन चानिर्वचनीयस्यापि भानं न घटते); अविद्या … न व्यवहाराङ्गम्, तस्मादनिर्वचनीया BrahmSi. 9.14; भेदः …तत्त्वान्यत्वाभ्यामनिर्वचनीयः … 'अयमस्माद् भिन्नः, अयमनयोर्भेदः' इति व्यवहारं प्रवर्तयति BrahmSi. 48.7; तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते BrahmSūBh.(Śaṅ.) 39.1 (*on* i. 1.5); 315.10 (*on* ii. 1.14); अनन्तशक्तिः आत्मा … नामरूपयोः … तत्त्वान्यत्वाभ्यामनिर्वचनीययोः … व्याकर्ता UpadeSā. 23.4; का चानिर्वचनीया माया PraśnoRaMāli. 59; यदुक्तमसत्ख्यातिवादिना अनिर्वचनीयस्यापि … ख्यात्यभ्युपगमे असत्ख्यातिप्रसङ्गः IṣṭaSi. 119.22; 47.21; 112.14; 316.17; का चेयमविद्या सत्त्वासत्त्वाभ्यामनिर्वचनीया BrahmSūBh.(Bhā.) 95.21 (*on* ii. 1.14); 219.16 (*on* iv. 1.1); अज्ञानकल्पितमनिर्वचनीयमिष्टम् SaṁkṣeŚā. 1.118 (i. 101.2); 3.100 (ii. 207.24); तत्त्वान्यत्वाभ्यामनिर्वचनीयेयमविद्येति कोऽर्थः NyāyMañ. ii. 97.16; भावरूपमज्ञानमनिर्वचनीयम् ĀtmaSi. 28.22; एवंलक्षणकोऽध्यासोऽनिर्वचनीयः सर्वेषामेव संमतः Bhām. 13.16 (*on* i. 1.1); 31.9 (*on* i. 1.1); 95.25 (*on* i. 1.4); अलीकं

विचारासहमनिर्वचनीयं वा यमाश्रित्य जगदुद्गीयते स एव विचारश्चिन्त्यताम् ĀtmaTaVi. 530.8 अनिर्वचनीयमेव जडमुच्यते PramāMā. 6.2; यदि रजतत्वादिजातियोगः, सा किमनिर्वचनीया NītiMā. 25.21; सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति KhaṇḍanKhā. 125.5; 137.12; मिथ्यात्वं प्रमाणगम्यत्वं वा, अप्रमाणज्ञानगम्यत्वं वा … । नाद्यः । … नापि द्वितीयः । … सर्वस्य प्रपञ्चस्य … ब्रह्मकार्यमिदमनिर्वचनीयमिति च मिथ्याज्ञानगोचरतायाः परैरभ्युपगमात् TattvPradī.(Ci.) 33.6; 54.5; 388.13; अनिर्वचनीयस्य प्रतिवादिनो(ऽ?)सिद्धत्वात् PramāLa. 2A.9; अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वात् Tattvodyo. 1B.3; अज्ञानं तु सदसद्भ्यामनिर्वचनीयम् – यत किंचित् VedāntTaSā. 3.4; VedāntSā (Sa.) 5.8; दृश्योऽयमखिलः प्रपञ्चः ख्यातिबाधान्यथानुपपत्त्या अनिर्वचनीयः NyāyKu. 60.9; विश्वं विचार(?रा)सहमलीकमनिर्वचनीयं च ŚatDū. 97.20; एते पदार्थाः…अनिर्वचनीया निर्वचनीया वा NyāyPari. 65.4; अतोऽनिर्वचनीयोऽयम् (घटः) PañcDa. 13.36; अनिर्वचनीयः प्रपञ्चश्चिद्विवर्तः SarvaDaSaṁ. 16.325; अमुख्यं सत् … अनिर्वचनीयम् NyāySu.(Ja.) 35B.1 (*on* i.1.1); अनिर्वचनीयतथाविधवस्तुपूर्वकत्वे साध्ये साध्यविकलो दृष्टान्तः Vādā. 25.7; परिशेषादारोपितमनिर्वचनीयमित्यभ्युपेयम् SarvaDaKau. 124.18; 125.14; 141.26; अनिर्वचनीयमारोप्यत इति वेदान्तिनः YuktiSneha. 50.14 (*on* i.1.5); अनिर्वचनीयानाद्यविद्याकल्पिता अनिर्वचनीया एव SiddhāBi. 18.2; परिमाणभेदस्यानिर्वचनीयस्य … आश्रयभेदानियतत्वाच्च BhedaDhi. 71.1; अनिर्वचनीयस्य ज्ञाननिवर्त्यत्वनियमेन निवृत्तिपरंपराप्रसङ्गात् SiddhāTa. 56.2; 1.7; 1.11; रजते पारमार्थिकत्वमपि अनिर्वचनीयम् VedāntPari. 134.1; असतो ह्युपादानत्वे … अनिर्वचनीयस्य प्रपञ्चस्य सत्त्वप्रतिभासो न स्यात् VīraMi.(Bhakti.) 20.5; माया … परिशेषादनिर्वचनीया SarvaMaSaṁ. 41.9; अनिर्वचनीयस्य जगतः सदसद्विलक्षणत्वेऽपि सद्विलक्षणत्वमात्रेणासत्पदेन ग्रहणम् LalitāSaBh. 140.12 (*on* 181); **2** difficult to be described, which is beyond description सः … शिवलोकं जगाम … । अथ निर्वचनीयं (? अथानिर्वचनीयं) च योगिगम्यम् BrahmāṇḍP. ii. 32.2; ब्रह्मत्वं चैव रुद्रत्वं विष्णुत्वं च परं पदम् । अतोऽनिर्वचनीयानि वाञ्छनीयानि सन्ति वा BrahmVaiP. i. 6.23; iii. 32.63; iv. 27.106; iv. 100.19; अनिर्वचनीय … परमात्मन् नमोऽस्तु ते BrahmVaiP. iv. 112.50; जीयादिदं वपुरनिर्वचनीयमीश Nārāy. ii. 6.9 (comm. अपरिच्छेद्यम्); **3** difficult to be expressed (in words), difficult to be defined देवर्षे संशयान् ब्रूहि … । अप्यनिर्वचनीयास्ते सर्वांश्छेत्तास्मि सांप्रतम् AhirbuS. 1.67; अनिर्वचनीयं प्रेमस्वरूपम् BhaktiSū.(Nā.) 4.51; येऽपि फलभूतामर्थसंविदं स्वप्रकाशामाहुः, तैरपि कोऽप्यनिर्वचनीयोऽर्थगतो विकारो दर्शयितव्य एव Kāśi. ii. 171.27 (*on* 5(3).200); पदज्ञानम् … अनन्तमदृष्टचरमनिर्वचनीयम् TattvCin. iv(2). 602.1; स खलु नरपतिः … अनिर्वचनीयं तद् राज्यसुखमनुभवन् कालं नयन्नवतिष्ठते VetāPañ.(Jam.) 4.8; नव्यास्तु … दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायाम् … अनिर्वचनीयः साक्षिभास्यशकुन्तलादिविषयकरत्यादिरेव रसः RasGaṅ. 30.8; 30.12; **4** unutterable, not fit to be mentioned सत्यामप्यविद्यायां ब्रह्मणि न किंचित् तिरोहितमिति नानात्वं पश्यतीति भवतामयं व्यवहारः सत्स्वनिर्वचनीय एव VedāSaṁ. 94.12.

**अनिर्वचनीयकार्यवाद** (anirvacanīyakārya-vāda) *m.* theory maintaining that the effect is indescribable (either as *sat* or *asat* and hence false) न चाध्यस्तत्वे उत्पत्त्याद्यनुपपत्तिः, … सत्कार्यवादासत्कार्यवादनिषेधेनानिर्वचनीयकार्यवाद मात्रे कार्यकारणभावपर्यवसानात् AdvaiSi. 504.11.

**अनिर्वचनीयकुसृति** (anirvacanīya-kusṛti) *f.* wrong path or view of what is indescribable अकल्पितत्वेऽपि प्रतीतिबाधाभ्यां मिथ्यात्वमिति चेन्न … अनिर्वचनीयकुसृतेश्च निरसिष्यमाणत्वात् ŚatDū. 94.13.

**अनिर्वचनीयक्लृप्ति** (anirvacanīya-kḷpti) *f.* assumption of what is indescribable निर्विषयख्यातिवादिनामिव तत्प्रभावेन प्रवृत्त्यादिसिद्धौ अनिर्वचनीयक्लृप्तिवैयर्थ्यात् ŚrutaPra. iB. 28.9 (*on* i.1.1)

**अनिर्वचनीयख्याति** (anirvacanīya-khyāti) *f.* **A** cognition of what is indescribable (i. e. unreal according to the Advaita Vedāntins who maintain that the things are neither existent nor non-existent and hence false) यः पुनरद्वैतवादिनां प्रपञ्चः … सामान्यादिर्नो बहिः किं त्वलीकं तद्विषयं च ज्ञानं मिथ्याज्ञानमित्यपि न संभवति ।… नानिर्वचनीयख्यातिरपि TātpaṬ.(Vā.) 87.18 (*on* i.1.2); न चानिर्वचनीयानाद्यविद्यानिबन्धनोऽयं भेदव्यवहार इति सांप्रतम् । अनिर्वचनीयख्यातेः पूर्वमेव निराकृतत्वात् TātpaṬ.(Vā.) 617.13 (*on* iv 1.41); अनिर्वचनीयख्यातिमनुभवविरोधेन निराकरोति NyāyVārPari. 414.1; अनिर्वचनीयख्यातौ च — आरोपे तदेवानिर्वाच्यत्वमिह प्रपञ्चे प्रतिपाद्यं इति असंभवि लक्षणं भवेत् TarkSaṁ.(Ā.) 6.3; अनिर्वचनीयख्यातौ । अनिर्वाच्यतया वस्तु निरुच्येत न वा NyāyPari. 48.8; साक्षादध्यासबाधस्तु शुक्तिज्ञानेनैवेत्यनिर्वचनीयख्यातौ बाधविचारेऽभिहितम् VivaPraSaṁ. 123.4; यतो रजतभ्रमाच्छुक्ताविच्छा नास्त्येव, किं त्वनिर्वचनीये रजत इत्यनिर्वचनीयख्यातौ वक्ष्यते AdvaiSi. 339.10; हन्तैवमनिर्वचनीयख्यातावपि कथं पीतशङ्खादिविभ्रमाः SiddhāSi. iv. 53.9; YatīndraDī. 9.1; **B** cognition or experience of (*rasa*) which cannot be described (in words) परे तु 'व्यञ्जनव्यापारस्यानिर्वचनीयख्यातेश्चानभ्युपगमेऽपि … दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरत्यादिमदभेदबोधः … रसः । …' इत्यपि वदन्ति RasGaṅ. 32.12.

**अनिर्वचनीयख्यातिकुक्षि** (anirvacanīyakhyāti-kukṣi) *m.* domain of *anirvacanīyakhyāti* प्रविश वा अनिर्वचनीयख्यातिकुक्षिम्, तिष्ठ वा … नीलादीनां पारमार्थिकत्वे ĀtmaTaVi. 527.7

**अनिर्वचनीयख्यातित्व** (anirvacanīyakhyāti-tva) *n.* the state of being the *anirvacanīyakhyāti* भ्रमो हि भ्रमत्वेन ग्राह्यः । भ्रमत्वं च रजताभाववति रजतख्यातित्वं वा, असत्ख्यातित्वं वा, अनिर्वचनीयख्यातित्वं वा AdvaiSi. 589.11.

**अनिर्वचनीयख्यातिनिराकरण** (anirvacanīyakhyāti-nirākaraṇa) *n.* refutation of the (theory of) *anirvacanīyakhyāti* शून्यताविवर्तो विश्वप्रपञ्च इति तु दर्शनमसत्ख्यात्यनिर्वचनीयख्यातिनिराकरणेनापाकृतम् TātpaṬ.(Vā.) 593.2 (*on* iv. 1.18)

**अनिर्वचनीयख्यातिपक्ष** (anirvacanīyakhyāti-pakṣa) *m.* the view of the *anirvacanīyakhyāti* यस्य तु शङ्का कारणेनोत्पद्यते तस्य तदुच्छेदौपयिकतया पूर्वोक्तहेतुराशिरनुसंधेयः …। अतस्सिद्धमनिर्वचनीयख्यातिपक्षोऽत्यन्तं तुच्छ इति NyāyKu. 68.5; 61.20.

**अनिर्वचनीयख्यातिवादिन्** (anirvacanīyakhyāti-vādin) *adj.* upholder of the (theory of) *anirvacanīyakhyāti* तत् किम् … अनिर्वचनीयख्यातिवादिनोऽपि आरोपिताकारस्यान्यत्र पारमार्थ्यमावश्यकम् NyāySu.(Ja.) 297A.10 (*on* ii. 1.6)

**अनिर्वचनीयख्यातिविवेचन** (anirvacanīyakhyāti-vivecana) *n.* examination of the *anirvacanīyakhyāti* विस्तरेण चानिर्वचनीयख्यातिविवेचने विवेचितमिदमस्माभिः LaCandr. 574.17.

**अनिर्वचनीयख्यात्यनभ्युपगम** (anirvacanīyakhyāty-anabhyupagama) *m.* non-acceptance of the (theory of) *anirvacanīyakhyāti* तन्मते भ्रमस्यासत्ख्यातित्वस्वीकारेणानिर्वचनीयख्यात्यनभ्युपगमेन तादात्म्यादिसंबन्धस्याप्यलीकस्यैव भ्रमे भानात् LaCandr. 37.18.

**अनिर्वचनीयख्यात्यभ्युपगम** (anirvacanīyakhyāty-abhyupagama) *m.* acceptance of the (theory of) *anirvacanīyakhyāti* ननु त्वन्मते अनिर्वचनीयख्यात्यभ्युपगमात् ये कर्तृत्वादयोऽन्तःकरणधर्माः … ते अनिर्वचनीयाः SiddhāBi. 66.8.

**अनिर्वचनीयगुणप्रपञ्च** (anirvacanīyaguṇa-prapañca) *adj.* **i** having abundance of qualities which are beyond description अद्राक्षुरपि तत्र ते … आत्मतत्त्वमिवानिर्वचनीयगुणप्रपञ्चम् … दुग्धोदं नाम रत्नाकरम् NīlaVi. 48.16; **ii** having the phenomenal world possessed of indescribable (i. e. false) qualities, NīlaVi. 48.16.

**अनिर्वचनीयघटाभाव** (anirvacanīya-ghaṭābhāva) *m.* indescribable non-existence of the pot ननु अनुपलब्धिरूपमानान्तरपक्षेऽप्यभावप्रतीतेः प्रत्यक्षत्वे घटवति घटाभावभ्रमस्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीयघटाभावोऽभ्युपगम्येत VedāntPari. 253.2.

**अनिर्वचनीयतत्ख्यातिनिरास** (anirvacanīyatatkhyāti-nirāsa) *m.* refutation of what is indescribable and its cognition नानिर्वचनीयतत्ख्यातिनिरासप्रसङ्गः IṣṭaSi. 164.17.

**अनिर्वचनीयता** (anirvacanīya-tā) *f.* indescribability or indeterminability or inexplicability (implying falsity of the world) तच्चासत् किं सदेव, उत तुच्छम् । नोभयमिति चेत्, प्राप्ता अनिर्वचनीयता अस्य IṣṭaSi. 138.21; मिथ्या च तदज्ञानं च मिथ्याज्ञानम् । मिथ्येति अनिर्वचनीयता उच्यते अज्ञानमिति च जडात्मिकाविद्याशक्तिः PañcPā. 4.20 (*on* i. 1.1); 24.1 (*on* i. 1.1); अन्यस्यान्यधर्मकल्पनानृतता सा चानिर्वचनीयता Bhām. 18.20 (*on* i. 1.1); न च रजतात्मना पुरोवर्तिनो द्रव्यस्यानिर्वचनीयता TātpaṬ.(Vā.) 87.9 (*on* i. 1.2) अनिर्वचनीयत्वं च किमभिप्रेतम् । सदसद्विलक्षणत्वमिति चेत् । तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात् BrahmSūBh.(Rā.) 86.5 (*on* i. 1.1) (ŚrutaPra. दुरुपपादत्वम्); अविद्येति च विद्यापदेन समस्यमानस्य च नञस्तदभावस्तद्विरोधी तदन्यो वार्थोऽभ्युपेयः । आद्ये विद्याभावस्यापि वेद्याभाववन्नानिर्वचनीयता TattvPradī.(Ci.) 54.8; सदसत्पक्षप्रतिक्षेपेण पूर्वपक्षमादर्श्य न संव्यवहारमात्रत्वादिति अनिर्वचनीयता सिद्धान्तिता VedāntKa. 227.6 (*on* i. 4.26); प्रपञ्चो मिथ्या न भवति असद्विलक्षणत्वात् आत्मवत् ।… साध्यविकलश्च दृष्टान्तः । शुक्तिशकलकलधौतेऽपि प्रपञ्चान्तर्गतत्वेन अनिर्वचनीयतायाः साध्यमानत्वात् SyādvāMañ. 13(69); यथा खलु सत्त्वासत्त्वे भवन्मते दुर्निरूपत्वान्न जगतो विद्येते, तथानिर्वचनीयताया अपि दुर्निरूपत्वेन तदभावो ध्रुवः स्यात् Vādā. 5.4.

**अनिर्वचनीयतादात्म्य** (anirvacanīya-tādātmya *n.* identity which cannot be described तस्य मतेऽनिर्वचनीयतादात्म्यलक्षणसंबन्धोपपत्तेः Bhām.

465 11 (*on* ii. 2. 38)

**अनिर्वचनीयतापात** (**anirvacanīyatāpāta**) *m.* undesired contingency of indescribability तत्तत्प्रतियोगिदुर्निरूपतामात्रप्रकटनाय तत्तद्विलक्षणताभिलापादिति चेन्न तथा सति तस्यानिर्वचनीयतापातात् Vādā. 5.2.

**अनिर्वचनीयतावचन** (**anirvacanīyatā-vacana**) *adj.* expressing indescribable nature अध्यासो नाम अतद्रूपे तद्रूपावभासः स मिथ्येति भवितुं युक्तमिति। मिथ्याशब्दः ··· अनिर्वचनीयतावचनः PañcPā. 4.6 (*on* i. 1.1)

**अनिर्वचनीयताविरोध** (**anirvacanīyatā-virodha**) *m.* contradiction with the indescribable nature तत्सत्त्वं सदसदनिर्वचनीयं वा। नाद्यः। अनिर्वचनीयताविरोधात् NyāySu.(Ja.) 59A. 10 (*on* i. 1.1)

**अनिर्वचनीयतासत्त्वव्यवस्थिति** (**anirvacanīyatāsattva-vyavasthiti**) *f.* fixed rule of the reality of indescribability यो हि सर्वमनिर्वचनीयसदसत्त्वं ब्रूते स कथमनिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयुज्येत KhaṇḍanKhā. 131 11.

**अनिर्वचनीयतासिद्धि** (**anirvacanīyatā-siddhi**) *f.* establishment of the indescribable nature नन्वनिर्वचनीयत्वाद्रूप्यज्ञानवदबोधकत्वाबाधकत्वे शुक्तिज्ञानस्यापि युक्ते इति चेत् तन्न, शुक्तिज्ञानस्य बोधकत्वादिसिद्ध्यधीनत्वाद्रूप्यज्ञानस्यानिर्वचनीयताबोधकत्वादिसिद्धेः शुक्तिज्ञानस्य अनिर्वचनीयतासिद्धेश्च IṣṭaSi. 81. 13.

**अनिर्वचनीयतोपपत्ति** (**anirvacanīyatopapatti**) *f.* tenability of indescribable nature अविद्येति च विद्यापदेन समस्यमानस्य च नञस्तदभावस्तद्विरोधी तदन्यो वार्थोऽभ्युपेयः।··· द्वितीये तु संशयविपर्यासादेविद्याविरोधिनो गुणान्तरस्य वा नानिर्वचनीयतोपपत्तिः TattvPradī.(Ci.) 54.9.

**अनिर्वचनीयत्व** (**anirvacanīya-tva**) *n.* **A** indescribability or indeterminability or inexplicability (implying falsity) न संविदनुसारेण निमित्तं तस्य युज्यते। अतोऽनिर्वचनीयत्वं प[व]रं ब्रह्मविदो विदुः VibhraVi. 27; अथानिर्वचनीयत्वं समूहादेर्निषिध्यते TattvSam. 6.9 न प्रतीतिसत्तां विहाय बहिस्सत्तारूपेणार्थानां गम्यगमकभावः। तथाहि न पर्वतस्थस्य धूमस्वलक्षणस्य अभावात ·· नापि धूमजातेः तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वात् TātpaṬ.(U.) 231. 22 (*on* 5(3). 168); मायायाः ·· वस्तुत्वावस्तुत्वाभ्यामनिर्वचनीयत्वात् IṣṭaSi. 32.23; 81.10; मिथ्याप्रत्ययानां रूपमनिर्वचनीयत्वम् Bhām. 31.8 (*on* i. 1.1); अथापि निःस्वभावत्वमनिर्वचनीयत्वम् NyāyVārPari. 415. 11; वस्तुनस्तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वात् TattvPradī.(Ci.) 215. 13; सकार्याया मायाया अनिर्वचनीयत्वात् PrakaVi. 91. 25; सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता। तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः AnuVyā. 2B. 2 (*on* i. 1.1); ब्रह्मण एवानिर्वचनीयत्वं स्यात् Tattvodyo. 1B.7; अनिर्वचनीयत्वे रजतस्यानिर्वचनीयमिदं रजतमिति बाधकज्ञानमुत्पद्येत ViṣṇuTaNi. 7A.11; तदेवं प्रक्रियाप्राप्तः संयोगो न प्रकल्पते। स चानिर्वचनीयत्वात् प्रतीतिशरणं गतः TarkSaṁ.(Ā.) 71. 24; भ्रान्तिगोचरस्य मायामयस्य रजतादेः सदसद्विलक्षणत्वलक्षणमनिर्वचनीयत्वं सिद्धम् SarvaDaSaṁ. 16.672; 16. 679; अनिर्वचनीयत्वादज्ञानस्य NyāySu.(Ja.) 19B. 11 (*on* i. 1.1); 40B. 6 (*on* i. 1.1) तस्य सत्त्वस्यानिर्वचनीयत्वे प्रातीतिकत्वे तथैव प्रतीतौ स्वरूपमात्रप्रतीतौ वा स्यादेवानवस्थितिः NyāySu.(Ja.) 60A.10 (*on* i. 1.1); अनिर्वचनीयत्वाविद्यातत्कार्ययोरन्यतरत्वस्य मिथ्यात्वाभिप्राये निदर्शनस्य साध्यविकलत्वं च Vādā. 71. 3; अनिर्वचनीयत्वं च सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्विलक्षणत्वम् SarvaDaKau. 124.18; Nyāyāmṛ. 205B.8; आभासस्यापि जडाजडविलक्षणत्वेनानिर्वचनीयत्वात् SiddhāBi. 44.1; ज्ञानार्थस्वरूपयोः संबन्धविशेषरूपस्य अतिरिक्तविषयतारूपस्य अभ्युपगमे चानिर्वचनीयत्वं विचारासहत्वमापद्यते GuruCandr. i. 234.23; **B** inexpressibility (in words) करुणायाः नवरसेष्वन्तर्भावात्, रसशब्दस्य मधुरादौ रूढत्वात् तेषामनिर्वचनीयत्वेऽपि अनुभवगोचरतायामिक्ष्वादिसारद्रव्यपदार्थनिष्ठत्वोपलब्धेः तत्संबन्धवशात् परंपरया द्रवद्रव्यवृत्तिस्यन्दनरूपक्रियाश्रयत्वमुपचर्यते LalitāTriBh. 301.4 (*on* 28); अस्यानिर्वचनीयत्वादनुभवैकवेद्यत्वान्मोक्षान्तं यत्फलं शास्त्र उक्तं तस्माद् भिन्नम् AṇuBh. 249.19 (*on* iii. 3.42)

**अनिर्वचनीयत्वकल्पना** (**anirvacanīyatva-kalpanā**) *f.* assumption of indescribability यस्य तु न तदस्त्यात्मनो न तस्य तत्कल्पनं युक्तमबाधितानुभवसिद्धस्य सत्स्वभावस्यानिर्वचनीयत्वकल्पनाप्रमाणाभावात् Bhām. 475.11 (*on* ii. 3.7)

**अनिर्वचनीयत्वनिश्चय** (**anirvacanīyatva-niścaya**) *m.* ascertainment of indescribability रूप्यवद् द्वैततद्दृष्ट्योः श्रुत्यैवानिर्वचनीयत्वनिश्चयात् तत्कारणमपि तादृगेव श्रुत्युक्तमिति निश्चीयते, कार्यानुरूपत्वात्कारणस्य IṣṭaSi. 145.3; 147.12.

**अनिर्वचनीयत्वप्रत्यनीकत्व** (**anirvacanīyatvapratyanīka-tva**) *n.* the state of being contradictory to indescribability विरोधिरूपत्वे त्वनिर्वचनीयत्वप्रत्यनीकत्वस्य निर्वचनीयत्वेन सदसत्त्वसमुच्चयकोटिबहिर्भावायोगात् ŚatDū. 184. 15.

**अनिर्वचनीयत्वप्रसङ्ग** (**anirvacanīyatva-prasaṅga**) *m.* undesired contingency of indescribability का पुनरविद्यानिवृत्तिः।··· नापि पञ्चमप्रकारा, सदसद्विलक्षणतया तस्या अप्यनिर्वचनीयत्वप्रसङ्गात् TattvPradī.(Ci.) 389.5; SarvaDaKau. 141.26.

**अनिर्वचनीयत्वविषय** (**anirvacanīyatva-viṣaya**) *adj.* referring to indescribability सत्त्वासत्त्वसदसत्त्वसदसद्विलक्षणत्वरूपानिर्वचनीयत्वविषयाश्चत्वारः पक्षाः ŚivārkaMaDī. ii. 102.15 (*on* ii. 2.31)

**अनिर्वचनीयत्वव्याप्त** (**anirvacanīyatva-vyāpta**) *adj.* concomitant with indescribability 'नेह नानास्ति', 'इन्द्रो मायाभिः', 'मृत्योस्स मृत्युम्' इत्यादिवाक्यैः, अनिर्वचनीयत्वव्याप्तैराद्यन्तवत्त्वादिभिर्हेतुभिश्च जगतो मायामयत्वमवगम्यते IṣṭaSi. 122.18; बुद्धिबोध्यत्वं नानिर्वचनीयत्वव्याप्तम् IṣṭaSi. 178.19.

**अनिर्वचनीयत्वसिद्धि** (**anirvacanīyatva-siddhi**) *f.* establishment of indescribability अविद्यायां तन्निबन्धनाध्यासे च सिद्धेऽपि न तस्यामनिर्वचनीयत्वसिद्धिः AdvaiSi. 620.1; बाध्यत्वेनैवासद्व्यावृत्तेरपि सिद्ध्या अनिर्वचनीयत्वसिद्धिपर्यवसानेन शेषवैयर्थ्यम AdvaiSi. 631.4; अभिव्यक्तचैतन्यावकुण्ठनशून्यस्य देशान्तरस्थस्य रजतस्यापरोक्ष्यानुपपत्तेः ख्यातिबाधानुपपत्त्यादिभिर्भ्रमविषयस्यानिर्वचनीयत्वसिद्धेश्च SiddhāLeSaṁ. 210.3.

**अनिर्वचनीयत्वहानि** (**anirvacanīyatva-hāni**) *f.* loss of indescribability अज्ञानमेव ज्ञानाभाव इति चेत्, अस्तु, एवमपि नाज्ञानस्यानिर्वचनीयत्वहानिः IṣṭaSi. 66.13.

**अनिर्वचनीयत्वाङ्गीकार** (**anirvacanīyatvāṅgīkāra**) *m.* acceptance of indescribability परिशेष्येणानिर्वचनीयत्वाङ्गीकारे ··· ब्रह्मण एवानिर्वचनीयत्वं स्यात् Tattvodyo. 1B.7; असतोऽनिर्वचनीयत्वाङ्गीकाराच्च न वैलक्षण्यं ततोऽनिर्वाच्यस्य KarmaNi. 2A.5; द्वैतस्य चानिर्वचनीयत्वाङ्गीकारेण च प्रत्यक्षादिवेद्यत्वान्निषेधोपपत्तिरित्यर्थः SiddhāBi. 151.2.

**अनिर्वचनीयत्वादिक** (**anirvacanīyatvādi-ka**) *adj.* indescribability etc. अनिर्वचनीयत्वादिकं मिथ्यात्वमिति पक्षे तु तुच्छे व्यभिचारश्च Nyāyāmṛ. 59A.6.

**अनिर्वचनीयत्वादिमात्र** (**anirvacanīyatvādi-mātra**) *n.* mere indescribability etc. बुद्धिपूर्वैः फलस्य प्रत्यक्षादिसिद्धस्य दुरपह्नवत्वात्। अनिर्वचनीयत्वादिमात्रेण तदपह्नवे तत्त्वज्ञानात्प्रागपि वस्तुतो मुक्तत्वेन जीवन्मुक्तिपर्वकल्पनानुपपत्तेः ŚatDū. 138.7.

**अनिर्वचनीयत्वानुपपत्ति** (**anirvacanīyatvānupapatti**) *f.* untenability of indescribability अथानिर्वचनीयत्वानुपपत्तिमाह ŚrutaPra. iB. 6.15 (*on* i. 1.1); iB. 1.19 (*on* i. 1.1)

**अनिर्वचनीयत्वाभाव** (**anirvacanīyatvābhāva**) *m.* absence of indescribability आत्मनोऽपि दृश्यत्वात्। शुक्तिरजतादेरनिर्वचनीयत्वाभावात् PramāLa. 2A.10; PrapañcaMiKha 1A.7; अनिर्वाच्यपदार्थस्य लोकेऽसंभवात् प्रपञ्चस्यापि निर्वचनीयत्वेनानिर्वचनीयत्वाभावाच्च BhāṭṭCin. i. 37.25 (*on* i. 1.4)

**अनिर्वचनीयत्वाभिमताज्ञान** (**anirvacanīyatvābhimatājñāna**) *n.* nescience which is regarded as being indescribable यच्चागमैस्तत्सिद्धिरिति उक्तम्, तदपि न, तत्रानिर्वचनीयत्वाभिमताज्ञानप्रसङ्गाभावात् ŚatDū. 171.1.

**अनिर्वचनीयत्वासिद्धि** (**anirvacanīyatvāsiddhi**) *f.* non-establishment of ndescribability नेह नानेति श्रौतनिषेधेन व्यवहारदशायामबाध्यस्य जगतोऽनिर्वचनीयत्वासिद्धिप्रसङ्गात् AdvaiSi. 630.4.

**अनिर्वचनीयदुष्यन्तरति** (**anirvacanīya-duṣyantarati**) *f* love of Duṣyanta which cannot be expressed (in words) विभावानुभावव्यभिचारिणां संयोगाद्भावनाविशेषरूपाद्दोषाद्रसस्यानिर्वचनीयदुष्यन्तरत्याद्यात्मनो निष्पत्तिरुत्पत्तिः RasGaṅ. 35.4.

**अनिर्वचनीयदृश्यत्व** (**anirvacanīya-dṛśyatva**) *n.* perceptibility which is indescribable सर्वे एते दृश्यत्वानुमाने द्रष्टव्याः।··· शुक्तिरजतादेरनिर्वचनीयत्वाभावात्। अनिर्वचनीयदृश्यत्वाभावात्। मानसिद्धत्वात् PramāLa. 2A.10.

**अनिर्वचनीयनिराकरण** (**anirvacanīya-nirākaraṇa**) *n.* refutation of what is indescribable अनिर्वचनीयनिराकरणं च तत्र तत्राचार्यः स्वयमेव करिष्यति NyāySu.(Ja.) 57A.13 (*on* i. 1.1)

**अनिर्वचनीयनिरास** (**anirvacanīya-nirāsa**) *m.* refutation of what is indescribable मिथ्याप्रमातृत्वं चानिर्वचनीयनिरासादेव निरस्तम् Tattvodyo. 2B.5; 2B.7.

**अनिर्वचनीयपक्ष** (**anirvacanīya-pakṣa**) *m.* view of what is indescribable यदि दर्शनेषु शून्यवादानिर्वचनीयपक्षयोराश्रयणं तदा तावदमूषां निराबाधेव सार्वपथीनता KhaṇḍanKhā. 229.23; न चानुपलब्धेः किं विकल्पेनापि इति वाच्यम्, तथा सति तस्यानिर्वचनीयपक्षनिक्षेपासंभवात् ŚatDū. 91.10.

**अनिर्वचनीयपदार्थ** (**anirvacanīya-padārtha**) *m.* indescribable (i. e. false) object न चानिर्वचनीयपदार्थेन तदभावेन वा परमार्थभावरूपाद्वैतस्य काचित् क्षतिरस्ति VivaPraSaṁ. 290.4.

**अनिर्वचनीयपरत्व** (**anirvacanīyapara-tva**) *n.* the state of being that which refers to what is indescribable अज्ञानशब्दस्य अनिर्वचनीयपरत्वं लोकतः शास्त्रतश्च न व्युत्पन्नम् ŚrutaPra. iA. 255.24 (*on* i. 1.1)

**अनिर्वचनीयपरमार्थत्व** ( anirvacanīya-paramārthatva ) *n.* ultimate reality of what is indescribable शुक्ते रजतत्वं सदसद्विलक्षणम् ।…अनिर्वचनीयपरमार्थत्वस्यासत एव दृष्टयङ्गीकारात् ViṣṇuTaNi. 7A.9.

**अनिर्वचनीयपुरोवर्तिरजत** ( anirvacanīya-purovartirajata ) *n* indescribable (i. e. false) silver which is in front अन्यथान्यथाख्यातिवादिभिः केनचिद्धेतुना रजतज्ञानस्य पुरोवर्तिविषयत्वे साधिते वेदान्तिना चानिर्वचनीयपुरोवर्तिरजतविषयत्वेन सिद्धसाधनत्वे नास्माकं तत् सिद्धमिति वचनमात्रेणान्यथाख्यातिवादिनश्चरितार्था भवेयुः TattvPradī.(Ci.) 7.1

**अनिर्वचनीयप्रत्यनीक** ( anirvacanīya-pratyanīka ) *adj.* contrary to what is indescribable ऐक्यज्ञानं निवर्तकं निवृत्तिश्चानिर्वचनीयप्रत्यनीकाकारेति चेत् । अनिर्वचनीयप्रत्यनीकं निर्वचनीयं तच्च सद्वासद्वा द्विरूपं वा कोटयन्तरं न विद्यते VedāSaṁ. 99.14

**अनिर्वचनीयप्रपञ्च** ( anirvacanīya-prapañca ) *m.* world which is indescribable (i. e. false) सर्वज्ञः सर्वशक्तिः इत्यादिशब्दाश्च अनिर्वचनीयप्रपञ्चोपाधितया तत्र वर्तन्ते VivaPraSaṁ. 289.22.

**अनिर्वचनीयप्रातिभासिकदेश** ( anirvacanīya-prātibhāsikadeśa ) *m.* indescribable phenomenal locality ननु स्वप्ने रथाद्यधिष्ठानतयोपलभ्यमानदेशविशेषस्यापि तदासंनिकृष्टतयानिर्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्यः VedāntPari. 127.2

**अनिर्वचनीयभाव** ( anirvacanīya-bhāva ) *m.* indescribability ( अत एव भेदाभेदयोर्विरोधं दुःसमर्थमभिमन्यमानैरेकैरविद्यात्वेन अनिर्वाच्यत्वम् ) अनिर्वाच्यत्वम् — सत्तासत्ताभ्यामनिर्वचनीयभावम Bhāsk. ii. 131.8 (*on* ii. 3.14)

**अनिर्वचनीयभेद** ( anirvacanīya-bheda ) *m.* indescribable difference अभेदोपादानैवानिर्वचनीयभेदकल्पना Bhām. 90.1 (*on* i. 1.4); अनिर्वचनीयभेदज्ञानस्य तात्त्विकाभेदज्ञानाप्रतिबन्धकत्वात् AdvaiSi. 804.5.

**अनिर्वचनीयमत** ( anirvacanīya-mata ) *n.* doctrine of what is indescribable अनिर्वचनीयमतं निरस्य शून्यमतं निरस्यति VedāntKa. 13.9 (*on* i. 1.0); पुनरप्यनिर्वचनीयमतेन मिश्रितानि सदसदादिमतानि SarvaDaSaṁ. 3.400.

**अनिर्वचनीयमाया** ( anirvacanīya-māyā ) *f* nescience or ignorance which is indescribable 'मायां तु प्रकृतिं विद्यात्', 'मम माया दुरत्यया' इति श्रुतिस्मृती अनिर्वचनीयमायात्मकत्वं सृष्टेर्दर्शयतः VivaPraSaṁ. 253.1.

**अनिर्वचनीयरजत** ( anirvacanīya-rajata ) *n.* indescribable (i. e. false) silver भवत्पक्षे वा कथमिन्द्रियसंबन्धरहितस्यानिर्वचनीयरजतस्यावभासः Nīti-Mā. 25.14; भवन्मतेनानिर्वचनीयरजतसमकालवर्तिन्या रजतभ्रान्तेः प्रामाण्यप्रसङ्गात् ŚatDū. 113.16; 'यदा अपरोक्षं ज्ञानं तदार्थे' इति व्याप्त्यनभ्युपगमे 'इदं रजत'-मित्यपरोक्षज्ञानान्यथानुपपत्त्या अनिर्वचनीयरजतसिद्धिर्न स्यात् AdvaiSi. 308.3; 310.1; सत्यरजतस्यानिर्वचनीयरजतादिव … भेदो बोध्यः RasGaṅ. 37.14.

**अनिर्वचनीयरूप** ( anirvacanīya-rūpa ) *adj.* [*f.* -ā] of indescribable nature कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते ।… महाद्भुतानिर्वचनीयरूपा ViveCū. 111; अनिर्वचनीयरूपः कश्चिदनात्माकारोऽयं प्रपञ्चः Vādā. 79.2.

**अनिर्वचनीयरूपत्व** ( anirvacanīyarūpa-tva ) *n.* the state of having indescribable nature आनुरूप्यस्याविरोधित्वरूपत्वे सदसदनिर्वचनीयाज्ञाननिवृत्तेरप्यनिर्वचनीयरूपत्वप्रसङ्गात् ŚatDū. 184.15.

**अनिर्वचनीयलौहित्योत्पत्ति** ( anirvacanīyalauhityotpatti ) *f.* origin of the indescribable redness जपाकुसुमगतलौहित्यस्य स्फटिके भानसंभवात् न स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिः VedāntPari. 136.2.

**अनिर्वचनीयवचन** ( anirvacanīya-vacana ) *adj.* expressive of what is indescribable मिथ्याशब्दोऽनिर्वचनीयवचनः NyāySu.(Ja.) 481A.4 (*on* iii. 2.1)

**अनिर्वचनीयवाद** ( anirvacanīya-vāda ) *m.* **I** theory of what is indescribable सदसत्सदसदनिर्वचनीयवादभेदेन प्रतिवादिनश्चतुर्विधाः SarvaDaSaṁ. 3.399; प्रतीतिमात्रशरणत्वे च अनिर्वचनीयवादापातः VivaPraSaṁ. 267.21; स्वरूपसंबन्धविशेषाभ्युपगमे चानिर्वचनीयवादापत्तेः, इत्यादिदूषणानि बहुतरमूहनीयानि AdvaiSi. 348.1; ज्ञानत्वविशिष्टस्य तद्व्यक्तित्वविशिष्टाभेदे तयोर्भेदासंभव इति भेदे मिथ्यात्वस्य वाच्यत्वेनानिर्वचनीयवादापत्तिः LaCandr. 346.23; **II** discussion on what is indescribable यथा च कल्पितस्यापि जन्माद्युपपत्तिस्तथानिर्वचनीयवादे वक्ष्यते AdvaiSi. 503.8.

**अनिर्वचनीयवादिन्** ( anirvacanīya-vādin ) *adj.* upholder of the theory of what is indescribable नानिर्वचनीयवादिनं प्रति अयं प्रयोगस्तस्य सिद्धसाधनतापत्तेः TattvPradī.(Ci.) 7.3; कथं मूर्तद्वयस्य मिथोऽप्रतिघातकत्वमिति चेत् — वयमप्यनिर्वचनीयवादिनं त्वामेव पृच्छामः ŚrutaPra. ii. 429.24 (*on* iii. 2.6); अनिर्वचनीयवादिनामस्माकमध्यासस्यावस्तुत्वयुक्तिविरोधयोरिष्टत्वात् VivaPraSaṁ. 15.4; 118.19.

**अनिर्वचनीयविकल्प** ( anirvacanīya-vikalpa ) *m.* indeterminable construction अनिर्वचनीयविकल्पसिद्धत्वात् लिङ्गस्य नानवस्था भवतीत्याशङ्क्याह Kāśi iii. 89.19 (*on* 5(4).154)

**अनिर्वचनीयविकार** ( anirvacanīya-vikāra ) *m.* indescribable modification or effect पूर्वसिद्धस्याप्यनिर्वचनीयविकारात्मना परिणामः Bhām. 325.12 (*on* i. 4.26)

**अनिर्वचनीयविचित्र** ( anirvacanīya-vicitra ) *adj.* indescribable and strange अज्ञानस्यैवानिर्वचनीयविचित्रशक्तियोगात् न विचित्रशक्तिमति मायाशब्दप्रयोगानुपपत्तिः AdvaiSi. 571.13; विचित्रशक्तीति । विचित्रोपादानत्वेत्यर्थः, अनिर्वचनीयविचित्रस्य निमित्तमात्रे मायाविपुरुषादौ तत्प्रयोगाभावात् GuruCandr. ii. 429.7; LaCandr. 571.35.

**अनिर्वचनीयविशेष** ( anirvacanīya-viśeṣa ) *m.* indescribable special property मिथ्याविशेष इत्युक्ते ह्यसद्विशेष इत्येव भवति । तथा च विशेषविशिष्टपक्षोक्तदोष एव । न चानिर्वचनीयविशेष इति भवति । आनिर्वचनीयासिद्धेः KarmaNi. 1B.6.

**अनिर्वचनीयव्यावृत्त्यर्थ** ( anirvacanīyavyāvṛtty-artha ) *adj.* meant for the sake of the exclusion of what is indescribable अनिर्वचनीयव्यावृत्त्यर्थः कर्मशब्दः ŚrutaPra. iB. 83.28 (*on* i. 1.1)

**अनिर्वचनीयशक्ति** ( anirvacanīya-śakti ) *f.* indescribable power 'नासदासीत्' इत्यादिशास्त्रानुसारतोऽनिर्वचनीयशक्तिः VivaPraSaṁ. 262.19; एतेनानिर्वचनीयशक्तिवादः प्रत्युक्तः VedāntRaMañ. 3.8 (113.4)

**अनिर्वचनीयसंसर्गोत्पत्ति** ( anirvacanīyasaṁsargotpatti ) *f.* origination of indescribable relation मास्तु रजतोत्पादो भ्रमानुमित्यादाविवानिर्वचनीयसंसर्गोत्पत्त्या वह्न्युत्पत्तिः SiddhāTa. 7.13.

**अनिर्वचनीयसदसत्त्व** ( anirvacanīya-sadasattva ) *adj.* about which existence or non-existence is indescribable यो हि सर्वमनिर्वचनीयसदसत्त्वं ब्रूते स कथमनिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयुज्येत KhaṇḍanKhā. 131.11.

**अनिर्वचनीयसिद्धि** ( anirvacanīya-siddhi ) *f.* establishment of what is indescribable न चार्थापत्त्यानिर्वचनीयसिद्धिः Tattvodyo. 2A.6; 4A.1; अथ श्रुतिश्रुत्यर्थापत्तिभ्यामनिर्वचनीयसिद्धिं दूषयितुं प्रथमं श्रुतिवाक्यानि योजयति ŚrutaPra. iB. 38.12 (*on* i. 1.1)

**अनिर्वचनीयसुख** ( anirvacanīya-sukha ) *n.* happiness which cannot be expressed (in words) तामालोक्यानिर्वचनीयसुखम् अनुभवंस्तिष्ठति VetāPañ.(Jam.) 80.2.

**अनिर्वचनीयस्वभावा** ( anirvacanīya-svabhāvā ) *adj.* (*f.*) having indescribable nature यथावभासं रूप्यजातीया [ जातिः तदीय ]व्यक्तिनिरूपणव्यङ्ग्यानिर्वचनीयस्वभावा पराचीनबाधकपरास्या समाश्रयणीया PrakaVi. 10.9.

**अनिर्वचनीयस्वरूप** ( anirvacanīya-svarūpa ) *adj.* whose essential nature is beyond words विश्वत्रयस्य कश्चिद् अनिर्वचनीयस्वरूपः पुरुषविशेषः कर्ता स्रष्टा अस्ति विद्यते SyādvāMañ. 6(2)

**अनिर्वचनीयस्ववाचकमन्त्र** ( anirvacanīyasva-vācakamantra ) *m.* the sacred formula conveying the (real) nature which is beyond description तेषु चञ्चला विद्युल्लता … शुद्धलक्ष्यार्थस्वरूपा सत्यपि अनिर्वचनीयस्ववाचकमन्त्रप्रकाशितदेवतात्वेन स्वाभीष्टपुरुषार्थप्राप्तिहेतुभूतेत्यभिसन्धिः LalitāTriBh. 321.20 (*on* 39)

**अनिर्वचनीयाग्रह** ( anirvacanīyāgraha ) *m.* insistence on what is indescribable (अविद्या) सा हि … अनिर्वचनीयाग्रहविशिष्टं च सदद्वितीयं ब्रह्म विलुपन्ती त्र्यथन्तवादवारवाणमवधूयान्तर्गतं प्रकाशयेत् ŚatDū. 184.11.

**अनिर्वचनीयाज्ञान** ( anirvacanīyājñāna ) *n.* indescribable nescience तदेवमनिर्वचनीयाज्ञाने लक्षणप्रमाणयोरसंभवात्तादृगज्ञानमस्तीत्येतदेवाज्ञानमिति सिद्धम् TattvPradī.(Ci.) 57.9; अज्ञानाश्रयत्वं ( हि ) ज्ञानप्रागभावाश्रयत्वमनिर्वचनीयाज्ञानाश्रयत्वं वा ŚrutaPra. iA. 164.26 (*on* i 1.1); मिथ्याभूतस्य मिथ्याभूतमेवोपादानं भवितुमर्हतीत्यनिर्वचनीयाज्ञानकल्पनमपि निरस्तमिति ŚatDū. 207.25; मायां तु प्रकृतिं विद्यात् इत्यादौ मायाशब्दः … नानिर्वचनीयाज्ञानवचनः SarvaDaSaṁ. 4.112; 4.117; अन्यानृतशब्दाभ्यामनिर्वचनीयाज्ञानाभिधानात्कथं नेत्यतोऽनिर्वाच्यत्वं निर्वक्ति NyāySu.(Ja.) 439B.8 (*on* ii. 3.14); अनिर्वचनीयाज्ञाननिवृत्तौ च चतुर्थप्रकाररूपानिर्वचनीयत्वस्य … अदर्शनात् Nyāyāmṛ. 181B.7; पञ्चमप्रकारायामात्मस्वरूपभूतायां वा अनिर्वचनीयाज्ञानस्य निवृत्तौ चतुर्थप्रकारानिर्वचनीयत्वस्य … अदर्शनात् AdvaiSi. 444.28; 407.9.

**अनिर्वचनीयाज्ञानशरीर** (anirvacanīyājñāna-śarīra) *n.* the form of nescience which is indescribable अतस्तैश्चन्द्रादितत्त्वं प्रतिपद्य द्विचन्द्रादेस्तत्प्रतिभासस्य चानिर्वचनीयाज्ञानशरीरमात्रत्वं प्रतिपद्यते, प्रत्यक्षबाधे तथा व्युत्पत्तेः IṣṭaSi. 121.21.

**अनिर्वचनीयानाद्यविद्या** ( anirvacanīyānādyavidyā ) *f.* beginningless nescience which is indescribable ननु सर्वमेवेदमसदिति भवतो मतम् । क एवमाह अनिर्वचनीयानाद्यविद्यात्मकमित्युद्घोषितमस्माभिः PañcPā. 13.1 (*on*

i. 1.1); 75. 3 (*on* i. 1.1); सत्यं प्रत्यगात्मा … अनंशश्च, तथाप्यनिर्वचनीयानाद्यविद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इव Bhām. 22.6 (*on* i. 1.1); मा भूद्ब्रह्मसाक्षात्कार उत्पाद्यादिरूप उपासनायाः, संस्कार्यस्तु अनिर्वचनीयानाद्यविद्याद्वयपिधानापनयनेन भविष्यति Bhām. 40.24 (*on* i. 1.1); 319.21 (*on* i. 4.22); अपरं च ब्रह्मैवानिर्वचनीयानाद्यविद्योपधानान्नामरूपप्रपञ्चभेदेन विवर्तते TātpaṬ.(Vā.) 593.12 (*on* iv. 1.19); तदेवं मिथ्यात्वे लक्षणप्रमाणयोरुपपन्नत्वादनिर्वचनीयानाद्यविद्याविलसित एवायमात्मनि द्वैतप्रपञ्चः TattvPradī.(Ci.) 54.3; ततश्चानिर्वचनीयानाद्यविद्यालसितः प्रत्यगात्मनि प्रतीयमानः प्रमातृत्वादिप्रपञ्चः इत्यलमतिप्रसङ्गेन SarvaDaSaṁ. 16.791; SiddhāBi. 18.2

**अनिर्वचनीयान्त** (anirvacanīyānta) *adj.* resulting in what is indescribable अन्यप्रकारैवाज्ञानस्य निवृत्तिर्युक्ता, अनिर्वचनीयत्वात्तस्य … निर्वाच्यानामेव हि ते निवृत्तिप्रकारा अनिर्वचनीयान्ताः IṣṭaSi. 86.1

**अनिर्वचनीयान्तर** (anirvacanīyāntara) *n.* another indescribable न चानिर्वचनीयान्तरं तन्निवृत्तिः, विशेषाभावात् ज्ञानहेतुत्वायोगाच्च IṣṭaSi. 83. 23

**अनिर्वचनीयाप्रसिद्धि** (anirvacanīyāprasiddhi) *f.* non-establishment of what is indescribable मिथ्याशब्दस्य असदर्थत्वम् अनिर्वाच्यार्थत्वम् … वा।… न द्वितीयः, परस्य अनि(र्व)चनीयाप्रसिद्धेः असंभवित्वप्रसङ्गात् TarkSaṁ. (Ā.) 81.20.

**अनिर्वचनीयाभाव** (anirvacanīyābhāva) *m.* absence of what is indescribable अनिर्वचनीयाभावाच्च सत्यत्वं च सिद्धम् Tattvodyo. 3B. 11; अतोऽनिर्वचनीयाभावादसतः प्रतीत्यनङ्गीकारात् प्रतीयमानत्वाच्च भेदस्य सत्त्वप्राप्तेर्नाद्वितीयत्वं युज्यते ViṣṇuTaNi. 7B. 2.

**अनिर्वचनीयार्थ** (anirvacanīyārtha) *adj.* referring to indescribable object तदर्थोऽनिर्वचनीयार्थः (आगमोऽस्ति मूले) NyāySu.(Ja.) 439A. 4 (*on* ii. 3. 14); 439A. 7 (*on* ii. 3.14); अपूर्वलक्षणं रूपमुपजीव्यं न तात्त्विकम्। तच्चानिर्वचनीयार्थेष्वविरुद्धमितीतरे VedāntSiSūMañ. 2. 15 *m.* indescribable object अनिर्वचनीयार्थप्रतीतिरसाविति चेन्न। निराकृतत्वात् NyāySu.(Ja.) 58A. 3 (*on* i. 1. 1); एवमर्थापत्तिं निरस्योपमानं च निरस्यति … अत्रानिर्वचनीयार्थसद्भावे प्रमाणमिति शेषः NyāySu.(Ja.) 442A. 5 (*on* ii. 3. 14); अत एव परोक्षभ्रमेऽपि अनिर्वचनीयार्थसिद्धिः AdvaiSi. 309.2.

**अनिर्वचनीयार्थत्व** (anirvacanīyārtha-tva) *n.* the state of having an indescribable object अथोच्येत अनिर्वचनीयार्थत्वात् स्वप्नज्ञानमप्रमाणं तथा जाग्रज्ज्ञानमपीति, तन्न, बाधाभावात् IṣṭaSi. 33. 19.

**अनिर्वचनीयार्थावभास** (anirvacanīyārthāvabhāsa) *m.* cognition of an indescribable object आचार्याः पुनरनिर्वचनीयार्थावभासं विभ्रममाचक्षते NyāyMa. 111.1.

**अनिर्वचनीयाविद्या** (anirvacanīyāvidyā) *f.* indescribable nescience अनिर्वचनीयाविद्याया अप्रसिद्धत्वात् TattvPradī.(Ci.) 33.10; पूर्वमनिर्वचनीयाविद्यावच्छिन्नस्य सगुणस्याप्रामाणिकत्वम् NyāySu.(Ja.) 122A. 2 (*on* i. 1. 5); 488A. 2 (*on* iii. 2.1)

**अनिर्वचनीयाविद्याविजृम्भितत्व** (anirvacanīyāvidyāvijṛmbhita-tva) *n.* the state of being manifestation of the indescribable nescience प्रपञ्चस्याप्यनिर्वचनीयाविद्याविजृम्भितत्वाद्विद्यया तन्निवृत्तेर्मोक्ष उपपद्यत इत्येषा आशा न कार्या IṣṭaSi. 79.18.

**अनिर्वचनीयाविद्याविलासता** (anirvacanīyāvidyāvilāsa-tā) *f.* the nature of being the manifestation of the indescribable nescience शुक्तिरूप्यादिस्फुरणानाम् … अनिर्वचनीयाविद्याविलासतैव युक्ता IṣṭaSi. 218. 1.

**अनिर्वचनीयासिद्धि** (anirvacanīyāsiddhi) *f.* non-establishment of what is indescribable विमतं मिथ्या दृश्यत्वाद्यदित्थं तत् तथा यथा संप्रतिपन्नम्। इत्युक्ते जगतोऽभावादाश्रयासिद्धः पक्षः। अनिर्वचनीयासिद्धेरप्रसिद्धविशेषणः PrapañcaMiKha. 1A.2; न च कयापि युक्त्या मानेन वा भेदनिराकरणं भवति। अङ्गीक्रियमाणत्वात्। अनिर्वचनीयासिद्धेश्च Tattvodyo. 2A.10; 4A.9; KarmaNi. 1B.6.

**अनिर्वचनीयोक्तदूषणनय** (anirvacanīyoktadūṣaṇa-naya) *m.* [Inst.] in accordance with the objections stated regarding what is indescribable चतुर्थस्तूभयप्रतिक्षेपरूपोऽनिर्वचनीयोक्तदूषणनयेन … दूषितः ŚatDū. 182.3

**अनिर्वदन्ती** (a-nirvadantī) *adj.* (*f.*) **I** not speaking एवं जातपरिचया चानिर्वदन्ती तत्समीपे याचितं ताम्बूलम् … निदध्यात् KāmSū. 203.17 (3.2); **II** not disclosing एकपुरुषाभियोगानां त्वसंभवे … तस्यामन्तर्भूतया तमर्थमनिर्वदन्त्या सहैनामङ्कमानाययेत् KāmSū. 221.9 (3.4) (JayaMa. अनिर्वदन्त्या अन्यव्यपदेशिन्येत्यर्थः)

**अनिर्वर्णनीय** (a-nirvarṇanīya) *adj.* not to be gazed at अनिर्वर्ण्यं (v. l. अनिर्वर्णनीयं Ed. Kale) खलु परकलत्रम् Śāk. 5. 14(2)

**अनिर्वर्णिताङ्गी** (anirvarṇitāṅg-ī) *adj.* (*f.*) whose limbs are not looked at closely अत्यौत्सुक्यात् परवशदृशो यामनिर्वर्णिताङ्ग्याः प्रापुः स्नेहेऽप्यविदितरसस्वादनां पूर्वरात्रे Kapphiṇā 15.5.

**अनिर्वर्ण्य** (a-nirvarṇya) *adj.* **I** not describable सोऽचिन्त्यो(? ऽ)निर्वर्ण्यश्च ĀtmaU[1]. 1; **II** not to be gazed at अनिर्वर्ण्यं खलु परकलत्रम् Śāk. 5. 14(2)

**अनिर्वर्ण्यगुणसौन्दर्य** (anirvarṇya-guṇasaundarya) *adj.* having inexpressible loveliness of qualities तेनात्यद्भुतरूपशोभमनिर्वर्ण्यगुणसौन्दर्यं महत्सरः पक्षिभ्यः स्वच्छन्दसुखोपभोग्यं दत्तम् JātaMā. 131. 18 (22.18)

**अनिर्वर्तक** (a-nirvartaka) *adj.* which does not bring about अग्नीनादधीतेति निर्वर्त्यं कर्माभिधायिन्या (? निर्वर्त्यकर्माभिधायिन्या) द्वितीययाग्नीनां निर्वर्त्यत्वावगमात् तन्निर्वर्तकमाधानं तदर्थमिति युक्तम। न त्वेवमर्जनमिति। तत्पुनरिदं मन्दमिवोत्तरम्। अनिर्वर्तकस्यापि तादर्थ्याविरोधात् TantrRa. 26. 14; देयमनिषिद्धं दानक्रियायां निर्वर्तकं द्रव्यम्। अदेयं चानिर्वर्तकम् SmṛtiCan. iii. 7.2.

**अनिर्वर्तकत्व** (anirvartaka-tva) *n* the state of being one who does not accomplish (something) कन्यानाम् … स्वविवाहेऽस्त्यधिकारः।… पितृमातृभ्रात्रादीनां त्वनन्यप्रेरितानां विधित एवाधिकारनिर्वर्तकत्वं अनिर्वर्तकत्वे दोषश्रवणात् CaturCin. iii(1). 112.17.

**अनिर्वर्तिता** (a-nirvartitā) *adj.* (*f.*) not accomplished न च क्रियैव आत्मानं कारयति अनिर्वर्तितायाः स्वरूपाभावात् UpadeSā. 97. 5.

**अनिर्वर्तितोद्वाहविधि** (anirvartitodvāhavidhi) *adj.* (*f.*) marriage-ceremony of which has not been performed अनिर्वर्तितोद्वाहविधिषु तरुणातिमुक्तकलतासु बाष्पजललवानुत्सृजन्ती … स्वनिवासमागमम् TilaMañ. 301. 17.

**अनिर्वर्त्य** (a-nirvartya) *ger.* not having brought about, not having performed तदनिर्वर्त्य योऽश्नाति सवनं सुरपूजितम्। मन्त्रास्तं नाधितिष्ठन्ति MṛgendraT. iv. 1. 80; निर्वर्तनं दीक्षितोऽनिर्वर्त्य स्थातुमिच्छति यः स नरकं याति PārāSū. 12.18.

**अनिर्वहण** (a-nirvahaṇa) *n.* **I** non-completion (of the sense because of non-fulfilment of expectancy) न च (जुहूः) क्रियासंबन्धे प्रमाणमस्ति। तस्मादनिर्वहणादेतद्वचनव्यक्तिपरित्यागेनेतराश्रयणम् TantrVā. 37. 4 (*on* i. 2. 19); **II** non-subsistence अस्या अपि बुध्यते स्वयं वास्मन्मुखेन वा सखीवचनद्वारेण वा विवक्षितं वक्तुम् … आत्मनो निर्वहणानिर्वहणे च चिन्तयितुम् TilaMañ. 32.19.

**अनिर्वहत्** (a-nirvahat) *adj.* not bearing or cherishing (any hope) जीवितप्रत्याशामनिर्वहतो जनांस्तुरंगमांश्च परित्यजन् … अनीयत तं पन्थानम् Kād. 303.19.

**अनिर्वहमाण** (a-nirvahamāṇa) *adj.* not supporting मदनराज्ञी … भगिनीपतेः … भगिन्यां विपन्नायां तस्य बहुतरमनिर्वहमाणमायद्वारं निशम्य तन्निर्वहणाय … शिशुना वीरधवलेन समं तत्र गता PrabaCin. 98.3.

**अनिर्वाच्य** (a-nirvācya) *adj.* [*f.* -ā] **AI** difficult to be described, which is beyond description अद्वैतमनिर्वाच्यं ब्रह्म TripāMaNāU. 359.14(1); 374. 9(7); NirāU. 255. 9; SiddhāSāU. 384. 2(1); अनिर्वाच्यं पदं वक्तुं न शक्यं तैः सुरैरपि YogaU[1]. 7; भिन्नाभिन्नं ह्यनिर्वाच्यं बन्धसंसारकारकम्।… ब्रह्म AgniP. 376.17; अनिर्देश्योऽनिर्वाच्योऽग्राह्यः … सर्वेषां परमात्मन आनन्दः PārāSū. 24. 11; इयं काशीपुरी विप्र साक्षाद् रुद्रतनुः परा। अनिर्वाच्या SkandP. iv. 31. 134; अनिर्वाच्या हरेः शक्तिः BṛBrahmaS. iv 8. 83; सर्वथानिर्वाच्ये … भगवत्स्वरूपे का प्रक्रियाजालपरिनिष्ठता Bhāsk. i. 280.9 (*on* i. 5.17); अनिर्वाच्यमनिर्भिन्नमपरिच्छिन्नमव्ययम्। ब्रह्मेव सुजनप्रेम दुःखमूलनिकृन्तनम् IndSpr. 3473; **AII** indescribable, inexplicable, indeterminable (implying falsity of the world) अविद्या … सदसद्विलक्षणानिर्वाच्या TripāMaNāU. 364. 12(3); सदसद्भ्यामनिर्वाच्यां तामविद्यां प्रचक्षते VibhraVi. 29; ĀtmaBo. 14; IṣṭaSi. 47. 9; PratyabhiVi. ii. 202. 2 (*on* ii. 4. 20); NyāyMa. 115. 1; TarkSaṁ.(Ā.) 108. 25; NyāySu.(Ja.) 25B.11 (*on* i. 1. 1); विशेषमात्रहेतुत्वात् तस्य च तत्त्वान्यत्वाभ्यामनिर्वाच्यस्य कल्पनास्पदत्वात् BrahmSi. 54.20; सदसद्भ्यामनिर्वाच्यमज्ञानम् SarvaVeSāSaṁ. 302; IṣṭaSi. 62.3; SiddhāBi. 35.5; मायामनिर्वाच्यामृते यतः। नासत्सिद्धिः IṣṭaSi. 161. 5; BṛNāraP. 31.70; SiddhāLeSaṁ. 66. 6; SāṁkhyaPraBh. 17. 12 (*on* 1.26); अनिर्वाच्योऽप्यबोधस्स्रक्सर्पवद्दह्यते धिया। अनिर्वाच्येऽपि तद्दाहे नो(? न)ष्टोऽहिः स्यात्तथाग्रहः IṣṭaSi. 376. 12; समुद्राद्वायुनाभिहता ऊर्मयः … सर्वथा भेदाभेदाभ्यामनिर्वाच्याः, एवमयं ब्रह्मणो विश्वविवर्तः ManuBh. 11. 8 (*on* 1.7); सदसद्भ्यामनिर्वाच्यं प्रपञ्चं केचिदूचिरे SaṁviSi. 84.9; ŚāstrDī. 110. 20 (*on* i. 1.5); स्वरूपेण सदप्यारोपणीयतयानिर्वाच्यमित्यनृतम् Bhām. 10.3 (*on* i. 1. 1); 184.7 (*on* i. 2. 21); अनाद्यनिर्वाच्यमिदमज्ञानम् DevīBhāP. vii. 34. 29; सद् वा कार्यमसद् वा संभाव्यते। उभयात्मकम्

अनुभयात्मकमनिर्वाच्यम्, इति तु स्ववाचैव विरुध्यते PratyabhiVi. ii. 154. 11 (*on* ii. 4. 3); भेदोऽपि···अनिर्वाच्यः PramāMā. 6. 6; सदैव गुणवत्त्वेऽस्य भिन्नं स्यान्निर्गुणं सदा। न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात् AnuVyā. 5A.5 (*on* i. 1.1); KarmaNi. 2A.6; ViṣṇuTaNi. 7A.10; नानिर्वाच्यं हि तेनेष्टम् AnuVyā. 27A.6 (*on* 2.2); तत्कृतश्चाविद्यास्तमयोऽप्यनिर्वाच्य एव PrakaVi. 335.23; अविद्याद्वितयं सत्त्वासत्त्वाभ्यामनिर्वाच्यम् VedāntKa. 2. 22 (*on* i. 1. 1); पृथिव्यादि मनोऽन्तं द्रव्यम् अविचारितरमणीयम् आपातिकम् अनिर्वाच्यम् TarkSaṁ.(Ā.) 55. 15: स्वप्ने कथं गजावस्थानं मिथ्यात्वेन विना घटत इति चेन्न, स्वप्नार्थानां जाग्रद्दृश्यपदार्थैः प्रतिघातानर्हत्वात्। अनिर्वाच्यस्य गजादेरपि तथात्वं वक्तव्यम् Śruta-Pra. ii(2). 429.22 (*on* iii. 2.6); युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः PañcDa. 6.128; एकं निर्गुणं ब्रह्म अनिर्वाच्यं च जगत् TattvPrakā. 197A.7 (*on* iii. 4.49); शुक्तिरजतादिकमनिर्वाच्यम् NyāySu.(Ja.) 55B.5 (*on* i 1.1); 480A.8 (*on* iii. 2.1); Vādā. 4.3; नापि सदनिर्वाच्याभ्यामन्यत्वमसत्त्वम् Nyāyāmṛ 30A.5; न च तत्रापि बुद्धिपूर्वकमारोपितस्यानिर्वाच्यस्यैव शृङ्गस्य निषेधः Nyāyāmṛ. 35A. 6; अनिर्वाच्येऽप्रसिद्ध्यादिः प्रतीते प्रतिषेध्यता Nyāyāmṛ. 41B.5; निवृत्तिरनिर्वाच्यैव Nyāyāmṛ. 631A.10; सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं यद्यपि तुच्छानिर्वाच्ययोः साधारणम् AdvaiSi. 139. 1; SiddhāBi. 38.4; न चानिर्वाच्ये सत इव सत्यपि तुच्छस्य संसर्गतया आरोपसंभवात् सत्त्वेन प्रतीत्यर्हं तुच्छमपीति वाच्यम् GuruCandr. i. 7. 11; नासदुत्पद्यते ··· नापि सत् ··· किंतु अनिर्वाच्यमेव GoviBh. 101. 6 (*on* ii. 1. 18); तदज्ञानं भावरूपमभावरूपं वा ···। अथ भावरूपम्, किं-रूपोऽसौ भाव इति वाच्यम्। अनिर्वाच्य एव स इति चेत् Bhāsk. i. 13. 7 (*on* i. 1.1); **B** difficult to be expressed (in words) भक्तदेवतयोरनिर्वाच्याः संबन्धाः PārāSū. 58.25; वार्धकेन लभेत् पीडामनिर्वाच्यामितस्ततः PadmP. i. 61. 88; अनिर्वाच्यामवस्थां तत्समीक्ष्येयुरथापरे GaṇeP. i. 4.19; उपाधिरहितं प्रेम कृतम् ···। अनिर्वाच्यम् GaṇeP. ii. 124. 24; (स्मृतिः) सा रसनीया सती न लौकिकी न मिथ्या नानिर्वाच्या AbhinBhā. i. 280. 6 (*on* 6.31); Kāvyānu.(He) 75.15; अनिर्वाच्यं नवं मुग्धविदग्धमधुरं रतम् KathāSaSāg. viii. 7. 158; कुमारं वीक्ष्य सस्पृहा। सा तदापदनिर्वाच्यामानन्दस्पन्दनीं दशाम् PāṇḍaC. 16. 207; श्रीमत्कालकसूरीणामनिर्वाच्यं प्रभाद्भुतम् PrabhāC. 170.7; 9.3; (ध्वनेः) कर्तुं लक्षणमक्षमैरयमनिर्वाच्यः परैरुच्यते Ekāva. 1. 13 (22. 8); प्रसूतिसमये ··· यः क्लेशः सोऽप्यनिर्वाच्यः PraboSu. 11; रूपं किमप्यनिर्वाच्यं तनोर्माधुर्यमुच्यते UjjvaNīMa. 275.12; कोऽयमनिर्वाच्यो वचनरसनाया मधुरिमा RasGaṅ. 58. 14; **C** unutterable, not fit to be mentioned अनिर्वाच्यं तदा चक्रुर्गणाः क्रोधसमन्विताः SkandP. i(1). 5. 4; सखीष्वनिर्वाच्यमधाष्टर्यदूषितं प्रियाङ्कसंश्लेषमवाप मानिनी Subhāṣi. 1878; **D** not to be questioned, not to be blamed सोऽग्निं विवेश भक्तानामनिर्वाच्यं हि चेष्टितम् KathāSaSāg. xii. 24.45; **E** difficult to be pointed out अत्यल्पामनिर्वाच्यां तामयनांशगतिं त्यक्त्वा केवलगत्युत्पन्नासु युक्ताश्चक्रकलातुल्यासवः सावनस्वाहरोत्रासवोऽत एव भगवता सूर्येणोक्ताः स्वसिद्धान्ते SiddhāTaVi. 16. 23.

**अनिर्वाच्यख्याति** (anirvācya-khyāti) *f.* cognition of what is indescribable (according to the Advaita Vedāntins who maintain that the things are neither existent nor non-existent and hence false) न सती नाप्यसती शुक्ते रूप्यात्मतेति अनिर्वाच्यख्यातिप्रसङ्गः IṣṭaSi. 295. 17; असत्त्वं यदि सत्त्वाभावतद्व्याप्यान्यतरत्तर्ह्यनिर्वाच्यख्यातौ न विपर्यये पर्यवसानम् Nyāyāmṛ. 418B. 1; 423B. 6; तस्मादनिर्वाच्यख्यातिरेवाप्र(? °व प्र)माणसंभवात् AdvaiSi. 345. 1.

**अनिर्वाच्यगुण** (anirvācya-guṇa) *adj.* whose qualities are inexpressible (in words) अयं तु मद्गृहे कोऽपि ह्यवतीर्णः परः पुमान्। अनिर्वाच्यगुणः GaṇeP ii 11. 1.

**अनिर्वाच्यगोचरता** (anirvācyagocara-tā) *f.* the state of having the indeterminable as the domain विभ्रान्तिताप्यसति विषयापहारेऽनिर्वाच्यगोचरतयैवोपपन्ना NyāyMa. 121. 8.

**अनिर्वाच्यतमस्** (anirvācya-tamas) *n.* indescribable darkness (i. e. ignorance) न जाग्रत्स्वप्नौ वो भातः, मानभ्रान्त्योरसंभवात्, न च सुषुप्तम्, अनिर्वाच्यतमोऽनिष्टेः IṣṭaSi. 354. 22.

**अनिर्वाच्यता** (anirvācya-tā) *f.* **1** indescribability or indeterminability or inexplicability (implying falsity) भ्रान्तिज्ञेये च बाह्यत्वं बाधकैर्न निरस्यते। न गम्यतेऽन्तर्वर्तित्वं नानिर्वाच्यतया मतिः VibhraVi. 154; सर्वथा वास्तवाकारेण निरूपणासहिष्णुता चानिर्वाच्यता PrakaVi. 9. 2; तन्मात्रं तद्विशेषो वा न निरू(प)णगोचरौ। तेन तेजोऽपि पूर्वाभ्यां सहानिर्वाच्यतां गतम् TarkSaṁ. (Ā.) 39. 19; अनिर्वाच्यतया वस्तु निरुच्येत न वा त्वया NyāyPari. 48.9; मायायाश्चानिर्वाच्यतया ··· न कूटस्थत्वहानिः NyāySu.(Ja.) 116B. 4 (*on* i. 1.5); न हि स्वनिर्मितवस्तुसादृश्यमाश्रित्य निर्मातरि दोषनिराकृतिर्युक्ता, परंतु अनिर्वाच्यतैव केवलमत्र युक्ता, ततोऽपि विचारे सापि न युक्ता अनिर्वाच्यताया अपि तत्रैवावस्थानात् Bhāsk. i. 229. 11 (*on* i. 5.7); i. 13. 7 (*on* i. 1.1); **II** inexpressibility (in words) यत्र फलमेव साधनं तत्फलस्यानिर्वाच्यता युक्तैव AṇuBh. 249. 21 (*on* iii. 3. 42); अत्र करिष्यमाणस्य मनःप्रसारस्य निषेधो वर्णनीयस्यानिर्वाच्यतां बोधयितुम् RasGaṅ. 565.5.

**अनिर्वाच्यताख्यापकत्व** (anirvācyatākhyāpaka-tva) *n.* the state of being the conveyor of indescribability अनुपपत्तिस्वीकारो न कुलधर्मः, किंतु परिहर्तुमशक्यानुपपत्तिरनिर्वाच्यताख्यापकत्वेन स्वीक्रियते GuruCandr. iii. 11. 14; LaCandr. 577. 39.

**अनिर्वाच्यतादात्म्य** (anirvācya-tādātmya) *n.* identity which is indescribable मायाब्रह्मणोः सर्वगतयोः संयोगादिसंबन्धासंभवान्न कार्यसिद्धिः स्यादित्यर्थः। अनिर्वाच्यतादात्म्यलक्षणसंबन्धसंभवान्न ब्रह्मवादिनः समानो दोषः PrakaVi. 556.21.

**अनिर्वाच्यतानिरास** (anirvācyatā-nirāsa) *m.* refutation of indescribability न सन्नाप्यसत् रूप्यादीत्युक्तेरपि त्वदिष्टतुच्छतानिरासार्थत्वात् नानिर्वाच्यतानिरासप्रसङ्गः IṣṭaSi. 164. 19.

**अनिर्वाच्यतापक्ष** (anirvācyatā-pakṣa) *m.* view of indescribability संस्कारनियामकतापि अनिर्वाच्यतापक्ष एव, न त्वसद्विषयतापक्षे AdvaiSi. 633.32.

**अनिर्वाच्यतापात** (anirvācyatāpāta) *m* undesired contingency of indescribability असत्प्रकारवैलक्षण्ये च सतोऽनिर्वाच्यतापातात् NyāyMa. 111. 9; असतोऽनिर्वाच्यतापातात् Vādā 3. 3.

**अनिर्वाच्यताप्रसङ्ग** (anirvācyatā-prasaṅga) *m.* undesired contingency of indescribability उभयप्रकारवैलक्षण्येऽप्यनिर्वाच्यलक्षणे नैकैकस्यानिर्वाच्यताप्रसङ्ग इत्यभिधीयेत NyāyMa. 111.13.

**अनिर्वाच्यताभ्युपगम** (anirvācyatābhyupagama) *m.* admission of indescribability सदाकारकलितस्यानिर्वाच्यताभ्युपगमे त्वनुभवविरोधं तन्निरूपणप्रस्ताव एव निराकरिष्यामः NyāyMa. 74. 4.

**अनिर्वाच्यतावगम** (anirvācyatāvagama) *m.* cognition of indescribability 'नासदासीन्नो सदासीत्तम आसीत्' इति जाग्रत्प्रागवस्थायां मायायाः सदसद्वैलक्षण्येनानिर्वाच्यतावगमात् PrakaVi. 128.22.

**अनिर्वाच्यतासिद्धि** (anirvācyatā-siddhi) *f.* establishment of indescribability सत एव ख्यातिबाधौ संस्त इति न ताभ्यां रूप्यस्यानिर्वाच्यतासिद्धिः IṣṭaSi. 150. 17.

**अनिर्वाच्यतास्वीकार** (anirvācyatā-svīkāra) *m.* acceptance of indescribability न चानिर्वाच्यतास्वीकारेण निर्वाहः NyāySu.(Ja.) 443B. 7 (*on* ii. 3.14)

**अनिर्वाच्यत्व** (anirvācya-tva) *n.* **I** indescribability or indeterminability or inexplicability (implying falsity) न च तयोः (जीवेश्वरयोः) वस्त्वन्तरस्य सद्भावाद् द्वैतवादप्रसक्तिः। मायाया अनिर्वाच्यत्वेन वस्तुत्वायोगात् ŚvetāUBh. 104. 22 (*on* 1.9); जीवस्यानिर्वाच्यत्वे परमेश्वरोऽप्यनिर्वाच्यः स्यात् Bhām. 137. 15 (*on* i. 1. 17), 284. 21 (*on* i. 4. 3); अविद्यायाश्च संसारलक्षणकार्यकर्तृत्वमवश्यमङ्गीकर्तव्यं तस्मिन् सत्यपि यद्यनिर्वाच्यत्वमुच्यते तदा कस्यचिदपि वाच्यत्वं न स्यात् RājMār. 85. 2; भेदाभेदयोर्विरोधं दुःसमर्थमभिमन्यमानैरेकैरविद्यात्वेन अनिर्वाच्यत्वम् PratyabhiVi. ii. 131. 1 (*on* ii. 3.14); ŚāstrDī. 110. 27 (*on* i. 1. 5); न चास्ति प्रकारान्तरेणोपाख्येयत्वसंभवः, तत्संभवे वा दुर्निवारमनिर्वाच्यत्वं तस्य तन्मात्रलक्षणत्वात् NyāyMa. 88. 8; न चैवमद्वैतव्याघातः संवित्सुखात्मन एकरसत्वादनिर्वाच्यत्वाच्च विभागस्य PrakaVi. 4. 14; अनिर्वचनीयख्यातौ च — आरोपे तदेवानिर्वाच्यत्वमिह प्रपञ्चे प्रतिपाद्यम् इति असंभवि लक्षणं भवेत् TarkSaṁ.(Ā.) 6. 3; 135. 29; नन्वर्थतुच्छत्वं तदभिमतं, वयं तु तन्निरासेनानिर्वाच्यत्वं ब्रूमः Śruta-Pra. ii. 306. 6 (*on* ii. 2.30); मिथ्यारूपत्वं तैः कीदृग्विवक्षितं किमत्यन्तासत्त्वम् उतान्यस्यान्याकारतया प्रतीतत्वम् आहोस्विदनिर्वाच्यत्वम् SyādvāMañ. 13(40); NyāySiA. 227. 25; विरुध्यते ह्यात्मानात्माध्यासो युक्तिभिः इत्येवानिर्वाच्यत्वमङ्गीक्रियते VivaPraSaṁ. 15. 6; सदसद्विलक्षणत्वलक्षणं साध्यमनिर्वाच्यत्वं समुच्चिनोति NyāySu.(Ja.) 40A.1 (*on* i. 1. 1); Vādā. 3. 4; अनिर्वाच्यत्वे च तत्कारणाविद्यावस्थानादनिर्मोक्षप्रसङ्गः SarvaDaKau. 141. 24; अध्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेऽप्यधिष्ठानमसदेव Nyāyāmṛ. 29B. 8; नापि सदनिर्वाच्याभ्यामन्यत्वमसत्त्वमनिर्वाच्यत्वस्यासत्त्वनिरूप्यत्वेन Nyāyāmṛ. 30A.6; 563A. 8; 631A.5; सदसदनधिकरणत्वरूपमनिर्वाच्यत्वम् AdvaiSi. 48. 2; BhāṭṭCin. i. 37. 24 (*on* i. 1.4); **II** inexpressibility (in words) पापानां पदान्तरेणानिर्वाच्यत्वं व्यङ्ग्यम् RasGaṅ. 176. 10.

**अनिर्वाच्यत्वकथन** (anirvācyatva-kathana) *n.* **A** statement of indescribability यत्तु निर्वचनाभावेन विषयस्यानिर्वाच्यत्वकथनं न युक्तम्, न हि स एव तत्, किंतु सदसद्विलक्षणत्वादिरूपम् GuruCandr. ii. 112. 5; **B** statement of being beyond description 'यतो वाचो निवर्तन्ते' इति श्रुत्या ब्रह्मण एवानिर्वाच्यत्वकथनात् Bhāsk. i. 13.10 (*on* i. 1. 1)

**अनिर्वाच्यत्वनियमभङ्ग** (anirvācyatvaniyama-bhaṅga) *m.* viola-

tion of the rule of indescribability अथ वा सदसदुभयेष्वेकान्ते भग्नेऽनिर्वाच्यत्वनियमभङ्गः स्यादवक्तव्य इति कुतः VedāntKa. 299.17 (*on* ii. 3.33)

**अनिर्वाच्यत्वनिषेध** (anirvācyatva–niṣedha) *m.* denial of indescribability सत्त्वादिराहित्यस्यातात्त्विकत्वेऽपि सत्त्वादेर्दुर्निरूपत्वमात्रेणानिर्वाच्यत्वे पञ्चमप्रकाराविद्यानिवृत्तौ 'नानिर्वाच्यश्च तत्क्षय' इत्यनिर्वाच्यत्वनिषेधायोगात् Nyāyāmṛ. 409A.7; AdvaiSi. 621.26.

**अनिर्वाच्यत्वपक्ष** (anirvācyatva–pakṣa) *m.* **A** view of indescribability नाज्ञानद्वानिरात्मस्वरूपम् अनिर्वाच्यत्वपक्षोऽप्ययुक्तः Nyāyāmṛ. 633A.10; **B** view of being beyond description अनेन — अनिर्वाच्यत्वपक्षेण, परमार्थः — सत्यं स्वरूपम् Bhāsk. ii. 155.11 (*on* ii. 4.3)

**अनिर्वाच्यत्वप्रयोजक** (anirvācyatva–prayojaka) *adj.* conducive to indescribability अभेदस्य स्वरूपत्वेन तत्र तद्विकल्पानवकाशात्, अनिर्वाच्याद्यस्य विकल्पस्यानिर्वाच्यत्वप्रयोजकस्यास्माकमनुकूलत्वात् AdvaiSi. 806.1.

**अनिर्वाच्यत्वप्रसङ्ग** (anirvācyatva–prasaṅga) *m.* undesired contingency of indescribability आनीदवातंस्वधया तदेकमिति वाक्यशेषात् ब्रह्मणोऽपि अनिर्वाच्यत्वप्रसङ्गः AdvaiSi. 644.3.

**अनिर्वाच्यत्वभङ्ग** (anirvācyatva–bhaṅga) *m.* destruction of indescribability अध्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेऽप्यधिष्ठानमसदेव वक्ष्यते चैतदनिर्वाच्यत्वभङ्गे Nyāyāmṛ. 29B.8; 33A.6; 44B.7.

**अनिर्वाच्यत्वलक्षण** (anirvācyatva–lakṣaṇa) *n.* characteristic of indescribability तर्कैः ··· दुरन्तध्वान्तभङ्गाय अनिर्वाच्यत्वलक्षणम् GuruCandr. iii. 119.23.

**अनिर्वाच्यत्वलक्षणत्व** (anirvācyatvalakṣaṇa–tva) *n.* the state of being the characteristic of indescribability तुच्छब्रह्मणोर्निर्धर्मकत्वेन धर्मवत्त्वादेरेवानिर्वाच्यत्वलक्षणत्वापातात् AdvaiSi. 623.25.

**अनिर्वाच्यत्वसमय** (anirvācyatva–samaya) *m.* theory of indescribability आपः ··· अनिर्वाच्यत्वसमयं समाश्रित्य समासते TarkSaṁ.(Ā.) 37.2.

**अनिर्वाच्यत्वसमर्थनार्थम्** (anirvācyatvasamarthanārtham) *adv.* for the sake of the justification of indescribability पुनरप्युपादानात् कार्यस्य भेदो निरूपयितुं न शक्यत इत्याह अनिर्वाच्यत्वसमर्थनार्थमेव इतश्च कारणादित्यादिना PrakaVi. 431.19.

**अनिर्वाच्यत्वसाधक** (anirvācyatva–sādhaka) *adj.* which proves or establishes indescribability एवं सामान्यतो अनिर्वाच्यत्वसाधकमप्येतदर्थपरतया नेयम् AdvaiSi. 628.1; असच्चेन्न प्रतीयेतेत्यस्यानिर्वाच्यत्वसाधकार्थापत्त्यन्तराभिप्रायकत्वस्य वक्ष्यमाणत्वात् GuruCandr. iii. 129.17; LaCandr. 631.28.

**अनिर्वाच्यत्वसाधन** (anirvācyatva–sādhana) *n.* proving of indescribability (of *prapañca* by inference) प्रपञ्चो मिथ्या ··· इति चेन्न, निर्विषयासदन्यथाख्यातिसाधने विरोधापसिद्धान्तादिदोषात् । अनिर्वाच्यत्वसाधने अप्रसिद्धविशेषणत्वस्ववचनविरोधादिदोषात् NyāySiA. 227.19.

**अनिर्वाच्यत्वसिद्धि** (anirvācyatva–siddhi) *f.* establishment of indescribability न चैवं मिथ्यैव रूप्यमभादिति प्रत्यक्षेणानिर्वाच्यत्वसिद्धिः मिथ्याशब्दस्यासत्पर्यायत्वात् Nyāyāmṛ. 416A.5.

**अनिर्वाच्यत्वस्वाभाव्य** (anirvācyatva–svābhāvya) *n.* nature of indescribability न हि प्रत्याख्यानासामर्थ्यं भवतामेवेति ब्रूमः, किंतु सर्वेषामतो विषयस्यानिर्वाच्यत्वस्वाभाव्यम् GuruCandr. ii. 112.3.

**अनिर्वाच्यत्वादिक** (anirvācyatvādi–ka) *adj.* indescribability etc. मिथ्यात्वमनिर्वाच्यत्वादिकमिति मते दृश्यत्वादेर्निवृत्तौ व्यभिचाराच्च Nyāyāmṛ. 633B.10.

**अनिर्वाच्यत्वादिरूप** (anirvācyatvādi–rūpa) *adj.* of the nature of indescribability etc. नह्यनिर्वाच्यत्वादिरूपं साधारणमध्यस्तत्वं दृश्यविशेषस्य दृग्विशेषप्रकाश्यत्वे तन्त्रम् Nyāyāmṛ. 204B.8.

**अनिर्वाच्यत्वानङ्गीकार** (anirvācyatvānaṅgīkāra) *m.* non-acceptance of indescribability कल्पितोऽपि ज्ञानेऽर्थाकारः तस्माद्भिन्नोऽभिन्नो वेति वक्तव्यम् । अनिर्वाच्यत्वानङ्गीकाराद् भिन्नत्वे ज्ञानान्तरवदकल्पितः स्यात् VedāntKa. 281.3 (*on* ii. 2.18)

**अनिर्वाच्यत्वानुमेयता** (anirvācyatvānumeyatā) *f.* inferrability of indescribability तर्कैः ···। दुरन्तध्वान्तनाशायानिर्वाच्यत्वानुमेयता GuruCandr. iii. 126.19.

**अनिर्वाच्यत्वाभाव** (anirvācyatvābhāva) *m.* absence of indescribability तेन वैशेषिकादिनानिर्वाच्यं वस्तु नेष्टमतोऽसत्त्वानिर्वाच्यत्वाभावादौपाधिकस्य स्वाभाविकस्य च सत्यत्वात्को विशेषः स्यात NyāySu.(Ja.) 377A.11 (*on* ii. 2.6); किं च न तावदनिर्वाच्यत्वाभाव आपादकः Nyāyāmṛ. 202A.7; सत्त्वराहित्येऽप्यनिर्वाच्यत्वाभावोपपत्त्यार्थान्तरत्वात् Nyāyāmṛ. 416A.2; नाप्यविद्याद्यन्यतरत्वापत्तिः । अनिर्वाच्यत्वाभावात् Nyāyāmṛ. 631B.6; दृश्यत्वाभावस्यापादकमत्र सत्त्वमनिर्वाच्यत्वाभावो वा AdvaiSi. 471.7.

**अनिर्वाच्यत्वाभिप्राय** (anirvācyatvābhiprāya) *m.* intention to convey indescribability मिथ्येत्यस्यासत्त्वाभिप्रायेऽपसिद्धान्तात् । अनिर्वाच्यत्वाभिप्रायेऽप्रसिद्धविशेषणत्वात् TattvPrakā 30B.7 (*on* i. 2.6)

**अनिर्वाच्यत्वावगति** (anirvācyatvāvagati) *f.* knowledge of indescribability अविद्यमानस्यार्थस्य सत्त्वासत्त्वप्रतिषेधावगतौ परिशेषादनिर्वाच्यत्वावगतेः NyāySu.(Ja.) 439A.9 (*on* ii. 3.14)

**अनिर्वाच्यत्वावश्यंभाव** (anirvācyatvāvaśyambhāva) *m.* necessity of indescribability अज्ञाननाशस्यापि घटनाशवदनिर्वाच्यत्वावश्यंभावाच्च Nyāyāmṛ. 634A.4.

**अनिर्वाच्यत्वासंभव** (anirvācyatvāsambhava) *m.* impossibility of indescribability अविद्यानाशस्य मुक्तिस्वरूपत्वमतेऽनिर्वाच्यत्वासंभवात् GuruCandr. iii. 110.20; LaCandr. 500.39.

**अनिर्वाच्यत्वैकदेशसत्त्वव्यतिरेक** (anirvācyatvaikadeśa–sattvavyatireka) *m.* absence of existence which forms part (of definition) of indescribability न चैतावन्तं कालमसदेव रजतमभादित्यनुभवविरोधः, अनिर्वाच्यत्वैकदेशसत्त्वव्यतिरेकविषयत्वेनैवोपपत्तेः AdvaiSi. 627.1.

**अनिर्वाच्यत्वोपपत्ति** (anirvācyatvopapatti) *f.* tenability of indescribability तस्मादनिर्वाच्यत्वं न सत्त्वविरोधि । सत्त्वेऽप्यनुद्भूतत्वादेवानिर्वाच्यत्वोपपत्तेः AdvaiSi. 473.3.

**अनिर्वाच्यधी** (anirvācya–dhī) *f.* notion of what is indescribable तत्राभावात्मना ख्यातिर्मृषेत्युक्त्योदितं भवेत् । भावात्मधीर्मृषा सर्वा मृषानिर्वाच्यधीरिति IṣṭaSi 297.7.

**अनिर्वाच्यनामरूप** (anirvācya–nāmarūpa) *n.* indescribable name and form अथान्तरकारणानपेक्षत्वं हेतुः क्रियते, तदसिद्धमनिर्वाच्यनामरूपबीजसहायत्वात् Bhām 368.9 (*on* ii. 1.24)

**अनिर्वाच्यनिरास** (anirvācya–nirāsa) *m.* refutation of what is indescribable अनिर्वाच्यनिरासेन निश्चयमपि भवतो जनयिष्यामः NyāySu.(Ja.) 24B.3 (*on* i. 1.1)

**अनिर्वाच्यपक्षास्पर्शिन्** (anirvācyapakṣāsparśin) *adj.* not touching (i. e. not referring to) the view of what is indescribable न ह्यनिर्वाच्यपक्षास्पर्शी कश्चिदुपाधिः सूत्रितः, व्याख्यातश्च ŚrutaPra. ii. 306.10 (*on* ii. 2.30)

**अनिर्वाच्यपदार्थ** (anirvācya–padārtha) *m.* **A** meaning of the word 'indescribable' अनिर्वाच्यत्वे — तादृशसत्त्वाद्याश्रयप्रपञ्चस्यानिर्वाच्यपदार्थत्वे GuruCandr. iii. 110.14; **B** indescribable object अनिर्वाच्यपदार्थस्य लोकेऽसंभवात् प्रपञ्चस्यापि निर्वचनीयत्वेनानिर्वचनीयत्वाभावाच्च BhāṭṭCin. i. 37.24 (*on* i. 1.4)

**अनिर्वाच्यप्रपञ्च** (anirvācya–prapañca) *m.* indescribable world तस्मान्निष्प्रपञ्चं परमार्थसद्ब्रह्मानिर्वाच्यप्रपञ्चात्मनारोप्यते Bhām. 454.12 (*on* ii. 2.31); अनिर्वाच्यप्रपञ्चाकारालम्बना भेदश्रुतयः PrakaVi. 770.25; 783.21.

**अनिर्वाच्यभूत** (anirvācya–bhūta) *adj.* which is indescribable जगदादावनिर्वाच्यभूताभासासद्वैलक्षण्यमेव न त्वनाभासासद्वैलक्षण्यमित्यापाताच्च Nyāyāmṛ. 35A.8.

**अनिर्वाच्यभेदाभिप्राय** (anirvācyabhedābhiprāya) *adj.* intending the indescribable manifoldness कार्यकारणयोस्तु तादात्म्येऽप्यनिर्वाच्यस्य कार्यस्य भेदं विवक्षित्वा संबन्धिनोरित्युक्तम् । नापि संबन्धिविषयत्वे संबन्धशब्दप्रत्यययोरित्येतदप्यनिर्वाच्यभेदाभिप्रायम् Bhām. 411.7 (*on* ii. 2.17)

**अनिर्वाच्यभेदाभ्युपगम** (anirvācyabhedābhyupagama) *m.* acceptance of manifoldness of what is indescribable अनिर्वाच्यभेदाभ्युपगमात्र पर्यायता VedāntKa. 374.13 (*on* iii. 2.11)

**अनिर्वाच्यमायाख्य** (anirvācyamāyākhya) *adj.* called indescribable nescience अनिर्वाच्यमायाख्याज्ञानशबलं किंचिद्ब्रह्म ··· वैदिकैरशेषपदैर्वाच्यम् NyāySu.(Ja.) 117A.5 (*on* i. 1.5)

**अनिर्वाच्यरजतता** (anirvācyarajata–tā) *f.* the state of being the indescribable (i. e. false) silver तदपि इदंकारास्पदस्यानिर्वाच्यरजततावभासगोचरभावाभ्युपगमात् सिद्धसाधनम् NyāyMa. 98.8.

**अनिर्वाच्यरजतादि** (anirvācya–rajatādi) *adj.* indescribable (i. e. false) silver etc. भवन्मते 'इदं रजत'मित्यादिभ्रमस्थले अनिर्वाच्यरजतादेः शुक्त्याद्यवच्छिन्नचैतन्ये उत्पत्तिः स्वीक्रियते LaCandr. 308.8; 309.12.

**अनिर्वाच्यरज्जुभुजङ्गादि** (anirvācya–rajjubhujaṅgādi) *adj.* indescribable (i. e. false) rope, serpent etc. अपरे पुनर्बाधगोचरभावमनिर्वाच्यलक्षणमाचक्षते ···नाप्यव्याप्तिरनिर्वाच्यरज्जुभुजङ्गादेर्बाध्यत्वनियमात् NyāyMa. 125.2.

**अनिर्वाच्यरस** (anirvācya–rasa) *adj.* containing inexpressible

(poetic) sentiments श्रीदुर्लभसरोराजस्तथा रुद्रमहालये। अनिर्वाच्यरसैः काव्यैः प्रशस्तीरकरोदसौ PrabhāC. 190. 6.

**अनिर्वाच्यरूपा** (anirvācya-rūpā) *adj.* (*f.*) whose beauty cannot be expressed (in words) तां स पश्यन्ननिर्वाच्यरूपां हर्षाश्रुणा नृपः। अन्यावलोकनमलं चक्षुषोर्धौतवानिव KathāSaSāg. xii. 6. 149.

**अनिर्वाच्यरूषिता** (anirvācya-rūṣitā) *adj.* (*f.*) overlaid with what is indescribable परीक्षका अनिर्वाच्यरूषितामवगतिमनिर्वाच्यां निश्चिन्वन्ति Bhām. 355. 21 (*on* ii. 1. 14)

**अनिर्वाच्यलक्षण** (anirvācya-lakṣaṇa) *n.* definition of what is indescribable उभयप्रकारवैलक्षण्येऽप्यनिर्वाच्यलक्षणे नैकैकस्यानिर्वाच्यताप्रसङ्गः NyāyMa. 111.12; 119. 3; अन्यथासत्त्वानधिकरणत्वस्यापि तत्राभावेन तद्व्यावृत्त्यर्थमनिर्वाच्यलक्षणे सत्त्वानधिकरणरूपविशेषणायोगात् Nyāyāmṛ. 14B.8; 146A.7.

**अनिर्वाच्यलक्षणत्व** (anirvācyalakṣaṇa-tva) *n.* the state of being characterised as indescribable तुच्छब्रह्मणोर्निर्धर्मकत्वेन धर्मवत्त्वादेरेवानिर्वाच्यलक्षणत्वापातात् Nyāyāmṛ. 414A.6.

**अनिर्वाच्यवस्त्वङ्गीकार** (anirvācyavastv-aṅgīkāra) *m* acceptance of the indescribable object अनिर्वाच्यवस्त्वङ्गीकारे वैशेषिकादिरपि मायावादी भवेत् NyāySu.(Ja.) 377A.13 (*on* ii. 2. 6)

**अनिर्वाच्यवाद** (anirvācya-vāda) *m.* theory of what is indescribable एतेनानिर्वाच्यवादे विरोधोऽसिद्ध इति निरस्तम् Nyāyāmṛ. 408A.7; तादृशकिंचिद्रूपविशिष्टस्य स्वरूपस्य स्वभिन्नत्वे स्वभेदो विरुद्ध इति मिथ्यात्वं वाच्यमित्यनिर्वाच्यवादापत्तिः GuruCandr. i 232.1.

**अनिर्वाच्यविलक्षण** (anirvācya-vilakṣaṇa) *adj* [*f.* -ā] distinct from what is indescribable यदा तु बाध्यतैवानिर्वाच्यलक्षणमिति स्थितिस्तदानिर्वाच्यविलक्षणैव NyāyMa. 359.8; एवं चासद्विलक्षणं चेन्न बाधः स्यात् सद्विलक्षणं चेन्न भायादिति भवत्वनिर्वाच्यविलक्षणम् Nyāyāmṛ. 421A. 11.

**अनिर्वाच्यविशेषत्व** (anirvācyaviśeṣa-tva) *n.* the state of having an inexpressible special feature (योऽयं भगवता सम्यग्ग्रथितो वेदसंमितः) अविदितान्तस्सारतया चास्माकं प्रत्यक्षोऽप्यप्रत्यक्षकल्प इति यच्छब्देनानिर्वाच्यविशेषत्वमुक्तम् AbhinBhā. i. 6.22 (*on* 1. 4)

**अनिर्वाच्यविश्व** (anirvācya-viśva) *n.* world which is indescribable कल्पितस्याधिष्ठानत्वायोगादात्मतत्त्वमेव तत्तदवच्छिन्नमनिर्वाच्यविश्वोदयव्ययहेतुरित्यर्थः VedāntKa. 80. 25 (*on* i. 1. 4)

**अनिर्वाच्यविषय** (anirvācya-viṣaya) *adj.* having reference to what is indescribable नास्ति व्यवहारोऽनिर्वाच्यविषय एव IṣṭaSi. 162.3; भावे तौ न युक्ताविति चेत्, अनिर्वाच्यविषयौ तर्हि ताविच्छ IṣṭaSi. 164.3.

**अनिर्वाच्यविषयत्व** (anirvācyaviṣaya-tva) *n.* the state of having reference to what is indescribable न चानिर्वाच्यविषयत्वेन यथा तव मते भ्रमत्वं, तथा सदसदात्मकत्वे यत् सत्त्वं तद्विषयत्वेन भ्रमत्वमस्तु AdvaiSi. 634. 22.

**अनिर्वाच्यसत्त्व** (anirvācya-sattva) *n.* indescribable existence परमते अनिर्वाच्यसत्त्वस्य सत्त्वेनाभाने प्रातिभासिकत्वासिद्धिवत् मन्मते असतः सत्त्वस्य सत्त्वेनाप्रतीतावसत्त्वासिद्धेरभावात् Nyāyāmṛ. 420B. 10.

**अनिर्वाच्यसाधक** (anirvācya-sādhaka) *adj.* establishing what is indescribable षष्ठे त्वबाध्यत्वरूपसत्त्वेनोपपत्त्यार्थान्तरं सामान्यतोऽनिर्वाच्यसाधकानुमानेष्वप्युक्तरीत्या व्याघातार्थान्तरादिकम् Nyāyāmṛ. 416A.11.

**अनिर्वाच्यसामान्य** (anirvācya-sāmānya) *n* the indescribable in general अविद्यानाशस्य मुक्तिस्वरूपत्वमतेऽनिर्वाच्यत्वासंभवात्। अनिर्वाच्यसामान्यस्य तत्त्वधीनिवर्त्यत्वावश्यकत्वात् GuruCandr. iii. 110.20.

**अनिर्वाच्यसिद्धि** (anirvācya-siddhi) *f.* establishment of what is indescribable अभावात्मना ख्यातिर्मृषेत्यनया गिरा सैव भावात्मना धीर्मृषा, अत एवानिर्वचनीयधीरमृषेत्युक्तं भवेत्। तदाप्यनिर्वाच्यसिद्धिः IṣṭaSi. 297. 10; व्यावहारिकभेदश्चानिर्वाच्यसिद्धौ वक्तव्यः KarmaNi. 1B.10; प्रागनिर्वाच्यसिद्धेर्व्याप्तिद्वयनिरासायोगात् NyāySu.(Ja.) 35B. 10 (*on* i. 1.1)

**अनिर्वाच्यसुशोभाढ्य** (anirvācyasuśobhāḍhya) *adj.* rich in inexpressible glory शिवलोकं जगाम सः।··· अनिर्वाच्यसुशोभाढ्यम् BrahmVaiP. iii. 29.2.

**अनिर्वाच्यस्वरूप** (anirvācya-svarūpa) *adj.* having a form beyond description (विनायको देवः) अनिर्वाच्यस्वरूपः ··· आसीत् GaṇeP. i. 37. 13; i. 52. 33.

**अनिर्वाच्याज्ञान** (anirvācyājñāna) *n.* indescribable nescience रूपस्यासत्त्वे तस्यानिर्वाच्याज्ञानसंबन्धाभावे वा प्रमाणाभावात् IṣṭaSi. 120. 10; 150.3; अनिर्वाच्याज्ञानजो हि संसारः IṣṭaSi. 375.17; ममाज्ञानावृतापि (शुक्तिः) तस्यानावृतेति किमनुपपन्नमनिर्वाच्याज्ञानजरूप्याभ्युपगमे PrakaVi. 11. 16.

**अनिर्वाच्यादिविशेष** (anirvācyādi-viśeṣa) *m.* distinctions such as what is indescribable etc. प्रश्नस्थलक्ष्याभिधायिपदानुवादेनानिर्वाच्यादिविशेषं हित्वा भ्रममात्रलक्षणमाह PrakaVi. 7.12.

**अनिर्वाच्यानाद्यविद्या** (anirvācyānādyavidyā) *f.* indescribable beginningless nescience अनिर्वाच्यानाद्यविद्यावशादविद्याकल्पितैरेव देहेन्द्रियादिभिरसंसृष्टमपि संसृष्टमिव विविक्तमप्यविविक्तमिव दृष्टयादिरूपमस्य प्रथते Bhām. 221.17 (*on* i. 3.19)

**अनिर्वाच्यान्तर** (anirvācyāntara) *n.* another indescribable तवाप्यनिर्वाच्यान्तरमेव तत्र कथं नोत्पद्येत AdvaiSi. 633. 31.

**अनिर्वाच्यान्य** (anirvācyānya) *adj.* different from what is indescribable त्वन्मते चानिर्वाच्यान्यस्यैव शृङ्गस्य निषेद्धव्यत्वात् Nyāyāmṛ. 35A.8.

**अनिर्वाच्याभिन्नपर** (anirvācyābhinna-para) *adj.* referring to what is not different from the indescribable 'विष्णोरिच्छावशत्वात्तु मायामात्र'-मिति स्मृतावपि मायापदमनिर्वाच्योपादानकत्वेनानिर्वाच्याभिन्नपरम् GuruCandr. ii. 295.4

**अनिर्वाच्याभ्युपगम** (anirvācyābhyupagama) *m.* admittance of what is indescribable यथावभासमर्थसद्भावमनिर्वाच्याभ्युपगमेनासत्ख्यात्यनङ्गीकारेणैव भ्रान्तिबाधोपपत्तिः NyāyMa. 110.7.

**अनिर्वाच्यार्थ** (anirvācyārtha) *adj.* i having the sense 'indescribable', cf. **अनिर्वाच्यार्थत्व**; ii referring to indescribable object अत्र न प्रलये सदाद्यभावमात्रं वाक्यात् प्रतीयते न पुनरनिर्वाच्यं वस्तु। ततो नायमागमोऽनिर्वाच्यार्थ इति NyāySu.(Ja.) 439A.7 (*on* ii. 3.14)

**अनिर्वाच्यार्थत्व** (anirvācyārtha-tva) *n.* the state of having the sense 'indescribable' मिथ्याशब्दस्य असदर्थत्वम्, अनिर्वाच्यार्थत्वं, बाध्यार्थत्वं वा TarkSaṁ.(Ā.) 81.17.

**अनिर्वाच्यार्थभेद** (anirvācyārtha-bheda) *m.* difference among the objects which are indescribable न चास्य प्रकाशस्याजानतः स्वलक्षणभेदोऽनुभूयते। न चानिर्वाच्यार्थभेदः प्रकाशं निर्वाच्यं भेत्तुमर्हति Bhām. 21.3 (*on* i. 1.0)

**अनिर्वाच्यार्थावभास** (anirvācyārthāvabhāsa) *m.* cognition of indescribable (i. e. false) objects एतादृश्या अविद्याया एव निखिलप्रमाणविकलतया गगनकमलकल्पत्वात्, तस्मादनिर्वाच्यार्थावभासो विभ्रमः NyāyMa. 115.4.

**अनिर्वाच्याविद्या** (anirvācyāvidyā) *f.* indescribable nescience अनिर्वाच्याविद्यैव भ्रमास्तदर्थाश्चेति एतावानेवास्य श्लोकस्यार्थः IṣṭaSi. 125.22; तस्मादनिर्वाच्याविद्याया दुर्निरूपत्वादहंकारादिकं न तत्कार्यम् Nyāyāmṛ. 370B.6.

**अनिर्वाच्याविद्याकार्यत्व** (anirvācyāvidyākārya-tva) *n.* the state of being the effect of the indescribable nescience शुक्तिरूप्यादावनिर्वाच्याविद्याकार्यत्वस्य प्रतिवाद्यसंमतेश्च Nyāyāmṛ. 17A. 5.

**अनिर्वाच्याविद्याद्वितयसचिव** (anirvācyāvidyādvitaya-saciva) *adj.* having the twofold indescribable nescience as ministers अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोऽबवनयः।··· नमामस्तद् ब्रह्म Bhām. 1. 5 (*on* i. 1.0)

**अनिर्वाच्याविद्याप्रभाव** (anirvācyāvidyā-prabhāva) *m.* influence of the indescribable nescience देहादिव्यतिरिक्तस्यैव सतो जीवस्य स्वभावभूतोऽपि व्यतिरेको नावभासते। विपरीतस्तु मिथ्याभिमानो दृश्यतेऽनिर्वाच्याविद्याप्रभावात् PrakaVi. 93.23.

**अनिर्वाच्याविद्यारूपत्व** (anirvācyāvidyārūpa-tva) *n.* the state of being the form of indescribable nescience अत एवावरणस्य अनिर्वाच्याविद्यारूपत्वमङ्गीकर्तव्यम् VivaPraSaṁ. 24. 23.

**अनिर्वाच्याविद्याविलास** (anirvācyāvidyā-vilāsa) *m.* manifestation of the indescribable nescience स्वाप्नानां रथादीनाम् ··· अनिर्वाच्याविद्याविलास एवायम् NvāySu.(Ja.) 463A. 9 (*on* iii. 2.1)

**अनिर्वाच्यासिद्धि** (anirvācyāsiddhi) *f.* non-establishment of what is indescribable केयमविद्या नाम। अनाद्यनिर्वाच्या वा।··· नाद्यः, अनिर्वाच्यासिद्ध्याप्रसिद्धविशेषणत्वात् Vādā. 18.1.

**अनिर्वाच्याहिरूषित** (anirvācyāhi-rūṣita) *adj.* [*f.* -ā] overlaid or covered with the indescribable (i. e. false) snake तस्मादनिर्वाच्याहिरूषितं ज्ञानमप्यनिर्वाच्यम् Bhām. 355. 1 (*on* ii. 1. 14); यद्यपि परीक्षका अनिर्वाच्यरूषिता-(v. l. च्याहिरूषिता)मवगतिमनिर्वाच्यां निश्चिन्वन्ति तथापि लौकिकाभिप्रायेणैतदुक्तम् Bhām. 355. 21 (*on* ii. 1. 14)

**अनिर्वाच्याहिरूषितत्व** (anirvācyāhirūṣita-tva) *n.* the state of being overlaid or covered with the indescribable (i. e. false) snake यद्यपि चाहिज्ञानमपि स्वरूपेण सत्तथापि तज्ज्ञानत्वेन भयहेतुरपि त्वनिर्वाच्याहिरूषितत्वेन Bhām. 354.18 (*on* ii. 1.14)

**अनिर्वाच्योत्कर्ष** (anirvācyotkarṣa) *adj.* having inexpressible excellence तच्च श्रीसहोदराणामत एवानिर्वाच्योत्कर्षाणामित्यर्थः Loc. 111. 21 (*on* 2. 28)

**अनिर्वाच्योपादानकत्व** ( anirvācyopādānaka-tva ) *n.* the state of having the indescribable as the material cause 'विष्णोरिच्छावशत्वात्तु मायामात्र'मिति स्मृतावपि मायापदमनिर्वाच्योपादानकत्वेनानिर्वाच्याभिन्नपरम् Guru-Candr. ii. 295.4.

**अनिर्वाण** ( a-nirvāṇa ) *adj.* [*f.* -ā] **i** not liberated निर्ग्रन्थिः शान्तसंदेहो जीवन्मुक्तः ··· अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः AkṣU. 40; **ii** not extinguished, AkṣU. 40; कोणेषु पालिका न्यस्त्वा अनिर्वाणैश्च दीपकैः। दर्शयेच्चक्रमुद्राम् PāraS. 15.255; 16.191; अनिर्वाणैः प्रदीपैस्तु रात्रिशेषं समापयेत् PāraS. 17.379; दीपिका खल्वनिर्वाणा निर्वाणपथदर्शिनी YogŚā. 4.40; **iii** unbathed अनुद्यपीडं भगवन्नृणमन्त्यमवेहि मे। अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः Raghu-Va. 1.71; कनककमलिनीमृणालिका इवानिर्वाणसुरवारणकवलनार्थमिन्द्राधोरणैरुपसंगृहीताः ··· कन्यका झगित्यद्राक्षम् TilaMañ. 159.4; *n.* **i** lack of happiness वित्ताग्निरनिर्वाणं धनागमो मृत्युसंपदोऽस्वत्वम्।··· क्रमात्त्रिंशदिति यावत् BṛSaṁ. 50.19; YogYā. 12.19; **ii** non-extinction विलक्षणकार्ये संतत्युच्छेद इति, तस्य रूपज्ञानप्रबन्धे विषयान्तरविज्ञानान्निर्वाणप्रसङ्गः, कथंचित्तुल्यतायामनिर्वाणमित्यलमतिप्रसङ्गेन BrahmSi. 15.16; ततो जगत्यनिर्वाणहेतुर्हिमगिरिप्रिया।··· प्रासूयत गुहारणिम् PadmP. v. 40.94; *m.* phlegm श्लेष्मा ···। सोमयोनिरनिर्वाणो निद्राजननकः कफः DhanvNi. 263.2.

**अनिर्वाणत्व** ( anirvāṇa-tva ) *n.* the state of not having extinction प्रकाशः स्वात्माभिन्नोऽग्निरेव। तस्य महत्त्वं तु सर्वव्यापकत्वात्। निरिन्धनदीप्तत्वादनिर्वाणत्वाच्च SetuBa. 315.15.

**अनिर्वाणरणारम्भ** ( anirvāṇa-raṇārambha ) *adj.* whose effort for fighting has not disappeared तदवस्थेऽप्यनिर्वाणरणारम्भे च कौरवे। भीमे च जयिनि प्रीताः पुष्पाणि ववृषुः सुराः PāṇḍaC. 13.935.

**अनिर्वाणाग्निदीपन** ( anirvāṇāgni-dīpana ) *n.* illumination of the fire which is not extinguished स्वाङ्गवस्त्रगृहादीनामनिर्वाणाग्निदीपनम्।··· इत्यादिदर्शनं स्वप्ने सिद्धिश्रीसुखसूचकम् IśānŚiPa. ii. 18.57

**अनिर्वाणोत्थ** ( a-nirvāṇottha ) *adj* who has not taken bath or not taken a seat अनिर्वाणोत्थेन प्रबलतरतैलाक्ततनवो मया सद्यो भृष्टाः कतिपयकवय्यः कवलिताः SubhāRaK. 35.1.

**अनिर्वान्तदोष** ( anirvānta-doṣa ) *adj.* the defect of which is not completely removed न चानिर्वान्तदोषेऽक्षिण धावनं संप्रयोजयेत् SuśruS. vi. 18.66 ( comm. न वान्तोऽश्रुदूषिकादिरूपो दोषो येन तस्मिन् )

**अनिर्वाप** ( anirvāpa ) *m.* an epithet of Bṛhaspati वाचस्पतिरनिर्वापस्सुराचार्यो बृहस्पतिः Vaija. 19.33.

**अनिर्वापणीय** ( a-nirvāpaṇīya ) *adj.* which cannot be extinguished बिभ्राणः शङ्खमन्तश्चरमचरमनिर्वापणीयं च तेजः। पायाद्वः शार्ङ्गधन्वा ĀścaCū. 1.1; जलधिजलैस्तैरनिर्वापणीयः सीताश्रीरामयोः ··· निरगमदनलः सोऽपि विश्लेषजन्मा MahāN. 9.124.

**अनिर्वापाङ्ग** ( a-nirvāpāṅga ) *n.* not an accessory to the pouring out सर्वाणि तु परिसमाप्यानुसमेयान्नैकमुष्टिनिर्वापः पदार्थः। चतुःसंख्यत्वान्निर्वापस्य।··· मुष्टिसंबन्धे सति वाक्यभेदः प्रसज्येत। अनिर्वापाङ्गं च स्यात् ŚābaBh. 1312.10 (*on* v. 2.5); यदि च संख्या क्रियां प्रति न विधीयेत ततोऽक्रियार्थत्वात् अनिर्वापाङ्गं स्यात् TantrRa. 305.9.

**अनिर्वापित** ( a-nirvāpita ) *adj.* not extinguished झगित्यम्भोभिरुत्तिष्ठन्नेवानिर्वापितोऽनलः। केन नाम निरुध्येत निःशेषं सदनं दहन् PāṇḍaC. (Bhavnagar Ed.) 11.169.

**अनिर्वापितशल्य** ( anirvāpita-śalya ) *adj.* from which the extraneous substance is not removed अनिर्वापितशल्ये च तृष्णार्ते मूर्च्छितेऽपि च।··· मातङ्गे ··· अग्निकर्म न कर्तव्यम् Hastyāyur. 456.23 (3.10)

**अनिर्वाप्य** ( a-nirvāpya ) *ger.* not having offered to अनिर्वाप्य पितॄन्देवान्मृतो जायेत वायसः BrahmP. 217.74.

**अनिर्वाप्यश्मशानाग्नि** ( anirvāpya-śmaśānāgni ) *m.* funeral fire (i. e. killing fire) which cannot be extinguished अनिर्वाप्यश्मशानाग्निना ·– कामेन दुरात्मनायास्यमानं देवीशरीरमुपेक्षितम् Kād. 258.5.

**अनिर्वासित** ( a-nirvāsita ) *adj.* not expelled, not banished अनिर्वासितोऽपि विभीषणः प्रहरेदेव नश्छिद्रेषु AdbhuDa. 6.3(6)

**अनिर्वाह** ( á-nirvāha ) *m.* **Ai** not going away यद्वंहन्तीरभ्यवेयुः पशून्निर्वहेयुरथ यत्स्थावरा अभ्यवर्यन्ति पशूनामनिर्वाहाय MaiS. iv. 8.5 (iv. 112.6); **Aii** prohibition of marrying अभ्रातृका इव योषास्तिष्ठन्ति संतानकर्मणे पिण्डदानाय हतवर्त्मानः। इत्यभ्रातृकाया अनी(?नि)र्वाह औपमिकः Nir. 3.4 (61.2); **Aiii** no 'exporting', giving (of a girl) in marriage outside the clan या प्रथमे स्कन्धे दारिका जायते सा प्रथम एव स्कन्धे दीयते न मध्यमे नाधरिमे।·– कन्याया अनिर्वाहः नान्यत्र दीयत इति GiMs. iii(2). 7.4 [DBHS.]; **B** non-accomplishment, non-completion, non-carrying out अनिर्वाहाच्च कार्यस्य यदर्थं शपथं कृतम्। प्रायश्चित्तं जपेत् JayāS. 25.120; यथासंभवमेतानि ( द्विशालानि ) कथयामः समासतः। निर्वाहतश्च मूषाणामनिर्वाहाच्च नामतः SamarāSū. 22.5; प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य ( लिङ्गवचनयोर्भेदरूपस्य ) भग्नप्रक्रमरूपत्वम् KāvyPra. 774.7; अत्र ह्युपमानानामिन्दीवरादीनां निन्दाद्वारेण नयनादीनामुपमेयानां यत् तेभ्योऽतिशयलक्षणं वस्तु वक्तु(?क्तुं) प्रक्रान्तं तस्यानिर्वाहात् VyaktiVi. 65.18; चिन्ता ·– अकार्यकरणाज्ञानगुर्वाज्ञाद्व्यतिक्रमात्। अनिर्वाहात्प्रतिज्ञायास्त्यागे भूयोऽनुतापतः BhāvPra.(Śā.) 19.4(1); हेतुत्वमात्रेण हेतूत्प्रेक्षाया इव तदुद्देशं विना कार्यत्वमात्रेण फलोत्प्रेक्षाया अनिर्वाहात् CitraMī. 95.17; तयोः ( वादिनोः ) जयपराजयव्यवस्थापनरूपस्य मध्यस्थकर्तव्यस्यानिर्वाहात् LaCandr. 20.14; हविस्समभिव्याहृतदेवतात्वस्य यागं विना अनिर्वाहात् भावनापेक्षितो धात्वर्थः याग एवेत्यवधार्यते MīmāKau i. 232.6 (*on* i. 4.9); यागं विना हविः समभिव्याहृतदेवतात्वस्यानिर्वाहात् ··· यागस्य शाब्दत्वसिद्धये भूधातौ लक्षणाश्रीयते BhāṭṭCin. ii. 61.12 (*on* i. 4.6); लक्षणया सर्वत्रानिर्वाहस्य प्रागुक्तत्वाच्च VaiyāBhū. 129.9 (*on* 26); नात्र स्पर्शमात्रमर्थस्तावतानिर्वाहादत आह। आचामेदिति BālamBha. i. 73.29 (*on* 1.18); **C** non-justification 'य एवं विद्वान्पौर्णमासीं यजते' इत्यत्रापि तद्भेदस्स्यात्। न। अभ्यासकल्प्यस्य भेदस्यानिर्वाहात् PrakaPañ. 258.19; अनन्तरोक्तस्य तदीयग्रन्थस्य अनिर्वाहस्स्यात् SmṛtiCan. v. 234.18; तथाप्येकत्वस्थूलत्वादीनामाश्रयान्तरमन्तरेणानिर्वाहात् NyāyKu. 145.4; पूर्वोदाहरणेषूपमानोपमेययोरेकस्यैव साधारणधर्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः SāhiDa. 428.7; विवादविषयां भूमिं येषामेव ग्रामवासिनामुपकारातिशयो भवति यद्व्यतिरेकेण च महाननिर्वाहस्तेषामेव दद्यात् ManvaMu. 337.10 (*on* 8.265); **D** impossibility to maintain सामान्योपयोगस्य सिद्धस्य विशेषोपयोगमन्तरेणानिर्वाहात्तत्संभवप्रदर्शनोत्तरकालं कृतम् NyāySu.(So.) 52.1 (*on* i. 2.8); किं परमार्थेन स्वरूपं नाम बाधितम्, ऐक्यं वा, तत्संबन्धो वा व्यवहारो वा तन्निमित्तं वा। नाद्यः, निराश्रयस्यैक्यस्यानिर्वाहात् Vādā. 132.7; त्वाष्ट्रवधादिलिङ्गानामनिर्वाहे कृतनिर्वाहोऽपि न प्रतिष्ठितः स्यात् ŚivārkaMaDī. i. 290.19 (*on* i. 1.32); **E** non-continuity, break यस्तु रीतेरनिर्वाहादौदार्यस्य विपर्ययः SaraKaṇṭhā. 35.6; 131.9; पूर्वरीतेरनिर्वाहे खण्डरीतिः SaraKaṇṭhā. 157.2; Ekāva. 5.13(5) (150.8); अनिर्वाहाच्च स प्रायो यमकेभ्यो विभिद्यते SaraKaṇṭhā. 249.6; 251.4; 297.9; रीतिभ्रष्टमनिर्वाहो यत्र रीतेर्भवेद्यथा। जिनो जयति स श्रीमानिन्द्राद्यमरवन्दितः Vāgbhaṭā. 2.24.

**अनिर्वाहक** ( a-nirvāhaka ) *adj.* which does not justify, not justifying अनर्थकमसंबद्धमल्पार्थं शब्दडम्बरम्। अनिर्वाहकमाद्योक्तेर्वाक्यं तत् पौरुषं स्मृतम् PāraS. 10.370.

**अनिर्वाहकता** ( anirvāhaka-tā ) *f.* the state of being that which does not accomplish सत्यपि सुते कदाचित्तदकरणात्, तस्मिन्नसत्यपि कदाचित्करणादनिर्वाहकतया तस्य व्यापारत्वायोगात् NyāyKuA. ii(2). 96.1.

**अनिर्वाहण** ( a-nirvāhaṇa ) *n.* non-accomplishment कश्चित्तु संस्क्रियमाणप्रयोजनमलभमानस्तदीप्सिततमत्वानिर्वाहणात्संस्कारविधित्वमेव जहाति NyāyMañ. ii. 93.14; तस्य उपन्यस्तस्य साक्ष्यादिप्रमाणस्य सिद्धौ निर्वाहणे सिद्धिं विजयमन्यथानिर्वाहणे विपरीतमविजयमाप्नोति VīraMi. 413.26 (*on* 2.8)

**अनिर्वाहन** ( a-nirvāhana ) *n.* [P. viii. 4.30] non-carrying out व्रतस्य काम्यस्य ताम्बूलभक्षणवर्जनादेर्लोपनमनिर्वाहनम् ( उपपातकम् ) VīraMi. 931.1 (*on* 3.238)

**अनिर्वाहयत्** ( a-nirvāhayat ) *adj.* not carrying out किं जल्पितेन दशमुख जल्पितसदृशमनिर्वाहयतो भरम् SaraKaṇṭhā. 496.4.

**अनिर्वाहा** ( a-nirvāhā ) *adj.* (*f* ) not subject to exporting (i. e. not given in marriage outside the clan) गृहपते गणेन पूर्वमेव क्रियाकारः कृतः कन्या अनिर्वाहा स्त्रीरत्नं गणभोग्यमिति GiMs. iii(2). 17.7.

**अनिर्वाहाशङ्का** ( anirvāhāśaṅkā ) *f.* doubt of the impossibility of maintaining अथशब्देन साधनचतुष्टयस्य विचारहेतुत्वे परिगृहीते तस्यानिर्वाहाशङ्कायां तन्निराकरणेन हेतुत्वनिर्वाहाय अतःशब्दोपादानात् VivaPraSaṁ. 219.15.

**अनिर्वाहितदेय** ( anirvāhita-deya ) *adj.* who has not carried out the payment of the dues अगमत्पुनः। अनिर्वाहितदेयेन तेन ( मल्लार्जुनेन ) द्वैधं स डामरः RājTa.(Ka.) 8.2009.

**अनिर्वाहितप्रतीकार** ( anirvāhita-pratīkāra ) *adj.* prevention of which is not carried out उत्कम्पिनीत्यादिना तदीयभयानुभावोत्प्रेक्षणम्। मया ( भयं ) अनिर्वाहितप्रतीकारमिति शोकावेगस्य विभावतेति Loc. 131.29 (*on* 3.3); Kāvyānu.(He.) 64.14.

**अनिर्वाहितव्यवहार** ( anirvāhita-vyavahāra ) *adj.* in whose case the legal dispute is not settled अप्राप्तव्यवहारं व्यवहारार्थमानीतमनिर्वाहितव्यवहारं च। तं न बध्नीयात् DaṇḍaVi. 335.13.

**अनिर्वाह्य** ( a-nirvāhya ) *ger.* **A** not having removed यथास्थूल-

मनिर्वाह्य दोषाञ्छारीरमानसान्। रसायनगुणैर्जन्तुर्युज्यते न कदाचन CaraS. vi. 1(4).36 (1941 Ed.); **B** not having accomplished प्राणात्ययेऽपि प्रतिपन्नमर्थं तिष्ठन्त्यनिर्वाह्य न धीरसत्त्वाः KathāSaSāg. xii. 9. 42.

**अनिर्वाह्य** (a-nirvāhya) *adj.* not accomplishable क्रीडाद्रिभिरनिर्वाह्यं चिन्तामणिमयैरपि ··· श्रिया निर्माय ··· पुत्रजन्ममहोत्सवम् ··· चतुर्वर्णधनं नाम पृथ्वीराज इति व्यधात् PṛthvīVi. 8. 27.

**अनिर्विकल्पकसंवेदन** (a-nirvikalpakasaṁvedana) *n.* other than the non-qualificative cognition अनिर्विकल्पकसंवेदनसंवेद्यत्वेऽपि विकल्पक ल एव स्फुटमेषां रूपमिति पूर्वोक्तनीत्या विशेषणविशिष्टघटमात्रावभासादौ अविकल्पेऽपि सामान्यसंबन्धाद्याभासः Bhāsk. ii. 45. 19 (*on* ii. 2. 3)

**अनिर्विण्ण** (a-nirviṇṇa) *adj.* [*f.* -ā] [AltGr. I. 2. 190; I. 1. 136; Vār. 1 *on* P. viii. 4. 29] not depressed, not dejected, not disgusted, joyful, untired सप्तम्यामथ वा षष्ठ्यां भक्त्या पूजां करोति यः। अनिर्विण्णोऽनहंकारी त लक्ष्मीर्भजते नरम् MahāBhā. iii. App I 1(59); अनिर्वेदः श्रियो मूलं दुःखनाशे सुखस्य च। महान् भवत्यनिर्विण्णः सुखं चात्यन्तमश्नुते MahāBhā. v. 39. 44; v. 62.8; राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुन्धराम् MahāBhā. ix.52.7; राक्षसाभ्यामहं द्वाभ्यामनिर्विण्णस्तथाकृतः। सहितो मृगरूपाभ्यां प्रविष्टो दण्डकावनम् Rāmā. iii. 37.2; अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः। चचार पृथिवीं सर्वामनिर्विण्णस्तथा कृतः Rāmā. vii. 34. 1; उपविष्टासक्तस्मादनिर्विण्णा त्रपान्विता। वृद्धस्त्री द्रव्यसंपन्ना प्रजायेत प्रजार्थिनी KāśyaS. 86A.12; पराभवेष्वनिर्विण्णं श्रीमद्राजार्थतत्परम्। इत्यादिलक्षणोपेतं कुर्वीत ध्वजिनीपतिम् NītiSā. 19.42; एषः ··· द्यूतं च रमते बाढमनिर्विण्णो दिवानिशम् BṛKathāK. 40. 3; अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयन् शनैः। अनिर्विण्णो यथाकालं जितश्वासो जितासनः BhāgP. xi. 13.13; शतक्रतुरनिर्विण्णः पृष्ट्वा पृष्ट्वा जगाम ह VāmaP. 41.17; इति तस्योक्तवतोऽसाद्वेतालो भूपतेर्ययौ प्राग्वत्। सोऽपि तथैव च राजा तमन्वयासीदनिर्विण्णः KathāSaSāg. xii. 15. 52; खानं खानमनिर्विन्नः(ण्णः) पातालविवरोपमम्। अकारयद् बकः कूपं न तु पङ्कोऽपि निर्ययौ PariPar. 2. 376; 3.115; अत्र चायमुपनयो यथा हि ललिताङ्ककः। कामभोगेष्वनिर्विण्णस्तथा जीवः शरीरिणाम् PariPar. 3. 266; अनिर्विण्णो मातृगुप्तः षड्ऋतूनत्यवाहयत् RājTa.(Ka.) 3. 159; ते मेघवदनाः सुराः ··· सप्तरात्रं प्रववृषुरनिर्विण्णाः समीरवत् TriṣaŚaPuC. ii. 4.222; सर्वेषां चरणक्षालनं तिलकरचनां च श्रीवस्तुपालः स्वहस्तेन करोति। एवं लग्ना द्विप्रहरी। मन्त्री तु तथैवानिर्विण्णः PrabaK. 118. 19; [not downcast, MW.]

**अनिर्विण्ण** (a-nirviṇṇa) *m.* **i** an epithet of Viṣṇu विष्णोर्नामसहस्रम् ··· शृणु ··· अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः MahāBhā. xiii. 135. 60 (Śaṅ. आप्तकामत्वात् निर्वेदोऽस्य न विद्यत इति अनिर्विण्णः); xiii. 135. 108; **ii** name of one of the door-keeper attendant deities उग्रं वीरेश्वरम् ··· अनिर्विण्णम् ··· एतद् द्विरष्टशोभासु गणमेकैकशो न्यसेत् PāraS. 11. 224; **iii** an epithet of Śiva भवः शिवो हरी रुद्रः ··· अनिर्विण्णो गुणग्राही ··· एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् LiṅgaP. i. 98. 149; SaurP. 41. 130.

**अनिर्विण्णचित्त** (anirviṇṇa-citta) *adj.* whose mind is not dejected मुहुर्विघ्नजालैः सुरा हन्यमानाः सुधामप्यवापुर्ह्यनिर्विण्णचित्ताः ŚaṅkaDigVi.(Mā.) 10.32.

**अनिर्विण्णचेतस्** (anirviṇṇa-cetas) *n.* undepressed mind तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्। स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा MahāBhā. vi. 28.23 (= BhagGī. 6. 23); अनिर्विण्णचेतसा न निर्विण्णं अनिर्विण्णं किं तत् चेतः तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः GītāBh.(Śaṅ.) 198.5 (*on* 6.23); अनिर्विण्णचेतसा हृष्टचेतसा GītāBh.(Rā.) 340. 6 (*on* 6. 23); *adj.* whose mind is not dejected अनिर्विण्णचेताः समास्थाय यत्नं सुदुष्प्रापमप्यर्थमाप्नोत्यवश्यम् ŚaṅkaDigVi.(Mā.) 10. 32.

**अनिर्विण्णता** (anirviṇṇa-tā) *f.* the state of not being dejected or depressed, the state of being joyful भ्रमरः ··· तेषामणुं समादाय श्रेष्ठश्रेष्ठतमं रसम्। नियोजयति शाखाग्रे तरोरस्य सदैव हि। अनिर्विण्णतया हृष्टस्तदा सम्यङ् निरीक्षितः SkandP. vi. 185. 45; केनाप्याराधितो यक्षो भक्तितो धनवाञ्छया। अनिर्विण्णतया तस्मै सुरस्तुष्टो ददौ वरम् PārśvC. 6.630.

**अनिर्विण्णदर्शन** (anirviṇṇa-darśana) *adj.* whose look or appearance is not dejected त्वद्विधा हि न शोचन्ति सततं सत्यदर्शिनः। सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः Rāmā. iii. 62.14.

**अनिर्विण्णम्** (anirviṇṇam) *adv.* undejectedly सत्पथपरिमापिणां नृपेणानिर्विण्णं परिमापिना हि भाव्यम् DvyāśraKā. 4.27.

**अनिर्विद्** (a-nirvid) *adj.* untiring, unfatigued अनिर्विदा या विदधे विधात्रा पृथ्वी पृथिव्याः प्रतियातनेव ŚiśuVa. 3.34; अध्यगीषत ते शास्त्रं शब्दपारायणादिकम्। ततः प्रारेभिरेऽध्येतुं धनुर्वेदमनिर्विदः PāṇḍaC. 3. 220; [free from causes of depression, undesponding, unwearied, MW.]

**अनिर्विद** (a-nirvida) *adj.* untiring, unfatigued पठतु यत्नपरः पुरुषायुषं स खलु वैद्यकमाद्यमनिर्विदः AṣṭāHṛ. vi. 40. 84.

**अनिर्विधित्स** (a-nirvidhitsa) *adj.* not having any intention to perform or accomplish (any action) नैव त्यागी न संतुष्टो नाशोको न निरामयः। न निर्विवित्सो (v. l. नानिर्विधित्सो *nt.*) नावृत्तो नापवृत्तोऽस्ति कश्चन MahāBhā. xii. 261. 42.

**अनिर्विष्ट** (a-nirviṣṭa) *adj.* **A** unatoned अस्ति नूनं कर्म कृतं पुरस्तादनिर्विष्टं पापकं धार्तराष्ट्रैः MahāBhā. v. 47. 6 (*but* BhārBhāDī. and JñānDī. अनुपभुक्तम्; Lakṣābha. अभुक्तफलम्); **B** not repaid पुत्रफलं दानं तज्जन्मान्तरेऽनिर्विष्टं — अदत्तं भवति, निर्विष्टस्य दत्तार्थत्वात् SthānṬ. 314A. 10.

**अनिर्विष्टभर्तृपिण्ड** (anirviṣṭa-bhartṛpiṇḍa) *adj.* unfaithful (*lit.* who has not repaid for his master's food) तेन हि अनर्हप्रतिक्रियमनिर्विष्टभर्तृपिण्डमनपकृतराजसत्कारं यदि खलु मां द्रष्टव्यं मन्यते स्वामी PratiYau. 1. 13(22)

**अनिर्विष्टभुज्** (anirviṣṭa-bhuj) *adj.* enjoying what is not enjoyed (by the master) भृत्या अनिर्विष्टभुजो भविष्यन्ति युगक्षये HariVaṁ. 116.9.

**अनिर्वीर्य** (a-nirvīrya) *adj.* not powerless, not unvirile श्रृतं वा एतऽसोमं जुहोत्यश्रृतानितराऽस्तस्मात् स्त्री निर्वीर्यानिर्वीर्यः पुमान् KāṭhS. 28.8 (ii. 163. 1); KapiKaS. 44. 8 (264. 5)

**अनिर्वृत** (a-nirvṛta) *adj.* [*f.* -ā] **Ai** restless, discomposed, uneasy or ill at ease, anxious or worried जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा। अनिर्वृतेन मनसा ससर्प इव वेश्मनि MahāBhā. v. 70. 60; SūktiRa. 136.5; 156.26; Subhāṣi. 2695; क्षुत्पिपासाश्रमक्लान्तः ···। प्राप्नुयान्मनसावाप्यं फलं कथमनिर्वृतः BuddhaC. 12. 103; नारकांश्चैव संप्रेक्ष्य महद्दुःखमवाप्यते। एतां गतिमहं गन्तेत्यहर्निशमनिर्वृतः MārkP. 11. 27; 69.22; अनिर्वृतं तथा मन्दं परलोकपराङ्मुखम्। नरकाय न सद्गत्यै कुपुत्रालम्बि जन्म नः MārkP. 75. 11; संपत्तयः परायत्ताः सदा चित्तमनिर्वृतम्। स्वजीवितेऽप्यविश्वासस्तेषां ये राजसंश्रिताः Tantrākhyā. 27.25; PañcT. 1.87 (100. 1); Hitopa. 2. 139; Pañcā. 70. 8; त्वदीयविश्लेषमवाप्य बाला सा लक्ष्यते किंचिदनिर्वृतेव NavaSāC 9. 23; स्मररिपोरिव रोपशिखी पुरां दहतु ते जगतामपि मा त्रयम्। इति विधिस्त्वदिषून् कुसुमानि किं मधुभिरन्तरसिञ्चदनिर्वृतः NaiṣC. 4. 87; (वनगजः) निपाने गोचरस्थाने शय्यायां चाप्यनिर्वृतः। रूपादिभयशङ्की च नित्यमेवानवस्थितः Hastyāyur. 418.15 (3.8); ŚārṅgaPa. 1589; **Aii** not satisfied, distressed, discontented, unhappy योगप्रभावो न च लक्ष्यते ते। बिभर्षि चाकारमनिर्वृतानाम् RaghuVa. 16.7; अनिर्वृतं भूतिषु गूढवैरं सत्कारकालेऽपि कृताभ्यसूयम्। विभिन्नकर्माशयवाक् कुले नो मा ज्ञातिचेलं भुवि कस्यचिद् भूत् Bhaṭṭi. 12. 78; नखैः कुरबकच्छायां क्रमौ जित्वाप्यनिर्वृतौ। विजिग्याते गतेनास्या हंसीनां गतिविभ्रमम् MahāP. 12.21; सः···एकदा तु देवर्षिचरणानुशयनानुपतितगुणविसर्गसंसर्गेणानिर्वृतमिवात्मानं मन्यमान आत्मनिर्वेद इदमाह BhāgP. v. 1. 36; दर्शं दर्शमनिर्वृतां दशशतीमक्ष्णां किरन् पादयोरस्तावीत् कमलालयाम् ··· वासवः NīlaVi. 118.12; **B** unliberated, not released अहंकारविमूढात्मा कर्तास्मीत्यभिमन्यते। तेन संसारपदवीमवशोऽभ्येत्यनिर्वृतः BhāgP. iii. 27. 3; उद्भिजः(? ज्जः) स्वेदजश्चैव अण्डजो वै जरायुजः। एवं व्यवस्थितो देही कर्मणाज्ञो ह्यनिर्वृतः LiṅgaP. i. 86.19; [unaccomplished, unfulfilled, APTE.]

**अनिर्वृतम्** (anirvṛtam) *adv.* unendingly, uninterruptedly विष्णोरायतने सा तु सहस्रं परिदीपकान्। प्रज्वालयन्त्यनुदिनं दिवारात्रमनिर्वृतम् BhaviP. 796A. 31 (iv. 130.44)

**अनिर्वृतमनस्** (anirvṛta-manas) *adj.* whose mind is unhappy or dejected महानुत्सवोऽयम्। ··· न युज्यते मुहूर्तमप्यस्मिन्ननिर्वृतमनोभिः स्थातुम् TilaMañ. 300. 5.

**अनिर्वृतमानसम्** (a-nirvṛtamānasam) *adv.* with a dejected or unhappy mind सततमनिर्वृतमानसमायाससहस्रसंकटक्लिष्टम्। गतनिद्रमविश्वासं जीवति राजा जिगीषुरयम् Kāvyālaṅ.(Ru.) 7.75.

**अनिर्वृति** (a-nirvṛti) *f.* **1** restlessness, uneasiness, anxiety पुरुषस्य ··· दुःखानिलेनानिर्वृतेर्ज्वलतः ··· किं प्रायश्चित्तं का प्रतिपत्तिक्रिया HarṣaC. 299.14; विकुर्वन् क्रियया चाधीरनिर्वृत्ति(? ति)श्च चेतसाम्। गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय BhāgP. xi. 25.17; गृहमेधिनां तु हृदयान्यनिर्वृतिर्न जहाति भिक्षुमुखदर्शनं विना PṛthvīVi. 9. 15; (उपसर्गेभ्यः) एतेभ्यो मामकीना तन्न कार्या काप्यनिर्वृतिः PrabhāC. 14 29; 159.13; तृष्णालौल्यमनिर्वृतिः कुशयनं कुस्त्री कुभोज्यं रुजः सर्वं पापमहीरुहस्य महतो व्यक्तं फलं दृश्यते ŚārṅgaPa. 698; **2** absence of steadiness, flickering, HarṣaC. 299. 14; **3** unhappiness, discontent, dissatisfaction, distress, grief मुक्तेश्च कर्मकार्यत्वे विशेषो भवतोच्यताम्। स्वर्गादिभ्यो विनाशादौ मोक्षे तेऽनिर्वृतिर्यतः BṛĀraUBhVā. iii. 3. 88; इन्द्रस्यानिर्वृतेर्हेतुं श्रोतुमिच्छामि भो मुने। येनासन् सुखिनो देवाः BhāgP. vi. 13. 3; नानिर्वृतौ प्रवर्तेत स्फुटे ज्ञानक्रिये स्थिते। कर्मप्रभवनत्वात् तत्प्रभुत्वमवधार्यते ŚivDṛ. 5. 38; मम वा मृत्युरस्त्वेव तव मा भूदनिर्वृतिः KathāSaSāg. vii. 5.47; ix. 5.149; xii. 26. 6; जीर्णत्वादतिवृद्धानां क्लेशाय चिरजीवितम्। सर्वभावावियोगेन सदा येषामनिर्वृतिः

DaśāvaC. 5. 43; 4 absence of extinction अलका नाम बभूव नगरी पुरा। यस्यां सदैव सर्वार्थसमृद्धिसुखितो जनः। केवलं रत्नदीपानामासीच्छश्वदनिर्वृतिः KathāSaSāg. xii. 34.42; [poverty, destitution, APTE]

**अनिर्वृति** (anirvṛti) *adv.* uninterruptedly, unendingly, ceaselessly, constantly विरुद्धविषयक्षोभाद् यस्य कोपाग्निरौर्ववत्। अनिर्वृति प्रजज्वाल चतुरम्भोधिवारितः EI. iv. 248.16.

**अनिर्वृत्त** (a-nirvṛtta) *adj.* [*f.* -ā] 1 not completed अनिवृत्ते (v. l. अनिर्वृत्ते) तु निर्वासे यदि बीभत्सुरागतः। पुनर्द्वादश वर्षाणि वने वत्स्यन्ति पाण्डवाः MahāBhā. iv. 42. 5; iv 46. 16; हारीतः — '… शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेत्'। सकृदमतिपूर्वके निरनुबन्धके क्रियायामनिर्वृत्तायामेतत Aparā. 1120.20 (*on* 3. 268); 2 not procreated द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः। अनिर्वृत्तं नियोगार्थं पश्यन्तो धर्मतस्तयोः ManuSm. 9. 61 (NSP. 1946 Ed.); 3 latent (*lit.* not clearly manifest) पुष्पमध्ये फलमनिर्वृत्तं सुसूक्ष्ममस्ति KāśyaS. 79B.25; 4 not brought about, not accomplished, not achieved दधिफलसंबन्धे चानिर्वृत्ते होमसंबन्धः प्राकरणिको नास्ति TantrVā. 554. 4 (*on* ii. 2. 26); अनिर्वृत्तं हि चिकीर्षितं कर्म शक्यते त्यक्तुम् NaiṣkaSi. 46. 10; किमस्माभिरनिर्वृत्तम् BhāgP. x. 80. 44; अनिर्वृत्तश्च लादेशो विकरणोत्पत्तौ न निमित्तम् PadMañ. *on* KāśiVṛ. *on* P. i 3. 17.

**अनिर्वृत्तजन्मन्** (anirvṛtta-janman) *adj.* which has not originated वस्तुनः … नाप्यनिर्वृत्तजन्मनोऽस्थितस्वभावस्य विनाशः PañcPā. 78.1 (*on* i. 1. 2)

**अनिर्वृत्तप्रयोजन** (anirvtṛta-prayojana) *adj.* the purpose of which is not fulfilled न चानिर्वृत्तप्रयोजनं हविरन्यत्र प्रतिपाद्यम् ŚābaBh. 1430.7 (*on* vi. 4.2)

**अनिर्वृत्तमूल** (anirvṛttamūla) *n.* a kind of medicament (*mahābhaiṣajyajāti*) which is said to stimulate the growth of trees एवमेव बोधिचित्त(? त्ता)निर्वृत्तमूलमहाभैषज्यप्रभावेन सर्वशैक्षाशैक्षप्रत्येकबुद्धबोधिसत्त्वधर्मतरवो विवर्धन्ते GaṇḍVyū. 399. 1 [DBHS.]

**अनिर्वृत्तमूला** (anirvṛttamūlā) *f.* a kind of medicament (*mahābhaiṣajyajāti*) which is said to stimulate the growth of trees अस्त्यनिर्वृत्तमूला नाम महाभैषज्यजातिः, यस्याः प्रभावेन सर्वजम्बुद्वीपका वृक्षा सर्वा विवर्धन्ते GaṇḍVyū. 398.31 [DBHS.]

**अनिर्वृत्तयागावगम** (anirvṛttayāgāvagama) *m.* knowledge that the sacrifice is not yet fully accomplished तदुपलक्षितत्वादेव यागनिर्वृत्तेः प्राक् प्रक्षेपादनिर्वृत्तयागावगमान्नाशादिष्वन्यद्रव्यागमनम् TantrVā. 1029.9 (*on* iii. 4. 47(? 41))

**अनिर्वृत्तव्यवहार** (anirvṛtta-vyavahāra) *adj.* (person) in whose case the legal procedure is not yet completed यश्च बद्धं व्यवहारार्थमाहूतम् अनिर्वृत्तव्यवहारं चोत्सृजति, असौ उत्तमसाहसं दाप्यः Mitā. 295. 19 (*on* 2.243)

**अनिर्वृत्ताखिलधर्मज्ञान** (anirvṛttākhiladharmajñāna) *adj.* who has not completed the study of total moral duties अनेन चानिर्वृत्ताखिलधर्मज्ञानस्यापि गार्हस्थ्याधिकार इति ज्ञापितं भवति BālaKrī. i. 93. 11 (*on* 1.98)

**अनिर्वृत्तानुष्ठानता** (anirvṛttānuṣṭhāna-tā) *f.* the state of being one who has not accomplished the performance (of rites) 'रथकारोऽग्नीनादधीत' इति विधिरध्ययनसिद्धज्ञानत्रैवर्णिकैरनिर्वृत्तानुष्ठानतयानन्यथासिद्धत्वादधिकारं कल्पयतीति वैषम्यम् ŚrutaPra. ii. 77.13 (*on* i. 3. 33)

**अनिर्वृत्ति** (a-nirvṛtti) *adj* not having an end, imperishable अचिन्त्योऽमूर्तः … गुणभुग् योऽनिर्वृत्तियोगीश्वरः सर्वज्ञः MaitriU. 7.1; *f.* non-fulfilment, non-accomplishment, non-completion धर्ममात्रे तु कर्म (प्रधानम्) स्यादनिर्वृत्तेः प्रयाजवत् MīmāSū. ii. 1. 9; तत्र प्रधानकर्मत्वं स्यात्। कस्मात्। अनिर्वृत्तेरुपकारस्य ŚābaBh. 408. 6 (*on* ii. 1. 9); यावदिष्टकादिः(? भिः) श्येनव्यक्तेः कर्तुमशक्यत्वात स्नाय्वादिभिरप्यनिर्वृत्तेरिष्टकाबाधाच्छ्येनव्यक्तेः प्रयोजनकल्पनाच्चिनोतेरमुख्यार्थत्वात् TantrVā. 271.10 (*on* i. 3. 26); MīmāKau. iii(2). 73. 16 (*on* ii. 1. 9); (पारं नीत्वा) व्रतान्येवेत्यापत्कल्पः, वेदार्थत्वाद् ब्रह्मचर्यस्य, तस्य (वेदार्थस्य) चानिर्वृत्तेरित्यादि प्रपञ्चनीयम् BālaKrī. i. 60. 17 (*on* 1. 51); यमन्तरेण क्रियाया अनिवृ(? र्वृ)त्तिर्यस्य च कारकविशेषसंज्ञा न प्रवर्तेत स मुख्यः प्रयोजकः कर्ता ManuBh. ii. 119.5 (*on* 8. 104)

**अनिर्वृत्तिप्रसङ्ग** (anirvṛtti-prasaṅga) *m.* undesired contingency of non-accomplishment (of a sacrifice) (निषेधकोटौ) द्वितीयं तु न प्रविशति, क्रत्वङ्गतया विहितस्य नियतोपायस्य त्यागे विधिविरोधापत्तेः क्रतोरनिर्वृत्तिप्रसङ्गाच्च PūrvottaVāNaMā. 54. 9.

**अनिर्वृत्य** (a-nirvṛtya) *ger.* not having caused satisfaction प्राह सूक्तं पुरूरवाः। अहो जाये तिष्ठ …। मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै BhāgP. ix. 14. 35 (*but* Śrīdhara मत्कृतां निर्वृतिमप्राप्य)

**¹अनिर्वेद** (a-nirveda) *m.* A absence of dejection or despondency, perseverance, courage अनिर्वेदी(? दः) श्रियो मूलम् MāṇḍūŚi. 16. 11; अनिर्वेदः श्रियो मूलम् MahāBhā. v. 39.44; Rāma.v.10.10; Pañcā. 89. 3; PārśvC. 8.17; SūktiRa. 200.14; अनिर्वेदः सदा कार्यो निर्वेदाद्धि कुतः सुखम् MahāBhā. xii. 149.47; स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः। निहतश्च Rāma. iv. 10.15; अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयम्। कार्यसिद्धिकराण्याहुः Rāma. iv. 48. 6; आत्मदुःखस्यानिर्वेदेन कथनम् KāmSū. 217.14 (3. 4); KandaCū. iii. 4. 6; मन्त्रपूर्वं हि संकल्पं कृत्वा मन्त्रसमर्चने। अनिर्वेदान्महाबुद्धे यावदायुष(? ष्य)मेव च। … यत्नान्निर्वहणीयं तत् PauṣkS. 32.2; चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् AṣṭāSaṁ. i. 255.10 (2.12); निमित्तादिज्ञानैश्च अभ्युदयकालमुपलक्ष्यानिर्वेदेन पुनःपुनः प्रवृत्त्यर्थं निमित्तं दक्षिणाक्षिस्पन्दनादि उदगयनादि च।… वित्तात्मानम् BālaKrī. ii. 62 15 (*on* 3. 162(? 172)); अनिर्वेदः सिद्धेर्मूलम् BālRā. 1. 4(8); अनिर्वेदो हि संवननबीजाक्षरं सिद्धेः MohaRāPa. 1. 26(4); मनःसंहरणम् …। अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः TantrSā. (K.) 31. 29; B absence of self-disparagement, self-confidence अनिर्वेदो वार्तलक्षणानां (श्रेष्ठः) CaraS. i. 25. 40; योगारम्भे सततमनिर्वेदः।… एष मार्गोऽपवर्गाय अतोऽन्यथा बध्यते इत्युदयनानि व्याख्यातानि CaraS. iv. 5.12; स्वास्थ्यं प्रतिभाभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता। स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य KāvyMī. 49.14; उद्योगित्वमनिर्वेदः सर्वदा धर्मकारिता।… इत्येतैर्गुणैर्युक्तो वरो नृपः Mānaso. ii. 1.4; C absence of disgust or aversion, indulgence कञ्चुकी (सनिर्वेदमात्मगतम्) अहो विगर्हितेष्वनिर्वेदः TāpaVa. 1. 3(15); *adj.* i not dejected अनिर्वेदो गतक्लेशो गततन्द्रीरमत्सरः। समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगविद् MahāBhā. xii. 188. 14; ii not having any compunction धिगस्तु खलु दारिद्र्यमनिर्वेदं च यौवनम्। यदिदं दारुणं कर्म निन्दामि च करोमि च Cārud. 3. 14.

**²अनिर्वेद** (a-nirveda) *adj.* [MahāBh. *on* Vār. 4 *on* P. ii. 2. 18] not gone away from the Vedas (i. e. faithful to the Vedas), cf. **²अनिर्वेदगति.**

**अनिर्वेदकर** (a-nirvedakara) *adj* not causing depression or dejection अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः। करोति सफलं जन्तोः कर्म यच्च करोति सः। तस्मादनिर्वेदकृतम् (v.l.°करम्) यत्नं चेष्टेऽहमुत्तमम् Rāma. v. 10. 12.

**अनिर्वेदकृत** (anirveda-kṛta) *adj.* undertaken with perseverance अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः। करोति सफलं जन्तोः कर्म यच्च करोति सः। तस्मादनिर्वेदकृतं यत्नं चेष्टेऽहमुत्तमम् Rāma. v. 10.12.

**¹अनिर्वेदगति** (anirveda-gati) *f.* state of non-dejection वहत्यनिर्वेदगतिं न मुञ्चति द्विजाधिराजश्रियि वर्धनोद्यमम्। बतोपयुङ्क्ते च बहुप्रमाणतामुपोढलोकायतवृत्ति यद्यशः ŚrīKaC. 3. 59 (comm. यस्य यशोऽनुद्वेगकारिणीं स्थितिं वहति)

**²अनिर्वेदगति** (anirveda-gati) *f.* position which has not gone away from the Vedas, view siding with the Vedas, ŚrīKaC. 3.59 (comm. अनिर्वेदां वेदपातिनीं गतिम्)

**अनिर्वेदपरा** (anirveda-parā) *adj.* (*f.*) given to perseverance तेन दोषेण सा बाला अजायोनौ ह्यजायत।… चरन्ती कृत्तिकाव्रतम्।… अनिर्वेदपरा तु सा BhaviP. 753B. 23 (iv. 103. 13)

**अनिर्वेदप्राप्य** (anirveda-prāpya) *adj.* which can be obtained through perseverance अनिर्वेदप्राप्यानि श्रेयांसि भवन्ति Vikramo. 4.55(2)

**अनिर्वेदम्** (anirvedam) *adv.* with perseverance अध्यगीष्ट धनुर्वेदमनिर्वेदमसौ तथा PāṇḍaC 1. 131; PrabaCin. 49. 18.

**अनिर्वेदित** (a-nirvedita) *adj.* not made known or shown [pw.].

**अनिर्वेदितपौरुष** (anirvedita-pauruṣa) *adj.* in which valour remains without sense of repugnance धिगस्तु खलु दारिद्र्यम् अनिर्वेदितपौरुषम्। यदेतद् गर्हितं कर्म निन्दामि च करोमि च Mṛcch. 3. 20.

**अनिर्वेदिन्** (anirvedin) *adj.* [w. r. for अनिर्वेद] MāṇḍūŚi. 16.11.

**अनिर्वेश** (a-nirveśa) *adj.* who has not expiated one's sins शतसहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयते BhāgP. v. 26. 18 [destitute of employment, wretched, miserable, APTE]

**अनिर्व्यूढ** (a-nirvyūḍha) *adj.* [*f.* -ā] A which could not be borne, cf. **अनिर्व्यूढभर**; B not established or proved कथमनिर्व्यूढपरभैरवमहाधामसमाश्रिताधस्तनपश्यन्त्यादिनिष्ठभेदासूत्रणकलङ्कं तथाविधवस्त्वपोषणवशनाममात्रीभूतपराभट्टारिकारूपं तत् किमपि रूपं भवेत् ParāTri. 134. 13; C not carried upto the end, not accomplished, not continued जात्याद्युक्तावनिर्व्यूढं खिन्नमाहुर्महाधियः SaraKaṇṭhā. 39. 20; समस्तमसमस्तं वा न निर्वहति यद्वचः। तदनिर्व्यूढमस्यापि न दोषः क्वापि तद्यथा SaraKaṇṭhā. 126. 11; वक्रोक्तिर्द्विधा। निर्व्यूढा अनिर्व्यूढा च SaraKaṇṭhā. 296.20; तदारब्धं तन्व्या न तु यदबलायाः समुचितम्। अनिर्व्यूढे तस्मिन्प्रकृतिसुकुमाराङ्गलतया पुनर्लज्जालोलं

मयि विनिहतं लोचनयुगम् SubhāRaK. 19. 27; SaduktiKa. 156.20; Subhāṣi. 2129; RājTa. (Ka.) 8. 2551; अत्र रूपकमारब्धमनिर्व्यूढं च रसोपकाराय Kāvyānu.(He.) 25.6; *n.* name of a literary or poetic defect (*lit.* style which is not continued to the end) माधुर्यव्यत्ययो यस्तु जायते रीतिखण्डनात् । तदनिर्व्यूढमित्युक्तं काव्यसर्वस्ववेदिभिः SaraKaṇṭhā. 33.24.

**अनिर्व्यूढत्व** (anirvyūḍha-tva) *n.* the state of not being carried upto the end, the state of being discontinued अत्र प्रक्रान्तस्य नवपरिणयवतीस्वरूपभणनस्यानिर्व्यूढत्वात्खिन्नत्वम् SaraKaṇṭhā. 39.26; अत्रासमस्तरीत्यनिर्वाहादनिर्व्यूढत्वेऽपि रसान्तरपरिग्रहेण रीत्यन्तरपरिग्रहाद् गुणत्वम् SaraKaṇṭhā 126.17.

**अनिर्व्यूढपीडित** (anirvyūḍha-pīḍita) *adj.* not wholly discomfited, not continously overborne द्वारं पदप्रहतिभिर्भञ्जन्तं राजसैनिकाः । अपसार्य कथंचित्तं तीक्ष्णा कृच्छ्रादरक्षिषुः । प्रविष्टेऽस्मिन्ननिर्व्यूढपीडिते मण्डपान्तरम् । लब्धप्राणा नृपाभ्यर्णं कुलराजादयो ययुः RājTa.(Ka.) 8.2161.

**अनिर्व्यूढप्रतिज्ञ** (anirvyūḍha-pratijña) *adj.* who has not fulfilled his vow अनिर्व्यूढप्रतिज्ञोऽपि प्रत्यावर्तितुमुत्सुकः । न चक्षमे सरोजाक्षश्चलितुं च पदात्पदम् SkandP. i(3B). 11.21; अनिर्व्यूढप्रतिज्ञस्य दीर्घैः किं वा ममासुभिः SkandP. i(3B). 12.11.

**अनिर्व्यूढप्रतिज्ञावत्** (anirvyūḍhapratijñā-va(n)t) *adj.* who has not fulfilled his vow अचिन्तयत्पद्मसूतिः … अनिर्व्यूढप्रतिज्ञावान्नीचतामपि संश्रितः SkandP. i(3B). 12.20.

**अनिर्व्यूढभर** (anirvyūḍha-bhara) *adj.* weight of which could not be borne षट्पदैः प्लुतोदराणि क्षणदोदबिन्दुभिः । बिभर्त्यनिर्व्यूढभराणि बन्धनैर्निजप्रसूनानि तलेन मालती RāmC. 4.10.

**अनिर्व्यूढव्यवस्थिति** (anirvyūḍha-vyavasthiti) *adj.* having insufficient or inadequate endowment ऐश्वर्यरूढिमूढत्वादनिर्व्यूढव्यवस्थितौ । मठेऽनुमितकोशत्वं तत्तद्राजाश्रयाद्गते । कुलोद्वहो विहितवान् सिंहदेवो व्यवस्थितिम् RājTa.(Ka.) 8.3316.

**अनिर्व्यूढसुदृढा** (anirvyūḍha-sudṛḍhā) *adj.* (*f.*) (perseverance) firm though not carried out to the fulfillment प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढसुदृढा फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् RājTa.(Ka.) 8.2551.

**अनिर्व्रेडित** (a-nirvreḍita) *adj.* not caused to turn over स्थाल्यामवदानानि श्रपयति शूले हृदयमसंभिन्ने वृक्कावनिर्व्रेडिते गुदवनिष्ठु Kāṭhakaśrautasaṅkalana 63; comm. *on* KātyŚS. vi. 7.28 (605. 20)

**अनिर्हत** (á-nirhata) *adj.* [DEBRU. 131] **i** who is not expelled or driven away नम आनिर्हतेभ्य इत्येते ह्येभ्यो लोकेभ्योऽनिर्हताः (देवाः) ŚatBr. IX. i. 1.23; **ii** not removed अनन्तरं दोषात्प्रायश्चित्तं न ह्यनिर्हते दोषे प्रवृत्तिरुत्तरस्यास्ति ŚāṅkhāŚS. iii. 19.7; अत ऊर्ध्वं प्रवक्ष्यामि सशल्ये लक्षणं व्रणे । अनिर्हतानि तिष्ठन्ति वर्षाणि सुबहून्यपि । शल्यानि Hastyāyur. 465.30 (3.12)

**अनिर्हरत्** (a-nirharat) *adj.* not carrying तं (चमसम्) दक्षिणावेलायां पूर्वेणाहवनीयमनिर्हरन्तो वेदेर्दक्षिणेन सदोहविर्धानानि हारयित्वा पूर्वया द्वारा सदः प्रवेशयेयु LāṭyāŚS. viii. 9. 17.

**अनिर्हाणर्च** (a-nirhāṇarca) *adj.* [P. v. 4.74; AltGr. II. 1.110; DEBRU. 726] in which no part of the verse is dropped or left out (in recitation) अथ यः (वषट्कारः) समः संततोऽनिर्हाणर्चः स धामच्छत् AitBr. 11.7(303) (Sāy. संपूर्णयाज्यापाठोपेतः)

**अनिर्हारिम** (a-nirhārima) *adj.* (a kind of death) in which the dead body is not to be carried (मरणम्) 'णीहारिमं' ति यद्वसतेरेकदेशे विधीयते तत्ततः शरीरस्य निर्हरणात् — निस्सारणान्निर्हारिमं, यत्पुनर्गिरिकन्दरादौ तदनिर्हरणादनिर्हारिमम् SthānT. 94B.12.

**अनिर्हार्य** (a-nirhārya) *adj.* which cannot be removed, irremovable एवं च यद्रसहीनमजिह्वास्पृष्टमनिर्हार्यं च तद्दन्तवदित्युक्तं भवति SmṛtiCan. ii. 267. 18; दन्तलग्नमनिर्हार्यं लेपं मन्येत दन्तवत् BhāvPra.(Bhā.) 5.170 = BhojanKu. 218.17.

**अनिर्हार्यलेप** (anirhārya-lepa) *m.* stickings which cannot be removed दन्तश्लिष्टेषु दन्तवदित्यनिर्हार्यलेपाभिप्रायम् SmṛtiCan. ii. 267.13.

**अनिर्हार्यवर्जम्** (a-nirhāryavarjam) *adv.* excluding the objects which cannot be removed परचक्राटविकाभ्याम् … ग्राममध्याग्न्युदकाबाधे वा, किंचिदमोक्षयमाणे कुप्यमनिर्हार्यवर्जमेकदेशभुक्तद्रव्ये वा … नावि निमग्नायां मुषितायां वा स्वयमुपरूढो नोपनिधिमभ्याभवेत् ArthŚā. ii. 72.4 (3. 12) (comm. अनिर्हार्यवर्जमिति च निर्हार्यद्रव्य एवैकदेशतो विमोक्षणस्य संभवो न त्वनिर्हार्यद्रव्य इति वस्तुस्थितिमात्रम्)

**अनिर्हुत** (a-nirhuta) *adj.* not offered नैतस्येह यथास्माकमग्निहोत्रमनिर्हुतम् । सायं प्रातश्च होतव्यम् MahāBhā. xiii. 95. 4.

**अनिर्हृत** (a-nirhṛta) *adj.* not removed पक्वो ह्यनिर्हृतो दोषो देहे तिष्ठन्महात्ययम् । विषमं वा ज्वरं कुर्याद्बलव्यापदमेव च SuśruS. vi. 39. 124; SiddhYo. 1.67; यथा वृक्षस्य पुष्पेषु पलाशेषु फलेषु च । कर्णेष्वस्यानिलो हन्ति तथा व्याधिरनिर्हृतः BhelaS. 24.16 (1.14); हरेद्बहूंश्चलान्दोषानल्पानल्पान्पुनः पुनः । दुर्बलस्य मृदुद्रव्यैरल्पान्संशमयेत्तु तान् । क्लेशयन्ति चिरं ते हि हन्युश्चैनमनिर्हृताः AṣṭāSam. i. 143.13 (1.27); दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः । कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् BhāvPra.(Bhā.) 5.170; BhojanKu. 218.16.

**अनिर्हृतदोष** (anirhṛta-doṣa) *adj.* the defect or disorder of which is not removed यदा चाश्चोतनेन पित्तश्लेष्मशोणितोत्थेषु नयनामयेषु संशोधनैर्विशुद्धस्य … पक्वलिङ्गमुपलक्षितं भवति तदा नेत्रमात्राश्रये व्याधावञ्जनं प्रयोज्यम् । न दोषवेगोदये न चानिर्हृतदोषे AṣṭāSam. i. 163.22 (1.32)

**अनिर्हृति** (a-nirhṛti) *f.* absence of removal कृमिणकोष्ठस्यास्थापनेनाधः पूर्वमनिर्हृतौ कृमिभिरतिबहुत्वादशेषानिःसरणेन हृदयमतिकर्षद्भिश्छर्दिषोऽतिप्रवृत्तिः स्यात् AṣṭāSam. i 138.2 (1.27)

**अनिर्हृत्य** (a-nirhṛtya) *ger.* not having removed तत्तु शल्यमनिर्हृत्य कथं शक्ष्यामि जीवितुम् MahāBhā. xii. 147.4.

**अनिर्ह्रादिन्** (a-nirhrādin) *adj.* not sounding loudly स्पष्टाक्षरमिदं यस्मान्मधुरं स्त्रीस्वभावतः । अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति सारिका Ratnā. 2.6; स्त्रीस्वभावादिव मृदु मधुरं वा निनादि वा । स्वल्पाङ्गत्वादनिर्ह्रादि मया तद्वाक्यमूहितम् YogVā. vi(2). 59.3.

**अनिर्ह्रियमाण** (a-nirhriyamāṇa) *adj.* not being allowed to flow out तद्दुष्टं शोणितमनिर्ह्रियमाणं शोफदाहरागपाकवेदना जनयेत् SuśruS. i. 14.29.

**अनिल** (an-ilá, ṚV. (Khil.); án-ila, VājaS.) *m.* [DEBRU. 362; MAYR.; Uṇā. 1.55]; **1Ai** god of wind (usually mentioned along with other gods) **ii** an epithet of Śiva **iii** an epithet of Viṣṇu **iv** father of Hanūmat **v** father of Bhīma **vi** name of a deity presiding over the ear **vii** guardian deity of the north-west direction **viii** presiding deity of *uṣṇih* metre **ix** (Jain.) name of one of the ten *bhuvanādhipas* **Bi** name of one of the eight Vasus **ii** name of a *ṛṣi*, seer of ṚV. x.168 **iii** name of a divine Pitṛ **iv** name of a son of Garuḍa **v** name of one of the eight Maruts **vi** name of a *gaṇa* of Viṣṇu in the north-west direction **vii** name of a Mahāyakṣasenāpati **viii** one of the eight forms of Śiva **ix** name of a *gaṇa* of Rudra **Ci** name of a student of Śuka for learning the Mahābhārata **ii** name of a minister of Vibhīṣaṇa **iii** name of a chieftain in Laṅkā **iv** name of a son of Taṁsu **v** name of a son of Ukti **vi** name of a son of Kṛṣṇa **vii** name of a Brahmin **viii** name of the seventeenth Tīrthaṅkara **D** name of the Vāyupurāṇa **2A** ordinary wind (breeze or storm), air in motion (sometimes implying fickleness, swiftness, gentleness, fury, carrying of odour etc.) **Bi** vital air, breath (inhaled or exhaled) **ii** life-breath as *prāṇa* **iii** life-breath as *apāna* **iv** (du.) life-breath as both *prāṇa* and *apāna* **v** one of the fourteen vital winds in the body **3A** wind as one of the five elements **B** wind as the only means of subsistence **C** wind as a substance (one of the nine *dravyas*) **4A** mystic letter *y* **B** mystic letter *a* **C** mystic letter *u* **D** mystic letter *ḍh* **E** group of letters *a, ā, k, c, ṭ, t, p, y, s* **5** one of the three humours of the body (usually in the disturbed state) **6** north-west direction **7** constellation Svātī presided over by the wind-god **8** a type of sword **9** territory or world of the wind-god **10** a chemical (*rasa* or medicine) *n.* a type of two-storied building called Vāta **1Ai** god of wind (usually mentioned along with other gods) त्वमिन्द्रो यमो वरुणस्त्वमापो अग्निरथानिलः ṚV. (Khil.) iv. 5.27; iv. 5. 29; अग्ने … त्वमसि चानिलः MahāBhā. i. 220.29; चन्द्रार्कानिलवह्नीनां कान्तिदीप्तिबलद्युतीः MahāBhā. viii. 12.15; मखो हि विष्णुः … वहन्ति तं चाग्न्यनिलेन्दुभानवः MahāBhā. viii.1219*(6); देवतागणाः …। धाता चैव विधाता च तथा चैवानिलानलौ ।… समाजग्मुर्हि संगताः MahāBhā. ix. 44.4; xiii. 18. 47; नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यः Rāmā. i.40*(2); v. 11.59; अनिलानलसूर्येन्दुशक्रोपेन्द्रसमश्च कः Rāmā. i. 49*(4); इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।… मात्रा निर्हृत्य शाश्वतीः ManuSm. 7.4; VīraMī.(Rājanīti.) 16.7; ŚukraNī. 1. 71; चन्द्रार्काग्नियमानिलाः ।… वृत्तज्ञाः सर्वदेहिनाम् ManuSm. 8.86; Mṛcch. 8.24; सूर्येन्द्राग्न्यनिलेन्दूनाम् … अधिकारान् स स्वयमेवाधितिष्ठति MārkP. 82.5; धन्यास्ते सत्तमा देशा यत्र गङ्गा महानदी । रुद्रसाध्यानिलादित्यैर्जुष्टतोया VāyuP. i. 42. 40; चेरतुर्दानवानीके क्रीडन्तावनिलानलौ MatsyaP. 176.36;

शीतलम् । अंशूदकम् …। कफमेदोऽनिलघ्नं च दीपनं बस्तिशोधनम् HārS. i. 7.81; सुरानिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफावहा AṣṭāSaṁ. i. 27.15 (1 6); AṣṭāHṛ. i. 5.67; iv. 12.30; यत्र यत्र नियताखिलरोगः। तत्र तत्र विदधीत विधानम्। तैललेपनविमर्दनयुक्तस्वेदनोपनहनैरनिलघ्नैः KalyāKā. 12.2; 2. 24; हृत्पृष्ठगात्रशिरसामतिवेदनानि …। वातज्वरे सततमेव भवन्ति तानि । ज्ञात्वानिलघ्नमचिराद्विचरेद्यथोक्तम् KalyāKā. 9.54; निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः SiddhYo. 58.32

**अनिलघ्नक** (anilaghna-ka) *m.* name of the tree *Terminalia belerica* (i.e. *vibhītaka*) (*lit.* curer of the disorder of wind-humour) हार्यः कर्षफलः कलिकधर्नेघ्नोऽक्षोऽनिलघ्नकः RājNi. 51.6.

**अनिलघ्नक्वाथकल्क** (anilaghna-kvāthakalka) *m.* kind of tenacious paste and decoction which cure the disorder of wind-humour (आतुरम्) ततोऽनिलघ्नक्वाथकल्कैर्निरूहयेत् AṣṭāSaṁ. ii. 87. 21 (4. 15)

**अनिलघ्नी** (anilaghn-ī) *f.* **I** garlic (*lit.* curer of the disorder of wind-humour) आरण्यालु … मुरटिका … अर्शोऽनिलघ्न्यम्लिका।… वातामयेभ्यो हिताः KalyāKā. 4.29; **II** *Tinospora cordifolia* अनिलघ्नी महाकन्दा विषघ्नी देवनिर्मिता। विषायणी बहुच्छिद्रा सैवोक्ता चामृताह्वया AbhidhāMañ. 55.7.

**अनिलचञ्चल** (anila-cañcala) *adj.* **I** fickle as the wind चित्तस्य जात्यानिलचञ्चलस्य नानागुणत्वात्क्रियते किमस्य DarpDa. 5.5; **II** shaking due to the wind गीतमाकर्णयन् कौकिलमाम्रशाखी। शाखाञ्चलेनानिलचञ्चलेन श्लाघाचलन्मौलिरिव व्यलासीत् YātrāPra. 3. 17.

**अनिलचञ्चलोर्मि** (anilacañcalormi) *adj.* having waves tossed by the wind ततः स जीमूतगणप्रणादो नादं व्यमुञ्चत्त्वरया प्रतीतः। सूर्यात्मजः शौर्यविवृद्धतेजाः सरित्पतिर्वानिलचञ्चलोर्मिः Rāmā. iv. 14.21.

**अनिलचपल** (anila-capala) *adj.* [*f.* -ā] moving because of the wind अलिरनिलचपलकिसलयताडनसहनो लतां भजते ĀryāSaŚa. 184; रूपगुणहीनहार्या भवति लघुर्धूलिरनिलचपलेव।… तरुणी ĀryāSaŚa. 496.

**अनिलचलत्** (anila-calat) *adj.* moving (even) in (gentle) wind कठोरेण किं संवीतं मृगचर्मणानिलचलच्चीनांशुकार्हं वपुः।… क्रूरक्लेशसखी सुखेषु विमुखी केनोपदिष्टा स्थितिः DaśāvaC. 9.62.

**अनिलचलांशुका** (anilacalāṁśukā) *adj.* (*f.*) whose garment is shaken by the wind उत्तुङ्गादनिलचलांशुकास्तटान्ताच्चेतोभिः सह भयदर्शिनां प्रियाणाम्।… अतूर्णमुत्पतन्त्यस्तोयेषु द्रुततरमङ्गना निपेतुः ŚiśuVa. 8.31.

**अनिलचलित** (anila-calita) *adj.* shaken by the wind कुसुमनिकरमनिलचलितम् … उत्सृजद्भिः संसक्तपादपैः काननैरुपगूढम् … आश्रममपश्यम् Kād. 38. 20; वारविलासिनीनां साभिलाषैरनिलचलितकुवलयदलदामदीर्घैः … अवलुप्यमान इव दृष्टिपातैः स्थित्वा … अन्तःपुरमाययौ Kād. 93. 6; अनिलचलितशाखाग्रगलितसितकलिकैः शिरसि विक्षिप्यमाणाक्षतकण इव वनस्पतिभिः … प्रतस्थे (समरकेतुः) TilaMañ. 209. 18.

**अनिलचार** (anila-cāra) *m.* blowing of the wind स्वेदबिन्दून् मृदुभिरनिलचारैः खेचराणां हरन्तीम्।… जाह्नवीं सोऽभ्यपश्यत् KāvyMī. 79. 11 अनिलचारोच्चर(त्कीच?)करवैरापूर्णगर्भाम् … अनेकतरुलताङ्कुरविराजितां मृगयाटवीमवाप (राजा) UdaySuKa. 43. 1.

**अनिलचित्तरंहस्** (anilacitta-raṁhas) *adj.* having speed like that of wind and mind, fleet or swift like wind and mind गरुडानिलचित्तरंहसम् … अवमत्य तुरङ्गदानवं शमयन्गोपगणस्य साध्वसम् Yādavā. 9. 18.

**अनिलच्युति** (anila-cyuti) *f.* restraining of the breath अभ्यासेन स्थिरं चित्तमभ्यासेनानिलच्युतिः ŚārṅgaPa. 4186.

**अनिलज** (anilaj-a) *m.* son of the god of wind, Hanūmat अङ्गव्यूहानि जलाद्यैश्च (v. l. अङ्गव्यूहानिलजाद्यैश्च WEBER's Ed. 326. 28) (राघवं) पूज्य धृष्ट्यादिकैर्लोकपालैस्तदस्त्रैः RāmPūTāU. 10. 6; अद्रिं क्रव्यादवीरः प्रहितमनिलजेनाच्छिनत् मुद्गरेण MahāN. 9.36.

**अनिलज** (anilaj-a) *adj.* caused by (the disorder of) wind-humour ज्वरः। प्रायेणानिलजो दुःखः CaraS. vi. 3. 49 (1941 Ed); vi. 9. 10 (1941 Ed.); SuśruS. vi. 39. 30; सकफेऽनिलजे कासे … सितोपलाम्। लिह्यात् AṣṭāSaṁ. ii. 20. 11 (4. 4); AṣṭāHṛ. iv. 3.13; तस्मादनिलजमप्यामपाचनार्थमादौ लङ्घनेनोपक्रमेत् AṣṭāSaṁ. ii. 66. 13 (4. 11); शूलाध्माने जृम्भणं च भवन्त्यनिलजे ज्वरे RugVi. 2.9; श्रमोपवासानिलजे (ज्वरे) हितो नित्यं रसौदनः SiddhYo. 1. 42; हिङ्ग्वम्लकृष्णामलकम् …। चूर्णं पिबेद्वारुणिमण्डमिश्रं शूले प्रवृद्धेऽनिलजे SiddhYo. 26. 11; 41. 27; 58.42; दृग्विभ्रमं कर्णरुजमन्यांश्चानिलजान् गदान्। विषं रूक्षाशिनः कुर्यात् RasRaSa. 29. 47; हन्ति … रसः। पीतो लशुनसिद्धेन तैलेनानिलजान् गदान् RasRaSa. 30. 47.

**अनिलजन्मन्** (anila-janman) *m.* son of the god of wind, Hanūmat बालप्रवालशालेषु रत्नतालीवनेषु च। सुवर्णकर्णिकारेषु भग्नेष्वनिलजन्मना। … राक्षस्यो ददृशुर्वीरम् RāmāMañ. 265. 2.

**अनिलजव** (anila-java) *adj.* having the speed as that of the wind ऐषीकेनानिलजवः शक्रसूनुसहेलया। नखोल्लेखविधायी मे काणः काकः कृतस्त्वया RāmāMañ. 263 10.

**अनिलजात** (anila-jāta) *adj.* caused by (the disorder of) wind-humour बहुधान्याब्दे सततं बहुधान्ययुतं धरातलं निखिलम्। पित्तकफानिलजाता बहुधा रोगास्तथाविधास्तत्र VasiS. 6. 40.

**अनिलजामय** (anilajāmaya) *m.* disease caused by (the disorder of) wind-humour रविरविजभौमवारे संक्रान्तौ दिनकरस्य यन्मासे। पित्तकफानिलजामयनरपतिकलहस्त्ववृष्टिश्च VasiS. 19. 1.

**अनिलजित्** (anila-jit) *adj.* overcoming (i.e. curing) (the disease) caused by (the disorder of) wind-humour गुल्मघ्नानि च तैलानि वक्ष्यन्ते वातरोगिके। तानि मारुतजे गुल्मे पानाभ्यङ्गानुवासनैः। प्रयुक्तान्याशु सिध्यन्ति तैलं ह्यनिलजित्परम् CaraS. vi. 5. 103 (1941 Ed.); जृम्भायाः (रोधात्) क्षववद्रोगाः सर्वश्चानिलजिद्विधिः (शस्यते) AṣṭāSaṁ. i. 19.7 (1.5); AṣṭāHṛ. i. 4. 16; *m.* name of the tree *Moringa pterygosperma* or *Hyperanthera moringa* तथैव श्वेतमरिचः शब्दैः पर्यायवाचकैः। कथितः स एव बहलः श्वेततरुः श्वेतमञ्जरी चेति। सौभञ्जनकश्च हरितपर्यायैर्बहलपल्लवोऽनिलजित् AbhidhāMañ. 29.8.

**अनिलज्वर** (anila-jvara) *m.* fever caused by (the disorder of) wind-humour श्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे AṣṭāSaṁ. ii. 261. 13 (13. 2); AṣṭāHṛ. iii. 2. 18.

**अनिलतनय** (anila-tanaya) *m.* son of the wind-god **I** Hanūmat संरुद्धोऽनिलतनयेन सोऽथ विग्रः सुग्रीवं प्रति विनिवृत्य संप्रधावन् RāmC. 34.35; देव कपिबलम् … अनिलतनयेनाहूतम् RāmāCam. 4.37(3); (पवनः) अस्य पर्यायात् प्रभञ्जनादिशब्दात् परत्र पुत्रशब्दो दीयते तदा भीमहनुमतोर्नामानि भवन्ति। … अनिलतनयः। समीरणपुत्रः NāmMā. 63 (comm.); **II** Bhīma, NāmMā. 63 (comm.); स गान्धारीपुत्रः शकुनिजनितोत्साहतरलः। पितुर्वाक्यं श्रुत्वानिलतनयदुर्वाक्यजनितं तिरस्कारं स्वीयं समकथयदाक्षेपविधुतः ManoDū. 43.

**अनिलतरल** (anila-tarala) *adj.* unsteady or trembling due to the wind अनिलतरललतातरङ्गितैरनेकवर्णचारुभिर्दिव्यांशुककलापैः पल्लवितम् (कल्पतरुखण्डमपश्यत् समरकेतुः) TilaMañ. 213. 22; अनिलतरलकुवलयनयनेन। तपति न सा किसलयशयनेन। सखि या रमिता वनमालिना GītGo. vii. 16. 1; xi. 20. 4.

**अनिलतरलित** (anila-taralita) *adj.* tossed or shaken by the wind अनिलतरलितलतावनप्रसूनपतनैर्नक्षत्रपातारिष्टमिव मृगेषु दर्शयन्तीम् … मृगयाटवीमवाप(राजा) UdaySuKa. 43. 5; 59.13; अनिलतरलिताविरलशीकरनिर(न्तर)-दुर्दिनोत्सवपः चातकानाम् … (राजा) तडागमद्राक्षीत् UdaySuKa. 129.23.

**अनिलता** (anila-tā) *f.* the state of being the element wind तस्मिन्देहे शवीभूते वाते चानिलतां गते। चेतनं वासनामुक्तं स्वात्मतत्त्वेऽवतिष्ठति(? ते) YogVā. iii. 55.5; (आकाशभूतं ब्रह्म) तदेवानिलतां वेत्ति निजसत्तात्मिकां स्वयम्। अन्तर्गतस्पर्शरसां पवनस्पन्दतामिव YogVā. iii. 61.13.

**अनिलताडित** (anila-tāḍita) *adj.* struck by the wind अनिलताडितोद्दण्डकाण्डपटकप्रस्तुताकाण्डताण्डवम् आहारमण्डपमयासीत् (भूमिपतिः) TilaMañ. 69. 12.

**अनिलताडितका** (anilatāḍita-kā) *f.* the game of blindman's buff (*lit.* striking in the air) क्ष्वेडितकानि … अनिलताडितकाम् … सखीभिरन्यानि च देश्यानि (अनुक्रीडेत नायकः) KāmSū. 209. 5 (3. 3) (JayaMa. अनिलताडितकां यत्र पक्षवद् बाहू प्रसार्य चक्रवद्भ्रमणम्)

**अनिलतुलनदण्ड** (anila-tulanadaṇḍa) *m.* rod of the balance in the form of the wind वदनममृतरश्मिं पश्य कान्ते तवोर्व्याम् अनिलतुलनदण्डेनास्य वार्धौ विधाता। स्थितमतुलयदिन्दुः खेचरोऽभूल्लघुत्वात् क्षिपति च परिपूर्त्यै तस्य ताराः किमेताः MahāN. 2.58.

**अनिलतुल्यरंहस्** (anilatulya-raṁhas) *adj.* having the speed as of that of the wind गिरिवज्रेश्वरः। ततोऽर्जुनं भिन्नकटेन दन्तिना घनाघनेनानिलतुल्यरंहसा। अतीव चुक्षोभयिषुर्जनार्दनं धनंजयं चाभिजघान तोमरैः MahāBhā. viii. 13. 12.

**अनिलतुल्यवर्चस्** (anilatulya-varcas) *adj.* having vigour as that of the wind गिरिवज्रेश्वरः। ततोऽर्जुनं भिन्नकटेन दन्तिना घनाघनेनानिलतुल्यरंहसा (v.l. वर्चसा)।… आभिजघान MahāBhā. viii. 13. 12.

**अनिलतुल्यवेग** (anilatulya-vega) *adj.* having the speed as that of the wind स तं गृहीत्वानिलतुल्यवेगं सविस्फुलिंगज्वलनप्रकाशम्। बाणं महेन्द्राशनितुल्यवेगं चिक्षेप सुग्रीववधाय रुष्टः Rāmā. vi. 47. 37.

**अनिलतुष्टि** (anila-tuṣṭi) *f.* satisfaction of the wind-god महर्द्धिभिस्त्वमनिलतुष्टये सुरैः कृतोऽणिमप्रभृतिमहागुणेश्वरः RāmC. 15. 53.

**अनिलत्व** (anila-tva) *n.* the state of being the wind न योगो भूप सूर्यत्वं चन्द्रत्वं न कुबेरता। नानिलत्वं नानलत्वं नामरत्वं न कालता GaṇeP. ii. 138. 12.

**अनिलदिङ्मुख** (aniladiṅ-mukha) *adj.* facing the north-west direction (श्वा) रुवन् …। प्रदोषकालेऽनिलदिङ्मुखस्तु धत्ते भयं मारुततस्करोत्थम् BṛSaṁ. 89. 4.

**अनिलदिश्** (anila-diś) *f.* north-west (*lit.* quarter of the wind-god) जगज्जीर्णगृहस्यास्य कोणे …। भूमेरनिलदिग्नाम्नि …। गन्धमादनशैलेन्द्रनाम्नि काचित् किल स्थली YogVā. v. 51.8.

**अनिलदिष्ट** (anila-diṣṭa) *adj.* guided or directed by the wind-god (वातात्मजम्) कम्बुगलमनिलदिष्टम् … एकमवलम्बे HanuPañ. 3.

**अनिलदीपन** (anila-dīpana) *adj.* exciting (the motion of) the vital air आसनोग्रमिदं प्रोक्तं भवेदनिलदीपनम् ।… य एतदासनं श्रेष्ठं प्रत्यहं साधयेत् सुधीः। वायुः पश्चिममार्गेण तस्य संचरति ध्रुवम् ŚivS. 3. 111.

**अनिलदेवत** (anila-devata) *adj.* presided over by the wind-god मृदा प्रक्षाल्य पादौ तु आचम्य च यथाविधि। आपस्त्वाद्यास्त्रयश्चैव सूर्याग्न्यनिलदेवताः BrahmāṇḍP. ii. 14. 75.

**अनिलदोलायमान** (anila-dolāyamāna) *adj.* swinging to and fro due to the wind अथाधुनैवाधिगतविद्याधरेन्द्रभावः … अनिलदोलायमानद्वारवन्दनमालाप्रवालम् … विमानमधिरुह्य … उदधिमर्यादां मेदिनीं पर्यटसि TilaMañ. 57.8.

**अनिलदोलायित** (anila-dolāyita) *adj.* fluttered or shaken by the wind अनिलदोलायितसितध्वजैः … अमरमन्दिरैर्विराजितशृङ्गाटका (अवन्तीवृज्जयिनी नाम नगरी) Kād. 50. 12; कदलीभिरप्यनिलदोलायितदलाभिश्चामरग्राहिणीभिरिव वीज्यमानम् … हरिवाहनमद्राक्षीत (समरकेतुः) TilaMañ. 230.3.

**अनिलदोष** (anila-doṣa) *m.* disorder of wind-humour अथ नयनमनिलदोषात्परिशुष्कवर्त्मरक्तरूक्षपर्यन्तम् … मन्दोष्माश्रु विसृजति Hastyāyur. 141. 21 (1.18)

**अनिलधारण** (anila-dhāraṇa) *n.* holding the wind (in the hand or palm) गुरुत्वं च लघुत्वं च पाणावनिलधारणम् ।… द्वात्रिंशद्गुणमैश्वर्यं मारुतं कवयो विदुः ŚivaP. vii(2). 38. 27 (596B. 1)

**अनिलधूत** (anila-dhūta) *adj.* shaken by the wind किं वा सज्जनसंगतिर्न सुखदा चेतश्चमत्कारिणी किं त्वत्रानिलधूतदीपकलिकाच्छायाचलं जीवितम् SubhāRaSaṁ. 314.

**अनिलध्वंस** (anila-dhvaṁsa) *m.* destruction of (the equilibrium of) wind-humour (i. e. the disorder of wind-humour) कफपित्तानिलध्वंसे पूर्वमध्यापराह्णके । दिने तु गृह्यते नस्यं रात्रावप्युत्कटे गदे ŚārṅgaS. iii. 8.3 (comm. ध्वंसे वृद्धिलक्षणे कोपे)

**अनिलनन्दन** (anila-nandana) *m.* son of the wind-god **i** Hanūmat सेवते परमैश्वर्यं नगरे कर्णकुण्डले। पूर्वपुण्यानुभावेन स्वर्गीवानिलनन्दनः PadmP. (Ra.) 112.20; ऊचे तेभ्यः सुषेणेन …। भेषजानुपदेक्ष्यामि ध्रियमाणे हनूमति। पुनस्तं प्रह्वमदुद्दिश्यानिलनन्दनम् RāmC. 35.92; रामोऽतिदुःखितः। उवाच मारुतिम् … द्रोणागिरिः…। तमानय द्रुतं गत्वा…। आज्ञा प्रमाणमित्युक्त्वा जगामानिलनन्दनः AdhyāRā. vi. 5.73; **ii** Bhīma विना भीममलंभूष्णुर्जेतुमेनं (वृषकर्परम्) न कश्चन। कुत्रापि यदि गुप्तोऽपि भवेदनिलनन्दनः PāṇḍaC. 10. 222.

**अनिलनर्तित** (anila-nartita) *adj.* made to dance (i. e. fluttered) by the wind प्रधानपौराः … अनिलनर्तितविचित्रचीनांशुकव्रजान् ध्वजानाबबन्धुः TilaMañ. 263.13; 414.22; गङ्गेव मूर्तानिलनर्तितोर्मिचलानि चेलानि समुद्वहन्ती। श्रीशारदा सादरमित्युवाच VasaViKā. 1. 60.

**अनिलनाशन** (anila-nāśana) *adj.* destroyer of (the disorder of) wind-humour ऊष्मणा … स्विद्यति ना सुखम्। सुसंवृताङ्गः स्वभ्यक्तः स्नेहैरनिलनाशनैः CaraS. i. 14. 58 (1941 Ed.); कल्कः संरोहणः कार्यस्तिलजो मधुसंयुतः। स माधुर्यात् तथौष्ण्याच्च स्नेहाच्चानिलनाशनः SuśruS. iv. 1. 66; vi. 17.62; यावन्तः स्थावराः स्नेहाः …। सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः HārīS. i. 14.13; पिबेदनिलनाशनम् …। महौषधहरीतकीलवणकल्कमुष्णोदकैः KalyāKā. 8.41; स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः SiddhYo. 58. 52; नागं निरूहयेत्। वातिकेन विधानेन स निरूह्यः क्रमात् ततः। भूयोऽनुवासयेदेनं स्नेहैरनिलनाशनैः Hastyāyur. 287. 1 (2. 57)

**अनिलनिग्रह** (anila-nigraha) *m.* holding back or checking of the (*apāna-*) wind विण्मूत्रशुक्रानिलनिग्रहेन … वायुः प्रकुप्याशु करोति शूलम् Hastyāyur. 274.9 (2.52)

**अनिलनिबर्हण** (anila-nibarhaṇa) *adj.* allaying wind-humour रसः …। अम्लोऽनिलनिबर्हणः … स्निग्धो हृद्यश्च AṣṭāSaṁ. i. 97. 11 (1. 18); उष्णाभितापि …। पित्तलं च तथा तैलं कफानिलनिबर्हणम् Hastyāyur. 673. 22 (4.23)

**अनिलनिरुन्धन** (anila-nirundhana) *n.* controlling of the breath चलेऽनिले चलं सर्वं निश्चले तत्र निश्चलम्। स्थाणुत्वमाप्नुयाद् योगी ततोऽनिलनिरुन्धनात् SkandP. iv. 41.72.

**अनिलनिर्यास** (anilaniryāsa) *m.* name of a plant, *Terminalia tomentosa* [w. r. for नीलनिर्यास] [pw.]

**अनिलनीत** (anila-nīta) *adj.* blown away by the wind अनिलनीतमम्बरे। रजः सना संघजमातपत्रतां बभार VasaViKā. 13.42.

**अनिलपत्र** (anila-patra) *n.* petal at the north-western direction मन्त्रमूर्तिर्द्वितीया वै द्वौ द्वौ पूर्वदलान्तरे। नैर्ऋतानिलपत्राभ्यां क्रमान्मूर्तिद्वयं तु तत् PauṣkS. 7. 127.

**अनिलपथ** (anila-patha) *m.* [P. v. 4. 74] sky (*lit.* path of the wind) (अन्तरीक्षं च मेघवायुपथोऽप्यथ) मेघशब्दाग्रे वायुशब्दाग्रे च पथशब्दे प्रयुज्यमाने आकाशनामानि भवन्ति। मेघपथः।… वायुपथः।… अनिलपथः। अनिलमार्गः NāmMā. 53 (comm.)

**अनिलपथिन्** (anila-pathin) *m.* path of the wind (i. e. sky) नदी त्वाकाशगामिनी। सप्तमेनानिलपथा प्रवृत्ता चामृतोदका LiṅgaP. i. 52.4.

**अनिलपर्यय** (anila-paryaya) *m.* name of an eye-disease (due to the movement of wind-humour around the eyes and eye-brows) अथ समस्तनेत्रजा रोगाः।… पाकः सशोथः स च शोथहीनो हताधिमन्थोऽनिलपर्ययश्च BhāvPra (Bhā.) 8. 62 (?63). 113; cf. **वातपर्यय.** (BhāvPra.(Bhā.) 8(62) (?63). 126)

**अनिलपर्याय** (anila-paryāya) *m.* pain and swelling of eye-lids and outer parts of the eye [MW.; APTE]

**अनिलपाण्डुरोग** (anila-pāṇḍuroga) *m.* anaemia caused by (the disorder of wind-humour तोदः परुषत्वशिरोगुरुत्वं त्वङ्मूत्रनेत्रे नखे पीतता स्यात्। वातात्मकं तं मनुजस्य विद्धि लिङ्गैरुपेतोऽनिलपाण्डुरोगः HārīS. iii. 8.7.

**अनिलपित्तज** (anilapittaj-a) *adj.* arising from (the disorders of) wind- and bile-humours फाण्टो हिमो वा द्राक्षादिर्जातीकुसुमवासितः। युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम्। ज्वरम् AṣṭāSaṁ. ii. 5.16 (4.1)

**अनिलपित्तजित्** (anilapitta-jit) *adj.* allaying (the disorders of) wind- and bile-humours पनसस्य फलं बालम् … तृड्दाहानिलपित्तजित् BhojanKu. 83. 2.

**अनिलपित्ततस्** (anilapitta-tas) *adv.* because of (the disorders of) wind- and bile-humours यदा तु पाण्डोर्वर्णः स्याद्धरितश्यावपीतकः।… हलीमकं तदा तस्य विद्यादनिलपित्ततः CaraS. vi. 16.134 (1941 Ed.); RugVi. 8. 23.

**अनिलपित्तबर्हण** (anilapitta-barhaṇa) *adj.* allaying (the disorders of) wind- and bile-humours क्रौञ्चपारावतानाम्। पललमनिलपित्तबर्हणं वै HārīS iii. 10.86.

**अनिलपित्तरोगिन्** (anilapitta-rogin) *adj.* ill on account of disturbed wind- and bile-humours आमाशयस्थे (विषे) कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी SuśruS. v. 2. 28; RugVi. 69. 28; पित्तानिलात्मानिलपित्तरोगी…आर्ताः पिबेयुर्घृतमेव काले KāśyaS. 19B.30.

**अनिलपित्तहृत्** (anilapitta-hṛt) *adj.* allaying (the disorder of) wind- and bile-humours प्रियङ्गुः शीतला तिक्ता तुवरानिलपित्तहृत् BhāvPra. (Bhā.) 6(3). 102; 6(7). 32.

**अनिलपीडित** (anila-pīḍita) *adj.* afflicted by (the disorder of) wind-humour यस्य कृत्स्नं शरीरार्धमकर्मण्यमचेतनम्। ततः पतत्यसून् वापि त्यजत्यनिलपीडितः SuśruS. ii. 1.62; यवागूः।… सपञ्चमूलानिलपीडिते तु KāśyaS. 254B. 4.

**अनिलपुत्र** (anila-putra) *m.* son of the wind-god **i** Hanūmat माहेन्द्रिर्मुदितो भूयः … युयुधेऽलातभासुरैः। विद्ययानिलपुत्रोऽपि तं शस्त्रौघमवारयत् PadmP (Ra.) 50. 23; पर्यायात् प्रभञ्जनादिशब्दात् परत्र पुत्रशब्दो दीयते तदा भीमहनुमतोर्नामानि भवन्ति।… अनिलपुत्रः। अनिलतनयः NāmMā. 63(comm.); **ii** Bhīma, NāmMā. 63 (comm.)

**अनिलपुरीषमिश्र** (anilapurīṣa-miśra) *adj.* mixed with (i. e. accompanied by) wind-humour and faeces अनिलपुरीषमिश्रघृततैलयोर्वागमात् प्रशस्तमनुवासनं प्रतिवदन्ति KalyāKā. 8. 59.

**अनिलपुरोहित** (anila-purohita) *m.* wind as the priest चारुवारिदघटाघटाहतैरम्बुभिः स्तनितमन्त्रपाठकः। तं पुरोऽनिलपुरोहितः शनैरभ्यषिञ्चदलघुं महीभृतम् Rāgh. 11.15.

**अनिलपूरणोत्थ** (anilapūraṇottha) *adj.* originating from the filling of the wind गङ्गातरङ्गानिलपूरणोत्थकपालनादच्छलतश्च यस्य। विधुर्यथार्थद्विजराजतार्थं त्रयीमिवाभ्यस्यति सोऽवताद् वः ŚrīKaC. 1. 16.

**अनिलपूर्णा** (anila-pūrṇā) *adj.* (*f.*) filled with air यथा ह्यनिलपूर्णानां (?यां) दृतो(?दृतौ) स्थित्वा सुशिक्षितः। प्रतरति PauṣkS. 22.67.

**अनिलप्रकीर्तिता** (anila–prakīrtitā) *adj.* (*f.*) narrated by the wind-god वक्ष्ये ···। प्रजापतेः सृष्टिमिमामनुत्तमाम् ।··· अनिलप्रकीर्तिताम् VāyuP. i. 3.7.

**अनिलप्रकृति** (anila–prakṛti) *adj.* having wind-humour (prominently) in the constitution पित्तानिलप्रकृतयः स्नेहं रात्रौ पिबेयुः KāśyaS. 184.41; पिशुनोऽलसोऽनिलप्रकृतिः।··· शनैश्चरः LaJāta. 2(3). 7; [*m.* name (or epithet) of the planet Saturn, PW., MW., APTE; *adj.* having an airy or windy nature, MW.; of windy nature, APTE]

**अनिलप्रकृतिक** (anilaprakṛti–ka) *adj.* [*f.* -ī] **1** having wind-humour (prominently) in the constitution धात्री ··· पित्तानिलप्रकृतिकी पट्ठक्षीगापट्टप्रजा। कुतः(?कृताः) पङ्गुजडा मूकाः KāśyaS. 139B.21; **2** having the element wind as the material cause शरीरम् ··· भूजलानिलप्रकृतिकमपि नस्यात् NyāyKa. 38. 9.

**अनिलप्रकोप** (anila–prakopa) *m.* excess of wind-humour अतिविस्रंसनाद् गुदभ्रंशानिलप्रकोपसंज्ञानाश ··· (परि) कर्तिकाः KāśyaS. 157A. 9.

**अनिलप्रचण्ड** (anila–pracaṇḍa) *adj.* fierce or strong like the wind or storm मुष्टिना मुष्टिकमद्य रुष्टम्। हत्वा चरिष्याम्यनिलप्रचण्डः प्रलम्बमम्भोदमिवान्तरिक्षे BālC 5. 7.

**अनिलप्रचलित** (anila–pracalita) *adj.* shaken by the wind ततो निषादास्त्वरिताः प्रवव्रजुर्यतो मुखं तस्य भुजंगभोजिनः। तदाननम् ··· समभ्ययुर्गगनमिवार्दिताः खगाः।··· महा (v. l. यथा) निलप्रचलितपादपे वने MahāBhā. i. 24. 13.

**अनिलप्रतिहत** (anila–pratihata) *adj.* obstructed by the wind व्यक्तं तत्र मनो निधाय भवता मुक्ता शरीरेण सा। मार्गं पोत इवानिलप्रतिहतः कृच्छ्रात्तथा गाहसे DhūrtaViSam. 4. 23.

**अनिलप्रद** (anilaprad-a) *adj.* [*f.* -ā] **1** causing (the disorder of) wind-humour यवः स्वादुर्गुरुरप्यनिलप्रदः AṣṭāSaṁ. i. 95. 21 (1. 17); वर्षाः शीता विदाहिन्यो वह्निमान्द्यानिलप्रदाः BhāvPra. (Bhā.) 5. 332; 6(5). 35; **2** causing storm or gale जलदोदकप्रतिसूर्यो भानोर्याम्येऽनिलप्रदः NāraS. 47. 3; 49. 1.

**अनिलप्रधान** (anila–pradhāna) *adj.* having (the disorder of) wind-humour predominantly बस्तिरनिलप्रधानेषु प्रयुज्यते AṣṭāSaṁ. i. 144.13 (1. 28)

**अनिलप्रपीडित** (anila–prapīḍita) *adj.* extremely afflicted by (the disorder of) wind-humour तदन्नपानमनिलप्रपीडितं श्लेष्मणा च विबद्धमार्गम् ··· न बहिर्मुखोभवति CaraS. iii. 2.12 (1941 Ed.); AṣṭāSaṁ. 1. 70.13 (1.11)

**अनिलप्रभव** (anila–prabhava) *adj.* arising from (the disorder of) wind-humour अशीतिर्वातिका रोगाः ···। अनिलप्रभवा ह्येते सर्वे बस्तिवशानुगाः BhelaS. 258.23 (8.6)

**अनिलप्रभाव** (anila–prabhāva) *adj.* having the force or vehemence as that of the wind (i.e. speedy) तैः कायमस्याश्यनिलप्रभावैर्विदार्य बाणैः ···। आजघ्निवान् ··· अश्वान् MahāBhā. vii. 115.16.

**अनिलप्रशम** (anila–praśama) *m.* allaying of (the disorder of) wind-humour नस्यमवसेचयेत् ···। अतिहसितान्तेऽनिलप्रशमः AṣṭāSaṁ. i. 157.20 (1.29)

**अनिलप्रेरित** (anila–prerita) *adj.* diverted by the wind प्रज्वलितो वह्निः ···। न पचत्योदनं सम्यगनिलप्रेरितो बहिः CaraS. vi. 3.274 (1941 Ed.)

**अनिलबन्धु** (anila–bandhu) *adj.* accompanied or assisted by the wind (*lit.* having wind as a friend) अनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः। अणुः प्रजातो हविषा समिध्यते BhāgP. xi. 12.18; [*m.* friend of wind, APTE]

**अनिलबल** (anila–bala) *adj.* having the strength like that of the wind (i. e. swift) खगो वदनम् ··· समाहरत् परिचपलः (v.l. समाहरत्यनिलबलः) MahāBhā. i. 24.14; *n.* **1** strength of wind-humour ईषदम्लाननम्लान् वा रसान् ···। लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्। भिषङ् मात्राविकल्पज्ञो दद्यात् तानपि कालवित् CaraS. vi. 3.193 (1941 Ed.) **2** force of the wind वणिजः ··· क्रमेण चावजगाहिरे ··· अनिलबलविलासप्रविचलिततरङ्गम् ··· महासमुद्रम् JātaMā. 89.4 (14.2); यद्येवं शकटमयोमयं सुबद्धं तत् स्याच्चेदनिलबलेरणप्रणीतम् VarāṅgaC. 12.85; नवधवलदुकूलैः कल्पिताः सैनिकानाम् ··· अनिलबलविलोला वैजयन्त्यो विरेजुः HarVi. 41.3; त्रिभुवनतिलकं नाम ·· राजसदनमासादयांबभूव कीर्तिसाहारनामा वैतालिकः — लक्ष्मीं बिभ्रद्ध्वजौघैः क्वचिदनिलबलोल्लोलवीचेर्धुनद्याः YaśasCam. i. 352.6; अनिलबलाभिधूतरुचिरकुसुमनिकररु(?र)चितोदहारे ··· आश्रमे ··· पालकाप्यम् ··· पप्रच्छ रोमपादः Hastyāyur. 194. 2 (2.13)

**अनिलभ** (anila–bha) *n.* the constellation Svātī (presided over by the wind-god) अजपाद् द्वितये याम्यमित्रेन्द्रानिलभेषु च। यत्कृतं शनिसंयुक्तं गृह्यते यक्षराक्षसैः VasiS. 39 29.

**अनिलभङ्गी** (anila–bhaṅgī) *f.* waves of the breeze क्वचिद् भृङ्गीगीतं क्वचिदनिलभङ्गीशिशिरता VidaMā. 1.31.

**अनिलभद्रक** (anilabhadraka) *m.* kind of chariot, APTE.

**अनिलभरित** (anila–bharita) *adj* filled with the wind अथाहम् ··· अनिलभरितरन्ध्रवर्त्मव्यक्तरूपाणाम् ··· अनेकपार्थिवसमरसंगृहीतानां चिह्नकानामपह्नुतार्करोचिषां चक्रवालेन जटिलीकृतदिगन्तरालो राजकुलान्निरगच्छम् TilaMañ. 116.9.

**अनिलभुज्** (anila–bhuj) *m.* name of a Rudra (*lit.* subsisting only on the wind) क्रोधनानिलभुग्भोगिग्रसनोदुम्बरेश्वराः MṛgendraT. i. 13. 134 (comm. ब्रह्माण्डादधोवर्तिनो रुद्रान् कथयितुमाह)

**अनिलभू** (anila–bhū) *m.* born of the wind-god **1** Hanūmat अनिलभुवा वन्दिताभ्यां पुरैव। पद्भ्याम् ···मातुर्निमाय पापक्षयमथ विदधे पुष्पकस्यात्र देवी PṛthvīVi. 11. 89, आलक्ष्य घोरां तनुमनिलभुवो भूमिकन्या चकम्पे Rāgh. 13.72; **2** Bhīma दैत्यस्थान् राजपुत्रान् क्षितितलमनयद् बाहुना स्कन्धमध्यात। क्रोधान्धोऽरन्निसीम्ना स पुनरनिलभूर्दारुणं तस्य(जटासुरस्य)शीर्षम् BhārCam. 5. 41.

**अनिलभूमिष्ठा** (anilabhūmiṣṭh-ā) *adj.* (*f.*) found in the land called *anila* (i. e. found in the land which is waterless and full of thorny plants) (cf. ŚilpaRa. i. 3. 12) भूराग्नेयी विनिन्दिता।··· भूमिरशुभा वायवी स्मृता। अनलानिलभूमिष्ठाः शिला लिङ्गेषु वर्जिताः ĪśānŚiPa. ii. 36.55.

**अनिलभृत** (anila–bhṛta) *adj.* filled with the wind महादेवी तु ··· अविदूरवर्तिनि कटंकरकुटीरके ··· निद्रायन्तम् ··· अनिलभृतभस्त्राध्मातजठरम् ··· अष्टवङ्कनामपदं लेसिकापसदम् ··· अनुनयन्ती च दृष्टा YaśasCam. ii. 43.5.

**अनिलभोजन** (anila–bhojana) *adj.* subsisting only on the wind वर्षशतं मुनिः। अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः BhāgP. iv. 1. 19; *m.* snake (who subsists on the wind) भोगिनाम् ··· नव दन्तास्तु सविषाः ···। उक्तैः कतिपयैर्दन्तैर्दशन्त्यनिलभोजनाः ĪśānŚiPa. i. 39.33.

**अनिलभोजिन्** (anilabhoj–in) *adj.* subsisting only on the wind दीक्षितो भगवान् कृष्णस्तताप ···। ऊर्ध्वबाहुर्निरालम्बः ···। फलाम्ब(?म्ब्व)निलभोजी LiṅgaP. i. 69. 76.

**अनिलभ्रम** (anila–bhrama) *m.* movement of the wind गतिलिप्तानवत्यंशोऽथवा स्थूलं पलात्मकम्। गर्भभूजात् पृष्ठभूजं तैर्ग्रहोऽस्त्यनिलभ्रमात् SiddhāTaVi. 150. 19.

**अनिलमञ्जरी** (anilamañjarī) *f.* a variety of plant *nirguṇḍī*, *Vitex negundo* शो(?शे)फालिका शीतभीरुवनकोऽनिलमञ्जरी। निर्गुण्डी MadaPāNi. 10.159.

**अनिलमण्डल** (anila–maṇḍala) *n.* **1** mystic circle (in the body below the navel-region) इडामुखे नाभिसरोरुहे च धूम्रं विचिन्त्यानिलमण्डलेयम्। संयोज्य तद्योगजवायुनाङ्गं संशोष्य तं पिङ्गलया प्रमुञ्चेत् TantrSa. 5. 10; शान्त्यै पूजयेद् वारिमण्डले।··· लाभायानिलमण्डले TantrRā. 6. 37; **2** whirlwind ध्वान्तैर्घोरतमां तमीमगणयन् वृष्टिं च धारामयीं चण्डं चानिलमण्डलं सखि हरिद्वारं तवासौ स्थितः UjjvaNīMa. 219. 10.

**अनिलमार्ग** (anila–mārga) *m.* **1** respiratory passage or trachea गङ्गाद्वारमुपेत्य शीतलशिलामाविश्य पद्मासने संरुध्यानिलमार्गमम्बुदतनुं ध्यायेच्चिरं चेतसा GopāKeCan. 71. 14; **2** path of the wind, sky मेघशब्दाग्रे वायुशब्दाग्रे च पथशब्दे प्रयुज्यमाने आकाशनामानि भवन्ति।··· अनिलपथः। अनिलमार्गः comm. *on* NāmMā. 53; cf. **अनिलपथ.**

**अनिलमुख्य** (anila–mukhya) *adj.* having wind as the prominent (element) यतः सर्वं जातं वियदनिलमुख्यं जगदिदम् ·· स विभुः ··· मम भवतु कृष्णोऽक्षिविषयः KṛṣṇaA 2.

**अनिलमूढता** (anila–mūḍhatā) *f.* disturbed movement of wind-humour स्रोतोरोधबलभ्रंशगौरवानिलमूढताः।··· लिङ्गं मलानां सामानाम् AṣṭāHṛ. i. 13. 23; SiddhYo. 81. 5 (comm. वायोर्मूढता सम्यगसंचारः)

**अनिलमूत्रकृच्छ्र** (anila–mūtrakṛcchra) *n.* strangury caused by (the disorder of) wind-humour स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद् रसांश्चानिलमूत्रकृच्छ्रे CaraS. vi. 26.45 (1941 Ed.); SiddhYo. 32. 2.

**अनिलमूर्तिमत्** (anilamūrti-ma(n)t) *adj.* having the form of vital air श्रोत्रं त्वगीक्षणं घ्राणं जिह्वा चेतीहितात्मकः। संघातः प्रोच्यते जीवश्चिद्रूपोऽनिलमूर्तिमान् YogVā. vi(2). 145.6

**अनिलम्भ** (a–nilambha) *adj.* independent अचिन्त्यमतिमन्तस्ते अक्षया वोधिसागराः।·· ज्ञानेऽत्र हि रतिस्तेषामनिलम्भे निरालये GaṇḍVyū. 22. 22; 12. 19; अनिलम्भसुनिर्मितसमन्तनिर्माणप्रतिभासेन बोधिसत्त्वसमाधिना ··· ते बोधिसत्त्वास्तान् भगवतो वैरोचनस्य बुद्धविकुर्वितसमुद्रानवतरन्ति GaṇḍVyū. 28. 25; *m.* **1** name of a *kalpa* सुरेन्द्राभा नाम देवकन्या ··· अवोचत् ···। अनिलम्भो नाम कल्पोऽभूत्, तत्र मे चतुरशीतिर्बुद्धकोटीनियुतशतसहस्राण्याराागितानि GaṇḍVyū.

350. 19; **ii** name of a samādhi, cf. **अनिलम्भसमाधि** [DBHS.]

**अनिलम्भचक्षुर्वैरोचन** (anilambhacakṣurvairocana) *m.* name of a Tathāgata उत्तरपूर्वायां दिशि सर्वरत्नरुचिरायां लोकधातौ अनिलम्भचक्षुर्वैरोचनो नाम तथागतः ··· न चक्षुष आभासमागच्छति GaṇḍVyū. 66. 1 [DBHS.]

**अनिलम्भचक्षुस्** (anilambhacakṣus) *m.* name of a Tathāgata उत्तरपूर्वस्यां दिशि ··· अनिलम्भचक्षुषस्तथागतस्य बुद्धक्षेत्राद्धर्मधातुसुनिर्मितप्रणिधिचन्द्रो नाम बोधिसत्त्वः ··· सहालोकधातुस्तेनोपसंक्रान्तः GaṇḍVyū. 8. 21 [DBHS.]

**अनिलम्भनिकेतनिरत** (anilambhaniketanirata) *m.* name of a samādhi अनिलम्भनिकेतनिरतो नाम समाधिः MahāVyu. 21. 114 [DBHS.]

**अनिलम्भमति** (anilambhamati) *m.* name of a Bodhisattva अहं सर्वत्र बोधिसत्त्वजननी भविष्यामि। यथा च मैत्रेयस्य बोधिसत्त्वस्य तथा··· अनिलम्भमतेः ··· बोधिसत्त्वस्य GaṇḍVyū. 347. 30 [DBHS.]

**अनिलम्भसमाधि** (anilambha-samādhi) *m.* name of a samādhi बहुसमाधिप्रतिलब्धश्च स गद्गदस्वरो बोधिसत्त्वो महासत्त्वः। तद्यथा ··· अनिलम्भसमाधिप्रतिलब्धो ज्ञानमुद्रासमाधिप्रतिलब्धः SaddhaPuṇ. 244.15 [DBHS.]

**अनिलम्भसुनिर्मित** (anilambhasunirmita) *m.* name of a Bodhisattva अनिलम्भचक्षुर्वैरोचनो नाम तथागतः ··· सार्धमनिलम्भसुनिर्मितबोधिसत्त्वपूर्वंगमेन सर्वबोधिसत्त्वपर्षन्मण्डलेन, GaṇḍVyū. 66. 2 [DBHS.]

**अनिलय** (a-nilaya) *adj.* [*f.* - ā] **i** having no resting place, not resting अनिलया चाभया चानिलया तद् वायुः न ह्येष कदा च नेलयति AitBr. 24.6 (645) (Sāy. निलयो निवासः स नास्ति यस्याः वायुमूर्तेः सेयमनिलया); KauṣīBr. 27.5 (132.12); अथ प्रजापतेस्तनूः ···। कल्याणी चानिलया चापभया ··· चेति तन्वः ĀśvaŚS. II. ii. 13.13; अध्वर्यो येषां वा अनिलया प्रजापतेस्तन्वं विद्वान् होता भवत्यनिलयो वै स होता भवत्यनिलयास्ते यजमाना भवन्ति ŚāṅkhāŚS. x 19. 2; निलयार्थी यूनबद्धं न प्रविशेत्। अनिलयः स्यात् KāṭhGS. i. 4. 5; अहं त्रस्ता वनं गता ।··· चराम्यनिलया सुभ्रु सा तवान्तिकमागता MahāBhā. iv. 2)8*(4); RasSa. 175(14); **ii** having (i. e. requiring) no support अनिलये अनाधारे ··· अचिन्त्यशक्तिमतीत्यर्थः VedāntKau. 34. 12 (*on* i. 1.20)

**अनिलयज्ञान** (anilayajñāna) *m.* name of a Bodhisattva अहं सर्वत्र बोधिसत्त्वजननी भविष्यामि। यथा च मैत्रेयस्य बोधिसत्त्वस्य, तथा ··· अनिलयज्ञानस्य ··· बोधिसत्त्वस्य GaṇḍVyū. 348. 1 [DBHS.]

**अनिलयन** (á-nilayana) *n.* non-support, non-refuge तदनुप्रविश्य। ··· अभवत्।··· निलयनं चानिलयनं च TaiĀ. viii. 6. 1 (739.9); TaiU. 2.6 (Śaṅ. निलयनं नीडः आश्रयः ··· अनिलयनं तद्विपरीतम्); *adj.* not requiring a support यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति TaiĀ. viii. 7. 1 (740. 3); TaiU. 2. 7; अपवर्गश्चापि भवति योऽसौ भगवति ··· अनिलयने परमात्मनि वासुदेवेऽनन्यभक्तियोगलक्षणः BhāgP. v. 19. 20; अनिलयने स्वतन्त्रे ··· प्रतिष्ठां यदैवैष जीवो लभते PrakaVi. 114.23; अनिलयने अनाधारे ŚrutaPra. iA. 82. 19 (*on* i. 1.1); जगदाश्रयत्वान्निलयनम्। ··· स्वाश्रयत्वादनिलयनम्। न विद्यते स्वातिरिक्तं निलयनं यस्येति NyāySu.(Ja.) 204A. 9 (*on* i. 4. 6); अनिलयने स्वयमाश्रयरहिते Śivārka-MaDī. ii. 228. 31 (*on* iii. 2. 4)

**अनिलयनत्व** (anilayana-tva) *n.* the state of not being the support (of anything) निलयनत्वं सर्वाधारत्वम्, तदभावोऽनिलयनत्वम् LaCandr. 762.32.

**अनिलयन्ती** (a-nilayantī) *adj.* (*f.*) not resting एता वै देवेषवः प्रणिहिता अनिशिता अनिलयन्तीरेषु लोकेषु सर्वं पाप्मानमपसेधन्तीस्तिष्ठन्ति — अग्निः पृथिव्यां, वायुरन्तरिक्ष, आदित्यो दिवि JaimiBr. 3.310.

**अनिलयोनि** (anila-yoni) *f.* female organ affected by (the disorder of) wind-humour लवणवर्गयुतैर्मधुरौषधैः ···। अनिलयोनिषु पूरणमिष्यते KalyāKā. 17. 77.

**अनिलरंहस्** (anila-raṁhas) *adj.* having speed like that of the wind, fleet or swift like the wind शतशो हयाँल्लेभे स वासविः। राजंस्तित्तिरिकल्माषाञ्श्रीमाननिलरंहसः। प्रादाद् भ्रात्रे प्रियः प्रेम्णा राजसूये MahāBhā. iii. 79. 24; गरुडानिलरंहोभिर्यन्तुर्वाक्यकरैर्हयैः। दान्तैरश्मकदायादं त्वरमाणोऽभ्यहारयत् MahāBhā. vii. 36.21; शरवृष्टयः।··· निपेतुर्वै गरुडानिलरंहसः MahāBhā. vii. 172.22; गाधिरपि··· अतिवृद्धाय ब्राह्मणाय दातुमनिच्छन्नेकतः श्यामकर्णानामिन्दुवर्चसामनिलरंहसामश्वानां सहस्रं कन्याशुल्कमयाचत ViṣṇuP. iv. 7.14; स यत्र यत्रानिलरंहसं भृगुश्चिक्षेप रोषेण युतः परश्वधम्। ततस्ततश्छिन्नभुजोरुकंधरा नागा हयाः शूरनरा निपेतुः BrahmāṇḍP. ii. 38. 40; दधाव रावणः क्रोधाद्रथेनानिलरंहसा PadmP.(Ra.) 12.253; यदूत्तमौ।··· रथेनानिलरंहसा। आयातौ स्वपुरम् BhāgP. x. 45.49; GaṇeP. ii. 12.22; जम्बूनामा ···। जगाम धाम धर्मर्द्धे रथेनानिलरंहसा PariPar. 2.94; कुब्जेन प्रेरितान्वीक्ष्य वाहाननिलरंहसः। दधिपर्णनरेन्द्रोऽथ विस्मयादित्यचिन्तयत् PāṇḍaC. 6.798.

**अनिलरक्त** (anila-rakta) *n.* **A** blood affected by (the disordered) wind-humour तासां यथास्वं तुर्यांशविभागेन पंचसप्तत्यधिकं शतकमनिलरक्तं वहति AṣṭāSaṁ. i. 228.12 (2. 6); **B** (du.) (disordered) wind and (vitiated) blood सन्धिष्वनिलरक्ताभ्यां शोफोऽन्तर्बहिराश्रयः। छर्दिज्वरारुचिकरो भवेद्वातास्रसंज्ञकः RasRaSa. 21.171; **C** name of a disease (also called *vātarakta*) caused by (the disordered) wind-humour and (vitiated) blood [Āyurvedīya Śabdakośa]

**अनिलरक्तक** (anilarakta-ka) *n.* name of a disease caused by (the disorder of) wind-humour and (vitiated) blood (गुडूचीमोदकम्) भक्षयेदेतन्नरः ···। नास्य कश्चिद्भवेद्व्याधिः ··· नानिलरक्तकम् BhāvPra.(Bhā.) 8(1).759.

**अनिलरथ** (anila-ratha) *m.* chariot in the form of air भूताकाशेऽनिलरथं समारूढास्म्यहं ततः। आनीता ··· तेनाहमिममालयम् YogVā. iii. 58.29 (comm. अनिलः प्राणो वातस्कन्धो वा तद्रूपं रथम्। तेनानिलरथेन)

**अनिलरय** (anila-raya) *m.* horse (*lit.* having speed like that of the wind) वाजी च ···। क्रमगकेसरिकेसरिविक्रमानिलरथै( ? यै )कशफा गृहभोजनः KośaKaTa. 1.6012.

**अनिलरविकरस्पर्श** (anilaravikara-sparśa) *m.* contact with the wind and the rays of the sun तेनैवं काननेऽस्मिन्ननिलरविकरस्पर्शमात्रोपसर्पत्संपर्क पाल्यमाना विगुणदिनदशादुःस्थितिं प्रे( ङ्ख ? )यन्ती ··· वसामि UdaySuKa. 135.9.

**अनिलरुज्** (anila-ruj) *f.* disease caused by (the disorder of) wind-humour स्यात् ···। गुल्माक्षिरोगविषमज्वरभीर्गुरौ तु पापार्दितेऽनिलरुजोऽपि TājiNī. 2(5)(6).1(237)

**अनिलरोगघ्न** (anilarogaghn-a) *adj.* which cures the disease caused by (the disorder of) wind-humour अभ्यङ्गो गात्रभेदे घृतैर्नतः। तैलैश्चानिलरोगघ्नैः पीडिते मातरिश्वना AṣṭāSaṁ. ii. 26. 4 (4. 5)

**अनिलरोगहित** (anilaroga-hita) *adj.* good or beneficial in the case of the disease caused by (the disorder of) wind-humour स्निग्धदुग्धदधिभोजनपानान्यम्लकानि ··· अनिलरोगहितानि KalyāKā. 12.12.

**अनिलरोगिन्** (anilarog-in) *adj.* suffering from the disease caused by (the disorder of) wind-humour मृद्वी शय्याग्निसंतापो ब्रह्मचर्यं तथैव च। ··· योज्यान्यनिलरोगिषु SuśruS. iv. 4.26; सर्वेष्वनिलरोगिषु। ··· लशुनान्युपयुञ्जीत KāśyaS. 175B. 39; ब्रह्मचर्यशयनानि मृदूनि। ··· प्रस्तुतान्यनिलरोगिषु नित्यम् KalyāKā. 12. 13; मधुस्नेहनकल्काख्यकषायावापतः क्रमात्। त्रीणि षड् द्वे दश त्रीणि पलान्यनिलरोगिणाम् (निरूहणम्) SiddhYo. 76(1).5; हिता ध्मानप्ररुद्धाय तथा वानिलरोगिणे।··· मदिरा ··· तेभ्यो गजेभ्यो दातव्या Hastyāyur. 571. 15 (4.3)

**अनिलर्क्षक** (anilarkṣa-ka) *adj.* connected with the constellation Svātī वैशाखस्य चतुर्दश्यां सौरिवारेऽनिलर्क्षके। आद्यावतारः सिंहस्य SkandP. ii(2). 16. 62.

**अनिललय** (anila-laya) *m.* quick movement of the wind अनिललयप्रेङ्खोलनकलक्वणत्किङ्किणीजालवाचालपालिध्वजध्वानारब्धविद्याधरवधूद्वेल्लितविधिभिः ··· चैत्यालयैः ··· उपशोभितं राजपुरं नाम नगरम् YaśasCam. i. 20. 3.

**अनिललुलित** (anila-lulita) *adj.* [*f.* - ā] shaken or tossed by the wind नृपतिः ··· उत्थाय ··· उत्तानतलैः करपुटैरनिललुलितामाकाशकमलिनीमिव दर्शयता ··· अन्तःपुरिकाजनेन ··· अनुगम्यमानः शुकनासभवनं गत्वा ··· उत्सवमकारयत् Kād. 73. 21; नखाङ्कं नारीणामनिललुलितं केतकदलम् ···। निरीक्षन्ते ··· चकितमिव काशीजनपदाः SaduktiKa. 205.1.

**अनिललोल** (anila-lola) *adj.* **A** moving like the wind नानेनानिललोलेन ···। नुन्ना ··· नो ···। अभाजि ··· सेनासीमन्तिनी द्विषः HarVi. 43.176 (comm. अनिलवल्लोलेन); **B** moving due to the wind अनिललोलपताकापटसहस्रमरिकुलप्रलयाय मुक्तशिखमिवोत्खातशस्त्रपुरुषकृतपरिक्षेपं रथमारूढः ··· नृपकुमारः ··· अनिलरंहसा निररी[ र ]मत् TilaMañ. 88. 18; अनिललोलकल्लोलदोलायमानद्विजलचरपतत्त्रिमिथुनम् ··· अदृष्टपारसरस्तीरमव्रजम् TilaMañ. 359. 21.

**अनिललोलित** (anila-lolita) *adj.* [*f.* -ā] **i** shaken by the wind इति तस्य वचः श्रुत्वा बलिनस्तनुमध्यमा। कम्पमाना तमवदद्वल्लीवानिललोलिता RāmāMañ. 455. 14; तौ दुष्टौ विनिपेततुः। वृन्तादिव फले पक्वे तालेनानिललोलिते ŚivaP. ii(5). 59.26 (294A.14); **ii** blown by breeze सीत्कारगायदामोदिमधुरानिललोलिता।··· पुष्पवृष्टिः पपात ह YogVā. i. 32.18.

**अनिलवचस्** (anila-vacas) *n.* speech of the wind-god इत्याकर्ण्यानिलवचो मुनयः प्रीतमानसाः। प्रोचुः प्रणम्य तं वायुं शैवागमविचक्षणम् ŚivaP. vii (1). 5.64 (508A. 3)

**अनिलवत्** (anila-vat) *adv.* like the wind राक्षसपुंगवाः···। जगद्भ्रमन्तोऽनिलवद्दुरासदा रणेषु Rāmā. vii. 5. 45; काले विशालेऽनिलवत्प्रयाते लङ्कापतिः पुष्पकमित्युवाच DaśāvaC. 7.69; दोषानौषधवद्धनाननिलवच्छुष्केन्धे( Read °न्ध )नान्यग्निवत् ··· विनिहत्य यः ··· भ्राजितः EI. xviii. 248. 44.

**अनिलवर्त्मन्** ( anila-vartman ) *n.* path of the wind, atmosphere दासोऽपि स्वामितामेति ··· द्विजोऽपि मातङ्गजातौ जायते ··· मातङ्गोऽपि गत्वा द्विजत्वमनिलवर्त्मना सर्वतः संचरति TilaMañ. 406.15.

**अनिलवर्धिनी** ( anilavardh-inī ) *adj.* (*f.*) increasing wind-humour मृत्तिका वारणगता पच्यतेऽनिलवर्धिनी Hastyāyur. 280.24 (2.56)

**अनिलवश** ( anila-vaśa ) *m.* [Abl.] **1** because of (the force of) the wind अनिलवशाच्चलितमिव तमालकाननम ··· शबरसैन्यमद्राक्षम् Kād. 29.9; AṣṭāSaṁ i 107.2 (1.20); केचनानिलवशात्करोपलाः ··· दिशां मुखे। नासिकाभरणमौक्तिकश्रियो नाटिकां क्षणमिवाललम्बिरे Acyutarā. 4.14; **2** due to (the disorder of) wind-humour देहे क्रुद्धोऽनिलवशात् कृत्स्नेऽर्धेऽवयवेऽपि वा। दोषो विकारं कुरुते खे वर्षमिव तोयदः AṣṭāSaṁ. i. 107.2 (1.20); **3** [Inst.] due to the motion of the wind दिनकरवशेन कथितावुदयास्तौ सांप्रतं प्रवक्ष्यामि। प्रतिदिनमनिलवशेन व्योमगकुम्भोद्भवोडूनाम् ĀryaSi. 10.1(110)

**अनिलवशजनित** ( anilavaśa-janita ) *adj.* caused by the force of the breeze अनिलवशजनिततनुतरङ्गभङ्गमुत्प्लवमानमृणालमिव ··· अङ्गमुद्वहन्तम् ··· बाबालिमपश्यम् Kād. 42.14.

**अनिलवारण** ( anila-vāraṇa ) *adj.* which wards off (the disorder of) wind-humour बलातैलमिदं चास्यै दद्यादनिलवारणम् SuśruS. iv. 15.29; *n.* warding off or removal of (the disorder of) wind-humour स्वेदनान्यतिसुखोष्णसुखानीत्येवमाद्यनिलवारणमिष्टम् KalyāKā. 12.14.

**अनिलविकीर्यमाण** ( anila-vikīryamāṇa ) *adj* which is being scattered by the wind आसीच्चास्य मनसि।··· शीतांशुरुदितः ··· आहोस्विदनिलविकीर्यमाणसीकरधवलितभुवनाम्बरसिन्धुर्धरातलमवतीर्णा Kād. 201.9.

**अनिलविक्रम** ( anila-vikrama ) *adj.* having (speedy) strides like that of the wind प्रायाद्राजपुत्रः ··। समारुह्य तमेवाश्वं सुपर्णानिलविक्रमम् MārkP. 22.50; हनुमान् ···। दक्षिणाभिमुखस्तूर्णं पुप्लुवेऽनिलविक्रमः AdhyāRā v. 1.7.

**अनिलविधुता** ( anila-vidhutā ) *adj.* (*f.*) tossed by the wind मुहुः ··· अनिलविधुतामलकपद्धतिं सलीलमुत्क्षिप्य ··· श्रवणशिखरमारोपयन्तम् ··· ऊ( ? उ )र्वीपतिकुमारमद्राक्षम् TilaMañ. 312.3.

**अनिलविनाश** ( anila-vināśa ) *m.* removal of (the disorder of) wind-humour घृतम्। सुखोष्णलवणाम्भसानिलविनाशहेतुम् ··· पिबेत् KalyāKā. 8.40.

**अनिलविमान** ( anila-vimāna ) *n.* aerial car मुहुरनिलविमानशंवरालीललनविसोढविशालपुच्छदण्डः। सह दिनपतिना कुतूहलित्वादयमपि देव दिवः प्रयाति पारम् RāmC. 6.56.

**अनिलविलुलित** ( anila-vilulita ) *adj.* tossed or shaken by the wind अनिलविलुलितैरौर्ध्वज्वलनधूमैरिवानुरञ्जिताभिः ··· निम्नगाभिसारिकाभिर्गाढमुपगूढम् ··· अम्भोनिधिमपश्यम् TilaMañ. 120.18; अनिलविलुलितविनीलालकालिकमनीयम् ··· वदनशतपत्रमुद्वहन्तीम् ··· कन्यकामद्राक्षम् TilaMañ. 161.2; 230.20.

**अनिलविलून** ( anila-vilūna ) *adj.* cut off by the wind स भ्राम्यन् ··· प्रतीये ··· मुद्गरः खे। व्यावल्गन्ननिलविलूनमूलबन्धो विन्ध्याद्रिः प्रलयसहस्रकोटिनेव RāmC. 34.47.

**अनिलविलोल** ( anila-vilola ) *adj.* **I** tossing because of the wind अनिलविलोलेन नीलतमेन तमालपल्लवचीरचीवरेणेव ··· शिरोरुहसंचयेन ··· प्रवृत्तकुचा ··· प्रतिहार्याजगाम HarṣaC. 226.16; **II** moving swiftly like the wind तेनानिलविलोलेन दूरं नीतोऽस्मि वाजिना YogVā. iii. 106.8.

**अनिलविलोलित** ( anila-vilolita ) *adj.* tossed by the wind अभ्राजतानिलविलोलितसांध्यरागपिङ्गीकृताभ्रशिखरक्षणलब्धसंस्थम्। शीतांशुबिम्बम् HarVi. 20.22.

**अनिलविवर्धिनी** ( anila-vivardhinī ) *adj.* (*f.*) increasing wind-humour मेदिनी। पाण्डुः कषायकटुका रूक्षानिलविवर्धिनी Hastyāyur. 280.18 (2.56)

**अनिलविषशमन** ( anilaviṣa-śamana ) *adj.* which allays (the disorder of) wind-humour and poison (अम्लिकाराजीवटकाः) अनिलविषशमना भुक्तमन्नं पचन्ति BhojanKu. 38.11.

**अनिलविषापह** ( anilaviṣāpah-a ) *adj.* removing (the disorder of) wind-humour and poison पाचनो दीपनश्चैव वृष्योऽनिलविषापहः (राजावर्तगुणाः) RasPraSu. 5.55.

**अनिलविष्टम्भ** ( anila-viṣṭambha ) *m.* obstruction of the (*apāna*) wind (अभयादिक्वाथः) विण्मूत्रानिलविष्टम्भवमिशोषारुचिं जयेत् ŚārṅgaS. ii. 2.34 ( comm. विष्टम्भो वातादीनामप्रवृत्तिः )

**अनिलवीजन** ( anila-vījana ) *n.* act of fanning with the breeze सुदृशाम् ··· अलकजालकजामनवस्थिताम्। व्यतनुत ··· मलयोऽनिलवीजनैः VasaViKā. 6.62.

**अनिलवीजित** ( anila-vījita ) *adj.* fanned by the breeze उपतटविटपिपल्लवानिलवीजितम् ··· पम्पाभिधानं पद्मसरः Kād. 22.22.

**अनिलवृत्ति** ( anila-vṛtti ) *f.* passing of the (*apāna*) wind विण्मूत्रानिलवृत्तिः सुखेन संभोजनस्नेहात् KāśyaS. 23A. 28.

**अनिलवृद्धि** ( anila-vṛddhi ) *f* increase in (the disorder of) wind-humour (ज्वरः) पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात्। हन्ति विमुञ्चति पुरुषं त्रिदोषजो धातुमलपाकात् SiddhYo. 1.189.

**अनिलवेग** ( anila-vega ) *m.* **1Ai** speed of the wind सा ···। जगामानिलवेगेन पादमूलं महात्मनः Rāmā. i. 53.6; **1Aii** force of the wind कोरकैरनिलवेगपातितैराववार नवमालिका भुवम् Ragh 11.11; **1B** force of wind-humour कोष्ठादुपस्नेहवदन्नसारो निःसृत्य दुष्टोऽनिलवेगनुन्नः।··· जठरं करोति SuśruS. ii. 7.6; **2** name of a Vidyādhara अनिलवेगो विद्याधरपुत्रो रणढक्कां श्रुतवान् KathāK. 142.3; 142.8; अनिलवेगसुभटस्य शिरश्चक्रेण चिच्छेद KathāK. 142.10.

**अनिलवेग** ( anila-vega ) *adj.* having the speed as that of the wind अनिलवेगम् ·· सहस्रं वाजिनां ते ददामि KarṇaBhā. 19; सुन्दरः ···। भ्रमन्ननिलवेगोऽयम् ··· चक्रतीर्थं ततो ययौ SkandP. ii(1). 24.29.

**अनिलवेगिन्** ( anila-vegin ) *adj.* swift like the wind भग्नेषु सैनिकेषु ··। समुत्तम्थेऽशनिवेगो रथेनानिलवेगिना TriṣaŚaPuC. iv. 7.272.

**अनिलवेदना** ( anila-vedanā ) *f.* **1** pain caused by (the disorder of) wind-humour विंशतिर्व्यापदो योनेः ···। चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः SuśruS. vi 38 11; RugVi. 62.4; **2** experience or vision of the wind-god शक्रः सूचीनिरीक्षणे। मारुतं प्रेषयामास ···। वातस्कन्धेभ्य एवादौ पतितानिलवेदना YogVā. iii. 73.60 ( comm. वायोः संवित् )

**अनिलवेदनावृद्धि** ( anilavedanā-vṛddhi ) *f.* increase in the pain caused by (the disorder of) wind-humour अनिलवेदनावृद्धिशमनार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तम् ··· सुपरिगृहीतं कृत्वा ततोऽस्मै ··· प्रणिदध्यात् AṣṭāSaṁ. ii. 56.2 (4.10)

**अनिलवेल्लित** ( anila-vellita ) *adj.* tossed or shaken by the wind अनिलवेल्लितैरहिनिर्मोकैर्धृतोत्तरीय इव ··· अवस्थितः ··· शाल्मलीवृक्षः Kād. 23 13; दृष्टवान् ··· अनिलवेल्लितपताकापल्लवतया प्राप्तुमुन्नतिप्रकर्षमारब्धसेवासमुचितोत्तरीयाञ्चलवीजनैः ··· आयतनम् TilaMañ. 155.3.

**अनिलवेल्ल्यमाना** ( anila-vellyamānā ) *adj.* (*f.*) being tossed by the wind हेलानिपातहतसंहतहस्तिहस्तहेतिः सहेत सहसानिलवेल्ल्यमानाः। सिंहः सटा अपि कथम् HarVi. 45.10.

**अनिलव्याघूर्णिता** ( anila-vyāghūrṇitā ) *adj.* (*f.*) whirled by the wind ज्वालाजालपरंपराभिरनिलव्याघूर्णिताभिर्बलाद्भूयो विश्वमिदं हिरण्मयमहाब्रह्माण्डभाण्डायते SamudraMa 2.14.

**अनिलव्याधि** ( anila-vyādhi ) *m.* disease caused by (the disorder of) wind-humour स्वरभेदानिलव्याधिपक्षाघातापतानके।··· स्वेदं यथायथं कुर्यात् AṣṭāSaṁ. i. 136.3 (1.26); कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम्। द्वाविंशतिरिमेऽध्यायाः AṣṭāHṛ. i. 1.43; (रसः) तिक्तः ···। धातुक्षयानिलव्याधीनतियोगात् करोति सः AṣṭāHṛ. i.10.16; [derangement of the bodily (internal) wind, APTE]; [Kośas give *anilavyādhi* as one of the meanings of *ākṣepaka*, ViśvaPra. 17.186; MediK. 15.76; ŚabdaRaSaK. 32.6]

**अनिलव्याधिविहित** ( anilavyādhi-vihita ) *adj.* prescribed for the disease caused by (the disorder of) wind-humour अथ वातोत्तरे ··· आतुरं तीव्ररुजमनिलव्याधिविहितमन्यतमतैलं पाययेत् AṣṭāSaṁ. ii. 89.12 (4.16)

**अनिलव्याध्यभिभूत** ( anilavyādhy-abhibhūta ) *adj.* overcome by the disease caused by (the disorder of) wind-humour मेदःश्लेष्मानिलव्याध्यभिभूतानां तैलम् ··· पानार्थमुपकल्पयेत् Hastyāyur. 582.5 (4.4)

**अनिलशान्ति** ( anila-śānti ) *f.* allaying of (the disorder of) wind-humour व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि। विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये CaraS. i. 6.36 (1922 Ed.); गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरितव्या CaraS. ii. 3.27 (1922 Ed.); SiddhYo. 30.2.

**अनिलशिशु** ( anila-śiśu ) *m.* child in the form of wind ध्रुवमनिलशिशुर्निपीतशेषो विषकलुषेण फणाभृता मुखेन। परिलुलितपटीरपल्लवः सन् मनसि यदाधित मोहमङ्गनानाम् Nalābhyu. 6.4.

**अनिलशूलनुद्** ( anilaśūla-nud ) *adj.* removing the pain caused by (the disorder of) wind-humour सौवर्चिकाम्लिकाजाजीमरिचैर्द्विगुणोत्तरैः। मातुलुङ्गरसैः पिष्टा गुटिकानिलशूलनुत् SiddhYo. 26.10.

**अनिलशूलहर** ( anilaśūlahar-a ) *adj.* curing colic and flatulence (अग्र्यः) एरण्डतैलाभ्यासो वर्ध्मगुल्मानिलशूलहराणाम् AṣṭāSaṁ. i. 81.15 (1.15)

**अनिलशोणित** (anila-śoṇita) *n.* name of a disease caused by (the disorder of) wind-humour and (vitiated) blood प्रमेहकुष्ठानिलशोणितारुचिविचर्चिकास्फोटविषेषु कण्डौ । मृदौ तथाग्नौ प्रवदन्ति मध्यां बले च मध्या अशने च ये स्युः KāśyaS. 19A.15; नित्यं विरेचनपरः …। शीतान्नपानमधुरातिकषायतिक्तसेवी जयत्यनिलशोणितरक्तपित्तम् KalyāKā. 9.48.

**अनिलशोणितपित्तरोगिन्** (anilaśoṇitapitta-rogin) *adj.* sick with (the disorder of) wind-humour, (vitiated) blood and (the disorder of) bile कल्केन तत्क्वथिततोयपयोविपक्वमाज्यं पिबेदनिलशोणितपित्तरोगी KalyāKā. 9.41.

**अनिलशोणितवारणार्थम्** (anilaśoṇitavāraṇārtham) *adv.* for the sake of the removal of a disease caused by (the disorder of) wind-humour and (vitiated) blood रास्ना° … °प्रियालैः । क्षीराम्लपिष्टघृततैलयुतैस्सुखोष्णैरालेपयेदनिलशोणितवारणार्थम् KalyāKā. 9. 36.

**अनिलश्री** (anilaśrī) *m.* name of a Bodhisattva अहं सर्वत्र बोधिसत्त्वजननी भविष्यामि … महेन्द्रदेवस्य अनिलश्रियः … अनुरूपस्वरस्य अभ्युच्चदेवस्य बोधिसत्त्वस्य GaṇḍVyū. 347.16 [DBHS.]

**अनिलश्लेष्मकासश्वासापहा** (anilaśleṣmakāsaśvāsāpahā) *adj.* (*f.*) removing (the disorders of) wind- and phlegm-humours, cough and asthma पिप्पली । सा शुष्का …। स्वादुपाकानिलश्लेष्मकासश्वासापहा सरा AṣṭāSaṁ. i. 77.14 (1.12)

**अनिलश्लेष्मजराधिवास** (anilaśleṣmajarādhivāsa) *m.* abode of the wind- and phlegm-humours and old age तादृग्विधं कश्मलमुद्वहंस्तु …। पित्तानिलश्लेष्मजराधिवासं को नाम विद्वान्वहतीह गर्वम् VarāṅgaC. 8. 63.

**अनिलश्लेष्मभव** (anilaśleṣma-bhava) *adj.* arising from (the disorder of) wind- and phlegm-humours तं चानिलश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्गम् SuśruS. vi. 22.7 = RugVi. 58.1.

**अनिलश्लेष्मविबन्ध** (anilaśleṣma-vibandha) *m.* obstruction of wind- and phlegm-humours आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ।… मन्दाग्नित्वं च नाशयेत् AṣṭāHṛ. i. 6.131.

**अनिलश्लेष्मश्वासकासापहा** (anilaśleṣmaśvāsakāsāpahā) *adj.* (*f.*) removing (the disorders of) wind- and phlegm-humours, asthma and cough पिप्पली ।… स्वादुपाकानिलश्लेष्मश्वासकासापहा सरा AṣṭāHṛ. i. 6. 160.

**अनिलश्लेष्महिता** (anilaśleṣma-hitā) *adj.* (*f.*) beneficial in (the disorders of) wind- and phlegm-humours ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः AṣṭāSaṁ. i. 36. 5(1.7)

**अनिलसंयुक्त** (anila-saṁyukta) *adj.* accompanied by the wind ततो भगवतादिष्टौ रणे पावकमारुतौ । चोदितौ विष्णुवाक्येन तौ मायां विचकर्षतुः।… सोऽनलोऽनिलसंयुक्तः सोऽनिलश्चानलाकुलः । दैत्यसेनां ददहतुः PadmP. v. 38.158.

**अनिलसंसृष्ट** (anila-saṁsṛṣṭa) *adj.* combined with (the disorder of) wind-humour एवं कटुतीक्ष्णैः कफे छर्दयेत् । स्वादुभिः पित्तयुते । अम्लैः सस्नेहैरनिलसंसृष्टे AṣṭāSaṁ. i. 140.4 (1.27)

**अनिलसंहति** (anila-saṁhati) *f.* gusts of wind स्थगयितुं प्रतिकूलविलोकनाः कुसुमिताः ककुभो नु वियोगिनाम् । कमलधूलिमुदानयताधिकस्तवनतो वनतोऽनिलसंहतिः HarVi. 3. 68.

**अनिलसंहित** (anila-saṁhita) *adj.* accompanied by the wind नाशीविषेभ्यो हि तथा बिभेमि …। न पावकेभ्योऽनिलसंहितेभ्यो यथा भयं मे विषयेभ्य एव BuddhaC. 11. 8.

**अनिलसख** (anila-sakha) *m.* [P. v. 4. 91] fire (*lit.* whose friend is the wind) मुहुस्तावच्छक्रं वरुणमजयो नन्दहरणे यमं बालानीतौ दवदहनपानेऽनिलसखम् Nārāy. x. 82. 9; [AbhidhāCin. 1099; ParaNā. 859; KośaKaTa. 1.448]

**अनिलसखमुख** (anilasakha-mukha) *adj.* having the fire at the tip लक्ष्म्या…स्पर्धया तत्सुतस्तन्नित्यावासं भवत्याः सुमुखि मम मनःपुण्डरीकप्रकाण्डम् । दग्धुं मुग्धे व्यवस्यत्यनिलसखमुखैराशुगैः RasSa. 171.

**अनिलसख्यभाज्** (anilasakhya-bhāj) *m.* fire (*lit.* enjoying friendship of the wind) परेतभर्तुर्मनसेव दूतीं नभस्वतेवानिलसख्यभाजः । त्रिस्रोतसेवाम्बुपतेस्तदाशु स्थिरास्थमायातवतीं निरास्थम् NaiṣC. 6. 109.

**अनिलसंक्षोभ** (anila-saṅkṣobha) *m.* agitation caused by the wind तेन सा … रक्षिता … अनिलसंक्षोभेषु नूतनाः संयोजयता रज्जूः TilaMañ. 145.4.

**अनिलसङ्ग** (anila-saṅga) *m.* obstruction of flatus तत्र गुदनाभिमेढ्रबस्तिशिरःसु सदाहं परिकर्तनमनिलसङ्गो वायुविष्टम्भो भक्तारुचिश्च भवति SuśruS. iv. 34.16.

**अनिलसङ्गचल** (anilasaṅga-cala) *adj.* moving due to contact with the wind सकलत्रिलोकविजयप्रभवं श्रमवारिसंगतमनङ्गपतिम् । इव वीजयन्त्यभिनभौ सुरभौ कदलीदलैरनिलसङ्गचलैः HammīMaKā. 5. 29.

**अनिलसंगत** (anila-saṅgata) *adj.* accompanied by the wind अग्निस्तृणजातानि दहत्यनिलसंगतः BhaviP. 789A.1 (iv. 126. 33)

**अनिलसङ्गतरला** (anilasaṅga-taralā) *adj.* (*f.*) tremulous owing to contact with the wind नभसः शर्वर्या सह विरतविरहविनोदनाय गतमनिलसङ्गतरलाभिरुपगसमयमवजित्यावर्जिताभिर्वैजयन्तीविततिभिरिव … रम्भागृहमपश्यत् TilaMañ. 228. 3.

**अनिलसंदुष्ट** (anila-sanduṣṭa) *adj.* morbidly affected by wind-humour स्फुटितो नखः । शुष्क( ? ष्य )त्यनिलसंदुष्टः सोऽनुद्धतनखो भवेत् Hastyāvur. 106. 10 (1. 15)

**अनिलसंनिरोध** (anila-sannirodha) *m.* obstruction of wind-humour हास्यात्प्रहास्यरजसानिलसंनिरोधाद्विमार्गगत्वाच्च हि भोजनस्य । वेगावरोधात् क्षवथोस्तथैव संजायतेऽपि मनुजां प्रतिधाम कासः HārīS. iii. 12. 2; हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसंनिरोधाः । विट्सङ्ग आध्मानमथाविपाका भविष्यतस्तस्य पुरःसराणि RugVi. 3.5.

**अनिलसंनिवेश** (anila-sanniveśa) *m.* presence of the wind परिखातटीष्वनिलसंनिवेशवलयितेन यज्ञानलधूमसमुदयेन समन्तादसितकाण्डपटेनेव विनिवारितप्रवेशं कलिकालदृष्टेः … प्रतिष्ठानं नाम नगरम् UdaySuKa. 20.15

**अनिलसम** (anila-sama) *adj.* equal to the wind गाण्डीवप्रेषिता बाणा मनोऽनिलसमा जवे MahāBhā. vii. 53.42.

**अनिलसमान** (anila-samāna) *adj.* similar to the wind (in speed) वासवः … अस्मै … हयमनिलसमानम् … दास्यति AhirbuS. 29.71.

**अनिलसमीरित** (anila-samīrita) *adj.* stimulated by (the disorder of) wind-humour संकुप्यतेऽनिलसमीरितं तत्तु पित्तं शूलं करोति जठरे मनुजस्य तीव्रम् HārīS. iii. 7. 6.

**अनिलसमुच्छ्रय** (anila-samucchraya) *m.* great increase in wind-humour ओजो विस्रंसते यस्य पित्तानिलसमुच्छ्रयात् । सः … शयनेप्सुरचेतनः SuśruS. vi. 39.43.

**अनिलसमुद्भव** (anila-samudbhava) *adj.* arisen from (the disorder of) wind-humour चापस्याद्ये त्र्यंशे गुदानिलसमुद्भवैर्विविधरोगैः ।… भवेन्मृत्युः Sārā. 46.38.

**अनिलसंपात** (anila-sampāta) *adj.* attacking like the wind पावकानिलसंपातो रराज युधि दानवः । पारमेष्ठ्ये स्थितः स्थाने लोकानां प्रभावाप्यये MatsyaP. 177. 59; *m.* encounter with (the gushing of) the wind (क्षोणीपतितनयः) अवतीर्य च द्वारि संभ्रान्तदौवारिककृतप्रणामः … अनिलसंपातेऽपि स्थैर्येण … ज्वलद्भिर्माणिक्यदीपैः समन्तादुत्सारिततमोवितानम् … वासभवनं विवेश TilaMañ. 174. 11.

**अनिलसंप्रवृत्त** (anila-sampravṛtta) *adj.* caused by the wind वेणुस्वनव्यञ्जिततूर्यमिश्रः प्रत्यूषकालेऽनिलसंप्रवृत्तः । संमूर्छितो गर्गरगोवृषाणामन्योऽन्यमापूरयतीव शब्दः Rāmā. iv. App. I. 16(86)

**अनिलसंभव** (anila-sambhava) *adj.* **A** born of wind (-element) धूमकेतुः शिखी च त्वं पापहानिलसंभवः । सर्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम् MahāBhā. ii. App. I. 14(11); **B** arising from (the disorder of) wind-humour चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः । जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः CaraS. vi. 3.70 (1922 Ed.); HārīS. iii. 2. 193; RugVi. 2.38; स्फोटाः …। कठिनाश्चिरपाकाश्च भवन्त्यनिलसंभवाः RugVi. 54. 5; आविकं तु पयः …। पथ्यं वातप्रकोपेषु कासे चानिलसंभवे BhojanKu. 133. 19; *m.* born of the wind-god, Bhīmasena अजातशत्रोर्धार्मिकतामनिलसंभवस्याध्यवसायसामर्थ्यमर्जुनस्य पराक्रमम् … चारीकृत्य … दुर्योधनमतिनिर्भरमालिलिङ्ग लक्ष्मीः AvantiKa. 47.7.

**अनिलसंमुख** (anila-sammukha) *adj.* facing the wind विण्मूत्रे विसृजेन्मौनी निशायां दक्षिणामुखः । न तिष्ठन्नाशु नो विप्रगोवह्न्यनिलसंमुखः SkandP. iii(2). 5.39; iv. 35. 57.

**अनिलसारथि** (anila-sārathi) *m.* fire (*lit.* having wind as the charioteer) मात्रा हि भुजगाः शप्ताः पूर्वं ब्रह्मविदां वर । जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः MahāBhā. i. 13. 35; i. 49. 7; यत्र संनिहितो नित्यं स्वयमेव हुताशनः ।… अनलोऽनिलसारथिः MahāBhā. iii. 80. 77; PadmP. i. 24. 8; कुर्यात्कृष्णगतिः शेषं ज्वलितोऽनिलसारथिः । न तु राज्ञाभिपन्नस्य शेषं क्वचन विद्यते MahāBhā. xii. 68. 50; तेनाखिलौषधीजन्म भवत्यनिलसारथे MārkP. 99.31; अथान्येद्युरतिस्फीता पत्यौ प्रीतिमुपेयुषी । बभार गर्भं गान्धारी शमीवानिलसारथिम् PāṇḍaC. 2.1.

**अनिलसुत** (anila-suta) *m.* son of the wind-god **i** Hanūmat एवमुक्तो महातेजा रावणो राक्षसेश्वरः । आजघानानिलसुतं तलेनोरसि वीर्यवान् Rāmā. vi. 47.58; स तथा ह्रियमाणोऽपि कुम्भकर्णात्मजेन हि । आजघानानिलसुतो वज्रवेगेन मुष्टिना Rāmā. vi. 64.20; दृष्ट्वानिलसुतं देवा गच्छन्तं वायुवेगतः।… अब्रुवन्

160. 1; अनिलोल्लासिताभिर्नभस्तरुमञ्जरीभिरिव तर्जयन्तीभिरिव ··· पताकाभिरुपशोभमानम् ··· वासवदत्ताभवनम् ··· ददर्श VāsaDa. 217.1; अनिलोल्लासितकल्लोलशिखरसीकरारब्धदुर्दिनम् ··· पम्पाभिधानं पद्मसरः Kād. 22.15; अनिलोल्लासिताभिः कल्लोलततिभिस्ताड्यमानं क्षीरमगनज्जवेन तद्दारुभवनम् TilaMañ. 339.21.

**अनिलोल्लासिन्** (anilollāsin) *adj.* shaking due to the wind उद्यद्बालव्यजनमनिलोल्लासिकाशप्रसूनाः श्वेतच्छत्रं विकसितसिताम्भोजभाजो विलोक्य।··· श्रियः शारदीनाः NemiDū. 83.

**अनिलौघ** (anilaugha) *m.* gust of wind अभिमुखमनिलौघैर्वाति वातप्रमायां (प्रमीयां) स(र)णिमनुसृतानां वाक्यमाकर्ण्य तेषाम् VīraBhā. 11. 29.

**अनिलौघविघट्यमान** (anilaugha-vighaṭyamāna) *adj.* being disordered by the gust of the wind भाति स्म मूर्तिरनिलौघविघट्यमानमाञ्जिष्ठचामरतया चतुराञ्चितानाम् HarVi. 40. 36.

**अनिवर्त** (a-nivarta) *m.* an epithet of Rudra (*lit.* not turning back) अनिवर्ताय नमः स्वाहा AVPari. 36(9).8.

**अनिवर्त** (a-nivarta) *adj.* [*f.* -ā] not liable to turning back मर्त्याः ···। त्यक्ता मया ह्यशेषा आगम्य समाधिमनिवर्तम् LaliVi. 24. 43; अनिवर्तया श्रद्धया पुण्यं समार्जयन् अतृप्तः सर्वतथागतपूजासंभारसमुदानयनप्रयुक्तोऽप्रतिप्रस्रब्धप्रयोगो भवति GaṇḍVyū. 285. 32 [DBHS.]

**अनिवर्तक** (anivarta-ka) *adj.* [*f.* -akā, -ikā] **1** (deeds) not turning back (as far as their effects are concerned) महानदीषूर्मय इवानिवर्तकमस्य यत् पुराकृतम् MaiU. 4.2; MaitriU. 332.4(4); **2AI** (a-nivartaka) who does not turn back (from battle), who does not retreat महोत्साहो महावीर्यो बलवान् कामरूपधृक्। वानरो युद्धकुशलः संग्रामेष्वनिवर्तकः Rāmā. vi. 377*(2); उत्तरेण दशग्रीवः प्रविवेशानिवर्तकः। दक्षिणेन तु पार्श्वेन प्रविवेश शतक्रतुः Rāmā. vii. 29.16; लङ्कानाथस्य पुत्रेण निरस्त्रः सूर्यनन्दनः। कृतः संग्रामसौण्डेन संग्रामादनिवर्तकः PadmP.(Ra.) 60. 89; **2AII** not returning (to this world) (i.e. not subject to rebirth) (तीर्थे) अविमुक्ते मृता ये च सर्वे ते ह्यनिवर्तकाः MatsyaP. 185.60; कुलधर्मस्थिता ये च ते सर्वेऽप्यनिवर्तकाः KulārT. 2.30; संश्रिता मणिकर्णी यैस्ते याताश्चानिवर्तकाः SkandP. iv. 84.99; **2BI** which does not cause return (i.e. which does not cause rebirth) महान्तं पुरुषं देवं रविरूपं तमःपरम्। ब्रह्मवित्सोऽतिमृत्युं वै प्रयात्येवानिवर्तकम् BṛParāSm. 12.175(+171); अग्नौ विषजले वापि तथा चैव ह्यनाशके। अनिवर्तिका गतिस्तस्य पवनस्याम्बरे यथा MatsyaP. 186.35; KūrmaP. 746.8 (2.39); PadmP. i. 13. 30; अनिवर्तिका गतिस्तस्य मृतस्य MatsyaP. 191.119; ते यान्ति भास्करे लोके ...। भास्करादैश्वरे लोके चैश्वरादनिवर्तके SkandP. v(3). 82. 10; v(3). 30.10; ते पुत्राः ···। प्रणम्य तं परिक्रम्यायुर्मार्गमनिवर्तकम् ŚivaP. ii(2). 13.20 (82B. 14); कृतं दृष्टं त्वया सर्वं ज्ञातं याह्यनिवर्तकम् KalkiP. ii. 4. 8; **2BII** which does not remove, which does not set aside न चानिवर्तकं ज्ञानं प्रत्यङ्मोहस्य युज्यते। स्वानुभूतिविरुद्धत्वात् BṛĀraUBhVā. i. 4.1523; जातस्य जन्तोराद्येन ज्ञानेनाज्ञाने निवृत्ते तस्योत्तराणि सर्वाण्येवानिवर्तकानि स्युः IṣṭaSi. 64. 5; पत्न्य उपगायन्त्यः किं सामगानस्योपगातृणामृत्विजां च निवर्तकाः, किंवा दुन्दुभ्यादिवादित्रनादानुपगायन्त्यो भिन्नविषयत्वादृत्विजामनिवर्तकाः ŚāstrDī. 701.12 (*on* x. 4. 5); गुरुस्तज्ज्ञानं च कल्पितमिति चेच्छिष्यतज्ज्ञानयोरपि कल्पि[?त]त्वात्तदप्यनिवर्तकम् GītāBh.(Rā.) 69.1 (*on* 2.12); ज्ञानस्य त्रिरूपत्वविरहे भवतां स्वरूपभूतज्ञानवन्निवर्तकज्ञानमप्यनिवर्तकं स्यात् VedāSaṁ. 100. 14; आद्ये स्वगोचरावरणाज्ञाननिवर्तकमनिवर्तकं वा ŚatDū. 170.24; गवामयनान्तर्गते महाव्रते ···। तदिह किं पत्न्यः प्राकृतोपगानानुवादेन विधीयमाना ऋत्विजां निवर्तिकाः उताप्राकृतोपगानसंबन्धित्वादनिवर्तिकाः BhāṭṭDī. iii. 278.8 (*on* x. 4.6); **2C** which does not stop (i.e. which cannot be cured) सूरावज्ञारुचिर्नानारूपी चक्रे शिरःस्थितः। कृकलाशो नृपादेशः शिरोऽर्तिमनिवर्तिकाम् ŚāliC. 5.111.

**अनिवर्तकता** (anivartaka-tā) *f.* the state of being that which does not cause return द्वौ च गुणौ प्रतिलभते। जातिस्मरतागुणमनिवर्तकतागुणं च Sphuṭā. iv. 108.19 (*on* 4. 110)

**अनिवर्तकत्व** (anivartaka-tva) *n.* **1** the state of being that which does not remove ज्ञानस्य तु अनिवर्तकत्वान्नात्र समुच्चयोऽपि कर्मणा IṣṭaSi. 85.7; तत्त्वसाक्षात्कारस्य प्रारब्धफलकर्मप्रतिबन्धात्तत्स्वरूपतत्कार्यभोगसंपादकाविद्यालेशं प्रत्यनिवर्तकत्वम् VedāntKa. 525.25 (*on* iv. 1.15); कर्मवत् तन्नाशः स्यात् —इति चेत्, न ··· व्यक्तिभेदेन अविरोधे — जन्यव्यक्तेः तदविरोधेन अनिवर्तकत्वात् TarkSaṁ.(Ā.) 75. 8; ननु ज्ञानस्य कंचित्कालं प्रारब्धेन कर्मणा प्रतिबन्धेनानिवर्तकत्वेऽपि प्रतिबन्धक्षये लिङ्गदेहनिवर्तकत्वं भविष्यति JīvanVi. 45. 2; उत्तरात्मविशेषगुणत्वेन निवर्तकत्वेऽपि ज्ञानत्वेनानिवर्तकत्वात् Nyāyāmṛ. 19A. 7; 39B. 6; स्वनिवर्त्यप्रथमप्रभाव्यवहितायास्तस्याः द्वितीयादिप्रभायाः तमः प्रतीवाज्ञानं प्रत्यनिवर्तकत्वात् Nyāyāmṛ. 319B. 9; न चोक्तज्ञानानामनिवर्तकत्वात् GuruCandr. i. 127.24; **2** the state of being one who does not turn back or retreat (from battle) धीरस्य भावो धैर्यं संग्रामादनिवर्तकत्वम् YaśasCam. (comm.) i. 318. 19.

**अनिवर्तकत्वप्रसङ्ग** (anivartakatva-prasaṅga) *m.* undesired contingency of being that which does not remove or set aside भविष्यतो वा विश्वनिवर्तकस्य प्रमाणमात्रत्वेऽस्यैवानिवर्तकत्वप्रसङ्गात् NyāyKu. 64. 9; (तस्याकारस्य) मिथ्यात्वे भ्रान्तिज्ञानत्वादेव सुतरामनिवर्तकत्वप्रसङ्गात् ŚatDū. 179.26.

**अनिवर्तकत्वलाभ** (anivartakatva-lābha) *m.* acquirement of the status of being that which does not remove or set aside जीवेशभेदादिविषयकस्याप्यनिवर्तकत्वलाभः GuruCandr. i. 127.21.

**अनिवर्तकसत्त्वतस्** (anivartakasattva-tas) *adv.* due to the non-existence of that agency which sets aside or removes (अज्ञानम्) किमु नित्यमनित्यमेव चैतत्प्रथमो नेह समस्ति युक्त्यभावात्। अनिवर्तकसत्त्वतोऽस्य नान्त्यो न हि मिथ्यादविरोधि चित्प्रकाशः ŚaṅkaDigVi.(Mā.) 15. 106 (comm. निवर्तकसत्त्वाभावात्)

**अनिवर्तन** (a-nivartana) *n.* **AI** non-removal लोम्नां चानिवर्तनम् KauśiSū. 141. 4; **AII** non-retreat (from battle) युद्धेऽपराङ्मुखत्वं च आहूतस्यानिवर्तनम् दाराणां रक्षणं चैव इति तज्ज्योतिषां त्रयम् MahāBhā. ii. 573*(1); क्षत्त्रियस्य ··· युद्धेष्वनिवर्तनम् (धर्मः) PadārthaSaṁ. 272. 19; युद्धेष्वनिवर्तनं युद्धेषु विजयावधिः प्राणावधिर्वा आयुधव्यापारः NyāyKa. 276.18; युद्धे ··· आत्ममरणनिश्चयेऽप्यनिवर्तनम्। GītāBh.(Rā.) 683.7 (*on* 18. 43); **AIII** non-reversal मम चैव नियोगेन विधेश्चाप्यनिवर्तनात्। पाण्डवानां च कारुण्यात् प्राणान् धारय भारत MahāBhā. xi. 8.42; **AIV** non-denial (of a notion) विवक्षितोपलब्धेरनिवर्तने तदपेक्षयान्यस्या विधानायोगात् स्वपदेन नञा विधिभाङ् नोच्यते HetuBiṬ. 171. 9; **AV** non-return न जानाति च मन्दात्मा मरणे ह्यनिवर्तनम् DevīBhāP. ii. 10.34; **AVI** not turning back (from what is undertaken) अधिक्षेपापमानप्रत्यवायदर्शनैः परैरुच्यमानस्यारब्धादनिवर्तनं तेजः NāṭaLaRaK. 1430; **BI** non-cessation विरोधाभावादतिदेशेन स्वाश्रयस्य क्त्विस्यानिवर्तनात् Pradī. ii. 5A.4 (*on* i. 2.1); यद्यप्यत्र युक्तवद्भावात्स्त्रीत्वमस्ति तथापि स्वाश्रयस्य पुंस्त्वस्यानिवर्तनान्नायं स्त्रियामेव वर्तते Pradī. ii. 221B.8 (*on* i. 4.3); स्थानिवद्भावे तु स्वाश्रयस्यानिवर्तनात् षत्वप्रसङ्गः Pradī. v. 94A.9 (*on* vi. 1. 86); निर्वृत्तस्य चानिवर्तनात् Pradī. vi. 78.23 (*on* vii. 1. 89); **BII** not causing to turn away, not causing to abstain from सभासदाम् ··· नियुक्तानां तु सभ्यानामधर्मप्रवृत्तस्य राज्ञोऽनिवर्तनेऽपि नरकम् DaṇḍaVi. 19. 20; *adj.* **AI** who does not retreat (from battle) बाह्लीकोऽतिरथश्चैव समरे चानिवर्तिता (v.l. चानिवर्तनः)। मम राजन्मतो युद्धे शूरो वैवस्वतोपमः MahāBhā. v. 164. 28; अनिवर्तनस्पर्धनचेतनाः ··· अस्य बभुश्चमूपाः DvyāśraKā. 12.26; **AII** not turning back, not abstaining from (जीवाः) हिंसावितथचौर्यान्यस्त्रीसङ्गादनिवर्तनाः। नरकेषूपजायन्ते PadmP.(Ra.) 105.116; **B** which does not cause return सुराः ··· जनलोकात्तपोलोकं गच्छन्तीहानिवर्तनम् VāyuP. i. 61.132; पुण्यः स ब्राह्मणो दद्याच्छ्राद्धमानन्त्यमक्षयम्।··· अनिवर्तनं तु नन्दायां प्रागुत्तरे दिशि VāyuP. ii. 15. 79; BrahmāṇḍP. ii. 13.82; इति व्यवसिता राजन्हर्यश्वा एकचेतसः। प्रययुस्तं परिक्रम्य पन्थानमनिवर्तनम् BhāgP. vi. 5.21 [right, not fit to be abandoned, Apte]

**अनिवर्तनचर्या** (anivartana-caryā) *f.* the course or stage (of a Bodhisattva's development in which he is) incapable of back-sliding चत्वारीमानि बोधिसत्वानां बोधिसत्वचर्याणि।·· प्रकृतिचर्या प्रणिधानचर्या अनुलोमचर्या अनिवर्तनचर्या MaVastuAva. i. 1. 3; अतः प्रभृत्यनिवर्तनचर्यायां दीपंकरस्य तथागतस्य तस्योत्तरेणापरिमाणेहि तथागतेहि अनुव्याकृतो बुद्धो भविष्यसि MaVastuAva. i. 2.1 [DBHS.]

**अनिवर्तनव्रत** (anivartana-vrata) *n.* vow of not retreating (from the battlefield) तस्य च तथापसारेणाभिनवेन मानसारः परं जहर्ष। चुक्रोश च — क्व प्रलीनः कुलाभिमानः। क्व तदनिवर्तनव्रतम् AvantiKa. 111. 12.

**अनिवर्तनीय** (a-nivartanīya) *adj.* **A** difficult to be removed दिष्टस्य ग्रन्थिरनिवर्तनीयः स्वकर्मणा विहितं नेह किंचित् MahāBhā. i. 190. 2; **B** not to be averted or prevented अनिवर्तनीयश्च रावणस्य सीतास्वीकारग्रहः MahāvīC. 4. 1(19); **C** not possible to be removed or destroyed किमिदं तिरोधानं, कदाचिन्निवर्तनीयम्, उतानिवर्तनीयम् ŚatDū. 145.7; संसारदशायामनाविर्भूतानेकाकारगोचरस्याविर्भावशब्दार्थस्य धर्मभूतज्ञानविकासविशेषस्य पूर्वं कर्मणा प्रतिबद्धस्य पश्चात्तन्निवृत्तौ स्वरूपानुबन्धित्वादनिवर्तनीयस्यास्माभिरभ्युपगमात् ŚatDū. 183. 16.

**अनिवर्तनीयत्व** (anivartanīya-tva) *n.* the state of being that which cannot be removed कश्चायं भेदाग्रहः।···नापि वैधर्म्याग्रहः। निरशेषवैधर्म्यग्रहस्य दुरशङ्कत्वेन तदग्रहस्यानिवर्तनीयत्वात् NyāyKu. 48. 8; ŚatDū. 145.9.

**अनिवर्तनीयनिवर्तन** (anivartanīya-nivartana) *n.* stopping of one who cannot be stopped मन्त्रिन्, अलमनेनानिवर्तनीयनिवर्तनेन BhartṛNi.

5. 29(2)

**अनिवर्तनोचिता** (a-nivartanocitā) *adj.* (*f.*) not fit for returning निष्ठा अनिवर्तमानोचिता (? अनिवर्तनोचिता) समाप्तिः ManvaVi. 1017.24 (*on* 8.227)

**अनिवर्तमान** (a-nivartamāna) *adj.* [*f.* -ā] **1A** not recurring या मे मया निमिषतो जवीयसी संकल्पज्योतिरनिवर्तमाना। क्षुरपविर्[ब्रह्मन्] क्व नु सा बभूव यन्म इन्दुं हरति वैनतेयः Suparṇādhyāya. 25.1; 25.2; 25.3; 25.4; **1B** not coming back (i.e. not coming out) (स्नेहे) तदाप्यनिवर्तमाने फलवर्तिभिः ··· तीक्ष्णवस्तिभिः शोधयेत् AṣṭāSaṁ. i. 149.12 (1.28); **2A** not returning निवर्तन्ते दक्षिणा नीयमानाः सुते सोमे वितते यज्ञतन्त्रे। मोघाशिषो यन्त्यनिवर्तमाना अनिष्टयज्ञा न तरन्ति लोकान् GopBr. i. 5.25 (140.15); **2B** not desisting or withdrawing from (*lit.* not turning back) यदि च पुरुषेष्वनिवर्तमानेषु विधेरप्रामाण्यं भवति, ततः कल्पितेऽपि हननस्य नरकपाते फलेऽतिवृद्धरागान्धो न निवर्तत एवेति विधेरप्रामाण्यमपरिहार्यमेव TātpaṬ.(U.) 101.15 (*on* 2.213); ततोऽप्यनिवर्तमानो यथाशास्त्रं धनेन दण्डनीयः ManuBh. ii. 130.15 (*on* 8.129); (राज्ञि) प्रयत्नादप्यनिवर्तमाने तस्मिन्नप्रियोक्तावपि न दोष इति स्थितम् DaṇḍaVi. 19.21; **3** not performing expiation (पतिताः पतितपुरोहिताश्चानिवर्तमानाः पङ्क्तिदूषकाः) 'अनिवर्तमानाः' प्रायश्चित्तमकुर्वाणाः CaturCin. iii(1). 495.7; अनिवर्तमानः = प्रायश्चित्तमनिच्छमानः VīraMi. (Śrāddha.) 97.2; **4** not disappearing, not vanishing अलक्ष्यतीव्रातपमन्तरिक्षं सितासितैरम्बुधरैश्चकाशे। विवेकमासादयतामिवादौ चित्तं वितर्कैरनिवर्तमानैः Yādavā. 5.50 (comm. अनिवर्तमानैः स्थिरतरसंस्कारवशात्सर्वथा निवृत्तिरहितैः); (आचार्यः) तत औषधोपचारैरपि रोगमनिवर्तमानं वीक्ष्य ··· देवाग्रे त्रिविधाहारप्रत्याख्यानं विधायोपविष्टः PurāPraSaṁ. 114.12.

**अनिवर्तमानोचिता** (anivartamānocitā) *adj.* (*f.*) [w. r. for अनिवर्तनोचिता] ManvaVi. 1017.24 (*on* 8.227)

**अनिवर्तयत्** (a-nivartayat) *adj.* [*f.* -ntī] **AI** not causing to turn back राजपुत्राः कवचिनोऽनिवर्तयन्तोऽश्वं रक्षन्ति त्रिदशानुपरिक्षिणः(?) कृत्वा VārāŚS. III. iv. 1.31; HirŚS. xiv. 1.46 (217.19); **AII** not moving back (the hand) हविर्धानयोर्दक्षिणेऽक्षधुरौ राजक्रयणीपदार्धेन 'देवश्रुतौ देवेष्वाघोषेथा'मिति पत्न्युपानक्ति त्रिरन्यां त्रिरन्यां प्राचीमनिवर्तयन्ती MānŚS. 66.15; **B** not removing or destroying न चाविद्यामनिवर्तयन्ती विद्योदेति PañcPā. 62.3 (*on* i. 1.1); ब्रह्मापरोक्षज्ञानम्।··· अविद्यामनिवर्तयत् परोक्षज्ञानकल्पमवतिष्ठते SiddhāLeSaṁ. 17.5.

**अनिवर्ताध्याशय** (anivartādhyāśaya) *m.* mental disposition not liable to turning back, firm mental disposition बोधिसत्वानां भो जिनपुत्र द्वितीयायां भूमौ वर्तमानानाम् इमे अध्याशया भवन्ति।··· अनिवर्ताध्याशयाश्च भवन्ति MaVastuAva. i. 85.8.

**अनिवर्तिक** (a-nivartika) *adj.* not liable to turning back साध्विहाप्रतिमं चक्रं प्रवर्तेसि अनिवर्तिकम् MaVastuAva. i. 174.9 [DBHS.]

**अनिवर्तिकबल** (anivartikabala) *m.* name of a former Buddha येषु ··· सम्यक्संबुद्धेषु भगवता ··· कुशलमूलमुपचितं तेषां विपुलबलवरकीर्तिनां नामानि शृणु।··· अतिपुरुषः अनिवर्तिकबलः MaVastuAva. i. 138.13 [DBHS.]

**अनिवर्तित** (a-nivartita) *adj.* [*f.* -ā] **1** who has not been made to retreat (from battle) बाह्लीकोऽतिरथश्चैव समरे चानिवर्तिता (v. l. °र्तितः)। मम राजन्मतो युद्धे शूरो वैवस्वतोपमः MahāBhā. v. 164.28; उत्तरेण दशग्रीवः प्रविवेशानिवर्तितः Rāmā. vii. 29.18 (OI. Ed. 1972); मथुरायाम् ··· दाशार्ह इति विश्रुतः। बभूव राजा ··· संग्रामेष्वनिवर्तितः SkandP. iii(3). 1.30; **2** not set apart पञ्चावत्तेन चतुरवत्तेऽनिवर्तिते, यद्यपि चतुरवत्तीति दर्शनं युक्तं भवति ŚābaBh. 2052.23 (*on* x. 7.64); न हि संबन्धिभेदेन भेदो वस्तुन्यपीष्यते। किमुतावस्त्वसंसृष्टमन्यतश्चानिवर्तितम्। अनवाप्तविशेषांशं यत्किमप्यनिरूपितम् ŚlokaVār. 5(13). 49 (579.3); यदि भक्षान्तरमेवेदमारादुपकारकं चोद्येत ततः समानकार्यत्वाभावान्नैव सोमं निवर्तयेदनिवर्तिते च तस्मिन्न प्रतिषेधानुवादः स्यात् TantrVā. 1064.21 (*on* iii. 5.48); **3** not removed अध्यासो नाम — द्वयोर्वस्तुनोः अनिवर्तितायामेव अन्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते BrahmSūBh.(Śaṅ.) 628.14 (*on* iii. 3.9)

**अनिवर्तितकौतुकप्रपञ्च** (anivartita-kautukaprapañca) *adj.* by which manifoldness of admiration is not removed (i. e. causing manifold admiration continuously) निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम्। प्रथम इह भवान् स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः KāvyPra. 604.3 (comm. अनिवर्तितः कौतुकस्य आश्चर्यस्य प्रपञ्चो विस्तारो येन)

**अनिवर्तितचेतस्** (anivartita-cetas) *adj.* whose mind is not turned back, of firm mind तितिक्षोरेव विघ्नेभ्यस्त्वनिवर्तितचेतसः। सिध्यन्ति सिद्धयः SarvaVeSāSaṁ. 143.

**अनिवर्तितत्व** (anivartita-tva) *n.* **1** the state of not being removed तस्य च अपरब्रह्मोपासनस्य ··· संसारगोचरमेव फलं भवति, अनिवर्तितत्वादविद्यायाः BrahmSūBh.(Śaṅ.) 841.13 (*on* iv. 3.14); PañcPā. 40.3 (*on* i. 1.1); यच्च अज्ञैरलसतया अकर्तृत्वाभ्युपगमः, सोऽप्यसत्, कारकबुद्धेरनिवर्तितत्वात्प्रमाणेन ChāndoUBh. 128.17 (*on* ii.23.1); अत्र भूमिकात्रितयं ब्रह्मविद्यायाः साधनमेव ···। भूमित्रये भेदसत्यत्वबुद्धेरनिवर्तितत्वात् JīvanVi. 128.5; **2** the state of not being set apart आवापस्य पवमानातिरिक्तेभ्यः स्तोत्रेभ्योऽनिवर्तितत्वात्तद्व्यतिरिक्तेष्वाज्यपृष्ठादिस्तोत्रेष्वगत्याभ्यासेनैव संख्यापूरणं कार्यमिति सिध्यति VidhiRa. 10 (54.15)

**अनिवर्तिता** (anivarti-tā) *f.* the nature of being one who does not retreat (from battle) तेजः सत्यं धृतिर्दाक्ष्यं संग्रामेष्वनिवर्तिता।··· क्षत्रधर्मः प्रकीर्तितः LaViṣṇuSm. 5.2; केचित्सैदभटास्तत्र युध्यन्तः सुभटैः सह। अनिवर्तितया याता दिव्यस्त्रीसुखभागिताम RājTa.(Śrī.) 4.594.

**अनिवर्तिताश** (anivartitāśa) *adj.* which has never turned down hope or trust (reposed on it) इमे हि युद्धेष्वनिवर्तिताशा हयाः सुपर्णेन समानवेगाः।··· रक्षन्तु मां यद्यपि रक्षितव्यम् KarṇaBhā. 13.

**अनिवर्तितुम्** (a-nivartitum) *inf.* not to return पृष्ठतोऽनुगमिष्यामि ··· गच्छन्तमनिवर्तिनम् (v. l. °निवर्तितुम्) MahāBhā. i. 112.22.

**अनिवर्तितृ** (a-nivartitṛ) *adj.* who does not retreat (from battle) बाह्लीकोऽतिरथश्चैव समरे चानिवर्तिता। मम राजन्मतो युद्धे शूरो वैवस्वतोपमः MahāBhā. v. 164.28.

**अनिवर्तित्व** (anivarti-tva) *n.* the nature of being one who does not retreat (from battle) संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम्।··· राज्ञां श्रेयस्करं परम् ManuSm. 7.88; MatsyaP. 215.61; AgniP. 224.24.

**अनिवर्तिन्** (a-nivartin) *adj.* [*f.* -ī] **AI** not retreating (from battle) यत्र तान् क्षत्रियाञ्शूरान्दिष्टान्तानानिवर्तिनः। पुत्रान्भ्रातॄन्पितॄंश्चैव ददृशुर्निहतान्रणे MahāBhā. i. 2.192; राजर्षीणां पुण्यकृतामाहवेष्वनिवर्तिनाम्। सर्वधर्मोपपन्नानां त्वं गतिः पुरुषोत्तम MahāBhā. iii. 13.49; iii. 34.17; iii. 283.12; iv. App. I. 37(19); अथ वा पञ्च षट् सप्त विजयन्त्यनिवर्तिनः MahāBhā. vi. 4.33; ŚārṅgaPa. 1927; तस्य क्रोधाभिभूतस्य संयुगेष्वनिवर्तिनः। योऽन्वयो मातृकस्तस्य स एनमभिपेदिवान् MahāBhā. vi. 86.66; vi. 64.9; vi. 111.9; vii.5.13; vii. 7.31; व्यूढोरस्को महाबाहुरनिवर्ती वरप्रणुत्। गतस्तव ··· पुत्रः स्वर्गम् MahāBhā. vii. 54.22; vii. 63.26; सात्यकिं ते समासाद्य पृतनास्वनिवर्तिनम्। बहवो लघुहस्ताश्च शरवर्षैरवाकिरन् MahāBhā. vii. 95.32; सूतपुत्र कथं नु त्वं पाण्डवानवमन्यसे।··· अनिवर्तिनो महाभागानजेयान्सत्यविक्रमान् MahāBhā. viii. 26.28; हत्वा दश सहस्राणि गजानामनिवर्तिनाम्।··· हत्वा प्रास्यन्दयद्भीमो नदीं शोणितकर्दमाम् MahāBhā. viii. 55.37; xiii. 2.13; xiii. 31.8; यान्ति शूरा गतिं यां च संग्रामेष्वनिवर्तिनः। हतास्त्वभिमुखाः पुत्र गतिं तां परमां व्रज Rāmā. ii. 58.35; चतुर्दशसहस्राणि मम चित्तानुवर्तिनाम्।··· समरेष्वनिवर्तिनाम्।··· सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय Rāmā. iii. 21.8; अधर्षितानां शूराणां समरेष्वनिवर्तिनाम्। धर्षणामर्षणं भीरु मरणादतिरिच्यते Rāmā. iv. 16.3; iv. 19.21; iv. 35.16; विक्रान्तविजयौ वीरौ समरेष्वनिवर्तिनौ। काङ्क्षमाणौ यशः प्राप्तुं वृत्रवासवयोः समौ Rāmā. vi. 46.39; सहैभिरर्दिता लङ्का निर्जिता राक्षसेश्वर। हृष्टैः प्राणभयं त्यक्त्वा संग्रामेष्वनिवर्तिभिः Rāmā. vi. 110.5; तदासीत्तुमुलं युद्धं यमराक्षसयोर्द्वयोः। जयमाकाङ्क्षतोर्वीर समरेष्वनिवर्तिनोः Rāmā. vii.22.16; मत्कृते विग्रहा लोके वृत्ता वर्तन्त एव च। क्षत्रियाणां बलवतां संग्रामेष्वनिवर्तिनाम् HariVaṁ. 42.50; अनिरुद्धो मयात्तेन संयुगेष्वनिवर्तिना। बाणेन ··· बद्धः HariVaṁ. 109.74; स्मृतम्।··· स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वनिवर्तिनाम् ViṣṇuP. i. 6.34; PadmP. v. 3.147; दातारश्चापि वित्तानां संग्रामेष्वनिवर्तिनः। तेषां कश्चरितं शक्तस्त्वनुयातुं महात्मनाम् MārkP. 133.9; स्वाम्यर्थे युध्यमानानां शूराणामनिवर्तिनाम्। यद्भवेत्तत्फलं दृष्टं मात्रया तदवाप्नुयात् VāyuP. i. 20.19; AhirbuS. 50.56; पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनाम् (v. l. भग्नेष्वप्यनिवर्तिनाम् ChSS. 62, 1930) राजा सुकृतमादत्ते हतानां विपलायिनाम् YājñaSm. 1.325 (VīraMi. अनिवर्तिनाम् अपराङ्मुखानाम्); प्रथ(?ध)नेष्वनिवर्ति(?र्ती)··· किरातपतिर्यथार्थनामा सार्थमर्दनो नाम AvantiKa. 167.4; खेचराणां सहस्राणि सन्ति तस्य चतुर्दश। ये वीर्यकृतसंनाहाः समरादनिवर्तिनः PadmP.(Ra.) 9.33; 63.38; यैरियं बुभुजे ब्रह्मन्दैत्येन्द्रैरनिवर्तिभिः। तेषां कालोऽग्रसील्लोकान्न यशोऽधिगतं भुवि BhāgP. viii. 20.8; संशप्तकास्तु समयात् संग्रामादनिवर्तिनः AgniP. 365.19; शुद्धानां कुलपद्मानां वीराणामनिवर्तिनाम्। द्वन्द्वयुद्धानि जातानि YogVā. iii. 36.3; द्विषां त्रिंशत्सहस्राणि योधानामनिवर्तिनाम्। रुरोध RājTa.(Ka.) 7.978; **AII** unfailing दुःखेन महताविष्टः स्वकृतेनानिवर्तिना। अजेयमुग्रधन्वानं तं न पश्यामि फल्गुनम् MahāBhā. iii. 142.12; अहो वीराल्पभाग्यायाः कृतान्तेनानिवर्तिना। आच्छिद्य मम मन्दाया नीयसे नयकोविद HariVaṁ. 77.56; न त्यक्ष्यति हरेः पक्षमस्माकं वचनाद्यदि। ततः कृत्यां वधायास्य करिष्यामोऽनिवर्तिनीम् ViṣṇuP. i. 17.52; **AIII** not going out (i. e. remaining in) निषादा बहवस्तत्र

मत्स्योद्धरणनिश्चिताः । व्यायता बलिनः शूरा सलिलेष्वनिवर्तिनः MahāBhā. xiii. 50.12; **Aiv** permanent, ceaseless, continuous मोक्ष एव …। सुखमात्यन्तिकं श्रेष्ठमनिवर्ति च तद्विदुः MahāBhā. xiii. App. I. 15 (3864); प्रादाच्च तस्मै भगवान् … वरम् । अक्षयं वंशमिक्ष्वाकोः कीर्तिं चाप्यनिवर्तिनीम् HariVaṁ. 10.51; BrahmP. 8.58; ततो निरुद्धयोगः सन्नयोगी विगतास्रवः । समुच्छिन्नक्रियं ध्यानम् अनिवर्ति तदा भजेत् MahāP. 21.196; अहेतुरनिवर्ती च स्नेहश्चित्तार्द्रता मता SaraKaṇṭhā. 585.12; **Av** not returning, not going back त्वमस्य ब्रह्मनाभस्य बुद्ध्यारस्यानिवर्तिनः । सत्त्वनेमिनिरुद्धस्य चक्रस्यैकः प्रवर्तकः MahāBhā. xiv. 32.25; तं निशाम्य सनिस्त्रिंशं व्यथिता जनकात्मजा । निवार्यमाणं बहुशः सुहृद्भिरनिवर्तिनम् Rāmā. vi. 80.40; ii. 98.30; द्रुतं हि गच्छत्यनिवर्ति यौवनम् Saund. 9.27; विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु Kāvyālaṅ.(Ru.) 7.90 = KāvyPra. 645.4 = AlaṅkāSa. 80.4 = SāhiDa. 559.14 = Subhāṣi. 1611 = RasGaṅ. 474.12; **Avi** not coming back (i.e. dead) विदारितास्त्रिशूलैश्च बभूवुरनिवर्तिनः Rāmā. vi. 864*; **Avii** not abstaining from, not abandoning, not giving up श्रद्धासंवेगहीनानां हिंसादिष्वनिवर्तिनाम् । चतुर्गतिकसंवर्तागतिध्वान्तमोरजा PadmP.(Ra.) 31.13; मन्त्रिमन्त्रैरवार्याणां दिवसेऽप्यनिवर्तिनाम् । रक्षसामेव कश्मीरास्तदा हस्तवशं गताः RājTa.(Jo.) 939; **Aviii** not going against स धर्मज्ञं राजसूयसमयादनिवर्तिनम् । आहूय विदधे छद्मद्यूतं शकुनिमायया DaśāvaC. 8.456; 8.692; प्रजा अपि तस्मान्नृपादनिवर्तिन्यस्तदेकताना भवन्ति ManvaMu. 321.15 (*on* 8.175); **Aix** non-recurring आवर्तकोऽनिवर्ती च व्ययायौ तु पृथग् द्विधा । आवर्तकविहीनौ तु व्ययायौ लेखको लिखेत् ŚukraNī. 2.339 (R. G. Sastri's Ed.); **B** (course) causing no return (to this world) ते ब्रह्मलौकिकाः सर्वे गतिं प्राप्यानिवर्तिनीम् BrahmāṇḍP. iii 2.82.

**अनिवर्तिन्** (a-nivartin) *m.* **1** an epithet of Viṣṇu (*lit.* who does not retreat (from battle)) अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।… इतीदम् … केशवस्य महात्मनः । नाम्नां सहस्रम् MahāBhā. xiii. 135.77; **2** name of a son of Māra, unfavourable to the Bodhisattva वामेऽनिवर्त्याह — न निवर्तते तृणगतः प्रदहन् दवाग्निः क्षिप्तं शरो न च निवर्तति शिक्षितेन LaliVi. 21.46; **3** name of one of the eight attendant door-keeping deities तत्राष्टकमिदं चान्यच्चतुर्थं क्रमशो न्यसेत् । अनिवर्ती महावर्तो नागहा सर्वजित् स्थिरः । जयन्तो भयकूर्मादि त्वष्टमं कमलोद्भव PauṣkS. 24.9; PāraS. 11.249 [name of a Bhikṣu, PW.; epithet of Almighty God, APTE]

**अनिवर्त्य** (a-nivartya) *ger.* **A** not having caused to turn back पाण्डवास्तदा । अभिवाद्य न्यवर्तन्त पृथां तामनिवर्त्य वै MahāBhā. xv. 24.3; **Bi** not having taken away त्वय्येव सक्तामनिवर्त्य बुद्धिम् । त्वया विहीनस्तव शोकरुग्णस्त्वां संस्मरन्नस्तमितः पिता ते Rāmā. ii. 2173*(2); नाथे चिरेण पतितामनिवर्त्य बुद्धिं काचित्स्वयं निववृते गुरुवश्यबुद्धिः BhikṣāKā. 20.13; **Bii** not having destroyed अनिवर्त्य स्वमात्मानं न भयस्य निराक्रिया । निवृत्तावपि नैव स्यान्निवृत्त्यैव समाश्रितः TaiUBhāVā. 158.1(2); ज्ञानस्याज्ञानद्वारैवान्यविरोधित्वेनाज्ञानमनिवर्त्य रूप्यादिनिवर्तकत्वायोगात् Nyāyāmṛ. 228B.5; AdvaiSi. 486.19; **Biii** not having taken back अहं तु तत्क्षणोपजातवामाक्षिस्पन्देनानिवर्त्य तद्ग्रहणाय पुरतः प्रसारितं दक्षिणपाणिमतिवाह्य च क्षणमेकमस्वस्थेन चेतसा गृहीत्वा शनैस्तमवाचयम् TilaMañ 396.17.

**अनिवर्त्य** (a-nivartya) *adj.* [*f.* -ā] **1** irrefutable अभिधाय च त्रिपरिवर्तमतुलमनिवर्त्यमुत्तमम् । द्वादशनियतविकल्पमृषिर्विनिनाय कौण्डिनसगोत्रमादितः Saund. 3.13; **2** unchangeable (अन्तराभवः) सजातिशुद्धदिव्याक्षिदृश्यः कर्मर्द्धिवेगवान् । सकलाक्षोऽप्रतिघवाननिवर्त्यः स गन्धभुक् AbhidhK. 3.14; पराधीनविशेषाप्तिरनिवर्त्योऽन्यथाभावः AnuVyā. 15A.10 (*on* 1.4); प्रत्येकं च द्वेधा । अनिवर्त्योऽन्यथाभावो निवर्त्यश्चेति NyāySu.(Ja.) 195B.12 (*on* i. 4.6); तत्प्रजासु तत्कृतं सम्राजानिवर्त्यम् RājNīRa. 5.5; **3** irremovable, which cannot be destroyed सोऽयमनिवर्त्यः संशयः प्राप्तः NyāyVār. 98.6 (*on* i. 1.23); अथ मतम्, अग्रहणमविद्या, सा कथमर्थान्तरं स्यात् । न चानिवर्त्या, सर्वप्रमाणव्यापाराणामग्रहणनिवृत्त्यर्थत्वात् BrahmSi. 9.3; प्राप्तस्याप्यनिवर्त्यस्य किंचिच्छुक्तस्य संविदा । उपमर्द इह प्रोक्तः AnuVyā. 54B.4 (*on* 3.4); अविद्या ब्रह्ममूला चेदनिवर्त्या प्रसज्यते NyāyPari. 333.2; **4** imperishable अग्निप्रवेशं यः कुर्याच्च कुर्यादनाशकम् । अनिवर्त्या गतिस्तस्य MatsyaP. 189.15; **5** not liable to turning back [DBHS.]

**अनिवर्त्यता** (anivartya-tā) *f.* the state of being unavoidable, unavoidability ज्ञानिनो हि विषभक्षणान्मृतेरिवानिवर्त्यतया प्राप्तस्यारब्धकर्मणोऽपि किंचिद् भुक्तस्य ज्ञानेनोपमर्दमेके शाखिनः पठन्ति TattvPrakā. 189B.11 (*on* iii. 4.16)

**अनिवर्त्यत्व** (anivartya-tva) *n.* **1** the state of being what cannot be removed or destroyed स्वरूपाविर्भावस्य … पुनः प्रतिबन्धाभावाच्चानिवर्त्यत्वमुपपद्यते ŚatDū. 59.9; तस्य तस्याश्चानिवर्त्यत्वेन सत्यत्वप्रसङ्गे सद्वितीयत्वादिप्रसङ्गात् ŚatDū. 197.23; मिथ्याभूतस्याप्यनिवर्त्यत्वे प्रकृतभेदस्यापि तथात्वं नानिष्टम् TattvPrakā. 30B.11 (*on* i. 2.6); **2** the state of being what cannot be returned or given back राज्यमविभाज्यमिति वक्ष्यमाणत्वात् । तदुभयान्यथासिद्धौ तद्वचनाप्रसक्तेः राज्ञा दत्तस्यानिवर्त्यत्वेनापि राज्यस्याविभज्यत्वाच्च RājNīRa. 68.2.

**अनिवर्त्यत्वानुमान** (anivartyatvānumāna) *n.* inference regarding indestructibility अनादिभावत्वेनानिवर्त्यत्वानुमानानुपपत्तेः TattvPradī.(Ci.) 57.17; अभावविलक्षणतामात्रेणाप्यनादेरनिवर्त्यत्वानुमानसंभवात् Vādā. 19.1.

**अनिवर्त्यत्वापत्ति** (anivartyatvāpatti) *f.* undesirable contingency of indestructibility 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।' इत्यादि श्रुतिस्मृतिबोधितज्ञाननिवर्त्यत्वान्यथानुपपत्तिरपि बन्धमिथ्यात्वे प्रमाणम्, सत्यत्वे ब्रह्मवदनिवर्त्यत्वापत्तेः AdvaiSi. 528.3

**अनिवर्त्यमहामोह** (anivartya-mahāmoha) *m.* great delusion that cannot be destroyed रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता । स्यादागमस्यानिवर्त्यमहामोहप्रदत्वतः AnuVyā. 68B.11 (*on* 4.2)

**अनिवर्त्यविशेष** (anivartya-viśeṣa) *m.* particular property that cannot be changed (विकारः) तत्रानिवर्त्यविशेषाप्तिर्यथा । श्यामस्य फलस्य पीतत्वापत्तिः NyāySu.(Ja.) 195B.13 (*on* i. 4.6)

**अनिवर्त्यविशेषिपरिवर्त** (anivartya-viśeṣiparivarta) *m.* unchangeable modification of substance अनिवर्त्यविशेषिपरिवर्तो यथा । क्षीरस्य दधिभावः NyāySu.(Ja.) 196A.4 (*on* i. 4.6)

**अनिवर्त्यसमरसंरम्भ** (anivartya-samarasaṁrambha) *adj.* whose enthusiasm for battle is not to be checked (शतमन्युः) अनिवर्त्यसमरसंरम्भमग्रत एव चलन्तमात्मजं जयन्तमवरुध्य … शरीरेण केवलमवातिष्ठत सेनामुखे NīlaVi. 17.16.

**अनिवर्त्स्यमान** (á-nivartsyamāna) *adj.* who will not be returning (to this world) अनन्तमर्थमनिवर्त्स्यमानाः TaiBr. II. v. 6.4 (Sāy. यजमाना इन्द्रसेविनः अनिवर्त्स्यमाना इतः परं मनुष्यलोके पुनरावृत्तिरहिताः)

**अनिवसत्** (a-nivasat) *adj.* **i** (the first member of a Cpd.) not conveying the sense of residents ग्रामेऽनिवसन्तः P. vi. 2.84; ग्रामशब्द उत्तरपदे पूर्वपदमाद्युदात्तं भवति न चेन्निवसद्वाचि भवति ।… अनिवसन्त इति किम् । दाक्षिग्रामः KāśiVṛ. *on* vi. 2.84; Prasā. ii. 771.7; SiddhāKau. 643A.14 (*on* vi. 2.84); **ii** not residing प्रेतस्पृशो ग्रामं न प्रविशेयुरा नक्षत्रदर्शनात् — तत्स्नेहवशेन शवस्पृशामशवस्पृशां वासपिण्डानां तदन्नमनश्नतां तद्गृहे चानिवसतां वेदितव्यम् Aparā. 884.2 (*on* 3.14)

**अनिवसद्वाचिन्** (a-nivasadvācin) *adj.* not expressive of inhabitants अनिवसद्वाचि पूर्वमाद्युदात्तं ग्रामे परे । मल्लग्रामः । वणिग्ग्रामः । समूह इत्यर्थः Prasā. ii. 771.6.

**अनिवसन्त** (a-nivasanta) *adj.* [Uṇā. 3.128] **Ai** (word) not conveying the sense of a resident (ग्रामेऽनिवसन्तः) निवसन्तशब्दोऽयमौणादिको गृह्यते ।… निवसतीति निवसन्तः Nyās. ii. 370.23 (*on* vi. 2.84); **Aii** (a Cpd.) in which there is no word conveying the sense of a resident (ग्रामेऽनिवसन्तः) निवसत् = निवासकर्तृ ।… केचित्त्वधिकरणे औणादिक झजन्तं समासविशेषणमित्याहुः LaŚabdeŚe. ii. 1058.5; **B** (final member of a Cpd.) not conveying the sense of place of residence ग्रामेऽनिवसन्तः । निपूर्वाद्वसेरौणादिकोऽधिकरणे झच्, निवसन्त्यस्मिन्निति निवसन्तः PadMañ. *on* KāśiVṛ. *on* P. vi. 2.84.

**अनिवादि** (an-ivādi) *adj.* not containing the particle *iva* etc. (expressive of similarity) सोऽयं समुच्चयः स्याद्यत्रानेकोऽर्थ एकसामान्यः । अनिवादिर्द्रव्यादिः सत्युपमानोपमेयत्वे Kāvyālaṅ.(Ru.) 8.103.

**अनिवादिशब्दा** (an-ivādiśabdā) *adj.* (*f.*) not containing the words *iva* etc. (expressive of similarity) (वाक्यार्थोपमा) अनिवादिशब्दा यथा — 'दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान् । असुरास्तेन हन्यन्ते सावलेपा नृपास्त्वया' SaraKaṇṭhā. 408.17.

**अनिवारकम्** (anivārakam) *adv.* without hindrance प्राह हरं सती । यथेष्टं देहि वरद वरमित्यनिवारकम् । तदा वाक्यस्यावसानमनवेक्ष्य वृषध्वजः । भव त्वं मम भार्येति प्राह ताम् ŚivaP. ii(2). 17.14 (88A.7)

**अनिवारण** (a-nivāraṇa) *n.* **A** non-prevention, absence of prohibition पथि शस्त्रधारणसंबद्धमासनं प्रस्तुतेष्वनिवारणम् … सर्वमर्हति ब्राह्मणः ŚaṅkhaLiDS. 12; अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम् । इति … उपेक्षा त्रिविधा स्मृता NītiSā. 18.57; (नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजान्यथा करोति तदासौ निवारणीयः) अनियुक्तानां पुनरन्यथाभिधानेऽनभिधाने वा दोषो न तु राज्ञोऽनिवारणे Mitā. 126.23 (*on* 2.2); (अकार्यकरणात्) परमात्मनः शक्तस्याप्यनिवारणं दोष इति चेन्न ŚrutaPra. ii. 282.31 (*on* ii. 2.3); न च निवारणसमर्थ-

श्वरस्यानिवारणमुपजीव्य मुक्तः प्रवर्तत इति वाच्यम् ŚatDū. 154.26; सर्वमर्हति ब्राह्मणः । ·· कार्यार्थं प्रस्थितेषु अनिवारणं तन्मध्यगमनेऽनिषेधनम् DaṇḍaVi. 44.1; न चैवंविधे विषये नानुमितिपदप्रयोगोऽभ्यर्हितानामिति वाच्यम् । तथाप्युन्मीलितादिवत् परिभाषाया अनिवारणात् RasGaṅ. 697.15; **B** non-denial दृष्टौ वा कचिदेतस्या द्रव्यादावनिवारणम् । अथ तस्मिन्नदृष्टौ तु भेदे प्रश्नो न युज्यते TattvSaṁ. 616; असत्त्वनिषेधेऽप्यनिर्वाच्यत्वस्यानिवारणात् VedāntKa. 45.18 (*on* i. 1.1); जुहोतियजतिश्रवणे सति कथमभेदः स्यादिति चेत् न ··· नाम्ना प्राप्यमाणस्य प्रसिद्धाभेदस्यानिवारणात् PūrvottaVāNaMā. 29.18; **C** not setting aside, non-avoidance तत्र कात्स्न्र्येन तद्वृत्तावव्याप्तेरनिवारणात् TarkSaṁ.(Ā.) 97.16; अन्वयव्यतिरेकावविनाभावनिश्चायकाविति पक्षे साध्यसाधनयोरव्यभिचारो दुरवधारणो भवेत् । भूते भविष्यति वर्तमाने चानुपलभ्यमानेऽर्थे व्यभिचारशङ्काया अनिवारणात् SarvaDaSaṁ. 2.8; द्वित्वाद्युत्पत्तेः पूर्वं तत्र द्वित्वाद्यभावात् तत्रापि कारणचिन्ताया अनिवारणात् अपेक्षाबुद्धावेकत्वेषु च तादृशविशेषस्यानुपलम्भबाधितत्वात् Upask. 322.6 (*on* vii. 2.8); न सोमादेः फलसंबन्धः, तथात्वे प्रतिपदाधिकरणोक्तस्यानेकादृष्टकल्पनप्रसङ्गस्यानिवारणात् MīmāKau. iii(2). 8.7 (*on* ii. 1.3); यतत्यादौ स्वाभाविकाकर्मके उत्पत्तिरूपस्य फलस्य यत्नव्यधिकरणत्वेनातिव्याप्तेरनिवारणात MīmāKau. iii(2). 23.5 (*on* ii. 1.5); iii(2). 215.18 (*on* ii. 2.18); प्रधानमात्रत्वस्वीकारेऽपि लक्षणायास्तावदनिवारणाच्च BhāṭṭDī. ii. 100.5 (*on* iv. 1.13); न च तददृष्टं प्रति मन्त्रव्यभिचारः ··· भवन्मतेऽपि तस्यानिवारणात् BhāṭṭDī. iii. 247.18 (*on* x. 3.2); दीक्षितस्य प्रतिहोमाद्यापत्तेरनिवारणात् BhāṭṭDī. iv. 109.5 (*on* x. 8.7); न च दृष्टान्ते ··· शक्त्यैवोपस्थितिः ··· त्वदुक्तविरोधाभासलक्षणातिप्रसङ्गस्यानिवारणात RasGaṅ. 577.2; **D** non-removal नैवं ब्रह्मत्वबोधस्य सोपाधिविषयत्वतः । यावद्विदेहकैवल्यमुपाधेरनिवारणात् PañcDa. 7.84.

**अनिवारण** (a-nivāraṇa) *adj.* [*f.* -ā] **A** irresistible मया समुद्यतान् पाशान्वारुणाननिवारणान् । प्रतिगृह्णीष्व कौन्तेय MahāBhā. iii. 42.27; (कार्मुकम् । अन्यदादाय) स शरम् ··· अनिवारणम् (प्रेषयामास) MahāBhā. vii. 1105*; तेषामितीरितमुभाववधार्य घोरं तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः BhāgP. iii. 15.35; **B** unchecked, uncontrolled देशान् ···। प्रयाति लङ्घयन् सप्तिः मनोवदनिवारणः PadmP.(Ra.) 28.78(? 79); **C** which cannot be prevented or removed तदभ्युपगमे वः स्यादनवस्थानिवारणा । दृष्टयन्तरेण संव्याप्तिर्नातो दृष्टेः कथंचन BṛĀraUBhVā. iii. 4.181.

**अनिवारणीय** (a-nivāraṇīya) *adj.* unavoidable पौराणिककथामनुधावतामवनिसुराणामनिवारणीयमम्भोऽवगाहनव्रतम् Mukundā. 170(11)

**अनिवारप्रसर** (anivāra-prasara) *adj.* whose spreading or advance is unchecked आदौ दंदह्यते मनो यूनाम् । गुरुरनिवारप्रसरः पश्चान्मदनानलो ज्वलति Kāvyālaṅ.(Ru.) 9.4.

**अनिवारम्** (anivāram) *adv.* **i** without refusal स गूर्जरधरां प्रत्यचालीत् । अश्वशतद्वयम् ··· अनिवारमन्नदानम् PrabaK. 58.11; **ii** without hindrance or obstruction, unobstructedly तुरगखरखुराग्रोत्खात[धात्री]समुत्थं स्थगयदहिमरस्मे(श्मे)र्मंडलं यत्प्रयाणे। प्रचुरतररजोऽन्याशेषतेजस्वितेजोहतिमचिरत एवा[शं]सतीवानिवारम् EI. ii. 238.21.

**अनिवारयत्** (a-nivārayat) *adj.* not warding off, not preventing गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः । अनिवारयतां तेषां सर्वेषां पातकं भवेत् ParāSm. 9.47; कलहनिवारणसमर्थः सन्नपि यः कलहमीदृशस्थले अनिवारयन् साक्ष्यमङ्गीकरोति तस्यापि दण्डः Subodhi. 95.24 (*on* 2.239); BālamBha. ii. 314.1 (*on* 2.239); कथमयं महाराजस्य महान् धर्मव्यतिक्रम उपस्थितः।··· न केवलमिह महाराज एवापराध्यति, अपि तु तद्दाक्षिण्यादनिवारयन्तः सदस्या अपि KaṁVa. 6.36(2)

**अनिवारिणी** (a-nivāriṇī) *adj.* (*f.*) unavoidable येन दत्तो वरः ···। दृष्ट्वा लोके शनेः पीडां सर्वेषामनिवारिणीम् । षोडशाब्दावधि नृणां जन्मतो न भवेच्च सा ŚivaP. iii. 25.15 (324B.10)

**अनिवारित** (a-nivārita) *adj.* [*f.* -ā] **A** irresistible, not avertible प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितम् MahāBhā. iii. 173*(1); मया समुद्यतान् पाशान् वारुणाननिवारणान् (v. l. अनिवारितान्) । प्रतिगृह्णीष्व MahāBhā. iii. 42.27; रामः···। नारायणास्त्रं विशिखे संदधे चानिवारितम् BrahmāṇḍP. ii. 39.27; **Bi** unobstructed, unhindered तत्र यज्ञो नृपश्रेष्ठ ···। प्रवर्तताम् ··· सर्वतो ह्यनिवारितः MahāBhā. iii. 241.31; लक्ष्मणः ···। किष्किन्धाद्वारमासाद्य प्रविवेशानिवारितः MahāBhā. iii. 266.12; महारथाः । संप्राप्ताः सिन्धुराजस्य समीपमरिकर्शनाः (v. l. अनिवारिताः) MahāBhā. vii. 105.4; vii. 119.2; अन्तःपुरमनुत्तमम् । ततस्तद्भरतः श्रीमानाविवेशानिवारितः Rāmā. ii. 1636*(8); उत्तरेण दशग्रीवः प्रविवेशानिवर्तितः (v. l. अनिवारितः) Rāmā. vii. 29.18 (OI. Ed.); vii. 44.3; vii. 52.5; (ब्राह्मणस्य) भैक्षहेतोः परागारे प्रवेशस्त्वनिवारितः NāraSm. 220.36; अच्छिन्नामलसंतानाः समुद्रोर्म्यनिवारिताः । पुनन्ति लोकान्पुण्यत्वात्कीर्तयः सरितश्च ते KumāSaṁ. 6.69; धन्यास्ते पथि ये कृष्णमितो यान्त्यनिवारिताः ViṣṇuP. v. 18.25; यदिमाम् ·– अस्याकृतिम् ·– लोचनयुगलेनानिवारिताः पश्यामः Kād. 82.21; लूनकेतुश्चायं रथोऽनिवारित एव प्रवेक्ष्यति च्छायाम् VeṇīSaṁ. 4.33; तदयं समुपैति भूपतिः पयसां पूर इवानिवारितः ŚiśuVa. 16.53; ततोऽमङ्गलभीतेन वाञ्छताप्यनिवारितः । श्वसुरेण ··· हरिषेणो रथं ययौ PadmP.(Ra.) 8.379; आदित्यरथसंकाशो रथो यात्यनिवारितः PadmP.(Ra.) 97.79; नृपस्य ते हि सुहृदः ···। य एनमुत्पथगतं वारयन्त्यनिवारिताः NītiSā. 4.42; शक्ताश्चैवाप्रमत्ताश्च वदेयुरनिवारिताः। अशक्तैर्नाशिताश्चान्ये दाक्षिणाद्यनुवर्तनात TantrVā. 234.1 (*on* i. 3.25); स राजद्वारपालानिवोपासनेन वशीकृत्य तैरनिवारितः प्रतिपद्यते स्वर्गं लोकम् ChāndoUBh. 169.13 (*on* iii. 13.6); निरोधः कुम्भकः स्मृतः। रोधशक्तिस्तदभ्यासाद्व्यक्तिमेत्यनिवारिता MṛgendraT. iii. 1.23; सा प्रविष्टानिवारिता । प्रविष्टा हृदयं सा मे यथावासगृहं तथा BṛKathāŚloSaṁ. 18.624; 10.222; तं देवक्रतुम् ··· यज्ञघातकाः । ब्रह्मवेषधराः ···। तेऽपि तत्र महाप्राज्ञाः प्राविशन्ननिवारिताः BrahmP. 168.16; तरन्तु वानराः क्षिप्रं सर्वे विक्रमशालिनः। समुद्रं रावणपुरीं प्रविशन्त्वनिवारिताः RāmaMañ. 222.9; अभ्येत्य ययाचे तं विप्रः कोऽप्यङ्गुलीयकम् । रक्षामि राक्षसाविष्टं पुत्रमित्यनिवारितः BṛKathāMañ. ix. 1.483; शिववर्मा तु ते मन्त्री प्रविशत्यनिवारितः KathāSaSāg. i. 5.62; vi. 6.126; गवाग्निदेवतार्थं तृणकाष्ठकुसुमानि सर्वतः स्ववदनिवारित आहरेत् Mitā. 264.12 (*on* 2.166); स तान् समस्तसामन्तानाससादानिवारितः RājTa.(Ka.) 3.232; धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः। राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः AlaṅkāSa. 108.2; SāhiDa. 576.2; Kuval. 71(33); अनिवारितोऽपि न विशेन्नार्पितसमये च नागरिकः Pañcā. 7.31; परेद्यवि नृपावासे संचरन्ननिवारितः। वीक्ष्य शून्यामपाह(? हा)र्षं तां माणिक्यकरण्डिकाम् PāṇḍaC. 6.694; अथासीत् सज्जनो नाम्ना प्रकृत्या दुर्जनः पुनः। भृत्यः कृत्येषु सर्वत्र कुमारस्यानिवारितः PārśvC. 1.74; हरिषेणनृपाङ्गजः।··· सेनचित्तानुवृत्त्या च द्वाःस्थेनाप्यनिवारितः SamarāSaṁ. 7.240; आजानसिद्धविज्ञानप्रसरे चानिवारिते । आनुकूल्यतिरोधानमशेषेष्वप्रमाणकम् NyāyKu. 197.12; **Bii** unavoidable, inevitable, essential शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि SuśruS. vi. 46.14; SiddhYo. 17.1; दोषाः स्वबीजसंताना दीक्षितेऽप्यनिवारिताः। नित्यस्य निरपेक्षत्वात् क्रमोत्पत्तिर्विरुध्यते PramāVār. 2.267; धीमहीति तदन्ते नो विनिवेश्योऽनिवारितः PāraS. 24.134; पुत्रशोकेन मरणं प्राप्स्यसे ·–। स इदानीं मम प्राप्तः शापकालोऽनिवारितः। इत्युक्त्वा विललापाथ राजा AdhyāRā. ii. 7.46; परिभवकृतः सर्वाश्चेष्टास्तनोत्यनिवारिताकुनृपमतिवद्देहं नृणां जरा परिजृम्भते SubhāRaSaṁ. 283; **Biii** not denied, not rejected, not refuted, remaining intact अनुमानानां सामर्थ्यभेदात् प्रामाण्यमनिवारितमेव HetuBiṬ. 38.20; तत्र च तादात्म्यसद्भावाद् अन्वयव्यतिरेकावनिवारितौ HetuBiṬ. 74.3; अथ स्थिते सर्वदिक्के शिवतत्त्वेऽधुनोच्यते । तस्मिन्ज्ञातेऽथवाज्ञाते शिवत्वमनिवारितम् SivDṛ. 7.1; भिन्नावभासच्छायानामपि मुख्यावभासतः। एकप्रत्यवमर्शाख्यादेकत्वमनिवारितम् ĪśvaPraSū. ii. 3.11; सर्वेषामपि च नृणामधिकारोऽनिवारितः BṛĀraUBhVā.(Sambandha.) 1025; ऊर्ध्वप्रचयस्तु त्रिकोटिस्पर्शित्वेन सांशत्वाद्द्रव्यवृत्तेः सर्वद्रव्याणामनिवारित एव TattvPradī.(A.) 200.3 (*on* 2.49); (योगवित्) स्फुटमवाप्नोति विज्ञानमनिवारितम् MālinīT. 18.30; तन्मते तदनित्यत्वं पुद्गलस्यानिवारितम् AnuVyā. 31B.6 (*on* ii. 2.10); अनिर्वाच्येऽप्रसिद्ध्यादिः प्रतीते प्रतिषेध्यता । स्वाश्रयेऽत्यन्तविरहः ·– इति पक्षत्रयेऽत्यन्तासत्त्वं स्यादनिवारितम् Nyāyāmṛ. 41B.6; नूनं 'मुखं चन्द्रः' इति विषयस्य मुखस्याप्यभिधानेन तन्निगरणाभावात्। ततश्च तत्रातिव्याप्तिरनिवारितैव स्यात् CitraMī. 45.3; **Ci** not controlled, unchecked ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च। पुनः पुनर्विवर्धेत स्वल्पोऽप्यनिवारितः MahāBhā. xii. 138.58; मत्तो हस्ती यत्नान्निवार्यमाणोऽधिकीभवति यद्वत्। अनिवारितस्तु कामान् लब्ध्वा शाम्यति YogŚā. 12.28; **Cii** not forbidden अपश्याम ···। माधवीगहनं वेश्म कामिनामनिवारितम् BṛKathāŚloSaṁ. 9.43; भिक्षाजीविनः ··· गृहिस्त्रीभिः सह संभाषणमनिवारिताः कुर्युः ManvaMu. 353.20 (*on* 8.360); BālamBha. ii. 333.25 (*on* 2.284); **D** not warded off, not driven out यदि पशवः परक्षेत्रे सस्यं भक्षयित्वा तत्रैवानिवारिताः शेरते तदा यथोक्ताद्दण्डाद् द्विगुणो दण्डो वेदितव्यः Mitā. 261.22 (*on* 2.160); *m.* **1** title of a king (*lit.* irresistible) विजयादित्यदेवस्यात्मजः प्रियः पुत्रः श्रीअनिवारित[:]समस्तसामन्त[आ]नतपादयुग्मः EI. iii. 4.8; श्रीमद्राजाथि[Read °धि]राजराजपरमेश्वरः।··· अनि[वा]रित[:] EI. iii. 121.39; **2** an epithet of Śiva विद्वत्तमो वीतभयो विश्वहर्तानिवारितः (एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम्) LiṅgaP. i. 98.83; SaurP. 41.68; ŚivaP. iv. 35.58 (392A.10)

**अनिवारितकर** (anivārita-kara) *adj.* in respect of which hands are not rejected वितीर्यमाणेष्वन्योऽन्यमनिवारितकरेषु कुसुमताम्बूलपटवासेषु ·– मृगाङ्कलेखा ··· पत्रलेखामवोचत् TilaMañ. 423.3.

**अनिवारितकेलिकौतुका** (anivārita-kelikautukā) *adj.* (*f.*) whose pleasure in playing is not checked अनिवारितकेलिकौतुका सा सुतनुः स्नेहवशंवदेन पित्रा। विहरति ··· हरशैले NavaSāC. 5.26.

**अनिवारितगोचर** ( anivārita-gocara ) *adj.* whose scope is unlimited महारसः। स्वेदतापननिर्घृष्टो महौषध्या रसेन तु। ददाति खेचरीं सिद्धिमनिवारितगोचरः Rasā. 12. 32.

**अनिवारितत्व** ( anivārita-tva ) *n.* **A** the state of not being denied or removed रक्षणपोषणादिना क्लेशेनेति प्रतिग्रहीतृव्यापारस्य निमित्तत्वेनानिवारितत्वादेवं ब्रवीति TantrVā. 1002. 9 (*on* iii. 4. 29); इन्द्रियमात्रमशक्तं धर्म इत्युक्तम्। न चैतावता चोदनैवेत्यवधारणोपपत्तिः। अनुमानादिशक्तिप्रसक्तेरनिवारितत्वात् Kāśi. i. 64.11 (*on* 2. 16); कर्णसूत्रसंबन्धिस्फुटयुक्तेरनिवारितत्वात् SiddhāTaVi. 19. 13; 45. 10; **B** the state of being unavoidable or essential रूपाणामनिवारितत्वाच्च पदलाभोक्तिरुपपन्ना SiddhāTaVi. 396.2.

**अनिवारितधनंजय** ( anivāritadhanañjaya ) *m.* name of a minister of the king Kīrtivarman महासांधिविग्रहिकश्रीमदनिवारितधनञ्जयपुण्यवल्लभस्य [ Read भेन ] लिखितमिद[म्] शासन[म्] EI. v. 205. 76.

**अनिवारितपुण्यवल्लभ** ( anivāritapuṇyavallabha ) *m.* name of a minister of the king Vikramāditya निरवद्यश्रीमद[ नि ]वारितपुण्यवल्लभेन लिखितमि[ दं ] EI. iii. 360.10.

**अनिवारितपौरुष** ( anivārita-pauruṣa ) *n.* irresistible valour अनिवारितपौरुषाक्र(? क्रां)तपल्लवान्वयेन ज्यायसा भ्रात्रा सम[भि]वर्धितविभूतिर्द्धा(? र्धा)राश्रयश्रीजयसिंहवर्म[।] EI. viii. 232. 8.

**अनिवारितप्रताप** ( anivārita-pratāpa ) *m.* irresistible prowess अनिवारितप्रतापप्रसरप्रतापितपाण्ड्यचोळकेरळकळभ्रप्रभृतिराजन्यकः ... °भट्टारकस्य सूनुः EI. ix. 203. 41; v. 204. 46.

**अनिवारितप्रतिकूलदान** ( anivārita-pratikūladāna ) *adj.* who has not prevented an adverse alienation यत्पुनर्लेख्यमनिवारितप्रतिकूलदानस्य स्वामिनः तद् विफलम् SmṛtiCan. iii. 154. 15.

**अनिवारितप्रसर** ( anivārita-prasara ) *adj.* [*f.* -ā] **A** whose movement is unhindered ( कुमार: ) त्वदाश्रमवने कृतस्थिरावस्थितिः सर्वतो विचरद्भिरनिवारितप्रसरैर्नभश्चरभटैर्न तदनाकुलो मित्रमात्मीयमनवरतमन्वेषयते TilaMañ. 393.11; **B** having unhindered (i. e. free) scope or sphere अपि चैवं सहोपलम्भनियमो बौद्धस्यानिवारितप्रसरो ज्ञानाद् भिन्नं साकारमर्थं निराकरोतीत्युक्तमेवेति Kāśi. ii. 187. 16 (*on* 5(3). 241); वृत्त्यन्तरोपकल्पनायामेकस्मादेव शब्दाद् वाच्येन सहैव व्यङ्ग्यस्यापि प्रतीतिरनिवारितप्रसरैव Kāvyānu.(He.) 167. 19; नाकर्णितानि भवता जन्तुकेतोरनिवारितप्रसराण्युपचारवचनानि LaṭaMe. 1. 20(3); **C** having uninterrupted flow हा हा कोऽयमस्याः ... अनिवारितप्रसरो नयनघनजलासारः UdaySuKa. 90.1; विरहवह्निधूम्यया। कलुषीकृताक्षियुगलेव सा किरत्यनिवारितप्रसरमश्रुनिर्झरम् Acyutarā. 9. 33.

**अनिवारितप्रसरप्रकाश** ( anivāritaprasara-prakāśa ) *m.* illumination spread of which is unchecked अनिवारितप्रसरप्रकाशशालितया क्षायिकज्ञानमवश्यमेव सर्वदा सर्वत्र सर्वथा सर्वमेव जानीयात् TattvPradī.(A.) 61.7 (*on* 1.47)

**अनिवारितम्** ( anivāritam ) *adv.* **A** without being checked or obstructed राज्ञस्तु भवनद्वारि सोऽवतीर्य नरोत्तमः।...प्रविवेशानिवारितः ( v. l. °तम् ) Rāmā. vii. 51. 5 (OI. Ed.); सः...। प्रौढप्रतापप्रसरः प्रसरन्ननिवारितम्। आक्रामत् कच्छदेशोर्वीम् TriṣaŚaPuC. i. 4.274; किं तु मत्कर्मघोरत्वं प्रसरत्यनिवारितम्। यत् करिष्यति दैवं तन्मया सर्वं सहिष्यते MalliC. 1. 444; **B** without any restriction, unrestrictedly अनिवारितमन्नाद्यं सार्वजन्यं तु कारयेत् PāraS. 14. 539; AgniP. 64. 42; अनिवारितमन्नाद्यं दद्याद्भुङ्क्तेऽथ च स्वयम् AgniP. 36. 18; सर्वेषां जीवपुञ्जानां तर्पणं जीवनं स्मृतम्। प्रपादानमतः कुर्यात्सुस्नेहादनिवारितम् ŚivaP. v. 12. 2 (419B. 9); अनिवारितमन्नाद्यं दत्त्वा क्षेप्यो बलिर्निशि ĪśānŚiPa. ii. 63.45; अयं निजः परो वायमित्यपेक्षाविवर्जितम्। तत्रानिवारितं प्रापुर्भोजनं भोजनेच्छवः PariPar. 11.104; दृष्टः ... सार्थवाहस्य नन्दनः।... स्वभुजोपार्जितैर्धनैः। दीनादीनां ददद्दानं दानशौण्डोऽनिवारितम् SamarāSam. 4. 36; यः खलु ... सकलानेव जनांश्चित्रार्पितानिवानिवारितमेवाकार्षीत् CaitaCan. 14.22(1); **C** without any interruption, continuously अधोऽक्षजम्। विस्तारिकान्तनयना या द्रक्ष्यन्त्यनिवारितम् BrahmP. 192.27; मासार्धाच्छास्त्रसंघातमुद्गिरत्यनिवारितम्। ... समाधिस्थः MālinīT. 19. 53.

**अनिवारितमनःप्रसर** (anivārita-manaḥprasara) *adj.* whose mental process is unobstructed or unhindered विधेहि ... अनिवारितमनःप्रसरः पुराणवारुणीपानोत्सवम् TilaMañ. 61. 11.

**अनिवारितविक्रम** ( anivārita-vikrama ) *adj.* having irresistible prowess अपि वासववारणस्य वक्त्रे ...। अनिवारितविक्रमः करो मे दयितां स्प्रष्टुमलं न तापसस्य ĀścaCū. 4 3.

**अनिवारितविक्रमादित्य** ( anivāritavikramāditya ) *m.* sun in the form of irresistible prowess प्राप्य च परमेश्वरतामनिवारितविक्रमादित्यः(? त्यो) विक्रमादित्यसत्याश्रयश्रीपृ[थि]वीवल्लभमहाराजाधिराजपरमे[श्वरस्सर्व्वा]ना[ज्ञा]प[यति] EI. ix. 100. 18; x. 103. 17.

**अनिवारितविहङ्ग** ( anivārita-vihaṅga ) *m.* bird not warded off, unprevented bird अनिवारितविहङ्गतुण्डखण्डितपिण्डखर्जूरजालकैः ... पादपैः परिवृतम् ... शूलपाणेः शून्यं सिद्धायतनमपश्यत् Kād. 127. 7.

**अनिवारितशक्ति** ( anivārita-śakti ) *adj.* **A** whose strength is unrestricted अनिवारितशक्तेर्मूषकस्य भिक्षाभक्षणे केनापि कारणेन भवितव्यम् PañcT. 2. 29(28) (226. 10); **B** whose scope is not restricted उत्पत्तिविधिः ... तद्रूपोत्पत्तिसमर्थेन विध्यन्तरेणानिवारितशक्तिः ... कर्म भिनत्ति TantrVā. 541.21 (*on* ii. 2.25)

**अनिवारितसत्त्र** ( anivārita-sattra ) *adj.* **A** wherein dwelling is not restricted वनमनिवारितसत्रं( ? त्त्रं ) द्विजसार्थानां विभिन्नजातीनाम्। दहतः कृपीटयोने[ र्जा ]तं माहात्म्यमेतस्य SūktiMu. 34.2; **B** wherein sacrificial session is not obstructed, SūktiMu. 34. 2.

**अनिवारितसंपात** ( anivārita-sampāta ) *adj.* fall of which is not checked कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा। अनिवारितसंपातैरयमात्माश्रुवारिभिः VeṇīSam. 5. 212.

**अनिवारितसामर्थ्य** ( anivārita-sāmarthya ) *n.* unsuppressed secondary power or *lakṣaṇā* कृतार्थे मन्त्रपाठे च गौणानां स्मारकान्तरम्। अनिवारितसामर्थ्यप्राप्तं किमिति बाध्यते TantrVā. 767. 19 (*on* iii. 2. 1)

**अनिवारितातपा** ( anivāritātapā ) *adj.* (*f.*) not warding off the heat of the sun आगामिदैत्याशनकेलिकाङ्क्षिणी कुपक्षिणां घोरतरा परंपरा। दधौ पदं व्योम्नि सुरारिवाहिनीरुपर्युपर्येत्यनिवारितातपा KumāSam. 15. 14.

**अनिवारितातिथि** ( anivāritātithi ) *adj.* who has not prevented the guests उपेयुषां द्रष्टुमाहवनमग्रजन्मनाम्। आतिथेयमनिवारितातिथिः कर्तुम् ... स नाश्रमत् ŚiśuVa. 14. 38.

**अनिवारितापतत्** ( anivāritāpatat ) *adj.* blowing without impediment ( अहम् ) अनिवारितापतत्पु( ? त्प )रुषमध्यंदिनानिललुप्यमानवपुषमनवरतजायमानकण्ठास्यशोषमात्मानमवलोक्य ... चिन्तितवान् TilaMañ. 244.1.

**अनिवारितामृतपयश्च्युत्** (anivāritamṛtapayaścyut) *adj.* oozing the milk of immortality without any obstruction अनिवारितामृतपयश्च्युतो विभोस्तव शक्तयो भुवनकामधेनवः HarVi. 6.157 ( *but* comm. अमृतं विज्ञानम् )

**अनिवारितारम्भ** ( anivāritārambha ) *adj.* undertaking of which is unhindered उत्साहयति मामिह कर्मणि वत्सयोरयमनिवारितारम्भः संरम्भः AdbhuDa. 8. 39(2)

**अनिवारितार्चिस्** ( anivāritārcis ) *adj.* whose flames are unchecked (i. e. not extinguished) वह्निर्द्विगुणप्रभावो ददाह लङ्कामनिवारितार्चिः MahāN. 5.101.

**अनिवारितेन्द्रियवृत्ति** ( anivāritendriyavṛtti ) *adj.* having the function of sense-organs not obstructed मया ... किमनिवारितेन्द्रियवृत्तिना बालतपस्विनेव निष्फलोऽनुभूतः ... कायक्लेशः TilaMañ. 149. 2.

**अनिवार्थ** ( anivārtha ) *adj.* meant for the sake of a stem not having the sense of similarity संहितायादेर्मृदः ऊरुद्योः स्त्रियामूत्यो भवति। अनिवार्थोऽयमारम्भः JaineVyā. 159.29 (*on* iii. 1.59)

**अनिवार्य** ( a-nivārya ) *ger.* **A** not having checked or withheld त्वय्येव सक्तामनिवर्त्य( v. l. वार्य Gorr. Ed. )बुद्धिम्।... शोकरुग्णः ... अस्तमितः पिता ते Rāmā. ii. 2173*(2); तौ ...। परस्परवियोगाधिं कथयामासतुः शुचा। अनिवार्य प्रकृतिभिः सान्त्वितौ बहुलोक्तिभिः GaṇeP. i. 55. 21; **B** not having prevented or excluded प्रपा ... भूतेभ्यः प्रतिपादिता। अस्याः प्रदानात् पितरस्तृप्यन्तु ...। अनिवार्य ततो देयं जलम् BhaviP. 857A. 29 (iv. 172. 10); **C** not having rejected अन्यत्र रूढिमनिवार्यैव महायोगवृत्त्या मध्वादिशब्दानामीश्वरादौ वृत्त्यभ्युपगमात् TattvPrakā. 70B. 1 (*on* i. 4. 11)

**अनिवार्य** (a-nivārya) *adj.* [*f.*-ā] **Ai** not to be warded off or driven out क्षुद्रपशवः सर्वथा अनिवार्याः, अश्वतरगजवाजिनश्चादण्ड्याः अवश्याः शनैरपवार्याः ŚaṅkhaLiDS. 307; **Aii** not to be averted, inavertible अनिवार्यमिदं लोके ब्रह्मस्वं दुर्जरं विषम् BrahmāṇḍP. ii. 28. 42; अभिमन्युसुतः श्रुत्वा शाप( ? पं )-दत्तं द्विजेन वै। अनिवार्यं च विज्ञाय मन्त्रिवृद्धानुवाच ह। शप्तोऽहम् DevīBhāP. ii. 8. 30; कौलीन्यादलमेनां भजामि न कुलं स्मरः प्रमाणयति। तद्भावनेन भजतो मम गोत्रस्खलनमनिवार्यम् ĀryāSaŚa. 191; **B** not to be checked, not to be obstructed अनिवार्यमसंबाधं तव वाचा कथं वयम्। न स्पृशेम ... भागीरथीजलम् MahāBhā. i. 158.21; न त्वमसि, या( ? योऽ )तिविस्तीर्णमनिवार्यमभ्यर्णवर्तिनं च विहाय व्योममार्गम् ... आदिदेवतायतनमण्डपस्य शिखराग्रभागेन लीलया निबद्धलोलध्वजपताका( ? क )मुत्तमं यानमास्थितो यातुमभिलषति TilaMañ. 382.19; **C** irresistible, invincible यदाजानीत तां शक्तिमेकघ्नीं सततं रणे। अनिवार्यामसह्यां च देवैरपि सवासवैः MahāBhā. vii. 158.2; तमन्तकमिव क्रुद्धमनिवार्यं महारथम्।

or a continuous outflow इन्द्राय॒ गिरो॒ अनि॑शितसर्गा अ॒पः प्रेर॑यं॒ सग॑रस्य बु॒ध्नात् ṚV. x. 89.4; SV. I. iv(1). 5.8; TaiBr. II. iv. 5.2.

**अनिश्चय** ( a–niścaya ) *m.* I indecision, uncertainty, lack of determination, non-ascertainment गायत्री पदपङ्क्तिर्वा भवति । अनिश्चयो वा शक्करीणां सर्वेच्छन्दोमहत्त्वात् UpaniSū. 6.33; अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चयम् । अनिश्चयज्ञा ( v. l. अनिश्चयं च ) धर्माणाम् MahāBhā. xii. 64.4; प्राप्तो वनं नाहमनिश्चयेन BuddhaC. 9.51; 11.60; सोऽनिश्चयान्नापि ययौ न तस्थौ Saund. 4.42; कारणानां च वैकल्यात् कारणस्याप्यनिश्चयात् । मतिभेदे च तेषां वै दृष्टीनां विभ्रमो भवेत् VāyuP. i. 58.9; BrahmāṇḍP. i. 31.9; निगमादिभिरर्थे कल्प्यमानेऽव्यवस्थितः शब्दार्थो भवेत् । तत्रानिश्चयः स्यात् ŚābaBh. 228.1 (*on* i. 3.10); 815.7 (*on* iii. 3.10); अनिश्चयाद् गजवशयेव भीतया गतागतैर्ध्रुवमिह खिद्यते श्रिया MudrāRā. 2.3; व्यक्त्या चेन्द्रियसंस्कारात् तद्दर्शने तद्व्यङ्ग्येषु सामान्येषु कदाचिदनिश्चयो न स्यात् PramāVāSvopVṛ. 48.7; उपेये तु [प्रमा]णव्यापारासंभवादनिश्चयेऽपि विवेचितोपायाः ··· न हीयेरन् HetuBiṬ. 2.7; निश्चयारोपितयोश्च बाध्यबाधकभावान्निश्चये सति नानिश्चयो भवतीति बाध्यते Śarka. 24.24; प्रतिपत्तुः सादृश्यादनिश्चयः संशयः सः Kāvyālaṅ (Ru.) 8.59; उत्पत्त्यैव च ज्ञानस्य निश्चयात्मकत्वान्नानिश्चयो युक्तः IṣṭaSi. 46.1; प्रातिपदिकसंज्ञाविषयस्यानिश्चयात् तत्प्रकृतिकानां ङ्याप्प्रातिपदिकादित्यधिकृत्य स्वादिप्रत्ययानां विधानमनुपपन्नम् NyāyMañ. i. 385.11; ननु रूप्यविषयमापकनिर्देशे द्वे कृष्णले प्रतिपत्तव्ये इति प्रतिजानीते । ततश्चानिश्चयः ManuBh. ii. 132.11 (*on* 8.135); ii. 142.28 (*on* 8.151); यत्र यत्र भवेद्धूमस्तत्राग्निरित्यनिश्चयात् ŚivDṛ. 5.47; न चैतावता यत्रापि निश्चयः शक्यस्तत्राप्यनिश्चय इति वक्तुं युक्तम् PrakaPañ. 102.13; धूमबाष्पाद्यविवेकेनानिश्चये कश्चिदाह अग्निमानयं प्रदेशो धूमवत्त्वात् NyāySā. 8.11; अत्राप्यस्ति पारंपर्येण कार्यान्वयो वाक्यप्रयोक्तुः वृद्धव्यवहारे कार्यान्वितपदार्थे मधुकरपदस्य व्युत्पत्तिभावादिति चेन्न, अनिश्चयात् NyāyKa. 5.25; नन्वनौपाधिकत्वस्याप्यनिश्चयादुपाधिशङ्का NayaVi. 124.4 (*on* i. 1.5); 56.1 (*on* i. 1.2); 167.10 (*on* i. 1.5); रूपेण केन सविता समायातीत्यनिश्चयात् । तस्मादादित्यमाख्यातम् BrahmP. 174.23; तथान्ये संभवं प्राहुः सोऽनुमानान्न भिद्यते । भिद्यते तु यद्यनिश्चयः स्यात् SaraKaṇṭhā. 345.4; लोकेऽपि चाप्तत्वानिश्चयेऽपि वाक्यार्थप्रतीतेः NyāyKuA. ii(1).214.1; दूरस्थयोर्वनस्पत्योः कदाचिदपि विशेषणविशेष्यभावेनानिश्चयात् PramāMā. 5.11; एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः KāvyPra. 759.2; न ममानिश्चयेऽपि सर्वेषामनिश्चयानिश्चयात् AlaṅkāRa. 112.46; ईहितस्य अनिश्चयादसमञ्जसमापद्येत PramāMī. 4.26 (*on* i. 1.4); असाक्षी ··· अनिश्चयात् मिथो भिन्नगीः SmṛtiCan. iii. 187.11; तद्विषयप्रमाणानुदये तत्सत्ताया अप्यनिश्चयात् TattvPradī. (Ci.) 15.8; अनिश्चये ··· [च] तस्यैष कथं ज्ञानस्य निश्चयः NyāyKu. 81.6; अनिश्चयः विरुद्धकोटिसंस्पर्शी संशयः TarkSaṁ.(Ā.) 79.17; अनिश्चयोऽनध्यवसायः TarkSaṁ.(Ā.) 83.11; अनिश्चयेन वाक्यस्य समाप्तिः संशयः स्मृतः BhāvPra. (Śa.) 224.15(8); 178.13(6); आकारदारुणोऽयं भयमस्मादित्यनिश्चयो भवति SūktiRa. 163.143; Subhāṣi. 2856; किलेत्यनिश्चयेनानुरागस्य स्वल्पमात्रसूचनया नर्मस्फोटत्वम् RasāSu. 82.1 (1.277); अप्रसिद्धशाखासु पुनरन्योऽपि कारणतयोच्यताम् । तासामानन्त्येनानिश्चयात् TattvPrakā. 14B.4 (*on* i. 1.10); 207A.5 (*on* iv. 2.2); प्रेक्षावत्प्रणयनस्य चानिश्चयात् NyāySu.(Ja.) 3B.5 (*on* i. 1.1); सर्वस्य पक्षत्वे व्याप्तिग्राहकसहचारदर्शनस्थलाभावेन सहचारनिश्चयाभावे सति व्याप्तेरनिश्चयात् TarkKau. 14.6; संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः SāhiDa. 336.9; कस्यां ज्ञानव्यक्तौ प्रामाण्यं कस्यां नेत्यनिश्चयाद् व्यवहारोच्छेदः स्यात् YuktiSneha. 21.13 (*on* i. 1.2); यस्य श्वेतच्छत्रं पश्यति तदाकारविशेषादीनां दूरत्वादिदोषादनिश्चयेऽपि अयं राजेति विशिष्य निर्धारयति ŚivārkaMaDī. i. 96.10 (*on* i. 1.1); मुक्तिसाधनं कतमज्ज्ञानमित्यनिश्चयात् AṇuBh. 234.5 (*on* iii. 3.29); मिथ्यात्वस्य अनिश्चयात् संशयः GuruCandr. i. 3.8; विधेरभावे स्तुतेरेवानिश्चयेन तस्यास्तदनिश्चायकत्वात् MīmāKau. iii(2). 103.15 (*on* ii. 1.32); iii(2). 180.8 (*on* ii. 2.6); अस्य चोपाधेः साध्यव्यापकत्वाद्यनिश्चये शङ्कितोपाधित्वम् MānaMe. 31.8; आकाङ्क्षाभावस्यानिश्चयात् संभवत्येकवाक्यतासंशयः MayūMāli. 5.5 (*on* i. 2.1); तिङ्वाच्यसंख्यायाः कुत्रान्वय इत्यनिश्चयात् VaiyāBhū. 6.3 (*on* 2); 233.5 (*on* 58); ( भक्तिः ) कतमा सा तद्धेतुरित्यनिश्चयात् तल्लिप्सोस्तत्र प्रवृत्त्यसंभवः स्यात् GoviBh. 237.6 (*on* iii. 3.29); II disbelief, lack of certitude or conviction देव्यामपि हि वैदेह्यां सापवादो यतो जनः । रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः UttaRāC. 1.6; सहस्रनाम तत् तुल्यं रामनामेति गीयते । तस्मिन्ननिश्चयं कृत्वा कथं सिद्धिर्भवेदिह SkandP. iii(2). 38.73; देवीस्वप्नस्यानिश्चयाद् दुर्योधनस्य विपरीतज्ञानं भ्रान्तिः RasāSu. 245.13 (3.89); *adj.* not (properly) ascertained, uncertain, undecided, indecisive सुहृदुपदिष्टेऽप्यनिश्चयबुद्धेरज्ञानं परस्परमसम्पा TattvSa. (13) 133.11; प्रतिभूव्यासं पुनर्भिला वदता । आत्मज्ञानं ख्यापितमनिश्चयस्तत्कृतव्यासः BrāhmSphuSi. 11.15; Kāśi. i. 148.20 (*on* 2.168)



**अनिश्चयकर** ( a–niścayakara ) *adj.* not causing certainty तदङ्गभावहेतुत्वनिषेधेऽनुपलम्भनम् अनिश्चयकरं प्रोक्तमिन्द्रियाद्यपि शेषवत् PramāVār. 2.116; अनिश्चयफलं ( v. l. अनिश्चयकरं ) प्रोक्तं ईदृक् क्वानुपलम्भनम् PramāVār. 3.94; कामार्ता घर्मतप्ता वेत्यनिश्चयकरं वचः Kāvyāda. 3.143.

**अनिश्चयकाल** ( aniścaya–kāla ) *m.* the time of uncertainty (about marriage) अभ्यर्थितापि नातिविवृता स्वयं स्यात् अनिश्चयकालात् (KSS. 29) KāmSū. 224.10 (3.4)

**अनिश्चयकृत्** ( a–niścayakṛt ) *adj.* not causing any decision यदनिश्चयकृत् प्रोक्तं संदिग्धं तद्गुणी भवेत् SaraKaṇṭhā. 95.1.

**अनिश्चयज्ञ** ( a–niścayajña ) *adj.* I who does not know the decision (i. e. who is unable to take any decision) अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये । अवशो मुह्यते पार्थ यथा त्वं मूढ एव तु MahāBhā. viii. 49.17; II who is not acquainted with the final say प्ररूपयन्ति ··· वादिनो लोकनिश्चयम् । अनिश्चयज्ञा धर्माणामदृष्टान्ते परे रताः MahāBhā. xii. 64.4.

**अनिश्चयज्ञान** ( aniścaya–jñāna ) *n.* knowledge different from the definiteness (of the thing-meant) निश्चयार्थं वक्तृप्रमाणापेक्षेति चेत्, न अनिश्चयज्ञानासंभवात् । निश्चय एव हि ज्ञानम्, तच्चेदस्ति कथं निश्चयो नास्तीति शक्यते वक्तुम् Kāśi. i. 148.20 (*on* 2.168)

**अनिश्चयफल** ( a–niścayaphala ) *adj.* not resulting in certainty साधनम् । अनिश्चयफलं प्रोक्तं ईदृक् क्वानुपलम्भनम् PramāVār. 3.94.

**अनिश्चयबुद्धि** ( aniścaya–buddhi ) *f.* undecided mind सुहृदुपदिष्टेऽप्यनिश्चयबुद्धेरज्ञानम, परस्परमसम्पा TattvSa. (13) 133.11.

**अनिश्चयमात्र** ( aniścaya–mātra ) *n.* mere uncertainty न च योग्यताया अनिश्चयमात्रेण स्फुटतरसाक्षात्कारापह्नवः Kiraṇā. 328.12.

**अनिश्चयरूप** ( aniścaya–rūpa ) *adj.* of the form of uncertainty अर्थसारूप्यमर्थाकारता तच्च निश्चयरूपमनिश्चयरूपं वा SyādvāMañ. 16(41)

**अनिश्चयरूपत्व** ( aniścayarūpa–tva ) *n.* the state of being that which does not have the nature of certainty दोषश्च ज्ञानस्यानिश्चयरूपत्वमपि Upask. 413.7 (*on* ix. 2.11); ब्रह्मसाक्षात्कारः ··· उक्तदोषाहिताप्रामाण्यसंशयविषयत्वेनानिश्चयरूपत्वान्नाविद्यानिवर्तकः GuruCandr. ii. 194.23; नियमसिद्धेः उक्तव्याप्तिज्ञानस्य । अप्रयोजकत्वात् निश्चायकस्य तर्कस्यानवतारेणानिश्चयरूपत्वात् LaCandr. 508.18.

**अनिश्चयवत्** ( aniścaya–vat ) *adv.* as in the case of uncertainty जातिपरापरत्वध्रौव्यमेव च क्वाप्येकन्यूनवृत्तित्वे प्रमाणं स्यात् । क्व तथेति चेन्न । शैलेऽनलस्यानुमायां क्व हस्तवितस्त्यादौ तदंश इत्यनिश्चयवददोषत्वात् KhaṇḍanKhā. 628.13.

**अनिश्चयहेतूकृ** ( aniścayahetū–kṛ– ) VIII. P. to make a probans as uncertain हन्त तर्हि विपक्षे वीक्षणं तस्य साध्यधर्मिणि साध्यविनाकृतां वृत्तिं संभावयद्धेतुमनिश्चयहेतूकरोतीति आयातम् DharmoPra. 95.20.

**अनिश्चयाकार** ( a–niścayākāra ) *adj.* not having the form of certainty न हीन्द्रियमज्ञायमानमनिश्चयाकारमेव ज्ञानं जनयति NyāyVārPari. 44.1.

**अनिश्चयात्मक** ( aniścayātma–ka ) *adj.* [*f.*-ikā] not having the nature of certainty अनिश्चयात्मिका वृत्तिर्विचिकित्सेत्युदाहृता BṛĀraUBhVā. i. 5.111; न हि ज्ञानमनिश्चयात्मकं किंचिदस्ति Kāśi. i. 72.27 (*on* 2.20); प्रायः सहचरितहृदयप्रसादोद्वेगप्रभाविता हि प्रतिभा, न त्वैकान्तिकहेतुका । अत एवानिश्चयात्मिका बुद्धिः Kāśi. i. 122.9 (*on* 2.115); यत्त्वनिश्चयात्मकं ज्ञानमेव नास्तीति ज्ञानोत्पत्तौ निश्चय एव जायत इत्युच्यते । तन्न । संशयस्यापि ज्ञानत्वात् Kāśi. i. 148.26 (*on* 2.168); सर्वत्रैव तावदिन्द्रियार्थसंप्रयोगानन्तरमनिश्चयात्मिका बुद्धिरालोचनमात्ररूपा जायते, सा च पश्चान्निश्चयं प्रसूते NyāyRa. 156.17 (*on* 4.71); तदेवमनर्थजत्वाविशेषेऽप्यनिश्चयात्मकात् संशयात् निश्चयात्मकतया विपर्ययो भिद्यते Kiraṇā. 263.21; विषयित्वेनार्थाद् विषयस्य संभावनं भवितव्यमनेन स्थाणुनेत्याद्यनिश्चयात्मकवितर्कादिशब्दाभिधेयसंभावनाप्रत्ययविषयीकृतत्वमुत्प्रेक्षा AlaṅkāRa. 32(1); NyāyPari. 337.8.

**अनिश्चयात्मकता** ( aniścayātmaka–tā ) *f.* the state of being that which does not have the nature of certainty निश्चयनिषेधेनानिश्चयात्मकता दर्शिता न तु निश्चयाभावमात्रं विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात् Kiraṇā. 270.12; अनिश्चयात्मकतया संभावनायाः संदेहमूलत्वं न त्वध्यवसायगर्भता AlaṅkāRa. 32(3)

**अनिश्चयात्मकत्व** ( aniścayātmaka–tva ) *n.* the state of being that which does not have the nature of certainty उत्पत्त्यैव च ज्ञानस्य निश्चयात्मकत्वान्नानिश्चयो युक्तः । अनिश्चयात्मकत्वं तु नेहाधिकृतम् IṣṭaSi. 46.1; Kāśi. iii. 61.24 (*on* 5(4).88); उत्प्रेक्षाया अपि संभावनारूपत्वादनिश्चयात्मकत्वेन संदेहान्तर्भावे पृथगनलंकारत्वप्रसङ्गात् AlaṅkāRa. 31(36); दूरान्धकारादिवशादसाधारणधर्मावमर्शरहितः प्रत्ययः अनिश्चयात्मकत्वात् अनध्यवसायः PramāMī.

5.14 (*on* i. 1. 6); विरुद्धकोटिसंस्पर्शशून्योऽनिश्चयः अनध्यवसायः — इत्यपि न। अनिश्चयात्मकत्वेन तदन्तर्भावसंभवे। विधान्तरं न कल्प्येत गौरवादतिसक्तितः TarkSaṁ.(Ā.) 83. 12; अनवधारणेति किमुच्यते। अनिश्चयात्मकत्वमिति Citra-Mī. 61. 25.

**अनिश्चयात्मन्** (aniścayātman) *adj.* having the nature of uncertainty न चानिश्चितोऽर्थो ज्ञातो भवति अनिश्चियात्मनो ज्ञानस्याभावात् ĀgaPrā. 38.11.

**अनिश्चयाधिगमन** (a-niścayādhigamana) *n.* lack of knowledge of certainty द्वैधात् श्रुतेः स्मृतेश्चैव निश्चयो नाधिगम्यते। अनिश्चयाधिगमनाद्धर्मतत्त्वं निगद्यते(? न विद्यते) VāyuP. i. 58. 7; BrahmāṇḍP. i. 31 7.

**अनिश्चयानुपपत्ति** (aniścayānupapatti) *f.* untenability of uncertainty न च निरालम्ब एव तदुपलम्भो वृक्षादिदेशप्रतिनियमानुपपत्तेः।… अनिश्चयानुपपत्तेश्च ĀtmaTaVi. 735.17.

**अनिश्चयान्त** (aniścayānta) *adj.* resulting in non-ascertainment अनिश्चयान्तं यद्वाक्यं संशयः स निगद्यते RasāSu. 250. 8 (3.104)

**अनिश्चयापत्ति** (aniścayāpatti) *f.* undesired contingency of non-ascertainment उक्तानुकूलतर्कसत्त्वे व्यभिचारसंशयस्याप्रतिबन्धकत्वात्, अन्यथा पक्षावृत्त्युपाधौ साध्यव्यापकत्वस्यानिश्चयापत्तेः LaCandr. 464.27.

**अनिश्चयार्हत्व** (aniścayārha-tva) *n.* the state of being that which does not amount to certainty (कर्तृगाम्) अन्यत्रानुपलम्भस्योपलम्भस्य वा परोपदेशादप्रत्ययादनिश्चयार्हत्वात् PramāVāSvopVṛ. 80.27.

**अनिश्चयावगमन** (a-niścayāvagamana) *n.* lack of knowledge of certainty द्विधा श्रुतिः स्मृतिश्चैव निश्चयो नाधिगम्यते। अनिश्चयावगमनाद् धर्मतत्त्वं न विद्यते MatsyaP. 144.8.

**अनिश्चयोपपत्ति** (a-niścayopapatti) *f.* non-possibility of certainty न हि धूमस्य विशेषं दहनप्रयोज्यं प्रतिषेद्धुं स्वभावानुपलब्धिः प्रभवति। कार्यैकनिश्चेयस्य तदनुपलब्धेरेवानिश्चयोपपत्तेः NyāyKuA. i. 60.2.

**अनिश्चल** (a-niścala) *adj.* most steady (i. e. than which there is nothing else steadier) (दर्शनम्) अनिश्चलं यच्छस्त्रास्त्रघातेऽपि तदविक्रियम् BhāvPra.(Śā.) 124.1(5)

**अनिश्चलत्व** (aniścala-tva) *n.* unsteadiness अनिश्चलत्वं मनसो यस्मात्तन्मानसोऽद्भुतः BhāvPra.(Śā.) 66. 1(3)

**अनिश्चलमनस्** (aniścala-manas) *adj.* having an unsteady or agitated mind उभौ कृतशुभाशुभौ सदसतां क्रमादाहृतौ तदास्यसरसीरुहादिति निशम्य कम्पातुरः। अनिश्चलमना मनःपवनयोः पुरोगामिनं मनोरमतुरंगमं नृपतिरारुरोह क्षणात् HariVi. 5.28.

**अनिश्चायक** (a-niścāyaka) *adj.* not leading to ascertainment सेयं तत्त्वानुपलब्धिमात्रविवक्षयोभयपक्षसमा, (अनुपलब्धिः) प्रकरणसमा तु यथा प्रकरणमनिश्चायकमेवमियमपीत्यर्थः TātpaṬ.(Vā.) 342. 6 (*on* i. 2.7); यथा हि घटज्ञानमसत्यपि घटे दृष्टमित्यनिश्चायकं तथार्थक्रियाज्ञानमप्यसत्यामेवार्थक्रियायां स्वप्नावस्थायां दृष्टम् NyāyRaMā. 37. 8; PrakaVi. 43. 16; TantrRaha. 6.25.

**अनिश्चायकत्व** (aniścāyaka-tva) *n.* the state of being that which does not lead to ascertainment, the state of not being decisive परतःप्रामाण्यवादिनां सर्वज्ञानानामेकस्यापि स्वतोऽनिश्चायकत्वान्न प्रामाण्यसिद्धिः IṣṭaSi. 352. 11; यावत्त्वविसंवादो नानुमीयते तावदर्थगोचरं ज्ञानमुत्पन्नमप्यनिश्चायकत्वादप्रमाणमेव Kāśi. iii. 111.24 (*on* 5(5). 23); न हि वयं गुणत्वेनोत्पत्तिमत्त्वेन वा रूपेणानिश्चायकत्वं तर्कस्याचक्ष्महे TātpaṬ.(Vā.) 60. 16 (*on* i. 1.1); NyāyVārPari. 324.3; अनेन प्रवेशकादौ उत्कलिकाप्रायं बहुतरसमाससंकीर्णम् … समाससंशयेनार्थानिश्चायकत्वाच्च न कर्तव्यम् AbhinBhā. ii. 425.22 (*on* 18. 36); प्रातिभाख्यमपि प्रमाणं कैश्चिदिष्टं 'श्वस्ते भ्रातागन्ते'त्यादिकम्, तत्तु लिङ्गाद्याभासजम्, अनिश्चायकत्वादेवाप्रमाणम् ŚāstrDī. 87.18 (*on* i. 1. 5); पूर्वत्र कारणपरंपरापेक्षामुखेनासत्त्वारोपः कारणम्, उत्तरत्रानिश्चितस्यानिश्चायकत्वाध्यारोपः TārkiRa. 275. 5; अनिश्चायकत्वं तु वेदान्तानामयुक्तं निर्दोषत्वात् VedāntKa. 44.17 (*on* i. 1. 1); अनुमानस्यानिश्चायकत्वेन शास्त्रादेव कारणत्वसिद्धिः TattvPrakā. 10B.6 (*on* i. 1.3); Upask. 407.2 (*on* ix. 2. 5); पूर्वत्वाभावादिति। पूर्वं निश्चायकत्वाभावादित्यर्थः। अनिश्चायकत्वे हेतुं पौरुषेयत्वं ज्ञापयितुं श्रुतौ तदभावं ज्ञापयति Guru-Candr. i. 469. 19; BhāṭṭCin. i. 47.17 (*on* i. 1. 4)

**अनिश्चाययत्** (a-niścāyayat) *adj.* [*f.* -ntī] not leading to ascertainment or decision यद्येन सहचरितं दृष्टं तत्क्वचिद् दृश्यमानं तत् स्मारयत् तद्विरुद्धेनापि संबन्धादनिश्चाययत् संशयहेतुर्भवति TātpaṬ.(Vā.) 249. 9 (*on* i. 1. 23); न हि छिदामजनयन्तोऽपि चक्षुरादयस्तन्निश्चायकतामात्रेण छेदनतया व्यवह्रियन्तेऽपि त्वनिश्चाययन्तोऽपि जनयन्त एव कुठारादयः NyāyVārPari. 180. 4; अस्मदादिप्रतिभा तावल्लिङ्गाद्याभासजन्या प्रत्यक्षादिकमनपेक्ष्य स्वातन्त्र्येणार्थमनिश्चाययन्ती नैव प्रमाणम् NyāyRa. 143. 11 (*on* 4. 32)

**अनिश्चित** (a-niścita) *adj.* [*f.* -ā] **AI** not determined, not decided, not ascertained, not definitely known योनावजाविके मिश्रगोचरत्वादनिश्चिते CaraS. i. 27. 60 (1922 Ed.); AṣṭāSaṁ. i. 34.10 (1. 7); AṣṭāHṛ. i. 6.53; अनुमेयत्वेनोद्दिष्टे चानिश्चिते च परेषां निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः PadārthaSaṁ. 250. 25; सर्वात्मना कृते ग्राहे को भेदः स्यादनिश्चितः PramāVār. 1. 54; NyāyMañ. i. 277. 16; अनिश्चितायां तु व्याप्तौ धर्मिसमाश्रये वा तत्स्वभावतया गमको न कश्चिद् गमकः स्यात् PramāVāSvopVṛ. 64. 6; अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता। सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः GauḍKā. 2.17; BṛĀraUBhVā. ii. 1. 2; नानिश्चिते स्थाणौ पुरुषे वान्यतरनिबन्धना प्रवृत्तिः BrahmSi. 18.14; तमादेशं विशिनष्टि — येन आदेशेन … अविज्ञातं विज्ञातम् अनिश्चितं निश्चितं भवति ChāndoUBh. 337.12 (*on* vi. 1. 3); 513. 5 (*on* viii. 8.1); शास्त्राच्छ्रवणमात्रेण कार्याच्चानुभवो यदि। वस्तुन्यनिश्चिते वार्ता सार्थवादेऽपि दृश्यते BṛĀraUBh-Vā. (Sambandha.) 844; अर्थः … अनिश्चितश्च न ज्ञात इति तावद् व्यवस्थितम् PrakaPañ. 39.2; निश्चितस्तु तद्विरुद्धप्रत्यक्षविधिः। अनिश्चिनेन न वा निश्चितं बाध्यते ManuBh. i. 57. 19 (*on* 2. 6); ii. 98.13 (*on* 8. 56); अनिश्चिने विधौ कन्या गर्भप्रश्नेऽन्यतः पुमान् TantrRā. 27.16; न चानिश्चितोऽर्थो ज्ञातो भवति Kāśi. i. 72. 27 (*on* 2. 21); iii. 117.19 (*on* 5(5). 39); iii. 118.17 (*on* 5(5).40); अत्र तस्मिन्नपत्ये इत्यनिश्चितस्याप्यपत्यविशेषस्य संदिग्धत्वेऽपि गौर्यामिति प्रकरणेन गम्यते SaraKaṇṭhā. 95. 6; तत्किमनुपपद्यमानोऽर्थः अनिश्चित एव स्वोपपादकमाक्षिपति, येनानवस्था न स्यात् NyāyKuA. i. 82. 2; NyāyVārPari. 588. 8; शक्तिश्च नादसमबिन्दुरनिश्चिता चेद् बीजादजः परतरः खलु शक्तिरुक्ता ĪśānŚiPa. i. 4. 22; TārkiRa. 275.4; अस्यां च (उत्प्रेक्षायाम्) शाब्देनापि वृत्तेन भ्रान्तिमदतिशयोक्त्यादिवद् विषयिणो निश्चयाभावात्। अनिश्चिते च संदिग्धमेवेत्यविवादः AlaṅkāRa. 32(10); ViṣṇuTaNi. 5B. 3; सर्वथानुपलब्धस्य सत्त्वम् अनिश्चितम्—इति चेत्, तस्यासत्त्वमपि न निश्चितमपि(? मिति) तुल्यम् TarkSaṁ. (Ā.) 15. 27; क्लृप्तो हि कल्प्यं बाधते, निश्चितश्चाप्यनिश्चितम् CaturCin. iii(1). 100. 18; अनिश्चितस्य सत्त्वमेव दुर्लभम् SarvaDaSaṁ. 12. 281; अनिश्चितेऽर्थे न्यायस्यावसरः NyāySu.(Ja.) 214A.13 (*on* i. 4.6); न हि स्वतोऽनिश्चितोऽर्थः परतोऽपि निश्चेतुं शक्यते TantrRaha. 6. 24; 6.27; 11.7; अनवगतत्वादिति। अयमसावित्यनिश्चितस्य विधातुमशक्यत्वादिति भावः MayūMāli. 134. 6 (*on* ii. 2. 5); **AII** not fixed, not settled कूर्मपृष्ठनखाः सर्वे अग्रतश्चार्धचन्द्रवत्। लिङ्गाकृतिं(?) मूलदेशान्मानमेषामनिश्चितम् JayāS. 20.60; भृतावनिश्चितायां तु दशभागमवाप्नुयात्। लाभगोवीर्यसस्यानां वणिग्गोपकृषीवलाः KātySm. 656; **AIII** irresolute अनिश्चितैरध्यवसायभीरुभिर्यथेष्टसंलापरतिप्रयोजनैः। फले विसंवादमुपागता गिरः प्रयान्ति लोके परिहासवस्तुताम् Tantrākhyā. 119. 11; PañcT. 3. 109 (365. 10); Pañcā. 226. 9; संदिग्धेन हि निश्चयाय प्रवर्तितव्यमेवानिश्चितस्तु विनिश्चयाय प्रमाणान्तरे प्रवर्तमानस्तदभ्यर्हिततरं मन्यते TātpaṬ.(Vā.) 107.17 (*on* i. 1.2); **AIV** not established, not settled अस्वतन्त्राप्रकृतिस्थैः कृतं दानाद्यनिश्चितमिति न (भवति) प्रमाणम् ManuBh. ii. 154.24 (*on* 8.164); **AV** not singled out, not specified तस्याः कश्चिदनिश्चितो यदि यशोव्यालोपकारी खलः तं पापीयसमाशु शासति पुनस्ते लोकपालाः क्रुधा EI. ix. 325.27; **AVI** who has not decided (the terms) अनिश्चित इति वदन् तृणकाष्ठादिग्रहणाग्रहणपरिभाषाविहीनविषयमेतदिति दर्शयति SmṛtiCan. iv. 480.5; **BI** uncertain, doubtful, which has no certainty असारमस्वन्तमनिश्चितं जगत् Saund. 9. 16; ज्वलनातपवाय्वम्बुभक्तिद्वेषावनिश्चितौ। … शीतवैकृतमल्पं च ज्वरलक्षणमग्रजम् CaraS. vi. 3.28 (1941 Ed.); हिताहितत्वेऽप्येकान्तनियमोऽस्मादनिश्चितः AṣṭāSaṁ. i. 41. 10 (1.7); BhojanKu. 200.17; भूरमणमरणमनिश्चितम् DaśKuC. 4. 24; सर्वं च दुष्टशूद्रेषु संभाव्यमानत्वादनिश्चितम् TantrVā. 6.2 (*on* i. 2.2); 'सुपरिनिष्ठिता विद्या सफला स्यान्नानिश्चिता' इति न्यायः प्रदर्शितो भवति KenUVāBh. 79.4 (*on* 2.1); न चानिश्चिता विपर्यस्ता वा परमात्मादिवस्तुविषया बुद्धिरुत्पद्यते BṛĀraUBh. 39.15 (*on* i. 3.1); स्यादेवमुपाधिकारो यदि स्वर्गफलत्वं निश्चितं स्यादनिश्चिते तु तस्मिन्नुपाधिकाराभिधानं प्रलापः TantrRa. 181.17; प्रभावे नास्ति विश्वासः शक्तिर्नूनमनिश्चिता। कालेन्द्रजालिकस्यास्य विचित्रं किं न दृश्यते RāmāMañ. 271.7; 347.10; चेतनाचेतनात्मकं जगत् … स्यादस्तीति। अस्तित्वेनानिश्चितं जन्मादिमत्त्वादित्यर्थः SarvaMaSaṁ. 17.16; (दूरतरं च तस्याः (आरम्भणीयायाः) दर्शपूर्णमासाङ्गत्वम्) दूरतरमिति। अनिश्चितमिति यावत् MayūMāli. 651.8 (*on* x. 1. 4); 596.16 (*on* ix. 1. 14); कारकान्तरेषु तत्तत्कार्यसामर्थ्यम् …। न चापवादनिरासमपेक्षत इत्यनिश्चितमस्वभाविकं वा भवति NyāyKu. 38.12; **BII** not decisive अनिश्चितं चेत् प्रत्यक्षं मिथ्यात्वश्रुतिविषयापहार इव सत्त्वश्रुतिविषयापहारेऽप्यशक्तम् Nyāyāmṛ. 160A.8.

**अनिश्चितकर्तृकर्मप्रयोग** (aniścitakartṛkarma-prayoga) *adj.* connected with the usage in which the grammatical agent and object are not clearly determined विजयेतामद्य श्वेताम्बरशासनदेवाचार्यौ दिगम्बर-

शासनकुमुदचन्द्रौ । केशवः — सखे, कथमनिश्चितकर्तृकर्मप्रयोगमुभयत्र द्विर्वचनम् MudriKu. 5. 2(10)

**अनिश्चितकारिन्** ( aniścitakār-in ) *adj.* who acts improperly यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते। श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ SuśruS. i. 17.10; RugVi. 41.15; AṣṭāSaṁ. i. 185. 11 (1.38); BhāvPra.(Bhā.) 8(46(? 47)). 16.

**अनिश्चितगति** ( aniścita-gati ) *adj.* whose course is uncertain (पृथ्वीधरः) अचिन्तयच्च ही(? हि) साधु संजातं दुहितुर्मम । अनिश्चितगतिः प्राप्तो यदयं सुमनोरथः PadmP.(Ra.) 36. 77.

**अनिश्चितचौरभाव** ( aniścita-caurabhāva ) *adj.* whose nature as a thief is not ascertained or detected धार्मिको राजा हृतद्रव्यसंधिच्छेदोपकरणव्यतिरेकेणानिश्चितचौरभावं न घातयेत् ManvaMu. 413. 26 (*on* 9. 270)

**अनिश्चिततद्विद्** ( a-niścitatadvid ) *adj.* who does not know that definitely तद्वित्संमतोऽर्थो ग्राह्यो, न त्वनिश्चिततद्वित्संमतः VedāntKau. 377. 21 (*on* iii. 4.44)

**अनिश्चितता** ( aniścita-tā ) *f.* uncertainty तन्निशम्य सत्यवर्मस्थितेः सम्यगनिश्चिततया खिन्नमानसो नरपतिः सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयमर्पितवान् DaśKuC. 11.8; उत्प्रेक्षायामनिश्चिततया प्रतीतिः, इह तु (अनुमाने) निश्चिततयेत्युभयोर्भेदः SāhiDa. 586. 4.

**अनिश्चिततात्त्विकप्रामाण्यक** ( aniścitatāttvikaprāmāṇya-ka ) *adj.* the real validity of which is uncertain श्रुतेः प्रत्यक्षबाधितार्थकत्वादित्यपि तुच्छम्, प्रत्यक्षस्यानिश्चिततात्त्विकप्रामाण्यकत्वेन व्यावहारिकप्रामाण्ये सावकाशत्वेन च ··· निरवकाशत्वादियुक्तश्रुतावबाधकस्योक्तत्वात् GuruCandr. i. 336. 15.

**अनिश्चितत्व** ( aniścita-tva ) *n.* uncertainty, indefiniteness अस्वन्तम् अशोभनान्तम्। अन्ते न शोभनम्, अनिश्चितत्वात् BālaKrī. i. 115.18 (*on* 1.155); न तूपेत्य दर्शयेत्। दानस्यानिश्चितत्वात् JayaMa. 195. 22 (*on* 3. 1); पराभिगमने तदीयामर्षस्यानिश्चितत्वात JayaMa. 360. 4 (*on* 6. 6); योगिना सह ··· नापि निन्दारूपो विसंवादः शङ्कनीयः। निन्द्यत्वस्यानिश्चितत्वात् JīvanVi. 135. 17; लिङ्गत्वेनानिश्चितत्वमसिद्धत्वम् SaptaPa. 158(47); अस्य (अध्यवसायस्य) चोत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात्साध्यत्वम् SāhiDa. 548. 1; शुक्लादिवदत्र वह्नेरनिश्चितत्वात् निश्चितत्वे वा साध्यत्वानुपपत्तिः YuktiSneha. 69. 18 (*on* i. 1.5); परप्रयुक्तद्रव्योपजीवित्वाद् द्रव्यस्य चावाहनकाले जनिष्यमाणत्वेनानिश्चितत्वाद् विष्णोरुरुक्रमस्यैव नावाहनम् BhaṭṭCau. 125.15 (*on* xvi. 4. 8)

**अनिश्चितदोष** ( aniścita-doṣa ) *adj.* defect of which is not ascertained or detected व्यालहृतादृष्टदोषवाक्प्रशस्तान्यभ्युक्ष्योपयुञ्जीत । व्यालाः सिंहादयः। अदृष्टदोषमनिश्चितदोषम् VīraMi.(Āhnika.) 531.10.

**अनिश्चितधी** ( aniścita-dhī ) *adj.* not of firm mind or opinion विद्वद्भिरागमपरैर्विवृतं कथंचिच्छ्रुत्वापि दुर्ग्रहमनिश्चितधीभिरन्यैः ।··· निधिमन्त्रगणं (अद्रिः) बिभर्ति ŚiśuVa. 4.37.

**अनिश्चितनिजरूप** ( aniścita-nijarūpa ) *n.* one's own form which is not ascertained नियतरूपितानिश्चितनिजरूपे वस्तुनि वस्त्वन्तरस्य व्यवच्छेदबन्धनमिष्यते एव NyāyMañ. i. 289.18.

**अनिश्चितनिश्चय** ( aniścita-niścaya ) *m.* determinate cognition which is not free from doubt अन्यथा त्वनिश्चितनिश्चयस्यार्थनिश्चयोऽपि न सिध्येत, न चासौ स्वात्मन्यपि निश्चय इति ĀtmaTaVi. 682.10.

**अनिश्चितन्याय** ( aniścita-nyāya ) *adj.* judgement about which is not given in definite terms स्थेयैरनिश्चितन्यायं पुरो न्यस्तं ततो नृपः। तदित्थमिति निश्चित्य वणिजं तमभाषत RājTa.(Ka.) 8.150.

**अनिश्चितपक्षवृत्ति** ( aniścita-pakṣavṛtti ) *adj.* existence of which in the subject is not ascertained (हेत्वाभासः) अनिश्चितपक्षवृत्तिरसिद्धः NyāySā. 7. 10 = PrakaVi. 569.14 = TarkSaṁ.(Ā.) 97. 7 = NyāyPari. 281.14 = SarvaDaKau. 46.1.

**अनिश्चितपक्षवृत्तित्व** ( aniścitapakṣavṛtti-tva ) *n.* the state of being that the existence of which in the subject is not ascertained न तावत् अनिश्चितपक्षवृत्तिः असिद्धः इति — असिद्धो निर्वक्तुं शक्यते, येन केनचित् अनिश्चितपक्षवृत्तित्वस्य सद्धेतौ अपि सिद्धत्वेन अतिव्यापकत्वात् TarkSaṁ.(Ā.) 97. 8; साधनाव्यापक इत्यनिश्चितपक्षवृत्तित्वस्य विवक्षितत्वात् न लक्षणासंग्रहः TārkiRa. 70.3.

**अनिश्चितपञ्चीकरणवाक्यार्थ** ( aniścita-pañcīkaraṇavākyārtha ) *adj.* who has not ascertained the meaning of the sentence about *pañcīkaraṇa* (i. e. causing to contain five elements) (स्वरूपासिद्धः हेत्वाभासः) एष एवानिश्चितपञ्चीकरणवाक्यार्थस्य संदिग्धासिद्धः NyāyPari. 283.16.

**अनिश्चितपरापर** ( aniścita-parāpara ) *adj.* unascertained as well as belonging to future and past (times) प्रत्यक्षं बहिरन्तश्च परोक्षं स्वप्रदेशतः। सुनिश्चितमनेकान्तमनिश्चितपरापरैः NyāyVi. 2. 128 (Vivaraṇa अनिश्चितैः अप्रत्यक्षविषयैः परैरुत्तरकालभाविभिः अपरैश्च पूर्वकालभाविभिः प्रदेशैः)

**अनिश्चितप्रपञ्च** ( aniścita-prapañca ) *m.* world not decided or ascertained (as unreal) मिथ्यात्वेन अनिश्चितप्रपञ्चस्य तद्धीविषयत्वशङ्कासंभवात् GuruCandr. i. 60.1.

**अनिश्चितप्रमाणभाव** ( aniścita-pramāṇabhāva ) *m.* unascertained validity ननु चानेन बाध्यमानस्यानुमानस्याप्रामाण्यात् कथं बाधकत्वम्? अनिश्चितप्रमाणभावेन कुतो बाधा HetuBiṬ. 87.10; *adj.* who has not ascertained the validity निश्चितप्रमाणभावस्य पुरुषस्येङ्गितादिभिरभिप्रायः सूच्यते न त्वनिश्चितप्रमाणभावस्य TātpaṬ.(Vā.) 722. 22 (*on* v. 2.21)

**अनिश्चितप्रामाण्य** ( aniścita-prāmāṇya ) *adj.* **A** validity of which is not ascertained अनिश्चितप्रामाण्यादेव ज्ञानात्प्रवृत्तिसिद्धौ किं पश्चात्तन्निश्चयेन प्रयोजनम् NyāyMañ. i. 149.7; i. 160.7; अर्थज्ञानमपि अनिश्चितप्रामाण्यमेवार्थनिश्चयरूपमविशेषात् TattvCin. i. 363. 6; **B** who has not ascertained the validity अनिश्चितप्रामाण्यस्य तु प्रवृत्तौ पश्चात्तन्निर्णयो भवन्नपि कृतक्षौरस्य नक्षत्रपरीक्षावदफल एवेत्युक्तम् NyāyMañ. i. 150. 17.

**अनिश्चितप्रामाण्यकत्व** ( aniścitaprāmāṇyaka-tva ) *n.* the state of being that whose validity is not ascertained दुर्बलत्वात् द्वैतसत्त्वप्रत्यक्षादेः अनिश्चितप्रामाण्यकत्वादिना श्रुतेर्नित्यनिर्दोषत्वादनन्यपरत्वाच्च प्राबल्यम् GuruCandr. i. 281. 22; ii. 250.21; प्रत्यक्षादीनां बहूनां प्रामाण्यरूपस्य धर्मस्याबाधायानिश्चितप्रामाण्यकत्वेनानिश्चितप्रामाण्यकप्रत्यक्षाद्यपेक्षया बलवत्या एकस्याः श्रुतेः प्रामाण्यरूपस्य धर्मस्य बाधो युक्त इति कथं वैषम्यम् LaCandr. 360.17.

**अनिश्चितप्रामाण्यत्व** ( aniścitaprāmāṇya-tva ) *n.* the state of being that whose validity is not ascertained न चाद्वैतश्रुतेः बाध्यत्वं सम्भवति, तात्पर्यवत्त्वात्, प्रत्यक्षस्यानिश्चितप्रामाण्यत्वेन न्यूनबलवत्त्वात् GuruCandr. i. 274.21.

**अनिश्चितम्** ( aniścitam ) *adv.* undecidedly संशयो हि विषयग्रहणात्मकोऽनुभूयते अनिश्चितं तु विषयं गृह्णाति NyāyMañ. i. 71. 1.

**अनिश्चितमति** ( aniścita-mati ) *adj.* not of firm opinion यद्यप्यनिश्चितमतिः कुरुते न वादम् NyāyMañ. ii. 150. 1.

**अनिश्चितमूल** ( aniścita-mūla ) *adj.* the source of which is not ascertained अनिश्चितमूलेनानेन वचनेन निश्चितमूलानां बहूनां क्षयाहमात्रपार्वणविषयाणां वचनानाममावास्याप्रेतपक्षमृताहविषयत्वेनातिसंकोचस्यायुक्तत्वात् Mitā. 92.24 (*on* 1.256); अनिश्चितमूलं वचनं च पठन्त्यत्रार्थे BālamBha. i. 501. 9 (*on* 1. 225)

**अनिश्चितरूप** ( aniścita-rūpa ) *adj.* not having definite or authentic nature अध्ययनस्यान्यतः प्राप्तत्वात्तत्संबन्धस्यावबोधस्यानिश्चितरूपस्य वस्तुस्वाभाव्येनोत्पत्तेस्तादृशस्य न क्वचिदर्थवत्त्वात् ManuBh. i. 161. 2 (*on* 2.165)

**अनिश्चितरूपत्व** ( aniścitarūpa-tva ) *n.* the state of being that which does not have a definite nature अध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति, संशयस्यानवस्थितग्रहणेनानिश्चितरूपत्वात् SāṁkhyaTaKau. 121. 2 (*on* 5)

**अनिश्चितवस्त्ववसायित्व** (aniścitavastvavasāyi-tva) *n.* the state of being that which does not determine any definite object न हि तत्रोभयरूपा प्रतीतिरित्यप्रमाणत्वम्। अपि त्वनिश्चितवस्त्ववसायित्वेन Śarka. 102.12.

**अनिश्चितवाक्यतस्** ( aniścitavākya-tas ) *adv.* because of ambiguous statement संशयो हि तथा श्रोतुः स्यादनिश्चितवाक्यतः BṛĀraUBhVā. i. 4. 1276.

**अनिश्चितवासस्थल** ( aniścita-vāsasthala ) *adj.* who has no fixed place of residence यश्च पूर्वकर्मणा चौर्यरूपेण कृतापराध आसीत्, यश्चानिश्चितवासस्थलः सोऽपि गृह्यते चौर्यकारित्वेन शङ्क्यते VīraMi. 720. 19 (*on* 2.266)

**अनिश्चितवासस्थान** ( aniścita-vāsasthāna ) *adj.* who has no fixed place of residence अविज्ञाताश्रयात् अनिश्चितवासस्थानात् DaṇḍaVi. 329.20.

**अनिश्चितविद्य** ( aniścita-vidya ) *adj.* whose learning or scholarship is doubtful लोकेऽपि निश्चितविद्यो यथा पूज्यते तथा नानिश्चितविद्य इति स्फुटमेव RasGaṅ. 668.13.

**अनिश्चितविधेयताक** ( aniścitavidheyatā-ka ) *adj.* for which there is no definite injunctive statement अत्र कृतिसाध्यत्वेनानिश्चितविधेयताकगुणप्रयोज्यभेदनिरूपणं पादार्थः MīmāKau. ii. 1.14 (*on* ii. 3. 1); ii. 35.18 (*on* ii. 3. 5); अनिश्चितविधेयताकस्य देवतादेर्गुणस्य भेदकत्वविचारात् पादाध्यायसंगतिः MīmāKau. ii. 45. 11 (*on* ii. 3. 12)

**अनिश्चितविधेयताकत्व** ( aniścitavidheyatāka-tva ) *n.* the state of being that for which there is no definite injunctive statement ब्राह्मणत्वादेः गुणस्यानिश्चितविधेयताकत्वात् कृतिसाध्यत्वाभावाच्च तत्प्रयोज्यभेदनिरूपणेन पादाध्यायसंगतिः स्पष्टा MīmāKau. ii. 15.13 (*on* ii. 3. 3)

**अनिश्चितविशेष** ( aniścita-viśeṣa ) *adj.* who does not make any distinction (in ability) अयं सस्यभुवं मुक्त्वा मेघो भूभृति वर्षति। अनिश्चित-

विशेषः सन् कुपात्रे द्रविणी यथा PadmP.(Ra.) 42.100.

**अनिश्चितविषयता** (aniścitaviṣaya-tā) *f.* the state of having uncertain domain न च निश्चिते प्रतिषेधविषये संभवत्यनिश्चितविषयता न्याय्या ManuBh. ii. 120. 21 (*on* 8. 104)

**अनिश्चितवृत्ति** (aniścita-vṛtti) *adj.* existence of which (in the subject) is not ascertained सिद्धे पक्षे तत्रानिश्चितवृत्तिरसिद्धः (हेत्वाभासः) सिध्यति PrakaVi. 569. 19.

**अनिश्चितव्याप्तिक** (aniścitavyāpti-ka) *adj.* concomitance of which is not ascertained अत्र च किमेकेन्द्रियग्राह्यतया घटादेस्तद्गतरूपादेश्चैको व्यञ्जकः, उत रूपिद्रव्यतया घटादेस्तत्समवायितया रूपादेरित्यनिश्चितव्याप्तिकमेकेन्द्रियग्राह्यत्वं न व्यञ्जकैकत्वे शक्तम् NayaVi. 253. 3 (*on* i. 1. 8)

**अनिश्चितशुक्तिरूप** (aniścita-śuktirūpa) *adj.* who has not ascertained the nature or form of a shell इह त्ववगतचन्द्रविविक्तमुखस्वरूपस्यानिश्चितशुक्तिरूपस्यैव प्रमातुश्चन्द्रोऽयं रजतमितिवच्छतशोऽप्युच्यमाने न तद्रूपतया प्रतिपत्तिः AlaṅkāRa. 26(6)

**अनिश्चितसत्त्व** (aniścita-sattva) *adj.* existence of which (in the subject) is not ascertained (हेत्वाभासः) नासन्ननिश्चितसत्त्वो वान्यथानुपपन्न इति सत्त्वस्यासिद्धौ संदेहे वासिद्धः PramāMī. ii. 1.17.

**अनिश्चितसत्यभाव** (aniścita-satyabhāva) *m.* uncertain fact (of committing the crime) अनिश्चितसत्यभावेन पापकारितयोक्तोऽभिशस्तः Aparā. 445.12 (*on* 1. 122)

**अनिश्चितसद्भाव** (aniścita-sadbhāva) *adj.* possibility of which is not certain अनिश्चितसद्भावमुरुक्रमयागविधानं नावाहनं प्रयोक्तुं क्षमम् ŚāstrDī. 649. 10 (*on* x. 1.1)

**अनिश्चितसंबन्ध** (aniścita-sambandha) *adj.* whose relation (i. e. concomitance) is not ascertained नापि स्वविषयज्ञानापेक्षं परोऽक्षार्थप्रकाशनम्। यथा प्रदीपो घटादेः। दृष्टादप्यनिश्चितसंबन्धादप्रतिपत्तेः NyāyBiṬ. 92. 2 (*on* 2. 5)

**अनिश्चितसाध्यधर्म** (aniścita-sādhyadharma) *m.* property in the form of probandum which is not ascertained संदिग्धत्वमपि व्यावर्तकेन कल्पितेनाकल्पितेन वा रूपेणानिश्चिततयैवोपपद्यत इति तस्यापि नानिश्चितसाध्यधर्म विनानुपपत्तिः AdvaiSi. 719. 10.

**अनिश्चितसामर्थ्यविशेष** (aniścita-sāmarthyaviśeṣa) *adj.* whose specific capacity is not possible to determine स (कर्मभेदः) तु द्रव्यदेवतायजिसद्भावमात्ररूपेण निर्णीतः परिमाणं प्रत्यनिश्चितसामर्थ्यविशेषः TantrVā. 523. 21 (*on* ii. 2.20)

**अनिश्चितस्वभाव** (aniścita-svabhāva) *adj.* nature of which is not ascertained नन्वेवमप्यनिश्चितस्वभावेषु स्वलक्षणेषु कथमिदमवसेयम् — इदं सामान्याभिव्यञ्जकं इदं न इति Śarka. 9.16.

**अनिश्चितस्वरूप** (aniścita-svarūpa) *adj.* essential nature of which is not ascertained एतत्तदित्यनिर्देश्या। एतत् एतत्कालेऽपि इयत्तापरिच्छेदवद्वस्तु तत् परोऽक्षमनिश्चितस्वरूपम् LalitāTriBh. 262. 17 (*on* 5); अनिश्चितस्वरूपस्येश्वराधीनतया दुर्ज्ञानत्वात् TattvPrakā. 153A. 5 (*on* iii. 2. 10)

**अनिश्चितस्वामिक** (aniścitasvāmi-ka) *adj.* (rightful) owner of which is not ascertained निश्चितान्यस्वामिकं चानिश्चितस्वामिकं तथा। स्वस्वत्वनिश्चितं चेति त्रिविधं संचितं मतम् ŚukraNī. 2.325.

**अनिश्चितागमा** (a-niścitāgamā) *adj.* (*f.*) whose title is not surely established भुक्तिस्तु द्विविधा प्रोक्ता सागमानागमा तथा …। सागमा निश्चितागमेत्यर्थः …। भुक्तिरेव विशुद्धा स्यात् प्राप्तानां पितृतः क्रमात्। इति स्मार्तकालीनभोगस्यैवोद्भावनविधानाच्च। अतः स्वतन्त्रा भुक्तिरनिश्चितागमा SmṛtiCan. iii. 168. 2.

**अनिश्चितागस्** (aniścitāgas) *adj.* whose guilt is not established नान्यस्मिन्नपि दण्डस्य प्रसङ्गोऽनिश्चितागसि। किं पुनर्ब्राह्मणो दण्ड्यो यो दोषेऽपि वधं विना (मोक्तव्यः) RājTa.(Ka.) 4.96.

**अनिश्चितात्मन्** (aniścitātman) *adj.* whose mind is in doubt मर्तव्यकृतबुद्धीनां जये चानिश्चितात्मनाम्। अबलानां चमूर्ह्यासीदबलावयवा इव MatsyaP. 140. 9.

**अनिश्चिताद्वैत** (a-niścitādvaita) *adj.* (person) who has not ascertained non-duality कल्पको न निश्चिताद्वैतः, शास्त्रप्रणयनवैयर्थ्यात्, नाप्यनिश्चिताद्वैतः, शास्त्रस्य प्रमामूलकत्वाभावप्रसङ्गात् AdvaiSi. 541.25.

**अनिश्चितानित्यत्व** (aniścitānityatva) *n.* unascertained transitoriness कथम् अनित्यः शब्द इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते PadārthaSaṁ. 251.11.

**अनिश्चितान्याकार** (aniścitānyākāra) *adj.* another form of which is not ascertained तदभिन्नमेकाकारविषयीकरणेऽप्यनिश्चितान्याकारमाकारान्तरसाकाङ्क्षबुद्धिग्राह्यं भिन्नशब्दार्थोपसंहारेऽप्यभिन्नं बुद्धौ प्रतिभाति PramāVāSvopVṛ. 28.13.

**अनिश्चितार्थ** (aniścitārtha) *m.* unascertained or inaccurate fact न खल्वनिश्चितार्थमार्यचाणक्यप्रणिधयोऽभिधास्यन्ति MudrāRā. 5.13 (57): *adj* whose import is uncertain निश्चितार्थेन ह्यनिश्चितार्थं (वाक्यम्) व्यवस्थाप्यते, नानिश्चितार्थेन निश्चितार्थम् Bhām. 189. 11 (*on* i. 2. 26); निरूपितवाक्यव्यवच्छेदाय वाक्यविशेषा इत्युक्तम्। पूर्वमनुदाहृता अनिश्चितार्था इत्यर्थः ŚrutaPra. ii. 182.7 (*on* i. 4. 29)

**अनिश्चितार्थत्व** (aniścitārtha-tva) *n.* the state of having an unascertained object (ज्ञानस्य) तर्कोत्थस्य परस्परपराहतत्वेनानिश्चितार्थत्वात् PrakaVi. 411.22; अध्यवसेयस्य बाह्यार्थस्य निश्चितत्वाद् (ज्ञानस्य) अनिश्चितार्थत्वापादकं भाष्यमयुक्तम् VedāntKa. 281. 22 (*on* ii. 2. 25)

**अनिश्चितार्थप्रकाशन** (aniścitārtha-prakāśana) *n.* expression of a vague thing (प्रपञ्च्यमाना तु विवदेत्) प्रपञ्च्यमाना त्विति अनिश्चितार्थप्रकाशनान्नायकेन प्रतार्यमाणा विवदेत् JayaMa. 202. 18 (*on* 3.2)

**अनिश्चितावधि** (aniścitāvadhi) *adj.* limit of which is not certain अनिश्चितावधिं धीराः सहन्ते विरहं चिरम्। श्रूयतां रामभद्रस्य सीतादेव्यास्तथा कथा KathāSaSāg. ix. 1. 58.

**अनिश्चिताविनाभाव** (aniścitāvinābhāva) *adj.* concomitance of which is uncertain इह च न योग्यतया लिङ्गं परोऽक्षार्थप्रतिपत्तेरङ्गम्, यथा बीजमङ्कुरस्य, अदृष्टाद् धूमादग्नेरप्रतिपत्तेः, नापि स्वनिश्च(स्वविष)यज्ञानापेक्षं यथा प्रदीपो घटादेः, दृष्टादप्यनिश्चिताविनाभावादप्रतिपत्तेः PramāMī. 39. 14 (*on* i. 2.9)

**अनिश्चितासद्भाव** (aniścitāsadbhāva) *adj.* non-existence of which is not ascertained आत्मदर्शनसिद्धौ किं तदर्थेनेति चेन्न, अनिश्चितासद्भावपूर्वोत्तरज्ञानावरणहेतुविनिवारणाय तदुपादानोपपत्तेः ŚatDū. 224. 20.

**अनिश्चितोपाय** (aniścitopāya) *adj.* who has not decided about the means अन्यथा ह्यनिश्चितोपायानामुपेयार्थिनां प्रवृत्तौ प्रेक्षावत्तैव हीयेत HetuBiṬ. 2. 5.

**अनिश्चितोपायकार्य** (aniścitopāyakārya) *adj.* who has not decided about the remedial action (to be adopted) अनिश्चितोपायकार्यस्समयानुचरो नृपः। द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितम् ŚukraNī. 4(7).291.

**अनिश्चितोभयालम्बनत्व** (aniścitobhayālambana-tva) *n.* the state of being based on both objects undecidedly अनिश्चितोभयालम्बनत्वमपि स्थाणुपुरुषादावपि असंदिग्धमेव ParāTri. 247.14.

**अनिश्चित्य** (a-niścitya) *ger.* **A** not having ascertained or decided गुणदोषावनिश्चित्य त्यक्त्वा दैवव्यपाश्रयम्। करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः Rāmā. vi. 6.10; तथा निर्वचनं ब्रूयाद्वाक्यार्थस्यावधारणम्।… इदं त्विदमिदं नेदमित्यनिश्चित्य संशयम् BrahmāṇḍP. i. 33. 52; तात न खल्वनिश्चित्यैव युक्तमिदमीदृशं साहसमनुष्ठातुम् Nāgā. 5. 12(22); प्रजाः श्रियोऽर्थान् प्रकृतीरशेषतो रिपोरनिश्चित्य न स न्यवर्तत Kapphiṇā. 2. 2; अर्थोऽपि सेवादिः अतिक्लेशकरः, सोऽपि वर्ज्यः।… अनिश्चित्य न किंचित्कुर्यात् ManuBh. i. 365. 2 (*on* 4.92); गुणदोषावनिश्चित्यानुग्रहनिग्रहविधानं ग्रहाभिनिवेश इव NītiVā. 11. 49; Hitopa. 2.131; अनैकान्तिकत्वमनिश्चित्याग्रत एव हेत्वाभासत्वावधारणे तत एव हेतोरसाधकत्वं सिद्धम् KhaṇḍanKhā. 875.1; ŚṛṅgāDī. 1.67; पितृसंताने सप्तमान्मातृसंताने च पञ्चमादर्वाक् पुत्रिकाकरणाभावमनिश्चित्य परिणयविषयेति ज्ञेयम् MīmāKau. i. 69. 8 (*on* i. 3. 9); (रामदेवः) नानिश्चित्य करोति नापि कुरुते मन्त्रैर्विना निश्चयम् AdbhuDa. 2.5; **B** not having fixed दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः। अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता YājñaSm. 2. 194; यः स्वामी तुभ्यमियतीं भृतिं दास्यामीत्यनिश्चित्य कर्म कारयति Aparā. 798. 3 (*on* 2. 194); DīpKa. 64. 1 (*on* 2. 194)

**अनिश्चिन्त्य** (a-niścintya) *adj.* which cannot be fully comprehended, unthinkable ऐश्वर्यमदमत्तेन सर्वलोकावमानिना। अप्रतर्क्यमनिश्चिन्त्यं दैवं कर्म सनातनम् Rāmā. (Gorr.) v. 81.6.

**अनिश्चिन्वत्** (a-niścinvat) *adj.* not determining, not ascertaining, not deciding पश्यन् शुक्तिरूपं विशिष्टमेव पश्यति। निश्चयप्रत्ययवैकल्यात्त्वनिश्चिन्वन् तत्सामान्यं पश्यामीति मन्यते PramāVāSvopVṛ. 17.16; बालानामपि च येयमन्यपरिहारेण स्तनादौ प्रवृत्तिः, सा न 'इदम्' इत्यनिश्चिन्वतां भवितुमर्हति BrahmSi. 18. 14; अनिश्चिन्वता चिते(?त्ते)न मन्दोद्यम इवायम्।… न च संदेहदेहो वीरव्रतनिर्वाहः BālRā. 3.42(6)

**अनिश्चीयमान** (a-niścīyamāna) *adj.* not being ascertained or determined कथमिदानीमनिश्चीयमानं प्रत्यक्षेणापि गृहीतं नाम PramāVāSvopVṛ. 20. 21; तस्माद् दृष्टा अपि भावाः … तदन्येनाप्यतद्रूपव्यावृत्तेनात्मना भ्रान्तिकारणसद्भावादनिश्चीयमानाः HetuBiṬ. 59. 8; (खरराघवयोः) विपश्चिद्भिरप्यनिश्चीयमानजयापजयम् … अभूदभूतपूर्वं द्वन्द्वयुद्धम् RāmāCam. 3. 19(17)

**अनिश्चेय** (a-niśceya) *adj.* which cannot be ascertained or determined नन्विदमप्यनिश्चेयमेव — सर्वाकारजन्मानो नश्यन्तीति तासामनिःशेषदर्शनात् PramāVāSvopVṛ. 100.16; व्यापन्नमप्सु किं तत्स्यादनिश्चेयमहेतुतः। आर्याभोज्यं केशकीटदूषितं तत्प्रसिद्धितः NyāyMāVi. 348.7 (*on* vi. 5.16)

**अनिश्रय** (a-niśraya) *m.* not an abode हेतोः प्रहाणं त्रिगुणं सुगतत्वमनिश्रयात् PramāVār. 2.139 (Bh. दु:खनिश्रयाभावात्)

**अनिश्रित** (a-niśrita) *adj.* [*f.* -ā] unattached, free, independent अनिश्रितः त्वमिह च परत्र च MaVastuAva. i. 167.11; अनिश्रितश्चाप्रतिबद्धचित्तो दृष्टश्रुतादौ व्यवहारधर्मे Saund. 18.19; अन्यत्रोपसंक्रान्तानां चैषां कालेन कालं धर्मं भाषते, तं चानिश्रितो भाषते SaddhaPuṇ. 166.23; यश्चैनमुपसंक्रम्य धर्मं पृच्छेऽप्रबोधये। तस्य भाषेत् सदा धीरो अनोलीनो अनिश्रितः SaddhaPuṇ. 167.28; अकल्पं तद्ध्यानमविकल्पमनिञ्जनम् ··· सर्वत्रानुगतं च सर्वत्र चानिश्रितम् LaliVi. 183.27; ये ते सर्वोपपत्त्यनिश्रितविहारिणः GaṇḍVyū. 371.20; अयं विहारः।··· विपुलाशयानाम् आकाशगोचररतान(? ना)मनिश्रितानाम् GaṇḍVyū. 372.12; येयं वाक् ··· विज्ञेया श्रवणीया अनिश्रिता ŚikṣāSa. 126.11; MahāVyu. 126.3; 'यदा यदा' यस्मिन् यस्मिन्नवसरे 'यत्र यत्र' प्रयोजने क्षेत्रे वा यो यः उचितस्तम्···तदा तदा काले तस्मिंस्तस्मिन् प्रयोजनादौ ··· 'अनिश्रितैः' सर्वाशंसारहितैरुपाश्रितः अङ्गीकृतः ··· तम् ··· सर्वथा पक्षपातवर्जितत्वेन यथावदित्यर्थः SthānṬ. 319B.4; cf. **अनिःश्रित.**

**अनिश्रितवचनता** (aniśritavacana-tā) *f.* the state of being speech without any attachment to worldly things (i. e. dispassionate speech) वचनसंपच्चतुर्धा, तद्यथा — आदेयवचनता, मधुरवचनता, अनिश्रितवचनता मध्यस्थवचनतेत्यर्थः असन्दिग्धवचनता चेति SthānṬ. 423A.7

**अनिश्वसत्** (a-niśvasat) *adj.* not breathing heavily, not panting योजनानां शतं श्रीमांस्तीर्त्वाप्युत्तमविक्रमः। अनिश्वसन्कपिस्तत्र न ग्लानिमधिगच्छति Rāmā. v. 2.3; cf. **अनिःश्वसत्.**

**अनिश्वास** (a-niśvāsa) *m.* breathlessness शमं नयाशु गोविन्द च्छिन्धि च्छिन्ध्यस्य वेदनाम्।··· अन्तःश्वासम् (v.1. **अनिश्वासम्** ASS. Ed.) अतिश्वासं परितापं सवेपथुम् AgniP. 31.20.

**अनिःशङ्कम्** (a-niśśaṅkam) *adv.* without any apprehension, fearlessly यत्र ··· नायकः। दिव्यस्त्रियमनिश्शङ्कं(?) कन्यां चाहर्तुमुद्यतः।··· सोऽयमीहामृगो मतः RasāSu. 298.10 (3.286)

**अनिःशस्त** (á-niśśasta) *adj.* not excluded from praise नापाभूत न वोऽतीतृषामानिःशस्ता ऋभवो यज्ञे अस्मिन्। समिन्द्रेण मदथ सं मरुद्भिः ṚV. iv. 34.11.

**अनिःशेषितकौरव्य** (aniśśeṣita-kauravya) *adj.* who has not completely destroyed the descendants of Kuru (i. e. sons of Dhṛtarāṣṭra) भूयः परिभवक्लान्तिलज्जाविधुरिताननम्। अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् VeṇīSaṁ. 1.297.

**अनिःशेषितजीमूतजालम्** (a-niśśeṣitajīmūtajālam) *adv.* without causing the disappearance of the net of clouds अनिःशेषितजीमूतजालमाविर्भवत्रविः। अनूनक्लेशशेषं च विवेको न स्फुरेच्चिरम् RājTa.(Ka.) 8.3075.

**अनिःशेषीकृताराति** (aniśśeṣīkṛtārāti) *adj.* who has not completely destroyed the enemies अनिःशेषीकृतारातिर्न व्यावर्तत रिल्हणः RājTa. (Ka.) 8.2909.

**अनिःश्राविन्** (a-niśśrāvin) *adj.* not allowing (talks) to be heard outside तदुद्देशः संवृतः कथानामनिःस्रावी (v. l. अनिःश्रावी) पक्षिभिरप्यनालोक्यः ArthŚā. i. 71.3 (1.15); (KANGLE Ed.)

**अनिःश्रित** (a-niśśrita) *adj.* unattached (वाक्) अनामिषा अनिःश्रितलाभसत्कारा लोके MaYānaSū. 79.3 (12.7); cf. **अनिश्रित.**

**अनिःश्रेयस** (a-niśśreyasa) *adj.* not conducive to bliss असद्व्यवहारव्यावृत्तः सुदत्तः त(? ता)तोपदेशमनि(? निः)श्रेयसमवश्यन्(? स्यन्) यतो राजपरिगृहीतं तृणमपि काञ्चनीभवति संपद्यते ··· प्राणसंहाराय चेति जातमतिर्नैकामपीष्टकां समग्रहीत् YaśasCam. ii. 369.22; *n.* non-bliss, non-liberation त्रीणि स्थानानि ··· अव्यवसितस्य ··· अनिःश्रेयसाय ··· अमोक्षाय ··· भवन्ति SthānṬ. 176B.9; 149B.4; (पञ्च स्थानानि) तानि — अनवगतानि अप्रत्याख्यानपरिज्ञया वा प्रत्याख्यातानि ··· अनिःश्रेयसाय — अकल्याणायामोक्षाय वा ··· भवन्ति SthānṬ. 292A.9; 358B.1.

**अनिःश्वसत्** (a-niśśvasat) *adj.* not breathing (i. e. holding the breath) रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः। लक्ष्मणः ··· गत्वा सरयूतीरम् ···। निगृह्य सर्वस्रोतांसि निःश्वासं न मुमोच ह। अनिःश्वसन्तं युक्तं तं सशक्राः साप्सरोगणाः। देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा Rāmā. vii. 106.16; (गरुडः) स तदा सन्नतस्कन्धो बद्धाञ्जलिरनिःश्वसन्। मुमुदे मूर्ध्नि संस्पृष्टो मुकुन्देन प्रसेदुषा Yādavā. 16.69; cf. **अनिश्वसत्.**

**अनिषङ्ग** (a-niṣaṅgá) *adj.* unarmed (*lit.* not having a quiver) त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे ṚV. i. 31.13.

**अनिषङ्गिन्** (a-niṣaṅgin) *adj.* unarmed (*lit.* not having a quiver) अरथश्चानिषङ्गी च निहतः पार्ष्णिसारथिः MahāBhā. ix. 30.36.

**अनिषण्ण** (a-niṣaṇṇa) *adj.* [*f.* -ā] not drooping, not reclining (i. e. upright) प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगम्। अनिषण्णेन गात्रेण गतिं गच्छेद् व्यतिक्रमात् NāṭyaŚā. 12.83; सती। अनिषण्णेव दीप्ताग्नौ गृहे स्वं निरदाहयत् RājTa.(Ka.) 7.1494.

**अनिषद्य** (a-niṣadya) *ger.* not having reclined भित्तिशय्यादावनिषद्य यदुपविष्टस्यावस्थानं तद् वीरासनम् ManuBh. ii. 404.12 (*on* 11.109)

**अनिषव्या** (an-iṣavyá) *adj.* (*f.*) [DEBRU. 814] not vulnerable to arrows असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः सन्तु पापीः ṚV. x. 108.6.

**अनिषादिद्विप** (aniṣādi-dvipa) *m.* elephant not having a rider on it दृष्ट्वा तांश्च तथाविधान्। कुमारवर्जमायातानिषादिद्विपानिव।···शून्यो निष्पन्दनयनो द्रागभूदवनीपतिः TriṣaŚaPuC. ii. 6.161.

**अनिषिद्ध** (a-niṣiddha) *adj.* [*f.* -ā] **1** not prohibited, not forbidden (i.e. allowed), not prevented एतान्येव व्याधितस्य भिषक्क्रियायामनिषिद्धानि भवन्ति यानि चान्यान्येवंप्रकाराणि SumantuDS. 83.2; उपयुज्यन्ते ··· परिस्पन्दाः कर्मकराश्चान्तःपुरेष्वनिषिद्धाः KāmSū. 301.20 (5.6); अनिषिद्धदूरविस्तृतशीतवातप्रवेशम् ··· हिमाचलस्पर्धिशैत्यमम्बुधरकाललीलाविडम्बि कायमानम् AṣṭāSaṁ. i. 111.17 (1.21); प्राक् चोपनयनादङ्गाध्ययनमनिषिद्धं शिक्षाव्याकरणादि यद् वेदवाक्यैर्न मिश्रितम् ManuBh. i. 163.12 (*on* 2.168); i. 260.10 (*on* 3.111); (डिमप्रकारे) वस्तुतः प्रवेशकाद्यनिषिद्धमेव, प्रवेशकस्य ह्यसंभव एव AbhinBhā. ii. 444.12 (*on* 18.89); चणकव्रीहिगोधूमयवानां मुद्गमाषयोः। अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकः पथि स्थितैः Mitā. 308.16 (*on* 2.275); सदैवाग्रेसरोऽन्यत्र पश्चाद्बुद्धपदोऽभवत्। अनिषिद्धोऽपि शुद्धान्तमन्त्रागारावगाहने RājTa.(Ka.) 8.3271; अनिषिद्धं ह्यनुमतमितिन्यायोऽपि वर्तते PariPar. 7.36; PāṇḍaC. 4.357; अनिषिद्धमनुज्ञातमिति विप्रे नृपाञ्चले। स्वर्णं बध्नति PārśvC. 3.799; मुनीश्वर ··· तव पदाम्भोजद्वयं दुर्लभसंगमम्। संसेविष्येऽनुजानीहीत्यनिषिद्धस्तथाकरोत् PārśvC. 3.127; भवता सर्वाण्यनिषिद्धानि राजभोग्यानि भुक्तानि PuruṣPa. 225.7; ज्येष्ठायामनिषिद्धायां सत्यां कनीयसीनां यज्ञे नाधिकारः Subodhi. 62.5 (*on* 2.135); 83.23 (*on* 2.175); अनिषिद्धविहितकन्यापरिणयनमभ्युदयार्थम् ManvaMu. 87.26 (*on* 3.11); येषामनिषिद्धमप्यङ्गं प्रधानं वोपसंहर्तुमशक्यम् ··· तेषां तु तत्र तत्राधिकारः ŚivārkaMaDī. i. 492.16 (*on* i. 3.39); अत्र विशिष्यानिषिद्धं मन्वादिना निषिद्धम् ··· कर्म वर्जयेत् VīraMi. 224.13 (*on* 1.139); विहितपरराष्ट्रवशीकरणार्थं तत्प्रजापीडनमपि ··· अनिषिद्धमेव VīraMi. 369.6 (*on* 1.342); यः कश्चनानिषिद्धो देशो धर्मस्य कारणम् VīraMi. (Paribhāṣā.) 53.25; कलौ गोपशोर्निषिद्धत्वाच्चानिषिद्धेन छागादिनायं पशुः कर्तव्यः VīraMi.(Saṁskāra). 990.1; YatīndraDī. 62.2; अनिषिद्धं पुनर्वस्वोरुपनयनमन्यनक्षत्रवद् भवत्येव BālamBha. i. 61.17 (*on* 1.14); ii. 330.6 (*on* 2.275); **2** not negated, not denied न नेति ह्युच्यमानेऽपि निषेधस्य निषेधनम्। पचतीत्यनिषिद्धं तु स्वरूपेणावतिष्ठते ŚlokaVār. 5(13).140 (604.4); TattvSaṁ. 975; (तेषामृग् (इति संज्ञा) यत्रार्थवशेन पादव्यवस्था न) वृत्तवशव्यावृत्तिरित्यनिषिद्धमृक्त्वम् TantrVā. 421.8 (*on* ii. 1.35); घटे पटो निषिद्धोऽपि घटादन्यत्र तिष्ठति। तदन्यत्रापि सद्भावादनिषिद्धस्य धर्मिणः BṛĀraUBhVā. ii. 3.185; यदा तावन्नञ्धात्वोः संबन्धस्तदा प्रत्ययार्थस्य भावस्यानिषिद्धस्यावस्थितत्वात् ··· संकल्पः स्वार्थं हित्वा प्रतिपादनीय इति लक्षणा TantrRa. 30.5; नञा प्रतिषिध्यमानो मुख्य एव प्रतिषिध्यते (अर्थः) ···। तेन तदभिधायैव नञा विशेषितस्तद्विरहितं यत्परमर्थप्राप्तं तदनिषिद्धं बोधयत्येव Śarka. 33.9; किं च प्रतिपन्नोपाधावनिषिद्धं प्रत्युत बाधकज्ञानेन विहितमपि रूप्यमिथ्यात्वम् Nyāyāmṛ. 45A.7; [Inst.] without any prohibition अनिषिद्धेन यद् भुक्तं पुरुषैस्त्रिभिरेव तु। तत्र नैवागमः कार्यो भुक्तिस्तत्र गरीयसी BṛhaspaSm. 77.55.

**अनिषिद्धकन्द** (aniṣiddha-kanda) *m.* bulbous root which is not prohibited यावनाळतैलादिनिषिद्धमपि अनिषिद्धकन्दमूलफलालाभे याज्ञिकाः प्रयच्छन्तीत्येवं मनीषिण आहुः SmṛtiCan. v. 220.17.

**अनिषिद्धकारिन्** (aniṣiddhakār-in) *adj.* who performs what is not prohibited दीर्घायुष्यमदारिद्र्यं सुप्रजास्त्वमरोगिता। अगर्हितत्वं लोकेऽत्र विदुरनिषिद्धकारिणः BṛParāSm. 6.172.

**अनिषिद्धकाल** (aniṣiddha-kāla) *m.* unprohibited (i.e. prescribed) time श्रद्धापात्राभ्यामेव पूर्वोक्तकालातिरिक्तानिषिद्धकालसापेक्षाभ्यां धर्मः संपद्यते VīraMi.(Paribhāṣā.) 53.22.

**अनिषिद्धगति** (aniṣiddha-gati) *adj.* whose course is not obstructed अनिषिद्धगतिर्द्वाःस्थैर्विद्युद्दण्ड इवोच्चकैः। तत्रास्थाने प्रविवेश चण्डवेगो झटित्यपि TriṣaŚaPuC. iv. 1.286.

**अनिषिद्धगवादिविषयत्व** (aniṣiddhagavādiviṣaya-tva) *n.* the state

of having reference to a cow etc. which are not forbidden न केसरिणो ददाति इत्यनारभ्याधीतवचनेन ... यत्राश्वविषये स्वेच्छाप्रवृत्तिस्तत्रापि निषेधावगतेरस्य चानिषिद्धगवादिविषयत्वेनाप्युपपत्तेरस्य महोपकारकमुख्यगोमात्रविषयत्वम् BhāṭṭDI. iii. 256. 9 (*on* x. 3. 11)

**अनिषिद्धगृहप्रवेश** (aniṣiddha-gṛhapraveśa) *adj.* whose entry in the house is not (at all) prohibited or objected to यो लाडीकवद्दृश्यते सोऽनिषिद्धगृहप्रवेशोऽपि परिभवान्न लभते (कन्याम्) JayaMa. 208. 9 (*on* 3. 3)

**अनिषिद्धगोचर** (aniṣiddha-gocara) *adj.* referring to what is not forbidden कर्म ... अतुष्टिकरं वर्जयेत्। एतच्चाविहितानिषिद्धगोचरम् ManvaMu. 174. 13 (*on* 4.161)

**अनिषिद्धचीणकाद्यभाव** (aniṣiddhacīṇakādy-abhāva) *m.* absence of *Panicum miliaceum* (millet ?) etc. which are not prohibited हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः । माषकोद्रवगौरादीन् सर्वालाभेऽपि वर्जयेत् ... अनिषिद्धचीणकाद्यभावेऽपीत्यर्थः BālamBha. iii. 190. 23 (*on* 3.325)

**अनिषिद्धतैला** (aniṣiddha-tailā) *adj.* (*f.*) on which (day) (the use) of oil (for bath) is not prohibited अनिषिद्धतैलायां तु द्वितीयादितिथौ स्नानार्थं तैलादि देयम् SmṛtiCan. v. 259.1; CaturCin. iii(1).1168. 3.

**अनिषिद्धत्व** (aniṣiddha-tva) *n.* **i** the state of not being warded off or precluded नैतदेवं सुखेप्साया जिहासायाश्च दुःखतः । निदानस्यानिषिद्धत्वात्पूर्वोक्तैः कर्मभिः पुरा BṛĀraUBhVā. (Sambandha) 1094; **ii** the state of not being prohibited or forbidden, the state of being permitted न च मन्त्रपाठजनितमदृष्टमेव तत्र प्रतिबन्धकम् ... इति वाच्यम् । प्रतिबन्धकमन्त्रपाठस्यानिषिद्धत्वेनाविहितत्वेन चादृष्टाजनकत्वात् TattvCin. ii(2). 113.11; काम्यं कर्म विहितत्वाच्छुक्लम्, निषिद्धं कृष्णम्, मिश्रं शुक्लकृष्णम् । ... ननु योगस्यानिषिद्धत्वात् ... शुक्लत्वमिति चेन्मैवम् JīvanVi. 66.18; न विशिष्टबुद्ध्यादिमत्त्वेन शूद्रस्य वेदाधिकारो वाच्यः। अनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वस्याधिकारप्रयोजकत्वेन केवलविशिष्टबुद्ध्यादिमत्त्वस्याधिकारासाधकत्वात् TattvPrakā. 60A. 2 (*on* i. 3. 38); वैधी हिंसा नाधर्मसाधनम् । अनिषिद्धत्वात् अग्निहोत्रवत् SarvaDaKau. 43. 18; उदितानुदितकालरूपाङ्गयोरुभयोरप्यनिषिद्धत्वेन निन्दाविषयत्वस्यैवानुपपत्तेः MīmāKau. ii. 115.14 (*on* ii. 4. 8); i. 130. 7 (*on* i. 3.27); पुस्तकार्चनमात्रमपि धर्म एव। स चानुपासकस्याप्यनिषिद्धत्वाज्जन्मान्तरे उपासनाप्राप्त्यर्थं कर्तव्य एव LalitāSaBh. 218.28 (*on* 283); **iii** the state of not being negated or denied अविनश्यतोः सहावस्थाननिषेधेऽपि विनश्यदविनश्यतोः सहावस्थानस्यानिषिद्धत्वेन निरन्तरोत्पन्नयोस्तदुपपत्तेः SarvaDaSam. 16.412.

**अनिषिद्धदर्वी** (aniṣiddha-darvī) *f.* ladle which is not prohibited नायसेनायसे नैव श्राद्धे तु परिवेषयेत्।... आयसेन अयोमयदर्व्यादिना।... अनिषिद्धदर्व्याद्यसंभवेऽपि तत्रैवोक्तम् ... यस्मादाहृत्य हस्तेन दानं निषिद्धं तस्मादनिषिद्धदर्व्याद्यसंभवे पर्णादिना प्रान्तरितं कृत्वा देयम् SmṛtiCan. v. 341.3.

**अनिषिद्धदर्शना** (aniṣiddha-darśanā) *adj.* (*f.*) whose sight is not prohibited (i. e. who can be freely seen) अनिषिद्धदर्शना चेयमस्मिन्कन्दुकोत्सवे DaśKuC. 103.15.

**अनिषिद्धदानक्रियायोग्य** (aniṣiddhadānakriyā-yogya) *adj.* fit for the unforbidden transaction of gift आह नारदः अथ देयमदेयं च दत्तं वादत्तमेव च। व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः इति तत्र देयमित्यनिषिद्धदानक्रियायोग्यम् Mitā. 268.11 (*on* 2. 175)

**अनिषिद्धदिन** (aniṣiddha-dina) *n.* day not forbidden पिण्डोदकादिदानं त्वनिषिद्धदिननक्षत्रवारादिकं प्रत्यालोच्य तत्रानुष्ठेयम् SmṛtiCan. vi. 131.12; तीर्थश्राद्धमप्यतिक्रान्तमनिषिद्धदिन एव युक्तम् VīraMi. (Tīrtha.) 80. 14.

**अनिषिद्धपरिजना** (aniṣiddha-parijanā) *adj.* (*f.*) who has allowed the attendants (to move freely) चतुरिके ... मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व Śāk. 6.28(12)

**अनिषिद्धपुरुषोत्पन्नत्व** (aniṣiddhapuruṣotpanna-tva) *n.* the state of being born of a man who is not forbidden (for intercourse) वेश्याख्येति। तामेव जातिमाह। उत्कृष्टजातेरिति। अनिषिद्धपुरुषोत्पन्नत्वे सति पुरुषसंभोगवृत्तित्वं जातिः Subodhi. 107.24 (*on* 2.290); BālamBha. ii. 340.34 (*on* 2. 290)

**अनिषिद्धपुष्पान्तरालाभ** (aniṣiddhapuṣpāntarālābha) *m.* non-availability of other flowers which are not prohibited पाक्षिक एवायमपि प्रतिषेध इति न मार्कण्डेयवचनं निर्विषयम्, किन्त्वनिषिद्धपुष्पान्तरालाभविषयम् SmṛtiCan. v. 265. 12.

**अनिषिद्धप्रचारा** (aniṣiddha-pracārā) *adj.* (*f.*) having unrestricted movements अनिषिद्धप्रचारा हरिण्य इव स्वैरमारेभिरे हि रेचयितुमभिनवदूर्वाश्यामलासु दिक्षु दृष्टयः AvantiKa. 69. 20.

**अनिषिद्धभाषण** (aniṣiddha-bhāṣaṇa) *adj.* for whom conversation (with women) is not prohibited भिक्षुकादयोऽप्रतिवारिता अनिषिद्धभाषणाः स्त्रीभिः सह संभाषेरन् Aparā. 856.5 (*on* 2.285)

**अनिषिद्धमांसभक्षण** (aniṣiddhamāṁsa-bhakṣaṇa) *n.* eating of unforbidden meat क्षत्रियादीन्प्रत्यनिषिद्धमांसभक्षणप्रकारमाह ManvaVi. 608.12 (*on* 5.32)

**अनिषिद्धमार्ग** (aniṣiddha-mārga) *m.* unforbidden manner उत्तमवर्णेन हीनवर्णायामुत्पन्ना सा(या) स्त्री सोत्तमवर्णादनिषिद्धमार्गेण स्त्रियं जनयति Aparā. 120. 2 (*on* 1. 96)

**अनिषिद्धविक्रय** (aniṣiddha-vikraya) *adj.* the sale of which is not forbidden यत्तु राज्ञा नेदमत्र विक्रेतव्यमिति प्रतिषिद्धविक्रयं, यत्तु(च)राजयोग्यं गजतुरंगादि अनिषिद्धविक्रयमपि, तदुभयं विक्रीतमपि राजगामी न क्रेतृगामी Aparā. 833.19 (*on* 2. 261); (निन्दितार्थोपजीवनम्) वार्धुष्यं निषिद्धवृद्ध्युपजीवनम्।... अनिषिद्धविक्रयस्यापि पण्यस्य प्रतिषिद्धार्थोपजीवनम् Aparā. 1051. 4 (*on* 3. 236)

**अनिषिद्धविषयत्व** (aniṣiddhaviṣaya-tva) *n.* the state of not having reference to prohibition स्तुत्यालम्बनभूताया निन्दाया अपि अनिषिद्धविषयत्वानुपपत्तेः युक्तं भेदकत्वम् MīmāKau. ii. 115.17 (*on* ii. 4.8); स्तुतिघटकीभूताया निन्दायाश्च आरोपेणाप्युपपत्तेः अनिषिद्धविषयत्वे न क्षतिः MīmāKau. ii. 124. 18 (*on* ii. 4. 21); (ज्योतिष्टोमे श्रूयते गौश्चाश्वश्चाश्वतरश्च ... माषाश्च तस्य द्वादशशतं दक्षिणेति) संख्याविधेरनिषिद्धविषयत्वोपपत्तौ न तद्बलादश्वादिनिषेधसंकोचः कल्पनीय इति भावः MayūMāli. 688. 17 (*on* x. 3.11)

**अनिषिद्धविषयोपभोग** (aniṣiddhaviṣayopabhoga) *m.* enjoyment of unforbidden pleasures अनिषिद्धविषयोपभोगस्य वैराग्योत्पादकत्वेन कर्तव्यत्वादर्थकामाववश्यं साधनीयौ Subodhi. 65. 6 (*on* 2. 135); BālamBha. ii. 194. 30 (*on* 2. 135)

**अनिषिद्धशाक** (aniṣiddha-śāka) *m.* unforbidden vegetables तदैव देयं विप्राणां शाकं भक्ष्यमथात्मनः। शुभशाकसमायुक्तम् ... शुभं(?भ) शाकः अनिषिद्धशाकः CaturCin. ii(1). 762.9.

**अनिषिद्धसंचार** (aniṣiddha-sañcāra) *adj.* of unforbidden movement, having free access प्रकीर्णकं महीपृष्ठे जनानन्दं ततः परम्। यत्रानिषिद्धसंचारो जनः क्रीडति नागरः PadmP.(Ra.) 46. 146; (स्वैरेव पुत्रैरन्तःपुराणि कामचारैर्जननीवर्जमुपयुज्यन्ते वैदर्भकाणाम्) कामचारैरित्यनिषिद्धसंचारैः JayaMa. 302. 9 (*on* 5.6)

**अनिषिद्धसाधनगोचरा** (aniṣiddhasādhana-gocarā) *adj.* (*f.*) having reference to unprohibited means सुलभेच्छा त्वनिषिद्धसाधनगोचरा निषिद्धसाधनगोचरा च NyāyVārPari. 78.12.

**अनिषिद्धसुरापान** (aniṣiddhasurā-pāna) *n.* drinking of unprohibited liquor (सुराप्यो यासां या सुरा प्रतिषिद्धा तत्पानरताः) अनिषिद्धसुरापाने दोषाभावादाह BālamBha. iii. 12.24 (*on* 3.6)

**अनिषिद्धसुलभसाधनगोचरा** (aniṣiddhasulabhasādhana-gocarā) *adj.* (*f.*) having reference to the means which is easy and unprohibited (सुलभेच्छा) अनिषिद्धसुलभसाधनगोचरापि शरीरपाटवे सत्यसति वा NyāyVārPari. 79.2.

**अनिषिद्धस्वरूपत्व** (aniṣiddhasvarūpa-tva) *n.* the state of having unnegated nature न ह्यनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वे तन्त्रम्, परैरनिषेध्यरूपत्वेनाङ्गीकृतस्य वियदादेरुत्पत्त्याद्यनङ्गीकारात् AdvaiSi. 122. 1.

**अनिषिद्धाचरण** (aniṣiddhācaraṇa) *n.* performance of what is not forbidden निषिद्धाचरणे प्रायश्चित्तिर्न विहितानिषिद्धाचरणे प्रायश्चित्तिरनिषिद्धाचरणे तु न पापं विहिताचरणेऽभ्युदयः PārāSū. 88. 6.

**अनिषिद्धाज्ञ** (aniṣiddhājña) *adj.* whose command or order is not disobeyed यान्नाभ्यषेणयत् कोऽपि ...। निषिषेधानिषिद्धाज्ञो द्वास्थस्तान् DvyāśraKā. 3.127.

**अनिषिद्धानुमति** (aniṣiddhānumati) *f.* consent without rejection ऊढं यदाजन्म तत् त्यक्तुं हि न शक्यते । अनिषिद्धानुमत्यानुमेने सूरिस्तदाग्रहम् PrabhāC. 14. 14.

**अनिषिद्धार्थ** (aniṣiddhārtha) *adj.* the purport of which is not negated परतन्त्रोक्तः स्वतन्त्रे चानिषिद्धार्थोऽभ्युपगमसिद्धान्तः TārkiRa. 174. 1.

**अनिषिद्धालाभ** (aniṣiddhālābha) *m.* non-availability of one who is not prohibited (श्राद्धे) सजातीयेषु अनिषिद्धालाभेऽभिशस्तत्वादिबलवद्दोषरहितो दुष्टोऽपि ग्राह्यः BālamBha. i. 497. 27 (*on* 1.224)

**अनिषिद्धोत्पथगामिस्खलद्रथ** (aniṣiddhotpathagāmiskhalad-ratha) *adj.* whose chariot was uncontrolled, bumping and moving on the wrong path इतस्ततः पौरऋद्धिप्रेक्षणव्यग्रताजुषा। दक्षिणस्थेनानिषिद्धोत्पथगामिस्ख-

ल्द्रथः (प्रविवेश स तां पुरीम्) TriṣaŚaPuC. i. 5.56.

**अनिषिद्धोद्यम** (aniṣiddhodyama) *adj.* performing what is not forbidden दान्तोऽनिषिद्धोद्यमो मृषावादादिभ्य उपरतः (वानप्रस्थः) Aparā. 942. 15 (*on* 3.47)

**अनिषिद्धोद्यममति** (aniṣiddhodyamamati) *adj.* whose thought and undertaking are not censured सचिवैर्निजैः। अनिषिद्धोद्यममतिः (नृपः।··· प्रस्थानमकरोत्) RājTa.(Jo.) 949.

**अनिषिद्धोपभोग्यत्व** (aniṣiddhopabhogyatva) *n.* enjoyment of what is not forbidden सातिप्रत्ययस्त्वनिषिद्धोपभोग्यत्वलक्षणस्वत्वफलसद्भावाभिप्रायेण ··· व्याख्यातो न क्षुभ्यति CaturCin. iii(1). 1037.2.

**अनिषिद्धोपलब्धि** (aniṣiddhopalabdhi) *adj.* whose perception is not negated तत्राप्येकोपलब्ध्यानुपलब्धिरेवोच्यते। अन्यथानिषिद्धोपलब्धेरभावासिद्धेः (निषेध्यस्य) PramāVāSvopVṛ. 3. 26; HetuBiṬ. 56.25.

**अनिषिध्यमान** (a-niṣidhyamāna) *adj.* not being prohibited 'न गोश्वन् —' इत्यनेनानिषिध्यमानोऽप्युदात्तनिवृत्तिस्वरः शुनि ज्ञापकान्नावतरतीत्यर्थः PradI. v. 297B. 19 (*on* vi. 4.22)

**अनिषु** (an-iṣu) *adj.* **i** (bow) on which arrow is not fixed धनुष्केणानिषुणा व्रात्याः प्रसेधमाना यन्ति स ज्यान्हो(? ह्रो)डः LāṭyaŚS. viii. 6. 8; **ii** (quiver) not containing arrows तुच्छं सच्छरधिमुखं निगद्यते किम् ··· अनिषु न विद्यन्ते इषवो बाणाः यस्मिन् तत् VidaMuMa. 1. 54(1) [having bad arrows, MW.]

**अनिषुचारिन्** (an-iṣucārin) *adi.* not moving with arrows (अभोज्यम्) °चिकित्सकमृगय्वनिषुचार्युच्छिष्टभोजिगणविद्विषाणानाम् GautDS. ii. 8. 17 (comm. यो मृगयुः सन्निषुचारी न भवति किं तु पाशचारी स मृगय्वनिषुचारी वागुरिकः); Aparā. 238. 27 (*on* 2. 163)

**अनिषुधन्व** (an-iṣudhanvá) *adj.* not having arrows and bow तस्मा॒देक॑मिषुध॒न्विन॑म्। ब॒हवो॒ऽनिषुध॒न्वा ना॒भिधृ॑ष्णुवन्ति TaiĀ. v. 1. 3 (590. 14) (Sāy. इषुधन्वरहिताः)

**अनिषेद्धृ** (a-niṣeddhṛ) *adj.* who does not forbid or prevent उपेक्षाकार्ययुक्तश्च दोषवक्त्रनुमोदकः। अनिषेद्धा क्षमो यः स्यात् सर्वे तत्कार्यकारिणः KātySm. 834; Aparā. 821. 10 (*on* 2. 231); SmṛtiCan. iv. 724.5; VyavaMa. 240. 6; VIraMi.(Vyavahāra.) 395.10.

**अनिषेद्ध्रा** (a-niṣeddhrá) *adj.* (*f.*) [AltGr. II. 1. 110] unimpeded वि॒शो वै म॒रुतो देववि॒शस्ता हे॒दम॑निषे॒द्ध्रा इव चेरुः ŚatBr. II. v. 1. 12.

**अनिषेध** (a-niṣedha) *adj.* having no obstruction, unobstructed तदेतत् सर्वतोद्वारमनिषेधं साम ···। अथ य एतदेवं वेद स एवैतत् सर्वतोद्वारमनिषेधं साम वेद JaimiUBr. i. 30.2; *m.* **1** absence of negation, non-denial तच्चैतदनिषेधेऽपि स्थाण्वादावीदृगेव नः ŚlokaVār. 7. 306 (931. 7); अन्यत्र सदेवेह निषिध्यत इति चेत्, अस्यानिषेधान्नान्यत्र सत्ता कल्प्या IṣṭaSi. 131. 18; कारणस्य त्वनुत्पत्तेरनिषेधः BṛĀraUBhVā. i. 2. 3; i. 3.342; न पुनर्देशान्तरे तत्कार्याकारित्वेन तस्यानिषेधात् ĀtmaTaVi. 149. 3; रूपमध्ये रसादेः संभावनात् तस्यापि अनिषेधः PratyabhiVi. i. 382. 5 (*on* i. 7.11); लौकिकसदसतोरनिषेधात् न निरुक्तिनिमित्तार्थासंभवः TattvPradI.(Ci.) 76.1; TarkSaṁ.(Ā.) 64. 3; न चापह्नुतिः, प्रस्तुतस्यानिषेधात् SāhiDa. 538.16; परार्थेन शब्देनाप्रसक्तस्यानिषेधेऽपि ··· प्रत्यक्षेणाप्रसक्तस्यैव वा निषेधो युक्तः Nyāyāmṛ. 33B. 6; AdvaiSi. 334.18; GuruCandr. i. 207.24; LaCandr. 334. 41; **2** non-prohibition, absence of prohibition नित्येषु फलं नाभिसंधेयम् ···काम्येषु त्वनिषेधः ManuBh. i 55. 24 (*on* 2.5); इष्यमाणतामात्रस्य चानिषेधात् NyāyVārPari. 16. 5; न च ज्ञानमात्रेण तेषामुपयोगोऽभियोगवदनिषेधात् Kiraṇā. 29.10; लोहितग्रहणात् हिङ्गुकर्पूरादीनामनिषेधः Mitā. 57.26 (*on* 1.171); DīpKa. 21.16 (*on* 1.171); VīraMi. 246.8 (*on* 1.171); सुरतसमये कामिनीकेशग्रहस्यानिषेधः ManvaMu. 160.4 (*on* 4.83); 300. 32 (*on* 8.65); आपस्तम्बवचनाच्चानिषेधः VIraMi. 143. 7 (*on* 1. 80); नियन्तृकर्तृकस्य वहेरनिषेधः PrakriKau. i. 394. 2; i. 451.2; बहुव्रीहौ सक्थ्यक्ष्णोरनिषेधः PrakriKau. i. 652.9; श्रावणशुक्लद्वादश्यां दधिव्रतं प्रागुक्तम्। तक्रादीनां त्वनिषेधः NirṇaSi. 87.11.

**अनिषेधक्षम** (a-niṣedhakṣama) *adj.* not capable of forbidding or preventing उपेक्षाकार्ययुक्तश्च दोषयुक्तानुमोदकः। अनिषेधक्षमो यः स्यात् सर्वे ते कार्यकारिणः VyavaNi. 495.6.

**अनिषेधत्** (a-niṣedhat) *adj.* not declining, not refusing अङ्गीकृतं पातनं स्यात् कितवेनानिषेधता KathāSaSāg. xviii. 2.82.

**अनिषेधतस्** (aniṣedha-tas) *adv.* **i** because of non-prevention अकस्माद् भवतः सक्तेर्मुक्तावप्यनिषेधतः। अनिर्मोक्षप्रसक्तिर्वस्तथा सति समापतेत् BṛĀraUBhVā.(Sambandha.) 52; **ii** due to non-negation बुभुक्षाद्येकदेहस्थनिषेधादनिषेधतः। क्षित्यादेर्वियदन्तस्य नातः प्रश्नार्थनिर्णयः BṛĀraUBhVā. iii. 6.5; **iii** due to absence of prohibition अनध्याये मन्त्रपाठः क्रतौ नास्त्यस्ति वा, न सः। तत्पाठस्य निषिद्धत्वादस्ति तत्रानिषेधतः NyāyMāVi. 689.20 (*on* xii. 3.7)

**अनिषेधन** (a-niṣedhana) *n.* **Ai** absence of prohibition आगस्त्यं पाचयेच्छाकं विहितं ब्राह्मणस्य च। एकमूलानि चान्यानि गृह्णीयादनिषेधने PāraS. 18. 221; **Aii** non-prevention प्रसूतेषु कार्यार्थं प्रस्थितेषु अनिवारणं तन्मध्यगमनेऽनिषेधनम् DaṇḍaVi. 44. 2; **B** non-negation आगमादेः प्रमाणत्वे बाधनादनिषेधनम् NyāyKuA. i. 165. 1.

**अनिषेधरूपत्व** (aniṣedharūpa-tva) *n.* the state of not having the nature of denial अथ भेदज्ञानमेव बाधकम् — तच्चायुक्तम्, अनिषेधरूपत्वात् तस्य IṣṭaSi. 107.23.

**अनिषेधव्रत** (aniṣedha-vrata) *adj.* having the vow of non-refusal त्वं तु राजा भविष्यसि। अनिषेधव्रतः ··· अर्थिषु BṛKathāMañ. 14.399.

**अनिषेधसाम्य** (aniṣedha-sāmya) *n.* sameness in respect of non-denial न तर्हि वास्तवस्य अनिषेधो धर्मस्य—इति चेत्, न, धर्माभावस्यापि तथाविधस्य अनिषेधसाम्यात् TarkSaṁ.(Ā.) 64. 3.

**अनिषेधात्मकत्व** (aniṣedhātmaka-tva) *n.* the state of not having the nature of denial रूप्यज्ञानस्यानिषेधात्मकत्वात् पूर्वाबाधकतेति चेत् — तन्न IṣṭaSi. 98.14; 107. 23; 113.4.

**अनिषेधापत्ति** (aniṣedhāpatti) *f.* undesired contingency of non-prohibition यत्तु औष्ट्रदध्यादेरनिषेधापत्तिरिति, तन्न NirṇaSi. 107. 13.

**अनिषेधुका** (a-niṣedhukā) *adj.* (*f.*) unprevented (विशः) अनिषेद्ध्रा इव अनिषेधुका नियन्तृरहिताः इव स्वतन्त्राः Sāy. *on* ŚatBr. II. v. 1.12 (BI. Ed.)

**अनिषेध्य** (a-niṣedhya) *adj.* [*f.* -ā] **i** not to be negated नाभिं स्मरेत् ··· शक्तिं ब्रह्मणः ···। निषेधैरनिषेध्यां तामविधेयां विधिक्रमैः AhirbuS. 21.11; निषेध्यं सर्वमेवैतदनिषेध्यात्मवस्तुगम् BṛĀraUBhVā. ii. 3.198; ii. 3. 207; सूत्रे नञ्शब्दस्य किं निषेध्यम्। किं नामरूपम्, उत स्वरूपभेदः। नामरूपं चेत् — अनिषेध्यम्, तत्र विहितत्वात् ŚrutaPra. ii. 450. 10 (*on* iii. 2.29); परैरनिषेध्यरूपत्वेनाङ्गीकृतस्य वियदादेरुत्पत्त्याद्यनङ्गीकारात् AdvaiSi. 122.1; **ii** not to be prohibited गच्छतीप्रभृतिष्वनिषेध्यो नुम्।··· गच्छतीप्रभृतिषु शब्देषु 'श्यप्श्यनोर्नित्यम्' इति नुमनिषेध्यो निषेद्धुमशक्यः KāvyālaṅSū. v. 2. 80.

**अनिषेध्यत्व** (aniṣedhya-tva) *n.* the state of being not to be negated अनिषेध्यत्वेन प्रमां प्रति साक्षाद्विषयत्वात् अनिषेध्यत्वेनेश्वरं प्रति साक्षादपरोक्षत्वात् Nyāyāmṛ. 144B. 6; 149A.8; अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वात् Nyāyāmṛ. 587A. 8; तापत्रयातुरस्य तन्निवृत्त्युपायान्वेषिणो व्यक्ताव्यक्तज्ञविज्ञानाद्युपायान्तरस्य यदृच्छोपदेशादिनापि प्राप्तिसंभवात्। अन्यथा सर्वथैवाप्रसङ्गादग्रेऽप्यनिषेध्यत्वापातात् SiddhāSi. i. 33.14.

**अनिषेध्यमान** (a-niṣedhyamāna) *adj.* not being prevented आङ्गिकेन वाचिकेन वाभिनयेन निषेध्यमानः प्रकृतिसात्म्यात्। यदा त्वनिषेध्यमानस्तदा कृते प्रतिकृतं कुर्यात् JayaMa. 133. 7 (*on* 2. 5)

**अनिषेवण** (a-niṣevaṇa) *n.* absence of adherence दोषानां(? णां) कुहनादीनां पञ्चानामनिषेवणात्।··· कुर्या दुःखप्रतीकारम् Saund. 13. 14.

**अनिषेवयत्** (a-niṣevayat) *adj.* not applying or rubbing backwards चतसृभिर्दर्भेषीकाभिः ··· दक्षिणमक्षि त्रिराङ्क्तेऽन्ययान्ययानिषेवयन् MānŚS. 59. 7.

**अनिषेव्य** (a-niṣevya) *ger.* not having worshipped or attended on अनिषेव्य रविं वह्निमनुपास्य परान् सुरान्।··· सेतौ कुर्यात् स्नानम् SkandP. iii(1). 1. 70.

**अनिष्कद्दृह्** (a-niṣkadṛh) *adj.* [P. viii. 2.32] not fastening (i.e. wearing) a *niṣka* (i.e. golden ornament) नामृष्टभूषणधरो न ··· अनिष्कधृक्।··· कश्चिदासीदयोध्यायाम् Rāmā. i. 248*(13)

**अनिष्कर्ष** (a-niṣkarṣa) *m.* absence of determination, non-determination व्यक्तेर्गौरित्यनिष्कर्षात् ··· न जात्या व्यक्तिलक्षणा NyāyPari. 373.3.

**अनिष्कर्षक** (a-niṣkarṣaka) *adj.* not determining, not distinguishing तत्र स्वाभाविकवाचकत्वं(चकं?)द्विविधम्, निष्कर्षकमनिष्कर्षकं च NyāyKu. 134.14; स्वव्यतिरिक्तसमस्तद्रव्यशरीरिणस्तद्द्रव्यवाचिभिरनिष्कर्षकैः शब्दैः प्रतिपादने विवक्षिते दोषकथाभावात् ŚatDū. 213. 14; NyāyPari. 63. 8.

**अनिष्कषाय** (a-niṣkaṣāya) *adj.* not bereft of faults or attachments अनिष्कषाये काषायमीहार्थमिति विद्धि तत् MahāBhā. xii. 18. 33.

**अनिष्कसिता** (a-niṣkasitā) *adj.* (*f.*) from which the scrapings (of the cooked food) are not extracted स्थालीमनिष्कसिताम् ··· निदधाति ĀpaŚS. x. 21.18; xiii. 23.2.

**अनिष्काशन** (a-niṣkāśana) *n.* not taking out (पिण्डान् ··· अगाधे

जलेऽपि वा प्रक्षिपेत्) अनिष्काशनायाह। अगाधे इति BālamBha. i. 599. 32 (*on* 1. 257)

**अनिष्काषम्** (a-niṣkāṣam) *adv.* without rubbing or scratching (पुरोडाशम्) अलंकरोति स्वक्तमनिष्काषमपृषन्तमपर्यावर्तयन् MānŚS. 19.4; cf. **अणिकाषम्**, **अनिकाषम्**.

**अनिष्कास** (a-niṣkāsa) *m.* not coming out राक्षसानामनिष्कासाज्ज्ञाततत्कदनत्वरः। लङ्कादाहाय सुग्रीवः प्रमुखानादिशत् कपीन् RāmC. 35.117.

**अनिष्कासितत्व** (aniṣkāsita-tva) *n.* the state of not being expelled (उभयोर्गुणानपेक्षी) तस्यास्तस्याश्च ताभ्यामनिष्कासितत्वात् JayaMa. 334. 23 (*on* 6. 4)

**अनिष्कासिता** (a-niṣkāsitā) *adj.* (*f.*) from which the scrapings (of the cooked food) are not removed अनिष्कासितां कुम्भीं निदधाति BhārŚS. viii. 13.2; तस्यामेव स्थाल्यामनिष्क(v. l. ष्का)सितायां श्रपयति ĀpaŚS. xiii. 23. 2; viii. 11.15.

**अनिष्कासिन्** (a-niṣkāsin) *adj.* [*f.* -ī] **1** not allowing any balance to remain अनिष्कासिना स्रुवेणान्तर्वेद्याज्यानि गृह्णाति BhārŚS. ii. 7. 1; ĀpaŚS. ii. 7. 2; HirŚS. i. 7.39 (165.22); **2** not moving out (of the house) याश्चानिष्कासिन्यः प्रोषितविधवाः ··· आत्मानं बिभृयुस्ताः स्वदासीभिरनुसार्य सोपग्रहं कर्म कारयितव्याः ArthŚā. i. 280. 7 (2.23); ii. 2.5 (3.1)

**अनिष्कास्य** (a-niṣkāsya) *ger.* not having drawn out (संबाधे) एकवारं प्रवेशितं लिङ्गमनिष्क्रमय्यानिष्कास्य ··· संघट्टयेत् JayaMa. 163. 2 (*on* 2.8)

**अनिष्कितकान्ति** (aniṣkita-kānti) *adj.* of unmeasured lustre क्रिष्क्येत निष्कृपमनिष्कितकान्तिरेष बालः DhātuKā. 3.34 (comm. अनिष्कितकान्तिरपरिमितकान्तिः)

**अनिष्कीर्णा** (a-niṣkīrṇā) *adj.* (*f.*) not carved (i.e. in which bowl is not carved in the front portion) श्वो राज्ञः क्रय इत्युपकल्पयते ··· औदुम्बर्यौ स्रुचावनिष्कीर्णे रौहिणहवणी BaudhŚS. i. 271. 1.

**[1]अनिष्कृत** (án-iṣkṛta) *adj.* not perfect इष्कर्तारमनिष्कृतं सहस्कृतम् ··· शतक्रतुम्। सुमानमिन्द्रमवसे हवामहे ṚV. viii. 99. 8; परिष्कृण्वन्ननिष्कृतम् ···। वृष्टिं दिवः परि स्रव ṚV. ix. 39. 2; SV. II. iii(1). 4. 2; JaimiBr. 3. 60.

**[2]अनिष्कृत** (a-niṣkṛta) *adj.* not expiated अनिष्कृतमनाशितमेनो यैस्तेऽनिष्कृतैनसोऽकृतप्रायश्चित्ताः ManvaMu. 459.26 (*on* 11. 53)

[**अनिष्कृति** (aniṣkṛti) *f.* [w. r. for निष्कृति, cf. Bhattacharya Ed.] AV.(P.) iii. 17. 3.]

**अनिष्कृति** (a-niṣkṛti) *adj.* **i** absence of carrying out an expiation ब्रह्महानिकृ(v.l. ष्कृ)तिश्चास्तु यस्ते हरति पुष्करम् MahāBhā. xiii. 96.20; **ii** (sin) for which there is no expiation अनिष्कृतिपातककोटिशतायुतपुञ्जतरम् ··· पावय माम् YamunāA. 4; *f.* **1** absence of discharging a debt उपकारः कृतः पौरैः ··· मम। कथं भोक्ष्याम्यहं भोगान् गत्वा तेषामनिष्कृतिम् MārkP. 110. 21; **2** non-escape सामान्यलक्षणप्रत्यासत्तिमनङ्गीकुर्वतां पुनरनिष्कृतिरेव ŚaktiVā. 99.13.

**अनिष्कृतैनस्** (aniṣkṛtainas) *adj.* who has not expiated his sin चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैर्हि लक्षणैर्युक्ता जायतेऽनिष्कृतैनसः ManuSm. 11. 53; Mitā. 406.16 (*on* 3.220)

**अनिष्कृष्ट** (a-niṣkṛṣṭa) *adj.* **i** not extracted सारो बले मज्जनि च स्थिरांशे ··· अत्र स्थिरांशशब्दो निकृष्टांशपरः अनिष्कृष्टस्यास्थिरत्वात् LalitāSaBh. 171.16 (*on* 209); **ii** not derived from न हि मृदोऽनिष्कृष्टो घटः उदकाहरणार्थं केनापि प्रार्थ्यते Bhāsk. i. 246.12 (*on* i. 5. 12)

**अनिष्कृष्टत्व** (aniṣkṛṣṭa-tva) *n.* the state of being not separated उत्तरत्र तु प्रवृत्तिनिमित्तत्रये सत्यपि इतिकरणेन तेषामनिष्कृष्टत्वात् ŚrutaPra. iA. 214.8 (*on* i. 1.1)

**अनिष्क्रम** (a-niṣkrama) *m.* non-exit अन्तःपुरचारिणीनां बहिरनिष्क्रमो बाह्यानां चाप्रवेशः KāmSū. 252.24 (4.2)

**अनिष्क्रमण** (a-niṣkramaṇa) *n.* non-exit यदुसैनिकाः··अनिष्क्रमणे च मधुरिपुरसाववश्यमत्र बिलेऽत्यन्तं नाशमवाप्तो भविष्यति ··· इति कृताध्यवसायाः ··· इतः कृष्ण इति कथयामासुः ViṣṇuP. iv. 13.48; हार्दविद्यासामर्थ्यादुत्कृष्टस्थानप्रतिलम्भाय हि हार्दविद्योपदेशः मूर्धस्थानादनिष्क्रमणे च नोत्कृष्टदेशप्राप्तिः Bhām. 735.18 (*on* iv. 2. 17)

**अनिष्क्रमय्य** (a-niṣkramayya) *ger.* not having caused to come out (संबाधे) लिङ्गम् ··· सक्तून्मिश्रितमनिष्क्रमय्य द्विस्त्रिश्चतुरिति घट्टयेदिति चटकविलसितम् KāmSū. 162.12 (2. 8)

**अनिष्क्रान्त** (a-niṣkrānta) *adj.* not gone out स्थितिगतिप्रत्ययभेदश्च न अनिष्क्रान्ते जन्तौ सामञ्जस्यमश्नुवीत BrahmSūBh.(Śaṅ.) 563. 15 (*on* iii. 2.3)

**अनिष्क्रान्ति** (a-niṣkrānti) *adj.* not inclusive of the (first ceremonial) going out (of the new-born baby) ईशे षोडश ··· निष्क्रमभुक्तिचौलमुपनीतिश्च व्रतानि क्रियाः।··· शेषेष्वनिष्क्रान्तयः सन्त्वष्टोपनयान्तिमाः TantrSa. 4. 48 (Vimarśinī शेषेषु देवेष्वनिष्क्रान्तयः निष्क्रामहीनाः)

**अनिष्क्रामत्** (a-niṣkrāmat) *adj.* not issuing or emerging out तस्य गर्भस्य द्वादशवर्षाण्यनिष्क्रामतो ययुः ViṣṇuP. iv. 13.119.

**[1]अनिष्ट** (án-iṣṭa) *adj.* [*f.* -ā] **i** (deity etc.) not offered to, not worshipped with offerings आनिष्टा देवता आसन् TaiS. II. vi. 1.5; स्वाहा स्वाहेष्टिभ्यो वषडनिष्टेभ्यः KāṭhS. 5. 4 (i. 47.1); 32.4 (iii. 22. 14); संततिर्वा एषा यज्ञस्य योऽग्निमन्वाधाय व्रतमुपैति स यदनिष्ट उद्वायाद्विच्छित्तिरेवास्य सा KāṭhS. 35. 17 (iii. 62. 18); KapiKaS. 48.15 (306. 2); इष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा TaiBr. III. vii. 11.3; BaudhŚS. i. 32.11; BhārŚS. iii. 10.2; ĀpaŚS. iii. 11.2; HirŚS. ii. 6. 1 (232. 3); KauṣīGS. i. 5.29; ĀgniveGS. i. 5.2 (27. 17); KauśiSū. 5. 13; तद्धं निरुप्तं हविरासीदनिष्टा देवता ŚatBr. III. ii. 3. 7; ŚatBr.(K.) IV. ii. 3. 3; या इष्टा उषसो या अनिष्टास्ताः सं चिनोमि हविषा घृतेन AVPari. 22(9). 4; ĀśvaŚS. I. ii. 5. 14; KātyŚS. xxv. 10. 22; अनिष्टे गृहपतौ गार्हपत्ये स्रुवेण जुहोति ŚāṅkhāŚS. iv. 9.7; प्रायश्चित्ताहुतीर्जुहोति — इष्टेभ्यः स्वाहा ···। अनिष्टेभ्यः स्वाहा भेषजम् VārāŚS. I. iii. 7.20; कृत्वाधः पादयोर्मा निरतिशयशमश्रीसमालिङ्गिताङ्गः स्वस्तिष्ठत्यनिष्टः कथम् JinaŚ. 1.16; यदनिष्टाभ्यो देवताभ्यः स्वाहाकरोति SaṅkarKāBh. 207.1 (*on* iv. 3.13); अनिष्टानामनूयाजदेवतानामेवेदं कीर्तनम् BhaṭṭCan. 117. 20 (*on* xvi. 3. 10); **ii** not offered भवत्यनिष्टं वशयार्थं पात्नीवतेन प्र चरति TaiS. VI. vi. 6.2; BaudhŚS. ii. 295.17; तत्र प्रायश्चित्तिर्यत्प्रयाजेष्वनिष्टेषु प्राङ्गारस्स्कन्देत् KāṭhS. 35.18 (iii. 64.11); KapiKaS. 48.16 (307.6); बार्हस्पत्येन चरुणा प्रचरति। तस्यानिष्ट एव स्विष्टकृद्भवति ŚatBr. V. ii. 2.1; ŚatBr.(K.) VI. ii. 3.1; ŚatBr. V. iii. 3.10; V. iv. 4. 1; ŚatBr.(K.) VII. ii. 3.10; VII. iii. 4.1; अथ वै भवतीष्टो वरुणो भवत्यनिष्टः स्विष्टकृत् BaudhŚS. ii. 58. 8; हरितयवशाकशमीधान्यानां नवानां फलानामनिष्टेऽपि प्राशने याथाकामी ĀpaŚS. vi. 31.7; एकस्यानिष्टे तदुक्तम् KātyŚS. xxv. 5. 12 (comm. यद्येकेन यागो न कृतः स्यात् तदा कर्तव्यः); चतुरो वा ब्राह्मणान् भोजयेदनिष्टेऽप्याग्रयणे ब्रह्मणि हुतं भवति VaikhāŚS. 8.2; सहोत्तमेन प्रयाजेन सोऽप्यनिष्टो भवति तस्मिन्नितरासां संस्थावदिति SaṅkarKā. iv. 3.14 (Madras Ed.); '··· प्रयाजानूयाजानामिष्टानामनिष्टानामपि सतां (प्रयाजानां) वाचनिकोऽभिधानजानाम्' संस्कारः SaṅkarKāBh. 207. 8 (*on* iv. 3.14); **iii** (day) on which no offering has been made स उ चेदहुते प्रातरग्निहोत्रेऽनिष्टायाममावास्यायां प्रेयात् BaudhPiMe. ii. 1.2; *n.* non-sacrificing, non-worshipping with offerings अथ त्रयोदशेऽह्नि पौर्णमासेन हविषा यजते येनास्यानिष्टं भवत्यथ चतुर्दशेऽहन्यामावास्येन हविषा यजते येनास्यानिष्टं भवति BaudhŚS. ii. 411.8.

**[2]अनिष्ट** (an-iṣṭa) *adj.* [*f.* -ā] **A i** undesirable, disagreeable, unpleasant, unwanted, disliked **ii** inauspicious, ominous, calamitous, indicative of evil **iii** (view etc.) not acceptable, objectionable, inadmissible, inappropriate **iv** forbidden, prohibited **B** unwilling

**A i** undesirable, disagreeable, unpleasant, unwanted, disliked नगरं वा निगमं वा ग्रामं वा गोष्ठं वागारं वा मनसा ध्यायन् परिलिखेन्नात्रानिष्टाः प्रविशन्ति SāmaViBr. ii. 4.2 (Sāy. अनिष्टा अनीप्सिताश्चोरादयः); अनिष्टेष्विन्द्रियार्थेषु द्विष्टिः ··· इति राजसानि MaiU. 3.5; ब्रह्मणो यज्ञोपवीतमनिष्टम् AdvaiU. 5. 11; लोहितवर्षं मधुपांसुवर्षं यद्वा वर्षं घोरमनिष्टमन्यत्। द्विषन्तमेते अनु यन्तु सर्वे पराञ्चो यन्तु निवर्तमानाः KauśiSū. 94. 14; अथ ब्राह्मणायाग्रे पन्था देयो राज्ञ इत्येके। तच्चानिष्टम् ŚaṅkhaLiDS. 86; अनृतं वाप्यनिष्टं वा ··· क्षन्तव्यं मम दुर्वचः MahāBhā. i. 682*(1); v. 122.11 (v. l.); स्पन्दन्ति चाप्यनिष्टानि गात्रं सीदति चाच्युत MahāBhā. vii. 50.4; viii. 727*(1); xi. 26*(6); इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये MahāBhā. xii. 112. 16; xii. 194.10; अपशुपतिवरप्रसादजा मे त्रिभुवनराज्यविभूतिरप्यनिष्टा MahāBhā. xiii. 14. 95; xiii. 101. 26; राजन् मृत्युरनिष्टोऽयं भविता ते वृथाग्निना MahāBhā. xv. 45.24; परितुष्टोऽस्म्यहं सीते न ह्यनिष्टोऽनुशिष्यते Rāmā. iii. 9. 20; ण्यत्यवस्थितेऽनिष्टे प्रत्यय आदेशः स्यात् MahāBh. i. 483.7 (*on* ii. 4.35); i. 500. 18 (*on* ii. 4. 85); ii. 62.18 (*on* iii. 1. 80); अनिष्टे प्रत्ययेऽवस्थिते नुम्। अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत MahāBh. iii. 261.11 (*on* vii. 1. 58); iii. 36.3 (*on* vi. 1.45); iii. 397.11 (*on* viii. 2. 16); नृपः। शङ्कामनिष्टां विजहौ मनस्तः BuddhaC. 1. 47; 2. 39; 11.67; वरं हितोदर्कमनिष्टमन्नम् Saund. 5. 46; 5. 48; अनभिगमनीयमनिष्टानां च शब्दस्पर्शरसरूपगन्धानाम्···वास्तुविद्याकुशलः प्रशस्तं गृहमेव तावत् पूर्वमुपकल्पयेत् CaraS. i. 15. 6; मांसानि यान्यनभ्यासादनिष्टानि प्रयोजयेत् CaraS. vi. 8.156 (1941 Ed.); परिहरेत् शेषाण्यपि चानिष्टरूपरसगन्धस्पर्शशब्दमानसानि SuśruS.

iv. 24.98; पित्रोरनिष्टः (पुत्रः) कस्येदानीं प्रियः MadhyaVyā. 1. 19(4); गन्धा इष्टानिष्टोपेक्षणीयाः NyāyBh. 187.3 (*on* iii. 1.57); यदि शकुननिमित्तेऽस्य (राज्ञः) स्वचेतोविशुद्धिर्न भवति तदनिष्टं सर्वकार्येषु यानम् YogYā. 5.26; 12.21; योगस्ते तरुणैर्मनोऽभिलषितैर्मोक्षोऽप्यनिष्टाज्जनात् Ubhayābhi. 7.4; तस्य प्रतिनद्धा इव शिरोमुखनासिका भवन्तीष्टानिष्टाव्यक्ताश्च ग(न्धाः) KāsyaS. 130B.30; कालदूतैरिव गतिमनिष्टां गमयद्भिर्भर्तुराज्ञाक्षरैः प्रेर्यमाणाः ··· विन्ध्यगिरिमभ्यवर्तन्त मन्त्रिणः AvantiKa. 52.9; 119.6; खलाः पुनस्तदनिष्टमनुचितमेवावधारयन्ति VāsaDa. 70.2; कृत्वसंपत्तिनिमित्तं पितुरनिष्टं फलं पुत्रेण सता निवारणीयं मया KāṭhUBh. 104.9 (*on* 1.4); सर्वेन्द्रियाणामर्थे शब्दादिविषये ··· अनिष्टे द्वेषः GītāBh.(Śaṅ.) 102.1 (*on* 3.34); 271.15 (*on* 9.28); अनिष्टं नरकतिर्यगादिलक्षणम् ··· कर्मणः ··· फलम् GītāBh.(Śaṅ.) 499.8 (*on* 18.12); इष्टैः अनिष्टैश्च ··· वचनैः माम् ··· गोचरीकृत्य स्प्रष्टुं नैवार्हति UpadeSā. 107.6; ईश्वरोऽप्यपराधीनः स कथं भावैरनिष्टैः संप्रयुज्यते BālaKrī. ii. 49.19 (*on* 3.119 (? 129)); न हि तस्मिन्ननिष्टे तदर्थमिष्टं स्यात् IṣṭaSi. 30.12; संकल्पे च क्रियमाणे तत्कारणेन कामेन संनिधातव्यमनिष्टेनापि ManuBh. i. 54.19 (*on* 2.3); ii. 118.5 (*on* 8.104); ii. 247.22 (*on* 9.21); यदनिष्टमनभिप्रेतं परस्य तन्न चिन्तनीयम् ManuBh. ii. 456.14 (*on* 12.5); ये वात्मनोऽनिष्टाः स्युरुपचारास्तांस्तस्यै न दद्यात् PārāSū. 57.14; फलमिष्टमनिष्टं वा BṛKathāŚloSaṁ. 2.43; पुरंदरोदितासहमानप्रज्ञः ··· °पूयप्रवाहमूर्धस्फुटितस्फोटस्फुटचेष्टितानिष्टमक्षिकाक्षिप्ताशेषशरीरम् ··· ऋषिवेषमादाय ··· अवनिपतिभवनमभजत् YaśasCam. ii. 294.25; ii. 295.13; अनिष्टेषु विधिशतेनाप्यप्रवृत्तेः Kāśi. ii. 6.16 (*on* 5.13); निष्ठुरमश्रवणीयमनिष्टं वाक्यमसह्यमवद्यमहृद्यम्। जल्पति मदनार्तः SubhāRaSaṁ. 586; नष्टमनिष्टं सर्वमिष्टं पुनर्यद्धि तल्लब्धम् TattvPradī.(A.) 80.5 (*on* 1.61); वेश्या हि ··· धर्मकामावुपनतौ त्यक्त्वा पश्चाद्भविष्यत इत्यनिष्टेऽप्ययमर्थेद इति प्रवर्तते JayaMa. 15.15 (*on* 1.2); 240.6 (*on* 4.1); इन्द्रियार्थास्तु पञ्चैते त्रिविधाः परिकीर्तिताः। इष्टास्तथा ह्यनिष्टाश्च मध्यस्थाः ViṣṇuDhaP. iii. 28.5; अनिष्टमवीच्यादिस्थानभोग्यम् Bhām. 571.22 (*on* iii. 2.38); उभयमप्यनिष्टम् ĀtmaTaVi. 388.18; लक्ष्मीस्त्वं शृणु ते स्थितिम्। ··· मित्रद्रोहिष्वनिष्टेषु ··· वर्तसे BrahmP. 137.24; नापुत्रो नाधनो वापि न वानिष्टो न निर्घृणः। उपोष्यैतद्व्रतं मर्त्यः स्त्रीजनो वापि जायते BhaviP. 159B.26 (i.105.27); स पापकारी पापात्मा ह्यनिष्टां गतिमाप्नुयात् PadmP. iv. 93.37; पौरुषोपनता नित्यमिष्टानिष्टस्य वस्तुनः। प्राप्तिरिष्टाप्यनिष्टा वा दैवशब्देन कथ्यते YogVā. ii. 9.5; v. 11.2; (संवरणम्) अनिष्टे गन्धे वचने शब्देऽपि नासादौ अङ्गुलीद्वयेनाच्छादनम् AbhinBhā. ii. 32.23 (*on* 9.30); SaṁgīRa. iv. 35.2 (7.113); °कुष्ठप्रदुष्टा दृष्ट्वा नश्यन्त्यनिष्टा[:*] EI. i. 149.5; शमननिष्ठाभिरनिष्टाभिः शरीरिणाम्। सेनाभिर्घोररूपाभिर्युद्धं रक्षःपतेरभूत् RāmāMañ. 444.1; पश्यत कष्टमनिष्टः कलिकालः कीदृशोऽयमायातः KalāVi. 2.30; दुःखं चानिष्टम् VedāSaṁ. 148.13; आत्मनोऽनिष्टां हिंसामन्यस्य नाचरेत् YogŚā. 2.20; काङ्क्षणीयो न चानिष्टो विपक्षोऽपि कदाचन KathāSaSāg. vi. 1.144; यस्मादीश्वरः स्वतन्त्रः कथमनिष्टैर्मोहरागादिभावैः संयुज्यते Mitā. 384.16 (*on* 3.129); Aparā. 995.21 (*on* 3.128); 996.20 (*on* 3.131); अनिष्टे चैव गन्धे च सर्वमेतदनिष्टकम् AśvaVai. 3.178; प्रवर्तते स तत्रैव नानिष्टेऽपीष्टसाधने NyāySu.(So.) 29.22 (*on* i. 2.7); यस्यावश्यककर्म्मनिष्ठितमतेऽ[नि]ष्टा वनांतेऽभवन्नंतेवासिवदाहितांजलिपुटाश्चौराः कृतोपासनाः EI. xxi. 52.5; अनिष्टानि च सर्वाणि ह्यनुमा कामचारिणी AnuVyā. 25B.8 (*on* 2.2); अनिष्टानां गन्धशब्दरूपवाक्यानामुपघ्राणश्रवणदर्शनोदाहरणेषु आदित्यदर्शनाच्छुद्धिः Aparā. 1197.22 (*on* 3.292); अनिष्टामपि तां पौरास्तद्गिरं प्रतिशुश्रुवुः PāṇḍaC. 7.454; कलुषोदकपानाद्वा अनिष्टेन तृणेन वा। भवन्ति धातवः क्षीणाः Hastyāyur. 295.7 (2.60); साभवत्। अनिष्टा पूर्ववत् पत्युः स्वदुष्कृतवशंवदा MalliC. 7.865; अवद्यमनिष्टम् MugdhaBo. 26.16 (150.7); PrakriKau. ii. 477.9; प्रतियोग्यनपेक्षत्वे सति स्वा(? स्व)भावतोऽनिष्टं दुःखम् TarkSaṁ.(Ā.) 111.24; तृप्ताः सन्तः पितरोऽनिष्टं फलं प्रयच्छन्तीत्यपि न युक्तम् CaturCin. iii(1). 211.22; iii(1). 507.20; मार्जारिकाभवः। तत्राप्यनिष्टा सर्वेषामोतूनां कर्मदोषतः SamarāSaṁ. 8.412; सुखमिष्टं दुःखं चानिष्टम् SyādvāMañ. 8(309); यं धर्मव्यवहारमिष्टेषु क्षुद्रेष्वप्यक्षुद्रयोग्यं नियमयेदेवं महत्स्वप्यनिष्टेषु क्षुद्रयोग्यम् ManvaVi. 760.25 (*on* 7.13); अनिष्टस्य वियोगस्य उत्ख्यात उद्भेदः NāṭaLaRaK. 515; इदमिष्टमनिष्टं तदिति वेत्ति न किंचन RasāSu. 180.10 (2.197); जीवावयवाः ··· शरीरे। ··· संकुचन्त्यनिष्टे ŚaṅkaDigVi.(Mā.) 15.152; दुःखादिमत्त्वमनिष्टम् NyāySu.(Ja.) 196B.1 (*on* i. 4.6); अनिष्टानि च सर्वाणि दहनशैत्यादीन्यापतेयुः NyāySu.(Ja.) 354B.2 (*on* ii. 2.6); 622A.1 (*on* iv. 1.8); संसारे रजस्तमोभ्यामयमाविष्टो भ्रमन् ··· भावैः ··· अनिष्टैर्दुःखहेतुभिः संपृक्तः संसारं प्रतिपद्यते DīpKa. 87.26 (*on* 3.140); पुरुषेणानिष्टस्यापशकुनस्य प्रत्ययो न द्रष्टव्यः SiṁhāDvā. 35.1(4); पापतद्विपाकरूपं सर्वमनिष्टं हरतीति हरिशब्दः PāñcRāRa. 89.3; तथा च ब्रह्मजिय इत्यनिष्टं रूपं स्यात् PariVṛ.(Sī.) 112.10; पापेनानिष्टस्य ··· फलस्य शरीरत्यागादूर्ध्वमविद्यमानत्वात् VedāntKau. 321.9 (*on* iii. 3.27); अनिष्टस्य तथार्थस्य विध्याभासः परो मतः SāhiDa. 588.7; राज्यं त्वदग्रजाभ्यां मे नाशितं वैरतो मिथः। तत्राप्यनिष्टौ द्वावेव मम चिन्ताज्वरप्रदौ RājTa.(Śrī.) 3.90; गच्छन्त्वनिष्टा मद्रास्ते बहिर्युक्त्या निवारिताः RājTa.(Śrī.) 4.158; 4.623; 2.218; 4.29; वैपरीत्यमतिनिन्द्यमनिष्टं यद्विशुद्धमतयः कथयन्ति। कामिनां निधुवनेषु तदेव श्लाघ्यमित्यभिमतत्वमवाप Subhāṣi. 2123; अनिष्टेषु विधिशतेनाप्यप्रवृत्तेः YuktiSneha. 46.23 (*on* i. 1.5); ननु कामाधिकारेऽनुष्ठानाभावे फलं न सिद्ध्येत्। तच्चानिष्टम् TantrRaha. 59.9; प्राप्तं तत्प्रापणीयं किल यदिह क्रियान्पूरणीयोऽस्ति नांशो नानिष्टं वा निर्वर्त्यं निजविषयतया दृश्यते किंचिदस्य VidhiRa. 5(31.13); (स्त्रीणाम्) चिरकण्डूतिनिवारणमिष्टमनिष्टं तदल्पकालेन KandaCū. ii. 1.32; रव्या म्या इत्यनिष्टं रूपं स्यात् Prasā. i. 244.17; i. 286.11; ii. 264.12; सर्वज्ञं खलु जीवं नो भिन्नं परिपश्येत्। संस्रष्टा तदनिष्टं संसारं कथमीशः NayaMañ. II. i. 7.13; दण्डस्य फलमिष्टमनिष्टं च VīraMi. 376.16 (*on* 1.356); अपिशब्दोऽनिष्टां धियमुत्पादयति RasGaṅ. 601.12; 566.5; उपगोस्तृतीये वाच्ये औपगवादिभि अनिष्टा प्रत्ययपरंपरैव प्राप्नोति LaŚabdeŚe. ii. 202.2; **AII** inauspicious, ominous, calamitous, indicative of evil प्रवक्ष्यामि विद्युल्लक्षणमुत्तमम्। ··· अनुलोमेषु वातेषु निरीतिं तु समादिशेत्। शुभायां स्यन्दमानायामनिष्टा स्यन्दते यदि AVPari. 59(1).9; सव्यस्याक्ष्णो विकारश्चाप्यनिष्टः समपद्यत MahāBhā. iii. 176.45; शस्त्राणि ···। तानि बद्धान्यनिष्टानि लम्बमानानि भारत। अदृश्यन्त महाराज नक्षत्राणि यथा दिवि MahāBhā. viii. 2.5; किं नु तस्य शरीरेऽस्ति ··· अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते MahāBhā. xiv. 89.4; उत्तिष्ठ मूढे ···। अनिष्टे सुभगाकारे सौभाग्येन विकत्थसे Rāmā. ii. 7.11; बह्वल्पार्थान्मङ्गलवचनं कर्तव्यम्। बहुशो देहि। अनिष्टेषु श्राद्धादिषु मा भूदिष्टेषु प्राशित्रादिषु यथा स्यात् MahāBh. ii. 436.7 (*on* v. 4.42); कुजदिनमनिष्टम् BṛSaṁ. 1.4; यद् यद् गात्रं रूक्षं मांसविहीनं शिरावनद्धं च। तत्तदनिष्टं प्रोक्तम् BṛSaṁ. 68.83; (खड्गः) स्फटितोद्गस्थः कुण्ठो वंशच्छिन्नो न दृश्यनोऽनुगतः। अस्वन इति वानिष्टः YogYā. 12.4; क्रोशादूर्ध्वं शकुनविरुतम् ··· तत्रानिष्टे प्रथमशकुने मानयेत् पञ्च षट् च YogYā. 14.28; अयं प्रत्यय इष्यते। बहुशो ददातीत्याभ्युदयिकेषु कर्मसु। अल्पशो ददातीत्यनिष्टेषु कर्मसु KāśiVṛ. *on* v. 4.42; Prasā. i. 945.18; अस्यामनिष्टस्य संकल्पस्य निबन्धनम्। जिज्ञास्ये BṛKathāŚloSaṁ. 25.19; बह्वल्पार्थात् कारकाच्छसीष्टानिष्टे ŚākaṭāVyā. iii. 4.64; ग्रहाविष्टमिवानिष्टं घोरं युद्धमिहाभवत् RāghPāṇ.(Dha.) 9.46; मन्दः पापग्रहः क्रौर्यादनिष्टः शुभकर्मणाम् Deśopa. 1.8; बह्वल्पार्थोत्कारकादिष्टानिष्टे प्शस् SiddhaHe. vii. 2.150; श्मशानशुष्कागमजीर्णकूपाश्चतुष्पथं चैत्यकमप्यनिष्टम् ĪśānŚiPa. i. 39.53; आद्याद्वितीयाष्टम्यस्तु ताराः स्युरिह मध्यमाः। तथा ऋक्षेऽपि चानिष्टे SamarāSū. 26.43; ब्राह्मणस्यास्य गीरियम्। अनिष्टा दुर्घटा वा TriṣaŚaPuC. ii. 6.319; सितोदितोभये पार्श्वे पुच्छे दिक्षु विदिक्षु च। विप्रादीनामनिष्टानि NāraS. 43.15; क्रमशस्त्वनिष्टमिष्टं मध्यमरूपं भवेदतुलम् VasiS. 19.7; 24.32; मृत्युः ··· दृष्टो मेऽधुना बाढमनिष्टो मेऽभवच्छुकः PārśvC. 3.313; अनिष्टं वज्रपाताभम् ··· सुरीवचः श्रुत्वा पपात धरणीतले (श्रेष्ठी) CampaŚreKa. 26; सम्यग्ज्ञान एव कुण्डं युक्तम्। अन्यथा अत्यन्तमनिष्टम् NityoNi. 131.28; LaŚabdeŚe. i. 327.5; **AIII** (view etc.) not acceptable, objectionable, inadmissible, inappropriate शक्तिः ···। सामान्यान्तरयोगानामनिष्टा या च वर्ण्यते। तया सामान्यनाशः स्यात् ŚlokaVār. 5(12).43 (556.5); न ह्युक्तैदमर्थ्यान्तर्भाववचनमुद्भिदादीनामनिष्टम् TantrVā. 280.13 (*on* i. 4.1); 448.13 (*on* ii. 2.1); यद्यात्मा स्वाश्रयक्रियया विक्रियेत, अनित्यत्वमात्मनः प्रसज्येत। 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन्। तच्चानिष्टम् BrahmSūBh.(Śaṅ.) 24.17 (*on* i. 1.4); 297.6 (*on* ii. 1.7); सर्वं कर्म सर्वेण सर्वदा कर्तव्यं प्राप्नोति। तच्चानिष्टम् AitUBh. 242.17 (*on* 1.0); 275.12 (*on* 4.0); कर्ममात्रविदामनधिकार एव कर्मणि स्यात्, तच्चानिष्टम् ChāndoUBh. 68.10 (*on* i. 10.9); TaiUBh. 219.3 (*on* 1.4); ईश्वरस्य संसारित्वं प्राप्तम्, ईश्वरव्यतिरेकेण वा संसारिणः अन्यस्य अभावात् संसाराभावप्रसङ्गः। तच्च उभयमनिष्टम् GītāBh. (Śaṅ.) 359.10 (*on* 13.2); पुत्रादीनां तर्ह्यनन्तरोत्पादप्रसङ्गः। कस्य चैतदनिष्टम् BālaKrī. i. 174.4 (*on* 1.267); इति ब्रुवाणं प्रब्रूयादनिष्टं श्रूयते कुतः BṛĀraUBhVā. i. 4.829; यदि न्यूनता, तदा ··· ज्ञानम् ··· अयथार्थप्रमाणं स्यात्। अथाधिक्यं, तदाप्यर्थशून्यमपि ज्ञानरूपं प्राप्नोति। तच्चानिष्टम् IṣṭaSi. 105.8; कर्मणां यदि वैचित्र्यं कर्मान्तरकृतं यदि। अनिष्टं तत् स्वतःसिद्धं जगत्येव तदिष्यताम् NyāyMañ. ii. 43.17; न चेदमनिष्टं मीमांसकस्य यदुत्पन्नायां बुद्धावर्थो ज्ञात इति Kāśi. ii. 185.15 (*on* 5(3).234); नन्वनिष्टः पक्ष इति विप्रतिषिद्धमित्यत उक्तम् TātpaṬ.(Vā.) 270.14 (*on* i. 1.33); औपभृतमपि केवलानुयाजार्थं स्यात्। तच्चानिष्टम् TantrRa. 106.7; 277.9; अङ्गेष्वप्यप्रयोजकत्वमनिष्टमेव NyāyRaMā. 112.22; धात्वन्तरेण तस्याभिधानं नानिष्टम् ŚāstrDī. 103.11 (*on* ii. 1.1); अनुमानादिविलोप इति चेत्—नेदमनिष्टम् NyāyKuA. i. 165.6; रसादेश्च ··· अवाच्यस्यैव प्राधान्यं न स्यात्। तच्चानिष्टम् VyaktiVi. 64.20; अवयविनः सर्वात्मना

उपलब्धिः अनिष्टा इति चेत्, परिमाणस्यापि तदात्मनः सर्वात्मना दृष्टिः अनिष्टा TarkSam.(Ā.) 65.18; प्रामाणिकपरित्यागो ह्यनिष्टः अप्रामाणिकस्वीकारश्च NyāyKu. 22.2; नेदमनिष्टम् TattvPrakā. 52A.1 (*on* i. 3.24); 84B. 5 (*on* ii. 1.11); साधनस्य हि प्रमाणबाधो दूषणम् । न त्वापादनस्य । तस्यानिष्टविषयत्वात् । अनिष्टस्य च प्रामाणिकपरित्यागाप्रामाणिकस्वीकाररूपत्वात् NyāySu.(Ja.) 31A.13 (*on* i.1.1); 102A. 6 (*on* i. 1. 2); 197B. 13 (*on* i. 4. 6); 363A. 5 (*on* ii. 2. 6); अनिष्टं च तदुच्यते यदप्रामाणिकं प्रमाणविरुद्धं च NyāySu.(Ja.) 642B. 2 (*on* iv. 2.5); शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः SāhiDa. 407.8; ननु नीलपीतादयो गुणा द्रव्याभिन्ना एव ··· इति चेन्न ··· ननु नेदमनिष्टम् Upask. 286.6 (*on* vii. 1.6); सुषुप्तावपि स्वप्नबाधकज्ञानमास्थीयेत । तच्चानिष्टम् SiddhāBi. 114.1; यदुक्तं 'जन्मान्तरीयोऽप्युपयुज्यते' इति तन्नानिष्टम् SiddhāTa. 38.26; अविरुद्धे तु प्रामाण्यं नैवानिष्टम् MīmāKau. i. 28.2 (*on* i. 3.4); ii. 3.18 (*on* ii. 3.1); ii. 101.4 (*on* ii. 4.1); अनेकेश्वरता चानिष्टापद्येत तस्मान्न मुक्तो जगद्व्यापारीति GoviBh. 322. 16 (*on* iv. 4. 17); **Aiv** forbidden, prohibited यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु । सर्वथा ब्राह्मणाः पूज्याः ManuSm. 9. 319 (Bh. अनिष्टेषु प्रतिषिद्धेषु वर्तमानाः); अनिष्टं च यत् प्रतिषिद्धं तद् व्याचक्षते ManuBh. ii. 456.15 (*on* 12. 5); अनिष्टं गर्हितं तत्र प्रेतेन सह भोजनम् VarāP. 189.3; अनिष्टेषु लोकविद्विष्टेषु ManvaVi. 1268.22 (*on* 9.319); अनिष्टं निषिद्धं कर्म VedāntKau. 263.11 (*on* iii. 1. 12); **B** unwilling नाद्यूनां तु स्त्रियं गच्छेत् ···। नानिष्टाम् ViṣṇuP. iii. 11.115; *n.* **Ai** what is undesirable or disliked or unpleasant तस्मादनिष्टमेवेष्टमिव भाति । इष्टमेवानिष्टमिव भात्यनादिसंसारविपरीतभ्रमात् TripāMaNāU. 366. 27(5); अनिष्टानां च संसर्गात् ···। कथं हि मानसैर्दुःखैः प्रमुच्यन्तेऽत्र पण्डिताः MahāBhā. xi. 3.2; यः ···। इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्ट्रात्मने नमः MahāBhā. xii. 79*(4); iv. 4.21; तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः । अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ManuSm. 7. 13; (दृष्टिः) कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च NāṭyaŚā. 8.90; परावृत्तेन शिरसा नेत्रनासाविकर्षणैः । चक्षुषश्चाप्रदानेन ह्यनिष्टमभिनिर्दिशेत् NāṭyaŚā. 22.91; 25.16; (रोगः) मानसः पुनरिष्टस्य लाभाल्लाभाच्चानिष्टस्योपजायते CaraS. i. 11. 45; धर्मः सत्साधुसंमतः । अप्रद्वेषो ह्यनिष्टेषु BrahmāṇḍP. i. 32.57; अनिष्टमिष्टमप्रीतिप्रीतितापविषादनम् ।··· इत्येष वैषयो रागः BrahmāṇḍP. iii. 3. 47; i. 13.72; मन्त्रवित् । कृतार्थं मन्यमानः स्वगुरवेऽथ ··· निवेदयेत् ।··· विना पापमनिष्टं च सर्वं तस्मै AhirbuS. 20. 45; नेष्टमनिष्टेनाननुविद्धं संभवतीति इष्टमप्यनिष्टं संपद्यते NyāyBh. 35. 12 (*on* i. 1. 22); या वीतरागाणां प्रवृत्तिः सा ··· अनिष्टप्रतिषेधार्था अनिष्टं हास्याम इत्येव ते प्रवर्तन्ते NyāyVār. 3.3 (*on* i. 1.1); (विप्राणाम्) तेषां न चानिष्टं समाचरेत् VṛGautaSm. 513.10(3); पदद्वयस्य संधाने यदनिष्टं प्रकल्पते । तदाहुः कल्पनादुष्टं स शौर्याभरणो यथा Kāvyālaṅ. (Bh.) 1. 52; असातवेदनीयस्य पाकतः संभवन्ति ते । नेत्रैः पश्यन्त्यनिष्टानि VarāṅgaC. 5. 87; न खलु ··· प्रमाणे सतीच्छापि पुरुषस्यापेक्ष्यते ज्ञानं प्रति, अनिष्टानामप्यवबोधात् BrahmSi. 75. 2; नृपस्यानिष्टमाशङ्क्य मन्ये किमपि दारुणम् BṛKathāŚloSaṁ. 15. 37; 26. 33; यदि च सांकल्पिकी स्वप्ने रथादिसृष्टिः स्यात्, नैवानिष्टं कश्चित्स्वप्नं पश्येत् BrahmSūBh.(Śaṅ.) 569.13 (*on* iii. 2.6); जयति जनमनिष्टादुद्धरन्ती भवानी Kāvyālaṅ.(Ru.) 16. 42; 15.3; यद्यहमेवं कुर्यां तदिदमनिष्टमाप्नुयामिति संकीर्तनक्रिया शपथः ManuBh. ii. 125. 19 (*on* 8. 113); अनिष्टमपि द्विविधं परिजिहीर्षति PañcPā. 86.9 (*on* i. 1.4); पुमानिष्टस्य संप्राप्तिमनिष्टस्य च वर्जनम् । इच्छन्नपेक्षते योग्यमुपायम् BṛĀraUBhVā. (Sambandha.) 884; अनुभवो नेच्छामनुविधत्ते । अनिष्टस्याप्युपलब्धेः NyāyVārPari. 37.3; अनिष्टं यत्रानिशं भुक्तत्वेनेच्छा निवृत्ता AbhinBhā. i. 328. 21 (*on* 6.73); (अनिष्टस्य श्रुतिर्यद्वत्) अनिष्टार्थस्मारकस्येत्यर्थः Loc. 129.25 (*on* 3. 1); गुरोः ··· अनिष्टं न स्मरेत् LiṅgaP. i. 89. 39; इष्टविपरीतं चानिष्टम् ŚāstrDī. 265.16 (*on* iii. 4.8); तदस्याश्चेदनिष्टं स्यात्सर्वनाशस्ततो भवेत् KathāSaSāg. vi. 7. 16; तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकम् BrahmSūBh. (Rā.) 147. 19 (*on* i. 1.4); अनिष्टस्य निवारणतया समाश्रयणीयश्चेतनः स चाहमेव GītāBh.(Rā.) 466. 7 (*on* 9. 18); इष्टैर्वियोगोऽनिष्टैश्च योगः ···। इत्येवमादिकं स्वप्ने विनाशभयदुःखदम् ĪśānŚiPa. ii. 18. 46; अनिष्टादिष्टलाभेऽपि नायतिर्जायते शुभा Hitopa. 1.5; दृक्कुञ्चिता ··· अनिष्टेऽसूयिते SaṁgīRa. iv. 146.1 (7. 415); इष्टेऽनिष्टं च यद् रागविरागौ तनुते मनः MalliC. 6. 324; अन्यदन्यच्च वदतोर्द्वयोर्वाक्यसमागमे । जायतेऽनिष्टमिष्टं वा स गण्डः NāṭaLaRaK. 3003; 2052; इष्टानिष्टान्न जानाति सुखदुःखे न वेत्ति च BhāvPra.(Śā.) 91. 2(4); प्रतीपं विपरीतं अनिष्टमिति यावत् ManvaVi. 556.5 (*on* 4. 206); अनिष्टस्यानिष्टत्वादेव विधिर्बाधितः प्रतिषेधमाक्षिपति Ekāva. 8. 32 (275.4); प्रागनुष्ठितपुण्यापुण्यक्रियाफलभूतयोरिष्टानिष्टयोर्नियमेनोपलब्धिः VedāntKau. 232. 19 (*on* ii. 3. 36); अप्रारब्धं च द्विविधम् । इष्टमनिष्टं च TattvPrakā. 205A.3 (*on* iv. 1.17); यः पितृकल्पस्य ··· अनिष्टमाचरति सोमदत्तस्य स किं न कुर्यात् PuruṣPa. 84. 24; तदनिष्टं परित्यज्य जीवो जीवितुमिच्छति KumāPraPra. 71.27; 79.16; आवेगः संभ्रमस्तत्र ··· इष्टाद्धर्षाः, शुचोऽनिष्टात् SāhiDa. 147.6; ŚabdaRa.(Vā.) 2570; अनिष्टमनिष्यमाणमहिकण्टकादि Upask. 416.10 (*on* x. 1.1); नानिष्टं क्षमतेऽल्पोऽपि RājTa.(Jo.) 1225; अनिष्टं च दुःखमेव SarvaDaKau. 30.9; धर्म एवातिक्रान्त इष्टानिष्टाभ्यां सह नाशयति ManvaMu. 291. 9 (*on* 8.15); तेन तव मातुरनिष्टमुक्तम् PurāPraSaṁ. 1. 8; चक्षुषेष्टमनिष्टं चोपलभते AṇuBh. 152.23 (*on* ii. 3.37); स्यादन्यथानिष्टम् KandaCū. v. 6.26; इष्टानिष्टेषु तुष्टिव्यसनविरहितः ··· संचरेयम् Nārāy. xi. 91. 7; किञ्चित्फलमभिप्रेत्य तत्र प्रवर्तयितुमन्यत्किञ्चिदनिष्टमाशङ्क्य ··· निवर्तन्ते च ŚivārkaMaDī. i. 157. 4 (*on* i. 1. 3); अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् Kuval. 90; इष्टाभावरूपमेवानिष्टम् VīraMi. (Āhnika.) 10.18; राज्ञोऽनिष्टं परास्तत्वादि ··· वदन्तम् ··· जिह्वाच्छेदपूर्वकं प्रवासयेत् VīraMi. ii. 749. 24 (*on* 2.302); अनिष्टं च स्वस्य दुःखसाधनवस्तुप्राप्तिः RasGaṅ. 597. 4; 31.18; 99.9; इष्टार्थं यतमानस्यानिष्टं चेत्प्रत्युत भवेत् । इष्टालाभे तदापि स्याद्विषमालङ्कृतिः परा AlaṅkāMañ. 133. 16; 134.12; इष्टनाशादनिष्टस्य संभवाद्वा तदुद्भवः (चिन्तायाः) SāhiSā. 5.19; परस्परमनिष्टं न चिन्तनीयं त्वया मया ŚukraNī. 4(1). 4.31; **Aii** calamity, misfortune, mishap, danger, ill, evil, wrong, what is inauspicious or ominous अमेध्यमनिष्टं वा दृष्ट्वा जपति BaudhŚS. iii. 358.5; यद्वै दीक्षितोऽमेध्यमनिष्टं वा पश्यत्यबद्धं मनो दरिद्रमिति जपेत् VaikhāŚS. 21. 1; दैव्योपसृष्टेन बलेन कार्यं कार्या च शान्तिः प्रणिपत्य देवान् । ततोपसर्गाद् विघ्नात्प्रमुच्यते दिवि चेदनिष्टं न पुनः स कुर्यात् AVPari. 72(5).4; किं मे पित्रा कृतं तस्य राज्ञोऽनिष्टं दुरात्मनः MahāBhā. i. 37. 4; ध्रुवं स्वप्नेष्वनिष्टानि ताभिर्दृष्टानि माधव MahāBhā. viii. 1010*(3); viii. App. 1. 37(4); वाग्धीनस्य च यन्मात्रमिष्टानिष्टं कृतं मुखे MahāBhā. xi. 4.10; उपेक्षा सर्वकार्येषु कर्मणां करणेषु च । अनिष्टानां समुत्थाने त्रिवर्गो नश्यते यया MahāBhā. xii. 126*(4); xii. 52. 24; न ह्यस्य नृपते किंचिदनिष्टमुपलक्षये MahāBhā. xiv. 89.7; एतान्यादौ निमित्तानि च्युतौ स्वर्गाद्दिवौकसाम् । अनिष्टानीव मर्त्यानाम् Saund. 11. 53; ध्यायत्यनिष्टं यत्किंचित् पाणिग्राहस्य चेतसा ManuSm. 9. 21; ज्योतींष्यनिष्टममेध्यमशस्तं च नाभिवीक्षेत CaraS. i. 8. 19; तत्र व्यावर्तनकारणानि ··· मत्तोऽस्य मा भूदनिष्टमित्यनुकम्पा KāmSū. 258. 16 (5.1); उद्वेगोऽनिष्टे शान्तिकर्म च KāmSū. 321. 13 (6.2); KandaCū. vi. 2.34; भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी KumāSaṁ. 5.42; परद्रव्याण्यभिध्यायंस्तथानिष्टानि चिन्तयन् ।··· जायतेऽन्त्यासु योनिषु YājñaSm. 3.134; शान्तं पापं, प्रतिहतमनिष्टम् PādaTā. 32.5; अनिष्टेष्वथ सर्वेषु निमित्तं दक्षिणं भवेत् NāṭyaŚā. 22.253; स्फुरसि किमु दक्षिणेतर मुहुर्मुहुः सूचयन् ममानिष्टम् Nāgā. 5.4; हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः MālaMā. 5. 155; वत्स किमत्याहितं माधवस्य यदनिष्टं व्यवसितोऽसीत्याकम्पितास्मि MālaMā. 9.270; यस्मात्किञ्चित् क्वापि न वेत्तीष्टमनिष्टम् ViveCū. 168; तथा चानिष्टं श्रूयते TantrVā. 80. 1 (*on* i. 3.2); नानिष्टोपरमार्थत्वादनिष्टस्यापि शान्तये । सन्तः प्रयतमाना हि दृश्यन्ते व्याधिखेदिताः NyāyMañ. ii. 78. 18; इष्टशून्यतयानिष्टं पश्यामो न मनागपि RāmC. 31. 167; अनिष्टम् 'एन' उच्यते ManuBh. i. 119.6 (*on* 2.79); खलसङ्गेन किं नाम न भवत्यनिष्टम् NītiVā. 1. 39; तुरगपृष्ठास्तरणचर्मणि निषण्णो विषण्णेनान्तरात्मना चिन्तयन्कुमारमुद्दिश्य तानि तान्यनिष्टानि कथंचिदपि तामनेककल्पायतैकैकयामां त्रियामामनयत् TilaMañ. 188. 7; ततश्चानिष्टमाशङ्क्य ससैन्या मन्त्रिणो भयात् ।··· उज्जयिनीं ययुः KathāSaSāg. iii. 4.94; अव्यपोह्यानिमित्तं हि कार्यं यत्क्रियते सखि । तदनिष्टाय कल्पेत KathāSaSāg. vi. 6. 41; vi. 6. 91; vii. 5. 230; x. 8.56; (दिक्षु) अन्यासु क्रमतोऽनिष्टान्यवाप्नोति सुनिश्चितम् TantrRā. 11.47; रिपोरष्टमलग्ने च काले त्वष्टमराशिगे । स्थाने कुर्यादनिष्टानि तद्विनाशाय साधकः TantrRā. 31.7; अनिष्टमाक्षिप्य तु पाति मन्त्रम् ĪśānŚiPa. i. 4.15; i. 39.82; अनुद्विग्नो ह्यनिष्टेषु तथेष्टान्नाभिनन्दति LiṅgaP. i. 10. 26; देहिनाम् ···। कृतोऽपि धर्मोऽनिष्टाय जायते BrahmP. 122. 59; 159. 35; अनिष्टं ते भावि जाने धिया ह्ययम् DevīBhāP. iii. 28. 46; अहो आभिः (योषिद्भिः) किं न कृतमनिष्टं पुरुषेष्विह ĀdiP. 5 31; न चेदाशु महीपालादनिष्टं नियमाद्भवेत् RājTa. (Ka.) 7.777; 5. 186; केयमुपश्रुतिः कुलपतेरनिष्टं सूचयति KaumuMi. 3. 14(3); भो बल्लववर्या व्रजे परितोऽनिष्टमवलोक्यतामिति GopāKeCan. 145. 2; वत्साः किमपि मा भैष्ट नानिष्टं वः करिष्यते । भीष्मोऽस्मि PāṇḍaC. 1.283; प्रिये, किमाकुलासि । भविष्यसि बन्धुमती कल्याणपरम्परापात्रम् । एष शमयाम्यनिष्टम् RukmiHa. 4. 11(3); श्रुत्वा रघुपतेः किंचिदनिष्टं देव मैथिली । विधातुं सर्वदुःखान्तं लतापाशेन वाञ्छति Dūtāṅg. 31; अन्यथाज्ञाभङ्गेन सर्पवद्विषमो राजा सर्वमनिष्टं करिष्यति SamyaKau. 28.8; तासामुपकारे क्रियमाणे यदि मातुरनिष्टं स्यात् तदा न कार्यम् ManvaVi. 198.6 (*on* 2. 133); जन्मभूरियम् । स्पृष्टाप्यनिष्टं शिष्टानां पिनष्टि ViviTīKa. 94. 20; सापि दत्ते मनोऽभीष्टमनिष्टं हरते नृणाम् PārśvC. 6.139; संसारिणो हि ··· ईश्वरप्रेरिता अनिष्टमपि धारकप्रयत्नेनाकृत्वा न स्थातुमीशते NyāySu.(Ja.) 303A. 10 (*on* ii. 1. 6); त्वमिदानीं मां शत्रुपक्षपातिनं ज्ञात्वाप्यनिष्टेन न योजयसि PuruṣPa. 211.4; स तु सर्वहितः साधुः ···। तस्यानिष्टे कृते देवि को वा स्यान्निरुपद्रवः MahNirvāT. 3. 30; स्वप्नेऽप्यनिष्टं यस्याहं नेच्छामि RājTa.(Śrī.) 1(7). 195; अनिष्टं

चिन्तयामश्चेत्तत्कथं सहते विधिः RājTa.(Srī.) 3.495; 3.354; 3.456; स्त्रीणाम् ··· वदेत्। सौमङ्गल्यमनिष्टमष्टमगृहात् JātaPā. 16.5; अथैतान्निजगाद भूपः। मा कार्ष्ट कष्टं विदुषामनिष्टम् HammīMaKā. 8.112; नचिकेतसा ··· पितुरनिष्टमाशङ्कमानेन तदनिष्टं स्वात्मप्रतिपादनेनापि क्रतुसंपत्तिं कारयित्वा निवारणीयमिति मन्यमानेन ŚivārkaMaDī. i. 516.9 (*on* i. 4.6); पशुवधप्रयुक्तस्य अल्पस्यानिष्टस्य वित्तव्ययायासदुःखस्येव अभ्युपगमेन क्रतुसाध्यमहाफलार्थतया प्रवृत्तेरुपपन्नत्वेन विधिनिषेधाधीनप्रवृत्तिनिवृत्तिसमावेशदोषस्य अनवकाशत्वात् PūrvottaVāNaMā. 32.16; विनानिष्टं च तत्सिद्धिर्यमर्थं कर्तुमुद्यतः Kuval. 93; अनिष्टं वज्रपाताभं प्राणिनां प्राणघातकम् CampaŚreKa. 26; श्रीनारायणतीर्थानां गुरूणां चरणस्मृतिः। भूयान्मे साधिकेष्टानामनिष्टानां च बाधिका LaCandr. 2.8; यदि न दास्यसि तदा तवेदमनिष्टं भविष्यतीत्यनिष्टप्रदर्शनं, तेन नार्थमीहेत VīraMi. 216.8 (*on* 1.129); 331.7 (*on* 1.276); अत्र यद्यपि ··· काम्यानां दृष्टार्थकानां च व्यापाराणामभावतः प्रत्यवायरूपमनिष्टमनुपपन्नम् VīraMi.(Āhnika.) 10.18; एतेन 'शैलपतनरूपानिष्टावाप्तिस्तु ···। न ज्ञाता' इति यदुक्तम्, तदप्यसारमेव। अनिष्टानामुक्तत्वात् RasGaṅ. 602.10; स्वर्गोऽनिष्टं यागो वासाधनमिति बोधे स्वर्गकामादिपदार्थबोधाभावेनैव तद्वाक्यजन्यप्रवृत्त्यभावोपपत्तेः BhāṭṭCin. i. 68.2 (*on* i. 1.4); व्यतिरेकेऽनिष्टमाह (श्रुतिः) LalitāSaBh. 77.29 (*on* 113); काव्याध्ययनजन्यप्रयोजनस्य जातत्वेनोत्तरभूमिकायामेवाधिकारात्तां विहाय पूर्वभूमिकायामेवायुः क्षपयतोऽनिष्टं भवति SetuBa. 2.21; अन्तरङ्गपुरुषं प्रत्यनिष्टं द्योतयन्स्वयं राजा चन्द्रं प्रस्तुतीकृत्याह AlaṅkāMañ. 107.1; स्नुषागामिनः किमुक्तः चन्द्रास्य अन्यथा तेऽनिष्टं स्यात् Nāṭa. 26.23; **B** (Gr.) undesired consequence or result इतरथा ह्यनिष्टप्रसङ्गः Vār. 2 *on* P. i. 1.52; MahāBh. i. 130.16 (*on* i. 1.52); प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टम् Vār. 1 *on* P. iii. 3.163; MahāBh. ii. 167.2 (*on* iii. 3.163); गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम् Vār. 1 *on* P. iv. 1.79; MahāBh. ii. 233.6 (*on* iv. 1.79); चार्थे द्वन्द्ववचनेऽसमासेऽपि चार्थसंप्रत्ययादनिष्टं प्राप्नोति MahāBh. i. 431.2 (*on* ii. 2.29); अस्ति पुनः किंचिदनिष्टं दृश्यते तदर्थो नियमः स्यात् MahāBh. ii. 4.21 (*on* iii. 1.2); असंयोगपूर्वस्येति ह्युच्यमानेऽनिष्टं प्रसज्येत MahāBh. iii. 210.8 (*on* vi. 4.82); अनिष्टं च प्राप्नोतीष्टं च न सिध्यति MahāBh. iii. 255.25 (*on* vii. 1.37); iii. 424.17 (*on* viii. 3.12); तदन्येन दोषवत्त्वसाधने न किंचिदनिष्टम् PramāVāSvopVṛ. 6.15; यद्यत्र पुंवत्त्वनिषेधो न स्यात् तदा 'संज्ञापूर्वको विधिरनित्यः' इति यदा दीर्घो न स्यात् तदा दत्तयत इत्यनिष्टं स्यात् Prasā. i. 590.17; **D** untenable position, undesired contingency, untenability ततश्च चाक्षुषत्वादय एव हेतवः स्युः, न कृतकत्वादय इति अनिष्टमेव स्यात् तस्मादुपचारः कर्तव्यः HetuBiṬ. 13.17; यथा तु लिङ्गबलीयस्त्वमाश्रितमासीत् तथान्यदेवानिष्टमापद्येत यो ह्यस्य वाक्यस्य विषयः स बाध्येत TantrVā. 1173.17 (*on* iii. 8.21); अनारब्धफलं कर्म न त्वारब्धफलं यदि। निरुणद्ध्यात्मविज्ञानं तदानिष्टं प्रसज्यते BṛĀraUBhVā. i. 4.1532; अनिष्टं च द्विविधं प्रामाणिकपरित्यागोऽप्रामाणिकपरिग्रहश्च ĀtmaTaVi. 538.2; TārkiRa. 185.2; NyāySu.(Ja.) 477B.2 (*on* iii. 2.1); SarvaDaKau. 74.23; अवयविगुणत्वेऽनित्यत्वम्, परमाणुगुणत्वेऽग्रहणम्। द्वयमप्येतदनिष्टं भवतः NyāyKuA. i. 103.5; तेन हि वर्तमानेनोपाधिकोटौ तदायत्तव्यभिचारकोटौ वानिष्टमुपनयता इच्छा विच्छिद्यते NyāyKuA. i. 177.1; जन्याभावे जनकत्वाभावादिति चेत्, हन्तैवं कारणं कार्यस्यानुमापकमित्यनिष्टमापद्येत PramāMī. 45.1 (*on* i.2.12); वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः। असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत् AnuVyā. 2A.10 (*on* 1.1); येनेदमखिलं वेद विज्ञातारं स्वयमेव च। केन तं च विजानीयादित्यनिष्टं च सर्वथा AnuVyā. 70A.7 (*on* 4.2); अपि च यद्युपश्लिष्टं प्रसञ्जकं व्याप्यं यदि कार्तान्तिकवदनिष्टं प्रसञ्जयेत् तदा स्यादप्ययाथार्थ्यम् NyāyPari. 332.13; व्यावहारिक इति सत्यो मिथ्या वा। आद्ये किमनिष्टम् TattvPrakā. 44A.1 (*on* i.3.7); दोषाभावस्य कारणत्वे च नास्माकमनिष्टम् TattvPrakā. 55B.12 (*on* i. 3.28); स्वयं सदेव। अतस्तेन साधितेन ममानिष्टं कथं भवेत् NyāySu.(Ja.) 36A.5 (*on* i.1.1); न हि ज्ञापकादनिष्टं क्रियते ज्ञापकादाचार्येणेष्टसूचनात् PariVṛ.(Sī.) 81.3; अद्वितीयचिन्मात्रावशेषो मोक्ष इति मते अनिष्टं प्रसञ्जयितुं 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्यादिना प्रसङ्गाङ्गव्यतिरेकव्याप्तिमुक्त्वा 'यत्र त्वस्ये'त्यादिना···तर्हि केन कं पश्येत् न केनापि किंचित् (इत्यादिरर्थो द्रष्टव्यः) Nyāyāmṛ. 277A.11; नन्वस्त्वध्यापनाङ्गमेवाध्ययनं किमेतावतानिष्टं स्यात् YuktiSneha. 9.38 (*on* i.1.1); 38.27 (*on* i.1.4); 89.27 (*on* i.1.5); एकानेकविध्यप्रवृत्तिभ्यां लक्षणसंकरोपगमे रथन्तरपृष्ठादिनियमविधिष्वनिष्टं नापद्यते VidhiRa. 10 (78.21); द्रव्यगुणयोः परस्परसंबन्धं विना वैयधिकरण्येन क्रियाविशेषणतयान्वयनियमस्यानङ्गीकारे ह्यन्यत्रानिष्टं प्रसज्यते ŚivārkaMaDī. i.304.15 (*on* i.2.1); नन्वस्त्वेवमेव न नः किंचिदनिष्टम् VaiyāBhū. 89.1 (*on* 22)

¹**अनिष्टक** (an-iṣṭaká) *adj.* [*f.* -ā] **i** (fire, oblation etc.) not associated with bricks न वै एतस्यानिष्टके आहुतिरव कल्पते यां वै एषोऽनिष्टके आहुतिं जुहोति TaiS. V. iv. 10.3; यां वा अग्निचिदनिष्टकां आहुतिं जुहोति स्रवति सा MaiS. iii. 4.5 (iii. 50.13); KāṭhS. 22.2 (ii. 58.5); स्रवत्यु हैषाग्निचित आहुतिः सोमाहुतिर्यामनिष्टके जुहोति ŚatBr. IX. v. 1.57; चात्वालेभ्यश्चतुर्भ्यस्तु समूह्योऽग्निरनिष्टकः MānŚS. 230.24; एतदनिष्टकम् ··· आयतनम् EI. xvii. 17.1; चरुसर्वौषधमनिष्टकम् SaṅkarKā. ii. 1.20 (Madras Ed.); चरुसर्वौषधमस्थण्डिलावयवत्वादनिष्टकम् SaṅkarKāBh. 60.20 (*on* ii. 1.20); **ii** not having the (form of) bricks अमृन्मयीभिरनिष्टकाभिर्न संख्यां पूरयेत् BaudhŚuS. 2.39; **iii** (ániṣṭa-kā) not having oblations तस्मादिष्ट्वैव पशुनेष्टकाः कुर्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्ति ŚatBr. VI. ii. 1.10; *m.* one of the six divisions of the Kauthumas कौथुमानां षड् भेदा भवन्ति। तद्यथा। सारायणीयाः। वातरायणीयाः। वैतधृताः। प्राचीनास्तेजसाः। अनिष्टकाश्चेति AVPari. 49(3).3.

²**अनिष्टक** (aniṣṭa-ka) *adj.* causing harm, harmful रक्तं स्यात् ··· अस्कन्द्युष्णं मक्षिकाणां पिपीलानामनिष्टकम् ŚārṅgaS. iii. 12.9; शुभगन्धो भवेद् वाजी ···। अनिष्टे चैव गन्धे च सर्वमेतदनिष्टकम् AśvaVai. 3.178.

**अनिष्टकण्टकादिज्ञान** (aniṣṭakaṇṭakādi-jñāna) *n.* knowledge that a thorn etc. causes harm दुःखं प्रति तु अधर्मः, अनिष्टकण्टकादिज्ञानम् Upask. 421.11 (*on* i. 1.6)

**अनिष्टकथन** (aniṣṭa-kathana) *n.* statement of what is undesirable परस्यानिष्टकथनमतिशोकं च वर्जयेत् BhaviP. 116A.10 (i. 65.23); करणाकरणयोरिष्टानिष्टकथनादिरूपार्थवादस्य फलमात्राधिक्यादुपक्रमादिभ्यः प्राबल्यम् TattvPrakā. 11B.10 (*on* i. 1.4)

**अनिष्टकर** (aniṣṭakar-a) *adj.* **i** causing evil or harm, harmful परुषमूर्तिरनिष्टकरोऽनलः YogYā. 8.10; एतेऽनिष्टकराः क्वाथा न दोषशमनाय च HārīS. iii. 1.55; **ii** causing what is unpleasant (आदानमप्रियकरम् ··· अर्थानाम्) अर्थानां द्रव्याणाम्। आदानं ग्रहणम्। अप्रियकरम् अनिष्टकरम् VīraMi. (Rājanīti.) 411.5.

**अनिष्टकरण** (aniṣṭa-karaṇa) *n.* act of causing harm शत्रोरुद्योगरोषाभ्यामनिष्टकरणं तथा TantrRā. 18.72; परस्परोपघातमन्योऽन्यमनिष्टकरणम् ··· न मर्षयेत् DaṇḍaVi. 266.15; शत्रोरनिष्टकरणान्निवृत्तिश्शत्रुनाशनम् ŚukraNī. 4(5).3.

**अनिष्टकर्तृ** (aniṣṭa-kartṛ) *adj.* evil-doer किमेतेऽनिष्टकर्तारस्तुद्यन्तेऽहर्निशं नराः MārkP. 14.13.

**अनिष्टकर्मन्** (aniṣṭa-karman) *m.* name of various kings चतुर्विंशत्तु वर्षाणि पटुमांश्च भविष्यति। भवितानिष्टकर्मा तु वर्षाणां पञ्चविंशतिम् BrahmāṇḍP. ii. 74.164; मेघस्वातिश्चिबिलकादटमानस्तु तस्य च। अनिष्टकर्मा ··· आत्मजः BhāgP. xii. 1.25; *n.* evil action तस्माच्छ्रेयोऽर्थिनः पुंसः प्रेरकोऽनिष्टकर्मणि BṛĀraUBhVā. i. 4.1812.

**अनिष्टकल्पत्याग** (aniṣṭakalpa-tyāga) *m.* abandonment of the undesired alternative अनेकविकल्पस्फुरणेन विकल्पयतोऽनिष्टकल्पत्यागेन प्रतिज्ञाहानिः TārkiRa. 357.3.

**अनिष्टकष्ट** (aniṣṭa-kaṣṭa) *adj.* who does not like sufferings हा हन्त तात। गुरुमेनमनिष्टकष्ट कष्टामिमामनुभवन्तमुपेक्षसे किम् RāmC. (App. 2) 37.8.

**अनिष्टकष्टसूचक** (aniṣṭakaṣṭa-sūcaka) *adj.* indicative of undesired sufferings अनिष्टकष्टसूचकानि ···। अचिन्तयन्निमित्तकानि ··· स नासरः ĀnandRa. 7.35 (? 36)

**अनिष्टका** (án-iṣṭakā) *f.* non-brick अनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्ति ŚatBr. VI. ii. 1.10.

**अनिष्टकारक** (aniṣṭa-kāraka) *adj.* **i** indicative of what is inauspicious निद्रां वा कुरुते यस्तु स दूतोऽनिष्टकारकः HārīS. ii. 8.12; **ii** bringing about what is undesirable मिथ्याद्वेषी विपक्षः स्यादिष्टहानिष्टकारकः UjjvaNīMa. 241.7.

**अनिष्टकारण** (aniṣṭa-kāraṇa) *n.* cause of evil नापि सर्वनियन्तुः कुतश्चिदनिष्टकारणम् ŚivārkaMaDī. ii. 49.24 (*on* ii. 1.35)

**अनिष्टकारणता** (aniṣṭakāraṇa-tā) *f.* the state of being the cause of evil तदभावे चानुमानाद्यभावेनेष्टानिष्टकारणताज्ञानं नोत्पद्येत NyāySu.(Ja.) 490B.11 (*on* iii. 2.1)

**अनिष्टकारित्व** (aniṣṭakāri-tva) *n.* the state of being that which causes harm अनिष्टकारित्वं यथा–कुतः पद्मे ··· भवती धावतु रुषा UjjvaNīMa. 242.6.

**अनिष्टकारिन्** (aniṣṭakār-in) *adj.* [*f.* -iṇī] **i** causing harm or evil अनिष्टकारिणः सत्त्वान् ··· निर्दग्धांश्च विचिन्तयेत् KulārT. 16.132; ततो मूर्च्छागतस्यास्य पापिनोऽनिष्टकारिणः···बुद्धिः सद्यः समुत्पन्ना SkandP. i(1).18.57; येऽनिष्टकारिणस्तान्सर्वान् हनिष्यामि GītāBh.(Rā.) 612.19 (*on* 16.18); अनिष्टकारिणमसौ ··· निशाचरपतिम् ··· जघान RāghPāṇ.(Ka.) 1.91; **ii** bringing about misfortune, indicative of misfortune महाराज, ज्ञायत एतत्। यदनिष्ट-

कारिणी त्रिस्तनी कन्या भवति Pañcā. 285.9; अयं दुःस्वप्नः तवानिष्टकारी SimhāDvā. 172.11(1); **iii** doing what is not liked (i. e. acting against the will) प्रतिकूला भर्तुरनिष्टकारिणी VīraMi. (Saṁskāra.) 871.22.

**अनिष्टकार्योत्पत्ति** (aniṣṭakāryotpatti) *f.* **i** origination of an undesired result उत्पत्तिलक्षणस्य संसर्गस्यायोग्यत्वम् ··· इष्टसाधनतया निश्चितात् कारणादनिष्टकार्योत्पत्तिभिः (इत्यत्रैकशेषघटित एकशेषो बोध्यः) RasGaṅ. 596.7; न इष्टकार्योत्पत्तिरनिष्टकार्योत्पत्तिः सा चेत्यनिष्टकार्योत्पत्ती। ते च अनिष्टकार्योत्पत्तिश्च अनिष्टकार्योत्पत्तयः ताभिरिति। अनेनेष्टकार्यानुत्पत्त्यनिष्टकार्योत्पत्ती मिलिते एको भेदः RasGaṅ. 597.5; **ii** (an-iṣṭakāryotpatti) non-origination of the desired result, RasGaṅ. 597.5.

**अनिष्टकुष्ठ** (aniṣṭa-kuṣṭha) *m.*, *n.* undesirable leprosy 'अनिष्टकुष्ठद्रवद्रुतचरणनख चण्डमयूख, न प्रभुः प्रसभपुण्यप्रभावलभ्यसंभोगायाः करसंवाहनसुखानाम्' इति हरितवाहवाहनम् ··· अनभिनन्दन्ती YaśasCam. i. 84.5.

**अनिष्टकृत्** (aniṣṭa-kṛt) *adj.* **i** causing harm धेनुकारिष्टहानिष्टकृद्द्वेषिणाम् ··· बालगोपालकः पातु मां सर्वदा AcyutA. 6; क्षतादिकर्ता एषामपकारकोऽनिष्टकृत् DaṇḍaVi. 301.7; **ii** causing pain निशम्य कृपणस्यार्तं क्रन्दितं तदनिष्टकृत्। बभूव तस्य स्वात्मापि नानिग्राह्यो महात्मनः RājTa.(Ka.) 8.52.

**अनिष्टख्यातृ** (aniṣṭa-khyātṛ) *adj.* telling what is unpleasant or disagreeable कशाता न हि प्राजितुमप्यनिष्टख्यातारम् ··· सः DvyāśraKā. 10.11.

**अनिष्टगज** (aniṣṭa-gaja) *m.* harmful or vicious elephant नीलतालुर्नीलजिह्वो वक्रदन्तो ह्यदन्तकः। दीर्घद्वेषी क्रूरमदस्तथा पृष्ठविधूनकः। दशाष्टोननखो मन्दो भूविशोधनपुच्छकः। एवंविधोऽनिष्टगजो विपरीतश्शुभावहः ŚukraNī. 4(7).33.

**अनिष्टगतद्वेषापेक्षा** (aniṣṭagatadveṣāpekṣā) *f.* [Inst.] in comparison with the aversion towards an evil effect यदानिष्टगतद्वेषापेक्षयेष्टगतरागस्योत्कटत्वरूपं बलवत्त्वं तदा सामग्रीसंपत्तिः MīmāKau. ii. 370.19 (*on* iii. 3.14)

**अनिष्टगन्ध** (aniṣṭa-gandha) *m.* undesired or bad smell इष्टश्चानिष्टगन्धश्च ··· एवं दशविधो ज्ञेयः पार्थिवो गन्धः MahāBhā. xiv. 49.42; भवति हि जलदोषोऽनिष्टगन्धस्सुगन्त्रः KalyāKā. 5.10; (हस्तिनी) अनिष्टगन्धा(द्रा) परिक्लिश्यमाना ··· दुःखेन परिक्रामति Hastyāyur. 265.10 (2.49); मौनी ··· सुलिप्ते अनिष्टगन्धशब्दवर्जिते गृहे दक्षिणपार्श्वे पुष्पकरण्डकम् ··· आसाद्य VīraMi.(Āhnika.) 383.4.

**अनिष्टगन्ध** (an-iṣṭagandha) *adj.* [*f.* -ā] **i** not having favourite kindred or neighbours अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः। अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः CaraS. vi. 2(1).17; **ii** (aniṣṭa-gandha) having (i.e. emitting) a bad smell अनिष्टगन्धम् ···वर्ज्यम् ···क्षीरम् SuśruS. i. 45.64; BhojanKu. 131.4; माधुर्यमास्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः।··· अनिष्टगन्धो मेदःकृतो नीरुगथातिकण्डूः SuśruS. ii. 11.26; RugVi. 38.6; वदनमेतदनिष्टगन्धम् ŚatTrayī. 657; अनिष्टगन्धम्।··· शरीरं शुचिविप्रहीणम् VarāṅgaC. 8.62; ततो बिन्दुनिष्पातादनिष्टभूमावनिष्टगन्धमम्लरसोनमूलं लघुशीघ्रविपाकि ··· रसोत्तमममृतसंभवं ब्रुवन्त्याचार्याः Hastyāyur. 687.15 (4.28); यद्रक्तरेतोमलवीर्यमङ्गं मांसं तदुद्भूतमनिष्टगन्धम्। यद्यश्नुतेऽमेध्यसमं न दोषं तर्हि SubhāRaSaṁ. 546; 746; तक्रं त्वजाविप्रभवं न सेव्यमनिष्टगन्धं त्रिषु चाप्यपथ्यम् BhojanKu. 144.4; अदुष्टसलिलाभावे वाप्यं यत् स्यात् ··· पुष्पैरनिष्टगन्धस्य पाटलाद्यैश्च वासनम् BhojanKu. 190.16.

**अनिष्टगन्धता** (aniṣṭagandha-tā) *f.* the state of having (i. e. emitting) a bad smell अनिष्टगन्धता गन्धदोषः SuśruS. i. 45.11; यदेतद्द्रव्यं रसोननामामृतमिहोपदिष्टं तस्योत्पत्तिनिरुक्तानिष्टगन्धताम्···मे व्याख्यातुमर्हसि Hastyāyur. 687.11 (4.28); कुर्यादनिर्हृतं तद्धि (अन्नम्) मुखस्यानिष्टगन्धताम् BhāvPra. (Bhā.) 5.170; BhojanKu. 218.16.

**अनिष्टगन्धद्रवण** (aniṣṭagandha-dravaṇa) *adj.* emitting a bad or foul smell तमोगृहे पूतिकचर्मसंवृते ··· अनिष्टगन्धद्रवणे ···। अनात्मवश्यस्य सहस्रसंगुणा गता निशा सा VarāṅgaC. 13.57.

**अनिष्टगन्धिक** (aniṣṭagandhi-ka) *adj.* foul-smelling, stinking रूक्षम् ··· संकीर्णानिष्टगन्धिकम्। देशम् ··· वर्जयेच्छ्राद्धकर्मणि। ··· अनिष्टगन्धिकं पूतिगन्धिकम् SmṛtiCan. v. 144.9; VīraMi.(Śrāddha.) 139.27.

**अनिष्टगन्धिन्** (aniṣṭagandh-in) *adj.* [*f.* -ī] foul-smelling, stinking नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम्। अनिष्टगन्धि विरसमहृद्यं च विदाहि च SuśruS. i. 45.193; अदण्डनार्हम् ··· ईश्वरम् ··· दस्यवः। पुलीन्द्रपल्लीम् ··· प्रवेशयामासुरनिष्टगन्धिनीम् VarāṅgaC. 13.50.

**अनिष्टगात्रेन्द्रियसौख्य** (aniṣṭa-gātrendriyasaukhya) *n.* undesirable pleasures of the body and sense-organs गृहेशाः ···। अपात्रदानाच्च कुमानुषाणामनिष्टगात्रेन्द्रियसौख्यभोगाः।··· भवन्ति VarāṅgaC. 7.48.

**अनिष्टगृह** (aniṣṭa-gṛha) *m.*, *n.* inauspicious house or the zodiacal sign व्यत्यस्तमस्माद्विपरीतभावेऽथेष्टर्क्षतोऽनिष्टगृहं प्रपन्नः। अभूच्छुभं प्रागशुभं त्विदानीम् TājiNī. 1(2).23(103)

**अनिष्टगेहवत्** (aniṣṭageha-vat) *adv.* like an inauspicious house अहं संसारकान्तारं विमुच्यानिष्टगेहवत्।··· भविष्यामि च निर्ममः MalliC. 5.216.

**अनिष्टगेहस्था** (aniṣṭagehasth-ā) *adj.* (*f.*) occupying an inauspicious sign of the zodiac or astrological mansion वर्षेऽप्यनिष्टगेहस्था यद्भावे जनुषि स्थिता। क्रूरोपघातात्तं भावं नाशयेत् TājiNī. 2(2).21(200)

**अनिष्टघटकत्व** (aniṣṭaghaṭaka-tva) *n.* the state of being that which contains an undesired constituent (suffix) यद्यप्यनन्तरेऽणादीष्टमेव तथाप्यनिष्टघटकत्वात् सोऽप्यनिष्टः LaŚabdeŚe. ii. 202.6.

**अनिष्टघ्राण** (aniṣṭa-ghrāṇa) *n.* smelling of foul odour अथोपरमम्। (अध्ययनस्य) ··· अनिष्टघ्राणे ŚāṅkhāGS. iv. 7.27.

**अनिष्टचिन्तन** (aniṣṭa-cintana) *n.* thinking of what is harmful or evil परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्।··· कर्म मानसम् ManuSm. 12.5 (Bh. परवधोपायचिन्तनम्, ManvaVi. पराभिघातचिन्तनम्); SkandP. i(2).41.18; ŚivaP. v. 5.3 (411A.4); दामनस्यं (? दौर्मनस्यम्) हीत्यनिष्टचिन्तनादिकैः परिकल्पविशेषैरुत्पाद्यते Sphuṭā. ii. 17.19 (*on* 2 10); यदि स्वतन्त्रं मनः प्रवृत्तिनिवृत्तिविषये स्यात्तर्हि सर्वस्यानिष्टचिन्तनं न स्यात् KenUBh. 31.3 (*on* 1.1); मनसानिष्टचिन्तनम् ···। एतैर्दशविधैः पापैः ··· मुच्यते SkandP. iv. 27.154; न कुर्यात् शयनात् पूर्वमनिष्टचिन्तनं नरः BṛDharmaP. ii. 6.10; अनिष्टचिन्तनं परापकारचिन्तनम् DīpKa. 87.14 (*on* 3.134–136)

**अनिष्टचिन्ता** (aniṣṭa-cintā) *f.* thinking of what is evil अनिष्टचिन्ता नो कार्या व्रतिना हृद्यपि क्वचित् SkandP. iv. 60.86.

**अनिष्टच्युति** (aniṣṭa-cyuti) *f.* removal of harm विधिं निषेधं च निवेदयत्यसौ। गुरोरनिष्टच्युतिरिष्टसंभवः ŚaṅkaDigVi.(Mā.) 10.100.

**अनिष्टजन** (aniṣṭa-jana) *m.* disliked person अविषह्यं हि योषितामनङ्गशरनिषङ्गीभूतचेतसामनिष्टजनचिरसंवासयन्त्रणादुःखम् DaśKuC. 71.5.

**अनिष्टजनसंभोग** (aniṣṭajana-sambhoga) *m.* sexual intercourse with a disliked person जननीलोभदोषादनिष्टजनसंभोगपरिक्लिष्टयानया भवितव्यम् Ubhayābhi. 4.23; 5.5.

**अनिष्टजिज्ञासा** (aniṣṭa-jijñāsā) *f.* curiosity about what is undesirable इष्टसंशयोऽनिष्टजिज्ञासा वा विषादः RasTa. 92.3.

**अनिष्टज्ञान** (aniṣṭa-jñāna) *n.* knowledge of what is undesirable न तथा ज्ञानं सति कारणे पुरुषेच्छामप्यपेक्षते। अनिच्छतोऽपि अनिष्टज्ञानादिदर्शनात् PrakaVi. 2.13; सर्वत्र ज्ञानस्य पुष्कलकारणम्। अनिच्छतोऽप्यनिष्टज्ञानदर्शनात् NyāySu.(Ja.) 24A.9 (*on* i.1.1)

**अनिष्टतम** (aniṣṭa-tama) *adj.* most undesirable तेषु (परिवाराभिमानिषु) स्वातन्त्र्यमेवानिष्टतमम्, पारतन्त्र्यं त्विष्टतममेव दृश्यते ŚatDū. 156.13.

**अनिष्टतमत्व** (aniṣṭatama-tva) *n.* the state of being the most undesirable अयोग्यानां प्रथममुपादानं योग्यानामकथनादपि तत्कथनस्यानिष्टतमत्वात् GītāBh.(Rā.) 691.26 (*on* 18.69)

**अनिष्टतर** (aniṣṭa-tara) *adj.* [*f.*-ā] more undesirable, more harmful or evil न च तमोमयजन्म विमुक्तता न हि तदिष्टमनिष्टतरं हि तत् SaṁkṣeŚā. 4.36 (ii. 380.2); सत्पुरुषगोष्ठीं विषादव्यनिष्टतरां परिगणयतः (मारिदत्तस्य) YaśasCam. i. 43.2 (comm. विद्वेषकराम्)

**अनिष्टतस्** (aniṣṭa-tas) *adv.* **i** out of evil औद्भिज्जा जन्तवः केचित् ···। अनिष्टतः संभवन्ति MahāBhā. xii. 134.8; **ii** on account of not being desired हेयत्वादप्रियस्यैव प्रियहानेरनिष्टतः। न समस्तप्रियाभावो मोक्षे प्रोक्ते तु युज्यते AnuVyā. 70A.1 (*on* 4.2)

**अनिष्टता** (aniṣṭa-tā) *f.* **1** the state of being undesirable, undesirability रागतः पुरुषो हनने प्रवर्तमानस्ततो निवर्तते, स यदि हननस्यानिष्टतां नावगच्छति, ततः किमिति निवर्तेत इति विधेः प्रामाण्यम् TātpaṬ.(U.) 188.20 (*on* 5(0).15); इष्टतया किमनिष्टतया इच्छया किमनिच्छया युध्यत इति ज्ञापकेङ्गितादिरूपा चेष्टा RājNīRa. 37.13; यातनायाः साध्यत्वावगमेऽपि तस्या अनिष्टतया फलत्वासंभवात् MayūMāli. 269.2 (*on* iii. 4.10); तृतीये तु विरोधोऽनिष्टता च GoviBh. 133.7 (*on* ii. 2.32); **2** the state of not being acceptable तर्कः ··· पञ्चधा ···। विश्रान्तिवैपरीत्ये प्रतिहतिविरहोऽनिष्टतानानुकूल्यं व्याप्तिश्च TattvMu. 4.60.

**अनिष्टताति** (aniṣṭa-tāti) *adj.* [P. iv. 4.143] causing harm, harmful सः ··· इष्टतातिर्विधेयानाम्, अनिष्टतातिर्दुर्विनीतानाम् ··· वेत्रपुरम् अध्यवसत् ĀnandRa. 2.40(12)

**अनिष्टताव्यक्त्यर्थम्** (aniṣṭatāvyaktyartham) *adv.* for the sake of clarification of the undesirability (तर्कस्य) विपर्ययपर्यवसानवाक्यं तु तृतीयोऽवयवः। स नावश्यं वक्तव्यः। मन्दस्य त्वनिष्टताव्यक्त्यर्थमुच्येतापि NyāyPari. 340.1;

[1]**अनिष्टत्व** (aniṣṭa-tva) *n.* **1** the state of being undesirable, undesirability, not being approved अस्तेयार्थमिति चेन्नानिष्टत्वात् Vār. 2 *on* P. iii. 3. 58; अमनुष्ये मनुष्यस्थे ष्फगणोज्ञापकमिति चेन्नानिष्टत्वात् Vār. 2 *on* P. iv. 2. 100; Vār. 3 *on* P. iii. 3.136; आत्मोच्छेदस्य चानिष्टत्वादफलत्वम् BrahmSi. 120.11; न च मेय एवाभावः स्वज्ञानहेतुः, अभावान्तरेष्वदृष्टत्वादनिष्टत्वाच्च IṣṭaSi. 7. 22; एवं चेदेवं स्यान्नैवमिति प्रसञ्जनीयस्यानिष्टत्वमुक्तं द्विविधम् TārkiRa. 187.6; शयशब्दवाच्यस्य पाणेर्भावित्वेन प्रस्तुतत्वेऽपि सूचनीयत्वेन साक्षाद् वक्तुमनिष्टत्वादतुल्यकक्ष्यत्वे व्यङ्ग्यत्वमेव AlaṅkāRa. 44(122); वैशेषिकेणाभ्युपगतस्याप्याकाशगुणत्वादेर्न साध्यत्वम्, तदा साधयितुमनिष्टत्वात् PramāMī. 45.23 (*on* i. 2. 13); सुकृतहानिः ··· नोपपद्यते, अनिष्टत्वात् VedāntKau. 322. 14 (*on* iii. 3.29); 393.5 (*on* iv.1.14); अनिष्टत्वाद् गमनस्य विधिः प्रस्खलद्रूपः SāhiDa. 588. 11; निवृत्तेर्निवृत्तिरयुक्तेति चेन्न। अत एवानिष्टत्वे न तव तदापादनात् Nyāyāmṛ. 633B. 4; अनिष्टत्वे नियामकमाह YuktiSneha. 45. 31 (*on* i. 1.5); क्वौ नलोपस्यानिष्टत्वात् Prasā. ii. 318. 15; अनवधिकदुःखरूपस्य मरणस्य सर्वथा अनिष्टत्वेन ··· न यजमानस्य कामः संभवतीति स्वर्गकामविधेरयमर्थवाद एव BhāṭṭCan. 115.21 (*on* xvi. 3. 5); अनिष्टत्वेऽपि घटप्रकारककर्मत्वविशेष्यकशाब्दबुद्धिं प्रति घटार्थकपदोत्तरकर्मत्ववाचकविभक्तिजन्योपस्थितिर्हेतुः VaiyāBhū. 172. 3 (*on* 32); LaŚabdeŚe. ii. 374.15; ii. 380.15; **2** unacceptability, inappropriateness अत्र वस्तुन्यागमोऽनुमानं वा प्रमाणं स्यात्, न तावदागमः, नित्यस्य भवद्भिरेवानिष्टत्वात् TātpaṬ.(U.) 79. 20 (*on* 2. 142); न तावद् रूपयोस्तद्वतश्च भिन्नाभिन्नत्वं साक्षात्, अन्यत्रापि तथाप्रसङ्गादनिष्टत्वाच्च IṣṭaSi. 21. 2; 115. 2; ध्वनिमात्रोपादाने शङ्खादिध्वनीनां स्फोटाभिव्यञ्जकत्वस्य परैरनिष्टत्वादंशे सिद्धसाध्यत्वं स्यात् NyāyRa. 543. 10 (*on* 5(11). 131); विद्यानुगुणस्य तु ··· शरीरपातादूर्ध्वमनिष्टत्वादश्लेषः VedāntDī. 225. 8; (*on* iv. 1. 14); अथ रूपादिपरावृत्तिमात्रेणैवाग्निः साध्यते तदशक्यम्।··· अतादृशस्य तेजोमात्रस्य निवृत्तेरशक्यत्वादनिष्टत्वाच्च Kiraṇā. 101. 6; न च महावाक्येऽवान्तरवाक्यं प्रमाणम्, संभवति च एकवाक्यत्वे वाक्यभेदस्य अनिष्टत्वात् SaṅkarKāBh. 18. 10 (*on* i. 2.18); न पृथक्त्वेन पृथिवीत्वमुपेयते ··· स्वाश्रयान्न विधर्मकम्। निरस्तत्वादनिष्टत्वात् TarkSaṁ.(Ā.) 26. 27; 52. 17; 63. 19; विध्युपयोगस्यापि पूर्वपक्षिणोऽनिष्टत्वात् साध्यसाधनेतिकर्तव्यतान्वितभावनाप्रतिपादकपदसमूहपरो विधिशब्दः NyāySu.(So.) 3. 26 (*on* i. 2.1); अनिष्टस्यानिष्टत्वादेव विधिर्बाधितः Ekāva. 8.32(1) (275.4); वेदनस्यानिष्टत्वे विविदिषाप्यनिष्टैव स्यात् ŚatDū. 64. 26; शब्दवदेव तेनैव वटोऽपि निरवयवः स्यादित्युत्कर्षः शक्यः समं चोभयत्रानिनष्टत्वम् (? त्रानिष्टत्वम्) NyāyPari. 244.8; वैपरीत्यस्यानिष्टत्वाच्च शमादीनां महोदयः VedāntKau. 369.5 (*on* iii. 4. 27); सर्वशब्दानां मुख्यवृत्त्या परमात्मैकवाचित्वे··· तस्य चानिष्टत्वान्न परमात्मैव मुख्यतः सर्वशब्दवाच्यः TattvPrakā. 72B.13 (*on* i. 4.16); नापि फलान्तरार्थम् ··· ज्ञानिनोऽनिष्टत्वात् Nyāyāmṛ. 645A.9; सिद्धान्तिनोऽप्यनिष्टत्वात् ŚivārkaMaDī. ii. 76. 7 (*on* ii. 2. 14); अजसंयोगस्यानिष्टत्वात् पतित्वानुपपत्तिः AṇuBh. 138. 2 (*on* ii. 2. 38); (राज्ञः) परमन्दिरे प्रवेशो युक्तो नैषामनिष्टत्वात् KandaCū. v. 5.35; यत्र साकाङ्क्षपदाद् न प्रकृतवाक्यार्थघटकस्य कस्याप्यर्थस्योपस्थितिस्तत्र शाब्दबोधोत्पत्तेरनिष्टत्वात् ŚaktiVā. 219.6; अनिष्टत्वात् अनपेक्षितत्वात् VīraMi.(Śrāddha.) 118.1; प्रसञ्जनीयस्य चानिष्टत्वं प्रसिद्धम् MānaMe. 36.3; अर्थात् परतो द्वितीयनामसमाप्त्यापत्तेश्छन्दःसूत्रविरोधेन तस्यानिष्टत्वात् LalitāSaBh. 41. 30 (*on* 74)

[2]**अनिष्टत्व** (aniṣṭa-tva) *n.* the state of not being offered or not honoured with offerings प्रतिगृ(? ग्र)हीतृत्वाख्यस्य हि देवतासंबन्धस्य नवमे निषेत्स्यमानत्वेनानिष्टत्वात् ··· देवतायास्स्वीकाराख्यस्संबन्धो वाच्यः MīmāKau. ii. 284. 8 (*on* iii. 2. 30)

**अनिष्टत्वख्यापन** (aniṣṭatva-khyāpana) *n.* indication of undesirability सर्वं शास्त्रम् ··· व्यर्थीभविष्यति।··· प्रसङ्गस्यानिष्टत्वख्यापनायाभूततद्भावार्थस्य च्वेः प्रयोगः NyāySu.(Ja.) 61B.4 (*on* i. 1.1)

**अनिष्टत्वमात्र** (aniṣṭatva-mātra) *n.* mere undesirability यत् किंचिद् विषयवैमुख्यमात्ररूपम्, उत निषिद्धवैमुख्यरूपमिति।··· उत्तरत्रापि तन्निषिद्धवैमुख्यं किमनिष्टत्वमात्रात्, उत शास्त्रसिद्धानर्थहेतुत्वाध्यवसायेन ŚatDū. 233. 10.

**अनिष्टत्वसंभव** (aniṣṭatva-sambhava) *m.* possibility of undesirability स्वीकारस्यापि परित्यागपदार्थान्तर्भावे स्वीकृतेति व्यर्थं, तत्त्यागेऽपि च नाद्यद्वितीयौ अस्तित्वेनेष्टस्य रूपान्तरेण सर्वत्रैवानिष्टत्वसंभवात् KhaṇḍanKhā. 960.21.

**अनिष्टत्वसाम्य** (aniṣṭatva-sāmya) *n.* sameness with regard to undesirability मुमुक्षोर्मोक्षविरोधित्वेनानिष्टत्वसाम्यादश्लेषविनाशौ समानावेव VedāntDī. 225.5 (*on* iv. 1. 14)

**अनिष्टत्वहृद्** (aniṣṭatva-hṛd) *n.* intention of undesirability घ्राणादिभोगाभावस्य त्वनिष्टत्वहृदा श्रुतिः AnuVyā. 70A. 7 (*on* 4. 2)

**अनिष्टत्वादिधर्म** (aniṣṭatvādi-dharma) *m.* properties such as undesirability etc. ज्ञानस्यानिष्टत्वादिधर्माद् विलक्षणं ज्ञानस्येच्छाविषयत्वादिकम् LaCandr. 873. 35.

**अनिष्टत्वाद्यविशेष** (aniṣṭatvādy-aviśeṣa) *m.* non-difference with regard to unacceptability etc. न च साधनशक्त्यैवोत्कर्ष इति राजाज्ञा साध्यशक्त्यापि तदविरोधात्। अनिष्टत्वाद्यविशेषाच्च NyāyPari. 244. 4.

**अनिष्टत्वापात** (aniṣṭatvāpāta) *m.* contingency of undesirability इह चिन्मात्रं मुक्तं स्यादितीच्छायाः कदाप्यदर्शनेन मुक्तेरनिष्टत्वापाताच्च Nyāyāmṛ. 383A. 9.

**अनिष्टत्वापादन** (aniṣṭatvāpādana) *n.* causing undesirability कोऽयं प्रसङ्गो नाम। प्रमाणप्रसिद्धव्याप्तिकेन वाक्येन परस्यानिष्टत्वापादनाय प्रसञ्जनं प्रसङ्गः TarkBhā.(Mo.) 26.29.

**अनिष्टत्वाभाव** (aniṣṭatvābhāva) *m.* absence of not being desired पुण्यकर्मफलस्य सुखरूपत्वेन विदुषोऽनिष्टत्वाभावात् VedāntDī. 225.4 (*on* iv. 1. 14); न च गुणजात्योरेव मिथो विशेषणत्वम्, तथा अप्रतिपत्तेः। तथात्वे चानिष्टत्वाभावात् NyāyKu. 141. 5; यदीश्वरो नेच्छावान् स्यात् तदा श्रुतिमहातात्पर्यविषयो न स्यादित्यत्र व्याप्त्यभावात्।··· आपाद्यस्यानिष्टत्वाभावाच्च NyāySu.(Ja.) 310B.2 (*on* ii. 1.9)

**अनिष्टत्वाविशेष** (aniṣṭatvāviśeṣa) *m.* non-difference in respect of not being given offerings स्वाहा देवा आज्यपा जुषाणा इति ··· अनिष्टानामनूयाजदेवतानामेवेदं कीर्तनम्।··· अस्तु वानिष्टत्वाविशेषेणोत्तमप्रयाजदेवताया अष्टा(? त्रा)भिधानम् BhāṭṭCan. 117.21 (*on* xvi. 3.10)

**अनिष्टद** (aniṣṭad-a) *adj.* [*f.* -ā] causing evil or harm, ominous चलनं विधिपूर्वं तु कृतं नानिष्टदं भवेत् PauṣkS. 37.32; उल्का ···। उत्तरदिगादिपतिता विप्रादीनामनिष्टदा रूक्षा BṛSaṁ. 33.15; 33. 26; NāraS. 43. 25; द्रव्यमूर्तिगतानां च संचारः स्यादनिष्टदः PāraS. 11. 337; सर्वत्र प्रचुरग्रन्थि दारु सर्वमनिष्टदम् SamarāSū. 29.36; शशिनन्दनः। प्राकृतायां गतौ सस्यक्षेमारोग्यसुवृष्टिकृत्। मिश्रसंक्षिप्तयोर्मध्ये फलदोऽन्यास्वनिष्टदः NāraS. 2(4).14; 43. 17; रात्रिमुहूर्तास्त्वजपाद्रौद्राग्नेयाख्ययाम्यसंज्ञाश्च। क्रूरताश्चत्वारस्त्वनिष्टदाः VasiS. 17. 8; शाखामृगैः ··· जुष्टा यष्टुरनिष्टदा निगदिता ··· मही TantrSa. 1. 42; ŚilpaRa. i. 3. 8; अनिष्टदः क्षितीशानां भूकम्पः संध्ययोर्द्वयोः। दिग्दाहः पीतवर्णत्वाद् राज्ञां चानिष्टदः परः SiṁhāDvā. 19.1; दुरितमनिष्टदं विदधतः प्रतिषेधविधेः NayaMañ. IV. i. 9. 16.

**अनिष्टदर्शन** (aniṣṭa-darśana) *adj.* whose sight is ill-ominous or harmful युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्थचेतनः। अनिष्टदर्शनान् घोरानुत्पातान् परिचिन्तयन् MahāBhā. iii. 176. 40; स्वप्ना हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः MahāBhā. iii. 264.61; अनिष्टदर्शनं दृष्ट्वा धृष्टद्युम्नमवस्थितम्। क्षणेनैवाभवद् द्रोणो नातिहृष्टमना इव MahāBhā. vii. 19.26; अनिष्टदर्शनः ··· आजगाम ··· गोलाङ्गूलः UdaySuKa. 139.2; 'चोरान् पश्यति' इति ··· विषयेन्द्रियसंबन्धाद् दृश्यमानाः ··· अपि तु अनिष्टदर्शना एव LaŚabdeŚe. i. 454.6; *n.* **i** sight of what is undesirable or inauspicious अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् NāṭyaŚā. 8.116; किमयं दुरात्मा चिकीर्षति (v. l. कथमद्य प्रातरेवानिष्टदर्शनम्) PañcT. 2. 1(11) (183. 1); Hitopa. 1.1(6); अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः DaśRū. 4. 13; Kāvyānu.(He.) 106. 4; SāhiDa. 149.7; RasGaṅ. 113.18; सर्वे ···। अनिष्टदर्शनालापसंगत्या परिवर्जिताः SkandP. v(1). 6.24; क्षोभः। अनिष्टदर्शनात् तारतम्यम् NāṭaLaRaK. 1760; 2048; जाड्यम् ···। अनिष्टदर्शनात् RasāSu. 122. 6 (2. 63); इष्टानिष्टदर्शनं च (सुखदुःखयोः) द्वयोर्निमित्तकारणम् SarvaDaKau. 28.5; जडता ···। तद्विभावाः प्रियानिष्टदर्शनश्रवणे रुजा RasGaṅ. 113.23; **ii** seeing as undesirable भञ्जीकृतानि धान्यानि व्रीहयो यवतण्डुलाः।··· गृहे यस्य प्रजायन्ते तस्य मृत्युर्न संशयः।··· इष्टेष्वनिष्टदर्शनम्।··· भवेदेषु BhaviP. 409A. 19 (ii(3). 20.61)

**अनिष्टदर्शनरूपव्यापक** (aniṣṭa-darśanarūpavyāpaka) *adj.* unacceptable pervader in the form of seeing स्वयमनिष्टदर्शनरूपव्यापके स्वयं व्याप्यतयेष्टेनैव हि दर्शनयोग्येन घटसत्त्वेनाप्रसङ्गः KhaṇḍanKhā. 1280.15.

**अनिष्टदान** (aniṣṭa-dāna) *n.* gift to an unfavourable person हारीतः।··· यच्चापात्राय ददाति अनिष्टदानं श्र(? भ)वति।··· 'अनिष्टदानं' शत्रवे दानम् CaturCin. i. 19.1; 1.19.10.

**अनिष्टदायिन्** (aniṣṭadāy-in) *adj.* causing what is undesirable, harmful द्रुमाः ···। गृहकर्मणि नेष्टास्ते यतस्तेऽनिष्टदायिनः SamarāSū. 16.20.

**अनिष्टदुःखद** (aniṣṭaduḥkhad-a) *adj.* causing harm and sorrow अचोदितालंकरणमन्यच्चानिष्टदुःखदम् ĪśānŚiPa. ii. 35.32.

**अनिष्टदुष्टधी** (aniṣṭaduṣṭa-dhī) *adj.* having an evil and wicked mind विवशोऽरिष्ट(v. l. निष्ट) दुष्टधीः AbhidhāCin. 438; विवशः स्यादवश्यादौ त्रिलिङ्गोऽनिष्टदुष्टधीः AnekāK. 893; KośaKaTa. 2. 145.

**अनिष्टदुष्टमति** (aniṣṭaduṣṭa-mati) *adj.* having an evil and

wicked mind विवशः स्यादवश्यात्मानिष्टदुष्टमतिश्च यः AnekāSaṁ. 3. 720.

**अनिष्टदुष्टशब्दा** (aniṣṭaduṣṭa-śabdā) *adj.* (*f.*) having word(s) of the undesirable and wicked (persons) वर्ज्या जन्तुमती रूक्षा क्षितिः ···। अनिष्टदुष्टशब्दोग्रदुर्गन्धा चात्र कर्मणि MārkP. 32.20.

**अनिष्टदृष्ट** (aniṣṭa-dṛṣṭa) *adj.* whose sight is disagreeable त्वमष्टमूर्तिः ···। अनिष्टदृष्टश्च विमर्दकश्च स्तोष्ये ह नुत्यं कथमीदृशं त्वाम् ŚivaP. ii(5). 48. 46 (279B. 7)

**अनिष्टदेवता** (aniṣṭa-devatā) *f.* undesired or unintended deity इष्टदेवताप्रकाशनकार्यानुरोधेनानिष्टदेवताप्रकाशकपदानुच्चारणेऽपि न सूक्तवाकप्रातिपदिकश्रुतिविरोधः MīmāKau. ii. 253. 11 (*on* iii. 2.19)

**अनिष्टदेशज** (aniṣṭadeśaj-a) *adj.* arising in a disagreeable or inauspicious place इष्टे हि देशे भुञ्जानो नानिष्टदेशजैर्मनोविघातकरैर्भावैर्मनोविघातं प्राप्नोति CaraS. iii. 1.24(6) (1941 Ed.)

**अनिष्टदेह** (aniṣṭa-deha) *m.* undesirable body इष्टानिष्टदेहप्राप्तिः कर्मजं फलम् GītāBh.(Śaṅ.) 57.8 (*on* 2. 51)

**अनिष्टद्रव्यसंयुक्त** (aniṣṭadravya-saṁyukta) *adj.* possessed of undesirable material द्वारम् ···। अनिष्टद्रव्यसंयुक्तं धनधान्यविनाशनम् SamarāSū. 48. 59.

**अनिष्टद्वेष** (aniṣṭa-dveṣa) *m.* aversion to an undesirable or harmful object नित्यं तद्भक्षणेऽनिष्टोत्पत्तिर्नित्यं च अनिष्टद्वेषात् तन्निवृत्तिः BhāṭṭDī. iv. 99. 2 (*on* x. 8.1)

**अनिष्टधर्म** (aniṣṭa-dharma) *m.* unacceptable attribute or property साध्ये दृष्टान्तादनिष्टधर्मप्रसङ्ग उत्कर्षसमः NyāySū. 18.13; कस्याप्यानिष्टधर्मस्य वादिसाधनशक्तितः। दृष्टान्तात् पक्ष उत्कर्षं उत्कर्षसम उच्यते TārkiRa. 257.2; नापि विषयवत् मूर्तत्वाद्यनिष्टधर्मप्रसङ्गात् PrakaVi. 33.7.

**अनिष्टधी** (aniṣṭa-dhī) *adj.* wicked-minded करोम्येतत् करिष्यामि वदत्येवमनिष्टधीः। जनो विशति कालास्यम् PadmP.(Ra.) 117. 30.

**अनिष्टध्यान** (aniṣṭa-dhyāna) *n.* contemplation of what is undesirable वाचो गुप्तता रक्षा अनृतादिनिवर्तनात्, मनसोऽनिष्टध्यानादिनिवर्तनात् ManvaVi. 216. 7 (*on* 2.160)

**अनिष्टनक्षत्र** (aniṣṭa-nakṣatra) *n.* inauspicious constellation अनिष्टनक्षत्रादौ दानमुक्तम् NirṇaSi. 229. 22.

**अनिष्टनन्ती** (a-niṣṭanantī) *adj.* (*f.*) not groaning or crying aloud श्रुत्वा तु कुन्ती तद्वाक्यम् ···। अनिष्टनन्ती दुःखार्ता मनसा विममर्श ह MahāBhā. v. 142.10.

**अनिष्टनर** (aniṣṭa-nara) *m.* undesirable person (i. e. enemy) देव ··· अनिष्टनरनिग्रहोपकरणमहं ते मण्डलाग्रः UdaySuKa. 6. 13; अनिष्टनरकण्ठखण्डनखडत्कारनिबिडारवसूच्यमानलग्नक्षणः ··· बभूव ··· राजा मलयवाहनो नाम UdaySuKa. 22. 25.

**अनिष्टनव** (an-iṣṭanava) *adj.* who has not sacrificed with new grains (in the Āgrayaṇeṣṭi) नानिष्टनवस्याशितव्यम् इति अशनप्रतिषेधः SaṅkarKāBh. 125.16 (*on* iii. 1.21)

**अनिष्टनाशिन्** (aniṣṭanāś-in) *adj.* who destroys what is undesirable or harmful नमः कमलवासाय स्रेष्टा(श्रेष्ठा)यानिष्टनाशिने। पितामहाय शुद्धाय BṛBrahmaS. i. 1. 5.

**अनिष्टनिग्रह** (aniṣṭa-nigraha) *adj.* curbing what is evil अनिष्टनिग्रहाः क्षत्रा विप्रा स्वाध्यायजीविनः MahāBhā. xiii. App. I. 10(137)

**अनिष्टनिग्रहस्थान** (aniṣṭa-nigrahasthāna) *n.* undesirable clincher or ground of defeat निमित्तभेदाच्च तद्भेदे अनिष्टनिग्रहस्थानान्तराणामभ्यनुषङ्गः स्यात् PramāMī. 67.7 (*on* ii. 1.34)

**अनिष्टनिचय** (aniṣṭa-nicaya) *m.* heap or mass of evils तरन्त्यनेनानिष्टनिचयमित्योंकारस्तारः NyāySu.(Ja.) 9B. 5 (*on* i. 1. 1)

**अनिष्टनिरसन** (aniṣṭa-nirasana) *n.* warding off of what is undesirable यूयमिष्टप्रापणेनानिष्टनिरसनेन च पूजयितारं पूजयिष्यथ Mitā. 106. 15 (*on* 1. 307)

**अनिष्टनिराकरण** (aniṣṭa-nirākaraṇa) *n.* rejection of what is not the main goal ईप्सितग्रहणस्यानिष्टनिराकरणार्थत्वात् विरुद्धार्थानिराकृत इति न वक्तव्यम् NyāyVār. 119. 15 (*on* i. 1.33)

**अनिष्टनिर्णय** (aniṣṭa-nirṇaya) *m.* decision that something is undesired येष्विति बहुवचनेन वृत्त्युदाहरणबलेन चैष्वेवानिष्टनिर्णयः LaŚabdeŚe. i. 496. 12.

**अनिष्टनिवारक** (aniṣṭa-nivāraka) *adj.* which wards off what is undesirable वचः सत्यं गुरौ भक्तिः शक्त्या दानं दयार्दिते। धर्मोऽयमिष्टसंयोगकरोऽनिष्टनिवारकः PārśvC. 1.147; KathāK. 118. 25.

**अनिष्टनिवारकत्व** (aniṣṭanivāraka-tva) *n.* the state of being that which wards off what is undesirable दग्धिर्धातुकमायुधम्। आग्नेयाग्नीषोमीययोरप्यनिष्टनिवारकत्वाल्लिङ्गं साधारणम् NyāyMāVi. 141.5 (*on* iii. 3.5); अनिष्टनिवारकत्वं स्वयंप्रकाशत्वम् ··· विशेषणैराह Prasā. ii. 795. 13.

**अनिष्टनिवारण** (aniṣṭa-nivāraṇa) *n.* removal of what is undesirable इष्टप्रापणानिष्टनिवारणलक्षणा स्थितिश्च पृष्टा भवति ŚrutaPra. iA. 231. 24 (*on* i. 1. 1)

**अनिष्टनिवारणमुख** (aniṣṭanivāraṇa-mukha) *adj.* intending mainly the removal of what is undesirable रक्षणमिष्टप्रदानमुखं पालनमनिष्टनिवारणमुखम् ŚivārkaMaDī. i. 505. 30 (*on* i. 3. 44)

**अनिष्टनिवारणोपाय** (aniṣṭanivāraṇopāya) *m.* means of removal of what is undesirable चकारास्त्वौत्सर्गिकाभीष्टलाभकाले तत्तदभीष्टानामलाभमनिष्टनिवारणोपायेऽप्यनिष्टलाभं च समुच्चिन्वन्ति VīraMi. 331. 28 (*on* 1.272–276)

**अनिष्टनिवृत्ताशंसिन्** (aniṣṭanivṛttāśaṁsin) [w. r. for **अनिष्टनिवृत्त्याशंसिन्**] VīraMi. 836. 1 (*on* 3.58)

**अनिष्टनिवृत्ति** (aniṣṭa-nivṛtti) *f.* **A** removal of undesired consequence अनिष्टनिवृत्तिस्तु बहुलाधिकारात् CāndraVṛ. *on* i. 2. 64; अर्थनिर्देशकरणवादिनाप्यनिष्टनिवृत्तयेऽवश्यमाश्रयितव्यमनभिधानम् Pradī. iv. 205A. 35 (*on* iv. 3. 25); तदर्थग्रहणमत्र नानुवर्तते, इतिकरणेनानिष्टनिवृत्तेः साधयिष्यमाणत्वात् Pradī. iv. 252B.7 (*on* v. 1. 16); v. 85B.1 (*on* vi. 1.84); vi. 145. 7 (*on* vii. 2. 67); मासस्य जात इति षष्ठीसमासेन सिद्धे जातमास इत्यनिष्टनिवृत्तये इदम् (सूत्रम्) LaŚabdeŚe. ii. 27.17; **B** removal or rejection of what is undesirable योऽप्यनिष्टं भयात् साधयति तस्याप्यनिष्टनिवृत्तिरिष्टा NyāyVār. 119.3 (*on* i. 1. 33); इष्टप्राप्तिरनिष्टनिवृत्तिर्वा प्रयत्नादिभिः साध्यते BrahmSūBh.(Rā.) 492. 15 (*on* ii. 2. 26); अनिष्टनिवृत्तिरात्यन्तिकी निःश्रेयसमिति Kiraṇā. 8. 11; अनिष्टनिवृत्तिरिष्टप्राप्तिश्च द्वयमस्ति ŚrutaPra. iA. 49. 22 (*on* i. 1.1); iB. 257.25 (*on* i. 1. 25); ii. 69. 14 (*on* i. 3.29); पुरुषश्रेष्ठावाप्तिमनिष्टनिवृत्तिं चापेक्षते NyāySu.(Ja.) 72B. 8 (*on* i. 1. 1)

**अनिष्टनिवृत्तिप्रयोजन** (aniṣṭanivṛtti-prayojana) *adj.* having the purpose of the removal of evil शान्त्यर्था होमा अनिष्टनिवृत्तिप्रयोजनाः ManuBh. i. 382. 4 (*on* 4. 150)

**अनिष्टनिवृत्तिरूपता** (aniṣṭanivṛttirūpa-tā) *f.* the state of having the nature of the removal of what is undesirable स्वत इष्टत्वमनुकूलत्वं न त्विष्टान्तरहेतुतया अनिष्टनिवृत्तिरूपतया वा इष्टत्वम् ŚrutaPra. iB. 93. 12 (*on* i. 1.1); ii. 17.24 (*on* i. 3. 7)

**अनिष्टनिवृत्तिरूपत्व** (aniṣṭanivṛttirūpa-tva) *n.* the state of having the nature of the removal of what is undesirable विशुद्धानन्दप्रकाशब्रह्मात्मतत्त्वज्ञानम्। तत् स्वरूपेणैव पुरुषार्थः, अनिष्टनिवृत्तिरूपत्वादिष्टाविर्भावाच्च BrahmSi. 158.22.

**अनिष्टनिवृत्त्यनुकूल** (aniṣṭanivṛtty-anukūla) *adj.* favourable for the removal of what is undesirable दस्युभ्यो रक्षतीत्यादौ ···। त्राणं चानिष्टनिवृत्त्यनुकूलो व्यापारः VyutpaVā. 179. 3.

**अनिष्टनिवृत्त्यर्थ** (aniṣṭanivṛtty-artha) *adj.* meant for the sake of the removal of an undesired consequence आचार्येणैवानिष्टनिवृत्त्यर्थं समासविधौ बहुलग्रहणं कृतम् VyaktiVi. 55. 7.

**अनिष्टनिवृत्त्यर्थत्व** (aniṣṭanivṛttyartha-tva) *n.* the state of being meant for the sake of the removal of an undesired consequence अनिष्टनिवृत्त्यर्थत्वाद्धलंग्रहणस्य न युज्यते ज्ञापकत्वम् Nyās. ii. 536. 15 (*on* vi. 4. 42)

**अनिष्टनिवृत्त्यर्थम्** (aniṣṭanivṛttyartham) *adv.* for the sake of the removal of what is undesirable अनिष्टनिवृत्त्यर्थमानन्दप्राप्त्यर्थं वा कर्मनियमः किं न स्यात् TattvPrakā. 172B. 7 (*on* iii. 3. 30); अनिष्टनिवृत्त्यर्थं च शान्तिहोमान् पौर्णमास्यमावास्ययोः सर्वदा कुर्यात् ManvaMu. 172.20 (*on* 4.150)

**अनिष्टनिवृत्त्याशंसिन्** (aniṣṭanivṛtty-āśaṁsin) *adj.* desiring the removal of evil (सर्वभूतहितः) सर्वेषां भूतानां प्राणिनां हितः अनिष्टनिवृत्ता-(?त्त्या)शंसी न तु हितकर्ता VīraMi. 836. 1 (*on* 3. 58)

**अनिष्टनैष्क्रम्यरस** (an-iṣṭanaiṣkramyarasa) *adj.* not having the taste for renunciation which is desirable नन्दः ···। सोऽनिष्टनैष्क्रम्यरसो म्लानतामरसोपमः। चचार विरसो धर्मम् Saund. 11.2.

**अनिष्टपक्ष** (aniṣṭa-pakṣa) *m.* **1** unintended subject of inference अनिष्टपक्षव्युदासार्थमिष्टग्रहणं क्रियते NyāyVār. 116.17 (*on* i. 1.33); 119.18 (*on* i. 1. 33); **2** undesired alternative प्राप्तव्यस्य ··· सुखस्य दुःखसंभेदेनानिष्टपक्षनिक्षेपादनिष्टप्रतिषेधार्थैव प्रवृत्तिर्विवेकिनामेकरूपैव TātpaṬ.(Vā.) 10. 6 (*on* i. 1.1); NyāySu.(Ja.) 639B. 4 (*on* 4.2)

**अनिष्टपदविन्यास** (aniṣṭa-padavinyāsa) *m.* employment of improper word-order (regarded as one of the defects in a melody) अनिष्टपदविन्यासं पूर्वेषां निन्दकं च यत्। सलज्जमतिक्रुच्चैव विधेयायुक्तता तथा [ अनिष्टपदविन्यासम् ] वज्रपातः पतत्वाशु तव मूर्धनि विद्विषाम् Gītālaṅ. 3. 24.

**अनिष्टपरिहार** (aniṣṭa-parihāra) *m.* avoidance of evil or harm or what is undesirable अनिष्टपरिहाराय दद्यादेतद् द्विजातये NāraS. 13. 4; अनिष्टपरिहाराय बलात्करणवृत्तित्वमभ्युपगन्तव्यम् PrakaVi. 683. 26; VivaPraSaṁ. 297. 17; ( इष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानताम् ) तद्योगमिष्टप्राप्त्यनिष्टपरिहारोपायम् TattvPrakā. 2B. 7 (*on* i. 1. 0); अत्रानिष्टपरिहाररूपेष्टानवाप्तिः Kuval. 90(36); धर्मः … सर्वभूताहिंसाविधिलक्षणोऽनिष्टपरिहारसाधनम् SarvaMaSaṁ. 9. 3.

**अनिष्टपरिहारार्थत्व** (aniṣṭaparihārārtha-tva) *n.* the state of being that which is meant for the removal of what is undesirable उपासनाविधीनां मोक्षार्थत्वं मुक्तावनिष्टपरिहारार्थत्वं च किं न स्यात् TattvPrakā. 172A.6 (*on* iii. 3. 28)

**अनिष्टपरिहारार्था** (aniṣṭaparihārārthā) *adj.* (*f.*) having avoidance of evil as its purpose प्रेक्षावत्प्रवृत्तिरिष्टार्थाधिगमा स्यादनिष्टपरिहारार्था वा NyāyKa. 53.16; परमेश्वरस्य जगन्निर्माणे प्रवृत्तिः किमर्था। स्वार्था परार्था वा। आद्येऽपीष्टप्राप्त्यर्थानिष्टपरिहारार्था वा SarvaDaSaṁ. 11. 195.

**अनिष्टपरिहृति** (aniṣṭa-parihṛti) *f.* avoidance of evil or what is undesirable आत्मा … इष्टप्राप्तिमनिष्टपरिहृतिं चाकाङ्क्षन् SanatBh. 174. 2 (*on* 1. 1)

**अनिष्टपर्यवसायिन्** (aniṣṭa-paryavasāyin) *adj.* resulting in what is undesirable एतच्च ( विधेर्निषेधागूरकत्वम् ) ममापि तत्रैवेत्याशीःप्रतिपादनेनानिष्टपर्यवसायिना व्यञ्जितम् AlaṅkāSa. 121.3; Kuval. 56(5)

**अनिष्टपूर्व** (an-iṣṭapūrva) *adj.* who has not performed (the *jyotiṣṭoma*) sacrifice previously अथ यद्यदिदीक्षाणा इतीष्टवतामनिष्टपूर्वाणां च द्वादशाहे दर्शनमुपपद्यते यदि कर्मभेदः ŚābaBh. 633. 13 (*on* ii. 4.8)

**अनिष्टप्रकल्पना** (aniṣṭa-prakalpanā) *f.* assumptiou of undesired consequence तत्र किमनिष्टप्रकल्पनयानेकबाधोऽस्तु। अथेष्टप्रकल्पनया सर्वानुग्रहः Pradī. iv. 261B.9 (*on* v.1.23)

**अनिष्टप्रकृति** (aniṣṭa-prakṛti) *adj.* of unpleasant nature कथं नागानुपस्थाय … वशा। भजेदनिष्टप्रकृतिं रूक्षरोमखरं खरम् KīcaVa. 2.22.

**अनिष्टप्रतिलम्भ** (aniṣṭa-pratilambha) *m.* obtainment of what is undesirable इदम् … इष्टानवाप्तावनिष्टप्रतिलम्भे चोदाहरणम् Kuval. 90(7)

**अनिष्टप्रतिषेध** (aniṣṭa-pratiṣedha) *m.* denial of what is not desirable यदि पुनः साधर्म्यं हेतुरित्येतावन्मात्रमुच्येत भवत्येवं विवक्षितार्थसिद्धिः, अनिष्टप्रतिषेधस्तु न स्यात् NyāyVār. 122. 3 (*on* i. 1. 34)

**अनिष्टप्रतिषेधार्थ** (aniṣṭapratiṣedhārtha) *adj.* [*f.* -ā] having the purpose of exclusion or rejection of what is undesirable या वीतरागाणां प्रवृत्तिः सा खल्वेकरूपा अनिष्टप्रतिषेधार्था अनिष्टं हास्याम इत्येव ते प्रवर्तन्ते NyāyVār. 3.2 (*on* i. 1.1); अनिष्टप्रतिषेधार्थमुदाहरणग्रहणम् NyāyVār. 122.3 (*on* i. 1. 34); TātpaṬ.(Vā.) 10. 6 (*on* i.1. 1)

**अनिष्टप्रतीति** (aniṣṭa-pratīti) *f.* understanding of what is not intended पदानामभिसंबन्धस्यान्यथाभावमात्रतः। यत्रानिष्टप्रतीतिः स्याद्रचनां तां परित्यजेत् VyaktiVi. 98.5.

**अनिष्टप्रत्यय** (aniṣṭa-pratyaya) *m.* undesired suffix यूनि लुगचीति चेत्प्रत्ययस्यायथेष्टं प्राप्नोति। अनिष्टे प्रत्ययेऽवस्थिते लुक्। अनिष्टप्रत्ययस्य श्रवणं प्रसज्येत MahāBh. ii. 242.17 (*on* iv. 1. 90); Pradī. iii. 31A. 34 (*on* iii. 1. 7)

**अनिष्टप्रथमयज्ञ** (aniṣṭa-prathamayajña) *adj.* who has not performed the first (i. e. *jyotiṣṭoma*) sacrifice एतेनानिष्टप्रथमयज्ञानां सत्रासनमुक्तम् NidāSū. 95.9 (5.13); यदि पुरा दिदीक्षाणा इति द्वादशाहे इष्टप्रथमयज्ञानामनिष्टप्रथमयज्ञानां च दर्शनं कर्मभेदे ŚābaBh. 642. 9 (*on* ii. 4. 25); BālaKrī. ii. 96. 19 (*on* 3.237 (? 243))

**अनिष्टप्रथमयज्ञता** (aniṣṭaprathamayajña-tā) *f.* the state of being one who has not performed the first (i. e. *jyotiṣṭoma*) sacrifice इष्टप्रथमयज्ञतानिष्टप्रथमयज्ञता च द्वयमपि लिङ्गमिति भ्रान्तिनिरासायानिष्टप्रथमयज्ञत्वस्यैव लिङ्गत्वमाह NyāySu.(So.) 982.31 (*on* ii. 4. 8)

**अनिष्टप्रथमयज्ञत्व** (aniṣṭaprathamayajña-tva) *n.* the state of being one who has not performed the first (i.e. *jyotiṣṭoma*) sacrifice द्वादशाहे अनिष्टप्रथमयज्ञत्वं कर्मभेदे भवति TantrVā. 640. 12 (*on* ii. 4.8); NyāySu.(So.) 982.32 (*on* ii. 4.8); MīmāKau. ii. 117.12 (*on* ii. 4. 8)

**अनिष्टप्रथमसोम** (aniṣṭa-prathamasama) *n.* who has not performed the first Soma-sacrifice अनिष्टप्रथमसोमस्याध्वरदीक्षाहुतीनां होमः BaudhŚS. iii. 119. 19.

**अनिष्टप्रपञ्च** (aniṣṭa-prapañca) *m.* undesired worldly existence अनिष्टप्रपञ्चोपसंहारफलकद्वेषस्यापि संभावितत्वात् TarkSaṁ.(Ā.) 112.29.

**अनिष्टप्रवक्तृ** (aniṣṭa-pravaktṛ) *adj.* speaker of evil राज्ञोऽनिष्टप्रवक्तारम् … जिह्वां छित्त्वा प्रवासयेत् YājñaSm. 2. 302; AgniP. 257.78.

**अनिष्टप्रवृत्तिक** (aniṣṭapravṛtti-ka) *adj.* inclined towards harmful things राजाक्रोशकमन्त्रभेदकयोरनिष्टप्रवृत्तिकस्य … जिह्वामुत्पाटयेत् ArthŚā. ii. 170.8 (4.11)

**अनिष्टप्रसक्ति** (aniṣṭa-prasakti) *f.* contingency of an undesired consequence यद्विपर्ययेऽनिष्टप्रसक्तिस्तत्प्रमाणयोग्यम् NyāyPari. 137. 1.

**अनिष्टप्रसङ्ग** (aniṣṭa-prasaṅga) *m.* I contingency of an undesirable consequence, occurrence of an unintended result अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः। इतरथा ह्यनिष्टप्रसङ्गः Vār. 2 *on* P. i. 1.52; Vār. 2 *on* P. i. 4.23; चार्थे द्वन्द्ववचनेऽसमासेऽपि चार्थसंप्रत्ययादनिष्टप्रसङ्गः Vār. 1 *on* P. ii. 2. 29; रुविधौ ह्यनिष्टप्रसङ्गः Vār. 2 *on* P. viii. 3. 12; उक्तमायादिभ्यो यदार्धधातुकमायादिप्रकृतेर्यदार्धधातुकमिति चोभयथानिष्टप्रसङ्गः MahāBh. ii. 41.17 (*on* iii. 1.31); स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् YogSū. 3.50; MāṭhVṛ. 40.13 (*on* 23); TattvVai. 174.11 (*on* 3.51); उभयं च लक्षणदोषः अभिप्रेतहानिरनिष्टप्रसङ्गः NyāyVār. 129. 14 (*on* i. 1.36); IṣṭaSi. 47.17; कथमेतद् बाधकसद्भावात्, सामान्ये सत्ता नास्तीत्यनिष्टप्रसङ्गात् NyāyKa. 19. 7; धर्मिणं दर्शयित्वा तमनिच्छतो वैनाशिकस्य क्षणिकं विज्ञानमात्रं चित्तमिच्छतोऽनिष्टप्रसङ्गमुक्तं स्मारयति TattvVai. 136. 19 (*on* 3. 14); NyāyVārPari. 357.2; अनिष्टप्रसङ्गाद् विप्रतिषेध आश्रयितुं न युक्तः Pradī. iv. 184A. 25 (*on* iv. 2.92); ii. 445B. 4 (*on* ii. 2. 24); iii. 4B. 27 (*on* iii. 1.1); iv. 370A.31 (*on* v. 3. 42); vii. 233.18 (*on* viii. 4.68); तर्कोऽनिष्टप्रसङ्गः स्यात् TārkiRa. 185. 2; MānaMe. 35. 2; न चैवमप्रमापि प्रमा स्यादित्यनिष्टप्रसङ्गः PrakaVi. 530. 9; 594. 24; यदा णिङि वृद्धिर्नास्ति तदा ह्रस्व एवोपधेति सत्यपि ह्रस्वविकल्पे नैवानिष्टप्रसङ्गः PadMañ. *on* KāśiVṛ. *on* P. iii. 1.30; नानिष्टप्रसङ्गाविमाविति चेन्न ŚatDū. 184. 4; 105. 4; अष्टद्रव्याश्रितत्वकोटावनिष्टप्रसङ्गेनाभिमतकोटिपक्षपातिनी शङ्का जायते NyāyPari. 136.2; 174. 4; 486. 24; शब्दोऽनित्यः यदि चैतद् वाक्यं मिथ्या स्यान्न कस्याप्यर्थस्य साधकं स्यादित्यनिष्टप्रसङ्गं पश्यन् NyāySu.(Ja.) 28A.3 (*on* i. 1. 1); अनिष्टप्रसङ्गेन परं निगृहीतवतो मम अनिष्टं कथं भवेत् NyāySu.(Ja.) 37B. 5 (*on* i. 1.1); तथा चेष्टस्य रूपादेरीश्वरस्य स्वस्य चाज्ञानादन्धादेरिवातिदुःखं मोक्षे स्यादित्यनिष्टप्रसङ्गोऽत्राभिमतः Nyāyāmṛ. 277B. 5; न पुनर्गृह्यमाणेनैकशब्देनाच्। एकशब्दस्याच इति अनिष्टप्रसङ्गात् Prasā. i. 659.14; i. 581. 24; ŚivārkaMaDī. ii. 190. 17 (*on* ii. 4. 18); अप्रयोजकमिदम्, विपक्षेऽनिष्टप्रसङ्गाभावात् PūrvottaVāNaMā. 260. 8; पूर्वस्य परस्य चाश्रयणादनिष्टप्रसङ्गः PāṇiTaVāNaMā. 76. 5; II undesirable occasion जपत्येवं नरः पुण्यं वैष्णवं धर्ममुत्तमम्। इष्टानिष्टप्रसङ्गेभ्यः…। कृतं तेन तु यत्पापम्…नाशयेत् VāmaP. 86.105.

**अनिष्टप्रसङ्गत्व** (aniṣṭaprasaṅga-tva) *n.* the state of being the contingency of an undesirable consequence अयं च स्वप्रवृत्तेः प्रागेव आपाद्यविपर्ययस्य प्रमाणतः सिद्धिमपेक्षते, अन्यथा तर्कस्य अनिष्टप्रसङ्गत्वाभावप्रसङ्गात् PūrvottaVāNaMā. 280. 6.

**अनिष्टप्रसङ्गमात्र** (aniṣṭaprasaṅga-mātra) *n.* mere contingency of an undesirable consequence (तर्कः) अनिष्टप्रसङ्गमात्ररूपत्वान्न केवलमनुमानस्यैवानुग्राहकः TārkiRa. 193.8.

**अनिष्टप्रसङ्गरूप** (aniṣṭaprasaṅga-rūpa) *adj.* characterised by the contingency of an undesirable consequence तर्कः। सोऽपि व्याप्तिबलमालम्ब्यानिष्टप्रसङ्गरूपः ĀtmaTaVi. 538.2.

**अनिष्टप्रसङ्गरूपत्व** (aniṣṭaprasaṅgarūpa-tva) *n.* the state of being characterised by the contingency of an undesirable consequence आत्माश्रयत्वादयश्च दोषाः तर्के एवान्तर्भूताः अनिष्टप्रसङ्गरूपत्वात् MānaMe. 37. 7.

**अनिष्टप्रसञ्जक** (aniṣṭa-prasañjaka) *adj.* which leads to an undesirable consequence अनिष्टप्रसञ्जकेन हेतुना उपपन्नस्तर्कः NyāyVārPari. 334. 2.

**अनिष्टप्रसञ्जन** (aniṣṭa-prasañjana) *n.* causing the possibility of an undesirable consequence किमिदमवेद्यत्वे व्यवहारविषयत्वं न स्यादित्यनिष्टप्रसञ्जनम् TattvPradī.(Ci.) 11. 8; साध्याभावेऽनिष्टप्रसञ्जनमुखेन हेतुदार्ढ्यपरो हि न चेदित्यादिकः सूत्रांशः ŚrutaPra. ii. 224. 21 (*on* ii. 1. 12); नियमनश्रुतिसंकोचः प्रसजेत्, प्रथममुपेक्षकत्वादिति — न तत् अनिष्टप्रसञ्जनम् ŚrutaPra. ii. 378.30 (*on* ii. 3.41); तर्कश्चानिष्टप्रसञ्जनम् NyāySu.(Ja.) 363A.5 (*on* ii. 2.6); 477B. 2 (*on* iii. 2.1); SarvaDaKau. 74. 23; BhāṭṭCin. i. 27.2 (*on* i. 1.4); अनिष्टप्रसञ्जनमपि करोति यज्ञश्चा इति Bhāsk. i. 88. 13 (*on* i. 2.2)

**अनिष्टप्रसञ्जनमात्ररूपत्व** (aniṣṭaprasañjanamātrarūpa-tva) *n.* the state of having the nature of leading only to the contingency of an undesirable consequence प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहकः। न तु स्वतः

तत्त्वनिर्णयाय प्रभवति। अनिष्टप्रसञ्जनमात्ररूपत्वात् SarvaDaKau. 75.13.

**अनिष्टप्रसञ्जनार्थम्** ( aniṣṭaprasañjanārtham ) *adv.* for the sake of causing the contingency of what is undesirable वादिनमिति वैपरीत्यलक्षणया परिहासः। अनिष्टप्रसञ्जनार्थं वा NyāySu.(Ja.) 169B.3 (*on* i. 2.6)

**अनिष्टप्रापक** ( aniṣṭa-prāpaka ) *adj.* which brings about what is undesirable इष्टानिष्टप्रापके कर्मणी धर्माधर्मौ LalitāSaBh. 74.32 (*on* 113)

**अनिष्टप्राप्ति** ( aniṣṭa-prāpti ) *f.* **i** obtainment of what is undesirable आत्मा ह्यात्मत्वेनोपगन्तव्यः अविपरीतबोधाच्छ्रेयःप्राप्तेः विपर्यये चानिष्टप्राप्तिदर्शनात् BṛĀraUBh. 52.15 (*on* i.3.8); यः … न द्वेष्टि अनिष्टप्राप्तौ … स मे प्रियः GītāBh.(Śaṅ.) 351.14 (*on* 12.17); अनिष्टप्राप्तौ इष्टवियोगे च न शोकः GītāBh.(Śaṅ.) 513.2 (*on* 18.27); नैव च कश्चिदनिष्टप्राप्तिमिच्छति ManuBh. ii. 453.24 (*on* 12.1); धृतिरिष्टवियोगेऽनिष्टप्राप्तौ प्रचलितचित्तस्य यथापूर्वमवस्थापनम् Mitā. 369.25 (*on* 3.66); VīraMi. 842.6 (*on* 3.66); इष्टाप्राप्त्यनिष्टप्राप्त्यादिजनिता ध्यानापरपर्याया … चिन्ता RasGaṅ. 101.6; 598.3; **ii** possibility of an undesirable consequence जीवब्रह्माभेदेऽनिष्टप्राप्तेर्वक्ष्यमाणत्वेन तद्विपर्ययस्याद्रव्यातिरिक्तद्रव्यादेरिवानुमानयोग्यत्वात् Nyāyāmṛ. 569B.8.

**अनिष्टप्राप्तिरन्ध्र** ( aniṣṭaprāpti-randhra ) *n.* weak point in the form of the obtainment of misery (सा हानिस्तन्महच्छिद्रम्) छिद्रमनिष्टप्राप्तिरन्ध्रम् ŚrutaPra. iA. 208.19 (*on* i.1.1)

**अनिष्टप्राप्तिशङ्का** ( aniṣṭaprāpti-śaṅkā ) *f.* apprehension of obtainment of what is undesirable भयमनिष्टप्राप्तिशङ्का SmṛtiCan. iii. 216.1.

**अनिष्टप्राय** ( aniṣṭa-prāya ) *adj.* amounting to what is undesirable सकलेन्द्रियहरणम् … अनिष्टप्रायमेव RasGaṅ. 598.13.

**अनिष्टफल** ( aniṣṭa-phala ) *n.* undesirable consequence or result अनिष्टफलोपादानमात्रेणैव तद्विषयानिषेधसिद्धेरनिष्टफलस्य च पुरुषगामित्वात् पुरुषधर्मता TantrVā. 988.8 (*on* iii. 4.23); अनिष्टफलमाह मां स भक्षयितेति। अमुत्र जन्मान्तरे ManvaVi. 619.29 (*on* 5.55); नाडिका वहति तापनी यदा निःसरत्युदरतः समीरणः। अप्रदक्षिणगतिर्धनुर्धरी स्यादनिष्टफलमव्ययं तदा ŚārṅgaPa. 2721; कर्मणां च विहितनिषिद्धानामिष्टानिष्टफले ManvaMu. 29.8 (*on* 1.107); शुभाशुभानां कर्मणां परलोक इष्टानिष्टफलं मनसा विचार्य … शुभमेव सर्वं कर्म कुर्यात् ManvaMu. 496.14 (*on* 11.231); सर्वकर्मफलप्रदस्य ब्रह्मणः श्रेयसीवानिष्टफलेऽपि जनकत्वात् ŚivārkaMaDī. i. 17.26 (*on* i.1.1); ऋणादानेऽधमर्णस्यानिष्टफलमाह कात्यायनः VyavaMa. 184.1.

**अनिष्टफल** (aniṣṭa-phala) *adj.* [*f.*-ā] **i** having or causing an undesirable consequence or result धर्मः …अनिष्टफल आचार्यैर्नोपदिश्यते MatsyaP. 134.18; 145.28; BrahmāṇḍP. i. 32.30; LiṅgaP. i.10.14; अनिष्टफलं वा दारुवर्मणः प्रयत्नमवगच्छामि MudrāRā. 2.15(17); यदि हि कर्ता…स्वातन्त्र्येण कर्म नियुञ्ज्यात्, ततोऽनिष्टफलस्याप्रयोक्ता स्यात् KenUBh. 87.14 (*on* 3.1); अनेकानि हि … कर्माणि संभवन्ति।… इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानि इति चेत्, न TaiUBh. 188.16 (*on* 1.1); कथम् … अनिष्टफलाभ्यो वा क्रियाभ्यो निवर्तयेयुः BṛĀraUBh. 263.4 (*on* ii. 1.20); इष्टानिष्टफलं कर्म दैवमाहुर्विचक्षणाः BṛKathāŚloSaṁ. 21.50; इष्टानिष्टफलानीति साधनानि प्रकाशयेत्।… शास्त्रम् BṛĀraUBhVā. ii. 1.583; अकुशलं कर्मानिष्टफलम् GītāBh.(Rā.) 640.12 (*on* 18.10); कष्टमिष्टफलो वा भूज्जातोऽनिष्टफलस्तु मे। परिक्लेशोऽल्पसत्त्वस्य KathāSaSāg. xii. 6.165; विसर्पः। रभसोक्तमनिष्टफलं स्यात् NāṭaLaRaK. 1782; दैवे …। महती सत्क्रियानिष्टफला स्यात् प्रतिकूलके ŚukraNī. 1.57; **ii** having an inauspicious or ill-ominous result विशेषतोऽनिष्टफलानि यानि (चिह्नानि) … तान्यनुकीर्तयामि BṛSaṁ. 70.15; नीचांशगतस्य शत्रुभागे ज्ञेयानिष्टफला दशा प्रसूतौ Bṛhajjā. 8.5; शवरुधिरवसास्थिमज्जगन्धो हुतभुगनिष्टफलः YogYā. 8.11; अनिष्टफलं स्वप्नं जानन्तोऽपि द्विजातयः।… स्थापयामासुरन्यथा BṛKathāŚloSaṁ. 2.44.

**अनिष्टफलक** ( aniṣṭaphala-ka ) *adj.* having an undesirable consequence प्रत्यवायपरिहारोपयोगिज्ञानफलकमध्ययनं नानिष्टफलकम् ŚivārkaMaDī. i. 46.30 (*on* i. 1.1); PūrvottaVāNaMā. 261.13.

**अनिष्टफलता** ( aniṣṭaphala-tā ) *f.* **i** the nature of being that which causes an undesirable consequence or result स यदि हननस्यानिष्टफलतां नावगच्छति TātpaṬ.(U.) 101.14 (*on* 2.213); 106.8 (*on* 2.229); तद्विषयस्य प्रतिषिध्यमानस्य नानिष्टफलतामध्यवस्यति ManuBh. ii. 454.18 (*on* 12.1); ज्ञानविरोधि च कर्म पुण्यपापरूपम्। ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम् BrahmSūBh.(Rā.) 12.17 (*on* i. 1.1); अप्रस्तावप्रयुक्ता हि यान्ति निष्फलतां क्रियाः। अनिष्टफलतां वापि BṛKathāŚloSaṁ. 10.248; पुण्येऽपि विद्यानुकूलव्यतिरिक्तांशस्य … अनिष्टफलतया पापशब्दाभिलप्यस्य अश्लेषविनाशावेव NyāySiA. 219.2; अनिष्टफलताज्ञाने सति ततो निवृत्तौ कृते वा तस्मिंस्तद्विनाशकरणे वक्ष्यमाणप्रायश्चित्तप्रवृत्तावुपयोगात् TristhaSe. 267.11; **ii** the state of being that which indicates an undesirable result धनुस्तुलयोरनिष्टफलताभिधानात् VīraMi.(Saṁskāra.) 274.22.

**अनिष्टफलत्व** ( aniṣṭaphala-tva ) *n.* the state of being that which causes an undesirable consequence or result सद्भिः कुत्सितत्वादनिष्टफलत्वाद् दुश्चरितम् AbhidhKoBh. 211.9 (*on* 4.24); विधेयस्येष्टसाधनत्वादर्थत्वम्, निषेध्यस्य चानिष्टफलत्वादनर्थत्वम् TātpaṬ.(U.) 102.21 (*on* 2.215); 115.19 (*on* 2.266); पशुहिंसादियोगाच्च इष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः BrahmSūBh.(Śaṅ.) 554.18 (*on* iii. 1.24); मुमुक्षुणा … अनिष्टफलत्वात् सरागचारित्रं हेयम् TattvPradī.(A.) 7.7 (on 1.6); यदि तावदध्ययनापादितज्ञानवत एवावगोरणानुष्ठानं प्रत्यवायकरं नान्यस्येति कल्प्यते तथा सत्यनिष्टफलत्वमेवाध्ययनस्य स्यात् NyāyRaMā. 23.21; मुमुक्षोरनिष्टफलत्वात् सुकृतस्यापि पाप्मशब्देन व्यपदेशः BrahmSūBh.(Rā.) 723.5 (*on* iv. 1.14); VedāntDī. 225.7 (*on* iv. 1.14); मुमुक्षुं प्रति काम्यकर्मणोऽनिष्टफलत्वेन धर्मशब्दवाच्यत्वायोगात् ŚrutaPra. iA. 69.28 (*on* i. 1.1); खातादिलक्षणरहितस्य कुण्डस्यानिष्टफलत्वदर्शनादिदानीं खातादीनामेव लक्षणमभिधीयते CaturCin i. 134.4; इष्टानिष्टफलत्वम् … तदन्यतः सिद्धत्वान्नार्थवादापेक्षम् NyāySu.(So.) 6.8 (*on* i. 2.1); विदुषः पुण्यस्यापि मोक्षविरोधित्वेनानिष्टफलत्वसाम्यादश्लेषविनाशौ BrahmSūBh.(Śrī.) ii. 441.6 (*on* iv. 1.14); अनिष्टफलत्वप्रतिसंधानेन तत्र प्रवृत्तिरपि न स्यात् PūrvottaVāNaMā. 261.5; ŚivārkaMaDī. i. 46.25 (*on* i. 1.1); मोक्षशास्त्रे पाप्मशब्दः पुण्यस्यापि ग्राहकः। मुमुक्षुं प्रति तस्याप्यनिष्टफलत्वात् ŚivārkaMaDī. i. 248.16 (*on* i. 1.21); ii. 441.12 (*on* iv. 1.14)

**अनिष्टफलद** ( aniṣṭaphalad-a ) *adj.* [*f.* -ā] yielding on undesirable result कूर्मपृष्ठोन्नता योग्या … मही। अतोऽन्या विपरीता च सानिष्टफलदा सदा PauṣkS. 2.26; भूमिजः सर्वधिष्ण्यानामुदग्गामी शुभप्रदः। याम्यगोऽनिष्टफलदः NāraS. 2(3).11: अनिष्टफलदः सोऽपि प्रशस्तफलदः शशी। सौम्यर्क्षगोऽधिमित्रेण गुरुणा वा विलोकितः NāraS. 30.8.

**अनिष्टफलदर्शन** ( aniṣṭaphala-darśana ) *n.* **i** pointing out of an undesirable result नैवात्र तादृशं फलमभिधीयते यत्काम्यते, अनिष्टफलदर्शनमत्र क्रियते ManuBh. ii. 453.23 (*on* 12.1); **ii** observation of undesirable results सन्तमेनं ततो विदुरित्यनन्तरश्लोके ब्रह्मणि सदसत्त्वज्ञानयोरिष्टानिष्टफलदर्शनेन तस्य परब्रह्मत्वावसायात् ŚivārkaMaDī. i. 210.32 (*on* i. 1.13)

**अनिष्टफलदान** (aniṣṭaphala-dāna) *n.* bestowing of an undesirable reward कर्मानुसारेण प्राणिनामिष्टानिष्टफलदानाय …। विनायको हेरम्बः।… आज्ञप्तः VīraMi. 331.6 (*on* 1.276)

**अनिष्टफलदायक** ( aniṣṭaphala-dāyaka ) *adj.* causing an undesirable result विकृतं च गृहं भर्तुरनिष्टफलदायकम्। तस्माद्दोषानिमांस्त्यक्त्वा गृहं कुर्याच्छुभावहम् SamarāSū. 48.139.

**अनिष्टफलपर्यन्तत्व** ( aniṣṭaphalaparyanta-tva ) *n.* the state of being that which ends in an undesirable result दुरितस्यानिष्टफलपर्यन्तत्वेऽवगते नार्थवादाद् दुरितक्षयः प्रमातुं शक्यते PrakaVi. 1025.18.

**अनिष्टफलप्रद** ( aniṣṭaphala-prada ) *adj.* causing an undesirable result यत् स्यान्मुखायतं वेश्म तदनिष्टफलप्रदम् SamarāSū. 48.16; विसर्पो यत् समारब्धं कर्मानिष्टफलप्रदम् SāhiDa. 347.5.

**अनिष्टफलप्रदत्व** ( aniṣṭaphalaprada-tva ) *n.* the state of being that which causes an undesirable result पुण्यस्यापि मुमुक्षुं प्रति अनिष्टफलप्रदत्वं सिद्धम् ŚrutaPra. iA. 67.31 (*on* i. 1.1)

**अनिष्टफलप्रसव** ( aniṣṭaphala-prasava ) *m.* origination of an undesirable result अशुभेनापि कर्मणा देवताविरोधनं श्रुतिस्मृतिप्रसिद्धम्। ततः स्थायिनोऽनिष्टफलप्रसवः Bhām. 578.9 (*on* iii. 2.41)

**अनिष्टफलप्राप्ति** ( aniṣṭaphala-prāpti ) *f.* obtainment of an undesirable result कर्मणोऽकुशलसंकल्पहेतोरनिष्टफलप्राप्तिः ManuBh. ii. 473.20 (*on* 12.81)

**अनिष्टफलभाज्** ( aniṣṭaphala-bhāj ) *adj.* causing an undesirable result तत्रेष्टफलभाग्धर्म आचार्यैरुपदिश्यते। अनिष्टफलभाक् चेति तैरधर्मो भविष्यति MahāBhā. i. App.I. 36(14)

**अनिष्टफलयोग** ( aniṣṭaphala-yoga ) *m.* connection with an undesirable result श्राद्धस्य कर्तुः। पापं … किंचित् तत् सर्वं तस्मिन् संक्रामति। अनिष्टफलयोगमात्रमनेन निर्दिश्यते ManuBh. i. 288.22 (*on* 3.181)

**अनिष्टफलवर्णन** (aniṣṭaphala-varṇana) *n.* mention of an undesirable result सन्तमेनं ततो विदुरित्यनन्तरश्लोके ब्रह्मणि सदसत्त्वज्ञानयोरिष्टानिष्टफलदर्शनेन (v.l. °वर्णनेन) तस्य परब्रह्मत्वावसायात् ŚivārkaMaDī. i. 210.32 (*on* i. 1.13)

**अनिष्टफलवाद** ( aniṣṭaphala-vāda ) *m.* statement of an undesirable result अनिष्टफलवादो निन्दा वर्जनार्था — निन्दितं न समाचरेदिति NyāyBh. 121.12 (*on* ii. 1.65)

**अनिष्टफलसाधनत्व** (aniṣṭaphalasādhana-tva) *n.* the state of being the means for an undesirable result अलौकिकत्वे सति अनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगादुपपन्नं न पुण्यस्यापि पापशब्दाभिधेयत्वम् ŚrutaPra. iB. 241. 32 (*on* i. 1. 21)

**अनिष्टफलहेतु** (aniṣṭaphala-hetu) *m.* cause of an undesirable result इष्टफलहेतौ प्रवर्तितः अस्मि अनिष्टफलहेतोश्च निवर्तितः अस्मि GītāBh. (Śaṅ.) 365.19 (*on* 13. 2)

**अनिष्टफलहेतुत्व** (aniṣṭaphalahetu-tva) *n.* the state of being the cause of an undesirable consequence कृतं क्षीणं सत् तापयत्यकृतं त्वनिष्टफलहेतुत्वेन Pradī. ii. 463B. 12 (*on* ii. 2. 29); विदुषः पुण्यस्यापि मोक्षविरोधित्वेनानिष्टफलहेतुत्वसाम्यात् VedāntSā.(Rā.) 713.6 (*on* iv. 1.14)

**अनिष्टफलादर्शिता** (aniṣṭaphalādarśi-tā) *f.* the state of being one who does not perceive the undesirable results अवद्येऽनिष्टफलादर्शिता Sphuṭā. ii. 53. 20 (*on* 2. 32)

**अनिष्टफलासाधारणकारणत्व** (aniṣṭaphalāsādhāraṇakāraṇa-tva) *n.* the state of being the specific cause of an undesirable result अलौकिकत्वे सति अनिष्टफलासाधारणकारणत्वं पापत्वम् ŚrutaPra. iA. 67. 28 (*on* i. 1. 1)

**अनिष्टबन्धनिवृत्ति** (aniṣṭabandha-nivṛtti) *f.* freedom from undesirable bondage अचेतनप्रकृतिबद्धत्वमौपाधिकदुःखावहमिति, मलिनोऽहमिति प्रत्ययवतः पुरुषस्य मालिन्यनिवृत्तिवत्, तन्निवृत्तिर्नापुमर्थः … अनिष्टबन्धनिवृत्तेरिष्टत्वात् ŚrutaPra. iB. 169.16 (*on* i. 1. 4)

**अनिष्टबन्धु** (aniṣṭa-bandhu) *m.* unlucky kinsman, unhappy relative अनिष्टबन्धौ कुरु मय्यपेक्षाम् BuddhaC. 9. 17.

**अनिष्टबाधक** (aniṣṭa-bādhaka) *adj.* preventing what is undesirable अथ हरिवल्लभाः।… तत्र सुहृत्पक्षः — भवेदिष्टसाधकोऽनिष्टबाधकः UjjvaNīMa. 239. 6.

**अनिष्टबाधकत्व** (aniṣṭabādhaka-tva) *n.* the state of being that which prevents what is undesirable सुहृत्पक्षो भवेदिष्टसाधकोऽनिष्टबाधकः। … अनिष्टबाधकत्वं यथा — गीर्भिर्मूढजनस्य … किं गन्तास्मि UjjvaNīMa. 240.1.

**अनिष्टबुद्धि** (aniṣṭa-buddhi) *f.* thought of misfortune इत्यागतावेगमनिष्टबुद्ध्या … बुद्ध्वा नरेन्द्रं स मुनिर्बभाषे BuddhaC. 1. 67; *adj.* of evil thoughts विवशोऽनिष्टबुद्धिः स्यात् KalpaK. 218. 41.

**अनिष्टबोध** (aniṣṭa-bodha) *m.* knowledge of what is harmful अनिष्टसाधनत्वे हि बुद्धेऽनिष्टबोधात् तद्गतं बलवत्त्वं झटिति बुध्यते MīmāKau. iii(1). 25.10 (*on* i. 2.7)

**अनिष्टबोधकत्व** (aniṣṭabodhaka-tva) *n.* the state of being that which conveys what is not desirable वदनं तावत् पुरुषार्थं, यदर्थं च वदनं तदर्थः प्रतिषेधोऽपि न्याय्यः। कुत एतत् प्रतिषेधस्यानिष्टबोधकत्वात् ŚāstrDī. 265. 16 (*on* iii. 4. 8); न केवलमिष्टाबोधकत्वम्, किं त्वनिष्टबोधकत्वं चेत्यभिप्रयन्नाह अपि त्विति ŚrutaPra. iB. 232. 14 (*on* i. 1. 17)

**अनिष्टब्धा** (a-niṣṭabdhā) *adj.* (*f.*) not carved out चतस्रः स्रुचस्तासां द्वे अनिष्टब्धे HirŚS. xxiv. 2. 5 (862. 10) (comm. अनिष्टब्धे अनुपविद्धबिले)

**अनिष्टभवनलाभ** (aniṣṭabhavana-lābha) *m.* outcome of the origination of what is undesirable सिद्धान्ते तु पूर्वार्जितेन यष्टव्यम् … तदकरणे पुरुषस्यानिष्टभवनलाभेन प्रत्यवायवत् BālamBha. ii. 127. 17 (*on* 2.113)

**अनिष्टभागिन्** (aniṣṭabhāg-in) *adj.* who suffers from what is undesirable यो यत्परिमितानिष्टं कुर्यात् तत्संमितं धनम्। नृपतिर्दापयेत् तेन जनायानिष्टभागिने MahNirvāT. 11. 86.

**अनिष्टभाव** (aniṣṭa-bhāva) *m.* undesirable motive (भावैरनिष्टैः संयुक्तः) भावैः … दुःखहेतुभिः संपृक्तः … जन्ममरणप्रबन्धं प्राप्नोति। तस्मात् कथमनिष्टभावैर्युज्यत इत्यचोद्यम् DīpKa. 87. 27 (*on* 3. 140)

**अनिष्टभाषण** (aniṣṭa-bhāṣaṇa) *n.* unfavourable speech or words (अतिवादांस्तितिक्षेत) अतिवादानतिक्रमवादाननिष्टभाषणानि तितिक्षेत क्षमेत ManvaVi. 723. 5 (*on* 6. 47)

**अनिष्टभूत** (aniṣṭa-bhūta) *adj.* which is undesirable अत्रानिष्टभूतं प्रतापरुद्रसेवात्यजनं तद्रिपुकामिन्या विधीयते PratāYaBhū. 442. 13.

**अनिष्टभूमि** (aniṣṭa-bhūmi) *f.* poor (*lit.* bad) soil सुपर्णः पुरा जननीहेतोराहरदमृतं विहायस्यतिवेगेन प्रलीनस्तस्यामृतभाजनात् संक्षोभात् ततो बिन्दुनिष्पातादनिष्टभूमावनिष्टगन्धम् … तीक्ष्णरसमिति तस्माद् रसोनम् … ब्रुवन्त्याचार्याः Hastyāyur. 687.15 (4.28)

**अनिष्टभूयिष्ठ** (aniṣṭa-bhūyiṣṭha) *adj.* chiefly wicked कर्मण्यनिष्टभूयिष्ठे शवासृङ्मधमेदसाम् (गन्धेन अभियुक्तो भवति) MṛgendraT. ii. 6.66.

**अनिष्टभूयिष्ठत्व** (aniṣṭabhūyiṣṭha-tva) *n.* the state of abounding in what is undesirable वृत्तिरूपसुखस्यानिष्टभूयिष्ठत्वात् तस्या(गेच्छा)गायेच्छादिकं युज्यते NyāySu.(Ja.) 640A. 12 (*on* 4.2)

**अनिष्टभेदाग्रह** (aniṣṭabhedāgraha) *m.* non-perception of the difference from what is undesirable भेदाज्ञानात् प्रवृत्तौ न कथमुपरतिः स्यात् अभेदाप्रतीत्या … न, यतोऽनिष्टभेदाग्रहात् सा TattvMu. 4.11.

**अनिष्टभोक्तृत्व** (aniṣṭabhoktṛ-tva) *n.* the state of being one who experiences what is undesirable न हि सशरीरत्वप्रयुक्तमनिष्टभोक्तृत्वम्, अपि त्वन्यवश्यत्वकृतम् VedāntSā.(Rā.) 148. 4 (*on* ii. 1. 14)

**अनिष्टभोजन** (aniṣṭa-bhojana) *n.* eating what is not beneficial वातातप°…°अतिभोजनानिष्टभोजन°…°मक्षिकाद्या बाधाः परिहरेत् SuśruS. i.19.20.

**अनिष्टभ्रम** (aniṣṭa-bhrama) *m.* erroneous knowledge (of something) as unfavourable अनिष्टभ्रमादन्यस्येष्टापादने मतानुज्ञा SarvaDaKau. 87. 22.

**अनिष्टभ्रमतस्** (aniṣṭabhrama-tas) *adv.* through the erroneous knowledge (of something) as unfavourable अनिष्टभ्रमतोऽन्येषामिष्टमापादयेद् यदि। मतानुज्ञेति तस्य स्यान्निग्रहस्थानमुद्भटम् TārkiRa. 352.15.

**अनिष्टभ्रमबुद्धि** (aniṣṭa-bhramabuddhi) *adj.* for whom the erroneous cognition is not acceptable प्रमासाक्षात्कारस्तावत् तथेति चेन्न।… अनिष्टभ्रमबुद्धिमते षोढासंनिकर्षस्य प्रत्येकमिलितविकल्पानुपपत्तेः KhaṇḍanKhā. 600. 19.

**अनिष्टमध्य** (aniṣṭa-madhya) *n.* [Loc.] during a calamity or difficulty अनिष्टमध्येऽप्यद्य संभविष्यति गोविन्दसंदर्शनं भर्तृदारिकायाः SamudraMa. 1.17(1)

**अनिष्टमात्र** (aniṣṭa-mātra) *n.* only undesirable consequence दिङ्नागस्यातिव्यापकतया लक्षणम् … अनिष्टमात्रस्यातिप्रसञ्जकत्वात् NyāyVārPari. 651. 6; शब्दान्वाख्यानवैयर्थ्यमिति चेत्, नैवम्, वादिनोऽनिष्टमात्रापादनात् PramāMī. 69. 19 (*on* ii. 1. 34); आद्ये इष्टासिद्धेः … अन्त्येऽनिष्टमात्रनिवृत्तये LaŚabdeŚe. ii. 205. 3.

**अनिष्टयज्ञ** (aniṣṭa-yajña) *adj.* who has not performed a sacrifice अनिष्टयज्ञा न तरन्ति लोकान् GopBr. i. 5. 25 (140. 15); स्त्रियम् … दाहयित्वा पतिः … अनिष्टयज्ञो वा … स्त्र्यन्तराभावे पुनर्दारानग्नींश्च विधिवदाहरेत् Mitā. 30.5 (*on* 1. 89); इष्टयज्ञानामनिष्टयज्ञानां च द्वादशाहे … कर्मभेदः स्यात् MayūMāli. 181. 10 (*on* ii. 4. 2)

**अनिष्टयोग** (aniṣṭa-yoga) *m.* **I** association with what is undesirable (घोरेऽस्मिन् भूतसंसारे) घोरे प्रमादालस्यवतां भीषणे, इष्टवियोगानिष्टयोगोत्पत्त्या ManuBh. i. 30.17 (*on* 1. 50); अनिष्टयोगः प्रियविप्रयोगिता प्रजाविलोपः पुररोधनं परैः।… कथागमेष्वेव न यत्र (पुरि) जातुचित् RāghPāṇ.(Dha.) 1.46; अनिष्टयोगात् प्रियविप्रयोगतः …। अनेकजन्मव्यसनप्रबन्धतो बिभेति नो यस्तपसो बिभेति सः SubhāRaSaṁ. 905; देहे देहिनि …। जन्ममृत्युजराशोकानिष्टयोगाग्निपीडिते। हीनसत्त्वशरीरादौ न विशेषो विभाव्यते BhaviP. 85B. 3 (i. 43. 49); **II** association with what is inauspicious तस्यामजनयद् राजा राजारामाभिधं सुतम्। महतेऽनिष्टयोगाय ग्रहं केतुमिवोद्गतम् ParamāKā. 52.18.

**अनिष्टरूप** (aniṣṭa-rūpa) *n.* undesired form (of words) न त्वत्र परमगार्ग्यशब्दात् प्रत्ययः, तस्य यञन्तत्वाभावात्। तस्माच्च फकि विधीयमाने पारमगार्ग्यायण इत्यनिष्टरूपप्रसङ्गः Pradī. i. 579A. 14 (*on* i. 1. 72); ननु चाभ्यासदीर्घो विशेषत्वात् सामान्यविहितह्रस्वेत्त्वयोर्बाधकः स्यात्। ततश्चानिष्टरूपं स्यात् Prasā. ii. 152. 18; *adj.* [*f.* -ā] **I** having an undesirable nature न प्राप्नोति किल्बिषम् अनिष्टरूपं पापम् GītāBh.(Śaṅ.) 130.3 (*on* 4.21); कर्मस्विष्टानिष्टरूपेषु व्यापारयन् जीवमीश्वरो वैषम्यादिदोषभाजनं स्यात् BrahmSūBh.(Śrī.) ii. 156. 5 (*on* ii. 3. 40); इष्टानिष्टरूपो विषयः पुरुषसंबन्धो भवति SarvaDaKau. 106.12; एकसाधनजन्ये इष्टानिष्टरूपे फलद्वये एककालावच्छेदेनैकत्रोत्कटेच्छा अपरत्रोत्कटद्वेषश्च न संभवति RasGaṅ. 689. 11; **II** having the nature of an undesired consequence अनिष्टापत्तिहेतुरनवस्था दूषणम् न पुनरनिष्टरूपेति चेन्न। अनिष्टरूपैवानवस्था दूषणम् NyāySu.(Ja.) 363A.9 (*on* ii. 2. 6)

**अनिष्टरूपतस्** (aniṣṭarūpa-tas) *adv.* because of being of the nature of what is not desired (नियोगः) न क्रिया कर्तृसंबन्धात् फलं नानिष्टरूपतः BṛĀraUBhVā.(Sambandha.) 623.

**अनिष्टरूपाचारोपचारा** (aniṣṭa-rūpācāropacārā) *adj.* (*f.*) having a bad appearance, conduct and manners स्त्रियम् … नानिष्टरूपाचारोपचाराम् … व्यवायं गच्छेत् CaraS. i. 8. 22.

**अनिष्टर्क्यम्** (a-niṣṭarkyám) *adv.* [P. iii. 1. 123; vi. 2.160; DEBRU. 473; 792] not loosely गर्भाणां धृत्या अप्रपादाय निष्टर्क्यं बध्नाति तस्माद्योनेर्गर्भा मुच्यन्ते यदनिष्टर्क्यं बध्नीयान्न योनेर्गर्भा मुच्येरन् KāṭhS. 24. 5 (ii. 95.2); KapiKaS. 37. 6 (200. 4)

**अनिष्टलक्षण** (aniṣṭa-lakṣaṇa) *adj.* having inauspicious charac-

teristics स्वजनविभवजीवितक्षयं जनयति वज्रमनिष्टलक्षणम् BṛSaṁ. 80.18.

**अनिष्टलग्न** (aniṣṭa-lagna) *n.* inauspicious *lagna* न कार्यमाधानमनिष्टलग्ने VasiS. 24.40.

**अनिष्टलाभ** (aniṣṭa-lābha) *m.* obtainment of what is not desired चकारास्त्वौत्सर्गिकाभीष्टलाभकाले तत्तदभीष्टानामलाभमनिष्टनिवारणोपायेऽप्यनिष्टलाभं च समुच्चिन्वन्ति VīraMi. 331.28 (*on* 1.276)

**अनिष्टलिङ्गी** (aniṣṭaliṅg-ī) *f.* quail having marks which are indicative of inauspiciousness वर्तिकानिष्टलिङ्गी ParyāRaMā. 787.

**अनिष्टवचन** (aniṣṭa-vacana) *n.* unpleasant words सहेतानिष्टवचनं कामं क्रोधं च वर्जयेत् NītiSā. 13.9; SūktiRa. 138.3.

**अनिष्टवत्** (an-iṣṭava(n)t) *adj.* who has not performed a sacrifice काव्यार्थतत्त्वावगमो न वृद्धाराधनं विना। अनिष्टवान् राजसूयं कः स्वर्गं मुख्यमश्नुते VyaktiVi. 38.26.

**अनिष्टवत्** (aniṣṭa-vat) *adv.* like an ill omen यत्र यत्रोपविष्टः स पापनिष्ठोऽप्यनिष्टवत्। अभवन् पीडितग्रामीणाक्रन्दमुखरा दिशः RājTa.(Śrī.) 1(3).65.

**अनिष्टवर्ष** (aniṣṭa-varṣa) *adj.* showering ill omens (युद्धम्) अनार्तवं क्रूरमनिष्टवर्षं बभूव तत्संहरणं प्रजानाम् MahāBhā. viii. 53.3.

**अनिष्टवस्तु** (aniṣṭa-vastu) *n.* undesirable object यत्नाक्षेपः स यत्नस्य कृतस्यानिष्टवस्तुनि। विपरीतफलोत्पत्तेरानर्थक्योपदर्शनात् Kāvyāda. 2.148; अनपेक्षणमिष्टानिष्टवस्तुष्ववज्ञाख्यापनार्थम् JayaMa. 330.20 (*on* 6.3); ईप्सितानीप्सिते न स्तो यस्येष्टानिष्टवस्तुषु।… स मुक्तः YogVā. v. 16.19.

**अनिष्टवस्तुविक्षेप** (aniṣṭavastu-vikṣepa) *m.* rejection of an undesirable object अनिष्टवस्तुविक्षेपो विधूतम् PratāYaBhū. 110.7.

**अनिष्टवाच्** (aniṣṭa-vāc) *adj.* speaking unpleasant words अनिष्टवाक् परुषवाक् … राजद्विट् कुमन्त्री ŚukraNī. 4(1).100.

**अनिष्टवारण** (aniṣṭa-vāraṇa) *n.* warding off of an evil राजा न्यायेन … प्रजाः परि … हिताचरणेनानिष्टवारणेन च पालयन् कृतात् … षड्भागम् … आदत्ते VīraMi. 366.13 (*on* 1.335–336)

**अनिष्टवारनक्षत्रतिथियोग** (aniṣṭavāranakṣatratithi-yoga) *m.* combination of inauspicious day (of the week), asterism and lunar day अनिष्टवारनक्षत्रतिथियोगो मृतिप्रदः ĪśānŚiPa. i. 45.25.

**अनिष्टवार्ता** (aniṣṭa-vārtā) *f.* bad news नास्ति कुमार इति विरलविरलं प्रवृत्तायामनिष्टवार्तायाम् TilaMañ. 193.3.

**अनिष्टविघात** (aniṣṭa-vighāta) *m.* removal of evil इष्टार्थप्राप्तयेऽनिष्टविघाताय च लालसः। कर्म तत् कुरुते कामी शुभाशुभफलोदयम् AhirbuS. 14.23; इष्टस्य प्राप्तयेऽनिष्टविघाताय च चेतनः। यदयं कुरुते कर्म त्रिविधं त्रिविधात्मकम् LakṣmīT. 12.29.

**अनिष्टविचेष्टित** (aniṣṭa-viceṣṭita) *n.* undesirable behaviour पापिष्ठं पापहेतुर्वा यश्चानिष्टविचेष्टिनम् (? यच्चानिष्टविचेष्टितम्)। अमङ्गलकरं वस्तु प्रार्थितार्थविघाति च YaśasCam. ii. 261.13.

**अनिष्टविधान** (aniṣṭa-vidhāna) *n.* injunction of what is undesirable अनिष्टविधानं विध्याभासः AlaṅkāRa. 49; विलम्बस्वेति विहितस्यावस्थानस्येष्टस्य वस्तुनः … व्रजेत्यनिष्टविधानात् किं भणामेति AlaṅkāRa. 49(53)

**अनिष्टविधि** (aniṣṭa-vidhi) *m.* assertion of what is undesirable इष्टनिषेधेनाक्षेपमुक्त्वा समानन्यायत्वादनिष्टविधिनाक्षेपमाह AlaṅkāSa. 120.1; आक्षिप्यतेऽत्र विधिना न यतो निषेधः स्वार्थे विधावपि न पर्यनुयोगबुद्धिः। तस्मादनिष्टविधिरेष विलक्षणत्वात् नाक्षेपमध्यपतितोऽपि तु भिन्न एव AlaṅkāRa. 49(13); अनभिमतमेव प्रियतमप्रस्थानं यदा प्रमुख एवानुमन्यते तदायमनिष्टविधिराभासे पर्यवस्यति Ekāva. 8.32(8) (275.11); इष्टनिषेधस्यानिष्टविधेश्च बाधितत्वादाक्षेपे विरुद्धत्वादनुप्रवेशेन विरोधगर्भालंकारनिरूपणस्य संप्रति प्रस्तावः Ekāva. 8.33(1) (276.4)

**अनिष्टविध्याभास** (aniṣṭavidhy-ābhāsa) *m.* apparent or unreal assertion of what is not desirable (उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतीत्यर्थं निषेधाभास आक्षेपः) अनिष्टविध्याभासश्च AlaṅkāSa. 120.2; अनिष्टविध्याभासः … यत्रानभिमतपिशुनो विधिर्निषेधं प्रकाशयति। तत्रानिष्टस्यानिष्टत्वादेव विधिर्बाधितः प्रतिषेधमाक्षिपतीत्यन्वर्थाभिधानोऽयम् Ekāva. 8.32 (275.2); समानार्थतयानिष्टविध्याभासोऽप्याक्षेप इत्यभ्युपगम्यते PratāYaBhū. 442.7.

**अनिष्टवियोग** (aniṣṭa-viyoga) *m.* separation from what is undesirable इष्टयोगमनिष्टवियोगं वात्मनः प्रयोजनं पश्यंस्तदुपायार्थी यो भवति AitUBh. 242.13 (*on* 1.0); अनिष्टवियोगेष्टसंयोगोद्देशेनानुष्ठानसमुपजनितधर्मे संयोगविभागहेतौ लक्षणस्यासंभवित्वात् TattvPradī.(Ci.) 184.6.

**अनिष्टवियोगचिकीर्षा** (aniṣṭaviyoga-cikīrṣā) *f.* desire for separation from what is undesirable न चेष्टयोगचिकीर्षा आत्मनोऽनिष्टवियोगचिकीर्षा च शास्त्रकृता, सर्वप्राणिनां तद्दर्शनात् AitUBh. 243.9 (*on* 1.0)

**अनिष्टविरह** (aniṣṭa-viraha) *m.* separation from what is undesired भयार्थकधातुयोगे भयहेतुत्वेन संभावितमपादानमित्येकः सूत्रार्थः। अनिष्टविरहानुकूलव्यापाररूपत्राणार्थकधातुयोगे तदनिष्टप्रयोजकं तदित्यपरः। अनिष्टं दुःखमेव सर्वत्रानुगतम् VyutpaVā. 179.10.

**अनिष्टविरोधिन्** (aniṣṭa-virodhin) *adj.* which opposes what is undesirable सुखदुःखाभावतदन्यतरसाधनानिष्टविरोधिषु तत्त्वेन ज्ञातेषु पुरुषस्येच्छा भवति VīraMi.(Paribhāṣā.) 65.21.

**अनिष्टविशेष** (aniṣṭa-viśeṣa) *m.* particular type of harm नित्याग्निहोत्रादिशास्त्रमपि … इष्टविशेषप्राप्तिम् अनिष्टविशेषपरिहारं वा किमपि प्रयोजनं पश्यत् अग्निहोत्रादीनि कर्माणि विधत्ते BṛĀraUBh. 267.4 (*on* ii. 1.20); अस्नातस्यानिष्टविशेषसंबन्धप्रतिपादनार्थत्वात् CaturCin. iii(2). 391.8; श्येनस्य हिंसत्स्याद्यर्थत्वेऽपि … नानिष्टविशेषं प्रति हिंसात्वेन साधनत्वमिति VyutpaVā. 161.8.

**अनिष्टविशेषपर्यवसायिन्** (aniṣṭaviśeṣa-paryavasāyin) *adj.* resulting in a particular type of undesired meaning ततश्च विधेरुपकरणीभूतो निषेध इति विधिनायं निषेधोऽनिष्टविशेषपर्यवसायी AlaṅkāSa. 120.5.

**अनिष्टविषय** (aniṣṭa-viṣaya) *adj.* referring to what is undesired इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानि इति चेत्, न, अकरणे प्रत्यवायश्रवणात्। प्रत्यवायशब्दो हि अनिष्टविषयः TaiUBh. 189.1 (*on* 1.1); *m.* **A** undesired object प्रवृत्तयस्ता द्विविधा भवन्ति। इष्टानिष्टविषयाधिगमप्रतिषेधार्थाः NyāyVār. 3.5 (*on* i. 1.1); प्रमित्सितधर्मविशिष्टः पक्ष इत्यपि न। अप्रमित्सतोऽप्यनिष्टविषयेऽनुमानोदयदर्शनात् TattvPradī.(Ci.) 247.5; **B** improper sphere अच्प्रकरणे शक्तिलाङ्गुलाङ्कुशेत्यत्र वार्तिके घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम्, तेनानिष्टविषये नोपतिष्ठते Pradī. iv. 13A.32 (*on* iv. 1.1)

**अनिष्टविषयत्व** (aniṣṭaviṣaya-tva) *n.* **A** the state of having reference to an undesired object प्रवृत्तेरनिष्टविषयत्वं निवृत्तेरिष्टविषयत्वं विसंवादः TattvCin. i. 500.3; **B** the state of having the sphere of undesired consequence साधनस्य हि प्रमाणबाधो दूषणम्, न त्वापादनस्य। तस्यानिष्टविषयत्वात् NyāySu.(Ja.) 31A.12 (*on* i. 1.1)

**अनिष्टविषयपरिहार** (aniṣṭaviṣaya-parihāra) *m.* exclusion of the domain of undesired consequence न त्वनिष्टविषयपरिहारेणेष्टविषये तस्याः (संज्ञायाः) प्रवृत्तिर्लभ्या Pradī. ii. 258B.36 (*on* i. 4.42)

**अनिष्टविषयप्रवृत्ति** (aniṣṭaviṣaya-pravṛtti) *f.* inclination or urge towards undesired objects अनिष्टविषयप्रवृत्ताविष्टविषयनिवृत्तौ च भेदाग्रहो हेतुरिति TattvCin. i. 500.4.

**अनिष्टविषयसाधन** (aniṣṭaviṣaya-sādhana) *n.* means of bringing about an undesired object अनिष्टविषयसाधनोपनिपाते तज्जिहासोर्हानाशक्यता भयम् NyāyVār. 368.15 (*on* iii. 1.19)

**अनिष्टविषयस्मृति** (aniṣṭaviṣaya-smṛti) *f.* remembrance of an undesired object स्मृतिज्ञानमपि संस्कारोद्बोधाधीनं न पुरुषप्रयत्नाधीनम्, सदृशदर्शनाददृष्टवशाद्वा संस्कारोद्बोधे प्रयत्नमन्तरेणापि अनिष्टविषयस्मृतिदर्शनात् VivaPraSaṁ. 322.11.

**अनिष्टविषयानुस्मरण** (aniṣṭaviṣayānusmaraṇa) *n.* remembrance of an undesired object अनिष्टविषयानुस्मरणात् तत्साधनजिहासानुष्ठानलक्षणः — शब्दविशेषो रुदितम् NyāyVār. 369.1 (*on* iii. 1.19)

**अनिष्टविष्टप** (aniṣṭa-viṣṭapa) *m., n.* undesired world, hell खलानां चतुर्दश कुलानि पुरा प्रादुर्बभूवुः … प्रादुरासीत् … अष्टममनिष्टविष्टपात् YaśasCam. i. 442.2 (comm. नरकात्)

**अनिष्टविसर्जनीयप्राप्ति** (aniṣṭavisarjanīya-prāpti) *f.* application of an undesired *ḥ* (i.e. *visarga*) पर्याये चाश्रीयमाणे पक्षेऽनिष्टविसर्जनीयप्राप्तिः Pradī. vii. 161.11 (*on* viii. 3.15)

**अनिष्टविहग** (aniṣṭa-vihaga) *m.* inauspicious bird पुष्यस्नानं नृपतेः कर्तव्यम् — कौशिकगृध्रप्रभृतिभिरनिष्टविहगैः परित्यक्ते।… वनोद्देशे BṛSaṁ. 48.4.

**अनिष्टवृत्तिता** (aniṣṭavṛtti-tā) *f.* the state of having existence in an undesired object इष्टवृत्तितया गृह्यमाणोऽनिष्टवृत्तितया चागृह्यमाणो धर्मः स्वाश्रये प्रवर्तकः TattvCin. i. 520.3.

**अनिष्टवेष** (aniṣṭa-veṣa) *adj.* improperly dressed अकर्मशीलं च महाशनं च … नृशंसम्। अदेशकालज्ञमनिष्टवेषमेतान् गृहे न प्रतिवासयीत MahāBhā. v. 37.31.

**अनिष्टव्यवच्छेद** (aniṣṭa-vyavaccheda) *m.* elimination of what is not desired अनिष्टव्यवच्छेदेनैक एव घटप्रातिपदिकार्थः — उपलक्षणीयः PramāMā. 19.16.

**अनिष्टव्यापकप्रसञ्जन** (aniṣṭavyāpaka-prasañjana) *n.* causing the

contingency of an undesired pervader **अनिष्टव्यापकप्रसञ्जनं तर्कः** SaptaPa. 164(49); अनग्निश्चेन्निर्धूमः स्यादिति व्याप्याङ्गीकारेणानिष्टव्यापकप्रसञ्जनं तर्क इति लक्षणमालायाम् TārkiRa. 191.4; व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनात्मकस्तर्कः NyāySu.(Ja.) 91A. 9 (*on* i. 1.1); 477B. 3 (*on* iii. 2. 1); प्रसङ्गश्च व्याप्तिमूलः। व्याप्याङ्गीकारे अनिष्टव्यापकप्रसञ्जनं तर्कः NyāySu.(Ja.) 222A.2 (*on* i. 4. 6)

**अनिष्टव्याप्तापादन** (aniṣṭavyāptāpādana) *n.* causing the contingency of an undesired concomitant **अनिष्टव्याप्तापादने** सत्तर्कत्वेन जातित्वाभावात् NyāyPari. 247. 8.

**अनिष्टशंसित्री** (aniṣṭa–śaṁsitrī) *adj.* (*f.*) foreboding harm वामामृतमयी नाडी संमताभीष्टसूचिका। वहन्त्यनिष्टशंसित्री संहर्त्री दक्षिणा पुनः YogŚa. 5. 63.

**अनिष्टशंसिन्** (aniṣṭaśaṁs–in) *adj.* foreboding or predicting evil प्रसह्य भरताधीशे कृतान्त इव सर्पति। अनिष्टशंसिनस्तेषामुत्पाता अभवन्निति TriṣaŚaPuC. i. 4. 340.

**अनिष्टशक्तिज्ञापक** (aniṣṭaśakti–jñāpaka) *adj.* suggestive of the power of causing evil सत्यं विधिप्रतिषेधनिबन्धनावेव धर्माधर्मौ, तौ तु विधिप्रतिषेधौ तयोरिष्टानिष्टशक्तिज्ञापकौ TātpaṬ.(U.) 112.16 (*on* 2. 249)

**अनिष्टशङ्का** (aniṣṭa–śaṅkā) *f.* fear or apprehension of what is harmful or undesirable सधीरमवदम् — सखि ··· कृतमनिष्टशङ्काया (? ङ्कया) TilaMañ. 294.5; यथा च वेणीसंहारे भानुमत्या दुःखप्रदर्शनेन दुर्योधनस्यानिष्टशङ्कया पाण्डवविजयशङ्कया वा रतेः विधूननमिति Avalo. 13. 6 (*on* 1. 33); अहम् ··· सदानिष्टशङ्कापङ्काकुला भृशम् ŚāliC. 7. 67; संचारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः SāhiDa. 195.4; स्फुरन्नासीत् ··· हृदये राज्ञश्चिन्तौघोऽनिष्टशङ्कया RājTa.(Śrī.) 1(7). 13.

**अनिष्टशङ्किन्** (aniṣṭaśaṅk–in) *adj.* [*f.* -ī] apprehensive of evil or harm रक्षोनाथोऽपि ··· अनिष्टशङ्की निपतति तरसा मेघनादोपकण्ठम् MahāvīC. 6.42; अनिष्टशङ्की स्नेहौघो घटयति मां तथापि वक्तुम् Bhaṭṭi. 10. 73; पप्रच्छ येनान्तरनिष्टशङ्की रामः शुचां कारणमागतांस्तान् RāmC.(App. 2.) 39. 9; किं च मां दृष्ट्वानिष्टशङ्किनीवात्मनो वारंवारमपवारिततनुस्तनीयसा स्तनांशुकेन संकुचसि TilaMañ. 248.19.

**अनिष्टशतशङ्किता** (aniṣṭaśataśaṅki–tā) *f.* the state of being apprehensive of hundreds of evils श्रोत्रे तु तस्य पपतुर्नृपतेर्न किंचिद् भैम्यामनिष्टशतशङ्कितयाकुलस्य NaiṣC. 4. 117.

**अनिष्टशब्द** (aniṣṭa–śabda) *m.* **I** ominous utterance क्व यासि तिष्ठ मा गच्छ ···। अनिष्टशब्दा मृत्यर्थम् AgniP. 229.6; **II** the word *aniṣṭa* अनिष्टशब्देन सोऽकामयत बहु स्यामित्याद्युक्तेऽष्टविकारा व्यावृत्ताः ŚrutaPra. ii. 358.30 (*on* ii. 3.18); *adj.* [*f.*-ā] **I** where there are evil or inauspicious sounds अनिष्टशब्दां संकीर्णां जन्तुव्याप्तामथाविलाम्। पूतिगन्धां तथा भूमिं वर्जयेच्छ्राद्धकर्मणि BrahmāṇḍP. ii. 14. 30; (यमस्तु वर्ज्यप्रदेशमाह। रूक्षम् ···। देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणि) अनिष्टशब्दम्। अश्राव्यशब्दम् SmṛtiCan. v. 144.9; अनिष्टशब्दं प्रतिकूलशब्दमित्यर्थः CaturCin. iii(1). 163.3; VīraMi.(Śrāddha.) 139.27; **II** making undesirable sounds (गोप्यः) अनिष्टशब्दैर्वलयैरपोढाः ··· प्रियमाप्तुमीषुः Yādavā. 8. 56 (comm. अनिष्टशब्दैः अभिसरणप्रकाशकतया अनभिमतशब्दैः)

**अनिष्टशब्दता** (aniṣṭaśabda–tā) *f.* the state of being an improper word अनुकरणस्येतिकरणपरत्वप्रतिषेध उच्यते। किं प्रयोजनम्। अनिष्टशब्दनिवृत्त्यर्थः। अनिष्टशब्दता मा भूदिति MahāBh. i. 344.1 (*on* i. 4. 62)

**अनिष्टशब्दनिवृत्त्यर्थ** (aniṣṭaśabdanivṛtty–artha) *adj.* meant for the setting aside an incorrect word अनुकरणस्येतिकरणपरत्वप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः Vār. *on* P. i. 4. 62.

**अनिष्टशब्दसंकीर्ण** (aniṣṭaśabda–saṅkīrṇa) *adj.* full of inauspicious sounds अनिष्टशब्दसंकीर्णं जन्तुव्याप्तमथापि वा। पूतिगन्धां तथा भूमिं श्राद्धकर्मणि वर्जयेत् VāyuP. ii. 16. 20.

**अनिष्टशरीर** (aniṣṭa–śarīra) *n.* undesired body प्रकृष्टादधर्मात् स्वल्पधर्मसहितात् प्रेततिर्यग्योनिस्थानेष्वनिष्टशरीरेन्द्रियविषयदुःखादिभिर्योगो भवति PadārthaSaṁ. 280. 24.

**अनिष्टशरीरानुपपत्ति** (aniṣṭaśarīrānupapatti) *f.* untenability of (attainment of) an undesirable body नित्यानां कर्मणाम् अनुष्ठानात् प्रत्यवायस्य अप्राप्तिः, प्रतिषिद्धस्य च अकरणात् अनिष्टशरीरानुपपत्तिः GītāBh.(Śaṅ.) 551. 9 (*on* 18. 66)

**अनिष्टशान्ति** (aniṣṭa–śānti) *f.* alleviation of evil पत्युपासनमनिष्टशान्तये योषितामिति यथातथं वचः Surath. 6. 78; अनिष्टशान्त्यै नियतमर्चयेत्तान् ग्रहान् TantrRā. 20.26.

**अनिष्टश्रवण** (aniṣṭa–śravaṇa) *n.* hearing of what is unpleasant अनिष्टश्रवणे चैव क्षेपे चाद्भुतदर्शने।··· एतेष्वेवं गतिं प्राज्ञो विकलां संप्रयोजयेत् NāṭyaŚā. 12.37; ViṣṇuDhaP. iii. 29. 5; दुःखितस्य राजर्षेरपरमनिष्टश्रवणं परिहरन्नेवं ब्रवीमि VeṇīSaṁ. 6. 359.

**अनिष्टश्रुत** (aniṣṭa–śruta) *n.* hearing of what is not pleasant दृष्टनष्टानुसरणे इष्टानिष्टश्रुते तथा। इष्टार्थख्यापने चैव चिन्ताध्याने तथैव च।··· विलम्बिता च दीप्ता च काकुर्मन्द्रा च वै भवेत् NāṭyaŚā. 17. 121.

**अनिष्टश्रुति** (aniṣṭa–śruti) *f.* **I** hearing of what is not pleasant जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टश्रुतीक्षणैः BhaktiRaSi. ii. 4.46; (जाड्यम्) अनिष्टश्रुत्या UjjvaNīMa. 363.4; **II** Vedic statement indicating an undesirable result इदं च बलिदानं नित्यम्। अकरणेऽनिष्टश्रुतेः VīraMi.(Tīrtha.) 438.13.

**अनिष्टसंयोग** (aniṣṭa–saṁyoga) *m.* contact with what is undesirable व्याधेरनिष्टसंस्पर्शात् (v.l. °संयोगात्) ···। दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्तते MahāBhā. iii. 2.21; घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद् दुःखमुत्पद्यते NyāyBh. 276.14 (*on* iv. 1.58); यौवनेऽनिष्टसंयोगादिष्टलाभे वियोगतः। रागाद्याक्रान्तचित्तस्य कुतः सौख्यं शरीरिणः ĪśānŚiPa. ii. 65. 34.

**अनिष्टसंयोगहेतु** (aniṣṭasaṁyoga–hetu) *m.* cause of contact with what is undesirable अभिचारादिजनिते दुरिते शत्रोरिष्टवियोगानिष्टसंयोगहेतौ च लक्षणस्यासंभवित्वात् TattvPradī.(Ci.) 184. 8.

**अनिष्टसंवास** (aniṣṭa–saṁvāsa) *m.* association with what is undesirable दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः। दुःखं चानिष्टसंवासो दुःखमिष्टवियोगजम् MahāBhā. xii. 137. 59.

**अनिष्टसंस्कारापेक्ष** (aniṣṭasaṁskārāpekṣa) *adj.* relating to consecration (of deities) who are not offered (offerings) संस्कारः संस्कार्यत्वाविशेषात् सर्वासां प्रयाजानूयाजदेवतानां स्यात्। संस्थावचनं चार्थवादः अनिष्टसंस्कारापेक्षः ŚaṅkarKāBh. 207. 10 (*on* iv. 3. 14)

**अनिष्टसंस्पर्श** (aniṣṭa–saṁsparśa) *m.* contact with what is undesirable व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात्। दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्तते MahāBhā. iii. 2.21; SkandP. i(2). 46. 27.

**अनिष्टसगन्ध** (aniṣṭa–sagandha) *m.* disagreeable smell and likewise varieties इष्टानिष्टसगन्धश्च मधुरः कटुरेव च।··· एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः SarvaSiSaṁ. 11.38.

**अनिष्टसङ्ग** (aniṣṭa–saṅga) *adj.* which has contact with what is undesirable व्याध्यादिदोषपरिपूर्णमनिष्टसङ्गं पूतीदमङ्गमपनीय विवर्ध्य धर्मम्। शुद्धं ददाति SubhāRaSaṁ. 33.

**अनिष्टसंग्रह** (aniṣṭa–saṅgraha) *m.* inclusion of what is undesirable विशेषमात्रं हेतुः स्यात् साधर्म्यमात्रनिराकरणं च स्यात् साधर्म्यमात्रनिराकरणे विशेषमात्रपरिग्रहे च इष्टानिष्टसंग्रहः NyāyVār. 128.13 (*on* i. 1.35)

**अनिष्टसंदर्शन** (aniṣṭa–sandarśana) *n.* seeing of what is ominous जरसा विशीर्णस्यानिष्टसंदर्शनादिना वा विदिते प्रत्यासन्ने मृत्यौ मुमूर्षतो न श्रुतिविरोधः ManuBh. i. 507.24 (*on* 6.32)

**अनिष्टसप्तविंशतिसंख्या** (aniṣṭa–saptaviṁśatisaṅkhyā) *f.* undesirable number twentyseven इतश्च पञ्चजनशब्दो न पञ्चविंशतितत्त्वान्याचष्टे अनिष्टसप्तविंशतिसंख्याप्रसङ्गात् PrakaVi. 345.18.

**अनिष्टसमागम** (aniṣṭa–samāgama) *m.* association with what is undesirable प्रियाणां विप्रयोगेन तथानिष्टसमागमात्। ईप्सितानामलाभाच्च दुःखं मानुषगोचरम् PadmP.(Ra.) 2.164.

**अनिष्टसंपत्ति** (aniṣṭa–sampatti) *f.* attainment of what is undesirable प्रज्ञावान् स्वतन्त्र इष्टमेवात्मनः संपादयेन्नानिष्टमनिष्टसंपत्तिरप्यस्योपलभ्यते Bhām. 493. 9 (*on* ii. 3.36)

**अनिष्टसंप्रयोग** (aniṣṭa–samprayoga) *m.* **I** association with what is undesirable कामक्रोध° ··· °इष्टवियोगानिष्टसंप्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिन् शरीरे किं कामोपभोगैः MaiU. 1.3; अनिष्टसंप्रयोगाच्च विप्रयोगात् प्रियस्य च। मानुषा मानसैर्दुःखैर्युज्यन्ते MahāBhā. iii. 206. 16; xi. 2. 18; इष्टवियोगानिष्टसंप्रयोगविभावः ··· दुःखमयव्यभिचारी चित्तवैधुर्यलक्षणः शोकः स्थायीभावश्चर्वणीयतां गतः करुणो रसः Kāvyānu.(He.) 91. 9; संप्रयोगस्यापीन्द्रियनिष्ठक्रियाद्वारा कृतिसाध्यत्वेन साक्षात्तदसाध्यत्वात्। परंपरया कृतिसाध्यत्वस्य च ज्ञानेऽपि संभवात्। अनिच्छतश्चानिष्टसंप्रयोगा(?ग)दर्शनात् Nyāyāmṛ. 624B.11; AdvaiSi. 872. 12; **II** association with what is harmful ते नित्यं यमविषये विभिन्नदेहाः क्रोशन्तः सततमनिष्टसंप्रयोगैः। शुष्यन्ते परिगतवेदनाशरीराः ··· अधर्मयातनाभिः VāyuP. i. 14. 31; LiṅgaP. i. 88.64.

**अनिष्टसंप्राप्ति** (aniṣṭa–samprāpti) *f.* attainment of what is undesirable संबन्धानुपपत्तौ इष्टार्थानाप्त्यनिष्टसंप्राप्तौ। जन्यजनकोभयगुणक्रियाविरोधे च

विषमः स्यात् AlaṅkāKau.(Vi.) 373.6.

**अनिष्टसंबन्धजनित** (aniṣṭasambandha-janita) *adj.* caused by association with what is undesirable व्यसनमिष्टवियोगानिष्टसंबन्धजनितं दुःखम् VīraMi.(Vyavahāra.) 32.33.

**अनिष्टसंबन्धिन्** (aniṣṭa-sambandhin) *adj.* having relation with what is undesirable ब्रह्मानिष्टस्रष्टृ न भवति, जीवाद्वानिष्टसंबन्धिनो नाभेदं क्षमते, स्वतन्त्रचेतनत्वात्, देवदत्तवत् PrakaVi. 448.18.

**अनिष्टसंभावना** (aniṣṭa-sambhāvanā) *f.* apprehension of harm व्याघ्राद् बिभेति ··· इत्यादौ ·· भयं च परतोऽनिष्टसंभावना VyutpaVā. 179.3.

**अनिष्टसंभिन्न** (aniṣṭa-sambhinna) *adj.* mixed with what is undesirable अनिष्टं नरकादिफलम्। इष्टं स्वर्गादिफलम्। मिश्रमनिष्टसंभिन्नं पुत्रपश्वन्नादि GītāBh.(Rā.) 664.5 (*on* 18.12)

**अनिष्टसंभिन्नविषया** (aniṣṭasambhinna-viṣayā) *adj.* (*f.*) pertaining to what is mixed with what is undesirable सविघ्ना दुःखमेव प्रसूते। निर्विघ्नाप्यनिष्टसंभिन्नविषया तद्विपरीता च NyāyVārPari. 79.5.

**अनिष्टसंभोगप्रसङ्ग** (aniṣṭasambhoga-prasaṅga) *m.* contingency of experiencing what is undesirable ब्रह्मणो हृदयायतनत्वेऽनिष्टसंभोगप्रसङ्गात् जीव एव हृदयायतन उपास्यः PrakaVi. 171.14.

**अनिष्टसागर** (aniṣṭa-sāgara) *m.* ocean of misery रोहिणीशकटमर्कनन्दनो यदि भिनत्ति रुधिरोऽथवा शिखी। किं वदामि यदनिष्टसागरे जगदशेषमुपयाति संक्षयम् BṛSaṁ. 47.14.

**अनिष्टसाधन** (aniṣṭa-sādhana) *n.* **I** acquisition of what is not desirable (हानोपादाननिर्मुक्ता) अनिष्टसाधने हानं परित्यागक्रिया। इष्टसाधने उपादानं स्वीकारक्रिया LalitāTriBh. 309.10 (*on* 33); **II** means of what is undesirable विषभक्षणभावना अनिष्टसाधनम् NyāyKuA. ii. 105.5; ब्राह्मणहननमदृष्टाविरोधीष्टसाधनं न भवतीत्यर्थादनिष्टसाधनं भवति PrakaVi. 78.9; यन्नेत्रस्यान्तः शङ्कुकण्डूयनं तदनिष्टसाधनम् Nyāyāmṛ. 398A.4; तत्र विषशब्देनानिष्टसाधने ·· लक्षिते Nyāyāmṛ. 461B.5; शत्रोरन्नभोजने प्रसक्ते आप्तेनोक्तस्य विषमित्यादेः यदि शत्रोरन्नं भुज्यते, तदा 'विषं भुङ्क्ष्वे'ति वाक्यार्थधीद्वारा शत्रोरन्नभोजनमनिष्टसाधनमित्यत्रापरं तात्पर्यम् LaCandr. 378.22; 665.20; 786.35; संध्यावन्दनादावनिष्टसाधनतद्वन्दनादिविरोधिनि तत्त्वेन ज्ञाते इच्छा तया तदनुष्ठानम् VīraMi.(Paribhāṣā.) 66.2; अनिष्टसाधनकलञ्जभक्षणादौ व्यभिचारवारणाय श्रेयः पदम् BhāṭṭCin. i. 7.14 (*on* i. 1.2); अनिष्टसाधनेऽपि आचार्यप्रवर्तितोऽहं करोमीत्यनुभवात् BhāṭṭCin. i. 9.4 (*on* i. 1.2); बलवद् यदनिष्टसाधनं न तदिष्टं पुरुषप्रवर्तकम् Vidvanmo. 6.27.

**अनिष्टसाधनता** (aniṣṭasādhana-tā) *f.* the state of being the means or cause of what is undesired निषेधोऽपि निषिद्धस्यानिष्टसाधनतां प्रमापयंस्तद्विषयाननुष्ठानसंकल्पजननेन तदभावं व्यवस्थापयति NyāyRa. 935.12 (*on* 7.317); न ··· अनिष्टसाधनताज्ञानादहिकण्टकादौ द्वेष्ये द्वेषात् तन्नाशानुकूलो यत्न उत्पद्यते TattvCin. ii(2). 163.1; न हीष्टसाधनताज्ञानमन्तरेण प्रवृत्तिरनिष्टसाधनताज्ञानमन्तरेण निवृत्तिः Upask. 48.5 (*on* i. 2.1); 258.10 (*on* vi. 1.4); (द्वेषः) दुःखजन्याप्रयत्नजनकः। अत एवानिष्टसाधनताज्ञानाद् द्वेषद्वारा निवर्तते SarvaDaKau. 30.8; 31.22; विषं भुङ्क्ष्वेत्यादावपि प्रकृताच्छत्रुगृहभोजनात् विषभक्षणस्येष्टसाधनतोक्त्या भोजनस्यानिष्टसाधनता आक्षिप्यते Nyāyāmṛ. 461A.8; गुणस्यानिष्टसाधनतया दोषत्वेन दोषस्येष्टसाधनतया गुणत्वेन च वर्णनं लेशः RasGaṅ. 690.5; नन्वस्तु ··· इष्टानिष्टसाधनताबोधनेन विधिनिषेधयोर्धर्माधर्मप्रामाण्यम् BhāṭṭCin. ii. 4.6 (*on* i. 2.1)

**अनिष्टसाधनत्व** (aniṣṭasādhana-tva) *n.* the state of being the means or cause of what is undesired अतीतवर्तमानभोजनादेः समीहितसाधनत्वमनुभूयागामिन्यपि तज्जातीयत्वेनेष्टसाधनत्वमनुमाय प्रवर्तते, अनिष्टसाधनत्वं चानुमाय निवर्तते PrakaVi. 410.17; अन्यथा स्वकृत्यसाध्यत्वानिष्टसाधनत्वोपेक्षणीयत्वनिष्फलत्वज्ञानं प्रतिबन्धकं क्रियाज्ञानमेव प्रवर्तकं कल्प्येत TattvCin. iv(2). 23.1; 'न कलञ्जं भक्षये' दित्यादिनिषेधोऽपि ··· निषेध्यस्य कलञ्जभक्षणस्य परानिष्टसाधनत्वमाक्षिपन्पुरुषं ततो निवर्तयति ArthSaṁ. 106.10; MīmāKau. i. 64.21 (*on* i. 3.9); श्येनादीनां स्वतो न धर्मत्वं पारंपर्येणानिष्टसाधनत्वात् YuktiSneha. 31.25 (*on* i. 1.2); पदज्ञाप्येत्युक्ते अर्थापत्त्या पदज्ञाप्यमनिष्टसाधनत्वमादाय विषं भुङ्क्ष्वेति वाक्ये अतिव्याप्तिः स्यात् AdvaiSi. 664.11; 698.4; क्रत्वर्थसंज्ञपने विध्यधीनस्य इष्टसाधनत्वस्य निषेधाधीनस्यानिष्टसाधनत्वस्य च समावेशसंभवात् PūrvottaVāNaMā. 32.15; अनिष्टसाधनत्वे हि बुद्धेऽनिष्टबोधात्तद्गतं बलवत्त्वं झटिति बुध्यते MīmāKau. iii(1). 25.9 (*on* i. 2.7); यन्मत इष्टसाधनत्वं लिङर्थस्तन्मतेऽपि लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति MīmāNyāPra. 261.27; न कलञ्जं भक्षयेत् इत्यादौ लिङोऽनिष्टसाधनत्वे लक्षणा VīraMi.(Tīrtha.) 347.18; तत्र कवीनां कर्तुं, सहृदयानां च श्रोतुं कथं प्रवृत्तिः। अनिष्टसाधनत्वेन निवृत्तेरुचितत्वात् RasGaṅ. 31.17; 634.15; तत्तत्साधनत्वं विध्यर्थ इति पक्षे स्वर्गादिपदं तत्तत्फलतात्पर्यग्राहकमिति स्वीकारादनिष्टसाधनत्वं लिङर्थो नञ् तात्पर्यग्राहक इत्यन्ये VaiyāBhū. 91.4 (*on* 22)

**अनिष्टसाधनत्वकल्पन** (aniṣṭasādhanatva-kalpana) *n.* assumption of being the means or cause of what is undesired द्वेधापि व्यापारस्यानिष्टसाधनत्वकल्पनात् संभवत्यननुष्ठानसंकल्पजननेन निवारणमित्यविरोधः NyāyRa. 935.16 (*on* 7.317)

**अनिष्टसाधनत्वज्ञान** (aniṣṭasādhanatva-jñāna) *n.* knowledge of (something) being the means or cause of what is undesired अनिष्टसाधनत्वज्ञाने विद्यमानेऽपि हि यदानिष्टगतद्वेषापेक्षयेष्टगतरागस्योत्कटत्वरूपं बलवत्त्वं तदा सामग्रीसंपत्तिः MīmāKau. ii. 370.19 (*on* iii. 3.14); अनिष्टसाधनत्वज्ञानस्याभावकारणता च योगक्षेमसाधारणी MīmāKau. iii(1). 25.7 (*on* i. 2.7); द्वेषोऽनिष्टसाधनत्वज्ञानजन्यः Tarkāmṛ. 13.9

**अनिष्टसाधनत्वधी** (aniṣṭasādhanatva-dhī) *f.* knowledge of (something) being the means or cause of what is undesired अनिष्टसाधनत्वधीद्वेषादिद्वारैव ··· दुःखविशेषरूपदुर्वर्णतानुत्पत्तेरभावात् GuruCandr. ii. 197.11.

**अनिष्टसाधनत्वप्रतीति** (aniṣṭasādhanatva-pratīti) *f.* knowledge of (something) being the means of what is undesired हिंसात्वावच्छेदेन अनिष्टसाधनत्वप्रतीतेः आहारविहारादेवार्चनादिकमपि प्राणोपघातहेतुत्वेन हिंसारूपत्वात् अकर्तव्यं स्यादिति वाक्यार्थबोधः JñānBiPra. 7.22.

**अनिष्टसाधनत्वबुद्धि** (aniṣṭasādhanatva-buddhi) *f.* notion of (something) being the means of what is undesired यत्र त्वनिष्टसाधनत्वबुद्धिर्दोषत्वाभिमानो वा, तत्र तु तद्वा तदन्यद्वानिष्टतममविशेषाद् दृश्यते ŚatDū. 156.21.

**अनिष्टसाधनत्वबोध** (aniṣṭasādhanatva-bodha) *m.* knowledge of (something) being the means of what is undesired निषेधान्यथानुपपत्त्यानिष्टसाधनत्वबोधान्निवृत्तिकारणाप्रीतिसंभवेऽपि तादात्विकेष्टसाधनत्वावगमात् NyāySu.(So.) 37.17 (*on* i. 2.7); निषेधेष्वपि कलञ्जभक्षणादावनिष्टसाधनत्वबोधादधर्मे प्रामाण्यमिति केचित् BhāṭṭCin. i. 8.26 (*on* i. 1.2)

**अनिष्टसाधनत्वबोधन** (aniṣṭasādhanatva-bodhana) *n.* teaching about (something) being the means of what is undesired अत्र यथा न हिंस्यात् इत्यादेः वैधान्यहिंसानिषेधपरत्वं संभवति, हिंसात्वसामान्यरूपेण वैधान्यहिंसायामनिष्टसाधनत्वबोधने लक्षणाविरहात् GuruCandr. i. 268.21.

**अनिष्टसाधनत्वमात्र** (aniṣṭasādhanatva-mātra) *n.* merely being the means of what is undesired अनिष्टसाधनत्वमात्रं न निवृत्त्यौपयिकम्, तात्कालिकक्लेशादिकरम्बितयागादिसाधारण्यात् PūrvottaVāNaMā. 56.14.

**अनिष्टसाधनत्वशक्ति** (aniṣṭasādhanatva-śakti) *f.* potency of (something) being the means of what is undesired हिंसा नाम तावदेका व्यक्तिस्त्रैलोक्येऽपि, तस्याश्च क्वचिल्लोके ब्रह्महत्यादिषु 'न हिंस्यात् सर्वा भूतानि' इति प्रतिषेधादनिष्टसाधनत्वशक्तिरवगमिता TātpaṬ.(U.) 112.18 (*on* 2.249)

**अनिष्टसाधनत्वसंसर्ग** (aniṣṭasādhanatva-saṁsarga) *m.* association with (something) being the means of what is undesired नापि द्विषदन्नभोजननिषेधके अतिव्याप्तिः, तत्रानिष्टसाधनत्वसंसर्गस्य पदवृत्त्यस्मारितस्य प्रतिपाद्यत्वात् AdvaiSi. 664.5; अनिष्टसाधनत्वं द्विषदन्नभोजनस्यानिष्टसाधनत्वसंसर्गम् (आदाय) LaCandr. 665.21.

**अनिष्टसाधनत्वसंबन्ध** (aniṣṭasādhanatva-sambandha) *m.* connection with (something) being the means of what is undesired हिंसात्वावच्छेदेनानिष्टसाधनत्वसंबन्धस्तु न पूर्वं प्राप्त इति वैषम्यम् LaCandr. 424.37.

**अनिष्टसाधनत्वाक्षेप** (aniṣṭasādhanatvākṣepa) *m.* implication of being the means of what is undesired विधिनिषेधाभ्यामिष्टानिष्टसाधनत्वाक्षेपात् प्रवृत्तिनिवृत्तिहेतुभूतेच्छानिच्छोत्पत्तावपि तात्कालिकेष्टानिष्टसाधनत्वस्यापि ···द्वेषोत्साहसंभवेन···स्तुतिनिन्दाज्ञानस्यानुग्राहकत्वं परिकल्प्यते MīmāKau. iii(1). 25.24 (*on* i. 2.7); निषेधशास्त्रेण निवारणाविषयत्वेनावगतेऽर्थात्तद्विषयस्य कलञ्जभक्षणादेरनिष्टसाधनत्वाक्षेपात् नित्यं तद्भक्षणेऽनिष्टोत्पत्तिः BhāṭṭDī. iv. 99.1 (*on* x. 8.1)

**अनिष्टसाधनत्वानुमान** (aniṣṭasādhanatvānumāna) *n.* inference of being the means of what is undesired अयमोदनः क्षुन्निवर्तकः ओदनत्वात् प्राग्भुक्तौदनवदित्याद्यनुमानाद्धि इष्टानिष्टसाधनत्वावगमः ततः प्रवृत्तिरनिष्टसाधनत्वानुमानाच्च निवृत्तिरिति VedāntKa. 468.7 (*on* iii. 3.53)

**अनिष्टसाधनत्वाभाव** (aniṣṭasādhanatvābhāva) *m.* denial of being the means of what is undesired श्रुतिस्तु वैधातिरिक्तहिंसानिवृत्तेरिष्टसाधनत्वमेव वक्ति, न तु वैधहिंसाया अनिष्टसाधनत्वाभावम् SāṁkhyaPraBh. 9.23 (*on* 1.6); प्रतिषेध्यस्यानिष्टसाधनत्वाभावे ··· प्रतिषेधविधिरेव प्रतिषेध्यस्यानिष्ट-

मङ्गलम् TilaMañ. 169.12; (रामचन्द्रः) तीर्त्वा समुद्रं जनकात्मजायाः संदर्शनोपायमनीक्षमाणः।… ज्योतिस्तदैक्षत ŚaṅkaDigVi.(Mā.) 14.118.

**अनीक्षानियम** (anīkṣā-niyama) *m.* resolve or determination of not seeing or looking at पुंसि स्वभर्तृव्यतिरिक्तभूते भूत्वाप्यनीक्षानियमव्रतिन्यः। छायासु रूपं भुवि वीक्ष्य तस्य फलं दृशोरानशिरे महिष्यः NaiṣC. 6.43.

**अनीक्षित** (an-īkṣita) *adj.* not seen (चक्रसेनः) अनीक्षितार्थ्यनर्थिजनमुखच्छायैरनालोचितात्पानल्पवित्तव्ययैः … कृतार्थीकृत्य वस्तुविसर्गैः कृत्स्नमपि दक्षिणोत्तरश्रेणियाचकगणम् … प्राप नगरम् TilaMañ. 425.17; गणगन्धर्वसिद्धादिदेवैः पूर्वमनीक्षितः। राजदेशात् प्रवेशस्य सोऽवर्त्यत महोत्सवः PrabhāC. 180.18; अच्छिन्नमेखलम् … अनीक्षितवक्त्रकान्ति। कान्ताविमिश्रवपुषः कृतविप्रलम्भसंभोगसख्यमिव पातु वपुः पुरारेः SūktiRa. 3.4; NānārthāSaṁ. ii. 48.21.

**अनीक्षितचरी** (anīkṣita-carī) *adj.* (*f.*) not experienced before तामनीक्षितचरीमधीरतामात्मनोऽथ विनियम्य लक्ष्मणः। सान्त्वनार्थमिति वाचमब्रवीत् … अग्रजम् RāmC. 2.1.

**अनीक्षितपरच्छत्त्र** (anīkṣita-paracchattra) *adj.* who has not experienced the parasol (i.e. rule) of others इक्ष्वाकुवंशसंभूताः …। अनीक्षितपरच्छत्त्रा महारत्नसमृद्धयः।… व्यतीता बहवो भूमौ कृतकृत्या नरोत्तमाः PadmP. (Ra.) 28.156.

**अनीक्षितवत्** (an-īkṣitava(n)t) *adj.* who has not seen कोऽसौ मामवदत् पुमानिति जलापूर्णे जगन्मण्डले दिक्षूद्वीक्ष्य किमप्यनीक्षितवता…तेन त्वमाराधितः Nārāy. ii. 7.3.

**अनीक्षितुमनस्** (an-īkṣitumanas) *adj.* not having a mind to see (अर्जुनः) तथाभूतः स भाति स्म हन्तुं देवानिवोद्यतः। दीनं च तन्मुखाम्भोजमनीक्षितुमना इव PāṇḍaC. 4.298.

**अनीक्षितृत्व** (anīkṣitṛ-tva) *n.* the state of not being a perceiver तस्मात्प्रधानस्य साम्यावस्थायामनीक्षितृत्वात् Bhām. 126.16 (*on* i. 1.5)

**अनीक्ष्य** (an-īkṣya) *adj.* which cannot be perceived बुद्धौ तिष्ठन्नान्तरोऽस्या धियानीक्ष्यश्च धीवपुः। धियमन्तर्यमयतीत्येवं वेदेन घोषितम् PañcDa. 6.164.

**अनीक्ष्यसंधि** (anīkṣya-sandhi) *adj.* whose joints cannot be seen तथा समुद्गकोऽनीक्ष्यसंधिः सूरेः प्रदर्शितः। उष्णोदकात् समुद्घाट्य तच्चित्रं प्रकटीकृतम् PrabhāC. 29.28.

**अनीच** (a-nīca) *adj.* [*f.* -ā] **Ai** (person) not low (morally or socially) अनीचैर्नाप्यविषयैर्नाधर्मिष्ठैर्विशेषतः MahāBhā. iii. 5*; पूर्वं संभाषितोऽनीचः कालयापनमाश्रितः। मिथ्याभिशस्तः श्रीकाम आहूयाप्रतिमानितः (क्रुद्धः) NītiSā. 18.33; विषमाः कठिनात्मानोऽनीचा नीचजनाश्रयाः। हिंस्रैरनुगता नित्यं राजानः पर्वता इव Pañcā. 9.26; **Aii** (character in drama) not low (i. e. high (*uttama*) or middle (*madhyama*)) पाठ्यं तु संस्कृतं नृणामनीचानां कृतात्मनाम् DaśRū. 2.64; BhāvPra.(Śā.) 270.2(9); SāhiDa. 333.3; चेटीनामप्यनीचानामपि स्यात्सौरसेनिका SāhiDa. 333.15; **Bi** raised अनीचे सक्थिनी तिर्यगवसज्य प्रतीच्छेदिति विजृम्भितकम् KāmSū. 137.8 (2.6); **Bii** not low, high इति वचनमनीचोदञ्चिरोमाञ्चसूचीसचिववपुरुमा तद् व्याहृतं वल्लभेन। श्रुतिपथमुपनीय … तां (दोलां) शनैरध्यरुक्षत् ŚrīKaC. 7.61; विराटद्रुपदभूपौ द्रुतमनीचैर्नाराचैराचार्यं शल्लैः शल्यमृगमिव निबद्धतनुमातेनतुः BhārCam. 10.93 (6); **Biii** not inferior, noble याश्रिता पावनतया यातनाच्छिदनीचया। याच्नीया धिया माया यामायासंस्तुता श्रिया DevīŚ. 4; SaraKaṇṭhā. 124.20; 272.25; शुद्धे ज्ञाने … सत्यपि त्वय्यनीचा भक्तिर्नो चेदनवधि सुखावञ्चिका कुञ्चिकेयम् EkīSt. 13; क्ष्माभुजः सूच्यन्ते … लक्षणैः।… आकारैरमनुष्यमात्रसुलभैर्वृत्तैरनीचैरपि PratāYaBhū. 176.6.

**अनीचक** (anīcaka) *m.* name of a *varṣa* (i. e. continent) श्यामपर्वतवर्षं तदनीचकमिति स्मृतम् MatsyaP. 122.23.

**अनीचकर्मार्थम्** (anīcakarmārtham) *adv.* for the sake of noble deeds अतोऽप्यनीचकर्मार्थं योज्यास्तिथ्यादयो बुधैः AgniP. 95.16.

**अनीचकाश** (anīca-kāśa) *adj.* in which the *kāśa*-plants grow up (i. e. autumnal) अभीष्टमासाद्य चिराय काले समुद्धृताशं कमनी चकाशे। योषिन्मनोजन्मसुखोदयेषु समुद्धृताशङ्कमनीचकाशे ŚiśuVa. 6.74.

**अनीचकैस्** (a-nīcakais) *adv.* **1** not mildly, intensely तनुरनुशये …। वचसि विचरच्चाटुश्चित्ते चरिष्णुरनीचकैरिति रतिरसावेशो यूनां ययौ शतशाखताम् Kapphiṇā. 14.27; **2** not softly, loudly रौद्रं शब्दमनीचकैः प्रकटयन्भूपोऽवनीपादृतः।… धत्तेऽनेकपराजिदर्पदलने शार्दूलविक्रीडितम् ŚrīVīraSta. 23.

**अनीचदर्शिन्** (a-nīcadarśin) *m.* name of a Buddha (*lit.* not gazing downwards) लोकनाथस्तु लोकेशः …। अनीचदर्शी … अवलोकितः TrikāŚe. i. 1.16.

**अनीचवर्तिन्** (anīcavart-in) *adj.* **i** behaving nobly (पदगतिः) अनीचवर्तिनस्तस्य ग्रहस्येव फलप्रदा। सुरश्मिराशिगस्यालं बभूवाश्चर्यभूर्नृणाम् RājTa. (Śrī.) 1(7).8; **ii** not situated in a depression sign, RājTa.(Śrī.) 1(7).8.

**अनीचानुवर्तिन्** (a-nīcānuvartin) *adj.* not following a low or vile person (दमयन्त्युवाच) प्रभुः क्षमावान्वीरश्च …। रहोऽनीचानुवर्ती च क्लीबवन्मम नैषधः MahāBhā. iii. 71.14 [*m.* a faithful lover or husband, MW., APTE]

**अनीची** (a-nīcī) *adj.* [P. vi. 3.138; vi. 4.138] not going downwards एकदा तु ते सर्वे सुपर्वसरितः सलिलेषु विहृत्य समुत्तीर्णा वीचीभिरनीचीभिरुत्कूलितफेनकूटेष्विव पटगृहवाटेषु … सुखमासामासुः BhārCam. 2.0(1); कटाक्षवीचीभिः। शीतलयानीचीभिः कृपया मां देवि GītiŚ. 39; cf. **अन्यञ्च्**.

**अनीचैस्** (a-nīcais) *adv.* **1** not in a low voice, loudly अथ जगदुरनीचैराशिषस्तस्य विप्राः Bhaṭṭi. 1.27; 3.2; कियन्नभः क्ष्मा कियती …। अमी इतीवोद्धतसंकथा मिथो वदन्त्यनीचैरुदयाचलौकसः RāmC. 5.74; **2** not slowly, quickly (सप्तव्यसनवर्गः) चलयति हि विभूतिं भूयसीमप्यनीचैरपि विबुधमतीनां सप्तकोऽयं दुरन्तः NītiSā. 15.68 (comm. अनीचैर्द्रुतमित्यर्थः); नभसि तुरगसैन्यम् … अनीचैरुत्प्लुतीरादधानम्। हरिणकुलमिवासीत् HarVi. 41.53; पर्याणाग्रोत्कीर्णनियन्तारमनीचैरारोहन्तं सोत्सुकमश्वं प्रसुकायाम्। तस्थौ सादी Kapphiṇā. 7.10; 13.21; पताका। कामोर्वीक्रमितुरनीकिनीमनीचैरायान्तीं कथयति जेष्यतो जगन्ति HammīMaMa. 2.17.

**अनीजान** (án-ījāna) *adj.* who has not performed a sacrifice अपु वै तृतीयसवने यज्ञः क्रामतीजानादनीजानम् TaiS. VI. vi. 7.3; 'त्वमग्ने …' 'सोम …' इत्याज्यभागयोः पुरोनुवाक्ये अनुब्रूयाद्यः पूर्वमनीजानः स्यात्तस्मै AitBr. 1.4(22); यं कामयेत यथैवानीजानोऽभूत्तथैवेजानः स्यादिति AitBr. 11.7(304); GopBr. ii. 3.3 (191.5); अद्य किमित्ते विष्णो परिचक्ष्यं भूदितीन्वीजानस्याथानीजानस्य। व्यापन्नयैव पूर्वया यजते BaudhŚS. ii. 330.15; तं ततो नानीजानमपरा फाल्गुनी पर्येयात् ĀpaŚS. viii. 21.4; नैनमनीजानं संवत्सरोऽतीयात् MānŚS. 57.8; दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयेत् KātyŚS. iv. 6.10.

**अनीजित** (an-ījita) *adj.* not despised, not looked down upon (वृन्दावनम्) अभ्रेजि विभ्राग्भिरनीजितैश्च यत्कदाप्यशोवद्भिरशेषजन्तुभिः DhātuKā. 1.25.

**अनीड** (á-nīḍa) *adj.* [ṚPrāti. 1.21] **i** nestless शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीळः ṚV. x. 55.6; शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीडः SV. II. ix(1). 7.2; **ii** non-constructor of a nest, who has no body (i.e. incorporeal) भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्। कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ŚvetāU. 5.14 (Śaṅ. अनीडाख्यं नीडं शरीरमशरीराख्यम्); अनीलः अनीडः नीडस्याकर्ता AdvaiSi. 423.23; [*m.* name of Agni or fire, MW.; epithet of Agni, APTE]

**अनीत्** (an-īt) (Gr.) not (ending in the feminine suffix) ई अनीच्च या नदीदन्त च यदेकाच् MahāBh. iii. 159.4 (*on* vi. 3.43)

**अनीत** (á-nīta) *adj.* [*f.* -ā] **i** not brought (forward) स यद्यनीतासु दक्षिणासु कलशो दीर्येत ŚatBr. IV. v. 10.7; अनीतासु चेद्दक्षिणासु द्रात्रपच्छेदोऽदक्षिणं संस्थाप्य पुनराहारः KātyŚS. xxv. 11.7; xxv. 12.26; **ii** not brought (within the reach or range) प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा …। रत्नावलीव कान्ता मम हस्ताद् भ्रंशिता भवता Ratnā. 2.18; शरगोचरतामनीतयोर्नियतं शिक्षितमस्त्रविद्यया पुरतो गुह[रामयोः] PṛthvīVi. 12.10; (महेश्वरः) अनवच्छिन्नः — विषयेण परिच्छिन्नतामनीतः Bhāsk. i. 29.17 (*on* i. 1.1); अननुभूतस्य — कदाप्यनुभवविषयतामनीतस्य Bhāsk. i. 341.21 (*on* i. 6.11)

**¹अनीति** (a-nīti) *f.* **1** bad policy, wrong act एष मन्थरकः समायाति। तदनीतिरनुष्ठितानेन। वयमपि नूनं व्यापादनीयतां यास्यामोऽस्य कारणात् PañcT. (Kos.) 2.183(5) (143.25); अनुकूलविधिविहितसाहायकस्य साहसिकस्य सर्वदा शस्यसंपदि वा नीतिरनीतिरपि फलति TilaMañ. 155.14; अनीतिमिव राज्यार्थी प्रभूणां संगमेच्छया। विससर्ज नरेन्द्रोऽपि तामन्तःपुरयोषिताम् KumāDeC.(So.) 19.18; अनीतिरेव सच्छिद्रं राज्ञो नित्यं भयावहम् ŚukraNī. 1.15; 2.226; **2** evil conduct, immorality अनीत्या वैरिविहितैरभिचारादिभिस्तु वा। ये रोगाः पीडयन्त्येनं ते विनश्यन्त्यशेषतः TantrRā. 10.97; जहेऽन्यदारान् स्वपुरीं दशास्यो गां कार्तवीर्यो यतिनं मुमोष। भ्रूणानकर्षद्भगिनीं च कंसोऽग्रहीत्किमेतानसकावनीतीः DvyāśraKā. 2.82; सामन्तलोकानपि दण्डयित्वा … राजा। तेषामनीतिं भजतां च भूम्या स्वभूमिदेशस्य समर्थकोऽभूत् VīraBhā. 5.144; 2.69; तदनीत्या न वर्तेयुस्तेन साकं धनाशया। वर्तन्ति यदनीत्या ते तेन साकं पतन्त्यरात् ŚukraNī. 5.23; **3** name of a town (*lit.* having people of bad conduct) द्वीपोऽयं चित्रकूटाख्यः पुरं चानीतिसंज्ञकम् RatnaCūKa. 142; [Kośas give *anīti* as the meaning of *anaya* : NānārthāSaṁ. ii. 11.5; ViśvaLoK. 264.70]

**[2]अनीति** (an-īti) *f.* [Abl.] because of absence of a natural calamity (रामस्य) यस्य रराजानीते रत्नानि जनः कुले धराजानीते Nalo. 1.5 (comm. अनीतेः ईतिरहिततया हेतौ पञ्चमी)

**[1]अनीति** (a-nīti) *adj.* not having good policy, having bad policy रिपुरुन्नतधीरचेतसः सततव्याधिरनीतिरस्तु ते ŚiśuVa. 16.11 (comm. अनीतिर्नीतिरहितः); यश्च नीतिमत्पुरुषाधिष्ठितोऽप्यनीतिः ··· देशः NalaCam. 1.27(13); यस्य नीतिमतोऽप्यासन् प्रजाः शश्वदनीतयः KathāSaSāg. xii. 6.87; फलहीनमभूत्तस्य शरजालं नृपस्य तत्। अनीतेश्चरितम् ··· यथा GaṇeP. i. 79.31; सन्तः कण्टकिताः कथं यदि कृता निष्कण्टका मेदिनी प्रख्याता यदि ते गुणाः कथमथ प्रस्तौति दोषं जनः। नीतावाद्यधुरंधरो यदि भवान्कस्मादनीतिः प्रजा वृत्तं देव न चित्रमेव हि न चेच्चित्रं विधत्ते कथम् SaduktiKa. 195.16; संरम्भी मानी ते कर्णो विद्धः कथं नु भीमानीते YudhiVi. 4.44; त्वया किं न त्वया किं न हतो राजेत्यनीतयः। परस्परविवादात्ते तत्कालं चुक्षुभुर्जडाः RājTa.(Jo.) 241.

**[2]अनीति** (an-īti) *adj.* **i** devoid of natural calamities, free from disasters, ŚiśuVa. 16.11; NalaCam. 1.27(13); KathāSaSāg. xii. 6.87; SaduktiKa. 195.16; Nalo. 1.5; **ii** non-calamitous अनीतयो वाता देशिकवाञ्छया: ··· मुष्णन्ति श्रमम् ŚaṅkaDigVi.(Mā.) 4.81 (comm. न विद्यन्त ईतयोऽतिवृष्ट्यादिरूपा बाधा येभ्यः)

**अनीतिका** (anīti-kā) *adj.* (*f.*) free from evils स इमां महापृथिवीं ससागरगिरिपर्यन्तामखिलामकण्टकामनीतिकामनुपद्रवामृद्धां स्फीताम् ··· धर्मेणाभिनिर्जित्य अध्यावसति स्म GaṇḍVyū. 329.1; cf. **अनीतिक** [DBHS.]

**अनीतिकारक** (anīti-kāraka) *adj.* doing something unjust नानीतिकारकः स्वामी परब्रह्म सतां गतिः ŚivaP. ii(2). 43.34 (123B.5)

**अनीतिगहन** (anīti-gahana) *n.* thicket in the form of immorality तदहं पृथिवीपालः ···। अनीतिगहनावृत्तं व्यसनाधिं कथं भजे BṛKathāMañ. ix. 2 964.

**अनीतिगोचर** (an-ītigocara) *adj.* not within the range of (i.e. not being subject to) natural calamities बलेन यः स्वयमनिलोऽपि नानिलः सनीतिरप्यभवदनीतिगोचरः RāghPāṇ.(Dha.) 2.29.

**अनीतिज** (anītij-a) *adj.* arising out of bad policy अनीतिजं यद्यविधानजं सुखं हठप्रणीतं विविधं प्रदृश्यते। न विद्यते तस्य गतिर्महीपतेः MahāBhā. xii. 120.50.

**अनीतिजल** (anīti-jala) *n.* water (in the form) of wrong policy अनीतिजलकल्लोलैर्लोलमुच्चैः क्षणाद् भुवि। व्यसनाख्यो नदीपूरः पातयेद् राज्यपादपम् PārśvC. 1.92.

**अनीतिज्ञ** (a-nītijña) *adj.* not conversant with policy or political science, ignorant of policy or morality अनेनानीतिज्ञेन वयं मर्मज्ञाः परिभूताः Hitopa. 3.55(15); [(*anīti-jña*) clever in immoral conduct, MW.; impolite, APTE; not discreet, MW.; APTE]

**[1]अनीतिता** (anīti-tā) *f.* the state of being one who lacks in proper policy प्रसृत्वरानीतिलतावितानकुठारकल्पेऽपि यदीयराज्ये। ललास लोके यदनीतितैव तत्कस्य नो विस्मयमाततान HammīMaKā. 2.34.

**[2]अनीतिता** (anīti-tā) *f.* the state of being one free from calamities, HammīMaKā. 2.34.

**अनीतिताराचक्र** (anīti-tārācakra) *n.* cycle of stars in the form of people of bad conduct अत्यन्तोद्दृप्तविद्विट्तिमिरभरभिदि च्छादितानी[ति]ताराचक्रे विष्वक्प्रकाशं सकलजगदमंदावकाशं दधाने EI. ii. 238.28.

**अनीतिनिरत** (anīti-nirata) *adj.* engaged (i.e. indulging) in immoral acts असुरा यवनांशेषु जाता लोकोपतापिनः। अनीतिनिरताः सर्वे संग्रहे च प्रबुद्धयः ĀdiP. 14.139.

**अनीतिपवनाक्षिप्त** (anītipavanākṣipta) *adj.* hurled by the wind of bad or erroneous policy धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः। अनीतिपवनाक्षिप्तः कार्याब्धौ स निमज्जति Hitopa. 3.128.

**अनीतिपुर** (anīti-pura) *n.* name of a town (*lit.* city having people of bad conduct) चित्रकूटाभिधो द्वीपो विद्यते धूर्तलोकभूः। तत्रानीतिपुरं नाम पुरमस्ति सुविस्तृतम् RatnaCūKa. 121; यदनीतिपुरप्राप्तिस्तद्धीनकुलसंभवः RatnaCūKa. 532.

**अनीतिमत्** (anīti-ma(n)t) *adj.* **i** having bad conduct भाग्यभोज्यानि राज्यानि सन्त्यनीतिमतामपि ViṣṇuP. i. 19.45; अनीतिमन्तो बलिनोऽपि गम्या नैकान्तमस्तीत्यपरे निराहुः VarāṅgaC. 16.44; तदेतत्काकतालीयं तदेतद्वा घुणाक्षरम्। यदनात्मवतामायुर्यच्चानीतिमतां श्रियः ŚṛṅgāPra. 271.9; SūktiRa. 40.21; 163.61; स्वाराध्यो नीतिमान् राजा दुराराध्यस्त्वनीतिमान् ŚukraNī. 1.17; **ii** immoral सर्वं राज्ञः कृतं कर्म नीतिमद् भवति प्रभोः। अन्येषां पुण्यकर्तॄणामपि कृत्यमनीतिमत् PadmP. iv. 56.26.

**अनीतिमदिरा** (anīti-madirā) *f.* wine in the form of bad policy अनीतिमदिरां त्यक्त्वा लोभादिविषदूषिताम्। अगदंकारमादद्धं प्रज्ञामृतमनुत्तमम् Yādavā. 22.22.

**अनीतिमार्ग** (anīti-mārga) *m.* **1** path of wicked conduct (नृपतिः) शक्तिभिरिव वलीभिस्तिसृभिरुद्भासितेनानीतिमार्गेणेवातिसूक्ष्मदृष्टिलक्ष्येण मध्यभागेन भ्राजमानाम् ··· श्रियमपश्यत् TilaMañ. 54.12; **2** unstatesmanlike course, foolish course येनैवानीतिमार्गेण हारितं हर्षभूभुजा। निन्दन्नप्यादधे तं स राज्ये व्यवहरन्स्वयम् RājTa.(Ka.) 8.681.

**अनीतिमृत्यु** (anīti-mṛtyu) *m.* unlawful death अनीतिमृत्युना तेन स्त्रीजनस्योचितेन किम्। जीवन्नेवेक्षते भद्रम् PārśvC. 6.575.

**अनीतिलता** (anīti-latā) *f.* creeper in the form of wrong or bad policy प्रसृत्वरानीतिलतावितानकुठारकल्पेऽपि यदीयराज्ये। ललास लोके यदनीतितैव तत् कस्य नो विस्मयमाततान HammīMaKā. 2.34.

**अनीतिवित्ता** (a-nītivittā) *f.* absence of the state of being one who knows the precepts यत् तु एवं सति हिंसानिषेधेन परेण पश्वालम्भविधिविरोधादनुष्ठानबाध इति। तत् तान्त्रिकस्यानीतिवित्तामाधत्ते SiddhāSi. ii. 174.4.

**अनीतिविद्** (a-nītivid) *adj.* not conversant with statesmanship, ignorant of good policy or morality नानीतिविन्नाम कश्चित् प्रयोगस्तु विहीयते RājTa.(Ka.) 7.1529; तत्किं ब्रवीम्युपचिकीर्षति मानसं मे त्वा प्रत्यपीति धिगनीतिविदुक्तिरेषा PṛthvīVi. 4.60; [clever in immoral conduct, MW.; impolite, APTE; not discreet, MW.; APTE]

**अनीतिशास्त्रज्ञ** (a-nītiśāstrajña) *adj.* not knowing the science of polity एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे। सत्त्वोच्छ्रिते मृगपतौ राजेति गिरः परिणमन्ति Tantrākhyā. 4.24; PañcT. 1.4(13.1); ŚārṅgaPa. 905; Subhāṣi. 594; भीरवोऽनीतिशास्त्रज्ञाः कामुका ब्रह्मविद्विषः। अधर्मरुचयो लुब्धाः शत्रवोऽमी न मन्त्रिणः SūktiRa. 83.2.

**अनीतिसूत्रधार** (anīti-sūtradhāra) *m.* initiator of immorality भवादृशेषु परमनीतिसूत्रधारेषु धीवरत्वेन प्रहसितसुराधिपेषु विज्ञातशिष्टदुष्टपटलपटुदृष्टिषु न किंचित् श्वेताम्बरदर्शनम् MudriKu. 3.6(1)

**अनीत्युपचिता** (anīty-upacitā) *adj.* (*f.*) acquired through improper means त्वद्वक्त्रसाम्यम् ···। लब्ध्वापि पर्वणि विधुः क्रमहीयमानः शंसत्यनीत्युपचितां श्रियमाशुनाशाम् Kuval. 90(61)

**अनीत्वा** (a-nītvā) *ger.* not having led विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा। अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ŚiśuVa. 2.34; ŚṛṅgāPra. 275.9.

**अनीदादि** (an-īdādi) *adj.* excluding -ई etc. (i.e. excluding the *pragṛhyas* prescribed by i. 2.34 to i. 2.39) अ इ उ वर्णस्यान्तेऽनुनासिकोऽनीदादेः SiddhaHe. i. 2.41 (comm. अनीदादेरिति किम्। अग्नी। अमी किमु)

**अनीदित्** (an-īdit) *adj.* (verbal base) not having the indicatory sound ई अनीदितश्च सं दर्भे दृभति ग्रन्थ ईदितः DaivaVyā. 142 (comm. 'दृभी भये' 'दृभ संदर्भे' इत्यनयोरीदितो दृब्धमिति भवति, अनीदितस्तु दृभितमितीत्यभिप्रेत्य अनीदित इत्युक्तम्)

**अनीदृक्क्रम** (an-īdṛkkrama) *adj.* not having a fixed course of behaviour श्रूयन्ते बहवो महानृपतयः किं तैरनीदृक्क्रमैः PratāYaBhū. 208.2.

**अनीदृक्त्व** (anīdṛk-tva) *n.* the state of not being like this, the state of being distinctive अज्ञान एव ज्ञानस्य साक्षाद्विरोधावधारणेनाज्ञानावस्थायास्तदभिन्नायाः ज्ञानसाक्षान्निवर्त्यत्वार्हत्वात्, न तु रूप्यादीनाम्, अनीदृक्त्वात् AdvaiSi. 487.18; साम त्वनीदृक्त्वादप्रशस्तमित्येवं सामनिन्दासहितऋक्स्तुत्या ऋग्विधिः कल्पनीयः प्रतीयते MayūMāli. 608.9 (*on* ix. 2.8)

**अनीदृगाकृति** (anīdṛg-ākṛti) *f.* dissimilar form स व्यमृक्षत् प्राच्यपुण्यपापयोरेतदन्तरम्। पुरुषत्वे समेऽमुष्य मम चानीदृगाकृतिः PrabhāC. 204.15.

**अनीदृगात्मन्** (anīdṛg-ātman) *adj.* having an indescribable nature आद्यकोलतुलितां प्रकम्पनैः कम्पितां मुहुरनीदृगात्मनि। वाचि रोपितवतामुना महीं राजकाय विषया विभेजिरे ŚiśuVa. 14.43 (comm. अनेवंरूपायाम् ··· वाचि)

**अनीदृगाशय** (an-īdṛgāśaya) *adj.* not having such disposition of mind उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः। इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः Kirātā. 2.28 (comm. अविद्यमान ईदृगाशय इत्थं क्षात्रयुक्ताभिप्रायो यस्य सोऽनीदृगाशयः)

**अनीदृश्** (an-īdṛś) *adj.* [P. iii. 2.60; vi. 3.90; viii. 2.62] **A** not appearing as 'this', indescribable द्रष्टापि वा दर्शयितापि नाहं सोऽहं स्वयंज्योतिरनीदृगात्मा ViveCū. 509; ब्रह्मानीदृक् प्रथमवपुः सृष्टौ ते। ईशो मायी न च वपुरस्येत्युक्तिः NayaMañ. II. i. 10.19; **B** not appearing like this, not of such a kind, unparallelled, matchless अनीदृगुपमाभूतो दिष्टिर्दैवमगोचरः MahāP. 25.187; महारथस्याध्वनि चक्रवर्तिनः परानपेक्षोद्वहनाद् यशःसितम्।

रदावदातांशुमिषादनीदृशां हसन्तमन्तर्बलमर्वतां रवेः NaiṣC. 1. 61; सर्वथैव त्वया नाथ विजिग्येऽहमनीदृशा PāṇḍaC. 5. 358; 11. 324.

**अनीदृश** (an–īdṛśa) *adj.* [*f.* –ī] [P. iv. 1.15] **A** not appearing as 'this', indescribable सत्समृद्धं स्वतःसिद्धं शुद्धं बुद्धमनीदृशम्। एकमेवाद्वयं ब्रह्म AdhyāU. 63; ViveCū. 472; निर्विशेषं निराभासमतादृशमनीदृशम्।… निर्गुणं ब्रह्म शिष्यते SarvaVeSāSaṁ. 761; **B** not appearing like this, unparallelled, not of such a kind, matchless अहंभावं परित्यज्य जगद्भावमनीदृशम्। निर्विकल्पे स्थितो विद्वान् भूयो नाप्यनुशोचति SaubhāLaU. 654.28; रूपं कान्ति बलं धैर्यं गुणाः सर्वेऽप्यनीदृशाः MahāBhā. iv. 1143*(5); **अनीदृशश्च** नो कश्चिदुपपत्तेरभावतः। तस्मादकर्तृको वेदः PadmP.(Ra.) 11.166; सोऽयमीदृशः कथमनीदृशं प्रसूते MahāvīC. 4.18(1); इष्यते हि जगत् सर्वं न कदाचिदनीदृशम् TattvSaṁ. 2275; NyāyMañ. i. 178.8; ii. 74. 13; PramāMī. 1. 9 (*on* i. 1.0); SiddhāTaVi. 5.12; लतामनीदृशीं मोहाद् यः कश्चिदवलम्बते। प्रमीतो हिमवत्यस्मिन् स प्रयाति परां गतिम् BṛKathāŚloSaṁ. 18.434; अनीदृशमिदं रूपं न जातं न जनिष्यते RāghPāṇ.(Dha.) 7. 83; ईदृशं प्रत्यक्षमित्युक्ते अर्थादनीदृशमाभासं भवति Kāśi. ii. 21. 14 (*on* 5(1).21); YuktiSneha. 49. 14 (*on* i. 1. 5); सोऽयमनेवमात्मिकाया भूमेरनीदृशस्य वा जलस्य न परिणामो भवितुमर्हति TattvVai. 135.16 (*on* 3.14); करणीभूतभावार्थविषयं च कार्यं नैमित्तिकमिति कुतोऽनीदृशस्यानुष्ठानम् NyāyRaMā. 113.13; मन्दभाग्यतया पुंसां गुरवः स्युरनीदृशाः TriṣaŚaPuC. i. 2. 44; साक्षिमान् प्राड्विवाकादिप्रत्यवेक्षणवान्। यदा त्वनीदृशस्तदा न दद्यादित्यर्थसिद्धं स्पष्टयितुं पक्षाभासमेकमुदाहृत्य तस्योत्तरं न देयम् SmṛtiCan. iii. 92.20; विभज्य निःक्षिप्तमिति स्वमम्बुदैर्ध्रुवं विदित्वात्मदशामनीदृशीम् Surath. 5.40; दृष्ट्वा तद्देहशोभामनीदृशीम्।… भणितो भूपतिः PārśvC. 6.1196; अनीदृशी प्रवृत्तिः किं भिनत्ति भवपञ्जरम् SamarāSaṁ. 9. 438; तपस्विनमिवालोक्य मुद्राभ्रंशादनीदृशम्। विशामीशं दिदेशाथ दासीं भद्रा विनिद्रधीः ŚāliC. 4.154; यदैहिकामुष्मिकशर्मयोग्यं तत् कर्म कर्तव्यमनीदृशं नो VīraBhā. 5.80; जयति कापि हि शक्तिरनीदृशी …। यद्वशो न हि शृणोति न पश्यति वेत्ति नो NemiC. 8. 38; तेनानीदृशमुच्चैष्ट्वं बाध्यते MīmāKau. ii. 321. 2 (*on* iii. 3. 9); भौमेषु तीर्थेषु मानसेषु च नित्यशः। उभयेषु च यः स्नाति स याति परमां गतिम्।… एवमनीदृशेषु यत्र तीर्थपदप्रयोगः स गौणः VīraMi.(Tīrtha.) 11. 3; 163.23; **C** improper, cf. **अनीदृशराजाज्ञा**.

**अनीदृशगुणोदय** (anīdṛśaguṇodaya) *adj.* having rise of unparallelled merits यादृशं स्यात् तपोदानमनीदृशगुणोदयम्। कथनं तादृशस्यास्य तपोदानकथोच्यते MahāP. 4. 9.

**अनीदृशराजाज्ञा** (anīdṛśa–rājājñā) *f.* improper royal order न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्युह्य यथास्थानं गमयेत्।… तादृशि विषये राजाज्ञानवसरात्। अनीदृशराजाज्ञाया निषिद्धत्वात् VīraMi.(Vyavahāra.) 88. 19.

**अनीदृशवर्णन** (anīdṛśa–varṇana) *n.* improper description तन्वी श्यामा विशालदृगञ्चला। विशददशना मध्यक्षामा वृथेति जनाः श्रमं विदधति मुधा रागादुच्चैरनीदृशवर्णने VijñāŚ. 60.

**अनीदृशसंपत्ति** (anīdṛśa–sampatti) *f.* incomparable wealth or prosperity इत्यालपन्नयमुत्तीर्य सुरधुनीमनीदृशसंपत्तिपेशलान् कोसलानवलोकयन् … अजिहीत साकेतम् YātrāPra. 8. 103(1)

**अनीदृशात्मन्** (anīdṛśātman) *adj.* of indescribable or unparallelled nature तरूणामेव तावच्चेद् ईदृशो विभवोदयः। किमस्ति वाच्यमीशस्य विभवेऽनीदृशात्मनः MahāP. 22.204.

**अनीन** (an–īna) (Gr.) other than the *taddhita*-suffix *īna* अह्नोऽह्नोऽनीने MugdhaBo. 7.18 (68. 6)

**अनीनस्** (anīnas) *m.* name of a king अनेना (v. l. अनीना) यवनाश्वश्च ककुत्स्थो विक्रमी रघुः।… राजानो निधनं प्राप्ताः MahāBhā. i. 1.172.

**अनीनादट्** (an–īnādaṭ) (Gr.) other than the *taddhita*-suffixes *īna*, *at* and *aṭ* अनीनादट्यह्नोऽतः SiddhaHe. vii. 4.66.

**अनीप्सत्** (an–īpsat) *adj.* [*f.* –ntī] [P. ii. 3.71] not desirous of, unwilling पुण्यस्याप्यनीप्सतो न भोक्तव्यम् HirSŚ. xxvi. 5.112 (83. 12); ĀpaDS. i(6). 19. 10; (पुत्रान्) अनीप्सन्ती तदा कुन्ती भर्तारं सा वदिष्यति PadmP. v. 14.64.

**अनीप्सनीय** (an–īpsanīya) *adj.* not fit to be desired or wished for अचिन्तनीयं परिवर्जनीयमनीप्सनीयं स्वनवेक्षणीयम्। प्राप्तोऽस्मि पाप्मानमिमम् Rāmā. iv. App. I. 14(44)

**अनीप्समाना** (an–īpsamānā) *adj.* (*f.*) not wishing, not desiring, unwilling काचित् प्रमदा सबाष्पां तां दुःखितां द्रष्टुमनीप्समाना। प्रासादसोपानतलप्रणादं चकार पद्भ्याम् Saund. 6. 6.

**अनीप्सा** (an–īpsā) *f.* non-desire निस्पृहता निरीहता धनादिष्वनीप्सा Aparā. 1007.20 (*on* 3. 158); [Inst.] against one's wish मायात्मकमेव रूप्याचेष्टव्यम्। यतः — मायामनिच्छतस्तुच्छख्यातिः प्राप्नोत्यनीप्सया IṣṭaSi. 154.6.

**अनीप्सित** (an–īpsita) *adj.* [*f.* –ā] (Gr.) **Ai** (grammatical object) not directly reached (by the agent's action) कर्तुरीप्सिततमं कर्म। तथायुक्तं चानीप्सितम् P. i. 4. 50; **Aii** (grammatical object) not desired इहेप्सितस्यापि कर्मसंज्ञारभ्यतेऽनीप्सितस्यापि। यदिदानीं नैवेप्सितं नाप्यनीप्सितं तत्र कथं भवितव्यम् MahāBh. i. 333.19 (*on* i. 4.50); अनीप्सितमिति नायं प्रसज्यप्रतिषेध ईप्सितं नेति MahāBh. i. 333.21 (*on* i. 4.50); **Aiii** (grammatical object) other than that what is desired by the agent (i. e. *dveṣya* or *udāsīna*), other than what is desired पर्युदासोऽयं यदन्यदीप्सितात् तदनीप्सितमिति MahāBh. i. 333.22 (*on* i. 4.50); अन्यच्चैतदीप्सिताद् यन्नैवेप्सितं नाप्यनीप्सितमिति MahāBh. i. 333.23 (*on* i. 4. 50); आप्यत्वसामान्यं सर्वत्र विद्यते … अनीप्सितम्— ग्रामं गच्छन् व्याघ्रं पश्यति JaineVyā. 39.21 (*on* i. 2. 120); औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम् VākyaP. 3(7).46; VaiyāBhū. 106.20 (*on* 24); ईप्सितादन्यत् सर्वमनीप्सितं द्वेष्यमितरच्च KāśiVṛ. *on* i. 4.50; Prasā. i. 387.4; फलस्य भागि कारकमेव कर्म। तच्च किंचिदीप्सितम् … किंचिच्चानीप्सितम्, अनुपयोगात् PrakaPañ. 464.11; अनीप्सितं कर्म यथा अहिं लङ्घयते भृशम् AgniP. 353. 5; क्रियया युक्तमनीप्सितमपि कर्मसंज्ञमितीप्सितानीप्सितानुवर्ति साध्यरूपं कर्मेत्यर्थः ŚāstrDī. 109.6 (*on* ii. 1.4); तथायुक्तं चानीप्सितम् SaraKaṇṭhā.(Gr.) i. 1.39; PrakriKau. i. 386.4; SiddhāKau. 133B.4 (*on* i. 4.50); द्वितीया च जघन्यत्वादनीप्सितेऽस्तु MayūMāli. 371.3 (*on* iv. 2.6); अनीप्सितम्-अनुद्देश्यम्। तच्च द्वेष्यम् उदासीनं च LaŚabdeŚe. i. 454.7; **Aiv** (grammatical object) not specially aimed at or which is not the main goal of an action कथं तर्हि अनीप्सितस्य यागस्य … भावनायामन्वयः MīmāKau. i. 218.18 (*on* i. 4.6); i. 250. 17 (*on* i. 4. 9); **Bi** undesired, unwanted तदेवं बहुमानात् ते मयेहानीप्सितं कृतम्। सुकृतं दुष्कृतं वा MahāBhā. v. 111. 11; xii. 28. 32; स त्वायुषि परिक्षीणे जगामानीप्सितां गतिम् MahāBhā. xii. 112.4; अन्वयादिविभिन्नानां यथासंख्यमनीप्सितम् Bhaṭṭi. 9.132; एवमश्रुतो देशोऽनीप्सितश्च ṬupṬ. 21. 1 (*on* iv. 2.7); तयोरव्यतिरेकत्वात् स एवायात्यनीप्सितः BṛĀraUBhVā. (Sambandha.) 64; 750; स्वसिद्धान्तविरोधोऽयं बलादायात्यनीप्सितः BṛĀraUBhVā. iv. 3.256; iv. 3. 594; अतथाप्रवर्तनादनीप्सिता प्रीतिरप्रीतिरेव स्यात् JayaMa. 94.18 (*on* 2. 1); सुदामशापाद् विच्छेदः शतवर्षमनीप्सितः भविष्यत्येव दम्पत्योः BrahmVaiP. iv. 69.84; यद् यदालोक्यते किंचित्…तन्न विद्यते। ईप्सितानीप्सितादन्यन्न तत्र यतते जनः YogVā. iv. 57. 30; धर्माच्चानर्थोऽर्थश्चाधर्मात्। अनर्थश्चेप्सितोऽर्थश्चानीप्सितोऽपूर्वत्वात् सर्गस्य Bhām. 249.17 (*on* i. 3.30); अनास्वाद्यमविक्रेयमनादेयमनीप्सितम्। दत्तं निरुपकारं यद् वन्ध्यदानेन तेन किम् DarpDa. 6. 17; अनीप्सितो दीप इव प्रविष्टः।… न सेवकः कस्य करोति दुःखम् SevyaSev. 41; अनीप्सितेष्वपि … भोग्येषु तद्दुर्लभेषु च कामचारः VedāntKau. 336.13 (*on* iii. 3.40); **Bii** [P. ii. 3.67; iii. 2. 188] who is still not loved राजसोऽत्र यथा जनः।…अल्पकामश्च कामिनीनामनीप्सितः SarvaSiSaṁ. 11. 19; *n.* non-desire ईप्सितानीप्सिते न स्तो यस्य …। स जीवन्मुक्त उच्यते MahāU. 2.46; 6. 48; YogVā. v. 16 19; अनीप्सिते विषादे च विस्मये तथा।… प्रतिषेधे धुतं शिरः NāṭyaŚā. 8. 25; AbhinDa. 58.

**अनीप्सितकर्मता** (anīpsitakarma–tā) *f.* the state of being the grammatical object which is not specially aimed at or which is not the main goal of an action नियोग एव अत्रापि प्रधानं साध्यम्, अनीप्सितकर्मता त्वग्नीनाम् PrakaPañ. 442.5; विधिविषयीकृतभावनायाः श्रेयःसाधनत्वात् स्वर्ग एवोद्देश्यो न तु यागादयः।… यागादीनां भावनां प्रत्यनीप्सितकर्मतामात्रत्वात् VedāntKa. 388.10 (*on* iii. 2. 8)

**अनीप्सितकर्मत्व** (anīpsitakarma–tva) *n.* the state of being the grammatical object which is not specially aimed at or which is not the main goal of an action यच्छतिस्तु सकर्मक इति दण्डस्यानीप्सितकर्मत्वमभिहितम् TantrRa. 140.2; 'अग्निहोत्रं जुहोति' 'समिधो यजति' इत्यादौ द्वितीया त्वनीप्सितकर्मत्वात् TantrRaha. 61.24; पुरोडाशस्य स्वरूपेणानीप्सितस्यापि अनीप्सितकर्मत्वेनैवान्वयोपपत्तेः MīmāKau. i. 230. 17 (*on* i.4. 9); ii. 53. 16 (*on* ii. 3. 18); आत्मनेपदानुरोधेन वेन्द्राभिधानार्थत्वाङ्गीकारे गार्हपत्यस्य सक्तुवदनीप्सितकर्मत्वायोगात् MīmāKau. ii. 233. 2 (*on* iii. 2. 3); द्वितीया विभक्तिः करणत्वपरा अनीप्सितकर्मत्वपरा वा नीयमाना न दुष्यति MīmāKau. iii(2). 64.9 (*on* ii. 1.7); सक्तूनां विनियोगकल्पनायोगेऽपि न द्वितीया करणत्वलक्षणार्था …। किं त्वनीप्सितकर्मत्वार्थिका MīmāKau. iii(2). 77. 7 (*on* ii. 1. 12); न होमस्यानीप्सितकर्मत्वरूपाश्रयत्वेन वाक्यीयोऽन्वयोऽङ्गीकृतः MīmāKau. iii(2). 78.13 (*on* ii. 1. 12); iii(2). 288.9 (*on* ii. 2.26); न चानीप्सितकर्मत्वेनाप्यन्वयोपपत्तेर्न करणत्वलक्षणेति वाच्यम् BhāṭṭDī. i. 93.1 (*on* ii. 1.5); ii. 88.1 (*on* iv. 1.3); ii. 115.16 (*on* iv. 2. 6); प्रार्थनात्मकवरणं प्रति ऋषीणा-

मग्निविशेषणत्वेनानीप्सितकर्मत्वम् VīraMi.(Saṁskāra.) 603.9; कर्मार्थकर्तव्यप्रत्ययस्तु ··· विषं भुनक्ति सक्तून् जुहोतीतिवदनीप्सितकर्मत्वपरो वा BhāṭṭCin. i. 2. 19 (*on* i. 1.1); जुहोतेस्त्यागविशिष्टप्रक्षेपवचनत्वेन त्यज्यमानानाम्···सक्तूनामनीप्सितकर्मत्वसंभवात् MayūMāli. 371.16 (*on* iv. 2. 6)

**अनीप्सितकर्मन्** ( anīpsita–karman ) *n.* grammatical object which is not specially aimed at or not the main goal of an action राद्धान्तेऽप्यनीप्सितकर्मणः स्वाध्यायस्य न भाव्यता NayaVi. 11.5 (*on* i. 1. 1); कृत्यप्रत्ययश्च कर्मत्वे साध्यतामात्रं चाह न प्राधान्यम् अनीप्सितकर्मणोऽपि विद्यमानत्वात् Subodhi. 65.33 (*on* 2.135); BālamBha. ii. 195. 24 (*on* 2. 135); 'सक्तून् जुहोति' इतिवत् अनीप्सितकर्मणि द्वितीयेति योज्यम् PūrvottaVāNaMā. 144. 5; MayūMāli. 371.11 (*on* iv. 2.6)

**अनीप्सितकर्मभूत** ( anīpsitakarma–bhūta ) *adj.* which is the grammatical object not specially aimed at or not the main goal of an action करणीभूतोऽपि परशुस्तद्दारुध्वंससंयोगविभागपरंपरारूपक्रियाफलभागित्वादनीप्सितकर्मभूतः CaturCin. iii(1). 157. 3.

**अनीप्सिततम** ( an–īpsitatama ) *adj.* what is not the most desired ज्ञात्रभेदात्तु तद् ब्रह्म ह्यनीप्सिततमं परम् TaiUBhāVā. 63.1(2)

**अनीप्सिततमत्व** ( anīpsitatama–tva ) *n.* the state of being that which is other than what is most desired प्रथमान्तस्याष्टाकपालपदस्यानन्वयात् अनीप्सिततमत्वे तस्य कर्मत्वायोगात् अष्टाकपालः सक्तुवदेव करणत्वेनान्वीयते MīmāKau. i. 227.21 (*on* i. 4.9)

**अनीप्सितता** ( anīpsita–tā ) *f.* the state of not being specially aimed at अपूर्वस्य भाव्यत्वात् स्वाध्यायस्यानीप्सितता NayaVi. 11. 6 (*on* i. 1. 1)

**अनीप्सितत्व** ( anīpsita–tva ) *n.* the state of being that which is not specifically aimed at or not the main goal of an action दिशो वानीप्सितत्वाद्, लक्षयेत् विहारदेशमीप्सिततमं युक्तम् ŚābaBh. 1230.5 (*on* iv. 2.7); आहर्तव्यस्य चानीप्सितत्वात्साकाङ्क्षत्वम् ṬupṬ. 21. 2 (*on* iv. 2. 7); कारकाणि ··· न चैतावता तानि कर्मतां भजन्ते, अनीप्सितत्वात् PrakaPañ. 453. 21; ननु प्रयत्नव्याप्यो धात्वर्थः तं प्रति कर्मैव स्यात्। न तु करणम्। उच्यते– न तावत्कर्मत्वमनीप्सितत्वात् TantrRaha. 61. 17; द्वितीयाया ईप्सितानीप्सितसाधारणकर्मत्वमात्रवाचित्वेन योग्यतया एकत्रेप्सितत्वमपरत्रानीप्सितत्वम् MīmāKau. ii. 173.23 (*on* iii. 1. 13); iii(2). 72.23 (*on* ii. 1.9); शरीरान्तरस्यानीप्सितत्वाद्द्विधायोनिशरीरभोग्ये तत्पाते मुक्तिरेव VedāntKau. 396.20 (*on* iv. 1.19)

**अनीप्सितद्वितीया** ( anīpsita–dvitīyā ) *f.* accusative case conveying the sense other than what is specially aimed at सक्तुष्वप्येवमनीप्सितद्वितीयोपपत्तेः किमिति तत्र व्यत्ययः MayūMāli. 371. 15 (*on* iv. 2. 6)

**अनीप्सितद्वितीयातस्** ( anīpsitadvitīyā–tas ) *adv.* because of the accusative case conveying a sense other than what is specially aimed at इह ( सक्तून् जुहोति इति प्रयोगे ) ··· अनीप्सितद्वितीयातः तस्यात्यन्तजघन्यत्वात् MayūMāli. 371. 14 (*on* iv. 2.6)

**अनीप्सितफल** ( anīpsita–phala ) *adj.* having the result which is not specially desired विधिर्हि चेतनप्रवर्तनात्मा अनीप्सितफले व्यापारे तं प्रवर्तयितुमशक्नुवन् भावनाया ईप्सितजन्यत्वमवगमयति MīmāKau. iii(2). 75. 16 (*on* ii. 1. 12)

**अनीप्सितविधानचेष्टित** ( anīpsitavidhāna–ceṣṭita ) *adj.* attempting to do what is not desired ( सीतारामौ ) अप्यनीप्सितविधानचेष्टितौ तेनतुः सपदि संमदं मिथः JānaHa. 8. 1.

**अनीप्सितानिवृत्ति** ( anīpsitānivṛtti ) *f.* non-exclusion of what is not desired अनीप्सितानिवृत्तिः स्यात् समाहारेऽविवक्षिते BṛĀraUBhVā. i. 3. 224.

**अनीप्सितार्थ** ( anīpsitārtha ) *m.* undesired object दृष्टं चेदं कार्यं बालकादौ ईप्सितार्थस्वीकरणमनीप्सितार्थत्यजनं च TarkBhā.(Mo.) 7.24.

**अनीप्सितार्थता** ( anīpsitārtha–tā ) *f.* the state of being that which conveys the sense other than what is specially aimed at क्वचिदनीप्सितार्थतया क्वचिद् व्यत्ययाश्रयणेन च द्वितीया नेया MayūMāli. 372. 16 (*on* iv. 2.7)

**अनीप्सितार्थद्वितीया** ( anīpsitārtha–dvitīyā ) *f.* accusative case conveying the sense other than what is specially aimed at सक्तुष्वपि तर्हि किमित्यनीप्सितार्थद्वितीयैव नोक्ता TantrRa. 139.11.

**अनीप्सिताशङ्का** ( anīpsitāśaṅkā ) *f.* thought regarding what is not desired ईप्सितानीप्सिताशङ्के मर्कटयौ चित्तपादपे। चञ्चले स्फुरतो यस्मिन् कुतस्तस्येह सौम्यता YogVā. v. 13. 27.

**अनीप्सिताशङ्कित** ( anīpsitāśaṅkita ) *n.* apprehension of what is undesired, apprehension of evil अनीप्सिताशङ्कितजातसंभ्रमा ततः सुतान्वेषणचञ्चलेक्षणा।··· व्यलपत् JātaMā. 64. 11 (9.78)

**अनीप्सु** ( an–īpsu ) *adj.* not desirous of, unwilling धनग्राहिणि प्रेते प्रव्रजिते द्विदश समाः प्रवसिते वा तत्पुत्रपौत्रैर्धनं देयम्। नातः परमनिच्छुभिः ( v.l. अनीप्सुभिः ) ViṣṇuSm. 6.28; SmṛtiCan. iv. 399. 1; नातःपरमनीप्सुभिरित्यस्य विंशतिवर्षादूर्ध्वं न विलम्बः कार्यः ऋणप्रतिदानानीप्सुभिरपीत्यर्थः SmṛtiCan. iv. 399. 3.

**अनीबन्तत्व** ( anībanta–tva ) *n.* the state of being that which does not end in the feminine suffix -ī marked with the indicatory sound *p* लक्ष्मीः। अनीबन्तत्वाद् न सिलोपः···उणादितः MugdhaBo. 3. 80 (22. 8)

**अनीय** ( anīya ) (Gr.) [AltGr. II. 1. 188; II. 1.216; DEBRU. 208; 209] **i** *kṛtya-* suffix *-anīya* added to verbal bases to form potential participles in the passive sense or impersonal action तव्यानीयौ Kātan. iv. 2.9=JaineVyā. ii. 1.83; प्रब्रूपस्थोऽनीयः ŚākaṭāVyā. iv. 3.50; AgniP. 358. 4; तव्यानीयया ढभावे MugdhaBo. 26. 3 (147.22); **ii** *kṛtya-* suffix *anīya* forming potential participles denoting the sense of agent कृतः ··· भावे कर्मणि कर्तरि। तथा तव्यो ह्यनीयश्च AgniP. 358.4; कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः। बाहुलकात् कर्तरि भूते अनीयः LaŚabdeŚe. i. 470. 7; cf. P. iii. 4.68.

**अनीयमानत्व** ( anīyamāna–tva ) *n.* the state of not being carried (from the meaning) नियताक्षरमन्त्र ऋगिति पर्यवसितार्थः। अनीयमानत्वं चात्र विशेषणमर्थादन्यथा साम्न्यतिप्रसङ्गात् VīraMi. 13.20 (*on* 1. 3) [ better read अगीयमानत्व ]

**अनीयर्** ( anīyar ) (Gr.) **i** *kṛtya-* suffix *-anīya* with the indicatory sound *r* giving the acute accent on the prefinal vowel and forming a potential participle in the sense of passive or impersonal action तव्यत्तव्यानीयरः P. iii. 1.96 = SaraKaṇṭhā.(Gr.) i. 3. 129; तव्यानीयर्केलिमरः CāndraVyā. i. 1.105; स्मारणीयकमिति ···। 'कृत्यल्युटो बहुलम्' इति कर्तर्यनीयर्। ततः संज्ञायां कन् JayaMa. 121.17 (*on* 2. 4); ( हलोपे ) नायं तत्पुरुषोऽनीयरि 'चचार' इत्यादौ च दोषापत्तेः LaŚabdeŚe. i. 152. 13; **ii** *kṛtya* suffix *-anīya* denoting the sense *karaṇa*, the most effective means प्रयन्ति प्रारभन्तेऽनेनेति प्रायणीयः। बाहुलकात् करणेऽनीयर्प्रत्ययः MayūMāli. 532. 18 (*on* vii. 3. 2); ( पतनीयकृते ) पतनीये करणेऽनीयर् BālamBha. ii. 303. 29 (*on* 2. 210); ii. 48. 1 (*on* 2. 32); **iii** [P. iii. 3. 163] *kṛtya-* suffix *-anīya* denoting the sense of *vidhi* ( command ), cf. **अनीयर्प्रत्यय.**

**अनीयर्प्रत्यय** ( anīyar–pratyaya ) *m.* [P. iii. 3. 163] *kṛtya-* suffix *-anīya* denoting the sense of *vidhi* (command) परं ब्रह्म सदोपासनीयम्। विध्यर्थकतव्यप्रत्ययस्थानेऽनीयर्प्रत्ययः VedāntRaMañ. 2.6 (74.7)

**अनीयस्** ( an–īyas ) *adj.* excluding the *taddhita* suffix *-īyas* (in the sense of comparative degree) गवाबादेः स्वोऽन्ते गौण्येऽनीयसः MugdhaBo. 6. 14(55. 9)

**अनीयिवस्** ( an–īyivas ) *adj.* [*f.* -uṣī] [ KāśiVṛ. *on* iii. 2.109 ] who or which had not arrived or reached प्रेयस्यनीयुषि शुचा गलति स्म तत्र शून्ये क्षणेन वलयं तदरालकेश्याः HarVi. 23.13; इत्याद्यैर्वचनैः कान्ते दृग्गोचरमनीयुषि। विदर्भदुहितेत्यन्तः स्वप्नस्यार्थं व्यचारयत् PāṇḍaC. 6. 520; अनीयुषीणां तत्सैन्यशोषिताशेषपाथसाम्। वार्धिः शङ्केऽत्र कान्तानां बिभर्ति विरहव्यथाम् PāṇḍaC. 12. 319.

**अनीर** ( a–nīra ) *adj.* which is without water, waterless अनीरभूरुहान्तरालविस्तरेण च तृडातपक्लान्तिदुस्तरं पन्थानमतिक्रम्य गच्छन् ··· महावने पतितोऽस्मि UdaySuKa. 60.4; रत्नाकरमिवानीरं रत्नमाणिक्यपूरितम्। अजयज्जवनद्वीपं नरद्वीपी स लीलया TriṣaŚaPuC. i. 4. 270.

**अनीरण** ( an–īraṇa ) *n.* absence of blowing the wind (in a flute) द्विकस्त्रिकश्चतुष्को वा श्रुतिसंख्यो भवेत् स्वरः। अनीरणात्तु शेषाणां स्वराणां श्रुति( मपि ) संभवम् ( वः ) NāṭyaŚā. 30.4 ( AbhinBhā. आपूरणादानयनादीरण( म् ) अनादररन्ध्रपूरणाच्च ) [ better read अपूरण ]

**अनीरदेशस्थ** (anīradeśasth–a) *adj.* staying or being in a waterless place (i.e. in a dry land) ग्राहश्चानीरदेशस्थः शुनापि परिभूयते NītiSā. 9.40.

**अनीरयित्वा** ( an–īrayitvā ) *ger.* not having uttered न माम् ( ओंकारम् ) अनीरयित्वा ब्राह्मणा ब्रह्म वदेयुः GopBr. i. 1.23 (16.5); PraṇU.[2] 33.22.

**अनीरशन** (a–nīraśana) *adj.* not destitute of a girdle (i.e. possessing a girdle or waistband) अभिययौ स हिमाचलम् ···। व्यथितसिन्धुमनीरशनैः शनैरमरलोकवधूजघनैर्घनैः Kirātā. 5.11 ( comm. अनीरशनैरनिर्मेखलैः, सरशनैरित्यर्थः ); SaraKaṇṭhā. 199.7.

**अनीरित** (an-īrita) *adj.* [*f.* -ā] **Ai** not caused to make sound (*lit.* unbeaten) दिव्यैश्च पुष्पैस्तं देवाः समन्तात्पर्यवाकिरन् । देवदुन्दुभयश्चैव नेदुः स्वयमुदीरिताः (v.l. अनीरिताः) MahāBhā. iii. 195. 14; **Aii** not stirred or agitated (by the wind) जज्ज्वाल सौम्यार्चिरनीरितोऽग्निः BuddhaC. 1. 22; **Aiii** unexcited अनीरितानां दोषाणां मारणा न प्रशस्यते BhelaS. 39.5 (1. 25); **B** not proclaimed अथाभिधास्यामि ··· अनीरिताः कर्मकलाश्च काश्चन TantrSa. 12.1 (Vimarśinī अनीरिता अनुक्ताः)

**अनीर्यमाण** (an-īryamāṇa) *adj.* not being fanned, not being stirred अनीर्यमाणस्तु यथानिलेन प्रशान्तिमागच्छति चित्रभानुः । अल्पेन यत्नेन तथा ··· शान्तिमुपैति चेतः Saund. 14. 49; एवं हि भूयो लयमेति चित्तमनीर्यमाणोऽग्निरिवाल्पसारः Saund. 16.55.

**अनीर्षा** (an-īrṣā) *f.* absence of envy or jealousy अनीर्षा च दया चैव योगयोरुभयोः समाः BṛNāraP. 31.35.

**अनीर्षु** (an-īrṣu) *adj.* not envious, not malicious अनीर्ष्युं (v.l. अनीर्षु )गुप्तदारः स्यात संविभागी प्रियंवदः MahāBhā. v. 38. 10; अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः MahāBhā. xii. 71.8; xii. 221. 31; xii. 222.13; सो अनीर्षु सूरतश्चैव MaVastuAva. ii. 368. 2.

**अनीर्षुक** (an-īrṣuka) *adj.* [*f.* -ā] not jealous आढ्यो महाधनो भोति पुण्यवन्तो अनीर्षुको MaVastuAva. ii. 363.7; शुद्धोदनस्य माया नाम देवी — मधुरप्रियवादिनी ··· अनीर्षुका LaliVi. 3.0 (209); मायादेवी ··· अनीर्षुका चाप्यशठा अमाया LaliVi. 3.10; यश्चापि भिक्षू मम निर्वृतस्य अनीर्षुको एत प्रकाशयेया SaddhaPuṇ. 171.16; तथागतस्य परिनिर्वृतस्य सद्धर्मक्षयान्तकाले वर्तमाने इदं सूत्रं धारयमाणो बोधिसत्त्वो महासत्त्वोऽनीर्षुको भवति SaddhaPuṇ. 171.28. [DBHS.]

**अनीर्ष्य** (an-īrṣya) *adj.* [*f.* -ā] not having envy or jealousy अनीर्ष्यमशठं प्राज्ञः प्राजापत्यं वदेच्छुचिम् KāśyaS. 51B.32; शौनकाद्या महात्मान ऋषयो ब्रह्मवादिनः ।··· अनीर्ष्याः सर्वधर्मज्ञाः BṛNāraP. 1.6; अनीर्ष्याः श्रोतारो मम वचसि चेद् वच्मि तदहम् BhallaŚ. 93; Subhāṣi. 1012; नानीर्ष्यो नित्यदुःखितः।··· इति भूतार्थसंग्रहः RājTa.(Ka.) 4.91; प्रत्यक्षस्य गुणान् राज्ञो विचिन्वन्तो यथास्थितान् । अनीर्ष्यस्य भविष्यामो विवेकस्यानृणा वयम् RājTa.(Ka.) 8.1551; अनीर्ष्या पतिशीलज्ञा महादेवी पतिव्रता BhāvPra.(Śā.) 290.18(10)

**अनीर्ष्यत्** (an-īrṣyat) *adj.* not showing jealousy or envy तामनीर्ष्यंश्च गोपयेत् स्वैरिणी नाशयेद् गृहम् AṣṭāSaṁ. i. 12. 19 (1.3); अनीर्ष्यन्तो भक्तिमन्तो ये मयोक्तमिदं शुभम् । अनुतिष्ठन्ति ये सर्वे मुक्तास्तेऽखिलकर्मभिः GaṇeP. ii. 139.32.

**अनीर्ष्या** (an-īrṣyā) *f.* absence of jealousy or envy अनसूयाप्यमात्सर्यमनीर्ष्या शीलमेव च । एष धर्मः कुरुश्रेष्ठ कथितः परमेष्ठिना MahāBhā. xii. 252*(2)

**अनीर्ष्यालु** (an-īrṣyālu) *adj.* [DEBRU. 290] not envious, not jealous न चासां वशगः स्वतन्त्रवृत्तिरनिष्ठुरोऽनीर्ष्यालुरनवशङ्की चेति नायकगुणाः KāmSū. 309. 4 (6. 1); कस्य वा न भवति रोषः ··· कस्य वेति अनीर्ष्यालोरपि Loc. 23. 9 (*on* 1.4); Kāvyānu. (He.) 40.20; Ekāva. 1. 13(148) (46.6); प्रियजातिरनीर्ष्यालुः ··· प्रायेण न हि दृश्यते TriṣaŚaPuC. i. 1.743.

**अनीर्ष्यावत्** (an-īrṣyāva(n)t) *adj.* free from jealousy यथाकामं कामिनीनां संग्रहः परमनीर्ष्यावान् कल्याणावहः प्रक्रमः NītiVā. 24. 29.

**अनीर्ष्यु** (an-īrṣyu) *adj.* not jealous, not envious अनीर्ष्युर्गुप्तदारः स्यात् संविभागी प्रियंवदः MahāBhā. v. 38.10; अनीर्षवो (v.l. °र्ष्यवो) न चान्योऽन्यं विहिंसन्ति कदाचन MahāBhā. xii. 222. 13; xii. 223. 17; xiii. App. 1. 15 (3915)

**अनील** (a-nīla) *adj.* **Ai** other than blue or black, which is not blue or black नीलोत्पलादिशब्देभ्यः एक एवावसीयते। अनीलानुत्पलादिभ्यो व्यावृत्तं प्रतिबिम्बकम् TattvSaṁ. 1098; यथा साकारोऽर्थो निराकारं विज्ञानमनुमापयति, एवं नीलाकारमपि विज्ञानं अनीलमर्थमनुमापयति TātpaṬ.(U.) 253.14 (*on* 5(3).50); तदेव च प्रत्यक्षमनीलमपि व्यवच्छिनत्ति नीलसंविदि तस्याप्रतिभासात् NyāyMañ. i. 27. 7; तदैवानीलमनिदंरूपमपि संवेदनं प्रतीमः ĀtmaSi. 17. 25; न हि नीलं कंचित्प्रत्यनीलम् NyāyKuA. i. 67. 4; ŚatDū. 101.17; ĀtmaTaVi. 524.16; सर्पाः ··· अनीला मन्दवेगिनः। एते अल्पायुषो ज्ञेयाः BhaviP. 70A. 23 (i. 33. 23); स्वात्मनि वा न नीलं न अनीलम् प्रकाशानुग्रहेण विना व्यवस्थानायोगात् PratyabhiVi. i. 198.6 (*on* i. 5. 2); ii. 179.2 (*on* ii. 4. 11); नीलानीलयोरपि यद्येकत्रोपलम्भोऽस्ति तदा नास्ति विरोधः PramāMī. 28.11 (*on* i. 1. 32); वस्तुमात्रत्वाविशेषादनीलमप्यानीयेत ŚrutaPra. iB. 207. 27 (*on* i. 1. 13); सौगतैरप्येकत्र चित्रपटीज्ञाने नीलानीलयोर्विरोधानङ्गीकारात् SyādvāMañ. 5(183); अन्यथा एकनीलनाशे जगदनीलमापद्येत SiddhāMu. 57. 12 (*on* 100); अनीलं घटमानयेत्यादौ घटपदसामानाधिकरण्यानुरोधेनानीलपदस्य नीलभिन्नपरतया नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात् VyutpaVā. 37.8; **Aii** [SiddhaHe. vi. 2. 4; cf. Vār. 2 *on* P. iv. 2. 2] dyed with substances other than indigo शाकलैः पीतकैर्नीलैरनीलैरपरैरपि । तं क्षौमैराचयद्भूपः कर्पूरागरुधूपितैः DvyāśraKā. 15. 44 (comm. अनीलैर्नीलीरक्तक्षौमवर्जितैरपरैरपि क्षौमैः); **B** not dark, white, bright बालार्कलक्ष्म्येव कृताङ्गरागैः समुन्नमद्भिः सलिलैरनीलैः। ज्वलन्महानग्निरिवावभाति को नाम तस्माच्च महार्णवोऽयम् JātaMā. 91. 11 (14. 16); यस्य कीर्त्यावदातेषु भुवनेषु महौजसः । अनीलं जायते सद्यस्चि(श्चि)त्रं तद् द्विषतां यशः EI. xviii. 141. 29.

**अनील** (a-nīla) *m.* **A** name of a snake नीलानीलौ तथा नागौ ··· एते प्राधान्यतो नागाः कीर्तिताः MahāBhā. i. 31. 7; **B** name of a mountain तेनैव वारिधिं याति निम्नगा सरितां पतिम् । अनीलनिषधायामौ माल्यवद्गन्धमादनौ । अतीत्य वर्षमम्भोधिमेति BṛBrahmaS. ii. 4.51.

**अनीलत्व** (anīla-tva) *n.* the state of not being blue or dark नीलोत्पलादिशब्देषु ··· न ह्यनीलत्वव्युदासेऽनुत्पलच्युतिः ŚlokaVār. 5(13).116 (596.6); TattvSaṁ. 968.

**अनीलधी** (anīla-dhī) *f.* notion of the non-blue (object) यत्त्वनुभयरूपम् ··· तत् कल्पितामनीलधियमनुधावेत् PratyabhiVi. ii. 291.6 (*on* iv. 1. 6)

**अनीलनिषेध** (anīla-niṣedha) *m.* negation of what is other than blue भावाभावयोरितरनिषेधात्मकत्वादनीलनिषेधो नीलमेवेति नीलमविवक्षितम्, अनीलनिषेधस्तु विवक्षितः NyāyKu. 139.13.

**अनीलनीलकण्ठ** (anīla-nīlakaṇṭha) *m.* blue-necked one who is fair (in complexion) नमः ··· हराय वरदायिने । अनीलनीलकण्ठाय BṛKathāMañ. 14.65.

**अनीलपटच्छन्न** (anīlapaṭa-cchanna) *adj.* [w. r. for नीलपटच्छन्न] यत्रानि( ? यत्र नी )लपटच्छन्नविग्रहा इव वीरुधः MahāP. 22. 120.

**अनीलप्रकारव्यवस्था** (anīlaprakāra-vyavasthā) *f.* fixity of the qualifying attribute non-blue यत्र यत्प्रकारप्रतिषेधेन यदितरप्रकारव्यवस्थानियमस्तत्र न प्रकारान्तरसंभवः यथा नीलप्रकारप्रतिषेधेनानीलप्रकारव्यवस्थायां पीते TātpaṬ. (Vā.) 552. 17 (*on* iii. 2. 14)

**अनीलफेन** (anīla-phena) *m.* white foam अथावगाहमानाः क्रमेण रूप्यप्रभावभासितमनीलफेननिचयपाण्डुरमपरं समुद्रमालोक्य सविस्मयाः सुपारगमूचुः JātaMā. 90. 24 (14.13)

**अनीलबोधव्यावृत्ति** (anīlabodha-vyāvṛtti) *f.* exclusion of the (constructed) cognition of what is not blue अनीलबोधव्यावृत्त्या च नीलबोधरूपत्वं व्यवस्थाप्यम् NyāyBiṬ. 83.5 (*on* 1.21); अनीलाकारव्यावृत्त्या नीलाकारं ज्ञानं प्रमाणम् । अनीलबोधव्यावृत्त्या नीलबोधस्वरूपं प्रमितिः TarkBhā.(Mo.) 11. 26.

**अनीलरूप** (a-nīlarūpa) *adj.* not having a blue colour 'वायुपरमाणवोऽनीलरूपाः' ··· इत्यादिष्वनुमानात्मिका तदेकविषया बुद्धिः TantrRaha. 16.1.

**अनीलवाजिन्** (anīla-vājin) *m.* name of Arjuna (*lit.* having white horses) इतीरिताकूतमनीलवाजिनं जयाय दूतः प्रतितर्ज्य तेजसा Kirātā. 14.26 (comm. श्वेताश्वमर्जुनम्); गणाः समासेदुरनीलवाजिनम् Kirātā. 14. 42.

**अनीलविरुद्धस्वभाव** (anīlaviruddha-svabhāva) *adj.* whose nature is opposed to what is non-blue न हि सामान्यतो नीलमनीलविरुद्धस्वभावमनीलान्तरम् ĀtmaTaVi. 245.5.

**अनीलव्यावृत्त** (anīla-vyāvṛtta) *adj.* different from what is non-blue अनीलव्यावृत्तमुत्पलं विशिष्टप्रत्ययस्य विषयः Kiraṇā. 202.16.

**अनीलव्यावृत्ति** (anīla-vyāvṛtti) *f.* exclusion of what is non-blue तृतीये नीलस्यालीकस्यानीलव्यावृत्तिरूपतायामनीलानां पारमार्थिकत्वप्रसङ्गः ĀtmaTaVi. 524.16; ननु 'अहं जानामि' इति वर्तमानावभासं प्रत्यक्षमवर्तमानव्यावृत्तिमपि गमयति, नीलप्रत्यक्षमिव अनीलव्यावृत्तिम् PrakaVi. 529. 9; यदि च नीलपदस्य नीलिमविशिष्टार्थो न विवक्षितः, किमित्यनीलव्यावृत्तिरेव फलति NyāyKu. 138.8; ŚivārkaMaDī. ii. 89. 22 (*on* ii. 2. 24); नीलमुत्पलमित्यादेरपि अनीलव्यावृत्तिद्वारा स्वरूपमात्रपरत्वमित्यापाताच्च Nyāyāmṛ. 456B. 6; AdvaiSi. 694.11.

**अनीलसप्ति** (anīla-sapti) *adj.* having white horses इष्टावलोकं जननीगुरूणां तेजोऽतिभास्वद्वरतं दधानम् । राजा स शत्रुघ्नमनीलसप्तिं प्रास्थापयत्तीर्थनिषेवणाय RāghPāṇ.(Ka.) 2.41; *m.* name of Arjuna (*lit.* having white horses), RāghPāṇ.(Ka.) 2. 41 (comm. श्वेताश्वमर्जुनम्)

**अनीला** (anīlā) *f.* name of a daughter of Prāvā अनूपां (v.l. अनीलाम्) सुभगां भासीमिति प्रावा व्यजायत MahāBhā. i. 59. 44.

**अनीलाकार** (anīlākāra) *adj.* having a non-blue form ज्ञानस्यार्थसारूप्यमनीलाकारव्यावृत्त्या कल्पितनीलाकारत्वं प्रमाणम् Bhām. 438. 14 (*on* ii. 2. 28); इह नीलादेरर्थात् ज्ञानं द्विरूपमुपपद्यते । नीलाकारं नीलबोधस्वरूपं च । तत्रानीलाकारव्यावृत्त्या नीलाकारं ज्ञानं प्रमाणम् TarkBhā.(Mo.) 11.25.

**अनीलाकारापोहरूप** (anīlākārāpoha-rūpa) *n.* [Inst.] in the form

of exclusion of what has non-blue form ज्ञानगतं बाह्यनीलसारूप्यं भासमानमनीलाकारापोहरूपेण कल्पितम् VedāntKa. 285.27 (*on* ii. 2.28)

**अनीलादिरूपत्व** (anīlādirūpa–tva) *n.* the state of having the form of non-blue etc. धियो नीलादिरूपत्वे बाह्योऽर्थः किंप्रमाणकः। धियोऽनीलादिरूपत्वे स तस्यानुभवः कथम् PramāVar. 3.433.

**अनीलादिव्यावृत्ति** (anīlādi–vyāvṛtti) *f.* exclusion of what is non-blue etc. अनीलादिव्यावृत्त्युपहितं ज्ञानं प्रमेयम् LaCandr. 435.15.

**अनीलाद्यनेकव्यावृत्ति** (anīlādyaneka–vyāvṛtti) *f* exclusion of many such as non-blue etc. अनीलाद्यनेकव्यावृत्तिकृतोऽनेकत्वाध्यवसाय एवेति चेत्, अतादात्म्ये कथं व्यावृत्तीनामुल्लेखः ĀtmaTaVi. 464. 11.

**अनीलाद्याकारा** (anīlādy–ākārā) *adj.* (*f.*) having the form of non-blue etc. अनीलाद्याकारापि संवित् प्रत्यक्षा NayaVi. 216. 6 (*on* i. 1.5)

**अनीलानुत्पलव्यावृत्ति** (anīlānutpala–vyāvṛtti) *f.* exclusion of what is non blue and non-lotus नीलमुत्पलमित्यत्र त्वनीलानुत्पलव्यावृत्तिलक्षणफलोपलम्भादपर्यायत्वं बहु मन्यामहे NyāyKu. 137. 8.

**अनीलानुत्पलव्युदास** (anīlānutpala–vyudāsa) *m.* exclusion of what is non-blue and non-lotus यस्य चान्यापोहः शब्दार्थस्तेनानीलानुत्पलव्युदासौ कथं समानाधिकरणाविति वक्तव्यम् NyāyVār. 334.9 (*on* ii. 2. 67); अनीलानुत्पलव्युदासौ हि प्रधानौ नीलोत्पलशब्दावाहतुः न ह्येतयोरस्ति विशेषण-विशेष्यभावः परस्परासंबन्धात् TātpaṬ (Vā.) 492.21 (*on* ii. 2. 65)

**अनीलानुल्लेख** (anīlānullekha) *m.* non-mention of the non-blue नीलमुत्पलमित्यादावनीलानुल्लेखे अतद्व्यावृत्त्यनुल्लेखात् TattvCin. i. 828.5.

**अनीलापोह** (anīlāpoha) *m.* exclusion of the non-blue अनीलापोहेऽनुत्पलापोहोऽनुत्पलापोहे चानीलापोहो नास्ति Śarka. 59.8; न ह्यनीलापोहानुत्पलापोहयोरितरेतरत्र समवायः NyāyRa. 596.23 (*on* 5(13). 116)

**अनीलाभाव** (anīlābhāva) *m.* absence of non-blue अनीलाभावपृष्ठेन नापि नीलस्य वेदनम् BṛĀraUBhVā.(Sambandha.) 950.

**अनीलाश्व** (anīlāśva) *adj.* having non-dark (i. e. white) horses अनीलाश्वमिवादित्यं कुर्वद्भिर्हयरेणुभिः। .लेभे खुररजोघोरान्धकार इति नाम यः PṛthvīVi. 5.48.

**अनीलोपलक्षण** (anīlopalakṣaṇa) *n.* indication of what is non-blue तद् वस्तु ··· तथा न पीतम्, पीतमित्यनीलोपलक्षणम्, अनीलमपि न भवति Bhāsk. i. 62.12 (*on* i. 1. 3)

**अनीवमध्यमा** (anīva–madhyamā) *adj.* (*f.*) [णीव (नीव) स्थौल्ये DhātuPā. 1.598] middle portion (i. e. waist) of which is slender (ददर्श धन्यः सः ··· ईश्वरम्) श्रितं तनुम् ··· अनीवमध्यमाम् DhātuKā. 1.72 (comm. अनीवं कृशं मध्यमं मध्यप्रदेशो यस्यास्ताम्)

**अनीश्** (an–īś) *m.* other than the Supreme Self ज्ञाज्ञौ द्वावजावीशनीशौ ŚvetāU. 1.9.

**अनीश** (an–īśa) *adj.* [*f.* -ā] **1** not powerful, powerless, helpless, dependent, poor आत्माप्यनीशः सुखदुःखहेतोः ŚvetāU. 1.2 (Śaṅ. अस्वतन्त्रः); NāraPaU. 9.1; यः सेवते धर्ममनर्थबुद्धिः। अस्वोऽप्यनीशश्च तथैव राजंस्तदार्जवं स समाधिस्तदार्यम् MahāBhā. i. 87.4; MatsyaP. 41.4; नानीशैर्हि तदा ··· भृगुभिर्भावितात्मभिः। वधोऽभ्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम् MahāBhā. i. 170.15; एकान्तेन ह्यनीहो (v.1. ह्यनीशो) ऽयं पराभवति पूरुषः MahāBhā. iii. 33.36; यश्च क्रुध्यत्यनीशः सन् स च मूढतमो नरः MahāBhā. v. 33.36; SūktiRa. 29.18; यदिदं ते विलपितं पाण्डवान् प्रति भारत। अनीशेनेव राजेन्द्र सर्वमेतन्निरर्थकम् MahāBhā. v. 53.19; वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः MahāBhā. v. 129.31; अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः MahāBhā. x. 2.24; याच्ञामाहुरनीशस्य अभिहारं च भारत। उद्वेजयति याचन् हि सदा भूतानि दस्युवत् MahāBhā. xiii. 59.4; यदहं गात्रसंस्पर्शं रावणस्य गता बलात्। अनीशा किं करिष्यामि विनाथा विवशा सती Rāmā. v. 35.63; ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्। भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ManuSm. 9.104 (ManvaMu. स्वामिनो न भवन्ति); अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः BṛhaspaSm. 204.55; अनीशः अस्वामी SmṛtiCan. iv. 710. 11; तया खलु प्रस्थाने अनीशया शरीरस्य हृदयं स्ववशं मयि। स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव Vikramo. 2.18; जीवन्त्याः पतिपुत्रास्तु देवराः पितृबान्धवाः। अनीशाः स्त्रीधनस्योक्ताः KātySm. 915; Aparā. 752. 25 (*on* 2.143); अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः SāṁkhyaKāBh. 32.7 (*on* 61); SarvaSiSaṁ. 4.34; YogVā. ii. 6.26; SyādvāMañ. 6(33); यद् द्रव्यमिन्द्रवायुभ्यां दातव्यमिति संकल्पितं तस्य त्यक्तप्रायत्वादनीशो यजमानः कथमिव वक्ष्यति TantrVā. 518.8 (*on* ii. 2. 19); पुमान्।··· ग्रहाविष्ट इवानीशश्चोदितो जन्यकर्मणा TaiUBhāVā. 77.3(2); अथ दानाधानविक्रये यत्र प्रकृतत्वादनीशाः ManuBh. ii. 153.6 (*on* 8.163); अत्रापि वयमनीशाः। भावास्तु यदारभन्ते, तदारभन्तामित्यनुमन्तुमेव वयं प्रभवामः PrakaPañ. 368. 8; प्रजाः। तं धावमानमनुधावन्त्यनीशाः BhāgP. iv. 11.20; देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः। दुःखात्ययं चानीशस्य क्रिया मोघाः कृताः कृताः BhāgP. vii. 13.29; xi. 31.12; रुरोदोच्चैरनीश इव स प्रभुः ŚivaP. ii(3). 4.38 (127B.10); अनीशाः (पितरः) कथं स्वर्गादिफलं प्रयच्छन्ति Mitā. 96.26 (*on* 1.269); असंसारी जीवः संसारदशायामल्पज्ञोऽनीशः VedāntTaSā. 48.1; अनीशाः विभागे अस्वतन्त्राः ManvaVi. 1167.15 (*on* 9.104); अनीशो यजमानो न शक्नोत्यन्यांस्तेन परिक्रेतुम् BhāṭṭDī. i. 351.4 (*on* iii. 4.21); **2** not having any controller, beyond control, supreme अनीशस्याप्रमत्तस्य भूतानि पचतः सदा।··· कालस्य क्षयं प्राप्तो न मुच्यते MahāBhā. xii. 220. 94; सर्वप्रभुरनीशस्त्वम् RaghuVa. 10.20; स्वस्थो निरुत्तरो जीयादनीशः परमेश्वरः EI. x. 8. 2; x. 11.3; ईशोऽनीशस्त्वमेवेश SaurP. 61. 37; सोऽव्यात् ··· त्वामनीशः Vidvanmo. 8. 124; **3** uncontrolled, unrestrained धिगस्तु राजसं भावमनीशमनवस्थितम्। ईश्वरेणापि यद्रागान्मया सीता न रक्षिता Rāmā. v. 53.12; मनो बुद्धिश्च चित्तं च ते ह्यनीशाः शरीरिणाम् VarāP. 142.15; **4** incapable संकथेच्छुरभिधातुमनीशा संमुखी न च बभूव दिदृक्षुः ŚiśuVa. 10.41; अवलोक्य वक्त्रकमलं यस्य शशी स्वोदयेऽपि मलविकलं। कर्तुमनीशः किंचित्प्रतिक्षणं क्षीयतेऽद्यापि EI. i. 156.4; विनापि चन्द्रेण विनापि धैर्यान्नार्यो ययुर्या वसतिं प्रियाणाम्। ताः प्राप्य चन्द्रं स्मरदत्तधैर्या यातीर्निरोद्धुं विधिरप्यनीशः Rāvaṇā. 6. 39; अनयोपार्जितां त्यक्तुमनीशा डामराः श्रियम् RājTa.(Ka.) 8.963; राष्ट्रान्निर्वासने रिल्हणस्य सुज्जेरभीप्सिते। पार्थिवोऽप्यनुमन्ताभूदनीशः प्रत्यवस्थितौ RājTa.(Ka.) 8.2089; अनीशो विद्विषां तेषामासने शयनेऽपि वा। दाहज्वरातुर इव नन्दो न प्राप निर्वृतिम् PariPar. 7. 107; अनीशापि ··· प्रतिपत्तये। कामं बहुमता जज्ञे याज्ञसेनी किरीटिनः PāṇḍaC. 5. 454; प्रसादं रेवत्या जनयितुमनीशः कथमपि।··· बलरामो विजयते SaduktiKa. 36.18; अयं भवतीं विभाव्य भव्यां भविता निश्चितमात्मनोऽप्यनीशः Surath. 8.67; मिथिलास्वामिना···कुण्डलयोजने। अनीशा ईश सर्वेऽमी पुर्या निर्वासिता हठात् MalliC. 5.96; भोक्तुं शिशुत्वादवनीमनीशेऽमुष्मिन् दिगन्तावनिमण्डलीकाः। विटा इवैतामुपभुञ्जते स्म VasaViKā. 3. 37; बलिनं जेतुमनीशः कोऽपि तदीयं कृशं तिरस्कुरुते Ekāva. 8. 61 (315.11); परस्परविरुद्धप्रकारकाणि वाक्यानि सामान्यतो दृष्ट्वा जातसंशयो विशेषतो निर्णेतुमनीशस्तन्निवृत्तये धर्मजिज्ञासायां प्रवृत्तः VedāntKau. 3.19 (*on* i. 1.1); अहमप्यनयोर्विरहं सोढुमनीशः ViviṬīKa. 67.26; Dhūrtā. 352; भाग्यं द्रष्टुमनीशयेव भवतः कान्तापराद्धं मया RasāSu. 18.9 (1. 81); मन्ये ··· क्षुभितहृदयैर्बाधितुं त्वामनीशैः।··· बाध्यते हन्त बाला HaṁsSaṁ. 91; दातुं भोक्तुमनीशस्य श्रोत्रियस्येव संपदम्।···धूर्तौ राज्ञो मुमुषतुः श्रियम् RājTa.(Jo.) 41; 74; इदानीमनीशोऽस्मि शोकविक्लवान्यङ्गानि वोढुम् KaṁVa. 4. 17(4); **5** not having a master or lord (जगत्) सदैवेद(? सदेवेद)मनीशं च स्वभावोत्थं सदेदृशम् DevīBhāP. iii. 1.43; अनीशो वा कुर्याद् भुवनजनने कः परिकरः Mahimna. 6; नाप्यनीशमपूर्वं च प्रकल्प्यं फलसंगतौ BṛĀraUBhVā. iii. 8.146 (comm. चेतनेनानधिष्ठितम्); तस्कराक्रान्तपथिकः ··· अनीशो देशः कष्टां दशामगात् RājTa.(Śrī.) 4. 449.

**अनीश** (an–īśa) *m.* **1** other than the Supreme Self व्यक्ताव्यक्तं भरते विश्वमीशः। अनीशश्चात्मा बध्यते भोक्तृभावात् ŚvetāU. 1. 8; NāraPaU. 9.7; ज्ञाज्ञौ द्वावजावीशानीशौ BrahmSūBh.(Śrī.) i.124. 7 (*on* i. 1.2); ईशानीशौ नियन्तृनियम्यौ ŚivārkaMaDī. i. 124.22 (*on* i. 1.2); ईशस्याचिन्त्यशक्तित्वान्नाशक्यं क्वापि विद्यते।··· अनीशस्येशतेत्येव विरुद्धं सर्वमानतः AnuVyā. 43B. 7 (*on* 3.2); अदृश्यतामुखगुणयुक्तमक्षरं प्रधानमित्युचितमनीश एव वा NayaMañ. I. ii. 6.11; **2** not the owner, not the lord, not the master न हि दासत्वमापन्ना कृष्णा भवति भारत। अनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः MahāBhā. ii. 59.4; धर्मराजः ···। ईशो वा ते यद्यनीशोऽथ वैषः MahāBhā. ii. 62.26; प्रयच्छन्तु च ते राज्यमनीशास्ते भवन्तु च MahāBhā. v. 148. 15; **3** epithet of Viṣṇu (*lit.* having none else as the controller, the Supreme) उदीर्णः सर्वतश्चक्षुरनीशः ··· इति ··· केशवस्य महात्मनः। नाम्नां सहस्रं दिव्यानाम् MahāBhā. xiii. 135.80; अनीशोऽव्ययोऽक्षयः ··· इत्येतद् वासुदेवस्य विष्णोर्नामसहस्रकम् PañcaRā. (Nā.) iv. 3.14; **4** epithet of Śiva (*lit.* having none else as the controller, the Supreme) अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे श्रृणु ··· नित्यो ह्यनीशः शुद्धात्मा MahāBhā. xiii. 167*; LiṅgaP. i. 65.102; ईड्योऽनीशः सुरव्याघ्रः ··· एवं नाम्नां सहस्रेण तुष्टाव गिरिजापतिम् SaurP. 41. 104.

**अनीशकत्व** (anīśaka–tva) *n.* the state of not being the master or owner अविभक्तेषु द्रव्यस्य मध्यस्थत्वादेकस्य अनीश्वरत्वात् (v.1. अनीशकत्वात्) सर्वाभ्यनुज्ञावश्यं कार्या Mitā. 219.20 (*on* 2. 114); अनीशकत्वात् ··· स्वार्थे कः BālamBha. ii. 133.20 (*on* 2.114)

**अनीशता** (anīśa–tā) *f.* **A** the state of not being a controller, absence of lordship न चैतावता ईश्वरस्यानीशता Bhām. 166.12 (*on* i. 2.3); ईशतानीशतयोरेकत्रावस्थानम् NyāySu.(Ja.) 511A.6 (*on* iii. 2.1); अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्याताम्। कर्माधीनत्वे त्वनीशता AṇuBh. 15.23 (*on* i. 1.3); **B** powerlessness, helplessness (स्त्रीणाम्) बन्धनं रोमशोरुभिः। तनुभिर्वध-

मित्याहुर्मध्यच्छिद्रेष्वनीशता BhaviP. 21A. 22 (i. 5. 28); नखैः…। खरैर्वक्रैर्विवर्णाभैः श्वेतपीतैरनीशता BhaviP. 21B.35 (i. 5.51); 21B.29 (i. 5. 48); कृष्टोऽस्म्येतैरनीशताम्। यातः किमपि हन्तेति दूतैर्नागोऽप्यभाषत RājTa.(Ka.) 8. 2985; मोहादनीशतां प्राप्य मग्नो वपुषि शोचति (पुरुषः) PañcDa. 4.13; **C** the state of not being the owner प्रथमोक्ताभिप्रायेण विभक्ताग्रजानामनीशतां पित्र्ये प्रसाध्य तद्बलादन्यदप्याह SmṛtiCan. iv. 710.14.

**अनीशताहेतु** (anīśatā–hetu) *m.* cause of being other than the controller भेदेनेशतोपपत्स्यत इति निरस्तम्। अनीशताहेतोरभेदस्य विद्यमानत्वात् NyāySu.(Ja.) 511A. 11 (*on* iii. 2.1)

**अनीशत्व** (anīśa–tva) *n.* **Ai** the state of not being a master or controller दृश्यन्ते हि दुरात्मानो वध्यमानाः स्वकर्मभिः। इन्द्रियाणामनीशत्वाद् राजानो राज्यविभ्रमैः MahāBhā. v. 34.66; xii. 116 6; xii. App. I. 29C.(239); ईशत्वेनैव विज्ञातमनीशत्वेन चेच्छ्रुतिः। अनीशत्वेन विज्ञातमीशत्वेनाथ वा दिशेत् AnuVyā. 43B.8 (*on* 3.2); तस्येच्छया समानत्वान्नानीशत्वं प्रसज्यते TarkSaṁ.(Ā.) 112.27; काचिच्छ्रुतिः…ईशत्वेनैव विज्ञातं परमात्मानमुद्दिश्यानीशत्वेन प्रमितानीशत्वजीवभावेनादिशेत्। काचिदनीशत्वेन प्रमितं जीवमुद्दिश्य ईशत्वेन … उपदिशेत् NyāySu.(Ja.) 511A.1 (*on* iii. 2. 1); **Aii** incapacity, incapability इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि। अनीशत्वात्प्रलीयन्ते सर्पा हतविषा इव MahāBhā. xii. 290.85; BrahmP. 239.87; **B** the state of not being independent, dependence (आत्माप्यनीशः सुखदुःखहेतोः) कथमनीशत्वम् … कर्मपरवशत्वेनास्वातन्त्र्यात् ŚvetāUBh. 61. 11 (*on* 1.2); **C** the state of not being a god भगवदर्चाविग्रहेषु श्रीशालिग्रामादिषु पाषाणलोहमयत्वानीशत्वाचेतनत्वादिभावः VedāntRaMañ. 4.10 (135.2)

**अनीशनिर्मिता** (anīśa–nirmitā) *adj.* (*f.*) produced by a poor or helpless person तावत्स भगवान् साक्षाद्योगाधीशो गुहाशयः। अन्तर्दध ऋषेः सद्यो यथेहानीशनिर्मिता BhāgP. xii. 9. 33.

**अनीशभाव** (anīśa–bhāva) *m.* incapacity, inability विमुखे चतुर्मुखेऽपि श्रितवति चानीशभावमीशेऽपि। मग्नमहीनिस्तारे हरिः परं स्तब्धरोमाभूत् ĀryāSaŚa. 532.

**अनीशभेद** (anīśa–bheda) *m.* difference from the non-Lord ईशत्वेऽनीशभेदेन श्रुत्या सम्यक्प्रकाशिते। अयुक्तमपि चान्यत्र युक्तं भवति तद्बलात् AnuVyā. 43B.9 (*on* 3.2); अत्रानीशभेदेनाङ्गीकृतेनैवेशत्वं श्रुत्या सम्यक् प्रकाशितं भवतीति वदता श्रुतिविरोधः परिहृतः NyāySu.(Ja.) 511A.8 (*on* iii.2. 1)

**अनीशवचस्** (anīśa–vacas) *n.* statement about the non-existence of a god इत्यनीशवचोवारिवेलानुन्नोऽब्धिनेव सः। शक्रेण न चचालैषां धीशैलः सारगौरवात् MṛgendraT. i. 1. 10 (comm. ईश्वरनिराकरणवचनान्येव … वारीणि)

**अनीशवादिन्** (anīśa–vādin) *adj.* who advocates the non-existence of a god बुधास्तमनीशवाद्ययमिति ब्रुवते ŚaṅkaDigVi.(Mā.) 9.14.

**अनीशा** (anīś–ā) *f.* [P. iii. 1.135; iii. 3.102] **A** helplessness, powerlessness समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः MuṇḍaU. iii. 1.2; ŚvetāU. 4.7; दीनभावोऽनीशा MuṇḍUBh. 345.1 (*on* iii. 1. 2); ŚvetāUBh. 181. 2 (*on* 4. 7); VedāntKa. 139.3 (*on* i. 2.11); अनीशया पारवश्येन BrahmSūBh.(Śrī.) i. 351.9 (*on* i. 2.11); अनीशया पारतन्त्र्येण ŚivārkaMaDī. i. 351. 25 (*on* i. 2. 11); अनीशया अनैश्वर्येण तद्दोषनिराकरणाशक्त्या ŚivārkaMaDī. i. 404. 29 (*on* i. 3. 4); मोहप्रयुक्तेनानीशया ईश्वरत्वविरोधिनेशभेदेन शोचति संसरति LaCandr. 572.7; (an–īśā) [P. iii. 3.103] **Bi** primordial matter (*lit.* other than the Supreme one) अनीशया भोग्यभूतया प्रकृत्या मुह्यमानः शोचति जीवः BrahmSūBh.(Rā.) 279.14 (*on* i. 3.4); **Bii** nescience (*lit.* other than the Supreme one) अनीशया अविद्यया स्वोपाधिभूतया PrakaVi. 179.22; SiddhāSi. iv. 78. 12.

**अनीशात्मन्** (anīśātman) *adj.* having uncontrolled nature स वा एष शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्मा( v.l. अनीशात्मा )नन्तोऽक्षय्यः स्थिरः … स्वे महिम्नि तिष्ठति MaiU. 2. 4.

**अनीशान** (án–īśāna) *adj.* [*f.*-ā] **1A** weak, helpless यद्वा अनीशानो भारमादत्ते वि वै स लिशते TaiS. VI. ii. 5.1 यत्ते भामेन विचकरानीशानो हृदस्पृरि MaiS. i.7.1 (i. 108.7); बहिष्पवमाने ये च विजानन्ति ये च न ते सर्वेऽनीशाना अभिपरिवार्य दिदृक्षमाणास्तिष्ठन्ति JaimiBr. 1. 249; यश्च क्रुध्यत्यनीशः सन् (v. l. अनीशानः) स च मूढतमो नरः MahāBhā. v. 33.36; **1B** not being able, unable केचित्तु निबन्धकृतः कथंचिदपीदं समर्थयितुमनीशानाः सहितशब्दपातात् प्रमादपाठ एवेति वर्णयन्ति DharmoPra. 9. 24; अनीशानश्च न तेषु (यागादिषु) संभवत्यधिकारी Bhām. 573.18 (*on* iii. 2. 40); यस्त्वेवं न क्षमः सः … अन्यपरित्यागेनैकग्रहणस्यानीशानः शङ्कतैव NyāySu.(Ja.) 315A.2 (*on* ii. 2. 1); 419B.1 (*on* ii. 2.11); यान्ति …। निर्धावितुमनीशानाः साक्षितां सालभञ्जिकाः Yādavā. 16.32; **2** not constrained अनीशानानि ह वा अस्मै भूतानि बलिं हरन्ति य एवं वेद AitĀ. II. i. 5. 7; **3** not owning (something) अनीशानेन न शक्यं दातुम् ŚābaBh. 1215.8 (*on* iv. 1.30); (तिर्यञ्चः) अनीशाना धनस्य ŚābaBh. 1356. 16 (*on* vi. 1.5); एकप्रयोगोपयुक्तानामनीशानेन यजमानेन पुनस्त्यागायोगात् TantrRa. 46.14; 92. 1; सकलस्य हविषो देवतायै प्रदत्तत्वादनीशानो यजमानस्तुल्यः स ऋत्विग्भिः ŚāstrDī. 281.14 (*on* iii. 4. 21); 665.1 (*on* x. 2.9)

**अनीशानत्व** (anīśāna–tva) *n.* the state of not being the owner तृतीये इदं ब्रह्मण इति व्यादेशस्य प्रतिपत्त्यर्थत्वं यजमानस्यानीशत्वादपेक्षितविधिसंभवाच्च समर्थितम् MayūMāli. 665.2 (*on* x. 2. 9)

**अनीशार्चन** (an–īśārcana) *adj.* in which there is no worship of Śiva धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम् BṛJābāU. 5.16; DevīBhāP. xi. 12. 18; ŚivaP. i. 24.45 (31A.14)

**अनीशिता** (anīśi–tā) *f.* the state of not being the lord or controller न हि तादृशवैचित्र्यविदुषः स्यादनीशिता ĪśvaSi.(U.) 2.7.

**अनीशितृ** (an–īśitṛ) *adj.* who is not capable, incapable (भवति घटम् इत्यत्र) कथमनीशितुः साधनप्रवृत्तिनिवृत्त्योर्घटस्य कर्तृत्वं तादृशं कुलालमतिक्रम्य BhāvanāVi. 38. 2.

**अनीशित्व** (anīśi–tva) *n.* the state of not being the lord or controller तत्रास्मिँल्लोके जीवस्यानीशित्वं प्रत्यक्षसिद्धम् AṇuBh. 98. 5 (*on* i. 3.42)

**अनीशिनी** (an–īśinī) *adj.* (*f.*) not possessing क्रयविक्रयसंयुक्ता हि स्त्रियः।… विक्रीतत्वाच्च पितृधनानामनीशिन्यः। क्रीतत्वाच्च भर्तृधनानाम् ŚābaBh. 1360.4 (*on* vi. 1.10)

**अनीशोद्यम** (anīśodyama) *m.* effort of an incapable person विफलस्तत्समारम्भो यथानीशोद्यमो मुने BrahmVaiP. iv. 21.170.

**अनीश्ङीयुव्यञ्** (an–īśṅīyuvyañ) (Gr.) excluding the substitute *īś* (i.e. *ī*), feminine suffix *ṅī* (*ī*) and verbal bases which take *iy*, *uv*, *y* and *v* (included in the pratyāhāra *yañ*) वेकोऽनीश्ङीयुव्यञः … अनीश्ङीयुव्यञ इति किम्। बन्धौ व्यश्येदितीश्। कौमुदगन्धीबन्धुः। ङी गार्गीपुत्रः। इयुव् श्रीकुलम् भ्रूकुलम्। यञ् इन्द्रहूपुत्रः ŚākaṭāVyā. ii. 2.82.

**अनीश्वर** (án–īśvara) *adj.* [*f.* -ā, -ī] [included in the *brāhmaṇādi gaṇa*, GaṇPā. 167.26; KāśiVṛ. *on* vii. 3.30; CāndraVṛ. *on* iv. 1. 141; JaineVyā. 235. 15 (*on* iii. 4. 114); GaṇRa. 7. 404(427)] **Ai** who does not control or rule, not a lord, not a master अनीश्वरा अभितः सन्तु येऽन्ये AV. xii. 3. 42; अनीश्वरा अव्रतास्सन्त्वन्ये AV.(P.) xvii.40. 2; अनीश्वरं विब्रुवन्त्यार्यमध्ये युधिष्ठिरं तव पाञ्चालि हेतोः MahāBhā. ii. 62.25; अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः। इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते हि सः MahāBhā. v. 34. 61; SūktiRa. 44.6; अनीश्वरे बलं (v. l. अनीश्वरो बले) धर्मो द्रुमं वल्लीव संश्रिता MahāBhā. xii. 132. 7; लेखकः …। सोऽव्यग्रमना राज्ञः संदेशं श्रुत्वा निश्चितार्थं लेखं विदध्यात् … देशनामधेयोपचारमनीश्वरस्य ArthŚā. i. 168. 2 (2.10) (comm. अनीश्वरस्य अमात्यादेः); आत्मानमपि विज्ञाय चित्तवृत्तेरनीश्वरम्। विश्वसेत कथं स्त्रीषु BhaviP. 29A. 17 (i. 8.49); वयं देवास्तत्फलार्थाः समागताः। न प्रत्याख्याहि शैलेश भव नानीश्वरोऽपि च BṛDharmaP. i. 42. 48; अनीश्वरास्मि प्रियसखि मनोवृत्तेः UdaySuKa. 101. 2; जानीहि रजनीनाथो रजन्या अप्यनीश्वरः PāṇḍaC. 6 959; अये रत्नापीड कथमर्धोन्मीलितलोचन एव संचरन्नतिघूर्णमानानामङ्गानामनीश्वर इवावलक्ष्यसे KaṁVa. 4.7(5); गौतमः — 'योगक्षेमार्थमीश्वरमधिगच्छेन्नान्यमन्यत्र देवगुरुधार्मिकेभ्यः'। अन्यमनीश्वरम् VīraMi. 184. 4 (*on* 1.100); VīraMi.(Āhnika.) 156.24; **Aii** not powerful, powerless, helpless, dependent, poor य औपवसथिकं नाश्नाति। अनीश्वरो ह क्षोधुको भवत्यकाम्यो जनानाम् GobhiGS. i. 6.2; शकुनिस्तन्तुबद्धो वा नियतोऽयमनीश्वरः। ईश्वरस्य वशे तिष्ठन्नान्येषां नात्मनः प्रभुः MahāBhā. iii. 31. 24; अनीश्वरोऽयं पुरुषो भवाभवे MahāBhā. v. 39. 1; अनीश्वरोऽयं पुरुषः सुखदुःखाप्तये मतः Rāmā. ii. 1771*(3); नात्मनः कामकारोऽस्ति पुरुषोऽयमनीश्वरः Rāmā. ii. 98. 15; अनीश्वरं हीश्वरदेशिकं जगत् Rāmā. ii. App. I. 18(66); मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते। पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा Rāmā. vi. 104. 9; चापेऽथ बाणो निहितोऽपरेण जज्वाल तत्रैव न निष्पपात। अनीश्वरस्यात्मनि धूयमानो दुर्मर्षणस्येव नरस्य मन्युः BuddhaC. 13. 46; पुत्रि गणेन पूर्वमेव क्रियाकारः कृतः स्त्रीरत्नं गणभोग्यमिति। त्वं च स्त्रीरत्नमतोऽहमनीश्वरः GiMs. iii(2). 17.17; दुर्भिक्षमेव सततं तथा क्लेशमनीश्वराः। प्राप्स्यन्ति… मानवाः कलौ ViṣṇuP. vi. 1.26; कल्पान्ते रुद्रः संहरति प्रजाः। जायन्ते मोहयन्तोऽन्यानीश्वरा योगमायया। ऐश्वर्येण चरन्तस्ते मोहयन्ति ह्यनीश्वराः(?रान्) VāyuP. ii.5.142; सर्वमात्मनोऽनीश्वरं विश्वं नश्वरम् HarṣaC. 338. 8 (comm. न स्वायत्तम्); कर्तुः क्रियायां स्वातन्त्र्यं वस्तुवृत्ते ह्यनीश्वरः TaiUBhāVā. 179.1(2); (दहेत् … ध्यानेनानीश्वरान् गुणान्) गुणान् सत्त्वरजस्तमांसि। ते चानीश्वराः परतन्त्राः चेतनाधीनमूर्तयः ManuBh. i. 521. 3 (*on* 6.72); प्रसरेन्नादबिन्द्वादि-

सापेक्षा चेदनीश्वरी ŚivDṛ. 2.42; यो यस्माद् बलवान् वाणि ततोऽन्यं रक्षितुं क्षमः कथं परान् साधयति यदि स्वयमनीश्वरः DevīBhāP. ix. 4.16; बालकश्चायम् …। करोतीन्द्रमनिन्द्रं वा … ईशमनीश्वरम् GaṇeP. ii. 18. 29; यद्यनीश्वरो भवेत् जानतोऽप्यस्याक्षितं न सिद्ध्येत् Kiraṇā. 95.17; अगम्भीराशयानि वा दरिद्रकुलानि — अनीश्वराणि कृपणकुलानि SthānṬ. 420B. 7; द्वाविमौ पुरुषौ लोके सुखिनौ न कदाचन। यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ŚārṅgaPa.1547; अनीश्वरास्ते शत्रवो मां किं निन्दन्ति NyāySu.(Ja.) 502A. 7 (*on* iii. 2.8); परतन्त्रास्तु ये केचिद् दासत्वं ये च संस्थिताः। अनाथास्ते तु निर्दिष्टाः …। अनाथा अनीश्वराः DaṇḍaVi. 59.13; किं तेन ईश्वर इति नाममात्रं बिभ्राणेन वस्तुतोऽनीश्वरेण ŚivārkaMaDī. ii. 47.34 (*on* ii. 1.35); जाज्वल्यमानोऽपि सन् जातः श्रीशिवभूपतेश्च विषये दिल्लीश्वरोऽनीश्वरः ParamāKā. 5.33(? 32); **Aiii** who does not own or possess अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि MahāBhā. ix. 30. 55; अनीश्वराः पितृमन्तः स्थितपितृमातृकाः पुत्राः ArthŚā. ii. 31. 1(3.5); **Aiv** incapable, unable पृथिवी दक्षिणा दत्ता वाजिमेधे मम त्वया। पुनरस्याः पृथिव्या हि दत्त्वादातुमनीश्वरः MahāBhā xii.110*(2); उदरैर्दुःखैर्दृश्यन्ते ह्यर्दिता नराः।… प्रनष्टाग्निबलाहाराः सर्वचेष्टास्वनीश्वराः CaraS. vi. 13.4 (1922 Ed.); ( ऊरुस्तम्भे ) संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः।… पुरुषः CaraS. vi. 27.18 (1941 Ed.); RugVi. 24.9; BhāvPra.(Bhā.) viii. 25. 9; अहं करोमीत्यबुधोऽभिमन्यते तृणस्य कुब्जीकरणेऽप्यनीश्वरः TattvSa.(3) 124.20; काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः RaghuVa. 4.69; सुकुमारतनुर्गर्भे जन्तुः … परिवर्तेऽप्यनीश्वरः ViṣṇuP. vi. 5.18; BrahmP. 233.18; समेऽपि यातुं चरणाननीश्वरान् मदादिव प्रस्खलतः पदे पदे Kirātā. 8.22; पूजामिमां पठेन्नित्यं पूजां कर्तुमनीश्वरः DevīCatuSt. 71; उत्सवव्यसनयोः प्रभुर्विधिर्विक्रियासु महतामनीश्वरः RāmC. 2. 35; (App.2) 37.22; स किं स्वामी स किं सुतः। यः श्रीकृष्णपदाम्भोजे भक्तिं दातुमनीश्वरः BrahmVaiP. i. 8. 61; महिमानं तु यन्नाम्नः पारं गन्तुमनीश्वराः। मुनयोऽपि मुनीन्द्राश्च कथं तं क्षुणको भजे BṛNāraP. 2.42; आत्मविक्रयिणः पापाः प्राणत्यागेऽप्यनीश्वराः CaṇḍaKau. 5.15; राजानः सेवका जाता आनुकूल्येन तस्य ह। प्रतिकूला गता मृत्युं युद्धं कर्तुमनीश्वराः GaṇeP. i. 39. 9; मूढेन पश्यत मया नु यशःकृतेऽद्य क्षोदेष्वनीश्वरमहो सृजता प्रबन्धम् UdaySuKa. 3.19; 87.27; समागमे मे रम्भायास्तनया संभविष्यति। अनीश्वरोऽस्मि दानेऽस्या मुने तत्संगमावधि BṛKathāMañ. 7.132; स्वकारणाधीनसंनिधयः सहकारिणस्तेषामुपनयानपनययोरयमनीश्वर एव Kiraṇā. 145.16; विहाय मानवानन्ये ज्वरं सोढुमनीश्वराः Mānaso. ii. 6.644; सैव माता वरं माता या पोषितुमनीश्वरी। स्वभाग्यभाजनीकृत्य तत्याजावां नदीरये PariPar. 2.264; 1.443; 6.98; सिद्धादेशं प्रभोरेवं स लङ्घितुमनीश्वरः। आमेत्यभाषत TriṣaŚaPuC. i. 3.10; i. 3.82; तेषां तदा लब्धुमनीश्वराणां श्रियं निजास्येन नलाननस्य। नालं तरीतुं पुनरुक्तिदोषं बहिर्मुखानामनलाननत्वम् NaiṣC. 10. 21; तयोः संरब्धयोरेवं द्रष्टुं मृत्युमनीश्वरः।… परलोकं ययौ नृपः PāṇḍaC. 4.459; 5.267; सोढुं तापमनीश्वरा यदपि च ग्रीष्मागमं वाञ्छति। … मूढस्तत्र सखीजनः स्फुरति किं सुस्थस्य ते चेतसि SaduktiKa. 90.7; 315.2; निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते VedāntKa. 114.11 (*on* i.1.20); अनीकमभिभवितुमनीश्वरेण केनापि तत्प्रतिनिधिभूतमन्यद् व्यामोहादभिभूयते Ekāva. 8. 61(3) (316.3); कन्यावरौ…दृष्ट्वोभयेऽपि परिकर्म विलम्बमानाः। चक्रुर्विधेयमिति कर्तुमनीश्वरास्ते ŚaṅkaDigVi.(Mā.) 3. 54; स्वप्ना अमी देव विवृद्धिकाराः। एषां फलं वक्तुमनीश्वराः स्मः NemiC. 3.19; एवं ताभिरुदाहृते बत मुहुर्वक्तुं वचोऽनीश्वरो मूर्ध्ना वायुचलेन चन्दनतरुः प्रत्युत्तरं दत्तवान् HariVi. 2.17; शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्। दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते RasGaṅ. 12.5; BhāmiVi. 2.100; उग्रैः करैरुष्णरुचेः समन्तादूष्मायमाणाखिलदिङ्मुखस्य। आगन्तुमह्नः सविधं स्वकालेऽप्यनीश्वरेवापससर्प रात्रिः BhārCam. 3. 86; **Av** not proficient, not skilled सूतमागधव्रात्यरथकाराणामैश्वर्यतो विभागः शेषास्तमुपजीवेयुः। अनीश्वराः समविभागाः ArthŚā. ii. 38.2 (3.6); **Avi** not rich वसुपरासु परासुमिवोज्झतीष्वविकलं विकलङ्कशशिप्रभम्। प्रियतमं यतमन्तमनीश्वरं रसिकता सिकतास्विव तासु का KāvyālaṅSū. iv. 1.2; **Avii** not dedicated to Śiva नैर्ऋतं संगृहीत्वान्यः केशेष्वातोल्य चासकृत्। अनीश्वरं हविर्भुक्तं त्वयेत्याताडयत् पदा SkandP. iv. 89.49; गणाः पश्यत दुर्वृत्तैः प्रारब्धानां च कर्मणाम्। अनीश्वरैरवस्थेयं कुतो द्वेषो महेश्वरे SkandP. iv. 89.56; अनीश्वरासु सर्वासु क्रियासु परमेश्वर। एवमेव भवन्त्येव विघ्नजाताः सहस्रशः SkandP. iv. 89.106; iv. 89.107; **Bi** not belonging to the divine being प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम्। प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् AmṛNāU. 8; ManuSm. 6.72; MārkP. 39.10; VāyuP. i. 10.88; BhāgP. iii. 28.11; ViṣṇuDhaP. ii. 131.39; LiṅgaP. i. 8.76; BhaviP. 217A.2 (i. 145.8); BṛDharmaP. iii. 7.28; ŚārṅgaPa. 4438; दृश्यं विनश्वरं सर्वं विशेषाद् यदनीश्वरम् SkandP. iv. 89.6; अनीश्वरा गुणा रागद्वेषादयः Aparā. 990.3 (*on* 3.110); ManvaVi. 736.8 (*on* 6.72); अनीश्वरान् गुणान् ईश्वरस्य परमात्मनो ये गुणा न भवन्ति क्रोधलोभासूयादयः ManvaMu. 241.16 (*on* 6.72); **Bii** having none else as the master, supreme ब्रह्मणः पादचतुष्टयं निर्विशेषं भवति।… अद्वितीयमनीश्वरं भवति TripāMaNāU. 364.24(4); ध्यानोपरमणं कृत्वा विद्यासंपादितं मनः। अनीश्वरः प्रशान्तात्मा ततोऽर्च्छत्यमृतं पदम् MahāBhā. xii.238.7; BrahmP. 236.27; जगदादिरनादिस्त्वं जगदीशो निरीश्वरः (v.l. शोऽप्यनीश्वरः) KumāSaṁ. 2.9; प्राप्नोत्यत्रमसौ क्षत्रमत्रातृकमनीश्वरम् BṛĀraUBhVā. v. 15.9; विश्वज्योतिरनीश्वरः MahāP. 25.103; सर्वसंस्तुत्यमस्तुत्यं सर्वेश्वरमनीश्वरम्।… ध्यायेज्जगत्त्रयार्चार्हमर्हन्तम् YaśasCam. ii. 396.5; अनीश्वरस्त्वं जगदीश्वरस्त्वम् SkandP. iv. 78.34; जजाप रुद्रं भगवान् …। अणोरल्पतरं प्राहुः … षड्विंशकमनीश्वरम् LiṅgaP. i. 71.109; मोक्षकामा वयं चापि काङ्क्षामो यदनामयम्। अजेयमजरं नित्यमतीन्द्रियमनीश्वरम् BrahmP. 242.10; परः पुमानीश्वरस्स शिवः शंभुरनीश्वरः ŚivaP. ii(1). 6.25 (43B.10); ददृशुस्ते … परमात्मानमीश्वरम्।… अनीश्वरम्। नित्यं सत्यं निर्गुणं च PāñcaRā. (Nā.) i. 12.26; **Biii** not having a controller or master or lord असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् MahāBhā. vi. 38.8 (BhagGī. 16.8) (Śaṅ. न च धर्माधर्मसव्यपेक्षकः अस्य शासिता ईश्वरः विद्यते इति अतः अनीश्वरं जगत् आहुः); SāṁkhyaPraBh. 2.34 (*on* 1.0); अराजकाः प्रजाः …। सहितास्तास्तदा जग्मुरसुखार्ताः पितामहम्। अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश MahāBhā. xii. 67.20; बभूव सा ह्यहमनधिश्रया (v.l. मनीश्वरा) पुरी Rāmā. ii. 1550*(4); अनीश्वरमिदं सर्वं ब्रह्माण्डम् DevīBhāP. iii. 1.42; तत् तावन्निर्मितं न चानीश्वरम् PratyabhiVi. i. 272.5 (*on* i. 5.16); उक्तस्मृतौ हि यतोऽनीश्वरमीश्वरानुपादानकमतोऽसत्यं सत्योपादानशून्यम् … जगदिति ये माध्यमिकादयो वदन्ति तन्निन्दया सत्येश्वरोपादानकं तत् … इति प्रतिपादितम् GuruCandr. i. 498.17; LaCandr. 434.28; निन्दन्ति नित्यं द्विजदेवधर्माननीश्वरं सर्वमिदं वदन्तः Vidvanmo. 7.3; **Biv** who or which does not accept a god अनीश्वरः कथं मुच्येदित्येवं शत्रुकर्शन। वदन्ति कारणैः श्रैष्ठ्यं योगाः सम्यङ् मनीषिणः MahāBhā. xii. 289.3; BrahmP. 238.3; त्रिगुणात्मप्रधानं च तेन सांख्यमनीश्वरम् ĪśvaSi. (U.) 2.27; ये सांख्याः … अनीश्वराः। तत्राप्यस्त्यविवेकाख्यो मलो बन्धविमोक्षता ŚivDṛ. 6.27; प्रधानं हि सांख्यानां सेश्वराणामनीश्वराणां वेश्वरात् क्षेत्रज्ञेभ्यो वा वस्तुतो भिन्नं शक्यं निर्वक्तुम् Bhām. 284.18 (*on* i. 4.3); वेदप्रामाण्यवत् कृत्वाभिमानी न च वैदिकः। ईश्वरं वचनाद् वक्ति परं चानीश्वरः खलः SaurP. 39.62; भद्रं नानीश्वरं मतम् AnuVyā. 24A.6 (*on* 2.2); NyāySu.(Ja.) 336B.4 (*on* ii. 2.2); सांख्यः— अनीश्वरः Bhāsk. i. 55.17 (*on* i. 1.1); **Bv** not having Śiva, bereft of Śiva दृष्ट्वा देवनिकायांश्च तस्मिन् दक्षमहाध्वरे। अनीश्वरांस्ततो वेधा व्याजं कृत्वा गृहं ययौ SkandP. iv. 87.51 (comm. अनीश्वरान् महादेवरहितान्); अर्धे दानववैरिणा गिरिजयाप्यर्धे च तस्याहृते राजन् विश्वमनीश्वरं समभवत् PrabaCin. 52.13 (FN.); *m.* **i** other than the god, other than the Supreme Self न च … अनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति BrahmSūBh.(Śaṅ.) 519.7 (*on* ii. 4.20); न चेश्वरोऽनीश्वरो वा प्रकृतोऽत्राणुलक्षणः ĪśvaSi.(U.) 2.35; अन्योऽसावीश्वरो मत्तस्तस्माच्चाहमनीश्वरः TaiUBhāVā. 135.6(2); अपि चानीश्वरेण परिमितशक्तिज्ञानेन विग्रहवतानवाप्तकामेन कृतमवगतं घटादि कार्यम् ĪśvaSi.(Yā.) 74.16; अनीश्वरस्य निर्माणं वाक्यत्वमनुमापयेत् ĀgaPrā. 14.14; स हि सर्वप्राणिनां कर्मानुरूपं फलं प्रयच्छन् कथमनीश्वरः स्यात् NyāyKa. 53.26; कर्मणीश्वरोऽनीश्वरः स्यात् TātpaṬ.(Vā.) 594.14 (*on* iv. 1.20); अनीश्वरस्य ज्ञातृत्वकर्तृत्वे स्वभावविरुद्धे PratyabhiVi. i. 68.4 (*on* i. 1.3) (Bhāsk. यो यावतीश्वरो न भवति स तावति ज्ञाता कर्ता च न भवति); घटादिकार्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण … निर्मितं दृष्टम् BrahmSūBh.(Rā.) 139.5 (*on* i. 1.3); ŚrutaPra. iB. 123.13 (*on* i. 1.3); अनीश्वरस्यैव भौतिकं शरीरम् PrakaVi. 559.16; न हि कश्चिदनीश्वरः सन् अर्थमात्रप्रमेयप्रतिपादकोऽस्ति TarkSaṁ.(Ā.) 106.20; अनीश्वरेष्वपि केषुचित्तथा धर्मिग्राहकसद्भावे किं कुर्मः ŚatDū. 151.23; ब्रह्मादयोऽनीश्वराः सकलजगत्सृष्ट्याद्यकारणत्वात् NyāyPari. 146.9; 405.1; 509.8; जडस्य न कारणता न वानीश्वरस्य चेतनस्यापि SarvaDaSaṁ. 8.97; एवमनीश्वरेष्वपि…निमित्तोपादानत्वसमुच्चयः सिद्धः NyāySiA. 233.14; लोके पिशाचादीनामनीश्वराणां तादृशशक्तिमत्त्वे सर्वेश्वरस्य सुतरां तत्सिद्धेः TattvPrakā. 89B.11 (*on* ii. 1.26); अनीश्वरा हि स्वयंप्रतिभातेऽप्यर्थे (समाश्वा) आश्वासार्थं वेदमुपजीवन्ति NyāySu.(Ja.) 595A.9 (*on* iii. 4.5); तार्किकेश्वरो वितथसंकल्पत्वादनीश्वर एव स्यात् ŚivārkaMaDī. i. 149.29 (*on* i. 1.3); न ह्यनीश्वरस्य पुरुषोत्तमत्वं पुरुषेष्वनुत्तमस्य च महेश्वरत्वम् VīraMi.(Bhakti.) 142.30; अनीश्वरे शक्यगुणलेशयोगेन (भगवच्छब्दस्य) गौणत्वं स्यात् SiddhāSi. i. 28.1; ईश्वरीभूताः— अनीश्वराः सन्तः ईश्वराः संपन्नाः Bhāsk. i. 29.16 (*on* i. 1.1); **ii** other than the god Śiva सकलं निष्कलं चेति स्वरूपद्वयमस्ति मे। नान्यस्य कस्यचित् तस्मादन्यः सर्वोऽप्यनीश्वरः ŚivaP. i. 9.30 (7B.13)

**अनीश्वरकर्तृक** (anīśvarakartṛ-ka) *adj.* [*f.* -ā] not created by God अद्भ्यः संभूतः पृथिव्यै रसाच्चेत्यादेरनीश्वरकर्तृकावान्तरसृष्टिविषयत्वस्योक्तत्वात् NyāySu.(Ja.) 299A.11 (*on* ii. 1.6); न हि हिरण्यगर्भसृष्टिरनीश्वरकर्तृका NyāySu.(Ja.) 299B.4 (*on* ii. 1.6)

**अनीश्वरकार्यत्व** (anīśvarakārya-tva) *n.* the state of being a product of one other than the god हिरण्यगर्भस्यानीश्वरकार्यत्वासंभवेन विष्वन्तानां परमात्मत्वस्यावश्यवक्तव्यत्वात् VīraMi.(Bhakti.) 163.2.

**अनीश्वरचैतन्य** (anīśvara-caitanya) *n.* consciousness of one other than the Supreme Self, consciousness of the individual self अनीश्वरचैतन्यप्रयत्नयोरीश्वराधिष्ठितत्वाभ्युपगमात् NyāyPari. 293.2.

**अनीश्वरज्ञ** (an-īśvarajña) *adj.* who does not know the god उल्लङ्घ्य शास्त्रीयविधिं तमःस्था निपीडयन्तः स्वशरीरमात्रम्। क्रोधेन हिंसैकपराः कदाचित्तपश्चरन्त्येवमनीश्वरज्ञाः Vidvanmo. 7. 8.

**अनीश्वरज्ञान** (anīśvara-jñāna) *n.* knowledge other than that of the Supreme Self प्रकृतप्रवृत्तिहेतुरनीश्वरज्ञानं पक्षीक्रियत इति चेत् NyāySu.(Ja.) 45A.11 (*on* i. 1.1)

**अनीश्वरता** (anīśvara-tā) *f.* **I** the state of being other than the Supreme Self, powerlessness, non-supremacy चेतनस्यापि अनीश्वरतायां नैतद् घटते PratyabhiVi. ii. 151. 11 (*on* ii. 4. 1); अनीश्वरतयैव स्वात्मन उपलम्भात् ŚatDū. 152.6; **II** incapability नेमेर्विकारमाधातुमनीश्वरतयात्मनः। लज्जयेवातिचक्राम वसन्तर्तुरतिद्रुतम् PāṇḍaC. 16. 98.

**अनीश्वरताज्ञान** (anīśvaratā-jñāna) *n.* knowledge as not being the Lord भ्रान्तिः—अनात्मानीश्वरताज्ञानरूपो विपर्यासः Bhāsk. i. 82.23 (*on* i. 2.1)

**अनीश्वरतादोष** (anīśvaratā-doṣa) *m.* defect of not being the Supreme Self, defect of non-supremacy (ब्रह्मा सृष्टिम्) यदि धर्माधर्मावपेक्ष्य करोति नास्य स्वाधीनं कर्तृत्वमित्यनीश्वरतादोषः NyāyKa. 53. 24.

**अनीश्वरतारूप** (anīśvaratā-rūpa) *adj.* of the nature of not being the Supreme Self यद्यपि जीवस्यापि स्वप्राधान्येनाप्यहंपरामर्शो विद्यत एव तथापि सः ··· प्रतियोगीदन्तापरामर्शरूषितत्वेन नैश्वर्यरूपः। अपि त्वनीश्वरतारूप एव Bhāsk. i. 12.2 (*on* i. 1.1); तदेवं सति व्यामोहे — स्वात्मनि अनीश्वरतारूपे मोहे, व्यपोहिते — अपसारिते सति Bhāsk. ii. 146. 12 (*on* ii. 3. 17)

**अनीश्वरत्व** (anīśvara-tva) *n.* **AI** the state of not being the master एकस्मिन् वस्तुनि विरुद्धाभिप्राययोरेकाभिप्रायानुविधायित्वे तस्येतरस्यानीश्वरत्वम् BrahmSi. 121.8; **AII** the state of not being the Supreme Self, non-supremacy, powerlessness हीनमध्यमोत्तमभावेन हि प्राणिभेदान्विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेः अस्मदादिवदनीश्वरत्वं प्रसज्येत BrahmSūBh.(Śaṅ.) 410.12 (*on* ii. 2. 37); अभिभूतः स एवात्मा जीव इत्यभिधीयते। किंचिज्ज्ञत्वानीश्वरत्वसंसारित्वादिधर्मवान् SarvaVeSāSaṁ. 320; अनीश्वरत्वकिंचिज्ज्ञत्वशरीरित्वपुण्यपापपरवशत्वमनुष्यत्वादिविशेषप्रहाणेन कार्यस्य स्वनिर्माणसमर्थबुद्धिमत्कर्तृमात्रेण संबन्धनियमनिश्चयः ĪśvaSi.(Yā.) 79.6; ĀgaPrā. 16.18; एकाभिप्रायानुरोधेन सर्वेषां प्रवृत्तावेकस्यैश्वरत्वं नापरेषाम् मठपरिषदामिव कार्योत्पत्त्यनुरोधेन सर्वेषामविरोधे प्रत्येकमनीश्वरत्वम् NyāyKa. 57. 20; ईश्वरस्य भोगादिप्रसक्तिस्तथा चानीश्वरत्वम् Bhām. 466. 4 (*on* ii. 2.40); कार्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तेः BrahmSūBh.(Rā.) 141. 17 (*on* i. 1.3); न च अविद्यासाचिव्ये ब्रह्मणोऽनीश्वरत्वमुपकरणस्य स्वातन्त्र्याविघातकत्वात् VedāntKa. 2.24 (*on* i. 1. 0); न च तद्द्वेषास्पदत्वे संसारिवत् अनीश्वरत्वं, इच्छादिमत्त्वेऽपि तुल्यत्वात् TarkSaṁ.(Ā.) 113.2; ब्रह्मादिषु केषुचिदीश्वरतया शङ्क्यमानेषु तेनानीश्वरत्वं साध्यते NyāyPari. 146. 7; अशक्यविषयप्रयत्नत्वादीश्वरस्यैवानीश्वरत्वं वा NyāySiA. 230. 12; एतदुपहितचैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते VedāntSā.(Sa.) 6. 18; न चानीश्वरत्वम्। मर्यादामार्गस्य तथैव निर्माणात् AṇuBh. 154. 12 (*on* ii. 3.42) जगद्धि निम्नमुन्नतं च पापपुण्यतत्फलैः सृजत्यदो यदि प्रभुस्तदास्य पक्षपातिता। न पूर्वपूर्वकर्मणेति वक्तुमत्र युज्यते तदा ह्यनीश्वरत्वमस्य दूषणं प्रसज्यते NayaMañ. II. i. 12.23; **B** the state of not being the owner अविभक्तेषु द्रव्यस्य मध्यस्थत्वादेकस्यानीश्वरत्वात सर्वाभ्यनुज्ञावश्यं कार्या Mitā. 219.20 (*on* 2. 114); BālaṁBha. ii. 133.20 (*on* 2. 113)

**अनीश्वरत्वदोष** (anīśvaratva-doṣa) *m.* defect of not being the master, defect of powerlessness or non-supremacy न चानीश्वरत्वदोषः; न हि सेवाभेदानुरोधेन फलभेदप्रदः प्रभुरप्रभुर्भवति BrahmSi. 11.5.

**अनीश्वरत्वपक्ष** (anīśvaratva-pakṣa) *m.* view as not being the Supreme Lord अनीश्वरत्वपक्षे तु तेजोविशेषेणैव सोढव्यम् ŚatDū. 239.8.

**अनीश्वरत्वप्रसङ्ग** (anīśvaratva-prasaṅga) *m.* undesired contingency of not being the Supreme Lord or of non-supremacy स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात् BrahmSūBh.(Śaṅ.) 410.19 (*on* ii. 2.37); प्राक् प्रकृतिपुरुषयोः उत्पत्तेः ईशितव्याभावात् ईश्वरस्य अनीश्वरत्वप्रसङ्गात् GītāBh.(Śaṅ.) 389.15 (*on* 13.19); केवलस्य कर्तृत्वे विश्वस्य वैश्वरूप्यव्याघातः, सततोत्पत्तिप्रसङ्गश्च। अदृष्टापेक्षायां कल्पनागौरवम्, तत एव तदुत्पत्तेः। स्वार्थं प्रवृत्तावनीश्वरत्वप्रसङ्गः ĀtmaTaVi. 872. 9; वैषम्यं कुर्वतो रागादिमत्त्वं दृष्टमिति तदप्यनुमातव्यमित्यनीश्वरत्वप्रसङ्गः PrakaVi. 555. 11; VedāntKa. 247.10 (*on* ii. 1.34); कर्मसापेक्षत्वे तस्यानीश्वरत्वप्रसङ्गात् ŚivārkaMaDī. ii. 46. 28 (*on* ii. 1.34)

**अनीश्वरत्वव्याप्ति** (anīśvaratva-vyāpti) *f.* concomitance with non-supremacy or powerlessness ईश्वरादिलक्षणव्यतिरेकस्यानीश्वरत्वव्याप्तेर्ब्रह्मादिषु केषुचिदीश्वरतया शङ्क्यमानेषु तेनानीश्वरत्वं साध्यते NyāyPari. 146. 5.

**अनीश्वरत्वापत्ति** (anīśvaratvāpatti) *f.* undesired contingency of non-supremacy or powerlessness पुण्यपापलेपप्रसङ्गेनानीश्वरत्वापत्तेः TattvPrakā. 121A. 3 (*on* ii. 3. 33); न कर्मापेक्षायामीश्वरस्यानीश्वरत्वापत्तिर्दोषः ŚivārkaMaDī. ii. 47. 30 (*on* ii. 1. 35)

**अनीश्वरत्वोपलम्भ** (anīśvaratvopalambha) *m.* perception of being other than the Supreme Self अमतीतेश्वराणामपि स्वगतेच्छाविघातदुःखादिदर्शनात्तावत एवानीश्वरत्वोपलम्भरूपत्वात् ŚatDū. 152. 9.

**अनीश्वरनय** (anīśvara-naya) *m.* doctrine of denial or non-acceptance of a god अनीश्वरनयेन स्वच्छन्ददारितकुरङ्गकण्ठीरववत् स्वातन्त्र्यभोक्तृ TattvPradī.(A.) 371. 5 (*on* 3.75)

**अनीश्वरपक्ष** (anīśvara-pakṣa) *m.* the view of non-acceptance or denial of a god अनीश्वरपक्षे चाक्षसंयोगादिभिरेव सव्यापारे कर्मण्यपि प्रसङ्गात् KhaṇḍanKhā. 521.20; विशेषणस्य च अनीश्वरपक्षे — वैयर्थ्यात् TarkSaṁ.(Ā.) 54.9.

**अनीश्वरपरिस्पन्द** (anīśvara-parispanda) *m.* vibration of what is different from the Supreme Lord क्वचिदनीश्वरपरिस्पन्दानामपि नित्यत्वस्य वक्ष्यमाणत्वात् NyāySu.(Ja.) 159B.4 (*on* i. 2. 2)

**अनीश्वरप्रक्षिप्तत्व** (anīśvaraprakṣipta-tva) *n.* the state of being an interpolation by one who is not the Supreme Lord or by one other than the Supreme Lord शैवस्तुतिवचनस्यास्य ··· अनीश्वरप्रक्षिप्तत्वमतिवादरूपतया स्वीयतन्त्राधिकारिशैवस्तुतिमात्ररूपत्वं वा कल्पनीयम् PāñcRāRa. 28 5.

**अनीश्वरप्रणीतत्व** (anīśvarapraṇīta-tva) *n.* the state of being composed by one who is other than the god अनीश्वरप्रणीतत्वस्यापि·शक्यसाधनत्वात् NyāySu.(Ja.) 84A.7 (*on* i. 1.1)

**अनीश्वरप्रत्यक्ष** (an-īśvarapratyakṣa) *n.* perception of one other than the god अस्मदयोग्यविषयं अनीश्वरप्रत्यक्षं योगिप्रत्यक्षम् — इति अयुक्तम् TarkSaṁ.(Ā.) 88.30; 89.3.

**अनीश्वरप्रमा** (anīśvara-pramā) *f.* valid knowledge of one other than the Supreme Lord (i. e. of *jīva*) अनीश्वरप्रमा विज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वाद् घटवत् TattvPradī.(Ci.) 117.13.

**अनीश्वरप्रमापक्षीकार** (anīśvarapramā-pakṣīkāra) *m.* making the valid knowledge of one other than the Supreme Self as the subject of inference अनीश्वरप्रमापक्षीकारे यावदीश्वरसिद्धि व्यर्थं विशेषणम् NyāyPari. 379. 8.

**अनीश्वरबुद्धित्व** (anīśvarabuddhi-tva) *n.* the state of being the knowledge other than that of the Supreme Lord व्यासादिबुद्धिः न वेदार्थविषया, बुद्धित्वात्, अस्मदादिबुद्धिवत् – इति चेत्, न, तव ईश्वरबुद्धौ व्यभिचारात्, अनीश्वरबुद्धित्वात् — इति विशेषणेऽपि निरीश्वरवादे — विशेषणवैयर्थ्यात् TarkSaṁ.(Ā.) 89. 18.

**अनीश्वरभक्त** (anīśvara-bhakta) *m.* devotee of one other than Śiva मा वानीश्वरभक्तो भवामि भवनेऽपि शक्रस्य MahāBhā. xiii. 109*(2)

**अनीश्वरमत** (anīśvara-mata) *n.* system or doctrine not admitting (the existence of) a god अनीश्वरमतमसमञ्जसम् BrahmSūBh.(Ma.) 29A.9 (*on* ii. 2. 10); एवं प्रत्येकं दूषितान्यनीश्वरमतानि सामान्यदूषणेन निराकुर्वत् सूत्रमुपन्यस्य व्याचष्टे। विप्रतिषेधादिति TattvPrakā. 97A.8 (*on* ii. 2. 10)

**अनीश्वरमति** (anīśvara-mati) *f.* idea or notion as not being the Supreme Lord त्वय्यनीश्वरमतिं न च कुर्मः Yādavā. 21.25.

**अनीश्वरमीमांसक** (anīśvara-mīmāṁsaka) *m.* Mīmāṁsaka who does not admit (the existence of) the Supreme Lord अदृष्टं कारणमित्यनीश्वरमीमांसकादिमतम्, तन्न LalitāTriBh. 260. 12 (*on* 4); तत्साधनानुष्ठापयिता सन् तत्फलकामनां पूरयतीत्यनीश्वरमीमांसकमतनिरासो द्रष्टव्यः LalitāTriBh. 274.10 (*on* 9)

**अनीश्वररूप** (an-īśvararūpa) *adj.* not having the nature of the Lord पूजयितुः ध्यातुः वापृथग्भूतं तत् प्रमेयम्, पूज्यम्, ध्येयं च भाति इति तत् तावत् ··· न च अनीश्वरम् (v. l. अनीश्वररूपम्) PratyabhiVi. i. 272.5 (*on* i. 5. 16)

**अनीश्वरलिङ्ग** (anīśvara-liṅga) *n.* characteristic of what is other than the Supreme Lord आदित्यस्य तु नियम्यत्वजन्यत्वपराङ्गत्वपरतन्त्रप्रकाशकत्वादीनाम् अनीश्वरलिङ्गादीनां श्रवणाज्जीवत्वं स्पष्टमेव VedāntRaMañ. 58. 3 (1.4)

**अनीश्वरवत्** (anīśvara-vat) *adv.* like that of one who is other

than the Supreme Lord अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा। व्यस्य वेदं सनातनम् इत्यादिभिरीश्वरस्याप्यनीश्वरवदेव वेदप्रवर्तनमात्रसिद्धेः NyāyPari. 388. 17.

**अनीश्वरवाद** (anīśvara-vāda) *m.* theory of non-existence of the Supreme Lord अनीश्वरवादे अङ्कुरादीनामकरणकत्वप्रसङ्गात् KhaṇḍanKhā. 463. 19; अनीश्वरवादेऽपि राजादिप्रेरितभृत्यादेरकर्तृत्वापत्तेः TattvPradī.(Ci.) 289.2; न तावत् अनीश्वरप्रत्यक्षं इति विशेषणम् अनीश्वरवादे संभवति TarkSaṁ.(Ā.) 89. 3; 4. 3.

**अनीश्वरवादपादप्रसारिका** (anīśvaravāda-pādaprasārikā) *f.* causing of a firm footing in the doctrine of the non-existsence of a god स्वभावोऽयं पदार्थानामिति चेन्न। अनीश्वरवादपादप्रसारिकापातात् NyāySu (Ja.) 305A. 8 (*on* ii. 1. 7)

**अनीश्वरवादप्रसङ्ग** (anīśvaravāda-prasaṅga) *m.* undesired contingency of the theory of non-existence of a god महानुभावानाम् ··· मूर्तित्रयदेवानां ध्यानाद्युपकाराय तादृशमूर्तिमत्त्वम् अस्तीति न किंचिदनीश्वरवादप्रसङ्गावकाशः LalitāTriBh. 302. 13 (*on* 29)

**अनीश्वरवादाङ्गीकार** (anīśvaravādāṅgīkāra) *m.* acceptance of the theory of the non-existence of a god भवदभिमते ब्रह्मणि हेतुरनैकान्तिक इति चेन्न। केवलानुमानवादिनं प्रत्यनीश्वरवादाङ्गीकारेण प्रत्यवस्थानात् NyāySu.(Ja.) 110B.1 (*on* i. 1. 3)

**अनीश्वरवादिन्** (anīśvara-vādin) *adj.* who holds the view of the non-existence of a god एवमनीश्वरवादिनां सौगतादीनां शुद्धसंवित्संतानादिषु ··· समाश्चर्याः NyāyPari. 381.14; अनीश्वरवादिनं प्रतीदं दोषाभिधानम् NyāySu.(Ja.) 165B.11 (*on* i. 2.4); अनीश्वरवादिनः ··· स्वकीयेषु स्वस्वोत्कर्षं प्रकटयन्ति SiddhāTaVi.(ŚeṣaVā.) 7. 11.

**अनीश्वरविनाश्यादिकर्तृमत्त्व** (anīśvaravināśyādikartṛmat-tva) *n.* the state of having a creator who is not a god and who is perishable etc. यथासिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता। अनीश्वरविनाश्यादिकर्तृमत्त्वं प्रसज्यते Śloka-Vār. 5(15).80 (661.4)

**अनीश्वरविषयता** (anīśvaraviṣaya-tā) *f.* the state of having reference to one other than a god न च मुक्तस्वातन्त्र्यविषयाणां श्रुतीनाम् ··· अनीश्वरविषयतया संकोचः ŚatDū. 155. 1.

**अनीश्वरशरीरविषयता** (anīśvaraśarīraviṣaya-tā) *f.* the state of having reference to the body of one other than the Supreme Lord रमणीयचरणादिवाक्यमेवानीश्वरशरीरविषयतया व्यवस्थापनीयम् ŚivārkaMaDī. i. 252.7 (*on* i. 1. 21)

**अनीश्वरशिरस्** (anīśvara-śiras) *n.* head of one other than a god (i. e. head of a mortal) ननु प्रत्यक्षेण योऽर्थो नोपलभ्यते स सर्वथा नास्तीति मतं संगच्छते। यथा द्वितीयमनीश्वरशिरः, तृतीयो बाहुः शशविषाणादयो वा MāṭhVṛ. 14.13 (*on* 7); 15.11 (*on* 7); 25.15 (*on* 14)

**अनीश्वरसांख्यमत** (anīśvarasāṅkhya-mata) *n.* doctrine of the Sāṁkhya not accepting the existence of the Supreme Lord एवमनीश्वरसांख्यमतम् ··· अपाकृत्य NyāySu.(Ja.) 328A.8 (*on* ii. 2.1)

**अनीश्वरसूत** (anīśvara-sūta) *adj.* having as charioteer who is crippled (i. e. Aruṇa) तं विलोक्य पथि कान्यपि दूरं भेजिरेऽब्धिजलवाहकुलानि। अव्रजत् क्षणमनीश्वरसूतस्तद्दिशैव दिवसेशरथोऽपि RāmC. 16. 36.

**अनीश्वरसेवा** (anīśvara-sevā) *f.* service or worship of one who is other than the Supreme Lord अनीश्वरसेवापक्षीकारे सिद्धसाधनात् NyāySiA. 221.9.

**अनीश्वरात्मन्** (an-īśvarātman) *adj.* **i** (individual self) which is of a nature different from that of the Supreme Being न च प्रमाश्रयैरनीश्वरात्मभिः ··· अतिव्याप्तिः TārkiRa. 7. 6; **ii** of the nature of one not admitting the existence of a god विषयार्णवे। घोरदुःखभयाक्रान्ते समाजेऽनीश्वरात्मनि ··· न विशेषो विभाव्यते BhaviP. 85B.2 (i. 43. 48)

**अनीश्वरात्मवत्** (anīśvarātma-vat) *adv.* like the individual self which is other than the Supreme Lord ब्रह्म शरीरित्वात्यन्ताभावरहितम्। आत्मत्वादनीश्वरात्मवत् NyāyPari. 258.2.

**अनीश्वराधिष्ठित** (an-īśvarādhiṣṭhita) *adj.* not controlled by the Supreme Self तत्र च घटो दृष्टान्तो भवत्येवास्ति तस्यानीश्वराधिष्ठितस्यापि चेतनाधिष्ठितत्वम् NyāyRa. 661. 23 (*on* 5(15). 80)

**अनीश्वरापेक्षत्व** (anīśvarāpekṣa-tva) *n.* the state of not being dependent on the Supreme Self जीवस्य जीवान्तरनियामकत्वे अनवस्थितेः। साम्यादसंभवाच्च न जीवः। नियमे प्रमाणाभावात्। अनीश्वरापेक्षत्वाच्च BrahmSūBh.(Ma.) 11B. 8 (*on* i. 2. 17) (TattvPrakā. परमेश्वरानङ्गीकारादिति भावः)

**अनीश्वरासर्वज्ञाशङ्का** (anīśvarāsarvajñāśaṅkā) *f.* doubt of (being) neither the Supreme Lord nor the omniscient one या वासुदेवे अनीश्वरासर्वज्ञाशङ्का मूर्खाणाम्, तां परिहरन् श्रीभगवानुवाच GītāBh.(Śaṅ.) 113.9 (*on* 4. 5)

**अनीश्वरीया** (anīśvar-īyā) *adj.* (*f.*) coming from one other than the Supreme one प्रमाणपदमाप्नुयात् कथमनीश्वरीयापि चेदतः श्रुतिरियं श्रुता जगति तथ्यमैशी कृतिः Vidvanmo. 5.13.

**अनीश्वरेच्छा** (anīśvarecchā) *f.* will of one who is not the Supreme one न च सामग्र्यां सत्यां क्वचित् ज्ञानं क्वचिन्नेति नियन्तुं शक्यम्, अनीश्वरेच्छया तन्नियमासिद्धेः ŚatDū. 221.23.

**अनीश्वरोचिता** (an-īśvarocitā) *adj.* (*f.*) not worthy of a king अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् RājTa.(Ka.) 1. 357.

**अनीषच्छासन** (an-īṣacchāsana) *adj.* [SiddhaHe. v. 3.141; cf. Vār. 1 *on* P. iii. 3. 130] not easy to be punished, difficult to be punished अनीषच्छासनो दुर्धर्षणो दुर्मर्षणोऽपि च। मया सुशासनस्तेऽरिः DvyāśraKā. 13.38.

**अनीषत्** (an-īṣat) *adv.* not slightly, profusely तिमिरकुलैरनीषदुदमेषि मसीमलिनैः Kapphiṇā. 11. 33.

**अनीषत्कर** (an-īṣatkara) *adj.* not easy to be done, difficult to be done न किंचिदनीषत्करं नाम कृतान्तस्य AnargharRā. 6.81(3); अनीषत्कराः परिहर्तुमुपतापाः TilaMañ. 259. 1; यच्चानीषत्करं कृत्यं तत्रापीषद्वचं त्वया DvyāśraKā. 13.35 (comm. न केवलं सुखसाध्यं दुःखसाध्यम्); अति(नी)षत्करमप्युच्चैः कार्यमीषत्करं भवेत्। यत्रैकहृदयोत्साहधारिणः सहकारिणः PāṇḍaC. 12.352.

**अनीषदर्थ** (anīṣad-artha) *adj.* meant for the sake of (the sense) 'other than small' (का पथ्यक्षयोः) अनीषदर्थ आरम्भः। कापथः Nyās. ii. 478. 3 (*on* vi. 3. 104); PadMañ. *on* KāśiVṛ. *on* P. vi. 3. 104; Prasā. i. 666.12.

**अनीषद्दान** (an-īṣaddāna) *adj.* [SiddhaHe. v. 3.141; cf. P. iii. 3. 128] not easy to be given, difficult to be given ईषद्दानं मयानीषद्दानेऽपि त्वत्कृते सखे DvyāśraKā. 13. 39 (comm. अनीषद्दाने दुःखेन देयेऽपि वस्तुनि विषये)

**अनीह** (an-īha) *adj.* [*f.* -ā] **1** free from desire, indifferent स नेह (v. l. अनीह) आयाति परं परात्मा MahāBhā. v. 246*(7); xii. 208. 15; न चापि युक्तं त्वद्बाहुनिर्जितं मम मानिनः। राज्यं भोक्तुमनीहस्य दुर्बलस्येह कस्यचित् MārkP. 114.22; अनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसः TaiUBh. 264.11 (*on* 2.7); शुद्धं ब्रह्माहमस्मीत्यविरतमधुनात्रैव तिष्ठेदनीहः ŚatŚlo. 64; एकोऽहम् ··· स्फुरितभेदरहितोऽहम्। एष्टव्योऽहमनीहैः SvātmNi. 112; ईशम् ···। अनीहः समर्चयेत् PārāSū. 9. 16; योऽनीहो देहगेहेऽपि सोऽनागरः सतां मतः YaśasCam. ii. 411. 4; त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो वदन्त्यनीहादगुणादविक्रियात् BhāgP. x. 3.19; x. 16. 49; xi. 23. 45; अनीह एतद् बहुधैक आत्मना सृजत्यवत्यत्ति SkandP. ii(7).16.5; मनः प्रशान्तमत्यच्छम् ···। अनीहं विगताभीष्टं नाभिवाञ्छति नोज्झति YogVā. ii. 13.49; निर्ग्रन्थो निर्ममोऽनीहः स्वामी ··· विजहार वसुंधराम् TriṣaŚaPuC. ii. 3. 309; अनीहैरिव नागेन्द्रैर्विधापिण्डोऽप्युपाददे PāṇḍaC. 12. 237; अनीहमकाममवाममनाधि। जिनेन्द्र मनो मम वाञ्छति नाम न विभ्रमधाम न मौक्तिकदाम ChandaśCū. ii. 172.2; ते प्राहुरनीहानां कार्यं नः किमपि नास्ति शुभे PrabhāC. 45. 10; सा ···। विलोक्य वदनं शालेर्विललाप मुहुर्मुहुः ···। हा निर्मम इहानीह ŚāliC. 7. 63; स्वयं तथा चानीहो भूत्वा निवसेत् ManvaVi. 752 12 (*on* 6.95); अथानीहस्य किंचिद् दत्त्वा विभागमाह VyavaNi. 418.3; सोऽयम् ··· स्वयमनुपतिते मोक्षसौख्येऽप्यनीहः Nārāy. xi. 95.4; **2A** effortless, devoid of activity एकान्तेन ह्यनीहोऽयं पराभवति पूरुषः MahāBhā. iii. 33. 36; प्रत्यक्षस्य मानत्वमित्येव केनावसीयते। तथा च पुरुषार्थतत्साधनमात्रासिद्धौ जगदनीहमापद्येत NyāySu.(Ja.) 333A.9 (*on* ii. 2. 3); **2B** free from any undertaking, free from any act या मुदा कुञ्चितभ्रूः। साद्य ··· अनीहा प्रेतावासे निवसति YaśasCam. i. 129. 3; कर्मण्यनीहस्य भवोऽभवस्य ते ··· स्वात्मन्रतेः खिद्यति धीर्विदामिह BhāgP. iii. 4.16; *m.* **i** epithet of Śiva नमस्ते परमेशाय ···। नमोऽनीहाय वीहाय ŚivaP. ii(3). 11. 15 (134B.8); भावग्राह्यमनीहाख्यं भावाभावकरं शिवम्।···ये विदुस्ते जहुस्तनुम् ŚivaP. vii(1).6. 48 (509A. 10); **ii** epithet of Viṣṇu (Kṛṣṇa) अनीहोऽनीशोऽव्ययोऽक्षयः।··· इत्येतद्वासुदेवस्य विष्णोर्नामसहस्रकम् PāñcaRā.(Nā.) iv. 3.14; **iii** name of a king of Ayodhyā, belonging to the solar dynasty, PW., MW., APTE.

**अनीहक** (anīha-ka) *adj.* having no desire धर्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा।··· चरेद् भूतान्यहिंसयन् MahāBhā. xii. 283. 29; नैव वर्णयितुं शक्तोऽस्म्यनुरूपमनीहकम् BrahmVaiP. iii. 13. 41.

**अनीहता** (anīha-tā) *f.* the state of having no desire, detach-

**अनुकम्पायुक्तत्व** (anukampāyukta-tva) *n.* the state of being (an object) connected with compassion धानादेरनुकम्प्यमानसंबन्धादनुकम्पायुक्तत्वमिति बोध्यम् LaŚabdeŚe. ii. 377. 3.

**अनुकम्पारसदीर्घिका** (anukampārasa-dīrghikā) *f.* pond (full) of the water of compassion or sympathy दृशोऽनुकम्पारसदीर्घिकाया नीलारविन्दैरिव निर्जहानैः (?)। अपाङ्गपातैरनुगृह्य मातः YātrāPra. 9. 101.

**अनुकम्पारूप** (anukampā-rūpa) *adj.* of the nature of compassion (अर्हणं तत् कुमारीणामानृशंस्यं च केवलम्) कुमारीणां पूजनं तदानृशंस्यमहिंसकत्वं केवलं तदनुकम्पारूपम् ManvaMu. 97. 30 (*on* 3. 54)

**अनुकम्पार्थ** (anukampārtha) *m.* [Loc.] in the sense of compassion अनुकम्पार्थे ··· इति ठचि ··· जशुत्वमिष्यते PāṇiTaVāNaMā. 7.17.

**अनुकम्पार्थम्** (anukampārtham) *adv.* for the sake of compassion or sympathy or mercy, out of compassion or sympathy or mercy, for showing favour भजन्ते मां बुधा भावसमन्विताः।··· तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थः MahāBhā. vi. 32. 11 = BhagGī. 10.11; आगतः सर्वभूतानामनुकम्पार्थमच्युतः MahāBhā. vii. 61. 21; xii. 257. 1; xiv. 16.16; सत्यव्रतो महाबाहुर्भरणं तस्य चाकरोत्। विश्वामित्रस्य तुष्ट्यर्थमनुकम्पार्थमेव च HariVaṁ. 9.99; VāyuP. ii. 26. 89; BrahmāṇḍP. ii. 63.88; BrahmP. 7.109; सर्वेषामनुकम्पार्थमात्मनश्चापि कीर्तयेत्(? कीर्तये) PauṣkS. 38.96; PāraS. 11. 383; भवेनाद्भुतमुत्तमम्। भूतानामनुकम्पार्थं यत् कृतं तन्निबोधत VāyuP. ii. 39. 287; BrahmāṇḍP. ii. 13.83; भक्तानामनुकम्पार्थं दिव्यैर्मन्त्रैर्बैलादिकैः। ··· संपूजिते तु तैर्भक्तैः कुरुते निष्कृतिं सदा PāraS. 19. 347; योगसिद्धिमनुप्राप्ता ये नराः पुण्यकर्मभिः। भगवानेव तान् सर्वान् निवेशयति सद्मसु। भक्तानामनुकम्पार्थम् ParaS. 18. 14; 24.20; यैव देवी उमा सैव देविका प्रथिता भुवि। मद्राणामनुकम्पार्थं भवद्भिरवतारिता NīlaP. 110; विप्रार्थमनुकम्पार्थं पुत्रार्थं च विशेषतः। आकारिता मया देवि SkandP. v(2). 77. 17; (महर्षीणाम्) तेषामेवानुकम्पार्थं कोटिमूर्तिरभूच्छिवः VāmaP. 84. 15; तीर्थम् ···। विप्राणामनुकम्पार्थं दर्भिणा निर्मितं पुरा PadmP. i. 27.41; (नराणाम्) अनुकम्पार्थम् ··· सुराः।··· नानातीर्थानि चक्रिरे GaṇeP. ii. 38. 28.

**अनुकम्पार्द्रमनस्** (anukampārdra-manas) *adj.* having a mind soft or tender with compassion तन्निशम्यानुकम्पार्द्रमनाः ···। नृपः प्रोवाच PārśvC. 3.321.

**अनुकम्पार्द्रमानसा** (anukampārdra-mānasā) *adj.* (*f.*) having a mind tender or soft with compassion शिवः ···। जगत् ···। भूषयन्तीं शिवां कम्पामनुकम्पार्द्रमानसाम्। अङ्गीकृत्य तदा गौरी(? रीम्) ··· कैलासशिखरं ययौ BrahmāṇḍP. iii. 40.44.

**अनुकम्पार्द्रहृदया** (anukampārdra-hṛdayā) *adj.* (*f.*) having a heart tender or soft with compassion त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ ···। इमं तं मामम्ब त्वमियमनुकम्पार्द्रहृदये पुनाना सर्वेषामघमथनदर्पं दलयसि GaṅgāL. 28.

**अनुकम्पार्ह** (anukampārha) *adj.* who deserves compassion or sympathy, poor, pitiable तमस्माकं दर्शयत चित्तोत्कर्षाय मामिव। अपुत्रमनुकम्पार्हं पूर्वं त्वां मा स्म शोचयन् PrabhāC. 187. 14 [*anukampārha* is given as the meaning of *tapasvin*, AnekāSa. 507 and as a synonym of *tapasvin*, DharK. 1609]

**अनुकम्पालक्षण** (anukampā-lakṣaṇa) *n.* definition or description of *anukampā* अथानुकम्पालक्षणं कथ्यते TātpaVṛ. 360. 9 (*on* 3. 69)

**अनुकम्पालय** (anukampālaya) *m.*, *n.* abode of sympathy इयमनुकम्पालय ते नतिरीश YātrāPra. 3. 96.

**अनुकम्पालव** (anukampā-lava) *m.* bit of compassion संपादय मयि तं पाकिममनुकम्पालवमिह धीर StavMā. 137.24; मनुजो न हि मादृशो जगत्यामनुकम्पालवदुर्विधान्तरङ्गः YātrāPra. 7. 62.

**अनुकम्पावत्** (anukampā-va(n)t) *adj.* possessing compassion, compassionate अथाचिन्तयद् धनः। उपकार्यनुकम्पावान् SamarāSaṁ. 4. 135; 6. 370.

**अनुकम्पावश** (anukampā-vaśa) *m.* [Abl.] on account of compassion गृहमानुषैश्च सा मोचितानुकम्पावशात् ततो वनिता। अपमानान्निरगच्छत् पुत्रावादाय सा गेहात् PrabhāC. 44.23.

**अनुकम्पाविधान** (anukampā-vidhāna) *n.* presentation or enacting of compassion अनुकम्पाविधाने स्यात् तलसंघट्टितं तदा SaṁgīRa. iv. 235.4 (7.730)

**अनुकम्पावृत्ति** (anukampā-vṛtti) *adj.* expressive of compassion दृष्ट्वा दृष्ट्वा ···। साक्षात्कामं नवमिव रतिर्मालती माधवं यत् गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति। अत्रानुकम्पावृत्तेः करूपतद्धितस्य (विप्रलम्भशृङ्गारव्यञ्जकत्वम्) KāvyPra. 180.5.

**अनुकम्पासमावीत** (anukampā-samāvīta) *adj.* carried with (i.e. overwhelmed by) compassion इति संप्रार्थितो देवैर्माधवो वरदोऽभवत्। अनुकम्पासमावीतो गीर्वाणावलिनायकः ParamāKā. 170.45.

**अनुकम्पासंबन्ध** (anukampā-sambandha) *m.* connection with compassion प्रत्यासन्नोऽनुकम्पासंबन्धो यस्यानुकम्प्यमानस्य स तथोक्तः Nyās. ii. 131. 18 (*on* v. 3.77)

**अनुकम्पासहितोपकार** (anukampāsahitopakāra) *m.* help accompanied by compassion पुरुषः। कं करोतु।··· अनुकम्पासहितोपकारं दयासहितं धर्मवात्सल्यम् TātpaVṛ. 344.17 (*on* 3. 51)

**अनुकम्पासागरत्व** (anukampāsāgara-tva) *n.* the state of being an ocean of compassion निजभुवि परिरक्षन् विप्रपारावतौघान्। शिबिरिव शिवसेवां शीलयन् शीलराशिः शिशिरहृदनुकम्पासागरत्वेऽभ्यषेचि VīraBhā. 11. 6.

**अनुकम्पासिन्धु** (anukampā-sindhu) *m.* ocean of compassion तां वै स होवाच महानुकम्पासिन्धुः ··· गौरि ··· मा ते भूयः संशयोऽस्मिन् HerU. 390. 5(2)

**अनुकम्पास्पद** (anukampāspada) *n.* object of compassion अहर्निशमिहैव ये परमनोऽनुवृत्त्या पुनर्वहन्ति विजिगीषुतां किमिव तेऽनुकम्पास्पदम् ŚatTrayī. 812; Subhāṣi. 531.

**अनुकम्पित** (anu-kampita) *adj.* [*f.*-ā] **1** sympathised with, pitied on, compassionated, favoured अनुकम्पितो नरो नार्या पुष्टो रक्षित एव च। प्रपतेद् यशसो दीप्तात् MahāBhā. xiv. 93. 22; अनुकम्पितः षडङ्गुलिः षडिकः MahāBh. i. 320.3 (*on* i. 4.18); Prasā. i. 337. 20; PāṇiTaVāNaMā. 7. 16; 9.5; मयि द्रव्यक्षयक्षीणे स्त्रीद्रव्येणानुकम्पितः Cārud. 3. 17; Mṛcch. 3.28; और्वाश्रमे विवृद्धश्च भवांस्तेनानुकम्पितः BrahmāṇḍP. ii. 47.87; दिष्ट्यानुकम्पितोऽस्मि भगवत्या MālaMā. 3.121; एवं निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि UttaRāC. 6. 30(3); कृतमहापराधोऽपि भगवतीभ्यामनुकम्पितो रामः UttaRāC. 7.18(14); रणे नता येन रिपोर्वरूथिनी सहासमासन्नवधेऽनुकम्पिता HarVi. 46. 60; सद्मसु। न भुञ्जीत तथा साधुर्दैन्यकारुण्यकारिणाम्। नाहरन्ति महासत्त्वाश्चित्तेनाप्यनुकम्पिताः YaśasCam. ii. 405. 3; अहं च तस्मै महतां महीयसे शीर्ष्णावनामं विदधेऽनुकम्पितः BhāgP. i. 6.26; कथं प्रियाया अनुकम्पितायाः सङ्गम् ··· अनुरक्तचित्तः।··· त्यजेत् BhāgP. vii. 6.11; x. 2.38; येन केनचित् ··· दिव्यलोकनिवासिना ··· कुमारहरिवाहनस्यान्तिकादतर्कितमेवानीय लेखमिममनुकम्पितोऽयमेतावान् नृपतिलोकः TilaMañ. 194. 15; (सम्यग्दर्शिनः) समीचीनोपदेशेनानुकम्पिता भवन्ति TattvVai. 207. 23 (*on* 4. 23); महेशस्य च दासोऽयं विष्णुस्तेनानुकम्पितः SaurP. 40.5; ततोऽहमरतिग्रस्ता भगवत्यानुकम्पिता SamarāSaṁ. 7. 362; अनुकम्पितः पुत्रः पुत्रकः Prasā. i. 931. 1; SiddhāKau. 315A. 16 (*on* v. 3.76); रससिद्धिदर्शनपरेण तेन (शिवेन) सा। अनुकम्पिता सकलमायसं गृहे भसितेन तस्य नयति स्म हेमताम् ŚivLī. 18. 5; हार्देन हृदयमन्दिरेण हरिणानुकम्पितो भवति GoviBh. 304.2 (*on* iv. 2.17); **2** who has pitied मणिकाञ्चनभित्तयः।··· रत्नस्तम्भसमुच्छ्रिताः। कपोलपाल्युपान्तेषु महानीलविनिर्मिताः। रत्नभाभिर्निरस्तस्य ध्वान्तस्येवानुकम्पिताः PadmP.(Ra.) 6.126; *n.* compassion or sympathy तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम्। यन्मेऽसूंस्त्यजतः साक्षात् कृष्णो दर्शनमागतः BhāgP. i. 9. 22; रूपं भगवता त्वेतदशेषक्लेश-संक्षयम्। आविष्कृतं नः क्लिष्टानां किमन्यदनुकम्पितम् BhāgP. iv. 30.27.

**अनुकम्पितक** (anukampita-ka) *adj.* **i** who is pitied on इह कुत्सितकः अनुकम्पितक इति स्वशब्देनोक्तत्वात् तस्यार्थस्य प्रत्ययो न प्राप्नोति MahāBh. ii. 424. 2 (*on* v. 3.74); Pradī. iv 397B. 27 (*on* v. 3.74); **ii** which arouses compassion याच्ञाविरहसंत्यागविक्रयव्यसनादिषु। अनुकम्पितकं यत् स्यात्लिखेत् तत् करुणारसे ViṣṇuDhaP. iii. 43.4.

**अनुकम्पितमानस** (anukampita-mānasa) *adj.* having a mind full of compassion एवं कृत्वा नृपस्तस्थौ तत्रैव निरयाग्रतः। विदधत् प्राणिनां सौख्यमनुकम्पितमानसः PadmP. iv. 30.40.

**अनुकम्पितव्य** (anu-kampitavya) *adj.* to be pitied on लक्ष्म्यां महत्यामपि वर्तमानस्तृष्णाभिभूतस्त्वनुकम्पितव्यः BuddhaC. 11.55.

**अनुकम्पिता** (anukampi-tā) *f.* the state of being one who shows compassion (towards others), compassion उपकारेण दूयन्ते न सहन्तेऽनुकम्पिताम्। आपत्स्वपि दुराराध्या नित्यदुःखा मनस्विनः Subhāṣi. 202.

**अनुकम्पितात्मन्** (anukampitātman) *adj.* having a mind full of compassion स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्थमानेष्वनुकम्पितात्मा।··· जातो भगवान् BhāgP. iii. 2. 15.

**अनुकम्पितुम्** (anu-kampitum) *inf.* to show compassion ज्ञातुमिच्छामहे ब्रह्मन् को भवानिह धिष्ठितः। किमर्थं चैव नः शोच्याननुकम्पितुमर्हसि

MahāBhā. i. 13.18; सकृदेषा कथंचिच्चेत् त्रियामा क्षयमेष्यति। गमिष्यामि ततो बालामेतां द्रागनुचिन्तनम् (v.l. अनुकम्पितुम् JPMJGM. 20) PadmP.(Ra.) 8.350; द्रुहिणहरगोविन्दाद्याः ···। न च नियमतो देवानेवानुकम्पितुमीशते NīlaVi. 66.15.

**अनुकम्पितृ** (anu-kampitṛ) *adj.* who shows compassion, who shows affection (युधिष्ठिरः) ह्रीमान् सत्यधृतिर्दान्तो भूतानामनुकम्पिता।··· सतां वर्त्मानुवर्तते MahāBhā. v. 88.18; पिता हि राजा राष्ट्रस्य प्रजानां योऽनुकम्पकः (v. l. कम्पिता) MahāBhā. xii. 137.100; SūktiRa. 39.15; संभ्रमादिच्युता या स्यादनुकम्प्येऽनुकम्पितुः। रतिः सैवात्र वात्सल्यं स्थायी भावो निगद्यते Bhakti-RaSi. iii. 4.24.

**अनुकम्पिन्** (anukamp-in) *adj.* showing compassion, sympathising with, taking pity on दीनानुकम्पिनां या ··· तां गतिं व्रज MahāBhā. vii. 55.26; vii. 50.30; दीनानुकम्पी धर्मज्ञः ···। कुलोचितमतिः क्षात्रं धर्मं स्वं बहु मन्यते Rāmā. ii. 14*(1); दीनम् ···। रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् Rāmā. ii. 46.49; पितृभक्तो देववरः ···। भक्तानुकम्पी भूतानां तथा Rāmā. vi. 1730*(2); भक्तानुकम्पिनं देवम् ··· ध्यायति यः GanU. 571.7; ŚāṇḍU. 419.15 (3.1); 420.2 (3.3); परममाहेश्वरो महेश्वर इव सर्व्वसत्वानुकम्पी परमभट्टारक-महाराजाधिराजश्रीहर्षः EI. iv. 211.7; i. 72.8; vii. 158.8; xviii. 32.12; सर्व्वसत्वा(त्त्वा)नुकंपी[।] ··· प्रणमति जिननाथोऽयं भव्यपाहिलनामा EI. i. 136.3; देवे वर्षति यज्ञविप्लवरुषा वज्राश्मवर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वानुकम्प्युत्स्मयन्। उत्पाट्यैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा बिभ्रद्गोष्ठमपात् BhāgP. x. 26.25; अपापेनार्थशीलेन कुटुम्बस्यानुकम्पिना। भवितव्यं त्वया वत्स Hastyāyur. 46.18 (1.6); स्वगुरोर्गदापनुत्त्यै परमन्त्रं तु जजाप जातमन्युः। मुहुरार्य-पदेन वार्यमाणोऽप्यरिवर्गेऽप्यनुकम्पिनाब्जपादः ŚaṅkaDigVi.(Mā.) 16.31; अनेन धर्मशीलेन हरिभक्तानुक[म्]पिना[।] ··· कोंडराजनृपालेन ···। विज्ञापितस्य विनयात् ··· वीरश्रीरामराजस्य विज्ञप्तिमनुपालयन् EI. iv. 21.266.

**अनुकम्पिभाव** (anukampi-bhāva) *m.* the nature of being one who shows compassion भ्रान्तं घटीयन्त्रवदत्र नाथ मां त्रातुमर्हस्यनुकम्पिभावात् SkandP. ii(2).20.12.

**अनुकम्पोक्ति** (anukampokti) *f.* statement of compassion वृत्तिं स्वां बहु मन्यते हृदि शुचं धत्तेऽनुकम्पोक्तिभिः ··· श्रुत्वा दुःखमरुंतुदां वितनुते पीडां जनः प्राकृतः RājTa.(Ka.) 1.228; Subhāṣi. 360.

**अनुकम्प्य** (anukamp-ya) *ger.* **1** having shaken afterwards तस्मादितरं नाराशंसमाप्याय भक्षयित्वा पुनराप्यायानुकम्प्य भक्षयति VaikhāŚS. 21.15; **2** having shown compassion, having taken pity on, having sympathized with तेन व्यातेनिरे ···। न नानुकम्प्य विशिखाः शिखाधरजवाससः Kirātā. 15.42; स होवाच — प्रिया इष्टा बनेत्यनुकम्प्याह BṛĀraUBh. 301.11 (*on* ii. 2.4); ये चान्ये पण्डिताः प्राहुर्हेब्राह्मणतां नराः। तेषां दुर्दृष्टितिमिरमपनीयानुकम्प्य न्व।··· प्रयत्नेन सुदृष्टिं संविदध्महे BhaviP. 82A.10 (i. 41.49); श्रमखिन्नामनुकम्प्य तां प्रियाम्। स तया सह शिश्रिये सभां शयितुं शीतलवातसेविताम् Nalābhyu. 7.35; 7.85; श्रीभैरवेण मिथिलापृथिवीश्वरेण। तेनानुकम्प्य सकृदप्यवलोक्यमाना श्रीवर्धमानकृतिनोऽस्तु कृतिः कृतार्था DaṇḍaVi. 2.3.

**अनुकम्प्य** (anu-kampya) *adj.* [*f.* -ā] to be pitied upon, worthy of compassion or sympathy or favour, to be shown affection उपरिष्टाच्चोत्तरया त्रिः प्राश्यानुकम्प्याय प्रयच्छेत् ĀpaGS. 13.13; वक्ता हितानामनुरक्त आर्यः शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः MahāBhā. v. 37.23; SūktiRa. 94.8; भैक्षोपभोगीति च नानुकम्प्यः BuddhaC. 11.54; सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।··· प्रतिपथगतिरासीद् वेगदीर्घीकृताङ्गः Kumā-Sam. 3.76; किं तन्न येनासि ममानुकम्प्या RaghuVa. 14.74; स्त्रियोऽनुकम्प्याः साधूनां मूढा दीनाश्च जन्तवः ViṣṇuP. v. 7.54; ऋजुर्मूर्खस्त्वनुकम्प्यः शठमूर्खः सर्वथा वर्ज्यः Tantrākhyā. 20.10; PañcT. 1.163 (169.6); Subhāṣi. 2884; देवि शीलवती कस्य नानुकम्प्यासि शोभने PadmP.(Ra.) 17.287; सकरुणमथवा कोऽनुकम्प्येषु कोपः MahāviC. 6.10; सृष्टेः प्रागनुकम्प्यानामसत्त्वे नोपपद्यते। अनुकम्पापि यद्योगाद् धातायं परिकल्प्यते TattvSaṁ. 158; अभावाच्चानुकम्प्यानां नानुकम्पास्य जायते। सृजेच्च शुभमेवैकमनुकम्पाप्रयोजितः ŚlokaVār. 5(15).52 (652.5); विसृष्टस्त्वयि तेनाहमनुकम्प्येऽनुकम्पया Kapphiṇā. 16.71; धर्माधर्मनिगडसंवृतत्वादपवर्गपुरद्वारप्रवेशमलभमानाः कथं नानुकम्प्याः NyāyMañ. i. 186.11; (दुहिता कृपणं परम्) दुहिता कृपणमनुकम्प्या दयनीया ManuBh. i. 391.13 (*on* 4.185); त्वादृशामनुकम्प्यो हि बलिनां प्रमदाजनः BṛKathāŚlo-Saṁ. 13.48; व्याधस्याप्यनुकम्प्यानां स्त्रीणां देवः सतीपतिः BhāgP. iii. 14.35; भयार्तमनुकम्प्यं मां दुःखितं त्रातुमर्हथ PadmP. iv. 94.48; महामतेः। अनुकम्प्या भवन्त्येते ब्रह्मविष्णिवन्द्रशंकराः YogVā. iii 6.19; अनुकम्प्यस्य नो देवि भजन्त्युद्वेगमुत्तमाः YogVā. iii. 18.9; बुद्धिविहीनोऽनुकम्प्यानाम्।··· ज्ञेयः कलाकलापे कुशलः सर्वार्थतत्त्वविज्ञानी KalāVi. 10.31; चिरजीव्यनुकम्प्योऽयमापन्नः शरणागतः KathāSaSāg. x. 6.100; xii. 5.281; xii. 23.140; यस्य मित्राणि मित्राणि ···। अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति KāvyPra. 150.2; RājTa.(Ka.) 8.2301; अनुकम्प्योऽसि बालोऽसि का लज्जा तेऽपसर्पतः TriṣaŚaPuC. iv. 5.180; इयम् ···। नारीति चानुकम्प्यापि भवति PariPar. 12.111; अयमपि ते ननु दासजनोऽनुकम्प्य एव ChandaśCū. ii.277.4; PrasaRā. 5.24(1); Haṁs-Saṁ. 97; Gurvā. 258; राज्ञापि ··· अनुकम्प्या एत इत्युपेक्ष्यन्ते वा DaṇḍaVi. 340.9; कृष्णश्च दारुणाश्चेति तस्मिन्नालम्बना द्विधा। अनुकम्प्येषु सागःसु कृष्णः BhaktiRaSi. iv. 6.2; iii. 4.24; दृष्ट्यानुकम्प्यानथ संबभाषे Gaṅgāva. 8.62; दशमुखपत्नी ··· अहमनुकम्प्या कपिभिः धिग्दैवम् MahāN. 9.94; [Vaija. 204.39 gives *kāruṇa* and Hārāva. 252 gives *tapasvin* as synonyms of *anukampya* and *anukampya* is given as the meaning of following — *tapasvin*, MediK. 102.182; ViśvaLoK. 215.181; ŚabdaRaSaK. 320.3; *tāta*, AnekāSaṁ. 2.168; ViśvaPra. 57.14; MediK. 58.21; ViśvaLoK. 122.19; KośaKaTa. 2.5132; ŚabdaRaSaK. 127.10; *varāka*, ViśvaLoK. 22.124]

**अनुकम्प्यता** (anukampya-tā) *f.* the state of being one who is to be shown compassion त्रिसंध्यं तत्र मज्जतः। संध्यादेवी ··· तस्यागादनुकम्प्यताम् RājTa.(Jo.) 771; उपकारेण दूयन्ते न सहन्तेऽनुकम्पिताम् (v.l. अनुकम्प्यताम्)। ··· मनस्विनः Subhāṣi. 202.

**अनुकम्प्यत्वाभिप्राय** (anukampyatvābhiprāya) *m.* [Inst.] with the intention of being fit to be pitied कुत्सिता ··· निन्द्या मुत्प्रीतिर्येषां ते कुमुदो वैषयिकाः। अत एव तेषामनुकम्प्यत्वाभिप्रायेण कृपणे कुमुदे कुमुदिति शाश्वतः LalitāSaBh. 107.5 (*on* 138)

**अनुकम्प्यमान** (anu-kampyamāna) *adj.* [*f.* -ā] **I** being favoured, being shown pity उपरताप्यनुपरता महासेनपुत्री एवमनुकम्प्यमानार्यपुत्रेण SvapnVā. 6.9(7); रामः ··· तटवनपवनैरनुकम्प्यमानः पम्पामभजत् RāmāCam. 3.43(9); **II** (the word expressive of the object) being pitied on (नीतौ च तद्युक्तात्) पूर्वेणाप्रत्यासन्नानुकम्पासंबन्धादनुकम्प्यमानादेव प्रत्ययो विहितः KāśiVṛ. *on* v. 3.77; Nyās. ii. 131.19 (*on* v. 3.77); पूर्वत्रानुकम्प्यमानादेव प्रत्ययः इह तु व्यवहितादपि Prasā. i. 931.5; पूर्वेणानुकम्प्यमानात् प्रत्ययः। अनेन तु परंपरासंबन्धेऽपीति विशेषः SiddhāKau. 315B.4 (*on* v. 3.77)

**अनुकम्प्यमानता** (anukampyamāna-tā) *f.* the state of being one who is being sympathized with दैवहतिके इति शब्देन लब्धायां नियत्युपाधौ सर्वथैवानुकम्प्यमानतायां सहकारसंवर्धननिबन्धनत्वमेवास्याः कला द्योत्यते Sara-Kaṇṭhā. 718.8.

**अनुकम्प्यमानसंबन्ध** (anukampyamāna-sambandha) *m.* connection with one who is being favoured अनुकम्प्यमोदनदानेनाराधयतीति धानादेरनुकम्प्यमानसंबन्धादनुकम्पायुक्तत्वमिति बोध्यम् LaŚabdeŚe. ii. 377.3.

**अनुकम्प्यानुग्रह** (anukampyānugraha) *m.* favour to one who is worthy of compassion यादृशोऽतिथिभोजनादुत्कृष्टो धर्मः अनुकम्प्यानुग्रहान्न तादृशस्ततो निकृष्टः ManuBh. i. 254.19 (*on* 3.102)

**अनुकम्प्याभाव** (anukampyābhāva) *m.* absence of those fit to be sympathised with अनुकम्प्याभावाद् नानुकम्पा संभवति NyāyRa. 652.20 (*on* 5(15).51)

**अनुकम्प्र** (anu-kampra) *adj.* [P. iii. 2.167] who habitually shows compassion; cf. **अनुकम्प्रता.**

**अनुकम्प्रता** (anukampra-tā) *f.* the state of being one who habitually shows compassion सरः प्रपद्योत्कतयानुकम्प्रताम्।··· पतगग्रहान्नृपं न्यवारयद्वारिरुहैः करैरिव NaiṣC. 1.126; सुरापराधस्तव वा कियानयं स्वयंवरायामनुकम्प्रता मयि NaiṣC. 9.153.

**अनुकर** (anukar-á) *adj.* [P. iii. 2.20; DEBRU. 66] who helps, helper अघशंसदुःशंसाभ्यां करेणानुकरेण च। यक्ष्मं च सर्वं तेनेतो मृत्युं च निरजामसि AV. xii. 2.2; AV.(P.) xvii. 30.2.

**अनुकरण** (anu-karaṇa) *n.* **AI** (word or expression uttered in) imitation (of another sound), onomatopoeia अनुकरणं चानितिपरम् P. i. 4.62; SaraKaṇṭhā.(Gr.) i. 1.141; अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच् P. v. 4.57; SaraKaṇṭhā.(Gr.) v. 4.70; अव्यक्तानुकरणस्यात इतौ P. vi. 1.98; लृकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः Vār. 1 (*on* ŚivSū.(Gr.) 2); अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु Vār. 3 (*on* ŚivSū.(Gr.) 2); अनुकरणस्येतिकरणपरत्वप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः Vār. 1 *on* P. i. 4.62; 1 *on* P. i. 4.80; तस्यानुकरणं ब्राह्मण्यलृतक इत्याह MahāBh. i. 19.22 (*on* ŚivSū.(Gr.) 2); अनुकरणं हि शिष्टस्य साधु भवति MahāBh. i. 20.15 (*on* ŚivSū.(Gr.) 2); प्रकृतिवदनुकरणं भवति MahāBh. i. 21.7 (*on* ŚivSū.(Gr.) 2); SaraKaṇṭhā.(Gr.) i. 2.53; PariVṛ.(Nī.) 11.17; अथवाकारान्तमेतदनु-

करणम् MahāBh. iii. 77. 8 (*on* vi. 1.99); i. 283.9 (*on* i. 3.48); अनिता-वनुकरणम् JaineVyā. i. 2. 133; अनुकरणम् CāndraVyā. ii. 2.26; झंकार-स्यानुगीतैरनुकरणमिवारभ्यते भृङ्गसार्थैः Ratnā. 1. 18; यथानुकरणे ह्रस्व लृकारोऽस्ति तथा दीर्घोऽप्यस्तीति मतम् KātanVṛ. *on* i. 1.2; *on* iv. 6.55; डाच्च्व्यूर्याद्यनु-करणं च ति ŚākaṭāVyā. i. 1. 26; (वृत्तिम्) परुषाभिधायिवचनादनुकरणाच्चापरत्र नो परुषाम्। रचयेत् Kāvyālaṅ.(Ru.) 2. 28; Nyās. i. 65.26 (*on* i. 1.16); शब्दस्य ताद्रूप्येणाभिधानमनुकरणम् ŚṛṅgāPra. 20.12; 38. 1; या ··· असाधुता। निरूपितानुकरणे गुणत्वं सा प्रपद्यते SaraKaṇṭhā. 87.11; 149.4; समासानुकरण-निपाताश्च SaraKaṇṭhā.(Gr.) i. 1. 7; v. 4.70; अदुष्टता । (अ)नुकरणे तु सर्वेषाम् KāvyPra. 412. 1; 'न दोषोऽनुकरणे' इति वक्ष्यमाणत्वात् ··· अत्र न दोषः Kāvyānu.(He.) 164.9; 232.2; Kāvyānu.(Vā.) 20.13; द्विविधमनुकरणम् PariVṛ.(Sī.) 37.7; अनुकरणम् !···एषामव्ययानाम् ··· गतिसंज्ञा ज्ञेया Prakri-Kau. i. 517.1; अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात् Prasā. i. 81. 19; i. 517. 8; i 952. 13; ii. 108.6; ii. 549.18; ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात् SiddhāKau. 21B. 2 (*on* vi. 1.38); 67B. 1 (*on* vi. 4.6); पटदिति कुर्वित्याद्यनुकरणस्थलेऽनुकार्यध्वनीनामनुकरणाद् भेदः VaiyāBhū. 126.4 (*on* 26); 'शं नो देव्येति' रेफं विहायानुकरणम् BālamBha. i. 510.19 (*on* 1. 230); अनुकरणमिदं ध्वनेः BālamBha ii. 121.16 (*on* 2. 113); प्रपरेत्यादावनुकार्यानुकरणयोरभेदविवक्षया सुबनुत्पत्तिः LaŚabdeŚe. i. 45 . 3; **Aii** repetition or imitation किम् ··· तदध्यापनम्, आहोस्विन्नृत्योप-देशवद् गृहीतस्यानुकरणमध्यापनमिति NyāvBh. 138. 10 (*on* ii. 2.28); **Bi** following (behaviour, action, quality etc.) त्वदीयसुचरितैकदेशस्यानु-करणं किलैतत् MudrāRā 7. 4(2); दन्तानां निषेक° ··· °दुर्बलताः ··· माता-पित्रोरनुकरणात् ··· इत्याचक्षते महर्षयः KāśyaS. 12A . 35; अनुकरणमनुकृतिः BrahmSūBh.(Śaṅ.) 181. 16 (*on* i. 3.22); BrahmSūBh (Bhā.) 59.9 (*on* i. 3.22); (नायकस्य) व्रतं नियमं स्वयमनुकरणेनानुवर्तेत भक्तिख्यापनार्थम् JayaMa. 237. 15 (*on* 4. 1); इदम् ··· कुलभवनमाद्यं रतिपतेर्निवासश्चित्राणामनु-करणमेकं जलमुचाम् । ··· न केषामत्यर्थं भवति नयनानन्दजननम् SamarāSū. 31. 148; अनुकरणादर्थवादवचनमुपपद्यते SaṅkarKāBh. 186.10 (*on* iv. 2.1); तस्य दहराकाशस्य नित्याविर्भूततद्गुणाष्टकस्य आविर्भूतापहतपाप्मत्वादिवत्तयानुकरणात् दहरः परमात्मैव VedāntKau. 94. 24 (*on* i. 3. 22); अथोद्दीपनाः ··· राजदेवा-वतारादिचेष्टानुकरणादयः BhaktiRaSi. iii. 3.28; सूर्योदयादिवत् किल नैषां गुप्ता भवेदसौ चेष्टा। अनुकरणे च निरर्गलमेतस्याः सर्वलोके स्यात् KandaCū. v. 5. 3; तत्र भगवतो जीवसाम्येऽन्तःकरणेन्द्रियधर्माः प्राप्नुवन्तीति तत्रानुकरणमाह । ध्यायतीव लेलायतीवेति AṇuBh. 98. 7 (*on* i. 3.42); दहरस्य ··· जीवेनानुकरणात् तस्मादि-तरः सः GoviBh. 49. 6 (*on* i. 3. 22); **Bii** representation or portrayal by acting प्रकृतिविशेषावस्थाप्रतिपादकवेषरचनसामग्र्या । अनुकरणमभ्यतीतं सिद्धिद्वय-संपदा धाराम् KuṭṭaMa. 945; त्रैलोक्यस्यानुकरणं नृत्ते देवि प्रतिष्ठितम् ViṣṇuDhaP. iii. 34.17; अन्ये तु नटनीयमनुकरणं दशरूपकमेव नाट्यम् । तस्येदं शास्त्रम् AbhinBhā. i. 5. 11 (*on* 1.1); अथ पश्चात् करणमनुकरणं तल्लोकेऽप्यनुकरणा-त्मतातिप्रसक्ता AbhinBhā. i. 275. 18 (*on* 6. 31); Kāvyānu. (He.) 72.15; किं नाट्यम्। नाट्यमनुकरणम् NāṭaLaRaK. 266; **Biii** compliance, consent ओम् इत्येतत् अनुकृतिः अनुकरणम् TaiUBh. 209. 2 (*on* 1. 8); **Biv** mimicry शृङ्गारस्यानुकरणं हास्य इत्यभिधीयते BhāvPra.(Śā.) 55. 10(3); **C** coming after in a cyclic order तेषां जननमरणसंततेरनुकरणमिदमुच्यते ChāndoUBh. 308. 14 (*on* v. 10.8); [ŚabdaRa.(Vā.) 3421 has *anuhāra* as a synonym of *anukaraṇa* and KośaKaTa. 2. 7143 gives it as the meaning of *gaulomī*]; *m.* imitation कथं प्रातिपदिकसंज्ञा।··· ननु चाधातुरिति प्रतिषेधः प्राप्नोति। नैष धातुर्धातोरेषोऽनुकरणः [sic.] यद्यनुकरण इयङादेशो न प्राप्नोति MahāBh. iii. 408.3 (*on* viii. 2. 46); *adj.* one who imitates पफको विकत्थनः। अनुकरण इत्यन्ये GaṇRa. 1.32(63)

**अनुकरणकाल** (anukaraṇa–kāla) *m.* [Loc.] at the time of imitation (of an expression or word) शब्दोऽनुकरणकाले अर्थं जहाति न रूपम् PariVṛ.(Sī.) 20.11.

**अनुकरणक्रिया** (anukaraṇa-kriyā) *f.* act of imitation अभिमन्युरर्जुनतः प्रतीति ··· अत्रानुकरणक्रियाजनितः संबन्धविशेषः ··· प्रतिना द्योत्यते Nyās. i. 321. 8 (*on* i. 4. 92)

**अनुकरणता** (anukaraṇa–tā) *f.* the nature of being a representation नटगतं किं तदुपलब्धं सदनुकरणतया भातीति चिन्त्यम् AbhinBhā. i. 274. 6 (*on* 6. 31)

**अनुकरणत्व** (anukaraṇa–tva) *n.* the state of being an imitation अत्र हुं हु म म मेत्यसाध्वोरपि म्लिष्टम्लेच्छितयोरनुकरणत्वाद्गुणत्वम् SaraKaṇṭhā. 87. 15; Pradī. i. 105B.7 (*on* ŚivSū.(Gr.) 2); क्रीप्रभृतयश्च शब्दा अनुकरण-त्वेनाधातवः PariVṛ.(Sī.) 37.22; मतुबर्थे छः स्यात् ···। अनुकरणत्वाद्भिन्नपदादपि PrakriKau. i. 880.4; अनुकरणत्वेन सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः LaŚabdeŚe. i. 5.1.

**अनुकरणदशा** (anukaraṇa–daśā) *f.* [Loc.] at the stage (i.e. time) of imitation इह ··· शब्दस्य स्वार्थो हि स्वप्रतीतौ संबन्धग्रहणमपेक्षते ··· अनुकरणदशायाम् (अर्थप्रतीतेः) अभावात् PadMañ. *on* KāśiVṛ. *on* P. i. 1.68.

**अनुकरणनिपुण** (anukaraṇa–nipuṇa) *adj* skilful in resembling वेगाकृष्टोडुचक्रानुकरणनिपुणश्वेतडिण्डीरस्व(? ख)ण्डाश्लिष्टोर्मीनिर्मितोर्वीवलयविलयना-शङ्कसातङ्कदेवा। विभ्रश्यन्त्यभ्रगङ्गा ··· निलिम्पे Jīvān. 444. 2

**अनुकरणप्रतिषेध** (anukaraṇa–pratiṣedha) *m.* prohibition of imitation उपहासबुद्ध्यायमनुकरणप्रतिषेधः ManuBh. i. 181.6 (*on* 2.199)

**अनुकरणप्रत्यायित** (anukaraṇa–pratyāyita) *adj.* made known through imitation (of word) अस्यवामोऽस्मिन्नस्तीत्युक्तेऽनुकरणप्रत्यायितस्यानु-कार्यस्यैव शब्दस्य प्रथमासमर्थत्वमस्ति Nyās. ii. 81.22 (*on* v. 2.59)

**अनुकरणप्राप्ति** (anukaraṇa–prāpti) *f.* possibility of the replica कारयेत् पृथिवीम् ··· नानापर्वतान्वितानुकारप्रसङ्गे मर्यादापर्वतवतीमिति तथा सति मेरोरनुकरणप्राप्तौ मध्ये मेरुसमन्विताम् CaturCin. i. 294.19.

**अनुकरणभङ्गी** (anukaraṇa–bhaṅgī) *f.* manner of doing (something) by following (something else) ददातीति पितृतीर्थेन ददतो हस्तस्यानुकृतिः प्रदर्श्यते।··· अर्थवादेऽनुकरणभङ्ग्यैव देवमनुष्यपितृतीर्थानां देवादिप्रतिनियतहोमोद्धरण-दानसंबन्धप्रतिपादनात् CaturCin. iii(1). 1433. 7.

**अनुकरणभाव** (anukaraṇa–bhāva) *m.* nature of imitation (of expression) (वाक्यम्) अनुकरणभावम् ··· स्वरूपतो गच्छन्(? त्)। न भवति दुष्टम् Kāvyālaṅ.(Ru.) 6.47.

**अनुकरणभूतशब्द** (anukaraṇabhūta–śabda) *m.* the word which is an imitation सर्वत्र ह्यनुकरणभूतशब्दः शब्दस्वरूपस्यैवानुकरणम् Nyās. i. 765.19 (*on* iii. 4. 60)

**अनुकरणमन्त्र** (anukaraṇa-mantra) *m.* **i** *mantra* (recited) subsequent to the performance जपोऽनुकरणमन्त्रः KāśiVṛ. *on* i. 2. 34; **ii** *mantra* which is not clearly or distinctly uttered जपोऽनुकरणमन्त्र इति। जप इत्युक्तेरर्थकथनमनुकरणमन्त्र इति।··· सर्वत्र मन्त्रे(? ऽ!) स्फुटमुच्चारणमित्यनुकरण-मन्त्रः Nyās. i. 175.6 (*on* i. 2.34)

**अनुकरणमात्रत्व** (anukaraṇamātra–tva) *n.* the state of being mere imitation 'अहं बहु स्यां प्रजायेये'ति ह्यहंकारपूर्विकैव सृष्टिः श्रूयते। तत्राहं-शब्दस्यानुकरणमात्रत्वे प्रमाणाभाव इति SāṁkhyaPraBh. 162. 13 (*on* 6.64)

**अनुकरणमात्रपरता** (anukaraṇamātrapara–tā) *f.* the state of being intent on mere imitation or representation नटस्यानुकरणमात्र-परतया नैव रसाश्रययोग्यता PratāYaBhū. 288. 1.

**अनुकरणरूप** (anukaraṇa–rūpa) *adj.* of the form or nature of imitation or representation अनुव्यवसायात्मकं कीर्तनम् ··· नाट्यम्। न त्वनुकरणरूपम् AbhinBhā. i. 37.24 (*on* 1.107); अनुकरणरूपो रस इति यदुच्यते तत्किं समाजप्रतीत्यभिप्रायेण उत नटाभिप्रायेण AbhinBhā. i. 274.1 (*on* 6.31); Kāvyānu.(He.) 70.28.

**अनुकरणरूपत्व** (anukaraṇarūpa–tva) *n.* the state of being of the form of imitation or representation अनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रसः AbhinBhā. i. 272.23 (*on* 6. 31); Kāvyānu.(He.) 70.3.

**अनुकरणवाद** (anukaraṇa–vāda) *m.* theory of imitation or representation न हि सामाजिकोऽनुकार्यानुकर्तृविभागमवैति। दूषितः स्वा(तश्चा)नु-करणवादः AbhinBhā. i. 292. 15 (*on* 6. 34)

**अनुकरणविषय** (anukaraṇa–viṣaya) *m.* [Loc.] in the domain of imitation (of a sound) अनुकरणविषये निरर्थकादयः शब्दार्थदोषा न भवन्ति Kāvyānu.(He.) 232.3.

**अनुकरणव्यवहार** (anukaraṇa–vyavahāra) *m.* usage as *anukaraṇa* (i. e. indistinct utterance) यद्यपि स एव मन्त्र उच्चार्यते, तथापि वर्णाभिव्यक्त्य-नभिव्यक्तिभ्यां भेदपरिकल्पनयानुकरणव्यवहारः PadMañ. *on* KāśiVṛ. *on* P. i. 2. 34.

**अनुकरणशब्द** (anukaraṇa–śabda) *m.* word or expression uttered in imitation अयं खल्वपि भूयोऽनुकरणशब्दोऽपरिहार्यो यदर्थ उपदेशः कर्तव्यः MahāBh. i. 21. 3 (*on* ŚivSū.(Gr.) 2); अनुकरणशब्दः क्रियार्थैः सुबन्तैरेकार्थो भवति CāndraVṛ. *on* ii. 2.26; अनुकरणशब्दानां स्वरूपार्थत्वान्नैवेयं विभक्तिः CāndraVṛ. *on* iv. 2. 153; अनुकरणशब्दा ह्यर्थं जहति। न तु स्वरूपम् Nyās. i. 129. 6 (*on* i. 1. 68); त एवोपचारादकमिष्टशब्देनानुकरणशब्देनोच्यन्ते Pradī. iii. 100B.20 (*on* iii. 1.48); उत्पादयन्ति ··· अनुकरणशब्दाः प्रथमासमर्थाः स्वेनार्थे-नानुकार्येण तद्वति छप्रत्ययमिति न कश्चिद्दोषः Pradī. iv. 334B. 38 (*on* v. 2.59); टिरिटिरिच्चुरुच्चुर्वित्यनुकरणशब्दौ तदाकारिणि व्यवह्रियेते GaṇRa. 2. 104(149);

क्रीत्यादेरनुकरणशब्दस्य विभक्त्युत्पत्त्यर्थं प्रातिपदिकसंज्ञाभ्युपगमेऽपि धातुत्वाश्रयस्येयङादेशस्य करणम् PariVṛ.(SI.) 36.21; नन्वेवमपि अनर्थकत्वादनुकरणशब्दस्य प्रातिपदिकसंज्ञा न प्राप्नोति PariVṛ.(SI.) 38.6; VaiyāBhū. 131.16 (*on* 26); अव्यक्तो परिस्फुटवर्णो यः शब्दस्तस्य योऽनुकरणशब्दो ध्वनिसादृश्येन व्यक्तवर्ण एव तस्य ··· एकादेशः स्यात् Prasā. i. 66.12; i. 880. 9.

**अनुकरणशब्दत्व** (anukaraṇaśabda-tva) *n.* the state of being a word uttered in imitation अमहत्पूर्वेत्यत्र महच्छब्दस्यानुकरणशब्दत्वात् ··· आत्वाभावः Pradī. iv. 31B.14 (*on* iv. 1. 4)

**अनुकरणशब्दार्थम्** (anukaraṇaśabdārtham) *adv.* for the sake of words uttered in imitation सर्वं नाम धातुजमित्यत्रापि पक्षेऽव्ययार्थमनुकरणशब्दार्थं च सूत्रमारभ्यमेव PadMañ. *on* KāśiVṛ. *on* P. i. 2. 45.

**अनुकरणश्रवण** (anukaraṇa-śravaṇa) *n.* Upaniṣadic statement of resemblance तस्य दहराकाशस्य परज्योतिषोऽनुकरणश्रवणाच्च जीवस्य, न जीवो दहराकाशः VedāntSā.(Rā.) 98. 1 (*on* i. 3. 21)

**अनुकरणस्थल** (anukaraṇa-sthala) *n.* [Loc.] in the case of imitation (of sounds) पटदिति कुर्वित्याद्यनुकरणस्थलेऽनुकार्यध्वनीनामनुकरणाद् भेदो ध्वनिमयत्ववर्णमयत्वादिविरुद्धधर्मवत्त्वसिद्धः VaiyāBhū. 126.3 (*on* 26)

**अनुकरणाकृति** (anukaraṇākṛti) *f.* generic feature of imitation (of a sound) इहापि तर्ह्यनुकरणाकृतिर्निर्दिश्यते MahāBh. i. 343. 22 (*on* i. 4. 62); अनिताविति वक्तव्ये परग्रहणं तु अनुकरणाकृतावनितिपरत्वविवक्षार्थम् LaŚabdeŚe. ii. 56. 1.

**अनुकरणात्मता** (anukaraṇātma-tā) *f.* the state of being that which has the nature of imitation or representation अथ पश्चात्करणमनुकरणं तल्लोकेऽप्यनुकरणात्मतातिप्रसक्ता AbhinBhā. i. 275.19 (*on* 6. 31); Kāvyānu. (He.) 72. 15.

**अनुकरणादि** (anukaraṇādi) *adj.* imitation (of words) etc. पदाद्याश्रितदोषाणां ये चानुकरणादिषु । गुणत्वापत्तये नित्यं तेऽत्र दोषगुणाः स्मृताः SaraKaṇṭhā. 87. 6; तत्र तत्राभिधातव्ये तथानुकरणादिषु । उन्मत्ताद्यभिधानेषु कोऽपि दोषो न विद्यते AlaṅkāŚe. 9.6.

**अनुकरणार्थत्व** (anukaraṇārtha-tva) *n.* the state of being meant for the sake of imitation (of words) भाष्यकारस्त्वनुकरणार्थत्वं समर्थयते (ऌकारोपदेशस्य) Pradī. i. 105B.3 (*on* ŚivSū.(Gr.) 2)

**अनुकरणावश्यकत्व** (anukaraṇāvaśyaka-tva) *n.* the state of being required for the sake of imitation (i. e. inclusion or listing of items) बोधकमहासंज्ञया सर्वार्थोपस्थापकसर्वादीनामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाभावः LaŚabdeŚe. i. 220. 2; तादृशमहासंज्ञाकरणात्तादृशार्थानां गणेऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वम् LaŚabdeŚe. i. 363.5.

**अनुकरणीय** (anu-karaṇīya) *adj.* **i** to be followed सर्व(न्ना ? ना)गरिकानुकरणीयलीलासौष्ठवः ··· रणमल्लसेनापतिकुमारः ··· अब्रवीत् AvantiKa. 13. 18; **ii** to be represented or portrayed by acting विभावैर्जनितोऽनुभावैः प्रतीतिपदं नीतो व्यभिचारिभिरुपचितो मुख्यवृत्त्यानुकरणीये रामे तद्रूपतानुसंधानादनुकर्तरि प्रतीयमानः स्थायी रसः Kāvyānu.(He.) 68.21.

**अनुकरणीयता** (anukaraṇīya-tā) *f.* the state of being fit to be imitated (गायनैर्गीयते शुष्कम्) यच्छब्दो निपातः ··· तेन यत्र काव्ये प्रयोगे वा शुष्कमित्यनुकरणीयतया शून्यं गायनैरिति न तु पात्रैः AbhinBhā. iii. 67.25 (*on* 19.121)

**अनुकरणोद्युक्ता** (anukaraṇodyuktā) *adj.* (*f.*) striving to imitate तत्ते हंस न गीतिरत्र सरसा सा कान्तसीमन्तिनीलीलाचङ्क्रमणक्रमानुकरणोद्युक्ता च युक्ता गतिः AnyoMuLa. 101.

**अनुकरशीतमुख** (anukara-śītamukha) [grammar and meaning ?] अनुकरशीतमुख इव भैरवता(? तां) वहता बहुबाहुषण्ड परिपुञ्जनया नृपुरम् । अजनि परस्परान्वयविधिर्जगदाक्रमणप्रवणमहोदयेन तमसा नु तदा ककुभाम् Kapphiṇā. 11.32.

**अनुकर्णम्** (anukarṇam) *adv.* **1A** behind the ear संतप्तस्तपनमरीचिभिः ···। क्षुण्णोऽपि भ्रमरगणः स्थितोऽनुकर्णं छाया यत्पदमपि सा वरं न तृष्णम् RāghPāṇ. (Dha.) 14. 18 (comm. कर्णपश्चाद्भागे); **1B** upto the ear विना कर्णेन तेन स्त्रीनेत्राणां न रतिः क्वचित् । इतीव जज्ञिरे तेषामनुकर्णं प्रवृत्तयः PrabaCin. 55.7; **2** towards the king Karṇa, PrabaCin. 55.7.

**अनुकर्तव्य** (anu-kartavya) *adj.* to be imitated or followed यमो यच्छति भूतानि सर्वाण्येवाविशेषतः । तस्य राज्ञानुकर्तव्यं यन्तव्या विधिवत्प्रजाः MahāBhā. xii. 92.40; प्रयोगादनुकर्तव्यो विस्तरो ह्यतिविस्तरः । देशेषु देशेषु ViṣṇuDhaP. iii. 7.10.

**अनुकर्तव्यरुत** (anukartavya-ruta) *adj.* whose (sweet) sounds are to be imitated पारावतपरभृतशुकमधुकरहारीतहंसदात्यूहाः । अनुकर्तव्यरुताः KandaCū. ii. 7. 8.

**अनुकर्तुकाम** (anukartu-kāma) *adj.* desirous of imitating मैकं तमःस्तबकमूर्ध्वमपाकृथास्त्वम् एणं त्यजास्य विमले नयने गृहाण । लोलालकं तरलवीक्षितमायताक्ष्याः साक्षान्मुखं यदि भवाननुकर्तुकामः SubhāRaK. 16.15; SūktiMu. 53. 36.

**अनुकर्तुम्** (anu-kartum) *inf.* in order to imitate, to emulate or to follow न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि । अप्यायुषा वा कार्त्स्न्येन BhāgP. iii. 14.20; ज्ञानं वा तद्रूपविकलार्थसामर्थ्येनोत्पद्यमानं तद्रूपमनुकर्तुं युक्तम् HetuBiṬ. 97.28; स तदाध्युवास वेलातटम् ··· हरीशः । मैनाकमम्बुनिधिमग्नमिवानुस(v. l. क)र्तुं मेरुर्महीधरसहस्रपरीतमूलः RāmC. 25. 47; उपजातकुतूहलो नीलबहलपक्षमाप(? पा)टलचञ्चुपुटमनुकर्तुमिव तस्य शुकविहङ्गस्याङ्गम् ··· अरुणतां निनाय निजमण्डलं चण्डभानुः TilaMañ. 350.7; भवतामपि युक्तं वैचक्षण्यानुरूपं जीवितफलं तदनुकर्तुमिति श्रद्धां च जनयन्यात्रामपि तद्दर्शनेन गोष्ठीश्च प्रवर्तयेत् JayaMa. 60.3 (*on* 1.4); स्फुरदद्भुतरूपसंपदं तामनुकर्तुं कलयापि धाष्ट्यमेति । न रतिर्न शची NavaSāC. 5.24; लोके त्वत्सदृशी लक्ष्मीर्न श्रुता न विलोकिता । शक्यानुकर्तुं लेशेन या न पूर्वैर्न चापरैः DaśāvaC. 5.138; तव मुखमनुकर्तुं तन्वि वाञ्छा द्वयोश्च SubhāRaK. 16. 27; उषसि गुरुसमक्षं लज्जमाना मृगाक्षी रतिरुतमनुकर्तुं राजकीरे प्रवृत्ते । तिरयति SubhāRaK. 20. 5; तमूचुस्ते किं प्रश्नेनामुना प्रभो । वस्तु कश्चिदतिक्रान्तं नानुकर्तुं क्षमोऽधुना RājTa.(Ka.) 4.406; तदन्तशोभामनुकर्तुमेषा नाभूद्यतो दाडिमबीजपङ्क्तिः । शक्ता RāghPāṇ.(Ka.) 2. 15; विष्णुम् । अनुकर्तुमयं च तद्वदीशः कथमीशत्वमनूर्मिषट्कहीने Yādavā. 15.53; समग्रविद्याविदुरैर्न नो गुरोस्तथानुकर्तुं चरितं प्रगल्भ्यते Gurvā. 233; अमुमर्भकम् ··· स पश्यन् । विभवेन बिडौजसोऽनुकुर्वन्नपि नेत्रैरनुकर्तुमादृतोऽभूत् Acyutarā. 2.26; दिव्यं पयः क्षोणितलेऽवतार्य संपन्नकीर्तिं तमिवानुकर्तुम् । भौमं रजो वाजिखुरप्रसूतं पताकिनी तस्य दिवं निनाय Gaṅgāva. 8.80; कन्यानिमित्तमनुकर्तुमनर्हवेषं मानः कथं बत सह त्रपयोज्झितव्यः JānaPa. 1. 25.

**अनुकर्तृ** (anu-kartṛ) *adj.* **1A** who follows, follower कर्ताहमनुकर्ता त्वं लोकानां स्थितिकारणे SkandP. v(1). 4.80; **1B** accompanyist गीतस्यान्तेऽनुकर्तापि भागशश्चातुरीवशात् । निरन्तरैः पाणिघातैः समुदायानुकारितम् । वादको दर्शयेद्वाद्ये यत्रौघं तं प्रचक्षते SaṃgīRa. iii. 264. 3 (6.175); **2** who acts in imitation, actor तेन स्थाय्येव विभावानुभावादिभिरुपचितो रसः । स्थायी भवत्वनुपचितः । स चोभयोरपि । मुख्यया वृत्त्या रामादौ अनुकार्येऽनुकर्तर्यपि चानुसंधानबलात् AbhinBhā. i. 272. 12 (*on* 6. 31); i. 292.12 (*on* 6. 34); i. 317.18 (*on* 6. 62); अनुकर्तरि यः स्थाय्यवभासः ··· स एव ··· रसः Loc. 69.7 (*on* 2.4); Kāvyānu.(He.) 68.18; **3** who resembles (i. e. the individual soul) अतोऽनुकर्ता प्रजापतिवाक्ये निर्दिष्टोऽनुकार्यं ब्रह्म दहराकाशः BrahmSūBh.(Rā.) 308.18 (*on* i. 3. 21); अनुकर्तुर्जीवादनुकार्यः परब्रह्मभूतो दहराकाशोऽर्थान्तरभूत एव VedāntDī. 53. 1 (*on* i. 3.21); अनुकृतेश्चानुकर्ता जीवो नित्याविर्भूतस्वरूपो दहरो न भवितुमर्हति VedāntPāSau. 94.20 (*on* i. 3. 22); दहराकाशो जीवो न भवति जीवानुकार्यत्वात् अनुकर्त्रनुकार्ययोर्भेदावश्यंभावात् ŚivārkaMaDī. i. 10.21 (*on* i. 1.1); i.11.9 (*on* i.1.1); अनुकार्यानुकर्त्रोर्मिथोऽन्यत्वं तु सुसिद्धं 'पवनमनुहरते हनुमान्' इत्यादिषु GoviBh. 49.8 (*on* i.3. 22)

**अनुकर्तृगत** (anukartṛ-gata) *adj.* present in (the actor) who acts in imitation किमिदमनुकार्य(? गतं) कवेः शिक्षार्थमुपदिश्यते, तथानुकर्तृगतं नटस्य (वा) AbhinBhā. iii. 151.23 (*on* 22.3)

**अनुकर्तृगतत्व** (anukartṛgata-tva) *n.* the state of being present in (the actor) who acts in imitation अनुकर्तृगतत्वं चास्य (नटस्य) निरस्यति ··· राघवादेः सरूपताम् । दर्शयन्नर्तको नैव रसस्यास्वादको भवेत् SāhiDa. 90.1.

**अनुकर्तृस्थत्व** (anukartṛstha-tva) *n.* the state of being present in (the actor) who acts in imitation अनुकर्तृस्थत्वेन लिङ्गबलतः प्रतीयमानः स्थायी भावो मुख्यरामादिगतस्थाय्यनुकरणरूपः AbhinBhā. i. 272.22 (*on* 6. 31)

**अनुकर्त्रनुकार्यभाव** (anukartranukārya-bhāva) *m.* relation between that which resembles (i.e. the individual soul) and that with which it has resemblance (i.e. Brahman) दहराकाशो न जीवः । अनुकर्त्रनुकार्यभावस्य भेदगर्भत्वात् ŚivārkaMaDī. i. 444.25 (*on* i. 3. 21)

**अनुकर्त्रालम्बना** (anukartr-ālambanā) *adj.* (*f.*) depending upon (the actor) who acts in imitation स्थायिनि प्रतीतिगोचरतयास्वादरूपा प्रतिपत्तिरनुकर्त्रालम्बना नाट्यैकगामिनी रसः Loc. 69. 4 (*on* 2.4)

**अनुकर्मचेतस्** (anukarma-cetas) *adj.* having the mind fixed on rituals भवांस्तु पुंसः परमस्य मायया ··· हतात्मस्वनुकर्मचेतःस्वनुग्रहं कर्तुमिहार्हसि प्रभो BhāgP. iv. 6. 49.

**अनुकर्मन्** (anu-karman) *m.* name of a deity विश्वे चाग्निमुखा देवाः ··· तेषां नामानि वक्ष्यामि ··· अति(v.l. नु)कर्मा प्रतीतश्च MahāBhā. xiii. 91.36; *n.* renovation (of building) अथानुकर्म विज्ञेयं धाम्नां वा कालपाकतः । पतितं

स्खलितं जीर्णे प्रासादाङ्गं यदा भवेत् IśānŚiPa. ii. 35.1; [imitation, a subsequent rite or ceremony, MW., APTE]

**अनुकर्मविधान** (**anukarma-vidhāna**) *n.* undertaking of renovation इत्येवमुक्तमनुकर्मविधानमादौ IśānŚiPa. ii. 35. 121.

**अनुकर्मविधि** (**anukarma-vidhi**) *m.* rule regarding renovation (मयः) अनुकर्मविधिं तथा ।··· संक्षिप्याह यथाक्रमम् MayaMa. 1.10.

**अनुकर्ष** (**anu-karṣa**) *m.* **1** the bottom or axle-tree (of a carriage) अनुकर्षान्पताकांश्च तूणीरांश्च धनूंषि च । सर्वान् रथवरे कुर्याः MahāBhā. i. App. I. 114 (333); शराणामनुकर्षाणाम् ··· । राशयस्तत्र दृश्यन्ते MahāBhā iii. App. I. 26(5); अनुकर्षैः पताकाभिरुपासङ्गैर्ध्वजैरपि ।··· विबभौ मही MahāBhā. vi. 92.64; vi. 85.34; तस्यार्जुनिः ··· अनुकर्षं च सायकैः ।··· व्यधमत् MahāBhā. vii. 37.6; vii. 43.17; ततो विबुधशार्दूलाः ··· चक्रुः ··· अनुकर्षान् ग्रहान्दीप्तान्वरूथं चापि तारकाः MahāBhā. viii. 24.70; कूबरं रथचक्राणि ईषा ···। युगं चैवानुकर्षं च शरभूतमभूत्तदा MahāBhā. ix. 13.7; सोपसङ्गानुकर्षाणां ध्वनिनां सवरूथिनाम् ।··· सहस्राणि दशैव तु HariVaṁ. 432*(1); MatsyaP. 44.67; सवरूथः सानुकर्षः ··· शुक्रस्यापि रथो महान् ViṣṇuP. ii. 12.17; सूर्यरथस्याथ सन्निवेशं निबोधत ··· निमेषश्चानुकर्षोऽस्य VāyuP. i. 51.62; MatsyaP. 125.45; BrahmāṇḍP. i. 22.70; LiṅgaP. i. 72.9; ŚivaP. ii(5).8.12 (229B.7); [AmaK. 1582; AbhidhāCin. 757; AnekāSa. 357; Vaija. 115; 133; AnekāSaṁ. 4.316; NānārthāSaṁ. iii. 8.28; ViśvaPra. 173.28; DharK. 2653; MediK. 183.48; NānārthSaṁ. 3.25; ViśvaLoK. 383.32; ParyāŚaRa. 986; ŚabdaRa.(Su.) 3.262; KośaKaTa. 1.6182; KalpaK. 104.138; ŚabdaRaSaK. 333.11]; **2** name of one of the fourteen modes of attacking the target by dragging it along प्रकर्षणाकर्षणाभ्यामभ्याकर्ष(v. l. अनुकर्ष)विकर्षणैः । आकर्षेतां तथान्योऽन्यम् MahāBhā. ii. 21.14; पर्याकर्षानुकर्षौ ··· एतानि वल्गितान्याहुश्चतुर्दश धनुर्विदः NītiPra. 4.18; **3A** dragging along (a term from the preceding rule to the following rule) or enforcement (of a term from the preceding rule to the following) (often by the device of the particle *ca*) अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः Vār. 1 *on* P. v. 1. 84; MahāBh. ii. 359.21 (*on* v. 1. 84); चकारेण पुंलिङ्गपदस्याप्यनुकर्षात् BhaṭṭCan. 38.11 (*on* xiv. 1.5); **3B** consideration or continuation (of the earlier topic or context) असन्नेव स भवति ··· इति चानुकर्षात् BrahmSūBh.(Bhā.) 27.7 (*on* i. 1.19); स एष इति ··· °निर्दिष्टस्यान्तः प्रविश्य प्रशासितृत्वेनानुकर्षात् BrahmSūBh.(Rā.) 364.10 (*on* i. 4.15); प्रशंसाया अपि सार्थकत्वं पूर्वप्रश्नस्यैवानुकर्षे घटते PrakaVi. 334.24; ईडजनोर्ध्वे च इत्यत्र ईशोऽप्यनुकर्षः PrakriKau. ii. 210.8; चकारेण लटोऽनुकर्षं इत्याह Prasā. ii. 447.15; श्रुतस्यानुकर्षो न तु श्रोष्यमाणस्येति पदशक्तिविसंवादात् DaṇḍaVi. 194.14; अञ्चेत्युक्ते यतोऽप्यनुकर्षः संभाव्येत SiddhāKau. 254B.21 (*on* iv. 3.7); चेन 'इचि' इत्यनुकर्षः LaŚabdeŚe. i. 236.1; ii. 81.2; [Kośas give *anukarṣa* in the sense of *anukarṣaṇa* -- AnekāSa. 357; AnekāSaṁ. 4.316; NānārthāSaṁ. iii. 8.28; NānārthSaṁ. 3.25; MediK. 183.48; DharK. 2653; ViśvaLoK. 383.32; ŚabdaRaSaK. 333.11; *anukarṣa* as one of the meanings of *iti* -- ViśvaPra. 173.28; DharK. 2899; MediK. 196.22; ViśvaLoK. 409.21]; *n.* arrears or backlog of unfulfilled nature or orders (such as payment of dues to the government अनुकर्षं च निष्कर्षं व्याधिपावकमूर्च्छनम् । सर्वमेव न तत्रासीद्धर्मनित्ये युधिष्ठिरे MahāBhā. ii. App. I. 4(8) (BhārBhāDī. अनुकर्षं दारिद्र्याद् राजकीयद्रव्यस्यातीतवर्षस्य ऋणत्वेन धारणम्) [attraction, invoking, summoning by incantation, delayed performance of a duty, lagging behind in a ceremony, MW., APTE.]

**अनुकर्षक** (**anukarṣa-ka**) *m.* the bottom or axle-tree of a chariot अधःस्थं दारु स्यादनुकर्षकः ŚabdaRa.(Vā.) 2645; *adj.* (**anu-karṣaka**) which draws along; cf. **अनुकर्षकचकार**.

**अनुकर्षकचकार** (**anukarṣaka-cakāra**) *m.* the particle *ca* which drags along or enforces (the item from the preceding rule to the following) विशेषासंप्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः LaŚabdeŚe. i. 91.9.

**अनुकर्षण** (**anu-karṣaṇa**) *n.* **Ai** dragging along or enforcement (of the items from the previous rule to the following rule) दधस्तथोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात् Vār. 1 *on* P. viii. 2.38; MahāBh. iii. 40.20 (*on* viii. 2.38); यत्र स्वरितत्वेनानुवृत्तौ सिद्धायां चकारेणानुकर्षणं क्रियते तत्रास्या व्यापारः PariVṛ.(Sī.) 92.16; 141.5; तेन कर्तरि कृदिति सूत्रस्थकर्तुरनुकर्षणात् MayūMāli. 265.10 (*on* iii. 4.8); चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम् SiddhāKau. 475B.12 (*on* iii. 3.163); **Aii** consideration or continuation (of the previous context) न तावत् ··· अतिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुम् BrahmSūBh.(Śaṅ.) 156.1 (*on* i. 3.8); न पूर्वस्यैवोत्तरत्रानुकर्षणमिति चेत् न BrahmSūBh.(Śaṅ.) 237.10 (*on* i. 4.6); तस्मात् 'येयं प्रेते' इत्यस्यैव प्रश्नस्यैतदनुकर्षणम् BrahmSūBh. (Śaṅ.) 238.17 (*on* i. 4.6); 246.14 (*on* i. 4.11); अपिशब्दो नित्यत्वज्ञापनार्थः । अहरहरित्यनुकर्षणात् BālaKrī. i. 43.22 (*on* 1.25); तदपि निषिद्धं चेत्यनुकर्षणात् TātpaṬ.(Vā.) 209.24 (*on* i. 1.9); तस्य प्राणमयस्यैष एव प्रकृतश्चिद्धातुः प्राणे च प्रतिबिम्बितः ··· इति प्रकृतस्यैव विशिष्टात्मनामात्मभूतस्यानुकर्षणात् PrakaVi. 115.21; महाप्रकरणमिति शङ्कनीयम् ··· अतिवादित्वस्यानुकर्षणेन तत्रापि प्राणप्रकरणानुवृत्त्यवसायात् ŚivārkaMaDī. i. 413.6 (*on* i. 3.7); न चानुकर्षणाकर्षणाभ्यां मुक्तस्य तत्प्राप्तिः GoviBh. 322.14 (*on* iv. 4.17); **B** dragging or pulling along (a thing) सुप्तं नाम निद्राभिभवः, इन्द्रियविषयोपगमनमोहनक्षितितलशयनप्रसारणानुकर्षणादिभिर्विभावैः समुत्पद्यते NāṭyaŚā. 7.114(2); **C** dragging in (of the senses) तत्रारण्योपभोगश्च तपोभिश्चानुकर्षणम् ·· इत्येषः ··· वानप्रस्थाश्रमः MārkP. 28.25; [Kośas give *anukarṣaṇa* as meaning of *anukarṣa*- AnekāSa. 357; AnekāSaṁ. 4.316; ViśvaPra. 173.28; ŚabdaRaSaK. 333.11; DharK. 2653; ViśvaLoK. 383.32; NānārthSaṁ. 3.25; NānārthāSaṁ. iii. 8.28; MediK. 183.48; *anukarṣaṇa* in the sense of *caṣaka*, Vaija. 140.53; ŚabdaRaSaK. 122.12]

**अनुकर्षणसामर्थ्य** (**anukarṣaṇa-sāmarthya**) *n.* [Abl.] on the strength of enforcement (of the item by the particle *ca*) यो हि मन्यते अनुकर्षणसामर्थ्यान्मेऽत्र भवत्यलोपे तेन प्रतिषेधो वक्तव्यः स्यात् MahāBh. iii. 404.23 (*on* viii. 2.38); तत्र चकारेणानुकर्षणसामर्थ्यादिक इत्येतदर्थपदार्थतामुत्सृज्य स्वरूपपदार्थतामनुभवति Nyās. i. 48.20 (*on* i. 1.5)

**अनुकर्षणानर्थक्य** (**anukarṣaṇānarthakya**) *n.* redundance of the enforcement (of the item by the particle *ca*) दधस्तथोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात् Vār. 1 *on* P. viii. 2.38.

**अनुकर्षणार्थ** (**anukarṣaṇārtha**) *adj.* meant for the sake of dragging along or enforcement (of an item from the preceding rule or context to the following one) अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति MahāBh. i. 44.11 (*on* i 1.3); चकारः कर्तव्यो विभाषेत्यनुकर्षणार्थः MahāBh. i. 295.16 (*on* i. 3 93); किमर्थश्चकारः । अनुकर्षणार्थः MahāBh. i. 408.22 (*on* ii. 2.4); i. 409.2 (*on* ii. 2.4); i. 457.12 (*on* ii. 3.32); अन्यस्य प्रत्ययस्य वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्रकृतस्य खञो ढग्यतौ बाधको भविष्यतः MahāBh. ii. 372.17 (*on* v. 2.4); नैवार्थोऽनुकर्षणार्थेन चकारेण नापि तयोर्ग्रहणेन MahāBh. iii. 405.3 (*on* viii. 2.38); चशब्दोऽकुशल इत्यनुकर्षणार्थः Sphuṭā. ii. 50.8 (*on* 2.29); चकारः श्नसोऽनुकर्षणार्थः KātanVṛ. *on* ii. 6.41; तदनुकर्षणार्थं चकारकरणमनर्थकं स्यात् Nyās. i. 48.22 (*on* i. 1.5); चकारोऽत्र क्रियते क्यचः अनुकर्षणार्थः Nyās. i. 498.21 (*on* iii. 1.9); चकारोऽर्धान्तवर्जमित्यस्यानुकर्षणार्थः KāvyālaṅSū. v. 1.3; चकारः, पञ्चका इत्यनुकर्षणार्थः MṛtaSaṁ. 32.14 (*on* 3.47); चशब्दः ··· पूर्वस्य प्रामाण्यसंभावनाहेतोरर्थविभागवत्त्वस्यानुकर्षणार्थः TātpaṬ.(Vā.) 430.23 (*on* ii. 1.68); सांसिद्धिकं च द्रवत्वमम्भस्येवेति अनुकर्षणार्थः चकारः Kiraṇā. 70.12; 251.18; देवष्यादिभेदेन पञ्चवेत्यस्यानुकर्षणार्थश्चकारः TattvSaṁkhyā. 43.4; तथाचशब्दौ समुच्चयार्थौ । मानमित्यस्यानुकर्षणार्थौ वा NyāySu.(Ja.) 7A.10 (*on* i. 1.1); अपिपदमादावित्यस्यानुकर्षणार्थम् NyāySu.(Ja.) 230B.3 (*on* ii. 1.1); ज्ञापकम् ··· उकोऽनुकर्षणार्थं चकारकरणम् PariVṛ.(Sī.) 140.23; किमपर्यन्तस्येत्यनुकर्षणार्थेन चकारेणेति PariVṛ.(Sī.) 147.20; चकारो हि विसर्जनीय इत्यस्यानुकर्षणार्थः Prasā. i. 100.11; उत्तरसूत्रे चकारेण तस्यानुकर्षणार्थम् Prasā. i. 453.19; ii. 586.15; ii. 706.17; LaŚabdeŚe. i. 504.11.

**अनुकर्षणीय** (**anu-karṣaṇīya**) *adj.* (earlier context) to be considered or continued न च पुनः ··· प्राणविषयमतिवादित्वं परत्रानुकर्षणीयम् इति वाच्यम् GoviBh. 44.1 (*on* i. 3.8)

**अनुकर्षत्** (**anu-karṣat**) *adj.* **i** taking along with (i.e. leading) अनीकमनुकर्षतः । महान्दुर्योधनस्यासीन्नागो मणिमयो ध्वजः MahāBhā. vi. 17.25; अनुकर्षन् सर्वसेनां हस्त्यश्वरथसंकुलाम् VāyuP. ii. 36.105; अनुकर्षन्स वै सेनाम् BrahmāṇḍP. i. 31.78; ii. 73.105; LiṅgaP. i. 40.52; **ii** dragging along वस्त्रमुत्तमम् । सलीलमनुकर्षन्तं विमुक्तं सक्तमङ्गदे Rāmā. v. 16.20.

**अनुकर्षत्वपरिग्रह** (**anukarṣatva-parigraha**) *m.* acceptance of the position of the axle-tree (of the chariot) तस्यानुकर्षत्वपरिग्रहेण ग्रहैरुपान्तस्थितिराललम्बे ŚrīKaC. 20.6.

**अनुकर्षन्** (**anu-karṣan**) *m.* the bottom or axle-tree (of a chariot) कुबरं चाधस्थदारावनुकर्षा नरि नान्तगः ŚabdaRa.(Su.) 3.262.

**अनुकर्षाप्रदर्शन** (**anukarṣāpradarśana**) *n.* non-indication of con-

tinuation अत्रासच्छन्दोक्तस्य तत्सदासीदित्यनुकर्षप्रदर्शनं सच्छन्दस्य चिदचित्सा-धारण्यनिबन्धनम् ŚrutaPra. ii. 131.27 (*on* i.4.15)

**अनुकर्षार्थ** (**anukarṣārtha**) *adj.* meant for the sake of continuation चशब्दः पूर्वसूत्रान्नञोऽनुकर्षार्थः TattvPrakā. 209A.4 (*on* iv. 2.7)

**अनुकर्षित** (**anu-karṣita**) *n.* dragging, pulling आसेव्यमानास्तस्याङ्ग-सेवार्थमनुकर्षितम् । करिण्योत्त(? ऽत्र) पुनः क्रीडां नरेन्द्रस्येव कुर्वते Hastyāyur. 203.1 (2.13)

**अनुकर्षिन्** (**anukarṣ-in**) *adj.* [*f.* -iṇī] **1** dragging out (of the body), removing दोषानुकर्षिणी मात्रा सर्वमार्गानुसारिणी CaraS. i. 13.34; **2** which attracts यो जितः पञ्चवर्गेण सहजेनात्मकर्शिना (v. l. अनुकर्षिणा)। आपदस्तस्य वर्धन्ते MahāBhā. v. 34.53.

**अनुकल्** (**anu-kal-**) x. U. **A** to think about भगवन्तम् ।··· अनुकलयन्ति सा तु भवन्तम् BṛDharmaP. i. 44. 89; तत्ते ··· वपुरनुकलये मारुतागारनाथ Nārāy. i. 1.6; **B** to put together तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं चतुर्भिः TattvMu. 1. 17.

**अनुकलक्षाम** (**anukala-kṣāma**) *adj.* emaciated in all parts बाला केवलमङ्गकैरनुकलक्षामैर्विविक्तस्थले ध्यायन्ती किल किंचिदन्तरधुना निस्पन्दमास्ते सदा VasaTi. 27.18.

**अनुकलघट्टित** (**anukala-ghaṭṭita**) *adj.* reaching (the top of the house) every moment हर्म्याग्रेष्वनुकलघट्टितो गृहाणामास्कन्दन्निव हरितां च संधिबन्धान् ।··· प्रसरति पौरघोष एषः VasaTi. 19. 3.

**अनुकलप्रणादिन्** (**anukala-praṇādin**) *adj.* always producing (sweet) sounds दर्शयामास ··· देवोद्यानम् ··· विहङ्गमैश्चानुकलप्रणादिभिः । विनादितम् LiṅgaP. i. 92. 14.

**अनुकलम्** (**anukalám**) *adv.* **A** in accordance with the parts (i. e. part by part) षोडशभिर्ऋग्भिर्जुहोति षोडशकला वै पशवोऽनुकलमेवास्मिञ्छ्रियं दधाति ŚatBr. XII. viii. 3.13; अयमनेककालार्जितमूर्जितं यशो भोजभूमीभुजामनुकलं कलङ्कयति KaṁVa. 6.4(1); **B** at every moment, always आशाकालाननुकलमसू (? सून्) निर्द(यं ? हन्) निर्दयो मे । कालक्षेपं न खलु घट(? सह)ते कामबाणः कठोरः HaṁsSaṁ. 30; न च सैव साक्षाद्ब्रह्मप्राप्तिः, अस्यानुकलं विच्छेदात् ŚatDū. 137. 17; स्फुटनखरदनाङ्कमङ्गनानाम् ···। वपुरनुकलमैक्षत क्षितीशः MadhuVi. 6.67; आलीलोकैरनुकलमशून्यान्तिकाया नताङ्ग्याश्चेष्टाः काश्चिच्छृणु नववियोगेऽत्र संभाव्यमानाः MayūSaṁ. 2.53; शोषयत्यनुकलं विवर्तनैः सा सखीजनमखेदयन्मुहुः Nalābhyu. 3. 7; 6. 14; मातङ्गानां कुलमनुकलं यत्र वासं विधत्ते HaṁsDū.(Vā.) 40; वितरणपरिपाटीं यस्य विद्याधु(ध)रीणां नखरमुखरवीणानादगीतां निशम्य । अनुकलमयमावालंब(बु)[ बं ]बापदेशादमरनगरशाखी लज्जया मज्जतीव EI. xi. 331. 44; xii. 173.45; निजजनविरहव्यथा यथास्माननुकलमुत्तपति प्रतिप्रतीकम् KaṁVa. 4.33; वालिसूनुः ··· अनुकलमीक्षितः प्लवंगैः AdbhuDa. 3.8; 8. 34; संपीडयन्त्यनुकलं नमयन्ती मस्तकं कृताश्लेषाः KandaCū. ii. 8. 7; Ḍamaru. 7(1); भृत्यापोषणलालनान्यनुकलम् ··· वृद्धिमुपेयुषोस्तनययोः कुर्वन् ··· असौ ĀnandRa. 3.22; 5. 54; 7.35(9)

**अनुकलय्य** (**anukalay-ya**) *ger.* having thought प्रियेऽतिनिद्रेऽनुकलय्य कोऽपि । आलिङ्ग्य चैकामपरां निगूह्य मनोजसंजीवनमाततान PadyaVe. 329.

**अनुकलास्त्र** (**anukalāstra**) *n.* repeated utterance of a *mantra* of weapons दहेदनुकलास्त्रेण केवलास्त्रेण भस्मसात् AgniP. 84.52.

**अनुकलिङ्गम्** (**anukaliṅgam**) *adv.* near (the country) Kaliṅga अहम् ··· निवर्तमानो व(र्ति ? र्त)न्यामनुकलिङ्गम् तुङ्गदारुणि महत्यरण्ये रमणीयं किमपि शङ्करायतनं निवार्य AvantiKa. 186. 8.

**अनुकलितचिन्मात्रगहना** (**anukalitacinmātra-gahanā**) *adj.* (*f.*) concrete because of the experienced consciousness only अनुकलितचिन्मात्रगहनां स्वसंवित्तिं योगी रसयति शिवाख्यां परतनुम् DevīPañ. 5.18.

**अनुकल्प** (**anu-kalpa**) *n.* [listed in the *ukthādi gaṇa*, GaṇPā. 22.11] a substitute, secondary alternative procedure or rule or method or path अथ चतुर्विधं भस्मकल्पम् ।··· अग्निहोत्रसमुद्भूतं विरजानलजमनुकल्पम् BṛJābāU. 3(34); भक्त्या संप्रतिपन्नानां विना शाठ्येन मायया । व्रतिनां मुख्यतः सम्यगनुकल्पं समं स्मृतम् PauṣkS. 31. 301; बिम्बस्य ···। जातेऽवयववैकल्ये ह्यनुकल्पमिदं शृणु PauṣkS. 38. 98; स्वजातीयगुरोर्विप्र अभावादिदमाचरेत् । अनुकल्पं द्विजाद्यैश्च आत्मसंस्कारसिद्धये JayāS. 18. 16; पूर्वमुक्ते तु वासरे । न कल्पिते ध्वजारोहे तूत्सवारम्भवासरे । ध्वजस्यारोहणं कृत्वा तत्पश्चात् क्रियते तु यः । अनुकल्पमिदं विद्धि PāraS. 16.28; कुशिकसुतकुशाग्रतोयबिन्दोरिदमनुकल्पमवेत कार्मुकं मे AnarghaRā. 2. 63 (comm. गौणम्); पुष्पं गृहीत्वा तु आसनं चोपकल्पयेत् ।··· इदं परायणं परस्परप्रीतिकरं प्राणरक्षणं प्राणिनां स्विष्टं तदनुकल्पम् ··· तदेव गृहाण VarāP. 118. 44; सर्वत्रैकरूपशब्दार्थव्यवहारदर्शनात् संगानमनुकल्पम् NyāyRa. 678. 11 (*on* 5(15). 133); *m.* **1** alternative or subordinate procedure or method स्वधर्मानन्तरा वृत्तिर्यान्यानननुपजीवतः । वहतः प्रथमं कल्पमनुकल्पेन जीवनम् MahāBhā. xii. 128. 24; प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् MahāBhā. xii. 159.16; ManuSm. 11.30; TantrVā. 110. 19 (*on* i. 3.4); ViṣṇuDhaP. i. 101. 17; भार्याः कार्याः स्वजातीयाः ··· इति पूर्वकल्पः । ततोऽनुकल्पः चतस्रो ब्राह्मणस्यानुपूर्व्येण ŚaṅkhaLiDS. 64; एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः । अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ManuSm. 3.147; KūrmaP. 601.6 (2. 21); कुण्डाः ···। अनुकल्पे तु विहिता जङ्गमा मन्त्रतर्पणे PauṣkS. 29. 13; एतान् नियोजयेच्छ्राद्धे पूर्वोक्तान् प्रथमे नृप । ब्राह्मणान् पितृतुष्ट्यर्थमनुकल्पेष्वनन्तरान् ViṣṇuP. iii. 15. 4; अभावे हि श्रुतस्यानुकल्पः प्रतिनिधिः ŚābaBh. 1426. 19 (*on* vi. 3.35); मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः AmaK. 1432; AgniP. 364. 8; SmṛtiCan. v. 160. 8; शुद्धिरेषा च भौतिकी ।··· अनुकल्पे तु तां वक्ष्ये PāraS. 3.222; 6.110; नित्ये नैमित्तिके काम्ये प्रायश्चित्ते तथैव च । मानं नवविधं विप्र शृणु मुख्यानुकल्पयोः PāraS. 18. 2; अपक्षीयमाणपक्षदीक्षितोऽनुकल्पेन परिचरेदा दशम्याः PārāSū. 15. 10; 18. 22; यद् द्विराचामति तेनात्मानं स्नातं कुरुते स्नानस्यैषोऽनुकल्पः PārāSū. 45.6; 54. 1; आचार्योपनयनं तु ब्राह्मणस्यानुकल्पः BālaKrī. i. 35. 8 (*on* 1. 15); i. 46 21 (*on* 1.29); मुख्याभावे योऽनुष्ठीयते प्रतिनिधिन्यायेन सोऽनुकल्प उच्यते ManuBh. i. 271.8 (*on* 3. 137); इदानीं काम्ये नित्यसंयोगे चानुकल्पो वक्तव्यः Mitā. 18.20 (*on* 1. 56); 126.28 (*on* 2.3); 143. 11 (*on* 2.19); प्रथमकल्पादन्योऽनुकल्पः GaṇRa. 4. 307(347); तत्कर्णौ भारती दूनौ विरहाद्भीमजागिराम् । अध्वनि ध्वनिभिर्वैणैरनुकल्पैर्व्यनोदयत् NaiṣC. 17.12; तेन मुख्यकल्पानुकल्पयोरसंभवे ह्यापत्कल्पोऽयमिति संभवति HārLa. 120.10; अत्रानुकल्पमाह वसिष्ठः SmṛtiCan. ii. 301. 16; कुम्भो द्रोणद्वयमिति गृह्यमाणे विंशतिद्रोणादिकं प्रथमकल्पादनुकल्पमनुकल्प्य न समञ्जसं स्यात् CaturCin. i. 393 6; ii(2). 6. 6; iii(1). 299.1; iii(1). 758. 5; iii(1). 1042. 18; दर्व्यादिहोमेऽनुकल्पेन वाक्येन विधेयाङ्गीक्रियमाणे तस्य कारणत्वाभावान्न युज्यते NyāySu.(So) 89.18 (*on* i. 2. 27); सावित्रीमपीत्यन्याध्ययनाशक्तावुपाकरणाद्वा पूर्वमगृहीतवेदस्य ब्रह्मचारिणोऽनुकल्पः ManvaVi. 178. 26 (*on* 2.104); 293.13 (*on* 3.24); 295. 5 (*on* 3. 26): 1355.19 (*on* 11.27); यत्कौपीनादिपरिग्रहणमस्ति तदप्यस्य योगिनः परमहंसस्य मुख्यः कल्पो न भवति, किं त्वनुकल्प एव JīvanVi. 147. 18; तत्कथमनुकल्पः स्यात् NyāySu.(Ja.) 52B. 7 (*on* i. 1.1); योगीश्वरोक्तमनुकल्पमेव मुख्यं मन्यते नारदः Subodhi. 2. 25 (*on* 2. 3); त्रिणाचिकेतव्यतिरिक्तानां स्वस्त्रीयादीनामनुकल्पमाह मनुः 'अनुकल्पस्त्वयम्' DīpKa. 26.26 (*on* 1. 220); पूर्णानुष्ठानशक्तस्य ··· मुख्यकल्पसमर्थस्यानुकल्पेन वृत्तौ च दोषमाह PāñcRāRa. 176.2; अनुकल्पेनापि यथासंभवमेते (पञ्चयज्ञाः) कर्तव्याः ManvaMu. 100.32 (*on* 3.71); जीवात्मसंयमस्तु तत्रानुकल्प इति YogSā. 19. 2(1); उपास्त्या तु विलम्बेनेति योगमार्गोऽनुकल्पः SiddhāLeSaṁ. 393.3: वामहस्तेन पूजा च दक्षेण तर्पणं मतम् । दक्षेण पानं देवेशि ह्यनुकल्पाः प्रकीर्तिताः ŚaktiSaṁT. i. 7.24; i. 7.55; ii. 21.52; राज्ञोऽनुकल्पमाह व्यासः राज्ञा तु स्वयमादिष्टः संधिविग्रहलेखकः ।··· प्रलिखेद्राजशासनम् VyavaMa. 28. 8; पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् । त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ···। द्विमुहूर्तत्वं चानुकल्पः NirṇaSi. 13. 19; 43.5; अत्र साग्नेरनग्नेर्वोक्तकालाभावे त्रिपक्षादिसंवत्सरान्ताः अनुकल्पा ज्ञेयाः NirṇaSi. 426. 17: संध्याकर्मावसाने तु स्वयं होमो विधीयते । ऋत्विगादिद्वारा तु तदाचरणमनुकल्पः VīraMi. 181.28 (*on* 1. 99); निमित्तमथ तत्रोक्तं तद् द्विराचमने ततः । अनुकल्पास्ततस्तस्य कथितास्तदनन्तरम् VīraMi.(Āhnika.) 7. 7; स्मार्तोऽनुकल्पः अपकृष्टत्वात् VīraMi.(Paribhāṣā.) 29.9; 81.3; विहितालाभत इति अप्रतिषिद्धविहितालाभे विहितप्रतिषिद्धैरर्चयेदित्यनुकल्पः VīraMi.(Pūjā.) 69. 19; तत्र राक्षसो मुख्यः प्राजापत्यासुरगान्धर्वा अनुकल्पाः VīraMi.(Saṁskāra.) 859. 8; ब्रह्मत्वस्य वासिष्ठकर्तृकत्वं मुख्यः कल्पः । अवासिष्ठकर्तृकत्वमनुकल्पः MayūMāli. 508. 10 (*on* vi. 6.4); (जपेत् सहस्रं वा त्रिशतं शतमेव वा) नायं तुल्यबलो विकल्पः किं तु पूर्वासंभवे परोऽनुकल्पः LalitāSaBh. 202. 23 (*on* 240); प्रतिनिध्यनुकल्पयोश्च मुख्याभावोपाधिकत्वाविशेषात् BālamBha. iii. 31. 11 (*on* 3. 16); **2** due procedure एतेषामेव लोकानामृतुच्छन्दःस्तोमपृष्ठानामानुपूर्वेण भक्तिशेषोऽनुकल्पः AVPari. 48. 147; **3** secondary preparation एतद् बलासग्रथितेऽञ्जनं स्यादेषोऽनुकल्पस्तु फणिज्झकादौ SuśruS. vi. 11.12; **4** not the principal (i.e. not the real) end of the world अनुकल्पाश्रितचण्डपावकम् ···। अवमत्य तुरङ्गदानवम् ··· प्रजहास हरिः Yādavā. 9. 17.

**अनुकल्पक** (**anukalpa-ka**) *m.* (Tantr.) secondary procedure गणेशमभिषिच्य च । पूजयेदर्घ्यगन्धाद्यैरथवा ह्यनुकल्पके PāraS. 14. 536; कलशे मण्डले बिम्बे वह्नौ च यजनं विभोः । नित्यशः क्रियते यत्र मुख्यकल्पः स कीर्तितः । बिम्बे वह्नौ च यजनं यत्र स्यात् सोऽनुकल्पकः PāraS. 16. 22; स्त्र्या(? त्र्या)वृत् क्रमो विधिः कल्प उपकल्पोऽनुकल्पकः Vaija. 92. 113; *n.* secondary alternative procedure (of preparing sacred ashes) आरण्यगोमयं दूरे ग्रामादेः पूतमाहरेत् । प्राग्वच्छिवाग्निना दग्धं यत्तत् स्यादनुकल्पकम् ĪśānŚiPa. i. 9.66; ii.3.103;

cf. **अनुकल्प** *n.*

**अनुकल्पकाल** (**anukalpa-kāla**) *m.* time for (the performance of) an alternative procedure एकोद्दिष्टमासिके (श्राद्धे) पूर्वमेवानुकल्पकालस्योक्तत्वात् SmṛtiCan. v. 140.7.

**अनुकल्पकृत्** (anukalpa-kṛt) *adj.* one who follows the due procedure संप्रार्थ्य देवेशं वीप्सया तोषयेत्ततः। व्यजनैश्चामरैश्चैव वीजयेदनुकल्पकृत् SkandP. ii(2).39.24.

**अनुकल्पता** (anukalpa-tā) *f.* **A** the state of being a secondary alternative or substitute procedure क्षत्त्रियकर्मणि ··· कुसीदादीनामनुकल्पतया साधारणत्वम्। वैश्यस्य तु स्वयंकर्तृकाण्यप्येतानि स्वकल्प एव, स्मृत्यन्तरात् BālaKrī. i. 102.3 (*on* 1.118); यं मन्यते नैव शत्रुं न मित्रं तं मध्यस्थं भोजयेत् श्राद्धकल्पे उत्कृष्टगुणोदासीनाभावे कदाचिदुत्कृष्टगुणं मित्रं ग्राह्यम्। शत्रुस्त्वनुकल्पतयापि न ग्राह्य इत्याह मनुः CaturCin. iii(1). 464.11; अत एवानुकल्पतया दुःस्थितस्य स्वप्रतिनिधिप्राड्विवाकनियोगः प्रागुक्तः VīraMi.(Vyavahāra.) 92.30; अनुकल्पता च मुख्यानुष्ठानासंभवे परानुष्ठानम्। तत्रानुकल्पता द्विविधा, नैयायिकी वाचनिकी चेति VīraMi.(Saṁskāra.) 707.17; अस्तु वा मासादेर्जेरामरणादिरूपनित्य-प्रयोगविधिवदनुकल्पतया विधिः MīmāKau. ii. 77.6 (*on* ii. 3.24); **B** subordinate position, subservience नन्दः ···। अधिचकार वदान्यमणेः श्रियं व्यधित कल्पतरोरनुकल्पताम्।··· सुतप्रसवोत्सवे Yādavā. 3.65.

**अनुकल्पतातारतम्य** (anukalpatā-tāratamya) *n.* gradation in being the secondary procedures अन्ये (पक्षाः) तु पूर्वपूर्वासंभवेऽनुकल्पतातारतम्येन व्यवस्थाप्याः VīraMi.(Saṁskāra) 707.17.

**अनुकल्पत्व** (anukalpa-tva) *n.* the state of being a secondary alternative or substitute procedure अनुकल्पत्वं चाधिकारविप्रकर्षात् Bāla-Krī. i. 64.15 (*on* 1.55); श्राद्धीयद्विजसंनिधावतिथिर्भोजनीय इत्युक्तम्। यदि तु श्राद्धे भोक्तारः प्रकृष्टगुणा न स्युः, श्राद्धे एवासौ भोजनीय इत्यनुकल्पत्वम् CaturCin. iii(1).447.20; iii(1).565.19; iii(1).758.12; iii(1).1338.6; काञ्चनाभावे दीयते स्वर्णमाक्षिकम्। किं तु तस्यानुकल्पत्वात् किंचिदूनगुणास्ततः। न केवलं स्वर्णगुणा वर्तन्ते स्वर्णमाक्षिके BhāvPra.(Bhā.) 6(8).58; एषां सोमादी-नामभावे करणाशक्तौ वैश्वानरीमिष्टिमनुकल्पत्वेन कुर्यात् VīraMi. 212.20 (*on* 1.126); 830.6 (*on* 3.52); (दत्तादीनाम्) तेषां वाचनिकमेव अनुकल्पत्वम् VīraMi.(Saṁskāra.) 207.21; 388.1; तत् ··· अनुकल्पत्वेन स्वगृह्योक्तमात्रानु-ष्ठानबोधकमिति पूर्वाधिकरण एवोक्तत्वाद् अकिंचित्करम् MīmāKau. i. 99.10 (*on* i. 3.15); iii(1). 53.11 (*on* i. 2.27); पराशरोक्तेश्चानुकल्पत्वेनापदि पञ्चम्यादि-परिणयनं कार्यमिति प्रतीयते NirṇaSi. 205.26; यत्तु पूर्वतन्त्रे सिन्दूरादेर्निरपेक्ष-कारणत्वमुक्तम् तदीदृशद्रव्यालाभेऽनुकल्पत्वेन ज्ञेयम् SetuBa. 308.11; 'अत्रानु-कल्पत्वं तु दौहित्रातिरिक्तविषयम् BālamBha. i. 493.1 (*on* 1.220); iii. 31.14 (*on* 3.16)

**अनुकल्पत्वज्ञापन** (anukalpatva-jñāpana) *n.* indication of (something) being a secondary alternative सवर्णग्रहणम् ··· उत्कृष्टवेदनस्यानु-कल्पत्वज्ञापनार्थम् BālaKrī. i. 64.14 (*on* 1.55)

**अनुकल्पत्वद्योतन** (anukalpatva-dyotana) *n.* indication of being a secondary alternative किं जर्तिलगवीधुकानामनुकल्पत्वद्योतनार्थोऽयं निषेधो विकल्पार्थो वा NyāySu.(So.) 70.24 (*on* i. 2.19)

**अनुकल्पत्वपक्ष** (anukalpatva-pakṣa) *m* view of being a secondary alternative अनुकल्पत्वपक्षे बाधानापादकत्वाद् विकल्पपक्षः NyāySu.(So.) 70.25 (*on* i. 2.19)

**अनुकल्पत्वसूचन** (anukalpatva-sūcana) *n.* suggestion of being a secondary alternative अनुकल्पत्वसूचनायाह। अन्नाभावे इति BālamBha. i. 353.8 (*on* 1.104)

**अनुकल्पत्वाभिप्रायक** (anukalpatvābhiprāya-ka) *adj.* having the intention of being a secondary alternative ब्राह्मणो वेत्यनुकल्पत्वाभिप्रायको वाशब्दो न तुल्यकक्षाधिकारपरः VīraMi.(Vyavahāra.) 26.6.

**अनुकल्पन** (anu-kalpana) *n.* secondary alternative जनित्रे भवत इति सति किमन्यदनुकल्पनात् NidāSū. 146.12 (8.10); यद्वा गर्भगृहे विष्णोर्मूलमूर्तेस्तु दक्षिणे। शयनं कल्पयेद्विप्र स्वगृहे वानुकल्पने PāraS. 13.37.

**अनुकल्पपक्ष** (anukalpa-pakṣa) *m.* view of secondary alternative संबन्धाशङ्कयैव मातामहादयोऽनुकल्पपक्षोक्ताः ManuBh. i. 267.23 (*on* 3. 128); अनुकल्पपक्षे दौहित्रस्य यत्नेन भोज्यतोच्यते ManuBh. i. 306.29 (*on* 3. 224)

**अनुकल्पपर** (anukalpa-para) *adj.* having reference to a secondary alternative प्रतिनिधिपदं चैतदंशेऽनुकल्पपरम् VīraMi. (Saṁskāra.) 207.21.

**अनुकल्पभाव** (anukalpa-bhāva) *m.* status of secondary position तस्मिन्नरण्ये तरुभिः प्रपेदे कल्पद्रुमाणामनुकल्पभावः Yādavā. 4.42.

**अनुकल्पभूत** (anukalpa-bhūta) *adj.* which is a secondary alternative तेन ह्यन्नं क्रियत इत्यर्थवादनिराकाङ्क्षत्वे सत्यपि शूर्पासंभवेऽनुकल्पभूतदर्व्यादि-प्राप्त्यर्थं तेन ह्यन्नं क्रियत इत्यस्यापि परावृत्य हेतुपरतेष्यते NyāySu.(So.) 86.29 (*on* i. 2 26); अनुकल्पभूतसांकल्पश्राद्धेऽपि पुनस्तत्कर्तव्यम् BālamBha. i. 546.8 (*on* 1.249)

**अनुकल्पम्** (anukalpam) *adv.* **1** in the course of (the exposition of) the ritual यानि (तैलादीनि) चानुकल्पमुदाहरिष्यामः GobhiGS. i. 5.20; **2** resemblaance with (savanas) स्तेयं कृत्वा सुरां पीत्वा ··· चतुर्थकाला मितभोजनाः स्युरपोऽभ्यवेयुः सवनानुकल्पम् ĀpaDS. i(9).25.10; BaudhDS. ii. 1.41; **3** in each and every *kalpa* or age तमीशमीड्यमनु-कल्पमाद्यं पश्यन्ति मूढा न विराजमानम् MahāBhā. v. 300*(3) (*but* Śaṅ. सर्वमनुप्रविश्य आत्मना कल्पयतीत्यनुकल्पम्); संहरणेऽत्तमेतज्जगत्समस्तम् ···। तवैव सर्गाय समुद्यतस्य जगत्त्वमभ्येत्यनुकल्पमीश ViṣṇuP. v. 9.31; मयूखः पूष्णीव ···। उदेत्योदेत्याम्ब त्वयि ··· भजन्ते तत्त्वौघाः प्रशममनुकल्पं परवशाः DevīPañ. 5.32; अनुकल्पं पुत्राणां सुप्रसन्नो रवे मम। कुरु ··· कार्यम् BrahmP. 32.28; एष वरदः कमलालयायाः। आकल्पयन्वसुमतीमनुकल्पमेनां कल्पद्रुमो भवतु कश्चन मानवानाम् VasaTi. 47.14.

**अनुकल्पमध्य** (anukalpa-madhya) *n.* [Loc.] amongst (various) alternatives (व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्) एतेनानुकल्पमध्ये दौहित्रस्य श्रेष्ठतोक्ता ManvaVi. 419.14 (*on* 3.234)

**अनुकल्परूप** (anukalpa-rūpa) *adj.* having the form of a secondary alternative performance शूद्रः ··· मन्त्ररूपाङ्गहीनं पकाङ्गहीनं चानुकल्परूपं श्राद्धं करोति CaturCin. iii(1). 1522.15; VīraMi. 816.8 (*on* 3.35-41); *n.* [Inst.] in the form of a secondary alternative मुख्यकल्पानुकल्परूपेणात्र व्यवस्था YogSā. 43.6(2)

**अनुकल्परूपत्व** (anukalparūpa-tva) *n.* the state of having the form of a secondary alternative त्रिब्राह्मणैकब्राह्मणपक्षयोः कल्पानुकल्परूपत्व-प्रतिपादिका मन्वादिस्मृतिर्बाध्येत CaturCin. iii(1).89.22.

**अनुकल्पविधा** (anukalpa-vidhā) *f.* [Inst.] by way of a secondary alternative तत्स्वपरगृह्योक्तयोः प्रत्यक्षनयनसमारोपयोर्मुख्यकल्पानुकल्पविधयैवेति मन्तव्यम् BālamBha. i. 318.2 (*on* 1.97)

**अनुकल्पविधान** (anukalpa-vidhāna) *n.* injunction of the secondary alternative विशेत्। यागार्थमण्डपं तत्र ··· यजेद् बिम्बम् ··· अनुकल्पविधाने तु प्रासादं संप्रविश्य च। मूलबिम्बम् PāraS. 14.353; अनुकल्पविधानाभावेऽपि नित्याकरणे प्रत्यवायस्यावश्यंभावित्वात् CaturCin. iii(2). 141.4; 'बह्वल्पं वा स्वगृह्योक्तम्' इत्यादिवचनम् ··· अनुकल्पविधानार्थम् MīmāKau. ii. 125.13 (*on* ii. 4.21); BhāṭṭDī. i. 180.18 (*on* ii. 4.2)

**अनुकल्पविधि** (anukalpa-vidhi) *m.* injunction of the secondary alternative यदा सर्वोत्तमगुण उदासीनो न लभ्यते तदानुकल्पविधिः CaturCin. iii(1). 454.18; iii(1). 758.13; श्रौतेऽपि स्वशाखोक्तमात्रं स्वकल्पसूत्रमात्रोक्तं वानुष्ठेयमित्यनुकल्पविधिर्भवत्येव MīmāKau. i. 99.13 (*on* i. 3.15)

**अनुकल्पविषयत्व** (anukalpaviṣaya-tva) *n.* the state of having reference to the secondary alternative विधेरनुकल्पविषयत्वेन निषेधस्य च मुख्यकल्पविषयत्वेनैकविषयत्वाभावात् VīraMi.(Saṁskāra.) 709.16.

**अनुकल्पशस्** (anukalpa-śas) *adv.* in each secondary alternative चरितार्था श्रुतिः कार्या यस्मादप्यनुकल्पशः Karmapradīpa (cf. Dharmaśāstra-saṁgraha, vol. II, Navrang, 431.23)

**अनुकल्पस्मरण** (anukalpa-smaraṇa) *n.* *smṛti-* text regarding secondary alternative अक्षता नरमेधश्च गोयज्ञश्च कमण्डलुः। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्। अत एव मधुपर्केऽनुकल्पस्मरणम् Aparā. 233.9 (*on* 1.156)

**अनुकल्पागत** (anukalpāgata) *adj.* resulting from the secondary alternative अनुकल्पागतं च यत्रामिषत्वं तत्र निषेधः प्राप्नोति BālamBha. i. 196.23 (*on* 1.53)

**अनुकल्पानुकल्प** (anukalpānukalpa) *m.* [P. viii. 1.11] every secondary alternative कुण्डाः।··· अनुकल्पे तु विहिता जङ्गमा मन्त्रतर्पणे।··· अनुकल्पानुकल्पे तु नित्यमेव PauṣkS. 29.15; PāraS. 7.12.

**अनुकल्पानुवाद** (anukalpānuvāda) *m.* restatement of the secondary alternative पृथगिति त्वनुकल्पानुवादमात्रमसंकीर्णात्संकीर्णस्य निन्दितत्वप्रदर्श-नार्थम् ManvaVi. 295.6 (*on* 3.26)

**अनुकल्पानुष्ठातृ** (anukalpānuṣṭhātṛ) *adj.* who performs (i. e. follows) the secondary alternative प्रथमकल्पशक्तस्य तु अनुकल्पानुष्ठातुर्दोषमाह मनुः CaturCin. iii(1). 452.20.

**अनुकल्पानुष्ठान** (anukalpānuṣṭhāna) *n.* performance according to a secondary alternative प्रथमकल्पलाभेऽनुकल्पानुष्ठाने तु दोषमाह (मनुः) SmṛtiCan. v. 160.13; मुख्यासंभवे चानुकल्पानुष्ठानात्फलं भवति VīraMi.

(Paribhāṣā.) 29.10.

**अनुकल्पान्तर** (**anukalpāntara**) *n.* another secondary alternative मनुस्त्वनुकल्पान्तरमाह SmṛtiCan. v. 162.5.

**अनुकल्पापेक्षा** (**anukalpāpekṣā**) *f.* [Inst.] in accordance with the secondary alternative वचनार्थस्तु प्रथमः कल्प इत्यनुकल्पापेक्षया VīraMi. (Āhnika.) 65.7.

**अनुकल्पावस्था** (**anukalpāvasthā**) *f.* (Loc.) in the case of the secondary alternative मुख्यवदनुकल्पावस्थायामपि यथावगतान्येवानुष्ठातव्यानि (कर्माणि) CaturCin. iii(1). 104.3.

**अनुकल्पित** (**anu-kalpita**) *adj.* [*f.* -ā] **A** prescribed हिंसायां हि प्रवृत्तायामाशीरेवानुकल्पिता MahāBhā. xii. 257.3; **B** endowed with हुत्वा चाहवनीयस्थम् …। अग्रभोज्याः प्रसूतीनां श्रिया ब्रह्म्यानुकल्पिताः MahāBhā. xiii. 35.9; **C** built, fashioned स्फटिकगोपुरं पुरम्। हरो गिरौ चिरमनुकल्पितं तदा विसर्जितामरनिवहोऽविशत्स्वकम् MatsyaP. 154.498; **D** practised देवदेवस्य भक्तियैरनुकल्पिता … तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययम् VāyuP. ii. 30.311; BrahmāṇḍP. iii. 2.248.

**अनुकल्पितभूषण** (**anukalpita-bhūṣaṇa**) *adj.* who has reduced the ornaments to a secondary status अङ्गैरमितसौन्दर्यैरनुकल्पितभूषणम् … अवेक्ष्य विबुधा देवमलभन्त दृशोः फलम् Yādavā. 1. 69 (comm. अमुख्यकल्पीकृताभरणम्)

**अनुकल्पोक्त** (**anukalpokta**) *adj.* mentioned in the secondary alternative तत्रानुकल्पोक्तमुत्सवं न समाचरेत् PāraS. 17.513.

**अनुकल्पोद्वाह** (**anukalpodvāha**) *m.* marriage according to the secondary alternative नन्वनुकल्पोद्वाहे दोषाभावान्नरको न स्यात् VīraMi. (Saṁskāra.) 709.19.

**अनुकल्प्य** (**anukalp-ya**) *ger.* **1** having prepared गोमेधेन यजध्वम् … उपदेशो मया दत्तः क्रियतां शीघ्र एष वै। एवमुक्तास्तदा देवा गाः पशूंश्चानुकल्प्य ते। मुमुचुश्चरणार्थाय VarāP. 16.12; **2** having assumed स्मरः पराङ्गैरनुकल्प्य धन्वितां जनीमनङ्गः स्वयमार्दयत्ततः NaiṣC. 12.109; **3** having performed आपदि मुख्याशौचापवादेन सद्यः शौचमनुकल्प्य … वृत्त्यन्तरमाह VīraMi. 816.7 (*on* 3.35-41); **4** having made or fashioned वैश्वदेवस्य स्थाने स्थण्डिलमनुकल्प्य … उदकमन्यदुपदध्यात् BālamBha. i. 351.20 (*on* 1.103)

**अनुकसेवक** (**anuka-sevaka**) *m.* servant who loves (his master) इतस्ततष्टीकमानैर्याष्टीकैर्विनीयमानानुकसेवकम् … आस्थानमण्डपमास्थाय YaśasCam. i. 372.4 (*but* comm. प्रत्यासन्नसेवकाः)

**अनुकाङ्क्ष्** (**anu-kāṅkṣ-**) I. U. **i** to wish, to desire, to long for अनुप्रियं चेदनुकाङ्क्षसे त्वं सर्वेषु कार्येषु हिताहितेषु MahāBhā. ii. 57.16; न पूजयेत्त्वा कोऽन्वद्य यस्त्रयोदशवार्षिकम्। अमर्षं पृष्ठतः कृत्वा धर्ममेवाभि(v.l. नु)काङ्क्षसे MahāBhā. vii. 168.7; xiii. 72.45; कृष्णसर्पमतिक्रुद्धं श्वसन्तं त्वं महाविषम्। स्प्रष्टुमिच्छसि हस्तेन यन्मां त्वमनुकाङ्क्षसे Rāmā. iii. 907*(2); वयं चैषां रसवीर्यविपाकप्रभावानुपयोज्यामहे, ये चास्माननुकाङ्क्षन्ति, यांश्च वयमनुकाङ्क्षामः CaraS. iii. 3.4 (1922 Ed.); स भारतीसाक्षिकसर्वविस्त्वः …। स्वशैशवस्योचितमन्वकाङ्क्षीत् ŚaṅkaDigVi.(Mā.) 3.79; **ii** to wait for, to watch पीतवन्तं तु खल्वेनं (मात्राप्रमाणं) मुहूर्तमनुकाङ्क्षेत्तस्य यदा जानीयात् स्वेदप्रादुर्भावेण दोषप्रविलयनमापद्यमानम् CaraS. i. 15.10 (1922 Ed.)

**अनुकाङ्क्षत्** (**anu-kāṅkṣat**) *adj.* [*f.* -ntī) **i** desiring, loving पुत्रमिवैनमनुकाङ्क्षन् … (आचार्यः) विद्यां ग्राहयेत् HirŚS. xxv. 2.112 (40.1); ĀpaDS. i(2). 8.25; **ii** waiting for जानकी प्रोचे कपिम् … आगमं तेऽनुकाङ्क्षन्ती द्वौ मासौ प्राणधारणाम्। करोमि BṛDharmaP. i. 20.70.

**अनुकाङ्क्षा** (**anu-kāṅkṣā**) *f.* strong or vehement desire श्रद्धा श्रद्धानुकाङ्क्षयोः NānārthSaṁ. 87.37; [Inst.] with (one's own) desire, willingly अनुव्रजिष्यामि वनं त्वयैव गौः सुदुर्बला वत्समिवानुकाङ्क्षया Rāmā. ii. 443*(4)

**अनुकाङ्क्षिन्** (**anukāṅkṣ-in**) *adj.* desirous तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः। कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि Rāmā. ii. 57.26.

**अनुकाम** (**anukām-á**) *adj.* [*f.* -ā] [Vār. 7 *on* P. iii. 2.1] desiring विश्वा हि मर्त्यत्वनानुकामा शतक्रतो। अगन्म वज्रिन्नाशसः ṚV. viii. 92.13; यदि धर्मार्थाभ्यां प्रवासं प्रत्यनुकामा न स्याद्यथा प्रेत एवं वर्तितव्यं स्यात् VāsiDS. 17. 77; वैद्यपुत्रौ …। प्रत्तानामनुकामानामन्योऽन्यस्य प्रभक्षिणौ। भक्षयित्वा तावन्योऽन्यं विनाशं समवाप्नुतः BrahmāṇḍP. ii. 59.8.

**अनुकाम** (**anu-kāmá**) *m.* **i** wish, desire प्रियं च मेऽनुकामश्च मे कामश्च मे TaiS. IV. vii. 3.1; VājaS. 18.8; VājaS.(K.) 19.20; MaiS. ii. 11.3 (ii. 141.9); KāṭhS. 18.8 (i. 271.13); KapiKaS. 28.8 (127.2); **ii** the word *anukāma* अवारपारात्यन्तानुकामं गामी P. v. 2.11; CāndraVyā. iv. 2.17; ŚākaṭāVyā. iii. 3.55; SiddhaHe. vii. 1.100.

**अनुकामकृत्** (**anukāma-kṛ́t**) *adj.* acting in accordance with the desires, fulfilling desires पवस्व सोम शं गवे। देवेभ्यो अनुकामकृत् ṚV. ix. 11.7.

**अनुकामतस्** (**anukāma-tas**) *adv.* as per desire तत्राशुभानि वेश्मानि निवेशाश्चासुखावहाः। गवाक्षस्तम्भशोभिन्यो विधेयाश्चानुकामतः SamarāSū. 15.48.

**अनुकामम्** (**anukāmám**) *adv.* according to desire, as per desire अनुकामं तर्पयेथामिन्द्रावरुण राय आ ṚV. i. 17.3; मा नो अर्यो अनुकामं परा दाः ṚV. viii. 48.8; यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः।… तत्र माममृतं कृधि ṚV. ix. 113.9; JaineVyā. 239.13 (*on* iii. 4.16); KāśiVṛ. *on* v. 2.11; कामसदृशमनुकामं कामानुरूपम् Nyās. ii. 62.14 (*on* v. 2.11); कामः इच्छा, तस्य सदृशमनुकामम् PadMañ. *on* KāśiVṛ. *on* P. v. 2.11; कामसदृशमनुकामम्। क्रियाविशेषणे चैते Prasā. i. 867.11.

**अनुकामिनी** (**anu-kāmínī**) *adj.* (*f.*) wishing well of, full of desires अथाहमनुकामिनी स्वे लोके विशा इह TaiS. III. v. 6.1; BāudhŚS. i. 159.6; ĀpaŚS. xi. 16.16; MānŚS. 69.10; HirŚS. vii. 8.11 (736.8); VaikhāŚS. 14.14.

**अनुकामीन** (**anukām-īna**) *adj.* **i** going according to one's desire, self-indulgent एतेभ्यः इप्समर्थेभ्यो गामीत्यस्मिन्नर्थे खो भवति।… अनुकामं गामी अनुकामीनः JaineVyā. 239.13 (*on* iii. 4.136); CāndrVṛ. *on* iv. 2.17; अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः KāśiVṛ. *on* v. 2.11; Prasā. i. 867.12; SiddhāKau. 294B.4 (*on* v. 2.11); सुराङ्गनौघं विदधे हतारिस्तत्रानुकामीनमवाप्तकामम् Rāvaṇā. 16.45; [AmaK. 1620; Vaija. 116.150; AbhidhāCin. 495; ŚabdaRa.(Vā.) 3383; KalpaK. 116.244] **ii** moving at will (i.e. self-controlled) विमानमनुकामीनमध्यासीनः … आसीदत … हस्तिनापुरमर्जुनः PāṇḍaC. 5.409; विमानैरनुकामीनैः खेचराणां मणीमयैः। चकाशे दूरमाकाशे कुर्वद्भिः कमलाकरान् PāṇḍaC. 12.451.

**अनुकामीनता** (**anukāmīna-tā**) *f.* the state of being one who moves at one's own will, self-indulgence कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज Bhaṭṭi. 5.15.

**अनुकामीनतुरग** (**anukāmīna-turaga**) *m.* horse moving according to (its) desire, self-controlled अनुकामीनतुरगैः…संश्राय चुलुकैः।… जगृहुर्यशः … गुरवस्तेऽरिविजयात् DvyāśraKā. 18.25.

**अनुकाय** (**anukāya**) *m.* name of a part of a building (where the parts are identified with the limbs of a body, and the building with the body) कायानुकायभूषाढ्यं रतिवर्धनकं भवेत् IśānŚiPa. ii. 29.189; कायश्चाप्यनुकायश्च प्रासादाङ्गं द्विधा स्मृतम् … अनुमार्गाश्च कायः स्यादनुकायोऽथ कथ्यते IśānŚiPa. ii. 30.35; ŚilpaRa. i. 16.115; अनुकायाभिधानानि सामान्यानि भवन्ति हि IśānŚiPa. ii. 30.41; ŚilpaRa. i. 16.120.

**अनुकार** (**anu-kāra**) *m.* **Ai** resemblance, imitation यवका हायनाः पांसुवाप्यनैषधकादयः। शालीनां शालयः कुर्वन्त्यनुकारं गुणागुणैः CaraS. i. 27.12 (1941 Ed.); यदप्युक्तं समानस्वभावेष्वनुकारो दृश्यते इति नायमेकान्तो नियमः BrahmSūBh.(Śaṅ.) 182.3 (*on* i. 3.22); संध्यासमाधिविनिमीलितलोचनस्य यस्यानुकारमिव हारफणी चकार HarVi. 1.49; अभानं तेजसो दृष्ट सति तेजोऽन्तरे यतः। तेजो धात्वन्तरं तस्मादनुकाराच्च गम्यते Bhām. 225.7 (*on* i. 3.22); तदनेनानुपश्य व्याख्यातं तामनुकारेण पश्यतीत्यनुपश्य इति TattvVai. 90.12 (*on* 2.20); गमने दर्शने मह्यमनुकारं समाचरः। यस्मात्तु कुष्ठरोगित्वमचिरात्त्वं गमिष्य-(? सि)ति BhaviP. 125B.14 (i. 72.20); सौवर्णी त्रिभुवनश्रियः श्रियोऽनुकारादुत्पादितेन्द्रपुरीशङ्का लङ्का नाम नगरी UdaySuKa. 84.9; असम्यग्वीक्षितं द्रष्टुं पण्डितो नानुवर्तते। अनुकारात्परिभवं याति नापितवन्नरः BṛKathāMañ. 16.562; तस्य दहराकाशस्य परस्य ब्रह्मणोऽनुकारात् … विमुक्तबन्धः प्रत्यगात्मा, न दहराकाशः। तदनुकारस्तत्साम्यम् BrahmSūBh.(Rā.) 308.11 (*on* i. 3.21); अनुकृतिरनुकारः। तस्य परमात्मनोऽनुकाराद्धि जीवस्याविर्भूतस्वरूपस्यापहतपाप्मत्वादिगुणकत्वम् VedāntDī. 52.22 (*on* i. 3.21); ŚivārkaMaDī. i. 444.24 (*on* i. 3.21); इह चायमार्थोऽनुकारः इतिनाव(? नानव)च्छेदात् VyaktiVi. 102.21; Kāvyānu. (He.) 196.9; तद्वत् वृत्तिः इहानुकारो विवक्षितः ŚrutaPra. ii. 48.22 (*on* i. 3.21); नदा शोगादयः तेषां साकल्येन विधातुमशक्यत्वात् यावच्छक्यमनुकारः कर्तव्यः CaturCin. i. 297.20; कम्पं वायुवशेन केतुनिवहा श(स)स्यानुकारं च ते संगीतानि च कोकिलारवतुलां चित्ते तु तापं द्विषः। श्रीमांस्तस्याजनि नरपतिः EI. ix. 76.16; यत्तु … मिताक्षराकृता व्याख्यातम्। तच्चिन्त्यम्, — यत्रोच्चैरवद्यभाषणं नास्ति तत्र हूंकारानुकारादावव्याप्तेः DaṇḍaVi. 197.4; अनूकमनुकारः। स च वक्त्रादिसादृश्यात्कल्पनीयः VīraMi.(Lakṣaṇa.) 35.22; रणे बलाकृष्टसुरारिलक्ष्मीवेणीव सा दीव्यति यत्कृपाणी। तद्वान्तजातीकुसुमानुकारं तन्वन्ति यत्कङ्कणमौक्तिकानि YātrāPra. 3.213; झञ्झावातानुकारान् … प्रोज्जिहानः … खड्गः KhaḍgaŚ. 8 [Kośas-AmaK. 2284; Vaija. 93.17; AbhidhāCin. 1463; KośaKaTa. 2.719; KalpaK. 235.10; 241.56]; **Aii** image, appearance, reflection

यमस्य पुरुषैर्घोरैः कृष्यमाणा यतस्ततः सुकृच्छ्रेणानुकारेण नीयमानाश्च ते यथा Viṣṇu-Sm. 43.33; भेदानुकारो ज्ञानस्य VākyaP. 1.87; यस्यैव च प्राचीनप्रत्ययजनितस्य संस्कारस्य तेनैव प्रत्ययेनानुकारः सादृश्यं स एव वासनेति चौरिका मन्यन्ते Kāśi. ii. 180.10 (*on* 5(3). 216); अनुकारमिव महाकविप्रज्ञाविलोकस्य ··· अम्भोनिधिमग्रयम् TilaMañ. 120.13; अभिभवानुकारयोरतेजसि ब्रह्मणि श्रुतिवशादाश्रयणे तु गौरवमिति पूर्ववाद्याशयः VedāntKa. 163.21 (*on* i. 3.22); **AIII** word or expression uttered in imitation (of another) प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः। एकोऽप्यनेकवर्त्मैव समाम्नातः पृथक् पृथक् VākyaP. 1.5; भवति हि वेदानुकारेण पठ्यमानेषु अपौरुषेयत्वाभिमानिनो गौडमीमांसकस्यार्थनिश्चयः NyāyKuA. ii(1). 214.1; व्यस्य ग्यनुकारडाच्च्विकणे ··· उर्यादिधौ सः Mugdha-Bo. 8.21 (81.18); **AIV** following, accordance with यथैक एव सर्वार्थप्रत्ययः प्रविभज्यते। दृश्यभेदानुकारेण वाक्यार्थानुगमस्तथा VākyaP. 2.7; 2.137; बोधरूपतादेरनुकारानुकाराभ्यां तद्भावे व्यभिचाराव्यभिचारतः HetuBiṬ. 94.28; श्रद्धां जनयन् भूयः कुर्वीतैवानुकारमेतस्य KandaCū. i. 4.56; **AV** similar procedure or condition ब्रह्मासनाम्बुरुहमाहितसर्वलोककम्पे विभोः शिशिरकाल इवानुकारे। पर्यन्तबाहुवनधूलनभस्मधूलिनीहारपातदलितच्छदशोभमासीत् HarVi. 2.46 (*but* comm. अनुकारो नृत्तम्); अत एव सामान्यतो दृष्टं तेनैवानुकारेण नियमदर्शनात् Kiraṇā. 306.8; **AVI** representation or portrayal by acting इहानन्त्यान्नियतस्यानुकारो न शक्यः Loc. 69.2 (*on* 2.4); नन्वेवं तावता नियतानुकारो मा भूत्। अनुकारेण तु किमपराद्धम् AbhinBhā. i. 37.1 (*on* 1.107); अनुकारैः स्मृतं नाट्यं तद्द्विधैव व्यवस्थितम् NāṭaLaRaK. 2284; अनुकारे च सर्वेषां दोषाणां नैव दोषता SāhiDa. 447.15; **B** (**anukār–a**) an imitator (of other's style) (one of the five types of vocalists) शिक्षाकारोऽनुकारश्च रसिको रञ्जकस्तथा ··· गीतज्ञाः पञ्चधा गायनं जगुः SaṁgīRa. ii. 154.12 (3.19); SaṁgīMa. i. 4.40; अनुकार इति प्रोक्तः परभङ्ग्यनुकारकः SaṁgīRa. ii. 154.15 (3.21)

**अनुकारक** (**anu-kāraka**) *adj.* who imitates कुपितलक्ष्मीकर्णकुवलयप्रहाराणामिवानुकारकाणि खड्गलताताडनानि AvantiKa. 108.15.

**अनुकारकृति** (**anukāra–kṛti**) *f.* action of portraying विप्रलम्भः। स च ··· संतापजागरकार्श्यप्रलापक्षामनेत्रवचोवक्रतादीनसंचरणानुकारकृतिलेखलेखन° ··· °संदेशाद्यनुभावस्त्रिधा Kāvyānu.(He.) 85.7.

**अनुकारक्रम** (**anukāra–krama**) *m.* [Inst.] by way of portrayal through acting काव्यम् ··· द्विविधम्।··· तत्राद्यं प्रख्यातरामरावणादिनायकसमाश्रयणेन प्रसिद्धविधिनिषेधास्पदचरितवर्णनमात्रात्मकम्। अपरं पुनरनुकारक्रमेण साक्षात् तत्प्रदर्शनात्मकम् VyaktiVi. 20.21.

**अनुकारण** (**anu-kāraṇa**) *n.* similarity, resemblance वृन्दावनेश्वरी नाम्ना राधा धात्रानुकारणात् PadmP. iv. 77.17.

**अनुकारतस्** (**anukāra–tas**) *adv.* **A** through imitation or resemblance तत्रान्योक्तेरनुकृतिश्छाया सापि चतुर्विधा। लोकच्छेकार्भकोक्तीनामेकोक्ते-(?मत्तोक्ते)रनुकारतः AgniP. 341.21; अथ मद्रास्नुषाः क्षामाः प्रियस्यैवानुकारतः। वसाना वाससी श्वेते श्रीशालेरिव कीर्तयः ŚāliC. 7.44; कार्यत्वादपृथक्सिद्धेः प्रवेशादनुकारतः। अस्ति सृष्ट्युपकारादेः सामानाधिकरण्यधीः NyāyPari. 376.1; **B** through the utterance in imitation (of another sound) पञ्चभिः पञ्चमात्रस्तु बोद्धव्योऽसौ मनीषिभिः। स्वरूपं तस्य वक्ष्यामि स्वराणामनुकारतः Mānaso. ii. 13.884.

**अनुकारता** (**anukāra–tā**) *f.* the state of being representation or portrayal by acting अनुकारतया नाट्ये क्रियमाणा नटादिभिः। सामाजिकैस्तु रस्यन्ते यस्मात्तस्माद्रसाः स्मृताः BhāvPra.(Śā.) 37.5(2); 59.7(3)

**अनुकारदर्शन** (**anukāra–darśana**) *n.* perception of similarity or resemblance अनुमानमपि तेजःस्वभावक एवोपपद्यते, समानस्वभावकेष्वनुकारदर्शनात् गच्छन्तमनुगच्छतीतिवत् BrahmSūBh.(Śaṅ.) 181.13 (*on* i. 3.22)

**अनुकारधुरारोहिन्** (**anukāradhurārohin**) *adj.* attaining the most prominent place in representation or portrayal by acting नृत्तमप्यत्र वैचित्र्यकारित्वेन प्रविशत् नाट्यरूपगतं नृत्तं इत्यङ्कुरसूचितनृत्तन्यायेनानुकारधुरारोहि AbhinBhā. i. 209.22 (*on* 5.7)

**अनुकारप्रतिभासमान** (**anukāra–pratibhāsamāna**) *adj.* appearing (falsely) as a similar object न हि बाष्पाद्धूमत्वेन ज्ञातादनुकारप्रतिभासमानादपि लिङ्गात्तदनुकारानुमानं युक्तम् AbhinBhā. i. 274.25 (*on* 6.31)

**अनुकारबुद्ध्यापत्ति** (**anukārabuddhy-āpatti**) *f.* undesired contingency of the notion of being a dramatic representation न हि गमनादौ तद्ध्रुवातालादिरूपेण गीतादि लोकेऽस्ति मङ्गलमात्रत्वादृते। गायनवादनादिष्वपि चानुकारबुद्ध्यापत्तेः AbhinBhā. i. 38.11 (*on* 1.107)

**अनुकारमात्र** (**anukāra–mātra**) *n.* mere repetition यदि ··· श्रुतावौदुम्बर्यं इति प्रयोगः स्यात्तर्हि स छान्दसो भवेत् भाष्ये च तस्यानुकारमात्रम् VedāntKa. 436.21 (*on* iii. 3.26)

**अनुकारमात्रता** (**anukāramātra–tā**) *f.* the state of being that which is mere resemblance बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते YogBh. 90.1 (*on* 2.20)

**अनुकारमात्रोपदेश** (**anukāramātropadeśa**) *m.* instruction with regard to resemblance (in general) नदाः शोणादयः तेषां साकल्येन विधातुमशक्यत्वात् यावच्छक्यमनुकारः कर्तव्यः ··· अनुकारमात्रोपदेशात् शक्यानुकारमात्रमाचरणीयम् CaturCin. i. 297.21.

**अनुकारसाक्षात्कारशङ्कानिराकरण** (**anukārasākṣātkāraśaṅkā–nirākaraṇa**) *n.* removal of the doubt about the perception of the imitation (of the instrumental music by the actress in *cārī* movements) उपोहनसमाप्तौ नर्तक्याः प्रवेशः। तत्र भाण्डवाद्यं पुष्करवाद्यं तत्र विशुद्धकरणजातौ। सा च मध्यस्त्रीणां लक्ष्यते। तत एवात्रानुकारसाक्षात्कारशङ्कानिराकरणम् AbhinBhā. i. 185.10 (*on* 4.273)

**अनुकारात्मकत्व** (**anukārātmaka–tva**) *n.* the state of being that which has the nature of representation by acting यथा च गात्रविक्षेपार्थत्वे समानेऽप्यनुकारात्मकत्वेन नृत्तादन्यन्नृत्यम् Avalo. 3.9 (*on* 1.9); 3.24 (*on* 1.11)

**अनुकारानुकारिणी** (**anukārānukāriṇī**) *adj.* (*f.*) resembling the image or appearance त्रयाणामपि देवानामनुकारानुकारिणीम्।··· निबोधत (कात्यायनीम्) MatsyaP. 260.56; CaturCin. ii(1). 88.7.

**अनुकारानुगम** (**anukārānugama**) *m.* comprehension of expression uttered in imitation of somthing else (i. e. comprehension of something as a quotation) भाक्तो यो ध्वनिस्तमाहुरन्य इति वाचामविषये स्थितं यत तत्त्वं तदीयं तत् केचिदूचुरिति प्रतीतौ ध्वनेर्भाक्तत्वोक्तिः अन्येषां केषांचिच्च वाचामविषये स्थितत्वं यत् तदीयस्य तत्त्वस्य तदुक्तिर्नानुकृता स्याद् इतिना व्यवच्छेदाभावाद् इति वाच्यावचन दोषः। सामर्थ्यादुक्तेरनुकारानुगमे वा पूर्वत्रेति शब्दस्य पौनरुक्त्यप्रसङ्गः VyaktiVi. 111.12.

**अनुकारानुमान** (**anukārānumāna**) *n.* inference of resemblance न हि बाष्पाद्धूमत्वेन ज्ञातादनुकारप्रतिभासमानादपि लिङ्गात्तदनुकारानुमानं युक्तम् AbhinBhā. i. 274.25 (*on* 6.31)

**अनुकाराभिनेय** (**anukārābhineya**) *adj.* (that which is) to be enacted by imitation अस्मान्नाटकादनुकाराभिनेयलक्षणात् विनिस्सृतानि बहिर्भूतानि एकपात्रहार्याणि AbhinBhā. iii. 66.11 (*on* 19.117)

**अनुकारास्पद** (**anukāraspada**) *n.* object of imitation तमागतमृषिं दृष्ट्वा साम्बो रूपेण गर्वितः।··· अनुकारास्पदं चक्रे दर्शने गमने तथा BhaviP. 125B.8 (i. 72.17)

**अनुकारित** (**anu-kārita**) *adj.* **i** caused to be practised कृतोऽनुकारितो धर्मो मोदितः सन्मतो बुधैः BṛKathāK. 73.274; **ii** made to follow वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनानुकारिताः BhāgP. vii. 8.55.

**अनुकारित्व** (**anukāri–tva**) *n.* the state of being that which adopts a similar form अस्य प्रपञ्चस्यानुकारित्वेन वा स्वीक्रियमाणत्वे सृष्टिप्रलययोर्विद्यमानत्वादनित्यसंयोगः प्राप्नोति AṇuBh. 90.21 (*on* i. 3.30)

**अनुकारिन्** (**anukār–in**) *adj.* [*f.* -iṇī] **1** who or which looks like or resembles न्यसेत् परिधिमन्यश्चेदुदगग्रं स पूर्वतः। यथोक्तवस्तु(स्त्व)संपत्तौ ग्राह्यं तदनुकारि यत् GobhiSm. 2.80; तौ दंपती। सरसीष्वरविन्दानाम् ··· आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् RaghuVa. 1.43; अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू Śāk. 1.20; क्वेदानीमुपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विनोदयामि Śāk. 6.9(4); कथमेकान्वयोऽयमस्माकम्। अतः खलु संभाव्यते। (v. l. अतः खलु मदनुकारिणमेनमत्रभवती मन्यते Kale Ed.) Śāk. 7.19(9); ईषत्सहासममलं परिपूर्णचन्द्रबिम्बानुकारि ··· वक्त्रम् MārkP. 84.11; कारयेत् पृथिवीं हैमीं जम्बुद्वीपानुकारिणीम् MatsyaP. 284.2; अहो वञ्चितोऽहं राजपुत्रानुकारिणानेन कुलालेन PañcT.(Kos.) 4.39(21) (218.14); तस्य च राज्ञः कलिकालभयपुञ्जीभूतकृतयुगानुकारिणी ··· विदिशाभिधाना नगरी राजधान्यासीत् Kād. 6.19; सः ··· निर्दयश्रमच्छिन्नहारविगलितमुक्ताफलप्रकरानुकारिणीभिः ··· स्वेदजलकणिकासंततिभिरलंक्रियमाणमूर्तिः ··· स्नानभूमिमगच्छत् Kād. 15.8; उदयसमुद्रगाधदर्शनोत्क्षिप्तपुरदेवताभुजलतानुकारिभिः ··· मणितोरणैः समुल्लसितं नगरम् AvantiKa. 19.13; ऐन्द्रमम्बु सुपात्रस्थमविपन्नं सदा पिबेत्। तदभावे च भूयिष्ठमन्तरिक्षानुकारि यत् AṣṭāHṛ. i. 5.5; निःशेषं नैशमम्भः प्रसभमपनुदन्नश्रुलेशानुकारि ··· प्राक्तनोऽर्चिःप्रचारः SūryaŚ. 32; प्रहतपदढक्[क्*]गंभीरध्वानेन घनाघनगर्ज्जनानुकारिणा EI. iv. 343.50; मिथ्याबुद्धिश्च सर्वैव प्रधानार्थानुकारिणी TattvSaṁ. 660; श्रीमदमोघवर्षनृपतिः ···। तेनाकारि नगानुकारि EI. xxiii. 260.13; दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि AmaŚ. 59; कियती वयोऽवस्था, किमनुकारिणी च शरीराकृतिरस्याः TilaMañ. 271.14; दरजरच्चिकुरनिकुरम्बानुकारिणि तिमिरनिकरे Yaśas-

Cam. ii. 8. 1; ii. 43. 5; देवाः …। प्रसन्नवदना नित्यं च …। प्रभा च तेषां कर्तव्या मूर्ध्नि मूर्ध्नः प्रमाणतः। मण्डलाभा महाराज देवतातोऽनुकारिणी VisnuDhaP. iii. 38.12; नखविलेखनम्।… यत्कस्यचिदनुकारि तद्रूपवद् दृष्टप्रकारकमाच्छुरितकादि JayaMa. 117. 6 (*on* 2.4); ओं स्वस्त्यमर [ Read स्वस्ति। अमर ]पुरानुकारिणः … कलिङ्गनगरवासकान् EI. iii. 223.1; iii. 18. 1; xviii. 312.1; xxiii. 76.1; क्रीडाक्रो[ ड ]াকृतेर्विष्णोर्दंष्ट्रादंडो जयत्यसौ। धात्री [ हे ]माद्रिकलशा यत्र च्छत्रानुकारिणी EI. iii. 97. 6; वाचां न किंचिदनुकारि मृगायताक्ष्याः SaduktiKa. 117.26; धवलस्य सुतेनापि येन कृष्णानुकारिणा। श्रीगूर्ज्जरधराराज्यमेतन्निष्कंटकीकृतम् EI. i. 25. 5; KīrtiKau. 2.63; अनुकारिणीम्, सदृशीमित्यर्थः CaturCin. i. 294. 12; मृणालव्यालवलया वेणीबन्धकपर्दिनी। हा( ? ह )रानुकारिणी पातु लीलया पार्वती जगत् SāhiDa. 131. 15; ग्रामो दत्तो वित्तोपकारिणा रवितनयानुकारिणा EI. i. 366. 24; iv. 268.71; **2** who imitates चरणैः सनूपुरैः। पदे पदे हंसरुतानुकारिभिर्जनस्य चित्तं क्रियते समन्मथम् ṚtuSaṁ. 1. 5; शेषाङ्गै( ? हे )रनुकारिणी हरशिरोवल्लीदलाकारिणी … विजयते गंगा मनोहारिणी GaṅgāA. 5; **3** who or which follows or conforms to अयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः RaghuVa. 3.50; अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि Śāk. 2.17; श्रीमहाराजभीमसेनः तस्य पुत्रः त[ च्चरि ]तानुकारी … श्रीमहाराजदयितवर्म्मा EI. ix. 344.4; विधिसमाधिवु( बु )द्धेश्वरः …। नदोक्षितधरातले गुरुजनानुकारी तपः चरंजगति [ Read चरञ्जगति ]। विस्मयं व्यधित वा( बा )लभावेऽपि यः EI. xxi. 150. 15; धूमाद् गाढमलीमसाच्छुचिपयः सूते घनस्योद्गमः … जन्मावध्यनुकारिणो न महतां सत्यं स्वभावाः क्वचित् RājTa.(Ka.) 4. 41; पद्मपत्राम्बुनिर्लेपपुरुषस्यानुकारिणी। प्रकृतिस्ते महत्तत्त्वम् Vidvanmo. 2. 16; **4** who acts in accordance with (prescription, order etc.) सदाचाराय शुद्धाय दरिद्रायानुकारिणे। गां दत्त्वा फलमाप्नोति SkandP. vii(4).13.28; कुलक्रमसमायातास्तुष्टेष्टाश्चानुकारिणः। कृत्तकेशनखा दान्ताः पराभेद्या नृपे रताः।… सूदाः कार्या महीभुजा Mānaso. ii. 2. 135; **5** appearing as suitable, matching in appearance एष चासदृशो रूपे भार्यां स्वसदृशीं विना। नेच्छत्युद्वाहमेका च त्वत्सुतास्यानुकारिणी KathāSaSāg. xii. 34.102; **6** who represents or portrays by acting सुखदुःखादिभिर्भावैरनुकारिण्यवस्थितैः SāhiSā. 5. 6.

**अनुकारिमात्रता** (anukārimātra-tā) *f.* the state of being that which has the form of reflection only चितिशक्तिरपरिणामिनी … तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिः Sāṁkhya-PraBh. 49. 9 (*on* 1. 99) [better read अनुकारमात्रता YogBh. 90.1 (*on* 2.20)]

**अनुकार्य** (anu-kārya) *n.* **1** what is to be done later on यः पश्चात् पूर्वकार्याणि कुर्यादैश्वर्यमास्थितः। पूर्वं चोत्तर (v. l. [ ए ]वानु )कार्याणि न स वेद नयानयौ Rāmā. vi. 51. 5; **2** thing to which something else has resemblance अनुकर्ता प्रजापतिवाक्ये निर्दिष्टोऽनुकार्यं ब्रह्म दहराकाशः BrahmSū-Bh.(Rā.) 308.18 (*on* i. 3.21); VedāntDī. 53.1 (*on* i. 3. 21); दहराधिकरणगुणसूत्रस्य दहराकाशो जीवो न भवति जीवानुकार्यत्वात् अनुकर्त्रनुकार्ययोर्भेदावश्यंभावात् ŚivārkaMaDī. i. 10.21 (*on* i. 1.0); प्रजापतिनिगदितस्य दहरानुकारः। अनुकार्यानुकर्त्रोर्मिथोऽन्यत्वं तु सुसिद्धम् GoviBh. 49.8 (*on* i. 3.22); *m.* character to be portrayed or represented by acting रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्तनात्। नानुकार्यस्य वृत्तत्वात् DaśRū. 4. 38; BhāvPra.(Śā.) 152.19(6); स्थायी भवत्वनुपचितः। स चोभयोरपि।… अनुकार्येऽनुकर्तर्यपि चानुसंधानबलात् AbhinBhā. i. 272. 12 (*on* 6.31(3)); Kāvyānu.(He.) 68. 18; ननु ते विभावादयोऽनुकार्ये पारमार्थिकाः। इह त्वनुकर्तरि न तथा AbhinBhā. i. 274. 17 (*on* 6.31(3)); i. 292.12 (*on* 6. 34); नटे च सत्त्वम्, अनुकार्ये च भाव इति किं केन संगच्छते AbhinBhā. iii. 151. 26 (*on* 22. 3); नाट्ये तु …। प्रवाहधर्मिण्यां चित्तवृत्तौ चित्तवृत्तेर्वृत्त्यन्तरेण कः परिपोषार्थः। विस्मयशोकक्रोधादेश्च क्रमेण तावन्न परिपोष इति नानुकार्यो( ? र्ये ) रसः Loc. 68. 23 (*on* 2.4); 69. 6 (*on* 2.4); रामादावनुकार्ये तद्रूपतानुसंधानान्नर्तकेऽपि प्रतीयमानो रसः KāvyPra. 87. 4; रसः …। रामादावनुकार्ये तु नटैर्व्यङ्ग्यो भविष्यति BhāvPra. (Śā.) 40.21(2); 50.14(2); रसस्य वर्तमानत्वान्नानुकार्यस्य संभवः। अनुकार्यस्य रामादेः कालातिक्रमदर्शनात् BhāvPra.(Śā.) 153.5(6); 264. 7(9); मालत्यादिशब्देभ्यो योषिन्मात्रप्रतीतौ च स्मृत्यारूढेन तत्तद्योषिद्विशेषेणानुकार्येण सामाजिकाश्रयत्वमपि न विरुद्धम् PratāYaBhū. 287. 1; 294. 4; नटे रससंभवः …। यदि विभावेन, तत्रापि किमनुकार्यमालविकादिनानुकार्येण स्वकान्तादिना वा RasāSu. 173. 14 (2.166); अनुकार्यस्य रत्यादेस्तद्बोधो न रसो भवेत् SāhiDa. 89.8; *adj.* [*f.* -ā] **1** to be imitated परभृतलावकहंसकपारावततुरगहृदयनिःस्वनितम्। अनुकार्यमुचितकाले कलकण्ठि रुतैस्त्वया रसतः KuṭṭaMa. 157; अनुकार्यं न तु नार्या यत्प्रेरणकर्म तत्परोऽक्षे सा। अनुकुर्वती विजह्यान् माधुर्यं सौकुमार्यं च Kāvyālaṅ.(Ru.) 13. 4; यतश्चेदं नानुकरणं ततो यत् कैश्चिचोदितं तदनवकाशम् — 'न च गीतवाद्ययुक्तः सर्वावस्थासु कश्चिदनुकार्यः' इति AbhinBhā. i. 38. 8 (*on* 1. 107); नटः …। रङ्गे रामाद्यवस्थाभिरनुकार्याभिरञ्जसा।… प्रेक्षकान् रसयिष्यति BhāvPra. (Śā.) 194.12(7); **2** to be practised or performed आहारनीहारविहारयोगाः सुसंवृता धर्मविदानुकार्याः SkandP. i(2).41.129; जृम्भितमिव सममनुकार्यम् JayaMa. 137.11 (*on* 2.6); **3A** (word or expression) to be imitated अनुकार्यस्य दुष्टत्वादनुकरणेऽपि दुष्टत्वं मन्यते Pradī. i. 105A.2 (*on* ŚivSū.(Gr.) 2); i. 105B.4 (*on* ŚivSū.(Gr.) 2); अनित्यः शब्दः कचटतपानां गजडदबत्वात् … एतदपि सर्वथार्थशून्यत्वान्निग्रहाय कल्पेत …। तत्राद्यविकल्पोऽयुक्तः … वर्णक्रमनिर्देशस्याप्यनुकार्येणार्थेनार्थवत्त्वोपपत्तेः PramāMī. 68.8 (*on* ii. 1.34); धातुत्वं तावदर्थाश्रयम् …इह वा विवक्षितार्थं रूपमात्रमनुकृतमिति। अनुकार्यस्यापि धातुत्वं नास्ति PadMañ. *on* KāśiVṛ. *on* P. i. 3.19; PariVṛ.(Sī.) 37.12; अनुकार्यः प्रातिपदिकशक्यः VaiyāBhū. 126. 2 (*on* 26); 130. 4 (*on* 26); प्लुते कृतेऽपि … तद्वत् प्रगृह्यत्वमनुकार्ये सुलभम् LaŚabdeŚe. i. 116. 2; i. 264. 7; **3B** (meaning) which is to be represented द्विविधो हि शब्दानुकारः शाब्दत्वार्थत्वभेदात्।… अर्थावच्छेदाभावादार्थः … (हिरण्यपूर्वं कशिपुं प्रचक्षते) इह चायमार्थोऽनुकारः …। केवलं यत् तस्याभिधानमनुकार्यं तन्नानुकृतम् VyaktiVi. 102.21; Kāvyānu.(He.) 196.10.

**अनुकार्यगत** (anukārya-gata) *adj.* **1** belonging to (a word) which is to be imitated विपराभ्यां जेरित्येवमादौ तु धातुत्वमनुकार्यगतं सदप्यविवक्षितत्वाद् जिरूपसामान्यानुकरणं द्रष्टव्यम् KāśiVṛ. *on* viii. 2.46; Prasā. ii. 549.17; **2** present in a character to be portrayed किमिदमनुकार्य( र्यगतं ? ) कवेः शिक्षार्थमुपदिश्यते, तथानुकर्तृगतं नटस्य (वा) AbhinBhā. iii. 151.23 (*on* 22. 3); पूर्वावस्थायां यः स्थायी स एव व्यभिचारिसंपातादिना प्राप्तपरिपोषोऽनुकार्यगत एव रसः Loc. 68.20 (*on* 2.4); SāhiDa. 89.6.

**अनुकार्यत्व** (anukārya-tva) *n.* **I** the state of being that which is to be imitated 'न च गीतवाद्ययुक्तः सर्वावस्थासु कश्चिदनुकार्यः' इति न ह्यनुकार्यत्वेन गीतादय इत्युक्तम् AbhinBhā. i. 38. 8 (*on* 1.107); यदाह — 'या … प्रियतमस्य संरक्ता।… प्रमदा सैवानुकार्यात्र' एतेनोत्साहगातव्यानामर्थेऽनुकार्यत्वं दर्शितम् AbhinBhā. i. 171.7 (*on* 4.261); अनुकार्यत्वानुकरणत्व° … °रूपविरुद्धधर्माध्यासादभेदपक्ष एवानयोर्न युक्तः VaiyāBhū. 133.2 (*on* 27); **II** the state of being that to which something else has resemblance प्रकाश्यस्यानुकार्यत्वं प्रकाशकत्वं च न भवति VedāntKau. 95.2 (*on* i. 3.22)

**अनुकार्यधातु** (anukārya-dhātu) *m.* verbal base to be imitated न चैवं धातूपसर्गादिगणपठितानामनुकरणानामनुकार्यधात्वाद्यर्थवत्त्वात् प्रातिपदिकत्वापत्तौ विभक्तिश्रवणापत्तिः VaiyāBhū. 131.20 (*on* 27)

**अनुकार्यध्वनि** (anukārya-dhvani) *m.* onomatopoeic sound to be imitated (by articulation) पटदिति कुर्वित्याद्यनुकरणस्थलेऽनुकार्यध्वनीनामनुकरणाद् भेदो ध्वनिमयत्ववर्णमयत्वादिविरुद्धधर्मवत्त्वसिद्धः VaiyāBhū. 126.3 (*on* 26)

**अनुकार्यप्रतिपत्ति** (anukārya-pratipatti) *f.* knowledge of what is to be imitated यद्यप्यभिधानव्यापारो नास्ति तथापि तदानीमुच्चारितं रूपं सादृश्याद् अनुकार्यप्रतिपत्तिपरम् PadMañ. *on* KāśiVṛ. *on* P. i. 1.16.

**अनुकार्यप्रतीति** (anukārya-pratīti) *f.* understanding of what is to be imitated यद्यनर्थकः, कथं तर्हि प्रयुज्यते। प्रयोजनवत्त्वात्, प्रयोजनमनुकार्यप्रतीतिः PadMañ. *on* KāśiVṛ. *on* P. i. 1.16; गामानयेत्याहेत्यादावनुकरणेनानुकार्यप्रतीतावपि न ततोऽर्थबोधः VaiyāSiMañ. 150.2.

**अनुकार्यशब्द** (anukārya-śabda) *m.* word which is to be imitated कुमार्या प्रयुक्तस्य पुरुषविशेषोऽर्थः, अनुकरणस्य तु कुमार्या प्रयुक्तमनुकार्यशब्दरूपम् PadMañ. *on* KāśiVṛ. *on* ŚivSū.(Gr.) 2 (i.28.17); न चानुकरणशब्दस्यानुकार्यशब्दात् कोऽपि भेदोऽवधार्यते PariVṛ.(Sī.) 38.8; अनुकार्यशब्दानां स्थानित्वादेशत्वबोधनाय षष्ठी स्थानेयोगेत्याद्यनुरोधात् … प्रातिपदिकत्वविभक्त्यादिकं सौत्रम् VaiyāBhū. 132. 10 (*on* 27)

**अनुकार्यसमर्पक** (anukārya-samarpaka) *adj.* conveying the *anukārya* (i.e. Brahman to which *jīva* has resemblance) दहरवाक्यमेवानुकार्यसमर्पकं पर्यवस्येत् ŚivārkaMaDī. i.12. 1 (*on* i. 1.1)

**अनुकार्यस्वरूप** (anukārya-svarūpa) *n.* form of that (word) which is to be imitated अस्यवामादयोऽनुकरणशब्दाः अनुकार्यस्वरूपमात्रवाचिनश्चेति तेषामवयवभूतानि पदानि न सन्ति Prasā. i. 880.10; (एतत्तदोः) अनुकार्यस्वरूपभङ्गभिया कोशे इवैकशेषाभावः LaŚabdeŚe. i. 157.17; i. 264.13.

**अनुकार्यानुकरण** (anukāryānukaraṇa) *n.* what is to be imitated and its imitation 'पद्मसंमीलनाच्चात्र सूचितो निशि संगमः।…' अत्रानुकार्यानुकरणेऽपि भूमिकान्तरिते एव भवतः SaraKaṇṭhā. 379. 22; अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादर्थवत्त्वाभावाद्विभक्तिर्नोत्पद्यते Prasā. i. 81.19; LaŚabdeŚe. i. 45.3; भाषाशब्दानामप्यनुकरणे प्रतीयमानत्वात् … शक्तिरेव वाच्या। तथा च शब्दोऽपि यद्यनुकार्यानुकरणयोर्भेदेन विवक्षा तदा तथा VaiyāBhū. 126.2 (*on* 26)

**अनुकार्यानुकरणभाव** (anukāryānukaraṇa-bhāva) *m.* relation between that which is to be imitated and its imitation अभिमन्युः। सोऽर्जुन-

संपत्तिः क्व चामी समस्ताभिषेकोपकरणपाणयो महामुनयः NalaCam. 4.26(5)

**अनुकूलकृतिमत्त्व** (**anukūlakṛtimat-tva**) *n.* the state of being possessed of conscious effort which is favourable (to the effect) यत्रानुकूलकृतिमत्त्वं तत्र कृतिजन्यत्वम् VyutpaVā. 127.13.

**अनुकूलकृतिसमवायित्व** (**anukūlakṛtisamavāyi-tva**) *n.* the state of being that which inheres conscious effort conducive (to the effect) अनुकूलकृतिसमवायित्वं कर्तृत्वं न तु जनकत्वे सति गौरवात् TattvCin. ii(2). 29.6.

**अनुकूलकेलि** (**anukūla-keli**) *adj.* having pleasant or free sport (सुतः) व्यञ्जितचापलो व्यलासीत्। अधिसानु यथानुकूलकेलिः कनकक्षोणिभृतः करीन्द्रशावः Acyutarā. 2.43.

**अनुकूलकोमलरया** (**anukūlakomala-rayā**) *adj.* (*f.*) whose speed (i. e. current) is gentle and pleasant कालिन्दीमनुकूलकोमलरयाम् … जातानुतापः स्मरन्नस्तु द्वारवतीपतिस्त्रिभुवनामोदाय दामोदरः SaduktiKa. 45.2.

**अनुकूलक्रियाप्रवृत्ति** (**anukūlakriyā-pravṛtti**) *f.* disposition towards an activity which is conducive (to something) श्रमणानामात्मविशुद्धिहेतौ प्रकृते वस्तुनि तदनुकूलक्रियाप्रवृत्त्या गुणातिशयाधानमप्रतिषिद्धम् TattvPradī.(A.) 353.7 (*on* 3.61)

**अनुकूलक्रियायुक्त** (**anukūlakriyā-yukta**) *adj.* engaged in favourable activities अनुकूलक्रियायुक्तमप्रमत्तं विचक्षणम्।… इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत् KulārT. 13.28.

**अनुकूलखेट** (**anukūla-kheṭa**) *m., n.* favourable wandering स बाणबाणत्रिकुवर्षे१३५५माघे जातः पद्माभ्यामनुकूलखेटैः।… व्रतमाप्य भेजे … पदप्रतिष्ठाम् Gurvā. 273.

**अनुकूलग्रहाश्रय** (**anukūlagrahāśraya**) *m.* support of auspicious planets शुभायां लग्नवेलायामनुकूलग्रहाश्रयात्।… अचीकरद्भुजारोपं यथाविधि युधिष्ठिरः PāṇḍaC. 6.108.

**अनुकूलज** (**anukūlaj-a**) *m.* what is grown along the bank धर्म एतान्संरुजति यथा नद्यनुकूलजान् MahāBhā. v. 209*(3); v. 93.49.

**अनुकूलजनोपहित** (**anukūlajanopahita**) *adj.* served by devoted people आसनस्थितेन हस्तेन प्राङ्मुखः सुमनाः शुचिभक्ताक्षुधितानुकूलजनोपहितं हितमन्नमश्नीयात् AṣṭāSaṁ. i. 65.11 (1.10)

**अनुकूलजुष्** (**anukūla-juṣ**) *adj.* engaged in favourable (activities) अनुकूलजुषा सोऽथ वीरः सारथिना युतः। अंशुमानरुणेनेव नीयमानरथो बभौ RāghPāṇ.(Ka.) 12.10.

**अनुकूलज्ञानाश्रयत्व** (**anukūlajñānāśraya-tva**) *n.* the state of being the substratum of favourable knowledge अनुकूलज्ञानाश्रयत्वमेव ह्यानन्दित्वम् ŚrutaPra. iA. 202.11 (*on* i.1.1)

**अनुकूलतम** (**anukūla-tama**) *adj.* most favourable (हनूमतः) सूनुभावसुलभादिव हार्दात्तस्य वायुरनुकूलतमोऽभूत् RāmC. 16.25; अनुकूलतमे समीरणे सुतरां दीप्यत एव पावकः Rāgh. 3.60.

**अनुकूलतर** (**anukūla-tara**) *adj.* [*f.* -ā] I very faithful अव्याधिगात्रमनुकूलतरं कलत्रं वेश्म प्रसिद्धविभवम् … मातुः कटाक्षपरिणामविभूतयस्ते ŚatTrayī. 388; II greatly supporting यावज्जीवादिश्रुतयः अनुकूलतराः स्युः। न, कर्मानेकत्वात् TaiUBh. 222.15 (*on* 1.11); विभक्ते संस्थिते इति कात्यायनवचनमप्युक्तार्थेऽनुकूलतरम् BālamBha. ii. 213.23 (*on* 2.135-136)

**अनुकूलतर्क** (**anukūla-tarka**) *m.* supporting hypothetical argument यस्यानुकूलतर्कोऽस्ति स एव स्यात् प्रयोजकः TārkiRa. 232.1; अनुमानस्यानुकूलतर्कमाह VedāntKa. 236.23 (*on* ii. 1.14); स्वपरपक्षसाधारण्यं हि महाविद्यानां स्वभावः तत्रानुकूलतर्कसदसद्भावाभ्यामेकत्रार्थसिद्धिरितरत्रार्थासिद्धिः ŚatDū. 67.13; प्रकृते चानुकूलतर्कविशेषदर्शनसहकृतस्य व्यतिरेकिभावेन साधकत्वम् TattvCin. i. 756.5; अनुकूलतर्केण हेतोरुपाधिर्निरसनीयः SarvaDaKau. 42.16; 49.24; वह्निना धूमे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वादेरिव वक्ष्यमाणानुकूलतर्कैस्साध्यव्यापकत्वनिश्चयात् Nyāyāmṛ. 90B.6; 156A.5; 583B.12; न … चतुर्थानुमानसाध्ये स्वानपेक्षत्वस्य च व्यापकविशेषणस्य वैशिष्ट्येन तत्तन्निरूपिततया व्याप्तिग्रहे कश्चिदनुकूलतर्कोऽस्ति ŚivārkaMaDī. i. 157.17 (*on* i. 1.3); उक्तानुमानेऽनुकूलतर्कं प्रदर्शयति सूत्राभ्याम् SāṁkhyaPraBh. 63.25 (*on* 1.143); 31.36 (*on* 1.62); 123.3 (*on* 5.29); प्रकृते अनुकूलतर्काणां वक्ष्यमाणत्वान्न दोष इति भावः GuruCandr. i. 22.23; i. 501.12; सर्पज्ञानत्वादेर्जन्यतावच्छेदकत्वे गौरवात् तदन्यदखण्डवैलक्षण्यं विना जन्यताया अवच्छिन्नत्वानुपपत्तिरनुकूलतर्कः LaCandr. 448.28; अनुकूलतर्काणामुक्तत्वेन पक्षीयव्यभिचारसंभवस्य संदिग्धोपाधिकार्यस्याप्रयोजकत्वात् LaCandr. 745.20; साध्याभावानुवादेन दोषः साध्ये गुणोऽपि वा। यत्रानुकूलतर्कोऽसौ साध्यसिद्धावनुग्रहात् MānaMe. 39.2; सहानुपलभ्यमानयोर्घटपटयोर्भेददर्शनमनुकूलतर्कः BhāṭṭCin. i. 20.5 (*on* i. 1.4)

**अनुकूलतर्कबल** (**anukūlatarka-bala**) *n.* strength of supporting hypothetical argument अनुकूलतर्कबललब्धप्रतिबन्धस्य क्षणिकत्वानुमानस्य बलवत्त्वात् प्रत्यभिज्ञाप्रत्यनुमाने तद्बाधिते न स्थैर्यसाधनायालम् NyāySu. (Ja.) 396B.2 (*on* ii. 2.7)

**अनुकूलतर्कबलाबल** (**anukūlatarka-balābala**) *n.* strength or weakness of supporting hypothetical argument अभीष्टसिद्धावनुकूलतर्कबलाबलं चात्र परीक्ष्य यत्नात्। प्रवक्ष्यते दोषगणः परेषाम् AdvaiSi. 422.15.

**अनुकूलतर्कमात्र** (**anukūla-tarkamātra**) *n.* mere supporting hypothetical argument किं च दृश्यत्वान्यथानुपपत्त्या मिथ्यात्वमित्यर्थापत्तिर्विवक्षिता, किं वा सत्यत्वे दृश्यत्वं न स्यादित्यनुकूलतर्कमात्रम् Nyāyāmṛ. 200A.8; AdvaiSi. 470.5.

**अनुकूलतर्कलाभ** (**anukūlatarka-lābha**) *m.* finding of a supporting hypothetical argument ब्रह्म यदि तादृशप्रकारवत् न स्यात्, तदा किंचित्प्रकारकस्य भ्रमनिवर्तकज्ञानस्य विशेष्यं न स्यादित्यनुकूलतर्कलाभाय प्रकारानुसरणम् LaCandr. 718.28.

**अनुकूलतर्कवत्** (**anukūlatarka-va(n)t**) *adj.* based on a supporting hypothetical argument अनुकूलतर्कवत एव हेतोः प्रयोजकत्वात् तदभावेऽन्यथासिद्धिः स्यात् TārkiRa. 232.4; अतथाभूतबहुलिङ्गेभ्योऽनुकूलतर्कवदनुमानस्य तद्रहितबह्वनुमानेभ्य इव बलवत्त्वादित्याशङ्क्य प्रतिपादयति ŚivārkaMaDī. i. 251.28 (*on* i. 1.21)

**अनुकूलतर्कविरह** (**anukūlatarka-viraha**) *m.* absence of a supporting hypothetical argument ईश्वरस्याप्यपरजात्याधारत्वसाधनेन प्रतिकूलतर्कपराहतत्वादनुकूलतर्कविरहाच्चाप्रयोजकतान्यतरासिद्धिः PrakaVi. 665.6.

**अनुकूलतर्कशालिन्** (**anukūlatarkaśāl-in**) *adj.* endowed with a supporting hypothetical argument अत्र न स्वरूपैक्यादिकं विवक्षितम्।… जीवात्मपरमात्मनोः … अनुकूलतर्कशालिनः … विशिष्टाद्वैतस्य विवक्षितत्वात् PāñcRāRa. 85.15.

**अनुकूलतर्कशून्य** (**anukūlatarka-śūnya**) *adj.* bereft of a supporting hypothetical argument प्रामाण्यं परतो ज्ञायते। अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवदिति। तदप्युक्तप्रतिकूलतर्कपराहतमनुकूलतर्कशून्यं च TattvPrakā. 81B.9 (*on* ii. 2.4)

**अनुकूलतर्कसद्भाव** (**anukūlatarka-sadbhāva**) *m.* presence of a supporting hypothetical argument यदीदं जलान्यरूपवत्त्वे सति तैजसं न स्यात् पार्थिवं स्यात् यदि च पार्थिवं स्यादत्यन्ताग्निसंयोगेनोच्छिद्यमानद्रवत्वाधिकरणं स्यादित्यनुकूलतर्कसद्भावेन … तैजसत्वसाधकस्याधिकबलत्वात् TattvCin. i. 756.1; सिद्धान्तिहेतोश्चानुकूलतर्कसद्भावेन साध्यव्याप्यत्वे निश्चिते सत्प्रतिपक्षाप्रयोजकत्वादीनामनवकाशात् AdvaiSi. 566.7; अपञ्चीकृतपृथिव्याद्यवस्थाविशेषरूपाणामिन्द्रियाणां पञ्चीकृतवाय्ववस्थाविशेषरूपप्राणवृत्तित्वं न संभवतीत्यनुकूलतर्कसद्भावात् ŚivārkaMaDī. ii. 182.17 (*on* ii. 4.15)

**अनुकूलतर्कसनाथ** (**anukūlatarka-sanātha**) *adj.* strengthened by a supporting hypothetical argument अनुकूलतर्कसनाथेनोपाधिव्यभिचारानुपलम्भसहकृतेन सहभावग्राहकेण प्रमाणेन सिद्धामृत्त्वादीनामवक्तृत्वादिना व्याप्तिः NyāySu.(Ja.) 279A.4 (*on* ii. 1.3); तत्प्रेप्सादिकं च प्रेक्षावत्त्वादिना विपक्षेऽधिष्ठानत्वसंदिग्धत्वादिकं न स्यादित्याद्यनुकूलतर्कसनाथानुमानानां च सत्त्वात् Nyāyāmṛ. 489B.5; 532B.8.

**अनुकूलतर्कसंभव** (**anukūlatarka-sambhava**) *m.* possibility of a supporting hypothetical argument नापि सोपाधिकत्वशङ्काकलङ्काङ्कुरः संभवी। अनुकूलतर्कसंभवात् SarvaDaSaṁ. 11.179.

**अनुकूलतर्कसाचिव्य** (**anukūlatarka-sācivya**) *n.* assistance of a supporting hypothetical argument अनुकूलतर्कसाचिव्यमेव हि अनुमाने बलम् AdvaiSi. 370.3.

**अनुकूलतर्कहीन** (**anukūlatarka-hīna**) *adj.* bereft of a supporting hypothetical argument अनुकूलतर्कहीनाश्च मिथ्यात्वहेतवः Nyāyāmṛ. 187B.8; 234A.6.

**अनुकूलतर्का** (**anukūla-tarkā**) *adj.* (*f.*) which conforms the reasoning favourably आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यादिश्रुतिस्मृतयोऽनुकूलतर्काः SāṁkhyaPraBh. 36.1 (*on* 1.66)

**अनुकूलतर्कादर्शन** (**anukūlatarkādarśana**) *n.* non-appearance of a supporting hypothetical argument यत्र संबन्धस्तत्रावश्यं युतसिद्धिरिति विषमव्याप्तिकल्पनेऽपि मानाभावात्, अनुकूलतर्कादर्शनात् AdvaiSi. 464.2.

**अनुकूलतर्काप्रसर** (**anukūlatarkāprasara**) *m.* non-reach of a supporting hypothetical argument यद्व्यतिरेकस्य साध्यव्यतिरेकसाधकत्वं तस्यैव साध्यव्यापकत्वम्, इतरांशे अनुकूलतर्काप्रसरात् AdvaiSi. 329.3.

**अनुकूलतर्काभाव** (**anukūlatarkābhāva**) *m.* absence of a support-

ing hypothetical argument (त्रसरेणोः) तदवयवानां त्ववयवकल्पनानवकाशः प्रमाणाभावाद् बाधकाच्च । द्रव्यारम्भकत्वमूर्तत्वादीनामनुकूलतर्काभावात् Kiraṇā. 53.5; 229.12; अतिप्रसङ्गलक्षणप्रतिकूलतर्कसद्भावादनुकूलतर्काभावाच्चाप्रयोजकत्वम् PrakaVi. 286.15; अयं घटः एतद्व्यतिरिक्तानित्येतरमूर्तान्योऽन्याभावात् [भाववान्], प्रमेयत्वात्, पटवदिति तत्राप्रसिद्धविशेषणत्वम्, पटस्य वा स्वतोऽन्योऽन्याभाववत्त्वप्रसङ्गः, अनुकूलतर्काभावादप्रयोजकत्वं च PrakaVi. 515.15; 573.18; उपाधिस्तत्र शङ्कितोऽनुकूलतर्काभावादिनावगम्यते VedāntKa. 252.23 (*on* ii. 2.1); अनुकूलतर्काभावेन अग्निसंयोगाद् द्रवत्वोच्छेदप्रसङ्गलक्षणप्रतिकूलतर्केण च हीनबलत्वात् TattvCin. i. 752.2; ii(1). 362.1; ii(1). 937.1; उन्नीयते चायं (उपाधिः) बाधव्यभिचारानुकूलतर्काभावप्रतिकूलतर्कैः Upask. 154.8 (*on* iii. 1.14); अनुकूलतर्काभावादयोऽसिद्धभेदाः Upask. 158.17 (*on* iii. 1.17); 160.7 (*on* iii. 1.17); शङ्का त्वनुकूलतर्काभावेन भवति SarvaDaKau. 49.23; 21.23; अनुकूलतर्काभावे च व्यतिरेकहीनस्याप्युपाधित्वाच्च Nyāyāmṛ. 87B.7; 91A.6; अत्यन्ताभावप्रतियोगित्वमाकाशादौ न स्यात् ··· इहाकाशो नास्तीति प्रत्यक्षप्रतीत्यसंभवात्, अनुमाने च अनुकूलतर्काभावात् AdvaiSi. 152.1; ŚivārkaMaDī. ii. 57.18 (*on* ii. 2.1); PūrvottaVāNaMā. 71.13; दीधित्यादौ यद्यपि शक्त्यादिसाधकानुमाने पक्षीयव्यभिचारसंशयोऽप्यनुकूलतर्काभावे दोषत्वेनोक्तः GuruCandr. i. 22.23; i. 77.10; i. 193.21; न च कार्यत्वादिहेतुर्मानम्, अनुकूलतर्काभावात् LaCandr. 758.41; ये पुनरनुकूलतर्काभावे हेतोः प्रयोजकत्वं नास्तीति अप्रयोजकं नाम हेत्वाभासान्तरमातिष्ठन्ते तेऽपि व्याप्यत्वासिद्धमेव तथा मन्यन्ते MānaMe. 87.3.

**अनुकूलतर्कावतार** (anukūlatarkāvatāra) *m.* appearance or availability of a supporting hypothetical argument यदा च तादृश्येकत्रानुकूलतर्कावतारस्तदा हेतुत्वमुपाधित्वं वा निश्चितम् TattvCin. ii(1). 358.4.

**अनुकूलतस्** (anukūla-tas) *adv.* **i** agreeably, pleasantly सोऽपि प्रहृष्टस्तान् सर्वान् हरीन् संप्रत्यपूजयत् । हनूमान् सत्त्वसंपन्नो यथार्हमनुकूलतः Rāmā. vi. 44.35; बालौ ···। तर्पयन्ताविव स्वान्तं सर्वेषामनुकूलतः PadmP.(Ra.) 25.32; **ii** in the favourable direction of उत्तरप्रान्तदेशे वा समीरस्यानुकूलतः।··· कुर्याद्दर्शनमण्डपम् Mānaso. iv. 4.665.

**अनुकूलता** (anukūla-tā) *f.* **i** the state of being agreeable or pleasant or favourable अनुकूलतया शक्यं समीपे तस्य वर्तितुम् Rāmā. ii. 23.24; स्वयं पापान्निवृत्तस्य दानाद्येषु स्थितस्य च । तयोर्नियोजनान्येषां वर्णवादानुकूलते AbhisaAlaṅ. 4.36; दीक्षामुपेतुमिच्छामो व्रज तत्रानुकूलताम् PadmP.(Ra.) 110.54; आनुलोम्यम् अनुकूलता आराध्यचित्तानुवर्तनम् KāśiVṛ. *on* v. 4.63; KātanVṛ. *on* iv. 3.22; Prasā. i. 955.12; सुहृदिव प्रगटय्य सुखप्रदः प्रथममेकरसामनुकूलताम्।··· विधिः UttaRāC. 4.15; MālaMā. 4.119; SaraKaṇṭhā. 642.15; भगवतो विधेरनुकूलतामवगच्छामि MālaMā. 2.111; अनुकूलतया हि नृणां सकलं स्फुटमभिमतीभवति Kāvyālaṅ.(Ru.) 8.83; न भजत्यनुकूलतां मरुत् RāmC. 33.27; तदेव गीतं परं रागवतानुकूलतया NyāyVārPari. 519.17; प्रत्युतालम्ब्य धीरत्वं दर्शनीयानुकूलता KathāSaSāg. vi. 5.85; गच्छतः स्वामिनोऽभुवन् ···। ऋत्विन्द्रियार्थानुकूल्यं वायोरप्यनुकूलता TriṣaŚaPuC. i. 3.686; अनुकूलतया मरुत्क्षणं तमुदस्यन्निव शृङ्गगामिनम् । व्यचरत्पुरतः NemiNir. 14.3; भोग्ये हि सुखदुःखे ··· तेनानयोरनुकूलतया प्रतिकूलतया वानुभवित्रा केनचिद्भवितव्यम् SāṁkyaTaPra. 170.11; प्रौढपोताधिरूढस्य पवनस्यानुकूलता ŚāliC. 5.18; अनुकूलतया सर्वं पश्यन्त्या मुक्तसंविदः ŚatDū. 196.5; अनुकूलतया निरुपाधिवेद्यं सुखम् SarvaDaKau. 28.2; आनन्दत्वम् ··· अनुकूलतया वेदनीयत्वं वा Nyāyāmṛ. 499A.10; AdvaiSi. 750.14; सर्वेषामनुकूलतया वेदनीयं सुखम् TarkSaṁ.(A.) 57.17; कस्य किमसंभावितम् अनुकूलतामुपगतवत्या नियत्या Jīvān. 151.6; कीर्तिः सुप्रथिता ··· संप्राप्ते त्वनुकूलतामकबरे सप्तोत्तरे वत्सरे ParamāKā. 20.139; **ii** the state of being affectionate or devoted, faithfulness, devotion अनुकूलतया नार्यां सदा. त्यक्तपराङ्गनः ŚṛṅgāTi.(Ru.) 1.29; इति प्रतापादवगाढयोस्तयो रणस्य मध्यं रिपवोऽनुकूलताम् । ह्रदस्य जग्मुः करिणोरिवोर्मयः RāghPāṇ.(Dha.) 6.14; 12.2; लज्जा दाक्षिण्यमनुकूलता।··· एते योषितां प्रवरा गुणाः Mānaso. iii. 20.1713; इह सुखेषु सुखं सुरतोद्भवं महदिहापि मिथोऽप्यनुकूलता HammīMaKā. 7.97; राधायामेव कृष्णस्य ··· अनुकूलता UjjvaNīMa. 31.7; PadyaVe. 304; **iii** the state of being auspicious दैवमादौ ततोऽमीषां ग्रहाणामनुकूलताम् ··· विचिन्त्योत्सहतां नृपः YaśasCam. i. 377.1; **iv** the state of being appropriate इह रञ्जेरनुषङ्गलोप एव रूपकं प्रत्यनुकूलतामालम्बते । न तूपमां प्रति Ekāva. 8.6(93) (219.6); (वर्ज्यवर्णाः) ये चानुकूलतयोक्तास्ते प्रतिकूला इति सामान्यतो निर्णयः RasGaṅ. 85.15; **v** the state of being conducive तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता BhāṣāPa. 157; **vi** the state of being that which is supporting गुरुगुणबद्धानुकूलतां धत्ते। निष्ठुरबाह्याकारा दृतिरिव पतिसंनिधौ नव्या PadyaVe. 304 [Kośas give *anukūla* as synonymous to *dākṣiṇya*, AbhidhāCin. 1377; ŚabdaRa.(Vā.) 3711; KalpaK. 237.23; and *dākṣiṇya* as the meaning of it, ParaNā. 1385]

**अनुकूलतापत्ति** (anukūlatāpatti) *f.* bringing about what is favourable (to the result) फलं प्रत्यनुकूलतापत्तिमात्रमेव करोत्यर्थः NyāyKuA. ii(2). 77.2.

**अनुकूलतापर्यायसुख** (anukūlatāparyāya-sukha) *n.* happiness synonymous with being what is pleasurable तस्मिन्ननुकूलतापर्यायसुखानुभूतिर्न दृश्यते VedāSaṁ. 150.7.

**अनुकूलताबोध** (anukūlatā-bodha) *m.* knowledge of being helpful इच्छाया अप्यनुकूलताबोधाधीनोत्पत्तेः किं कर्मापेक्षया ŚatDū. 64.6.

**अनुकूलताभ्रम** (anukūlatā-bhrama) *m.* erroneous knowledge of being agreeable तत एवेष्टतासाम्यादनुकूलताभ्रमः VedāSaṁ. 148.14.

**अनुकूलतार्थम्** (anukūlatārtham) *adv.* for the sake of kindness आनृशंस्यार्थमनुकूलतार्थम् VīraMi.(Āhnika.) 452.16.

**अनुकूलताविशेष** (anukūlatā-viśeṣa) *m.* particular type of conduciveness or causality अनुकूलताविशेषाश्रयो व्यापारः GuruCandr. ii. 125.2; अनुकूलताविशेषोपादानान्नातिप्रसङ्गः GuruCandr. iii. 169.18=LaCandr. 649.38; अनुकूलताविशेषस्यैव भाने समभिव्याहारविशेषस्य नियामकत्वात् LaCandr. 468.37.

**अनुकूलतासंबन्ध** (anukūlatā-sambandha) *m.* relation of conduciveness or causality उपदर्शितस्थलेऽनुकूलतासंबन्धेन मरणवैशिष्ट्यस्य साध्यतारूपविषयतावच्छेदकताविरहेऽपि न विशिष्टकर्तृत्वानिर्वाहः VyutpaVā. 160.8.

**अनुकूलताहेतु** (anukūlatā-hetu) *m.* cause of favourableness यः कन्याया इतरलोक दुष्करः संगरः स तवाप्युभयलोकहितस्तदनुकूलताहेतुश्च KumāPraPra. 92.33.

**अनुकूलत्व** (anukūla-tva) *n.* **i** the state of being auspicious पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः RaghuVa. 1.42; **ii** the state of being advantageous or beneficial यदनुकूलत्वेन मया चिन्तितं तत्प्रतिकूलं संवृत्तम् MahāvīC. 5.46 (290.5); मारुतस्यानुकूलत्वं कुर्यादुष्णोदकम् SiddhYo. 75.20; अनुकूलत्वमभिप्रेत्य मुख्यत्वं प्रतिषेधति JīvanVi. 147.15; **iii** the state of being devoted or affectionate एषा गतासि वैधव्यम्।··· या त्वं पापरतेर्भर्तुरनुकूलत्वमागता PadmP.(Ra.) 53.118; तासां (स्त्रीणाम्) त्रिवर्गसंसिद्धौ प्रदिष्टं कारणद्वयम्। भर्तुर्यदनुकूलत्वं यच्च शीलमविप्लुतम् BhaviP. 35A.28 (i. 13.36); तेन मिथोऽनुकूलत्वं यथा भवति तथा स्त्रीपुंसौ यतेयाताम् SmṛtiCan. iv. 582.9; **iv** the state of being conducive अनुकूलत्वमन्वयव्यतिरेकगम्यम् NyāyVārPari. 441.4; अनुकूलत्वं किं जनकत्वमात्रमभिप्रेतम् MīmāKau. iii(2). 16.13 (*on* ii.1.5); iii(1). 25.12 (*on* i. 2.7); **v** the state of being that which supports मिथोविरोधमूलशैथिल्येष्टापादनानुकूलत्वविपर्ययापर्यवसानैस्तर्काभासत्वात् ĀtmaTaVi. 553.19; TārkiRa. 189.4; विकल्पस्यानिर्वाच्यत्वप्रयोजकस्यास्माकमनुकूलत्वात् AdvaiSi. 806.1; ताद्रूप्यप्रत्ययो लक्षणायाः फलम् ···। महाभाष्यादिग्रन्थानामस्मिन्नेवानुकूलत्वात् RasGaṅ. 202.6; अनुकूलत्वे यथा। अनुमेयं कर्म कर्मत्वात् आदित्यकर्मवत् MānaMe. 37.3; **vi** the state of being agreeable or desirable अनुकूलत्वं सुखरूपत्वमिति मतम् NītiMā. 15.10; 70.10; प्रत्यक्त्वानुकूलत्वैकलक्षणस्य स्वस्य व्यवहारप्रतिसंबन्धितां प्रति हेतुत्वरूपं व्यवहारानुगुण्यम् ŚrutaPra. iA. 143.18 (*on* i. 1.1); iA. 197.27 (*on* i. 1.1); स्वत इष्टत्वमनुकूलत्वम् ŚrutaPra. iB. 93.11 (*on* i. 1.1); ii. 646.21 (*on* iv. 4.14); अनुकूलत्वं दक्षिणत्वम् ··· चत्वार एव नायकस्य स्वभावाः RasMañ. 116(3); विषयस्यानुकूलत्वात्तच्चिन्तनेऽपि रागः संभवति ŚatDū. 59.14; कन्या मन्येत यं सुखोपायम् । अनुकूलत्वाद् वश्यं परिग्रहं तस्य सा कुर्यात् KandaCū. iii. 4.38; स्वाधीनपतिकायाः पत्युरनुकूलत्वात्कोपानुत्पत्तेः ŚṛṅgāMañ.(A.) 15.17 [AbhidhāCin. 64]; **vii** the state of being appropriate उपक्रमोपसंहारयोरेकवाक्यता स्यात् सहस्रशीर्षा पुरुष इत्यनेन सर्वाननशिरोग्रीव इति प्रतिपादितस्यार्थस्यानुकूलत्वात् ŚaṅkaVi.(Ā.) 39.14; **viii** persuasion धर्मशास्त्रानुसारेण कृतस्य प्राड्विवाकस्यानुकूलत्वेन ··· आनयनम् Subodhi. 2.29 (*on* 2.3)

**अनुकूलत्वज्ञान** (anukūlatva-jñāna) *n.* knowledge of being beneficial भोजनादेः सामान्यतोऽनुकूलत्वज्ञानादेवेष्टत्वसिद्धेः ŚatDū. 65.1.

**अनुकूलत्वप्रतिकूलत्वाविशेष** (anukūlatvapratikūlatvāviśeṣa) *m.* sameness regarding agreeableness and non-agreeableness अनुकूलत्वप्रतिकूलत्वाविशेषात् विषयस्यापि सुखदुःखशब्दवाच्यत्वमस्त्येव NyāySiA. 243.6.

**अनुकूलत्वमात्र** (anukūlatva-mātra) *n.* **i** mere conduciveness or causality न तावदनुकूलत्वमात्रेण, तस्य प्रयत्नत्वेनाव्यापनात् NyāyKuA. i(2).79.8; अनुकूलत्वमात्रे वा लाक्षणिकत्वं ब्राह्मणे श्रोत्रियपदस्येव कल्पयितुं युक्तम् BhāṭṭCin. i. 81.12 (*on* i. 1.4); **ii** mere agreeableness किमिदं ब्रह्मण आनन्दत्वं नाम ··· अनुकूलवेदनीयत्वम्, उतानुकूलवेदनत्वम्, अथानुकूलत्वमात्रम्

ŚatDū. 214.22; Nyāyāmṛ. 499A. 10.

**अनुकूलत्वविशिष्ट** (anukūlatva-viśiṣṭa) *adj.* distinguished by the nature of being desired (by itself) अनुभूतिविरहे स आत्मा निर्विशेषः स्यादित्यत्राह स चेति । प्रत्यक्त्वानुकूलत्वविशिष्ट इत्यर्थः ŚrutaPra. iA. 140. 19 (*on* i. 1. 1)

**अनुकूलत्वसंबन्ध** (anukūlatva-sambandha) *m.* relation of conduciveness or causality ग्रामं गच्छतीत्यादौ द्वितीयार्थं संयोगादिकं स्वीकृत्य तस्यानुकूलत्वसंबन्धेन क्रियायामन्वयः स्वीक्रियताम् LaCandr. 481.20.

**अनुकूलत्वसंसर्गक** (anukūlatvasaṁsarga-ka) *adj.* having reference to the conduciveness or causality as the relation फलप्रकारकव्यापारविशेष्यकानुकूलत्वसंसर्गकशाब्दबोधे त्वया धात्वाख्यातयोर्धातुकृतोर्वानुपूर्वी हेतुरभ्युपेया VaiyāBhū. 47. 10 (*on* 9)

**अनुकूलत्वादि** (anukūlatvādi) *adj.* (self-) desirableness etc. द्वितीये प्रत्यक्त्वानुकूलत्वादिभिः सविशेषत्वमवर्जनीयम् ŚrutaPra. iA.116.11 (*on* i. 1. 1)

**अनुकूलत्वादिरूप** (anukūlatvādi-rūpa) *n.* form of (self-) desirability etc. अहमर्थप्रकाशस्तु त्वया नेष्यते, इष्यमाणत्वेऽपि न तस्य निर्विशेषतया स्फुरणम्, प्रत्यक्त्वानुकूलत्वादिरूपेण स्फुरणात् ŚatDū. 81.15.

**अनुकूलत्वाद्याकार** (anukūlatvādy-ākāra) *adj.* having the form of desirability (belonging to itself) etc. ज्ञातृत्वरूपभूतज्ञानस्यैव स्वस्वरूपस्वगतैकत्वपराक्त्वानुकूलत्वाद्याकारस्वाश्रयतत्संबन्धस्वविषयतत्संबन्धानां व्यवहारप्रतिसंबन्धित्वे हेतुत्वरूपं व्यवहारानुगुण्यं तु धर्मभूतज्ञानस्यैव ŚrutaPra. iA. 143.19 (*on* i. 1.1)

**अनुकूलत्वाभाव** (anukūlatvābhāva) *m.* absence of being favourable, absence of faithfulness पत्युरन्यनायिकासक्तत्वेऽनुकूलत्वाभावे···स्वाधीनपतिकात्वमेव व्याहन्यते ŚṛṅgāMañ.(A.) 15.17.

**अनुकूलत्वैकत्वलक्षण** (anukūlatvaikatva-lakṣaṇa) *adj.* characterised by desirability (belonging to itself) and oneness प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य स्वस्य व्यवहारप्रतिसंबन्धितां प्रति हेतुत्वरूपम् ŚrutaPra. iA. 143.18 (*on* i.1.1)

**अनुकूलदांपत्य** (anukūla-dāmpatya) *n.* faithful matrimonial relation अनयोरजायतानुकूलदांपत्यम् YātrāPra. 1.17(4); भर्त्रभिमतदेव्याराधनं गृहिण्या क्रियमाणमप्यनुकूलदांपत्यघटकम् ··· विवक्षितमर्थं प्रतिजानीते LalitāSaBh. 7.16 (*on* 11)

**अनुकूलदार** (anukūla-dāra) *m.* faithful wife अत्र तावदनुकूलदारसिद्धिजनिताया धृतेस्तु रतिपरतन्त्रत्वमाबालगोपालप्रसिद्धम् RasāSu. 171. 7 (2.158)

**अनुकूलदास** (anukūla-dāsa) *m.* obedient servant मित्रदासोऽनुकूलदासः SmṛtiCan. iv. 583. 16.

**अनुकूलदिवस** (anukūla-divasa) *m.* auspicious day कर्तुरनुकूलदिवसे ··· शुभनिमित्ते ।··· प्रास्थानिकैश्च वनसंप्रवेशः स्यात् BṛSaṁ. 59.1.

**अनुकूलदैव** (anukūla-daiva) *n.* favourable fate (युक्ते च दैवे युध्येत) युक्ते च दैवे विजिगीषोरनुकूलदैव इत्यर्थः ManuBh. ii. 59.14 (*on* 7.197); *adj.* having favourable fate रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुरनुकूलदैवो यौगन्धरायणव्यापारो विष्कम्भके न्यस्तः Avalo. 5.7 (*on* 1.17); 7.13 (*on* 1. 27)

**अनुकूलदैवललित** (anukūladaiva-lalita) *adj.* assisted by favourable fate रत्नावल्या अनुकूलदैवललितो वत्सराजगृहप्रवेशः SāhiDa. 281.15.

**अनुकूलदैवसंपादित** (anukūladaiva-sampādita) *adj.* achieved by favourable fate गन्धर्वक ··· अनुकूलदैवसंपादितेन दर्शनेनैव ते विगतः श्रमोऽस्माकम् TilaMañ. 223. 9.

**अनुकूलदैवाभाव** (anukūladaivābhāva) *m.* absence of favourable fate सर्वेषां सुहृदामेकदैवानुकूलदैवाभावेन महदाश्चर्यं विभ्राणो राजा रत्नोद्भवः DaśKuC. 9. 23.

**अनुकूलद्रव्यादिलाभ** (anukūladravyādi-lābha) *m.* obtainment of the desired things etc. अनुकूलद्रव्यादिलाभेन बुद्धिस्वास्थ्यं सुखम् JīvanVi. 149.12.

**अनुकूलन** (anukūl-ana) *n.* persuasion, conciliation उपमन्त्रणं रहस्यनुकूलनम् JaineVyā. 28. 35 (*on* i. 2.43); सामोपप्रदानाभ्यामनुकूलनम् सान्त्वनम् ManuBh. ii. 50. 18 (*on* 7.172); शान्त्यादेरनुकूलनादुपनिषद्देव्या मया संगमः PraboCan. 1.30 (17.15); उपायोऽस्ति दैवस्याप्यनुकूलने । आराधय निजाम् ··· कुलदेवताम् PārśvC. 3.338; [Kośas give *anukūlana* as a synonym of *upagraha*, AnekāSaṁ. 245 and *anusāra*, ŚabdaRa.(Vā.) 2572, and *upagraha* as the meaning of it, NānārthāSaṁ. iii. 10.43; MediK. 193.29; ViśvaLoK. 400.27]

**अनुकूलनक्षत्र** (anukūla-nakṣatra) *n.* auspicious constellation (पुण्येऽह्नि विधिपूर्वकम्) पुण्येऽह्नि अनुकूलनक्षत्रादियुतेऽह्नि न रात्रौ CaturCin. ii(2). 1004.5; अनुकूलनक्षत्रे कस्मिंश्चिदपि वासरे ।··· दीक्षामदात् ParamāKā. 138.51.

**अनुकूलनायक** (anukūla-nāyaka) *m.* one of the varieties of heroes (*lit.* faithful hero) एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः SāhiDa. 99.11.

**अनुकूलनिदेश** (anukūla-nideśa) *m.* favourable order अनुकूलनिदेशो हि सतामुत्साहकारणम् TriṣaŚaPuC. i. 1. 421.

**अनुकूलनिषेधाक्षेप** (anukūlaniṣedhākṣepa) *m.* name of a variety of the figure of speech *ākṣepa* (in which an intended meaning is suppressed through favourable denial) अयमेव चास्या अवैयात्योक्तिपक्षे स्वरूपाख्यानादौक्तोऽनुकूलनिषेधाक्षेपो रोधो भवति SaraKaṇṭhā. 499. 11.

**अनुकूलनीय** (anukūl-anīya) *adj.* to be considered as co-operative (i. e. to be co-active) तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदप्यन्येन भवितव्यम् SāṁkhyaTaKau. 312.3 (*on* 17); न चात्मैवैषामनुकूलनीयः प्रतिकूलनीयश्च स्वात्मनि वृत्तिविरोधात् TattvVai. 90.20 (*on* 2.21); न चान्योऽपि संहत्यकारी साक्षात्परंपरया वा सुखदुःखे विदधानस्ताभ्यामनुकूलनीयः प्रतिकूलनीयो वा TattvVai. 208.19 (*on* 4. 24)

**अनुकूलपति** (anukūla-pati) *m.* faithful husband अनुकूलपतिश्चाहं भविष्यामि न संशयः DevīBhāP. v. 17.49.

**अनुकूलपरिणाम** (anukūla-pariṇāma) *adj.* having a desired result कौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम् Śāk. 7.21(6)

**अनुकूलपरिवारा** (anukūla-parivārā) *adj.* (*f.*) having well-disposed or faithful attendants सा चेदिच्छेद् गौरमोजस्विनं शुचिमायुष्मन्तं पुत्रं जनयेयमिति ··· अनुकूलपरिवारा च स्यादिष्टमपत्यं जनयति KāśyaS. 82B. 3.

**अनुकूलपवनदोलायित** (anukūlapavana-dolāyita) *adj.* shaken by favourable wind आः कथमद्यत एव हयखुरक्षुण्णमेदिनीक्षोदमेदस्विभावमासेदुषि समुदये दिशामनुकूलपवनदोलायिताञ्चलैः ··· शतशः शताङ्गपीता कावेरीव ··· आलक्ष्यते YātrāPra. 9. 3(3)

**अनुकूलपवनप्रसारित** (anukūlapavana-prasārita) *adj.* stretched out by favourable wind अनुकूलपवनप्रसारितैः पताकाबाहुभिः परिरब्ध(?ब्धा)मिव चिरोत्सुष्टदृष्टं कुबेरपुरमम्बरपथेन प्रधावितपुष्पकनामा विमानराजः TilaMañ. 136. 16.

**अनुकूलपवनास्फालन** (anukūlapavanāsphālana) *n.* striking by the favourable wind पृष्ठतोऽनुकूलपवनास्फालनतरङ्गितेन फेनपाण्डुना सलिलसंघातेन पुरस्ताच्च सितपटेन प्रवर्त्यमानया ··· नावोह्यमानः ··· प्रदेशमासादयम् TilaMañ. 132. 12.

**अनुकूलपातिन्** (anukūlapāt-in) *adj.* blowing favourably अनुकूलपातिनमचण्डगतिं किरता सुगन्धिमभितः पवनम् ।··· सः (अर्जुनः) ··· अनुजगृहे तपसा Kirātā. 6. 25.

**अनुकूलप्रतिकूल** (anukūla-pratikūla) *m.* friend and enemy योऽनुकूलप्रतिकूलयोरिन्द्रयमस्थानं स राजा NītiVā. 5.1.

**अनुकूलप्रतिकूलम्** (anukūla-pratikūlam) *adv.* up and down the bank अहं गङ्गाद्वारप्रयागवाराणस्यादिषु अनुकूलप्रतिकूलां(?लम्) जाह्नवीमनु पर्यटन् ··· कृत्स्नं महीमण्डलम् ··· अवलोकितवान् PañcT. 2.26(34) (214.9); Tantrākhyā. 62.18.

**अनुकूलप्रतिकूलविषय** (anukūlapratikūla-viṣaya) *m.* agreeable and disagreeable objects एवं सति सर्वत्र लोकद्वयेऽपि यौ शुभाशुभावनुकूलप्रतिकूलविषयौ तयोरनभिस्नेहः JīvanVi. 162.11.

**अनुकूलप्रतिकूलवेदक** (anukūlapratikūla-vedaka) *adj.* knower of what is agreeable and what is disagreeable अधिष्ठातुरनुकूलप्रतिकूलवेदकस्य द्रष्टुस्त्रैगुण्यादिविपर्ययः पूर्ववदेव निर्णेतव्यः ĀtmaSi. 39.8.

**अनुकूलप्रतिकूलवेदनीय** (anukūlapratikūla-vedanīya) *adj.* to be experienced as agreeable and disagreeable भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये SāṁkhyaTaKau. 312.2 (*on* 17); अपि चानुकूलप्रतिकूलवेदनीये सुखदुःखे ĀtmaSi. 39.5; अथ वानुकूलप्रतिकूलवेदनीयस्तु सुखदुःखानुभवो भोगः TattvVai. 159.16 (*on* 3. 35); SāṁkhyaTaPra. 170.10.

**अनुकूलप्रतिकूलाध्यास** (anukūlapratikūlādhyāsa) *m.* agreeable and disagreeable impressions गुणातीतस्य त्वनुकूलप्रतिकूलाध्यासाभावाद् द्वेषाकाङ्क्षे न स्तः JīvanVi. 25.21.

**अनुकूलप्रभञ्जन** (anukūla-prabhañjana) *m.* favourable wind पञ्चवटीपरिसरमुं जनमनुकूलप्रभञ्जन इवानुकूलः कूलोपकण्ठं परिभ्रष्टां नावमिव यदि नयेथाः RāmāCam. 5.20(6)

**अनुकूलप्रमाणाभाव** (anukūlapramāṇābhāva) *m.* absence of any supporting means of knowledge अनुकूलप्रमाणाभावात् ··· जाग्रत्स्वप्नयोर्मिथ्यात्वानुमानमनुपपन्नम् NyāySu.(Ja.) 497B. 12 (*on* iii. 2.1)

**अनुकूलप्रवृत्ति** (anukūla-pravṛtti) *adj.* having favourable activities (यक्षेन्द्रः) यक्षीभिश्च मनोज्ञाभिरनुकूलप्रवृत्तिभिः ।··· संपूजयति चक्रिणीम् BrahmāṇḍP. iii. 33. 77; *f.* agreeable activity प्रवृत्तिश्च द्विविधा, अनुकूला प्रतिकूला चेति । तत्र मूढो जागरणे प्रतिकूलप्रवृत्तिं द्वेष्टि, अनुकूलप्रवृत्तिमाकाङ्क्षति JīvanVi. 25. 21.

**अनुकूलप्रसङ्ग** (anukūla-prasaṅga) *m.* supporting hypothesis अनुकूलप्रसङ्गो यथा । अस्ति चेदीश्वरः उपनिषदपि प्रमाणं स्यादिति NyāyPari. 349.3.

**अनुकूलप्रिया** (anukūla-priyā) *adj.* (*f.*) (a type of *nāyikā*) who has a faithful lover अवस्थाकृतभाव एव नायिकाभेदे प्रयोजकः । वयं त्वनुकूलप्रिया स्वाधीनपतिकेति लक्षणं ब्रूमः ŚṛṅgāMañ.(A.) 15.15.

**अनुकूलफला** (anukūla-phalā) *adj.* (*f.*) **1** having easily available fruits on (both) sides अनुकूलफलासु भूभुजा पथि शोकापनुदासु विश्रमम् । व्यपदिश्य दरीष्ववस्थितं तनयानां वसतिष्विव क्षणम् RāghPāṇ.(Dha.) 4.43; **2** having enjoyable fruits, RāghPāṇ.(Dha.) 4. 43.

**अनुकूलबुद्धि** (anukūla-buddhi) *f.* knowledge of something as favourable शास्त्रज्ञानमूला भक्तिः, भक्तिमूलं शास्त्रज्ञानमित्यन्योऽन्याश्रय इति चेत् — नैवम्, श्रवणवेलायामेव पदार्थतया अवगम्यमानेषु परमात्मगुणादिष्वनुकूलबुद्धिगोचरत्वाद्विद्याभक्तिशब्दयोः ŚrutaPra. iA. 112. 28 (*on* i. 1.1); न च सर्पः कस्यचिदनुकूलबुद्धिबोध्यो भवति ŚrutaPra. ii. 17.26 (*on* i. 3.7)

**अनुकूलभ** (anukūla-bha) *n.* [P. iv. 2.3-4] time associated with an auspicious asterism कृष्णे पक्षेऽथ शुक्ले च राष्ट्रादेरनुकूलभे (महाशान्तिः) ĪśānŚiPa. ii. 59. 138.

**अनुकूलभाव** (anukūla-bhāva) *m.* favourable condition यान्ती सदैव मरुतामनुकूलभावम् ··· कामाक्षि ··· कादम्बिनीव तव भाति कटाक्षमाला MūkaPañ. 1.11; अनुकूलभावमथवा पराङ्मुखत्वं सहैव नरलोके ।··· विधिदिल्लीवल्लभौ वहतः RasGaṅ. 481. 12; अनुकूलभावसरसा तरुणी ··· न बहुभिः सुलभा Rāgh. 8. 21.

**अनुकूलभुक्तियुक्त** (anukūlabhukti-yukta) *adj.* dealing with what is favourable for the possession (of property) लिखितसाक्षिणावनुकूलभुक्तियुक्तौ प्रतिकूलसमक्षदानादिरहितौ गृहक्षेत्रादिविषये प्रमाणतया कीर्तनीयौ SmṛtiCan. iii. 160.6.

**अनुकूलम्** (anukūlam) *adv.* **Ai** along the bank धावानुकूलं पथैव यन् JaimiBr. 3.247; अनुकूलं प्रसर्पन्तं प्रशंसन्तश्च गोमुखम् । पत्रच्छेद्यमपश्यामो मुक्तावयवसंकरम् BṛKathāŚloSaṁ. 9. 3; चमूरशेषा विततानुकूलं सा नद्यधीनप्रतिमेव रेजे RāghPāṇ.(Dha.) 14.34; 15. 1; EI. i. 360. 56; **Aii** along the current प्रतीपं कृष्यमाणो हि नोत्तरेदुत्तरेन्नरः । बा(? वा)ह्यमानोऽनुकूलं तु नोद्योगाद् व्यसनात्तथा KathāSaSāg. vi. 5.87; **B** agreeably अनुकूलं प्रवर्तन्ते ज्ञातिषु ज्ञातयो यदा । तदा स्नेहं प्रकुर्वन्ति Saund. 15. 37; सतां मनांसीव सदानुकूलं विभान्ति यस्याः सुरमन्दिराणि EI. i. 360.56; **C** favourably दिक्कान्ताभिः पवनचमरैर्वीज्यमानः समन्ताद् (v. l. वीज्यमानोऽनुकूलम्) भिक्षुः शेते नृप इव भुवि ŚatTrayī. 291.

**अनुकूलमनोधर्म** (anukūla-manodharma) *m.* agreeable state of mind विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वादुत्वं स्थायी भावो रसो मतः ।··· अनुकूलमनोधर्माः सात्त्विकाः परिकीर्तिताः Mānaso. iv. 2.366.

**अनुकूलमरुत्** (anukūla-marut) *m.* favourable wind अनुकूलमरुल्लोलपताकामण्डिताम्बरः । स स्यन्दनवरोऽम्भोधौ यानपात्रमिवाविशत् TriṣaŚaPuC. i. 4. 163.

**अनुकूलमहावेगसमीर** (anukūlamahāvega-samīra) *m.* favourable and very swift wind अनुकूलमहावेगसमीरप्रेरितेन सः । आसीददचिरेणैव पोतेन दिशमीप्सिताम् BṛKathāŚloSaṁ. 19. 109.

**अनुकूलमात्र** (anukūla-mātra) *n.* **i** nothing but auspicious ग्रहर्क्षतिथ्युद्गमराशिहोराद्रेष्काणभागाद्यनुकूलमात्रम् । भवेद् यियासोर्यदि सिद्धिहेतुः YogYā. 1. 5; **ii** only what is conducive or what leads to यद्वा अनुकूलयत्ने प्रवृत्तं पदं तदेकदेशेऽनुकूलमात्रे प्रयुज्यते TattvCin. iv(2). 824.10; अत एवानुकूलयत्नशक्तादाख्यातपदादनुकूलमात्ररूपेण 'रथो गच्छती'त्यादौ व्यापारस्य बोधः LaCandr. 374.30; GuruCandr. iii. 118. 22.

**अनुकूलमारुत** (anukūla-māruta) *m.* favourable wind अनुकूलमारुतभोक्तव्यः सज्जितो धूपः PratiYau. 3.4(7); (अरयः) ध्वजांशुकैर्ध्रुवमनुकूलमारुतप्रसारितैः प्रसभकृतोपहूतयः ŚiśuVa. 17.49; वाहानामनुकूलमारुतभरान्नीतोऽपि धूलीव्रजः SūktiMu. 100.4.

**अनुकूलमीमांसा** (anukūla-mīmāṁsā) *f.* supporting investigation पूर्वश्लोके सामान्येनामीमांस्ये इति मीमांसानिषेधादनुकूलमीमांसापि न प्रवर्तनीयेति भ्रमो मा भूत् ManvaMu. 35. 9 (*on* 2.11)

**अनुकूलय** (anukūla-ya-) *denom.* to render favourable or agreeable तत्कृतानुग्रहापेक्षी तम् ··· अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः KumāSaṁ. 2.39; सहभोजनादि वाचरितुकामश्चित्तमन्यस्यानुकूलयति ŚābaBh. 1013.2 (*on* iii. 5. 43); अस्यानुकूलय मतिं मतिमन् Kirātā. 13. 71; प्रियमिति वनिता ···। कथमप्यनुकूलयांचकार ŚiśuVa. 7.11; योगजधर्मानुग्रहादात्मानमनुकूलयति NyāyKa. 286.26; रक्षपाल सहैभिस्त्वं राजानमनुकूलय SkandP. i(2).21.244; अदुष्टां सम्यगाश्वास्य तेनैतामनुकूलयेत् BhaviP. 35A.10 (i. 13.27); कतमं च व्यासङ्गमनुगम्य हृदयमनुकूलयामि UdaySuKa. 40.24; तस्मादारोपितैकत्वविषयत्वस्य पारमार्थिकैकत्वविषयत्वं वा । तत्र प्रथमं यदि परोऽभ्युपगच्छेदनुकूलयेदेवास्मान् NyāyVārPari. 614.9; (पातयोग्यम् ··· गजदन्तं प्रपातयेत्) तां शलाकां ततस्तस्य निक्षिपेदनुकूलयेत् Hastyāyur. 271. 27 (2.50); यमर्धासनदानेन वासवोऽपि सखीयति । तमागमनमात्रेणानुकूलयसि किं न हि TriṣaŚaPuC. i. 5. 113; अहो इयं तु स्वरूपलावण्येनानुकूलयिष्यति श्रीकृष्णम् GopāKeCan. 93.27; द्विप श्वोपायनैर्द्वी(?)नृपास्तम् ··· अन्वकूलयन् VasaV Kā. 4. 26; अन्यूनभक्तिः स वरप्रसूनवृन्देन वृन्दारकवन्दनीयम् । वृषाङ्कमभ्यर्च्य वृषायमाणोऽनुकूलयामास ततो दुकूलैः VasaViKā. 11. 66; अनुकूलयेयुरनिशं कथया ··· कन्यामातुर्हृदयम् (विशिष्य मित्राणि) KandaCū. iii. 1. 17; कच्चिदनुकूलयसि चतुरदूतीजनेन कुलनारीः ŚṛṅgāTi.(Rā.) 106. 15 [कूलिः प्रतेः प्रतीपत्वेऽथानुतः सान्त्वने मतः KośaKaTa. 2. 1878]; (*pass.*) to be rendered favourable यत्र तु कालव्यवधानं तत्र जीयमानेन कदाचिदनुकूल्यन्ते इति न क्वचित् साक्षिण्यः ManuBh. ii. 109.11 (*on* 8.77)

**अनुकूलयज्ञ** (anukūla-yajña) *adj.* [*f.* -ā] presenting an appropriate or agreeable offering (to monks) तदुपासकस्तस्मिन्नेव विहारे ध्रुवभिक्षां प्रज्ञापयितुकामो भवत्यनुकूलयज्ञः GiMs. iii(4). 139. 3; पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा तस्मिन्नेव विहारे ध्रुवभिक्षां प्रज्ञपयत्यनुकूलयज्ञाम् Sphuṭā. iv. 11. 11 (*on* 4.4) [DBHS.]

**अनुकूलयत्** (anukūlay-at) *adj.* **A** conciliating भार्[आश]र्वमहीपतिर्द्रुतम् [अग्] आदप्राप्तपूर्वैः परैः यस्येच्छामनुकूलयम्[? न्] कुलधनैः पादौ प्रणामैरपि EI. vi. 244.31; कुर्वता भवता सङ्गं कृता स्वद्रौ सुसंगतिः । अनुकूलयता हि त्वामनुकूलीकृतोऽर्थदः AlaṅkāMañ. 145. 6; **Bi** rendering favourable or agreeable नानारसोपक्रमक्रमेण हृदयमनुकूलयन् ··· देवस्य प्रणयपात्रमुद्यानपालो दर्शनार्थी द्वारि वर्तते UdaySuKa. 27. 8; फलसाधनतामभिधाय श्रोतृबुद्धिमनुकूलयन् वर्तिष्यमाणमेवाग्रे दर्शयति TārkiRa. 2. 2; **Bii** rendering easy साश्रुलोचनस्त्यक्तभोजनो भवदागमनमनुकूलयन् वर्तते GopāKeCan. 60. 36; कृत्स्नसुकृतव्ययेन दुर्गतिमेवानुकूलयतां दुर्लभः शुभपरिणामविशेषः SyādvāMañ. 11(63); **C** causing to be supportive बहुतरानर्थप्रसक्तिशङ्कया शास्त्रमनुकूलयन्तस्त इतरेभ्यो भिद्यन्ते ĀtmaTaVi. 915.17.

**अनुकूलयत्न** (anukūla-yatna) *m.* conscious effort conducive to (an effect) तत्र त्वपरस्यानुकूलयत्नं कृतवतः फलं प्रयच्छति, प्रतिकूलयत्नवतस्तु न फलम् NyāyKu. 119. 19; यद्वा अनुकूलयत्ने प्रवृत्तं पदं तदेकदेशेऽनुकूलमात्रे प्रयुज्यते TattvCin. iv(2).824. 9; अनुकूलयत्नो हि कृञ्धात्वर्थः, यत्यर्थस्तु यत्नमात्रम् AdvaiSi. 480. 27; 793.7.

**अनुकूलयत्नत्व** (anukūlayatna-tva) *n.* the state of being conscious effort conducive to (an effect) कृताकृतेत्यादौ तु यत्नत्वमात्रेणाख्यातकरोतिवाच्यता नाभिप्रेता किं त्वनुकूलयत्नत्वेन GuruCandr. ii. 124.10.

**अनुकूलयत्नबोधकत्व** (anukūlayatnabodhaka-tva) *n.* the state of being conveyer of (the sense of) conscious effort conducive to (an effect) करोतेस्तत्समानार्थकत्वेनाख्यातस्य चानुकूलयत्नबोधकत्वस्य संभवात् GuruCandr. ii. 126. 11.

**अनुकूलयत्नरूप** (anukūlayatna-rūpa) *adj.* having the form of conscious effort conducive to (an effect) अनुकूलयत्नरूपे समुदिते प्रवृत्तमाख्यातं रथो गच्छतीत्यादावेकदेशेऽनुकूले प्रयुज्यते GuruCandr. ii. 124. 20.

**अनुकूलयत्नशक्त** (anukūlayatna-śakta) *adj.* denotative of conscious effort conducive to (an effect) यद्यपि विशिष्टवाचकस्य शुद्धेऽपि शक्तिसत्त्वात्तत्र न लक्षणा ।··· अत एव चानुकूलयत्नशक्तस्याख्यातस्यानुकूलमात्रबोधकत्वं लक्षणां विनैवेति GuruCandr. iii. 118. 22; अनुकूलयत्नशक्तादाख्यातपदात् अनुकूलमात्ररूपेण 'रथो गच्छती'त्यादौ व्यापारस्य बोधः LaCandr. 374. 30.

**अनुकूलयत्नार्थक** (anukūlayatnārtha-ka) *adj.* having the sense of conscious effort conducive to (an effect) करोतेः सकर्मकत्वाच्च करोतिरनुकूलयत्नार्थकः LaCandr. 481.24.

**अनुकूलयत्नार्थता** (anukūlayatnārtha-tā) *f.* the state of being expressive of conscious effort conducive to (an effect) करोतेः सकर्मकत्वानुरोधेनानुकूलयत्नार्थतावश्यकत्वे आख्यातस्यापि तदावश्यकत्वाच्च GuruCandr. ii. 125.8.

**अनुकूलयानलीला** (anukūla-yānalīlā) *f.* **i** befitting graceful movement of flowing प्रथत्वनुकूलयानलीलामचिरेणैव कवेरजाकरेणुः MadhuVi.

8.36 (comm. अनुकूला अनुगुणा स्वस्य अनुरूपा यानलीला प्रवहणव्यापारः); **ii** (anukūlayāna-līlā) grace of the movement along the banks, MadhuVi. 8.36 (comm. अनुकूलं नदीतीरे ··· यानं प्रस्थानम् ··· लीला विलासः मन्दगमनम्)

**अनुकूलयितव्य** (anukūlay-itavya) *adj.* to be rendered favourable आत्मानुकूल्यादन्नादिसमश्चेदमुनात्र कः। अनुकूलयितव्यः स्यान्नैकस्मिन् कर्मकर्तृता PañcDa. 12.24.

**अनुकूलयितुम्** (anukūlay-itum) *inf.* **i** to favour अनुकूलयितुं कूलस्थितं नृपमिवाञ्जसा। श्रमं गङ्गाहरच्चम्वाः TriṣaŚaPuC. i. 4. 63; **ii** in order to conciliate or pacify प्रमदासक्तमनाः स नाकिवैरी। अनुकूलयितुं कुलाद्रिकन्यां पुनरन्यायसखं तमादिदेश Surath. 8. 33; अन्यदा बाणपत्नी संजातकलहा पितृगृहं गता। बाणेनागत्य प्रदोषेऽनुकूलयितुमारब्धा PurāPraSam. 15. 23; आर्ये ज्योतिर्विदा केनापि श्रावितं किमपि प्रतिकूलं शमयितुं शान्तिजापकाननुकूलयितुं गतः। ततोऽहं विलम्बितः BhartṛNi. 1.2(8); अकारणकोपना कोङ्कणाः। तावत्पदे पदे न शक्नोमि एनमनुकूलयितुम् KathāK. 144.6; हरये नमः ··· हरिमनुकूलयितुमित्यर्थः BhāṭṭCin. i. 102.5 (*on* i. 1. 4); नमस्कुर्मो नृसिंहाय। नृसिंहमनुकूलयितुमित्यर्थः SiddhāKau. 146B.4 (*on* ii. 3. 14); परिषदमाराधयितुं (v. l. परिषदमनुकूलयितुं) प्रयतेथाः सर्वथा दुराराधाम् MadaKeC. 5.

**अनुकूलयितृ** (anukūlay-itṛ) *adj.* which makes something agreeable (implying identity between the agent and the object) सुखदुःखे चानुकूलयितृप्रतिकूलयितृणी तत्त्वेन तदर्थे एव व्यवतिष्ठेते। विषया अपि हि शब्दादयस्तादात्म्यादेव चानुकूलयितारः प्रतिकूलयितारश्च TattvVai. 90.18 (*on* 2.21)

**अनुकूलयिष्यत्** (anukūlay-iṣyat) *adj.* which is going to make something favourably inclined श्रोतृशेमुषीमनुकूलयिष्यन् ··· इष्टदेवतां विशिनष्टि TattvPrakā. 1B. 13 (*on* i. 1.0)

**अनुकूलयुक्ति** (anukūla-yukti) *f.* supporting reasoning चेतनधर्मविशेषाश्रवणेऽप्यदृश्यत्वं साधारणतया न निर्णायकम्, अतोऽनुकूलयुक्तिर्वक्तव्या ŚrutaPra. iB. 325.13 (*on* i. 2.22)

**अनुकूलरवाकुला** (anukūlaravākulā) *adj.* (*f.*) full of appropriate sounds सरसो मानसाख्यस्य तटे ···। स्थिते तत्रोभयोः सेने क्षणकल्पितसंश्रये। गजवाजिपदातीनामनुकूलरवाकुले PadmP.(Ra.) 15.92.

**अनुकूललक्षण** (anukūla-lakṣaṇa) *n.* characteristic feature of a faithful hero (*anukūlanāyaka*) स नायकस्त्रिधा।··· अनुकूललक्षणम् — एकस्यामनुरक्तोऽनुकूलः ŚṛṅgāMañ.(A.) 49.28.

**अनुकूललग्न** (anukūla-lagna) *m.*, *n.* auspicious conjunction (of planets) चाणक्यहतकेनानुकूललग्नवशादर्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति शिल्पिनः ··· गृहीतार्थान् कृत्वा MudrāRā. 2.15(20)

**अनुकूललिङ्गभूयस्त्व** (anukūlaliṅga-bhūyastva) *n.* abundance of the supporting reasonings उपक्रम एवानुकूललिङ्गभूयस्त्वेन प्रत्यवस्थानं चतुर्थे (अधिकरणे) ŚrutaPra. iB. 249.7 (*on* i. 1.23)

**अनुकूलवक्तृ** (anukūla-vaktṛ) *m.* appropriate speaker ननु तर्हि नेनेदमुदितं भवति। एतच्छास्त्रं प्रमाणं अनुकूलवक्त्रादिमत्त्वाद् भारतादिवत् NyāySu.(Ja.) 5B.9 (*on* i. 1.1)

**अनुकूलवत्** (anukūla-vat) *adv.* as in the case of what is conducive or a cause अनुकूलवत् प्रतिकूलेऽपि सति तज्जातीयान्तराभावानामकिंचित्करत्वात् NyāyKuA. i. 31.4.

**अनुकूलवती** (anukūla-vatī) *adj.* (*f.*) having agreeability, friendly अतिरस्कृतसंभाषा दुःस्त्रियो नानुसेवती। अनुकूलवती नित्यं भवाम्यनलसा सदा MahāBhā. iii. 222. 26.

**अनुकूलवरपुरन्ध्रि** (anukūlavara-purandhri) *f.* agreeable or favourable and excellent woman अनुकूलवरपुरन्ध्रिषु पुरुषाणां बद्धमूलरागाणाम्। नयति मनो दुःशीलः कुसुमास्त्रो हीनपात्रेषु KuṭṭaMa. 711.

**अनुकूलवर्तिन्** (anukūlavart-in) *adj.* acting favourably अहमप्यनुकूलवर्तिनो विधेरनुभावात् फलितप्रयोजनः ··· व्रजामि मन्दिरम् UdaySuKa. 34.14; विधिरेव मे कदाचिदनुकूलवर्ती कुवलयविलोचनां घटयिष्यते UdaySuKa. 71. 23.

**अनुकूलवाच्** (anukūla-vāc) *adj.* having an agreeable speech अन्विष्य सदृशीं स च स्नुषां प्राप चैनमनुकूलवाग्द्विजः RaghuVa. 11.50; सन्तो हि साधुष्वनुकूलवाचः YaśasCam. i. 193.4; (वरणार्थमुपगतांश्च भद्रदर्शनान् प्रदक्षिणवाचश्च ··· पुरुषान् मङ्गलैः प्रतिगृह्णीयुः) प्रदक्षिणवाच इति अनुकूलवाचः JayaMa. 195.20 (*on* 3. 1); Nalābhyu. 2.39.

**अनुकूलवाणी** (anukūla-vāṇī) *f.* favourable or pleasant speech देशिकम् ···। संतोषयेदकुटिलार्द्रतरात्मना तं स्वैः स्वैर्धनैश्च वपुषाप्यनुकूलवाण्या PañcaRā.(Nā.) iii. 7.3.

**अनुकूलवात** (anukūla-vāta) *m.* air-wave conducive (to articulation) अन्त्यमध्यमशब्दास्तु शब्दासमवायिकारणका अनुकूलवात[निमित्त]काः TarkBhā.(Ke.) 72. 11; उत्तरोत्तरशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम्। अनुकूलवातादिकं निमित्तकारणम् TarkKau. 19.18.

**अनुकूलवादिन्** (anukūla-vādin) *adj.* speaking what is beneficial सन्तोऽसतां नानुवर्तन्ति चैतद्यथा आत्मैषामनुकूलवादी MahāBhā. i. 84.4.

**अनुकूलवायु** (anukūla-vāyu) *m.* air-stream conducive (to listening) आद्यः शब्दः संयोगाद् विभागाद् वा जायते। तत्परंपरा तु कर्णपथपर्यन्तमनुकूलवायुवशात् प्रवर्तते SarvaDaKau. 32.10.

**अनुकूलविकल्प** (anukūla-vikalpa) *m.* corresponding mental construct नीलज्ञानं हि नीलं प्रति प्रमाणं नीलमिदमित्यनुकूलविकल्पोपजननात् NyāyMañ. i. 23. 26.

**अनुकूलविचार** (anukūla-vicāra) *m.* investigation conducive (to some knowledge) न ह्यनधीत एव विचारमर्हति। तत्रैतत् स्यात्। स्वतन्त्रतेति। तत्र प्रतिविधास्यामः। वेदार्थब्रह्मणो वेदानुकूलविचार इति AṇuBh. 3. 23 (*on* i. 1.1)

**अनुकूलविधायिदैवत** (anukūlavidhāyi-daivata) *adj.* having a deity bestowing favours अनुकूलविधायिदैवतो विजयी स्यान्ननु कीदृशो नृपः VidaMuMa. 1. 44.

**अनुकूलविधि** (anukūla-vidhi) *m.* **1** favourable fate or destiny अनुकूलविधिविहितसाहायकस्य साहसिकस्य सर्वदा शस्यसंपदि वा नीतिरनीतिरपि फलति TilaMañ. 155. 13; अनुकूलविधिवशेन सर्वं सुन्दरं भविष्यति KathāK. 56.17; **2** agreeable manner यत्पाणिर्न निवारितः ··· मानिन्या कथितोऽनुकूलविधिना तेनैव मन्युर्महान् Kāvyānu.(He.) 365. 15; ŚṛṅgāTi.(Ru.) 1.78; RasiJī. 790.

**अनुकूलविरुद्ध** (anukūla-viruddha) *adj.* who is opposed to what is good अनुकूलविरुद्धस्य प्रतिकूलाभिलाषिणः। सर्वथा विषमः पन्थाः मन्मथस्य प्रसादिनः RāmāMañ. 253.13.

**अनुकूलविलसित** (anukūla-vilasita) *adj.* whose activities are favourable अनुकूलविलसितस्य विधेः प्रभावात् ··· मिलितेयम् ··· प्राणेश्वरी UdaySuKa. 142. 31.

**अनुकूलविषय** (anukūla-viṣaya) *m.* desired object, agreeable object न चान्याविषयत्वात् संविदोऽन्यतस्तत्प्रागभावाद्यसिद्धिः ··· प्रतिकूलानुकूलविषयनियतहानोपादानादिलिङ्गावगम्यत्वाच्च, परसंविदः ĀtmaSi. 23.9; स्वप्नं पश्यतीति हि प्रकृतम्। अनुकूलविषयजा प्रीतिरानन्दः ŚrutaPra. ii. 425.22 (*on* iii. 2.1); अनुकूलविषयचिन्तने च रागत एव प्रवृत्तेश्चिन्तनरूपनिदिध्यासनस्यैव विधिर्न स्यात् Nyāyāmṛ. 619B. 5.

**अनुकूलविषयपरत्व** (anukūlaviṣayapara-tva) *n.* the state of being intended to refer to what is agreeable रत्यादिशब्दानां प्रीतिपरत्वे व्यधिकरणबहुव्रीहिः, अनुकूलविषयपरत्वे साक्षाद्बहुव्रीहिः ŚrutaPra. ii. 19. 17 (*on* i. 3.7)

**अनुकूलवृत्त** (anukūla-vṛtta) *adj.* having obliging behaviour अथान्यदा श्रेणिगणप्रधानाः संमन्त्र्य वृद्धैरनुकूलवृत्तैः।··· कंचिद्भटं कान्ततयेत्थमूचुः VarāṅgaC. 14. 75.

**अनुकूलवृत्ति** (anukūla-vṛtti) *adj.* having favourable disposition इत्यागताः कलितचन्द्रकलाप्रकाशकर्पूरवाससुरभीण्यनुकूलवृत्तीः। प्रेमामृतार्द्रमनसो दयिता मधूनि नीलारविन्दशबलानि वधूरपीप्यन् HarVi. 26.1; यद्यसौ तव प्रभुरस्मत्समसंभावनया देवसेवायां नानुकूलवृत्तिः YaśasCam. i. 560.2; *f.* **A** agreeable behaviour वत्सलस्य भावो वत्सलता, वात्सल्यं विनयोऽनुकूलवृत्तिः TātpaVṛ. 340. 16 (*on* 3.46); अनुकूलवृत्त्याथ तं सूरिमुपसर्गयन्। उवाच दम्भभक्त्या स राजानम PrabhāC. 25.14; **B** supporting operation इदं किल गोलयन्त्रं तदन्तर्वर्तिगोभूपिण्डस्य नित्यमधःपतनशीलस्यानुकूलवृत्त्या सर्वग्रहर्क्षमण्डलोपेतं समान्तरमनुगच्छति ŚaṅkaVi.(Ā.) 213.7.

**अनुकूलवृत्तिता** (anukūlavṛtti-tā) *f.* the state of having favourable disposition तदनु त्रपया पराङ्मुखीं पुलकालङ्कृतपीवरस्तनीम्। स किलाञ्चितचाटुरानयत् सुमुखीं तामनुकूलवृत्तिताम् NavaSāC. 12. 68.

**अनुकूलवेदनत्व** (anukūlavedana-tva) *n.* the state of being the knowledge as desirable किमिदं ब्रह्मण आनन्दत्वं नाम ··· किमनुकूलवेदनीयत्वम्, उतानुकूलवेदनत्वम् ŚatDū. 214.21; AdvaiSi. 750. 14.

**अनुकूलवेदनरूपत्व** (anukūlavedanarūpa-tva) *n.* the state of being the form of knowledge as desirable किं चेदमानन्दत्वं जातिविशेषो वा अनुकूलतया वेदनीयत्वं वा अनुकूलवेदनरूपत्वं वा अनुकूलत्वमात्रं वा Nyāyāmṛ. 499A.10.

**अनुकूलवेदनात्मक** (anukūlavedanātma-ka) *adj.* of the nature of knowledge as desirable अत्रास्मन्मते अणुरेवात्मा सुखमप्यनुकूलवेदनात्मकम् NyāyKu. 109.11.

**अनुकूलवेदनीय** (anukūla-vedanīya) *adj.* to be known as agree-

able दुःखमिति नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानम NyāyBh. 23.2 (*on* i. 1. 9); सुखम् अनुकूलवेदनीयं स्वस्वरूपभूतं सुखम् LalitāTriBh. 345. 18 (*on* 54); यत्पुनरिदं सुखं प्रत्यात्ममनुकूलवेदनीयं तत्कथं दुःखमनुभवविरोधात् TātpaṬ. (Vā.) 625. 21 (*on* iv. 1.54); अनुकूलवेदनीयं हि फलम्, इष्टलक्षणत्वात् फलस्य Bhām. 53. 20 (*on* i. 1. 1); यदुत्पद्यत इत्यनुकूलवेदनीयस्वरूपम् NyāyVārPari. 532.1; यद्धि पुरुषस्यानुकूलवेदनीयं तत्पुरुषार्थम् TantrRa. 11.18; प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो भवेत् BrahmSūBh.(Rā.) 758. 6 (*on* iv. 4.1); अनुकूलवेदनीयमेव हि सुखम् NyāyKu. 116. 14; प्रीतिः सुखम् । तच्च सर्वात्मनानुकूलवेदनीयम् TarkBhā.(Ke.) 74.4; दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् SarvaDaSaṁ. 1.35; सुखेन कपित्थादिवस्तुकृतेन अनुकूलवेदनीयेन गुणविशेषेण अभिलाषः Bhāsk. ii. 61.19 (*on* ii. 2.7)

**अनुकूलवेदनीयता** (anukūlavedanīya-tā) *f.* the state of being that to be known as agreeable न च दुःखाकरस्य यागस्यानुकूलवेदनीयतास्ति TantrRa. 11.19.

**अनुकूलवेदनीयत्व** (anukūlavedanīya-tva) *n.* the state of being that to be known as agreeable कस्मात्पुनः पुण्यहेतवस्त्यज्यन्ते सुखफला अनुकूलवेदनीयत्वात् TattvVai. 74. 13 (*on* 2.14); सुखादयो यथास्वमनुकूलवेदनीयत्वादिभिर्लक्षणैरन्योऽन्यमपि भेदवन्तः TātpaṬ.(Vā.) 123.22 (*on* i. 1. 4); अनुकूलवेदनीयत्वं सुखलक्षणम् NyāyVārPari. 521. 3; किमिदं ब्रह्मण आनन्दत्वं नाम ··· किमनुकूलवेदनीयत्वम् ŚatDū. 214.21; स्थायित्वानुकूलवेदनीयत्वानुगतत्वसर्वसत्यत्वभ्रमव्यावर्तनेन सर्वशून्यतायामेव पर्यवसानम् SarvaDaSaṁ. 2. 157.

**अनुकूलवेदनीयापरोक्ष** (anukūlavedanīyāparokṣa) *n.* perception to be known as agreeable भगवत्स्वरूपगुणविभवविषयस्यापि परोक्षस्याप्रयोजनत्वात् । अनुकूलवेदनीयापरोक्षस्यैव प्रयोजनत्वात् SiddhāSi. i. 30.17.

**अनुकूलवेद्य** (anukūla-vedya) *adj.* to be known as agreeable सुखत्वसामान्यवन्निरुपाध्यनुकूलवेद्यं सुखम् SaptaPa. 94(28)

**अनुकूलवेद्यत्व** (anukūlavedya-tva) *n.* the state of being that which is to be known as agreeable तथा लोकविलक्षणेऽप्यानन्दादौ तत्पदप्रयोगो युज्यते । तस्यानुकूलवेद्यत्वादिज्ञापनार्थत्वात् TattvPrakā. 159B.12 (*on* iii. 2. 34)

**अनुकूलव्यापार** (anukūla-vyāpāra) *m.* activity conducive to (an effect)अचेतने कृत्याश्रयत्वव्यवहारस्तु अनुकूलव्यापारे लाक्षणिकः MīmāKau. iii(2). 22.4 (*on* ii. 1.5); iii(2). 25. 8 (*on* ii. 1.5); आख्यातार्थस्यानुकूलव्यापारस्य प्रकृते मनोनिष्ठस्यैव प्रत्ययात् LaCandr. 468.37; रथो गच्छतीत्यत्रानुकूलव्यापारे जानाति इच्छति यतते करोतीत्यादावाश्रयत्वेऽपक्षीयते ··· इत्यादौ प्रतियोगित्वे सर्वत्रानुकूलव्यापारे वा निरूढा लक्षणा BhāṭṭCin. i. 80. 8 (*on* i.1.4)

**अनुकूलव्यापारत्व** (anukūlavyāpāra-tva) *n.* the state of being an activity conducive to (an effect) वस्तुतस्तु लाघवादनुकूलव्यापारत्वमेव शक्यतावच्छेदकम्, प्रवृत्तिनिरूपितत्वं तु वाक्यार्थविधया लभ्यम् MīmāKau. iii(1). 21.11 (*on* i. 2.7); लिङोऽपि न निवर्तनायां शक्तिः, किन्त्वनुकूलव्यापारत्वेऽखण्डोपाधौ वा MīmāKau. iii(1). 25. 1 (*on* i. 2. 7)

**अनुकूलव्यापारवत्त्व** (anukūlavyāpāravat-tva) *n.* the state of having an activity conducive to (an effect) प्राज्ञस्यानन्दभुक्त्वं चानन्दानुभवस्याश्रयत्वमनुकूलव्यापारवत्त्वं वा मनोलयेऽप्यस्ति LaCandr. 611.28.

**अनुकूलव्यापारवाचित्व** (anukūlavyāpāravāci-tva) *n.* the state of being expressive of an activity conducive to (an effect) अतश्च सकर्मकत्वाकर्मकत्वरूपधर्मभेदान्न करोतियतत्योः पर्यायत्वं, अपि तु भावयतिपर्यायत्वमेवेति तद्विवरणमप्यनुकूलव्यापारवाचित्वे एव तिङस्साधकम् MīmāKau. iii(2). 20. 13 (*on* ii.1.5); न च बीजेनाङ्कुरः कृतः, रथो गमनं करोति ··· इत्यादावचेतनेऽपि प्रयोगादनुकूलव्यापारवाचित्वम् MīmāKau. iii(2). 22. 2 (*on* ii. 1. 5)

**अनुकूलव्यापारवाचिन्** (anukūlavyāpāravāc-in) *adj.* expressive of an activity conducive to (an effect) तत्र च पचति पाकं भावयतीत्यनुकूलव्यापारवाचिणिजन्तभूधातुना विवरणात् ··· अनुकूलव्यापार एव तिङर्थो न तु यत्नमात्रम् MīmāKau. iii(2). 19.22 (*on* ii. 1.5); तत्रापि न यत्नत्वेन वाच्यता, किंतु अनुकूलव्यापारवाचिकरोतिना विवरणाद्रथो गच्छतीत्यादिसाधारण्यायानुकूलव्यापारत्वेन वाच्यता BhāṭṭCin. i. 81. 31 (*on* i. 1. 4)

**अनुकूलव्यापारविशेष** (anukūlavyāpāra-viśeṣa) *m.* specific activity conducive to (an effect) तव प्रयत्नविशेषस्येवानुकूलव्यापारविशेषस्य वाच्यत्वात् TattvCin. iv(2). 825.9.

**अनुकूलव्यापारात्मक** (anukūlavyāpārātma-ka) *adj.* having the nature of an activity conducive to (an effect) 'लिम्पतीव तमोऽङ्गानि' इत्यत्रापि लेपनादिकर्तृत्वं तमआदिषु विषयेषूत्प्रेक्ष्यत इत्येव युक्तम् । अनुकूलव्यापारात्मकस्य कर्तृत्वस्यैवाख्यातार्थत्वात् RasGaṅ. 393. 11.

**अनुकूलव्यापारात्मन्** (anukūlavyāpārātman) *adj.* having the nature of an activity conducive to (an effect) यागादिकरणेन स्वर्गादिफलोत्पत्तौ सत्यांयेयमनुकूलव्यापारात्मा कृतिशब्दाभिधेया फलोत्पादना सेयं यज्यादिधातूनामन्यतमेन केनापि नाभिधीयते NyāyMāVi. 63.28 (*on* ii. 1. 1)

**अनुकूलशब्द** (anukūla-śabda) *m.* favourable word (ताम्) नाङ्गीचकार चतुरो व्रतनाशभीतो यास्यत्ययं मम वृथा ह्यनुकूलशब्दः DevīBhāP. iii. 15. 15.

**अनुकूलश्रवणप्रतीता** (anukūlaśravaṇa-pratītā) *adj.* (*f.*) delighted at hearing the agreeable (news) अथानुकूलश्रवणप्रतीताम् ···। रथम् ··· आरोप्य वैदेहसुतां प्रतस्थे (लक्ष्मणः) RaghuVa. 14.47.

**अनुकूलसंयोग** (anukūla-saṁyoga) *m.* contact with what is pleasing प्रकृतिसंसृष्टस्य संसारिणः पुरुषस्यानुकूलसंयोगः प्रतिकूलसंयोगः स्वरूपेणावस्थितिरिति च तिस्रोऽवस्थाः VedāSaṁ. 148.15.

**अनुकूलसंबन्धनिवृत्ति** (anukūlasambandha-nivṛtti) *f.* cessation of connection with what is pleasing प्रतिकूलसंबन्धनिवृत्तिश्चानुकूलसंबन्धनिवृत्तिश्च स्वरूपेणावस्थितिरेव VedāSaṁ. 149. 1.

**अनुकूलसलिलमारुता** (anukūla-salilamārutā) *adj.* (*f.*) having favourable current and wind निवृत्तायां तु तस्यां नाव्यनुकूलसलिलमारुतायाम् ··· सुपारगस्तान् वाणिजकानुवाच JātaMā. 94.12 (14. 32)

**अनुकूलसवित्रादिग्रह** (anukūla-savitrādigraha) *m.* auspicious planets such as the Sun etc. प्रसूता चास्मि दशमे मासे पुत्रं पतिं तव । अनुकूलसवित्रादिग्रहसूचितसंपदम् BṛKathāŚloSaṁ. 5.106.

**अनुकूलसुखदा** (anukūla-sukhadā) *adj.* (*f.*) devoted and giving pleasure भार्या चापि तथानुकूलसुखदा SātvaT. 9. 23.

**अनुकूलसुन्दर** (anukūla-sundara) *adj.* devoted and beautiful अनुकूलसुन्दरा अपि भरणीयाः केवलं दाराः KuṭṭaMa. 582.

**अनुकूलसेवा** (anukūla-sevā) *adj.* (*f.*) rendering devoted service ननु वयस्ये तारावलि साध्वनुकूलसेवा (अहम्) अम्बया चिन्तितास्मि UdaySuKa. 104.7.

**अनुकूलस्थिति** (anukūla-sthiti) *adj.* **i** having a favourable condition तदुद्भवानां महार्णवानामिव चतुर्णां पूर्वो बृहत्क्षत्रः ··· अनुकूलस्थितिर्महेन्द्रश्रियमानशे AvantiKa. 147.18; **ii** having presence on the bank, AvantiKa. 147.18.

**अनुकूलस्रोतस्** (anukūla-srotas) *n.* favourable flow (i.e. beam of light) दर्पणप्रतिहतप्रतिस्रोतः प्रवृत्तनयनालोकेन देशवियुक्तमुखमात्रग्रहणेऽनुकूलस्रोतसा च दर्पणदेशे गृह्यमाणे ··· मुखदेशत्वारोपसंभवः ŚatDū. 124. 28.

**अनुकूलस्वभाव** (anukūla-svabhāva) *adj.* of conducive nature कस्यचिदभूतस्य भवने अनुकूलस्वभावः करोत्यर्थः TautrRaha. 45.17.

**अनुकूलस्वभावता** (anukūlasvabhāva-tā) *f.* the state of being that which has agreeable nature सुखं ह्यनुकूलस्वभावतया स्वविषयमनुभवं कुर्वन् पुरुषान्तरमनुगृह्णाति NyāyKa. 260.1.

**अनुकूलहेतु** (anukūla-hetu) *m.* supporting reason अनुकूलहेतुमाह उद्गीथमिति ŚrutaPra. ii. 532. 25 (*on* iii. 3. 59)

**अनुकूला** (anukūlā) *f.* **1** name of a metre स्यादनुकूला भतनगगाश्चेत् ChandoMa. 2. 89 (comm. यदि पादे भतनगणेभ्यः परं गुरुद्वयं भवति तदा अनुकूला नाम वृत्तं स्यात्); अनुकूलाख्यमिदं छन्दः StavMā. 177.3; **2** name of a plant, *Croton polyandram* निकुम्भी तु श्योनघण्टा नागस्फोता च रेचनी। ··· पवित्रा स्यादनुकूला विशोधनी KalpaK. 176.394; RājNi. 53.18.

**अनुकूलाङ्गना** (anukūlāṅganā) *f.* faithful wife न केवला स्त्री राज्यार्हा पुरुषोऽपि तया विना।··· अनुकूलाङ्गनायुक्तमभिषिञ्चेदिति श्रुतिः BrahmāṇḍP. iii. 14. 15; अर्चयेत महालक्ष्मीमनुकूलाङ्गनासखः BrahmāṇḍP. iii. 43. 85.

**अनुकूलाचरण** (anukūlācaraṇa) *n.* **1** favourable activity गुरोरनुकूलाचरणं गुरुशुश्रूषा CaturCin. iii(1). 349.4; अनुकूलाचरणमेव प्रयोजकव्यापारत्वेनाध्यारोप्यते PadMañ. *on* KāśiVṛ. *on* P. iii. 1. 26; सः ···। गच्छमावर्जयामासानुकूलाचरणादिभिः Gurvā. 131; प्रियाकरोति गुरुम् । अनुकूलाचरणेनानन्दयतीत्यर्थः SiddhāKau. 325B. 25 (*on* v.4.63); **2** activity according to one's desire अनुकूलाचरणेन हि कुप्यन्ति व्याधयः SūktiRa. 32. 58; Subhāṣi. 417.

**अनुकूलात्मन्** (anukūlātman) *adj.* having favourable nature अपरेद्युर्मम महादेव्या यागनागस्य तुरगस्य चानुकूलात्मन्यहनि ··· सेनापतिः ··· संनिकायं विरचय्य ··· आचरत् YaśasCam. i. 288.7.

**अनुकूलानिल** (anukūlānila) *m.* favourable or pleasant wind अनुकूलानिलप्रोद्यद्घनच्छायसुशीतले। नीरजस्के महीपृष्ठे···नृपतिः···। देशानरण्यानि मुहुः पश्यन् SkandP. ii(2). 11. 88; सगरेण महीभुजा । अनुकूलानिलेनेवान्वीयमानोऽश्रुवर्षिणा। ··· आरोहच्छिबिकां सुप्रभां प्रभुः TriṣaŚaPuC. ii. 3.208; ii. 4. 38; अनुकूलानिलोद्धूताः ··· वैजयन्त्यो विरेजिरे PāṇḍaC. 4.44; मूकीभूय तमेव कोकिल मधुं बन्धुं प्रतीक्षस्व हे हेलोल्लासितमालतीपरिमलामोदानुकूलानिलम् Subbhāṣi. 721.

**अनुकूलानुबन्धिन्** (anukūlānubandhin) *adj.* resulting in what is agreeable अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् SāhiDa. 586. 10.

**अनुकूलानुभव** (anukūlānubhava) *m.* agreeable experience अनुकूलानुभवहेतुकं मनसो भवनम् GitāBh.(Rā.) 501.1 (*on* 10.4)

**अनुकूलापरिच्छिन्न** (anukūlāparicchinna) *adj.* (self-)desirable as well as unlimited अनुकूलापरिच्छ(? च्छि)न्नतेजोद्रव्यं स्वयंप्रभम् । ··· ब्रह्मशब्दितम् NītiMā. 37.2.

**अनुकूलाभास** (anukūlābhāsa) *adj.* causing favourable impression जीवरूपेण सकललोकप्रत्यक्षसिद्धस्य परमेश्वरस्य प्रतिपत्त्यर्थं परान् प्रति प्रश्नोऽनुकूलाभासः RasGaṅ. 609.14.

**अनुकूलारि** (anukūlāri) *m.* enemy appearing favourable अनुकूलारिभिः पापैर्मित्रशब्देन धारिभि (v. l. मित्रशब्दनधारिभिः JPMJGM. 24, 1959)। प्रेरितेनस ता त्यक्तंधर्मरत्नं सदा मया PadmP.(Ra.) 41.36.

**अनुकूलार्थ** (anukūlārtha) *adj.* having favourable or consistent sense एवं सत्यनुकूलार्थं तत्त्वमित्यादिकं वचः BṛĀraUBhVā.(Sambandha.) 246; *m.* desired sense तच्छ्रवणाद् ध्यायमानो निष्कलं ब्रह्म पश्यतीत्यनुकूलार्थस्यैव पर्यवसानात् AdvaiSi. 862.18.

**अनुकूलालय** (anukūlālaya) *n.* favourable (astrological) house अनुकूले (v. l. अनुकूलालये Bangalore Ed. 1956) ये तुङ्गे नीचे JaimiUpaSū. iv. 2.25.

**अनुकूलालाप** (anukūlālāpa) *m.* agreeable talk or conversation बन्धुभिश्चानुकूलालापकुशलैः सहासीत Mitā. 38.14 (*on* 1.113)

**अनुकूलाशन** (anukūlāśana) *n.* favourable (i.e. nutritious) food सा अन्तर्वत्नी ··· परिपालयती ··· अनुकूलाशनाद्युपयोगं च कुर्वती AitUBh. 280.11 (*on* 4.2)

**अनुकूलाशुभात्मक** (anukūlāśubhātma-ka) *adj.* of auspicious and inauspicious nature पुनर्वसुगतविप्रसंस्कारानुवादेनानुकूलाशुभात्मकानेककालविधौ ··· बहुतरदुष्परिहरवाक्यभेदापत्तेः BālamBha. i. 71.27 (*on* 1.14)

**अनुकूलिका** (anukūl-ikā) *adj.* (*f.*) favourable यद्येषा भवेन्नास्यानुकूलिका । ततो निग्रहमेतस्याः कर्तास्मि सुविनिश्चितम् PadmP.(Ra.) 12.38; स्वाधीनामनुकूलिकां स्वगृहिणीमालिङ्ग्य यत् सुप्यते तत् किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते ŚārṅgaPa. 3782; Subhāṣi. 2398.

**अनुकूलित** (anukūl-ita) *adj.* [*f.* -ā] **1** honoured (राघवेण) मन्त्रिणो नैगमाश्चैव यथार्हमनुकूलिताः Rāmā. vii. 74.6; **2** rendered favourable or agreeable अनेन (आत्मना) भावाभावबुद्धिव्यपदेशव्यवहाराः ··· अनुकूलिता भवन्ति TātpaṬ.(Vā.) 689.10 (*on* v. 1.30); राजा ··· आस्थानलोकं च सकलमनुकूलितावनीन्द्रमानसम् ··· अपश्यत् UdaySuKa. 156.13; सा विरहदहनदूना मृत्वा मृत्वापिजीवति वराकी । शारीव कितव भवतानुकूलिता पातिताक्षेण ĀryāSaŚa. 623; भक्त्यानुकूलिता ह्येते कामदाः कल्पपादपाः PāṇḍaC. 7.691; लोभनन्देरपि स्वामी तथा तेनानुकूलितः । यथा निःस्वोऽप्यसौ जज्ञे महर्द्धिभरभासुरः PārśvC. 3.455; स्पार्शनज्ञानमप्यनुकूलितं स्यात् Nyāyāmṛ. 222A.6; अनुकूलिताश्च प्रसाददानादिभिर्लोकपालाः KaṁVa. 7.24(2); त्रिभिः प्रसादैरनुकूलितोऽहं व्यलङ्घयं गोष्पदवत समुद्रम् MahāN. 5.71 [*anukūlita* synonymous with *vaśīkṛta* ŚabdaRa.(Vā.) 3362]; *n.* appeasement उपग्रहो भवेद् वन्द्यामनुकूलित एव च NānārthSaṁ. 15.12.

**अनुकूलिन्** (anukūl-in) *adj.* [*f.* -ī] acting favourably इन्द्रियाणां नानुकूली वेगरोधं न कारयेत् AgniP. 155.26; स्वाधीनामनुकूलिनीं स्वगृहिणीमालिङ्ग्य यत् सुप्यते तत् किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते SaraKaṇṭhā. 628.10; SubhāRaK. 24.17; SūktiMu. 75.4; MādhavāĀ. 211.

**अनुकूलीकृत** (anukūlī-kṛta) *adj.* propitiated कुर्वता भवता सङ्गं कृता स्वद्रौं सुसंगतिः । अनुकूलयता हि त्वामनुकूलीकृतोऽर्थदः AlaṅkāMañ. 145.6.

**अनुकूलीभूय** (anukūlībhū-ya) *ger.* having become favourable सोऽपि करिष्यत्यचिरादनुकूलीभूय तया सह युवयोः संगमं समकालम् UdaySuKa. 117.29.

**अनुकूलेतरजन** (anukūletara-jana) *m.* person other than the agreeable one दया हि स्वार्थनिरपेक्षा परदुःखासहिष्णुता । अत्रानुकूलेतरजनः पर इति विवक्षितः ŚrutaPra. iB. 96.10 (*on* i. 1.1)

**अनुकूलेतरविकल्प** (anukūletara-vikalpa) *m.* constructional cognition which is appropriate and otherwise एकमेव दर्शनमनुकूलेतरविकल्पोपजननतदनुत्पादभेदात त्रिधा कथ्यते NyāyMañ. i. 23.23.

**अनुकूलेतरविषय** (anukūletara-viṣaya) *m.* object which is favourable and otherwise सुखदुःखे अनुकूलेतरविषयोपलम्भसंभवे NyāyMañ. ii. 78.27.

**अनुकूलेश्वरविप्र** (anukūleśvara-vipra) *m.* well-disposed and capable brahmin असुरयूथनाथाः ···। यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति BhāgP. viii. 17.16.

**अनुकूलैकप्रवृत्ति** (anukūlaika-pravṛtti) *adj.* whose activity is only favourable मनोवाक्कायैरनुकूलैकप्रवृत्तिः भित्रम् CaturCin. iii(1). 461.22.

**अनुकूलोक्त** (anukūlokta) *n.* agreeable words नातुरः प्रतिकूलोक्तैर्वशे वैद्यस्य वर्तते । वर्तते त्वनुकूलोक्तैः KathāSaSāg. vi. 5.86.

**अनुकूलोदाहरण** (anukūlodāharaṇa) *n.* illustration of an *anukūla* type of hero अनुकूलोदाहरणम् — अनिशमयमिहास्ते ··· धन्या त्वमेव ŚṛṅgāMañ.(A.) 49.28.

**अनुकूलोपगम** (anukūlopagama) *m.* acceptance of what is favourable or conducive वृक्षादयः प्रतिनियतभोक्त्रधिष्ठिताः ··· जीवनमरण° ··· °अनुकूलोपगमप्रतिकूलापगमादिभ्यः प्रसिद्धशरीरवत् Kiraṇā. 58.2; न खलु भोगाधिष्ठानत्वमन्तरेण जीवनमरण° ··· °अनुकूलोपगमप्रतिकूलापगमादयः संभवन्ति Upask. 213.12 (*on* iv. 2.5)

**अनुकूलोपस्थिति** (anukūlopasthiti) *f.* presentment of what is conducive करोतेः सकर्मकत्वानुरोधाल्लक्षणया अनुकूलोपस्थितेः संभवात् तादृश एव बोधः LaCandr. 481.32.

**अनुकूल्यमान** (anukūlya-māna) *adj.* **I** being approved सः (राजा) ··· सदैव देवैरनुकूल्यमानाभिकमनीयकेलिः कालमतिवाहयांचक्रे UdaySuKa. 25.21; **II** being fondled सा नाम कन्यका ··· सखीभिरनुकूल्यमानान्तःकरणवृत्तिरवस्थितिं चक्रे UdyaSuKa. 97.16.

**अनुकृ** (anu-kṛ-) VIII. U. [only P. acc. to P. i. 3.79; JaineVyā. i. 2.76; CāndraVyā. *on* i. 4.131; KātanVṛ. iii. 2.47; ŚākaṭāVyā. i. 4.72; SiddhaHe. iii. 3.101; MugdhaBo. 22.1 (134.19); it has grammatical object in Acc. or in Gen.] **1** to follow, to do after, to imitate, to follow in appearance, (reflexive pass.) to follow oneself, to do after oneself, (pass.) to be followed, to be done after, to be imitated, (*caus.*) to cause to follow, to cause to imitate, (*caus.*, pass.) to be made to follow **2** to repeat after, to quote, to reproduce, (pass.) to be repeated after, to be quoted, to be reproduced **3** to mimic, to imitate in order to ridicule **4** to cause, to bring about, to accomplish **5** to match, to resemble, to be equal, (pass.) to be resembled, to be matched by, to be equalled by, (*caus.*) to cause to resemble, (*caus.*, pass.) to be caused to resemble **6** (*caus.*) to make (oneself) favourable **7** to consent, to agree **8** to represent dramatically **1** to follow, to do after, to imitate, to follow in appearance यद् यद् एव देवा यज्ञेऽकुर्वत, तत् तद्देवासुरा अन्वकुर्वत । ते देवा अब्रुवन् – यद् यद् वाव वयं यज्ञे कुर्महे, तत् तन्नोऽसुरा अनुकुर्वते JaimiBr. 2.99; 3.41; आहाराचारधर्माणां यत् कुर्याद् गुरुरीश्वरः । तथैव चानुकुर्वीत नानुयुञ्जीत कारणम् ŚivU. 7.39; यत्कुमाराः कुमार्यश्च वैरं कुर्युरचेतसः । न तत्प्राज्ञोऽनुकुर्वीत MahāBhā. i. 74.7; यां कृतां नानुकुर्युस्ते मानवाः प्रेक्ष्य विस्मिताः । मनुष्यलोके कृत्स्नेऽस्मिंस्तादृशीं कुरु वै सभाम् MahāBhā. ii. 1.10; शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा । गरुडानिलयोः शैघ्र्यमनुगच्छन्ति (v.l. अनुकुर्वन्ति) योषितः Rāmā. iii. 12.6; iii. 742*; अन्या ···। प्रावृत्यानुचकारास्य चेष्टितं धीरलीलया BuddhaC. 4.39; ते वीराः ··· अनुचक्रुर्वनस्थस्य दौष्मन्तेर्देवकर्मणः Saund. 1.36; अथैनं घृतसंसृष्टैस्तिलैः पिष्टैः प्रलेपयेत् । बन्धं ततोऽनुकुर्वीत परिषेकं तु सर्पिषा SuśruS. iv. 8.22; ग्रामवासी च ··· नागरकजनस्य वृत्तं वर्णयञ्श्रद्धां च जनयंस्तदेवानुकुर्वीत KāmSū. 59.21 (1.4); 166.3 (2.9); तान्यपि षष्टिः पुत्रसहस्राण्यसमञ्जसचरितमेवानुचक्रुः ViṣṇuP. iv. 4.11; क्षुपस्यानुकरिष्यामि महाराजस्य चेष्टितम् MārkP. 120.8; पुरुषोऽपि मयूरवाशितमनुकरोति NyāyBh. 107.2 (*on* ii. 1.38); भीमस्यानुकरिष्यामि बाहुः शस्त्रं भविष्यति Mṛcch. 6.17; 9.34; सर्वस्यानुकरोति वेषवचनैः पालाशत्रासा बुधः Sārā. 4.24; यश्च ··· तेजसि ··· सर्वदेवमयस्य प्रकटितविश्वरूपाकृतेरनुकरोति भगवतो नारायणस्य Kād. 6.4; KāvyālaṅSū. v. 2.44; PadMañ. *on* KāśiVṛ. *on* P. ii. 3.52; ऋते च महाप्राणतायाः सर्वाभिरन्याभिः कलाभिरनुचकार तं वैशंपायनः Kād. 76.8; जरातुरः संप्रति दण्डनीत्या सर्वां नृपस्यानुकरोमि वृत्तिम् Nāgā. 4.1; PriyaDa. 3.3; तदेतत् प्राकृत(जाल ?)पुष्पजालजटिलमधुना स्थानमानावरोपितस्यानुकरोति पुंसः AvantiKa. 190.8; आचार्यः सर्वचेष्टासु लोक एव हि धीमतः। अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः AṣṭāHṛ. i. 2.45; ŚukraNī. 3.33; वस्तुतस्तु न किंचिदसावनुकरोति (विकल्पः) HetuBiṬ. 34.1; 95.2; यद्यद् देवी करिष्यति । तत्तदेवानुकुर्यास्त्वम् BṛKathāŚloSaṁ. 11.69; 11.72; सृष्टौ कृतयुगे नानामतानि नानासंस्काराश्च ऋषिभिर्व्याख्यातानि व्याख्याताश्च ··· शिष्यास्तदनुचक्रुर्भावनामाचारांश्च PārāSū. 91.4; वासुदेवसातवाहनशूद्रकसाहसाङ्कादीन् सकलान् सभापतीन् दानमानाभ्यामनुकुर्यात् KāvyMī. 55.8; 55.14; ललाटम् ··· अनुकुरुते दृश्यमानाङ्कपङ्कम् । यस्योद्यत्पार्वणैणाङ्कनशकलमलं तद् भवद्भाग्यपुष्टिम् ··· उपचिनुतादास्यम् JinaŚ. 3.5; अपहाय भुजवीर्यमन्वकृत हरिवाहनस्य सर्वानपि गुणानात्म-

गुणगणेन प्रगुणितश्च … राजानमिव तमहर्णि( र्नि )शमसेवत ( समरकेतुः ) TilaMañ. 104.21; विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः । नेच्छन्ननुकरोत्यज्ञः क्लैब्यात् क्रीडामृगो यथा BhāgP. iv. 25.62; vii. 4.40; विकल्पः स्वोत्पत्तावर्थेन्द्रिययोरन्वयव्यतिरेकावनुकरोति NyāyKa. 191.19; NyāySu.(Ja.) 80B.11 (*on* i.1.1); यथा हि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्ष्यमाणानुकरोति नर्तकी Bhām. 74.3 (*on* i. 1. 3); न च संदिग्धव्यतिरेकिता अर्थसामर्थ्येन हि तदुत्पद्यमानं अर्थरूपमनुकुर्याद् न शब्दरूपम् TātpaṬ.(Vā.) 134.14 (*on* i.1.3); मातुस्ते विधां मानुकुर्वीथाः RāmāCam. 2.34(8); कवयः केचन ससौष्ठवैरक्षरैः सप्राणां वाचमुल्लासयन्तः कोकिलमनुकुर्वन्ति UdaySuKa. 18.11; तव विरहे वनमाली सखि सीदति।… दहति शिशिरमयूखे मरणमनुकरोति GītGo. v. 10.2; भवानपि करोत्वेवं पूर्वाननुकरोतु च। विवाहराज्यवहनदीक्षानिर्वाणसाधनैः TriṣaŚaPuC. iv. 2.98; स्थानयानासनानां मध्ये यद् बह्वीभिः ( गोभिः ) क्रियते तदनुकुर्यात् Aparā. 1101.23 (*on* 3.265); पिकशिखिकलहंसक्रौञ्चपक्षिप्रजानां ध्वनितमनुकरोतीत्यङ्गना यत्र चार्ता PañcSā. 5.27; अर्थादुपजायमानं ज्ञानं यथा तस्य नीलाकारतामनुकरोति तथा यदि जडतामपि तर्ह्यर्थवत्तदपि जडं स्यात् SarvaDaSaṁ. 3.57; प्रत्युपकुर्वन् बह्वपि न भवति पूर्वोपकारिणा तुल्यः। एकोऽनुकरोति कृतं निष्कारणमेव कुरुतेऽन्यः Śārṅga-Pa. 260; Subhāṣi. 516; कुचकोकमुखे विधाय कार्ष्ण्यम् … नियतं कुरुनेतुरन्वकार्षीज्जठरस्थो जगदीशसूनुरिन्दोः Acyutarā. 2.5; 10.27; कल्पवृक्षः कामधेनुश्चिन्तामणिमुखानि किम्। अनुकुर्वन्ति श्रीवत्समन्त्रराजम् BṛBrahmaS. i.6.3; ii.2.38; सर्वोऽपि पदार्थस्तमेवानुकरोति सूर्यं रश्मय इव छाया पुरुषमिव AnuBh. 86.7 (*on* i. 3. 22); नतोदरि तव वृत्तान्तमनुकरोति वासवीयं ( दिक् ) पश्य VasaTi. 46.3; (reflexive pass.) to follow oneself, to do after oneself एवमपि शेषग्रहणं कर्तव्यमनुपराभ्यां कृञः इत्येवमर्थम्। इह मा भूत्। अनुक्रियते स्वयमेव MahāBh. i. 277.11 (*on* i. 3.12); i. 293.20 (*on* i. 3.78); PadMañ. *on* KāśiVṛ. *on* P. i. 3.79; (pass.) to be followed, to be done after, to be imitated पूर्वाद्रौ स( ? सू )र्यपादे चरति विसृजता चन्द्रपादावदातं तल्पं तेनानुचक्रे मलयतरुरसामोदितांसद्वयेन JānaHa. 3.81; तत्राभियुञ्जाना तमौमेयी यं वेषं यथेष्टमसेविष्ट स तत्रत्याभिः स्त्रीभिरन्वक्रियत KāvyMī. 8.5; सदा स्ववाचा मनसा च कर्म्मणान्वकारि येनाधिगुणेन कुण्डिनः EI. vi. 357.80; नारायणोऽजनि महीपतिरन्वकारि येन स्फट ( Read स्फुटम् ) स भगवान ( Read न् ) श्रितनन्दकेन EI. xix. 280.8; अब्जिनीप्रणयिना हिमद्युतेरन्वकारि न परं निरूष्मता।… अपि च तत्कलात्मता Acyutarā. 4.17; (*caus.*) to cause to follow, to cause to imitate यो हि विषयः स्वस्यान्वयव्यतिरेकज्ञानमनुकारयति, स प्रत्यक्षः Praka-Pañ. 69.5; 139.9; स एव चार्थः प्रत्यक्षगोचरो यो ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकावनुकारयति TātpaṬ.(Vā.) 17.20 (*on* i. 1.1); AlaṅkāSa. 179.8; ĀtmaTaVi. 94.2; आकर्षकः अयस्कान्तः लोहमात्मभावं नयति, स्वव्यापारं लोहं कारयति, स्वमनुकारयति ŚrutaPra. iA. 248.23 (*on* i. 1.1); (*caus.* pass.) to be made to follow यथा यथा विक्रियते गुणाक्तो विकरोति वा। तथा तथोपद्रष्टात्मा तद्वृत्तीरनुकार्यते BhāgP. iv. 29.17; **2** to repeat after, to quote, to reproduce अथैनमनुपरिवर्तयत ऋतुभिस्त्वार्तवैः संवत्सरस्य धायसा तैस्त्वा सहानुकरोमीत्येवमेवोत्तरं प्रवर्तमाबध्नीते BaudhŚS. ii. 323.2; 'आयुष्यं वर्चस्यम्' इत्येताभिः पञ्चभिः सहानुकरोति ĀgniveGS. i. 3.5 (22.13); तथा चापस्तम्बस्तान्येवानुकरोति। 'वसन्ते ब्राह्मणमुपनयीत' इत्यादि BālaKrī. i. 34.1 (*on* 1.14); i. 96.15 (*on* 1.105); सिद्धान्तयत्सूत्रांशमनुकरोति। नेति TattvPrakā. 25A.11 (*on* i. 1.25); 188A.13 (*on* iii.4.10); तमन्योऽनुकरोति द्विः पठतीत्याहेति PariVṛ.(Sī.) 36.16; यथा कुमारी ऋतक इति प्रयोक्तव्ये ल्तक इत्याह। तदन्योऽनुकरोति Prasā. i. 12.18; (pass.) to be repeated after, to be quoted, to be reproduced अम्बाम्बेत्यत्र हि लक्षणप्रतिपदोक्तपरिभाषया 'सुपि स्थः' इति विहितकप्रत्ययान्त एवानुक्रियत इति सिद्धान्तः PariVṛ.(Nī.) 20.1; **3** to mimic, to imitate in order to ridicule तस्य राजा सिंहगतेः सखेलं दुर्योधनो भीमसेनस्य हर्षात्। गतिं स्वगत्यानुचकार MahāBhā. ii. 68.23; अनुकुर्वन् ( v.l. अन्वकुर्वन् ) उलूकानां सारसा विरुतं तथा। अजाः शिवानां च रुतमन्वकुर्वत MahāBhā. xvi. 3.5; SkandP. vii(1). 237.30; न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ManuSm. 2.199 ( ManvaVi. परिहासबुद्ध्या तत्सदृशं गत्यादि न कुर्यात् ); गतिचेष्टाभाषिताद्यं नास्यानुकुर्यात् ViṣṇuSm. 28.25; न नीचैः संवसेत् …। तथा नोपहसेत् कंचिन्नानुकुर्यान्न पीडयेत् MṛgendraT. iv. 1.64; दयितस्य …। ललितैरङ्गविकारैः क्रीडन्त्यो वानुकुर्वन्ति Kāvyālaṅ.(Ru.) 13.3; गाम्भीर्यौदार्यधाष्टर्यप्रमुखगुणगणं मत्पतिं मानुकार्षीः Rāṣṭrau. 20.94; **4** to cause, to bring about, to accomplish सुखप्रेप्सुर्विजिघांसुश्च दुःखं य इन्द्रियाणां प्रीतिवशानुगामी। कामाभिध्या स्वशरीरं दुनोति यया प्रयुक्तोऽनुकरोति दुःखम् MahāBhā. v. 26.4; राजा … अश्वमेधादि करिष्यत्यतुलं च सुखमनुकरिष्यति ManuBh. ii. 65.23 (*on* 7.213); **5** to match, to resemble, to be equal दिलीपम् … मृतं शुश्रुमः …। यस्य कर्माणि भूरीणि कथयन्ति द्विजातयः।… एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे MahāBhā. xii. 29.70; पुष्पं प्रवालोपहितं यदि स्यात् … ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य KumāSaṁ. 1.44 = SaraKaṇṭhā 608.1 = AlaṅkāSa. 68.10 = ŚārṅgaPa. 3318; एष सुरापणो यज्ञवाटविभूतिमनुकरोति MattaVi. 9(4); कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम्। राजन्ननुकरोषि Kāvyāda. 2.50; SaraKaṇṭhā 134.11; तपस्विनोऽपि वेवेष्टमानमहोरगपरंपराणां गणतलमनुकरोति स्म मूलरसातलस्य( ? ) AvantiKa. 103.4; मुखसरोजरुचं मदपाटलामनुचकार चकोरदृशाम् … कमलम् ŚiśuVa. 6.48; अभ्रम्। सरिन्मुखाभ्युच्चयमादधानं शैलाधिपस्यानुचकार लक्ष्मीम् Bhaṭṭi. 2.8; संजीवनौषधिविषव्यतिकरमालोकतिमिरसंभेदम्। अद्य विधिरशनिशशधरमयूखसंवलमनुकुरुते MālaMā. 10.79 (comm. सदृशीकरोति ); अनिमेषं पश्यन्ती मत्स्यवधूमनुचकार सा तन्वी Kuṭṭa-Ma. 271; शोकेन यस्य मलिनानुकरोति मन्दसंचारिणी रिपुवधूर्निजदृष्टिमेव HarVi. 16.33; यथाग्निं भान्तमयःपिण्डोऽनुभात्यनुकरोति BrahmSūBh. (Bhā.) 59.11 (*on* i. 3.22); यस्याभिषेकरुचिरा गिरयो जङ्गमा इव। मतङ्गशासनादत्र कुञ्जराननुकुर्वते RāmāMañ. 166.16; राज्ञी …। उदेष्यच्चन्द्रलेखां च प्राचीमनुचकार सा। आसन्नप्रसवा KathāSaSāg. vi. 2.2; श्रिया यदेषानुकरोति पूर्दिवम् Rāvaṇā. 2.59; दार्ढ्येन गौरीकैलासौ तदा तावनुचक्रतुः। अस्त्रैरस्त्राणि तक्षन्तौ तक्षायस्कारमक्षतौ DvyāśraKā. 5.123; यस्याश्चानुकरोति नेत्रयुगलं नीलोत्पलानि श्रिया तां कुन्दार्हदतीं त्यजन् जिनपती राजीमतीं पातु वः Vāgbhaṭā. 4.51; अश्वत्थामा …। न परं पितरं मूर्त्या योऽनुचक्रे गुणैरपि PāṇḍaC. 3.256; महेन्द्रः। अनेहसं रक्तशिलीन्ध्रजालैराकालिकैरञ्चितमन्वकार्षीत् Yādavā. 7.11; धाराधराः …। अदभ्रघोरध्वनयोऽनुचक्रुः … शक्रमतङ्गजानाम् Yādavā. 7.42; 11.71; 12.42; 13.58; मुहुरुत्पथगामिनी तुलुष्कानधुना ह्यानुकरोति सह्यकन्या MadhuVi. 8.6; अनुकुरुतः खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः। विदधाति रन्ध्रमेको गुणवानन्यस्तु पिदधाति ŚārṅgaPa. 239; कृष्णो मुख्यस्तत्सदृशः प्रद्युम्नः स कृष्णमनुकरोति Prasā. i. 433.19; सुदृगाली। वारिदोदरवलद्विधुबिम्बामावलिं क्षणरुचामनुचक्रे YātrāPra. 6.29; पाठीनान् कमठैः समं विलुठतः सर्वेऽनुकुर्वन्तु ते Jīvān. 90.3; 148.5; गावो हि सूकरं चतुष्पात्त्वेनानुकुर्वन्ति वत्सबुद्ध्या वानुधावन्ति MayūMāli. 32.6 (*on* i. 3.5); सा …। मणिनूपुरक्वणनतोऽनुमिलत्कलहंसिकानिकरमध्यगता। बहुवर्णभूषणतयान्वकरोच्छरदम्बुदोत्थहरिचापरुचम् Rāgh. 8.6; 11.5. 14.7; (pass.) to be resembled, to be matched by चित्राभिरस्योपरि मौलिभाजां भाभिर्मणीनामनणीयसीभिः।… गोवर्धनस्याकृतिरन्वकारि ŚiśuVa. 3.4 = SūktiSu. 38; ŚiśuVa. 3.37; वियोगतोऽनुक्रियतेऽश्रुशीकरैरनुत्तमानस्तनितम्बभारया। स्त्रियात्र सा मेघघटा HarVi. 5.121; 42.4; यत्रान्वकारि चलचीनजवैजयन्तीविन्याससारशिखरैर्भृशमैन्द्रनीलैः। ओकोभिः … विहायसः श्रीः Kapphiṇā. 1.4; यस्यानुक्रियते सनातनयशोराशिर्दिशामाशये श्वैतिम्ना यदि पौर्णमासरजनीज्योत्स्नातिभारश्रिया EI. iv. 248.7; भ्रूलेखयाकुञ्चितयोल्लसन्त्या। नाकारमात्रेण परंतपस्य यस्यान्वकारि क्रिययापि चापम् NavaSāC. 1.76; अन्वकारि पुलकैरणूदरीबाहुनद्धपरिणेतृसंवृतैः।… शम्बरारिशरशल्यमण्डली YātrāPra. 4.132; मुक्तासरैः …। अन्वक्रियन्त … अम्बुकणा द्युसिन्धोः Rāgh. 17.19; (*caus.*) to cause to be similar अधिकृतानां च अग्निहोत्रादिसमस्तवैदिककर्मसु पुनरपि भगवदाराधनाधिकारसिद्धये दीक्षालक्षणसंस्कारवर्णनं तद्वैदिकतामेवानुकारयति ĀgaPrā. 10.17; (*caus.* pass.) to be caused to resemble किमन्वकारि द्रुमुतान्वसारिध्वं किं नु मेहिध्व इनेन भामिः DvyāśraKā. 2.51 (KośaKaTa. 2.1693); **6** (*caus.*) to make (onself) favourable अभिमानं च मानं च त्यक्त्वा वर्तस्व मातृषु। अनु राजानमार्यां च कैकेयीमम्ब कारय Rāmā. ii. 1261*(2); **7** to consent, to agree करोमि यास्यामि वेति कृतमुक्तम्, ओमित्यनुकरोत्यन्यः, अतः ओंकारोऽनुकृतिः TaiUBh. 209.3 (*on* 1.8); **8** to represent dramatically इयत्तु स्यात् उत्तमप्रकृतेर्यैः शोकानुभावास्ताननुकरोमीति AbhinBhā. i. 275.22 (*on* 6.31); Kāvyānu.(He.) 72.19; त्वदात्मिकास्ताः ( गोपिकाः ) यमुनातटान्ते तवानुचक्रुः किल चेष्टितानि Nārāy. x. 67.7.

**अनुकृत्** ( anu-kṛt- ) VI. P. [P. vii. 1.59] to cut, to pierce परश्वधैश्चाप्यकृन्तन् ( v.l. °न्वकृन्तन् ) उत्तमाङ्गानि युध्यताम् MahāBhā. viii. 8.4; वचोभिरेभिरार्तं मां भूयस्त्वमनुकृन्तसि Rāmā. ii. 239*(14)

**अनुकृत** ( anu-kṛta ) *adj.* [*f.* -ā] **i** imitated by, followed by, adapted मौद्गल्य कलभेन खलु यूथपतिरनुकृतः Mālavikā. 5.16(2); खड्गस्यानुकृतक्रूरपातालातस्य साधुता।… आसीत् HarVi. 43.178; अनुकृतनरलोकलीलनील … शाद्वले निविष्टः RāmC. 6.71; न ग्रीष्मान्तदिनाभस्य महत्त्वेऽनुकृतं परैः DaśāvaC. 5.10; त्वया मदीयोऽथ मया त्वदीयो राजन् प्रतापोऽनुकृतस्त्वयीति तर्काकुलो भानुरुदेति DvyāśraKā. 2.17; चिञ्चाद्रुमैरनुकृतप्लक्षन्यग्रोधपादपम्।… तमष्टयोजनोत्सेधमारुरोह गिरिं प्रभुः TriṣaŚaPuC. i. 6.405; प्रभुर्भुवः सपदि बभूव भासुरः …। परिष्कृतामनुकृतकल्पशाखया प्रभावतस्तनुलतया पवित्रया NemiNir. 2.31; अनुकृतकरलीलालोलकल्लोलतापीनलिनवदनताद्दृक्चुम्बनक्रीडयेव। मृदुतरगतिरागात् संमुखीनः समीरः HammīMaMa. 2.15; **ii** resembled by, equalled by, matched by अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ त्वयि सरभसमभ्युत्तिष्ठतीवा-

द्रिरुच्चैः ।… अम्बुवाहैः ŚiśuVa. 4.68; वपुषोऽविद्यमानत्वाद्यद्यत्कृत्यं करोति सः । तत्र तत्रास्य तत्कर्तृवपुषानुकृतं वपुः MṛgendraT. ii. 3.41; अभिमतजनसंगमेऽङ्गनानामनुकृतकोमलसीरिपाणिपद्माः । इह मनसिजविभ्रमा विभान्ति HarVi. 5.19; 28.28; 28.80; 41.46; परिहृतैरिह तैः … मकरैरुदधेर्जलैः । उपरुषा परुषा नयनावलिः समुदिता मुदितानुकृता RāghPāṇ.(Dha.) 8.5; बालोन्मीलत्कुवलयवनम् … अनुकृतपयःपूर्णमेघान्धकारम् । हर्षात्पश्यति … मयूरः NalaCam. 5.39; अयमनुकृतवल्लीफुल्लतापिच्छगुच्छो रणभुवमवतीर्णः कार्मुकी रामभद्रः BālRā. 9.18; MahāN. 9.75; अनुकृतसमवर्तिपानलीलाचषककरालकपालशुक्तिमध्ये । करिदशनपरंपरा निपत्य श्रियमतनोदुपदंशमूलकानाम् VikraDeC. 6.85; मृदङ्गै रुद्धवद्भिर्यां ध्वनिनानुकृतो घनः DvyāśraKā. 3.55; तिष्ठन्नुष्ट्रे वसानो वसनमनुकृतप्लक्षबालप्रवालम् ।…दृष्टः… सर्वतापो मयाद्य TripuDi. 4.3; कल्पवृक्षपोतैरुपवनराजिषु तस्य संचरिष्णोः । अदभ्रुरवयदैर्मुदं मुरारेरनुकृतपुष्पफलादिकैस्तरुण्यः Yādavā. 24.13; अनुकृतगण्डशैलमदमण्डितगण्डतटभ्रमदलिमण्डलीनिबिडगुंगुमघोषजुषः । दलयति हेलयैव हरिः…करिणः Subhāṣi. 606; नद्येषा न्युब्जचर्मानुकृतकमठका संयमिन्यां प्रयाति Manmatho. 3.30 (639.10); **iii** (sound) uttered in imitation (of another sound), quoted कृते चर्त्वे 'एत्येधत्यूठ्सु' इत्यत्रानुकृत इति भावः Pradī. v. 283A.4 (*on* vi. 4.19); केवलं यत् तस्याभिधानमनुकार्यं तन्नानुकृतं, यच्चानुकृतं तत्तस्याभिधानमेव न भवति VyaktiVi. 102.21 = Kāvyānu.(He.) 196.10; VyaktiVi. 111.9; **iv** dramatically represented स च नायको दृष्टः श्रुतोऽनुकृतो वा रसस्याश्रयतामालम्बते RasāSu. 173.5 (2.166)

**अनुकृतचरित** (anukṛta-carita) *adj.* whose movement is followed अनुकृतचरितः पुलिने …। युवतिचमूभिः (वनमाली …। जयति) StavMā. 242.3.

**अनुकृतनरलीला** (anukṛta-naralīlā) *adj.* (*f.*) which has imitated the human sports अवतरति हि शक्तिः काप्यसौ रूपिणी श्रीः । अनुकृतनरलीलां तामुरीकृत्य नीत्वा कतिपयदिनमन्तर्धापयामास देवः CaitaCa. 11.8(1)

**अनुकृतनिजशक्ति** (anukṛta-nijaśakti) *adj.* who has equalled his own powers (पुरुषोत्तमः) अनुकृतनिजशक्तिभिः प्रियाभिः … कन्दुकैरदीव्यत् Yādavā. 24.32.

**अनुकृतपक्षिन्** (anukṛta-pakṣin) *adj.* who resembles birds गोमण्डलरक्षिणमनुकृतपक्षिणम् … वन्देमहि (त्वामिह दामोदर) StavMā. 48.27 (*but* comm. सादृश्यं नीताः पक्षिणः … येन)

**अनुकृतप्रवर्ग्यदीप्ति** (anukṛta-pravargyadīpti) *adj.* resembling the brilliance of the sacrificial fire (of Pravargya rite) कुरुवृद्धवचः … दमघोषप्रभवो निशम्य दीप्तः । प्रभयानुकृतप्रवर्ग्यदीप्तिः प्रतिरुन्धानदुरासदो ररास Yādavā. 15.73.

**अनुकृतरघुकार** (anukṛta-raghukāra) *adj.* who has imitated (Kālidāsa) the author of the Raghu(vaṁśa) अनुकृतरघुकारः … जयति कविरुदारो दण्डिदण्डः शिवाङ्कः Kappbiṇā. 20.47.

**अनुकृतराजगृह** (anukṛta-rājagṛha) *adj.* resembling a palace अनुकृतराजगृहाः सलीलम् । क्रीडन्ति निर्झरजलैः … नागाः HarVi. 5.51.

**अनुकृतवत्** (anukṛta-va(n)t) *adj.* [*f.* -ī] **i** who has imitated कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन् किल यस्य गोपवध्वः BhāgP. i. 9.40; **ii** who has acted favourably अजानता च मया तदंशावतीर्णे त्वयि प्रयुक्तोऽनुकृतवानेषोऽपि यथोचितं पूज्येषु UdaySuKa. 89.17.

**अनुकृतवल्लीविभ्रमा** (anukṛta-vallīvibhramā) *adj.* (*f.*) resembling the grace of a creeper प्रियमनुकृतवल्लीविभ्रमा वेष्टयन्ती द्रुममिव सरलाङ्गी RatiRaha. 6.5.

**अनुकृतवात्यारंहस्** (anukṛta-vātyāraṁhas) *adj.* resembling the speed of gale दधुः … श्रियमनुकृतवात्यारंहसः सैनिकानाम् ।… अश्वाः HarVi. 41.9.

**अनुकृतवानराकृति** (anukṛta-vānarākṛti) *adj.* who has imitated (i. e. is disguised in) the form of a monkey निशाचरावथ शुकसारणाभिधावुपागतौ … अनुकृतवानराकृती Rāgh. 16.59.

**अनुकृतविकटकुकूल** (anukṛta-vikaṭakukūla) *adj.* resembling the fierce chaff-fire राधे निगद निजं गदमूलम् । उदयति तनुमनु किमिति तापकुलमनुकृतविकटकुकूलम् StavMā. 264.20.

**अनुकृतविश्वविग्रह** (anukṛta-viśvavigraha) *adj.* assuming various forms माययानुकृतविश्वविग्रहैर्दुर्ग्रहैः परिवृता निशाचरैः । कुत्र विश्वसितु पुंसि जानकी Rāgh. 11.72.

**अनुकृतशक्रशक्रजित्क** (anukṛtaśakraśakrajit-ka) *adj.* who had imitated Indra and Indrajit प्रागलभ्यादनुकृतशक्रशक्रजित्कैः … आक्रुष्टस्थविरहसां निशाटडिम्भैः … अद्राक्षीदमरविरोधिराजधानीम् (हनूमान्) Rāgh. 12.51.

**अनुकृतसामुद्रवृद्धि** (anukṛta-sāmudravṛddhi) *adj.* imitating the surging tide of the ocean तेऽपि राजहंसाः … शश्वदनुकृतसामुद्रवृद्धिषु चन्द्रमण्डलरूपेष्विव सरःसलिलेषु विहरन्तः … आसेदुरुद्यानं निषधायाः NalaCam. 5.5(2)

**अनुकृतस्मरवैरितनु** (anukṛta-smaravairitanu) *adj.* resembling the body of (Śiva) the enemy of the god of love विदधता … अनुकृतस्मरवैरितनुं श्रियम् । फणिभुजा … स्थितम् HarVi. 3.46.

**अनुकृताखिलसागराम्भस्** (anukṛtākhilasāgarāmbhas) *adj.* resembling the (deep) waters of the entire ocean हृदयं महतामगाधधैर्यं भवत्यनुकृताखिलसागराम्भः HarVi. 38.17.

**अनुकृतान्वयव्यतिरेक** (anukṛtānvayavyatireka) *adj.* following the positive and negative concomitance यद्वस्तु यत्कार्यान्वयव्यतिरेकानुविहितभावाभावं तद्वस्तु तत्कार्यप्रसवसमर्थं रूपं च तस्य कार्येणानुकृतान्वयव्यतिरेकमिति रूपमेव समर्थम् TātpaṬ.(Vā.) 553.3 (*on* iii. 2.14); 558.20 (*on* iii. 2.14)

**अनुकृतान्वयव्यतिरेकत्व** (anukṛtānvayavyatireka-tva) *n.* the state of being that which has (followed) positive and negative concomitance अनुपकारकेष्वपि कार्यक(का)रणायापेक्षाभ्युपेयते तेषामपि कार्येणानुकृतान्वयव्यतिरेकत्वात् TātpaṬ.(Vā.) 558.18 (*on* iii. 2.14)

**अनुकृति** (anu-kṛti) *f.* [VIŚVA, ánu-kṛti, P. vi. 2.50] **1** doing after, subsequent occurrence **2** representation of or exchange for (Soma) **3A** resemblance **B** imitation, following **C** imitation in order to ridicule, mimicry **4** consent, compliance **5** onomatopoeia **6** dramatic presentation or enacting **7** image **8A** utterance in imitation (of other's words) **B** utterance of word '*anu*' **9** disguise **10** name of a figure of speech **1** doing after, subsequent occurrence एकर्षं वै पुरान आसीत्तत एतदृषयोऽग्नये द्वीषमाधानमपश्यंस्तस्माद् द्वीषमग्नय आधानं कुर्वन्ति तामिदमनुकृतिं द्वीषमनः क्रियते KāṭhS. 19.12 (ii. 14.14) = KapiKaS. 31.2 (149.2); देवरथस्यैव पुरस्ताद्रश्मी विहरति संवत्सरस्य क्लृप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै तामनुकृतिं मनुष्यरथस्य रश्मी विह्रियेते KāṭhS. 27.1 (ii. 138.11) = KapiKaS. 42.1 (247.1); तस्य (यजमानस्य) होष्णीषेणाक्ष्यावपिनह्युस्तस्मादुष्णीषमेव पर्यस्य ग्राव्णोऽभिष्टुवन्ति तदनुकृतिः AitBr. 26.1 (678); अश्वस्यैव मेध्यस्य लोमल्लोमञ्जुहोति ।… एतदनुकृति ह स्म वै पुरा TaiBr. III. ix. 23.1-2; इन्द्रो वै मरुतस् समजिनोत् स्वां विशं सोमाय राज्ञे प्रतिप्रोच्य । तदनुकृतीदम् अप्येतर्हि राज्ञे प्रतिप्रोच्य विशं जिन्वन्ति JaimiBr. 2.249; इतीन्न्वा इमा अनुकृतयो व्याख्याताः BaudhGS. iii. 12.15; ददातीति पितृतीर्थेन ददतो हस्तस्यानुकृतिः प्रदर्श्यते CaturCin. iii(1). 1433.6; तस्य जीवानुकार्यत्वार्थतया दर्शितत्वात् अनुकृतेरनुकर्तर्येव संबन्धस्वारस्ये ŚivārkaMaDī. i. 11.9 (*on* i. 1.1); सूर्यादीनां भानकरश्चैष यदस्य प्रायो दृष्टा चानुकृतिर्यत्समजातौ NayaMañ. I. iii. 6.11; **2** representation of or exchange for (Soma) तामनुकृतिमस्कन्नां वत्सतरीमाजन्ति सोमक्रयणीम् AitBr. 5.1(114); **3A** resemblance अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ मानुषी वीणा भवति AitĀ. III. ii. 5.7; ŚāṅkhāĀ. 8.9 (34.29); जलमुचस्त्वादृशा यत्र जालैर्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति MeghDū 68; पयसोऽनुकृतिम् … विदधाति धौतकलधौतमही ŚiśuVa. 4.41; 11.42; (अजितराजस्य) आसन् सुनयनानन्देत्यादयस्यस्य(? स्तस्य) योषितः । यासां शच्यपि रूपेण शक्ता नानुकृतिं प्रति PadmP.(Ra.) 5.65; आसीदत्स्यन्दनाश्वानुकृतिमरकते पद्मरागायमाणः ।… गुरुः काद्रवेयद्विषः SūryaŚ. 56; देवः …। भेजे कैलासमात्मयशसोऽनुकृतिं दधानम् MahāP. 25.288; अभूत् … श्रीवाक्पतिः स[Read श]तमखानुकृतिः EI. i. 234.11; किं वराकः काकः करोत्वनुकृतिं न ययौ यदेषाम् (कोकिलानाम्) Subhāṣi. 767; Prasā. i. 35.14; **3B** imitation, following हस्तौ स्वसंयुतौ धार्यौ जानुभ्यामुपरि स्थितौ । गुरोरनुकृतिं कुर्यात् NāraŚi. i. 6.3; वेणीबन्धकपर्दिनी…कुर्वाणानुकृतिं हरस्य दिशतु श्रेयांसि वः पार्वती NāgaSa. 13.16; ŚārṅgaPa. 3168; क इव नाम बृहन्मनसां भवेदनुकृतेरपि सत्त्ववतां क्षमः Kirātā. 18.3; अनुकृतिमितरेतरस्य मूर्त्योर्दिनकरराघवनन्दनावकार्ष्टाम् Bhaṭṭi. 10.64; भूपस्त्रिविष्टपनृपानुकृतिः कृतज्ञ[*:] श्रीकक्कराज इति गोत्रमणिर्बभूव EI. xiii. 279.4; vi. 210.5; xiv. 124.7; xxii. 105.7; सकलासु शंकर निशासु नृत्यता । क्रियते त्वयानुकृतिरात्मनः HarVi. 6.180; 25.20; कदापि कोऽपि । प्रकाश्य यत् किंचन दूषणं ते विभीषणस्यानुकृतिं करोति RāmC.(App. 1) 38.9; वाग्वेषचेष्टितैः प्रियस्यानुकृतिर्लीला Kāvyānu.(He.) 373.7; प्रियस्य … वेषगतिहसितभणितैरनुकृतिर्या क्रियते सा लीला NāṭaLaRaK. 2607; लीलां प्रियस्यानुकृतिं विदुः SāhiDa. 131.13; स्फुटतो वेणोरनुकृतिरुक्ता शब्दस्य हू(दू)त्कृतिः शास्त्रे KandaCū. ii. 7.15; AnekāK. 799; **3C** imitation in order to ridicule, mimicry शृङ्गारानुकृतिर्या तु स हास्यस्तु प्रकीर्तितः NāṭyaŚā. 6.45; AbhinBhā. i. 294.4 (*on* 6.40); अनुकृतिरमुख्यता आभास इति ह्येकोऽर्थः Loc. 66.21 (*on* 2.3); लौल्यादेश्च परस्थानामेवामनुकृतेरपि । विकारश्चेतसो हासः RasāSu. 155.8 (2.123); राज्ञो नानुकृतिं कुर्यान्न च श्रेष्ठस्य कस्यचित् ŚukraNī. 3.161; **4** consent, compliance ओमित्येतदनुकृति ह स्म वा TaiĀ. vii. 8.1 (730.14); TaiU. 1.8; अनुकृतेस्तस्य च BrahmSū. i.3.22; प्राज्ञ एवायमात्मा भवितुमर्हति । कस्मात् । अनुकृतेः । अनुकरणमनुकृतिः BrahmSūBh.

(Śaṅ.) 181.16 (*on* i. 3.22); TaiUBh. 209.2 (*on* 1.8); BrahmSūBh. (Bhā.) 59.9 (*on* i. 3.22); अनुज्ञानुकृतिस्तद्वत्सर्वत्रोमिति कीर्त्यते TaiUBhāVā. 31.21(1); अनुकृतिरनुकारः VedāntDī. 52.22 (*on* i. 3.21); ŚivārkaMaDī. i. 444.24 (*on* i. 3.21); 'तमेव भान्तमनुभाति सर्वम्' इत्यनुकृतेः BrahmSūBh. (Ma.) 17A.10 (*on* i. 3.22); अनुकृतिरनुभानमिति हि परैरुक्तम् ŚrutaPra. ii. 48.30 (*on* i. 3. 21-22); अनुकृतेश्चानुकर्ता जीवः VedāntPāSau. 94.20 (*on* i. 3.22); जीवस्य दहराकाशशब्दनिर्दिष्टपरज्योतिरनुकृतिरवगम्यते BrahmSūBh. (Śrī.) i. 444.2 (*on* i.3.21); **5** onomatopoeia काक इति शब्दानुकृतिः। तदिदं शकुनिषु बहुलम्। न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः Nir. 3.18 (69.12); **6** dramatic presentation or enacting तदन्तेऽनुकृतिर्बद्धा NāṭyaŚā. 1.57 (AbhinBhā. अनुकृतिरिति नाट्यम्); अन्यत्रानुकृतिरूपनाटकादिना यस्य भावका ध्यातारो रसिकाश्च माद्यन्ति Avalo. 1.11 (*on* 1.2); परस्यानुकृतिर्नाट्यम् ViṣṇuDhaP. iii. 20.1; **7** image मृदा वा दारुणा वापि ···। लोहैरनुकृतिर्वापि प्रस्त इत्यभिधीयते ViṣṇuDhaP. iii. 27.4; [Kośas give *anukṛti* as of one the meanings of *pratimā*, TrikāŚe. iii. 3.300; ViśvaPra. 114.51; NānārthāSaṁ. ii. 5.46; MediK. 118.48; ViśvaLoK. 250.53; ŚabdaRaSaK. 229.8]; **8A** utterance in imitation (of other's words) अन्योक्तीनाममनुकृतिश्छाया सापीह षड्विधा SaraKaṇṭhā. 163.1; नाऽसाध्वनुकृतौ (दोषः) AlaṅkāŚe. 9.3; **8B** utterance of the word *anu* यादवप्रकाशीये तु अनुकृतिः अनुशब्दस्य करणमित्युक्तम्। तदयुक्तम् ŚrutaPra. ii. 49.1 (*on* i. 3.22); **9** disguise विश्वंभरः स भगवान् ··· धृत्वा यतेरनुकृतिं मथुरां यियासुः। व्याजेन शान्तिपुरमागमितः CaitaCan. 119.13(5); **10** name of a figure of speech हेत्वन्तरादन्यस्यापि तथात्वमनुकृतिः AlaṅkāRa. 72.

**अनुकृति** (anu-kṛ́ti) *adj.* [*but* VIŚVA. ánu-kṛti] which is in imitation of देवशिल्पान्येतेषां वै शिल्पानामनुकृतीह शिल्पमधिगम्यते AitBr. 30.1 (764); GopBr. ii. 6.7 (253.10); मनुर्ह वा अग्रे यज्ञेनेजे तदनुकृतीदमिमाः प्रजाः यजन्ते ŚatBr.(K.) II. iv. 3.4.

**अनुकृतिकव्यापार** (anukṛtika-vyāpāra) *m.* activity of imitation व्यस्तैराजननं दिन(नं)दिनमधिप्रत्तैर्दधीच्यादिभिर्दानैरेभिरलंकृतानुकृतिकव्यापारपारंगमैः। मत्वेतीव निराकृतः ··· श्रीमान् ··· ब्र(ब्र)ह्मांडदान(नं) व्यधात् EI. xxi. 285.29.

**अनुकृतित्व** (anukṛti-tva) *n.* the state of being compliance or consent करोमि यास्यामि वेति कृतमुक्तं ओमित्यनुकरोत्यन्यः, अतः ओंकारोऽनुकृतिः। ··· प्रसिद्धं ह्योंकारस्यानुकृतित्वम् TaiUBh. 209.4 (*on* 1.8)

**अनुकृतोर्जितभूभृत्** (anukṛtorjitabhūbhṛt) *adj.* **i** which has imitated a mighty monarch क इव तेऽनुकृतोर्जितभूभृता घनचयेन च ये न वशीकृताः HarVi. 3.50; **ii** who has imitated a lofty mountain, HarVi. 3.50.

**अनुकृत्तमूल** (anukṛtta-mūla) *adj.* the roots of which are cut off afterwards कबन्धैः पतद्भिरुर्वी सुचिरं चकम्पे। प्राक्खण्डिताग्रैरनुकृत्तमूलैर्महाद्रुमाणामिव मध्यकाण्डैः RāghPāṇ.(Ka.) 4.40.

**अनुकृत्य** (anukṛ́t-ya) *ger.* **1** having followed or imitated मनुर्ह वाऽग्रे यज्ञेनेजे तदनुकृत्येमाः प्रजा यजन्ते ŚatBr. I.v. 1.7; दिलीपरघुरामाणां चरितम् ··· अनुकृत्य प्रजानां यो जगाम प्रियतां विभुः EI. xxii. 124.16; (राममाधवौ) वृषायमाणौ नर्दन्तौ युयुधाते परस्परम्। अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा BhāgP. x. 11.40; हंसोऽपि ··· सुदत्याः पुरश्चारु चलन् बभासे। गतिमेतदीयामग्रेऽनुकृत्योपहसन् NaiṣC. 3.10; **2** having assumed अहिर्बुध्नावतरनिधानमाकारमनुकृत्य स विद्याधरः समस्तमपि नगरं क्षोभयामास YaśasCam. ii. 300.22; **3** having repeated, having copied किमपि कान्तभुजान्तरवर्तिनी कृतवती यदियं कलभाषिणी। तदनुकृत्य गिरा गुरुसंनिधौ ह्रियमनीयत सारिकया वधूः ŚārṅgaPa. 3749; Subhāṣi. 2162; महामन्त्रस्य ··· बीजवर्णसमुदायमयाः बहवः संकेताः, ते अतिरहस्यत्वात् स्फुटमनुकृत्य वक्तुमयोग्या एव Bhāsk. i. 264.14 (*on* i. 5.14); **4** having referred to, regarding ये द्वे रूपे प्रत्यभिज्ञायां ते अनुकृत्य दर्शयति भात इति Bhāsk. i. 36.18 (*on* i. 1.1); तत्रान्वयव्याप्तिमनुकृत्याह यो यावति इति Bhāsk. i. 68.20 (*on* i. 1.3); i. 178.15 (*on* i. 4.6); योजनामेवानुकृत्य दर्शयति व्याचष्टे च योऽहमिति Bhāsk. i. 325.12 (*on* i. 6.6)

**अनुकृत्य** (anu-kṛtya) *adj.* worthy to be followed, fit to be imitated नूनं सद्यःफलानि नीतिशास्त्राणि यत् त्वयानुकृत्येनानुप्रविश्यारिमर्दनः सपरिजनो निःशेषितः PañcT.(Kos.) 3.259(1) (201.22)

**अनुकृन्तत्** (anu-kṛntat) *adj.* piercing, killing निजघ्नुस्ते महेष्वासाः सर्वांस्तान्निशितैः शरैः। आ गर्भादनुकृन्तन्तश्चेरुश्चैव वसुंधराम् MahāBhā. i. 169.18; क्षत्रियाश्च भृगून्सर्वान्वधिष्यन्ति नराधिप। आ गर्भादनुकृन्तन्तः MahāBhā. xiii. 56.3; DevīBhāP. vi. 16.24.

**अनुकृन्तन** (anu-kṛntana) *n.* piercing, destruction इन्द्रवज्र इति प्रोक्तं मर्मजङ्घानुकीर्त(? कृन्त)नम्। तद्ध्यानबलयोगेन धारणाभिर्निकृन्तयेत् Kṣuri-U. 11.

**अनुकृप्** (anu-kṛp-) VI. Ā. **i** to long for या व्यूषुर्याश्च नूनं व्युच्छान्। अनु पूर्वाः कृपते वावशानाः ṚV. i. 113.10 (*but* Sāy. समर्था भवति); **ii** to cling to अनु त्वा रोदसी उभे क्रक्षमाणमकृपेताम्। इन्द्र ṚV. viii. 76.11; AV. xx. 42.2; cf. **अनुकॢप्**.

**अनुकृपा** (anu-kṛpā) *f.* compassion, sympathy, condolence; cf. **अनुकृपाय**.

**अनुकृपाय** (anukṛpā-ya-) *denom.* to be compassionate, to sympathise, to condole with सुरभिः प्रारुदत्किल। गवां माता पुरा तात तामिन्द्रोऽन्वकृपायत MahāBhā. iii. 10.7; द्विजाः···। धर्मोऽयमिति मन्वाना ब्रह्मचर्ये व्यवस्थिताः। त्यक्त्वा गृहान्पितृंश्चैव तानिन्द्रोऽन्वकृपायत MahāBhā. xii. 11.3.

**अनुकृश** (anu-kṛśa) *adj.* gradually slim or lean स व्रतम् अचरत्। सोऽनुकृशो भवति। तस्माद् अनुकृशो व्रतचारी भवति AV.(P.) xvii. 28.3.

**अनुकृष्** (anu-kṛṣ-) I. U. **1A** to carry on, to continue सः ··· गृहस्थधर्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत् GautDS. i. 9.1; **1B** to continue (for a longer time), to prolong (पदं) लक्षणसंयुक्तं यदा वर्णोऽनुकर्षति। तदा वर्णस्य निष्पत्तिर्ज्ञेया स्वरसमुद्भवा NāṭyaŚā. 29.18; **1C** to carry over or continue (a word or phrase from the preceding context to the following) अनुवृत्तेर्हेतुत्वादिति हेतुमनुकर्षति Kiraṇā. 24.11; द्वितीयतुशब्देन वत्सरोत्तरं प्रतिसंवत्सरं वर्षे वर्षे चकारेण मृताहनीत्यनुकर्षति VīraMi. 319.7 (*on* 1.256); (pass.) **i** (a word or phrase) to be carried over or continued (from the preceding context to the following) यदि ··· तन्निर्देशः प्रतिज्ञेत्युच्यते सर्वतन्त्रसिद्धान्तोऽपि प्रकृतत्वात् तच्छब्देनानुकृष्येत NyāyVār. 115.5 (*on* i.1.33); योऽयमात्मविषयः प्रश्नः ··· स एवायम् अन्यत्र धर्मादन्यत्राधर्मात् इति पुनरनुकृष्यते BrahmSūBh.(Śaṅ.) 236.5 (*on* i. 4.6); नेति पूर्वसूत्राच्चशब्देनानुकृष्यते BrahmSūBh.(Bhā.) 45.3 (*on* i. 2.20); Bhām. 196.21 (*on* i. 3.4); VedāntDī. 18.17 (*on* i. 1.13); यम च परिवेषणे। चकारेण मिदित्यनुकृष्यते। यमयति। यमयांचकार DhātuPra. 10.87 (135.14); SmṛtiCan. vi. 50.14; CaturCin. ii(1). 1062.8; अपिपदेन स्मरन्तीत्यनुकृष्यते TattvPrakā. 143B.4 (*on* iii. 1.16); NyāySu.(Ja.) 230B.4 (*on* ii. 1.1); 390A.9 (*on* ii. 2.7); चकारेण संख्यानुकृष्यते Prasā. i. 485.8; LaŚabdeŚe. i. 91.8; ii. 218.4; **ii** (a word or phrase) to be carried over or continued (from the following context to the preceding) उत्तरसूत्रस्थं संज्ञाग्रहणमिहानुकृष्यते Prasā. i. 882.21; **2** to drag कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः। तदास्य शबलां राम विश्वामित्रोऽन्वकर्षत Rāmā. i. 53.1; बालां सबाष्पविलोचनामयमभिपतन् ··· बलादनुकर्षति ŚṛṅgāSar. 45; (pass.) to be dragged (बाला लाङ्गूलमाश्रिताः) पृथिव्यां चानुकृष्यन्ते Rāmā. vi. 18.3; सैषा महतो वंशस्तम्बाल्लड्वानुकृष्यते MahāBh. i. 21.28 (*on* ŚivSū.(Gr.) 2); रज्ज्वायसा वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण MahāBh. i. 119.11 (*on* i. 1.49)

**अनुकृष्ट** (anu-kṛṣṭa) *adj.* [*f.* -ā] **i** (word or phrase) carried over (from the preceding context to the following) प्रथमानास्त्रवास्तौ विपाकसंत्रगहेतू पूर्वोक्तौ। चशब्देनानुकृष्टौ Sphuṭā. ii. 164.17 (*on* 2.60); चानुकृष्टमुत्तरत्र नानुवर्तते SaraKaṇṭhā.(Gr.) i. 2.68; चानुकृष्टं नोत्तरत्र। चकारेणानुकृष्टमुत्तरत्र नाभिसंबध्यते PariVṛ.(Sī.) 92.12; मनुना ह्यसगोत्रा च या पितुरिति चकारात् असपिण्डा चेत्यनुकृष्टम् ManvaVi. 279.25 (*on* 3.5); **ii** attracted बभूम(व) कीर्त्तिवर्म्मा परदारनिवृत्तचित्तवृत्तेरपि धीर्यस्य रिपुश्रियानुकृष्टा। रणपराक्रमलब्धजयश्रिया EI. vi. 5.5; भूपतिः ··· अनेकश्रीमुखपरंपरानुकृष्टमेनमात्मसादकरोत् AvantiKa. 10.15.

**अनुकृष्टत्व** (anukṛṣṭa-tva) *n.* the state of being carried over (from the preceding context to the following) पूजायान् इत्यस्य पूर्वत्र चानुकृष्टत्वादनधिकारे सिद्धे शेषवचनं विस्पष्टार्थम् KāśiVṛ. *on* viii. 1.41.

**अनुकृष्टवारिदम्** (anukṛṣṭavāridam) *adv.* in a manner in which the clouds were dragged along युधि द्विपा रामशरेण दारिताः ···। यतो धरण्यामनुकृष्टवारिदं दिवः पतन्तो रुरुजुः स्वसैनिकान् JānaHa. 5.29.

**अनुकृष्टि** (anu-kṛṣṭi) *f.* [listed in the *kalyāṇyādi gaṇa*, JaineVyā. iii. 1.115] continuation or carrying over (from the preceding context to the following) गृहस्वामीत्यादौ स्वामीश्वर — इत्यादिना सामान्यविहिताया एव षष्ठ्याश्चकारेणानुकृष्टिरेवेति समासः Prasā. i. 501.18.

**अनुकृष्ण** (anukṛṣṇa) *m.* name of an *adhvaryu* priest of the Caraka branch of the Kṛṣṇa-Yajurveda एते द्विजर्षयः प्रोक्ताश्चरकाध्वर्यवः।··· अनुकृष्णस्तथायुश्च BrahmāṇḍP. i. 33.13.

**अनुकृष्णम्** (anukṛṣṇam) *adv.* towards Kṛṣṇa इत्याकर्ण्य विभोर्वाचं सोऽनुकृष्णमधावत PāṇḍaC. 17.169.

**अनुकृष्य** (anukṛṣ-ya) *ger.* **1** having considered, having referred

4 forward (i.e. not retrograde) motion झषवृश्चिकाजचापे वक्रे षट्सप्तकेन नवभागान् । द्विक्नेन नगान् वक्रो दिनषष्ट्या षोडशानुगतिः PañcSi. 18. 29; 5 extinction वह्नौ कुण्डे स्थले चुल्यां संस्कृतेऽनुगतिं गते । पुनराधाय संस्कृत्य शान्तिहोमादिकं हुनेत् PāraS. 19.46; Mitā. 412.7 (*on* 3.229); चोलकेरलपाण्ड्यानां पश्यन्ननुगतिं प्रभुः । चकार पुनराधानं धर्म्यं हुतभुजामिव Yādavā. 22. 209; 6 consent प्रशशंसुर्नृशंसास्ते न परं तस्य तद्वचः । प्रकाशयन्तोऽनुगतिं दूरतस्त्रिदशा अपि RāmC. 21.91; AbhidhāCin. 1540; 7 movement कालस्यानुगतिर्या तु लक्ष्यतेऽण्वी बृहत्यपि BhāgP. ii. 8. 13; 8 uniformity, presence throughout, continued existence अकार्यकारणात्मत्वात्कैवल्येऽनुगतिः कुतः BṛĀraUBhVā. ii. 4.206; न च वस्त्वन्तरानुसंधानमन्तरेणानुगतिव्यावृत्ती प्रत्येतुं शक्येते Praka-Pañ. 164. 2; 165.5; मा भूदनुगतिः स्वरूपसत्त्वस्य KhandanKhā. 59. 1; (देवतानाम्) अनुगतिश्च सर्वत्र BrahmSūBh.(Ma.) 24A. 4 (*on* ii. 1.6); TarkSam.(Ā.) 76. 11; VedāntKa. 251.1 (*on* ii. 2. 1); चरमे कार्ये अनन्तपूर्वकार्याणामनुगतिः प्रसज्येत VivaPraSam. 218.10; TattvPrakā. 83A. 1 (*on* ii. 1.6); व्याप्तानां सदेहत्वेऽनुपलम्भबाधः इत्येतत्परिहाराय विशेषानुगतिभ्यामिति सूत्रखण्डम् ... व्याख्यातम् NyāySu.(Ja.) 280B. 4 (*on* ii. 1. 3); 9 correlation अपि चान्वयो नामानुगतिः NyāyRaMā. 57. 3; 10 commonness न ह्युपमानोपमेययोरनुगत्या धर्मस्य मुख्यसाधारण्य एवोपमालंकारः CitraMī. 9.14; यत्र तु कश्चिद्धर्म एव ... उत्प्रेक्ष्यते तत्र स एव धर्मोऽन्यः प्रकार इति सर्वत्राप्यनुगतेः CitraMī. 79.5; 11 one of the 27 accessories of *śilpaka* type of drama (*lit.* following) आलस्यकम्पानुगतिविस्मयास्साधनम् ... कथितान्यङ्गान्यत्रैव शिल्पके BhāvPra.(Śā.) 257.10(9); 279.9(9); [*anugati* is given as a meaning of *sādhana*, NānārthāSam. ii. 217. 1943]

**अनुगतिगोचर** (anugati-gocara) *m.* object of uniform knowledge अनुगतं (सामान्यम्) अनुगतिगोचरः NyāyVārPari. 581. 3.

**अनुगतित्व** (anugati-tva) *n.* the state of being the same, uniformity गोशब्दो गोशब्द इति बुद्ध्यनुगतिः – सामान्यनिबन्धना अनुगतित्वे सति गोशब्दबुद्धिसंबन्धित्वात् । गोशब्दबुद्धिर्गोशब्दबुद्धिरित्यनुगतबुद्धिवदिति TātpaṬ. (Vā.) 458. 14 (*on* ii. 2. 32)

**अनुगतिदर्शन** (anugati-darśana) *n.* knowledge of continuity सोऽहं नित्योऽनित्यः इत्यादीनां रुद्रवाक्यानामनुगतिदर्शनेन रुद्रवाक्यापरिसमाप्तेः Śruta-Pra. ii. 200. 13 (*on* i. 4.29)

**अनुगतिनिष्ठ** (anugati-niṣṭha) *adj.* intent on following (i.e. accompanied by, followed by) धनकीर्तिना दर्शनायागतयानङ्गसेनया चानुगतिनिष्ठो गुणपालश्रेष्ठी ... श्रीयशोध्वजा(?ज)नामभाजनं भगवन्तम् ... एवमपृच्छत् Yaśas-Cam. ii. 343. 10.

**अनुगतिरूप** (anugati-rūpa) *n.* nature in the form of uniformity अनुगतिरूपमङ्गानामेकस्मिन्नेव जायते वाक्ये । यद्येकस्य तदानीमन्वर्थोऽनन्वयः कथितः Ekāva. 8.4 (209.8)

**अनुगतिशूर** (anugati-śūra) *adj.* clever in following क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतिशूरम् GītGo. xii. 23. 2.

**अनुगतिश्रवण** (anugati-śravaṇa) *n.* Vedic statement about entering अग्न्यादीनामनुगतेश्च अनुगतिश्रवणाच्च VedāntKau. 153.22 (*on* ii. 1. 5)

**अनुगतिसिद्धि** (anugati-siddhi) *f.* establishment of comprehensiveness सिद्धे व्यक्तिभेदे अणुगत [अनुगति] सिद्धिः PrakaVi. 508.13.

**अनुगतीकृत** (anugatī-kṛta) *adj.* made uniform or common to all instances स्फुटतरविवेकरतित्वेनानुगतीकृतानामवयवावयव्यादीनामेव तत्र कारणत्वमस्तु ŚivārkaMaDī. ii. 73.22 (*on* ii. 2. 12); फलतो नित्यस्य नैमित्तिकस्य चावश्यकत्वेनानुगतीकृतस्याननुष्ठानात्प्रत्यवायो गम्यते SiddhāTa. 22.26; शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षणेनानुगतीकृततत्क्षणदिनमासवर्षत्वाद्यवच्छिन्न एव काले लटः शक्तिः VyutpaVā. 202.34.

**अनुगतीकृत्य** (anugatīkṛt-ya) *ger.* having made uniform विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयावृत्तितादृशचरुहोमाधिकरणतामात्रवृत्तिधर्मत्वेनानुगतीकृत्य VyutpaVā. 149.19.

**अनुगतेष्टि** (anugateṣṭi) *f.* sacrificial rite (as an expiation) on the extinction of fires न वानुगतेष्टिं कुर्यात् BhārŚS. ix. 13.12; सर्वत्रानुगतेष्टिमेतामेके समामनन्ति ĀpaŚS. ix. 9.2; अनुगतेष्टेर्वा स्थान एता आहुतीर्जुहुयात् ĀpaŚS. ix. 9.14; HirŚS. xv. 3. 12 (295.6); VaikhāŚS. 20. 17.

**अनुगतैकधर्मता** (anugataikadharma-tā) *f.* the state of having one property common to all instances पदार्थस्वरूपाणां परस्परमनुगतैकधर्मता नास्ति NyāySu.(Ja.) 494B. 4 (*on* iii. 2.1)

**अनुगतैकरूप** (anugataikarūpa) *n.* single or unique form common to all instances विशेषरूपा इति स्वीकृताः तेषां स्वरूपं तावत् परस्परव्यावृत्तमतोऽनुगतैकरूपाभावादव्यापकत्वं स्यात् KhandanKhā. 423. 8; उक्तज्ञानं च नानुगतैकरूपं विनेति तादृशं गोत्वादिकमवश्यं वाच्यम् LaCandr. 317.12.

**अनुगतैकविषयकत्व** (anugataikaviṣayaka-tva) *n.* the state of having reference to a single entity common to all instances 'घटो ज्ञातः' 'पटो ज्ञात' इत्यादिप्रत्ययानामनुगतैकविषयकत्वमानुभाविकमपलप्येत LaCandr. 469.19.

**अनुगतैकश्रुति** (anugataikaśruti) *f.* single Vedic statement common to all instances साधुत्वस्य पूर्वत्रनिर्वचनासंभवेन अनुगतैकश्रुतिकल्पनानुपपत्तेश्च BhāṭṭDī. i. 51.15 (*on* i. 3.8)

**अनुगतैकसंज्ञा** (anugataikasañjñā) *f.* single designation covering all instances पञ्चजनसंज्ञिकाः केचिदिह ग्राह्याः ...। तेष्वनुगतैकसंज्ञाविषयत्वायोगात् ŚivārkaMaDī. i. 528.32 (*on* i. 4. 12)

**अनुगतोदक** (anugatodaka) *adj.* filled with water, abounding in water (युध्येदनूपे नौद्विपैस्तथा) युद्धसामर्थ्यात्तदानुगतोदके नौकाहस्तिभिः Manva-Mu. 282.15 (*on* 7. 192)

**अनुगतोद्बोधक** (anugatodbodhaka) *adj.* common awakening factor परोक्षस्यानुमितित्वेनैव प्रतिबध्यत्वम् ... उद्बोधकसत्त्वे मानाभावेन तदभावादेव स्मृत्यभावोपपत्तेरनुगतोद्बोधके मानाभावात् GuruCandr. ii. 248. 21; LaCandr. 519. 34; अनुगतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकशक्तिज्ञानासत्त्वे ... तादृशज्ञानस्य हेतुत्वमावश्यकम् ŚaktiVā. 111. 10.

**अनुगतोपकृतिव्रत** (anugatopakṛti-vrata) *n.* vow of obliging those who approach (them) जीवन्तु साधुतरवः सुकृताम्बुसिक्ताः ...। ये धारयन्त्यनुगतोपकृतिव्रतानि SaduktiKa. 302. 19.

**अनुगतोपाध्यभाव** (anugatopādhy-abhāva) *m.* absence of an adjunct common to all instances पञ्चभिरारब्धसमूहपञ्चकासंभवादिति । अनेन पञ्चस्वनुगतोपाध्यभावादित्युक्तं भवति ŚrutaPra. ii. 123.19 (*on* i. 4.11)

**अनुगतोपायेच्छा** (anugatopāyecchā) *f.* desire for means common to all instances अनुगतोपायेच्छायां अनुगतस्य प्रयोजकत्वे संभवति बाधकं विना त्यागायोगाच्च TattvCin. iv(2). 158. 2.

**अनुगत्य** (anugát-ya) *ger.* [P. vi. 4. 38] **AI** having followed (a person or a thing) मित्रश्च त्वा वरुणश्च ... त्वानुगत्य दूरं भोगाय पुनरोहताम् AV. xix. 44. 10; AV.(P.) xv. 3.10; यदि दूरे स्यादा तामितोस्तिष्ठेत् प्राणमेवास्यानुगत्य हन्ति यद्यभिचरेत् TaiS. VI. iv. 5.6; तपसा कर्म कवयोऽनुगत्य आहाय मृत्युमतिमेधयायन् JaimiBr. 2.73 (F.N. 17); अनुगत्य सुदूरं तौ बलोपेतः सुरप्रभः। कृच्छ्रान्निवर्तितस्ताभ्यां शोकी पुरमुपागतः PadmP.(Ra.) 40. 43; **AII** having followed (the procedure) तेषां तु शास्त्रार्थमिहानुगत्य आरोग्यमेवं प्रयतेत कर्तुः (तुम्) Hastyāyur. 264.23 (2. 48); **B** having approached रामः ... स्वर्गं गन्तुं मनश्चक्रे ...। ते राममनुगत्योचुः सर्वे वानरयूथपाः । तवानुगमने राजन् संप्राप्ताः स्म इहानघ SkandP. ii(8). 6. 122; यदा केचिद्बहिर्याताः (वैश्याः) केचिद्वा गमनोद्यताः । तदाताननुगत्याह भीमसेनो विनीतवत् BallāC. 105.10.

**अनुगत्यनुपपत्ति** (anugaty-anupapatti) *f.* untenability of continuance विद्योत्पादनमात्रचरितार्थस्य कर्मणो मोक्षार्थमनुगत्यनुपपत्तेः ŚrutaPra. ii. 590.30 (*on* iv. 1.18)

**अनुगत्यभाव** (anugaty-abhāva) *m.* absence of unformity or commonness सामान्यमेवानुमीयते न विशेषः अनुगत्यभावात् NyāyRaMā. 71.14.

**अनुगत्यर्थ** (anugaty-artha) *adj.* set on following (the husband in death) इयं च सुलभा राज्ञी रोदते जीविताशया। यस्या मनोऽनुगत्यर्थं न सा रोदिति कर्हिचित् GaṇeP. i. 25. 22.

**अनुगत्यर्थम्** (anugatyartham) *adv.* for the sake of understanding समासे लाघवम् असमासे गौरवं अनुगत्यर्थं च शब्दानामुपादानमिति गुर्वभिधाने प्रयोजनं वाच्यम् NyāyVār. 156.13 (*on* i. 2.42)

**अनुगत्यविच्छेद** (anugaty-aviccheda) *m.* absence of break in the continuity दहराकाशस्यानुगत्यविच्छेदं दर्शयति तमेवेति ŚrutaPra. ii. 35.24 (*on* i. 3. 13)

**अनुगत्व** (anuga-tva) *n.* the state of being an attendant उपगन्तुमेतदनुगत्वमर्थिता हृदि पोस्फुरीति यदपि द्वयोरपि PṛthvīVi. 9. 64.

**अनुगत्वर** (anu-gatvara) *adj.* [*f.* -ī] [P. iii. 2.164] which or who goes after or follows habitually सः ... व्यावृत्तदृष्टिरनुगत्वरमैक्षत स्वं पानीयतामिव यशो गतमब्धिमध्यात् PṛthvīVi. 4. 78; वने घोरे भर्तारमनुगत्वरी । उदाहरणमेवाद्यं सतीनामसि जानकी Rāgh. 7.35.

**अनुगत्वरी** (anu-gatvarī) *f.* female attendant आपाण्डुभूषणजुषामभिसारिकाणामित्थं मिथोऽकथि पथिष्वनुगत्वरीभिः ŚrīKaC. 11.41 (comm. चेटीभिः)

**अनुगत्वा** (anu-gatvā) *ger.* **I** having gone श्रुत्वा दुहितरं काव्यस्तत्र शर्मिष्ठया हताम् । त्वरया निर्ययौ दुःखात् (v. l. सोऽनुगत्वा वनं दुःखं) मार्गमाणः सुतां वने MahāBhā. i. 73. 27; **II** having followed अनुशिष्टानुगत्वा

च कृत्वा चैनान् प्रदक्षिणम् ।··· विदुरः प्रययौ गृहान् MahāBhā. i. 133.24.

**अनुगद्** (anu-gad-) I. P. **I** to call तस्माच्छ्रीकृष्ण एवेत्यनुजगदुरमुं सूरयः सौरिभक्ताः Prasā. ii. 796.21; **II** to recite पूर्वाभ्यस्तं निर्विशेषात्मनिष्ठं स्तोत्रश्रेष्ठं सोऽन्वगादीत् परात्मन् Nāray. viii. 26.7.

**अनुगद** (anu-gada) *m.* utterance गद व्यक्तायां वाचि ।··· निगादः । निगदः । अनुगदः DhātuPra. 1.51 (13.5)

**अनुगदित** (anu-gadita) *adj.* described अथ नयुतननजयाः । प्रचुपितमनुगदितमुपस्थितपूर्वम् JayaChand. 5.24; *n.* utterance, call भ्रातर्भ्रातः क यासीत्यनुगदितं अथो न श्रुतं ते बलस्य GopāKeCan. 52.15.

**अनुगन्तत्व** (anuganta-tva) *n.* the state of being that which does not end in *uk* (i. e. short formula representing the vowels *u*, *ū*, *ṛ*, *ṝ*, and *ḷ*)तत्र गुणे कृते रपरत्वे च कृतेऽनुगन्तत्वादिट्प्रतिषेधो न भविष्यति MahāBh. iii. 283.17 (*on* vii. 2.10); iii. 286.6 (*on* vii. 2.13)

**अनुगन्तव्य** (anu-gantavya) *adj.* [*f.* -ā] **1** to be practised चातुराश्रम्यधर्माश्च वेदधर्माश्च पार्थिव । ब्राह्मणेनानुगन्तव्याः MahāBhā. xii. 65.9; गृहगतैरनुगन्तव्या एव लोकवृत्तयः HarṣaC. 200.5; एषोऽनुधर्मः प्रवचनस्य सर्वैरपि अनुगन्तव्यः KumāPraPra. 76.17; **2** to be followed, to be accompanied तेनानेकार्थाभिधाने यत्नं कुर्वतावश्यं लोकः पृष्ठतोऽनुगन्तव्यः MahāBh. i. 241.7 (*on* i. 2.64); उदकान्तं स्निग्धोऽनुगम्यत इति स्मर्यताम् (v. l. ओदकान्तात्परं स्निग्धोऽनुगन्तव्य इति स्मर्यताम् or उदकान्तं स्निग्धोऽनुगन्तव्य इति श्रूयते) Śāk. 4.17(1); ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् । अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक्शुचिः YājñaSm. 3.26; कुमारः समाज्ञापयति न खल्वहं केनचिदनुगन्तव्य इति MudrāRā. 4.6(5); श्रेयांसमित्यश्वे गर्दभेनानुगन्तव्ये सिद्धवन्नच्छ्रेयसामूनैरनुगमनं दर्शयति TantrVā. 78.18 (*on* i. 3.2); कूटागारश्च वोढव्यस्तुरगैः ··· नृपेण सोऽनुगन्तव्यः NilaP. 859; लौकिकानि हि प्रमाणानि लक्षणकारैरपि यथालोकमेवानुगन्तव्यानि Kāśi. iii. 31.8 (*on* 5(4).36); ततस्तत्राप्येषैव रीतिरनुगन्तव्या ĀtmaTaVi. 538.16; अनुगन्तुं सतां वर्त्म यदि कृत्स्नं न शक्यते । स्वल्पमप्यनुगन्तव्यम् SūktiRa. 163.1; ŚārṅgaPa. 1420; Subhāṣi. 2641; पुरुषार्थाभिलाषुकैः पुरुषैः सौगती गतिर्नानुगन्तव्या SarvaDaSaṁ. 3.68; **3** to be understood अथवोक्तमेतन्नात्र व्यापारोऽनुगन्तव्यः MahāBh. ii. 19.11 (*on* iii. 1.8); एष च द्वाविंशत्युपमश्चित्तोत्पाद आर्याक्षयमतिसूत्रेऽक्षगतानुसारेणानुगन्तव्यः MaYānaSū. 17.9 (4.20); कालाविशेषेण चोदनार्थो यथा स्थितः । स तथैवानुगन्तव्यो नाधिको निष्प्रमाणकः ŚlokaVār. 5(16).21 (686.2); कतरस्मात्पदात् फलेन संबध्यमानादपूर्वभेदाभेदावनुगन्तव्यौ TantrVā. 337.24 (*on* ii. 1.1); न च शक्तयः पर्यनुयुज्यन्ते यथाकार्यं व्यवस्थयानुगन्तव्याः TantrVā. 942.18 (*on* iii. 4.13); भेदाभेदात्मनोऽर्थस्य भेदाभेदव्यवस्थितिः । लोकतो वानुगन्तव्या समभागविसभागवत् NyāyVi. 2.303; रूढ्या च प्रेतशब्दः प्रथम एव वर्तते ··· योगोऽपि च तद्वत एवानुगन्तव्यः BālaKrī. i. 164.4 (*on* 1.249); **4** to be approached विनिर्वर्त्य यदा शूद्रा उदकान्तमुपस्थिताः । द्विजैस्तदानुगन्तव्याः ParāSm. 3.47; आगमिष्यन्ति ते भावा ये भावा मयि भाविताः । अहं तैरनुगन्तव्यो न तेषामन्यतो गतिः ŚārṅgaPa. 311; Subhāṣi. 2663; **5** to be served, to be obeyed, to be imitated as a worthy person सर्वेश्वरोऽनुगन्तव्यः अध्यक्षान्तं तु साच्युतम् PauṣkS. 38.211; वैदिकं शब्दमुपलभेमहि ···। यथा अष्टकाः कर्तव्याः गुरुरनुगन्तव्यः ŚābaBh. 160.1 (*on* i. 3.1); 1402.7 (*on* vi. 2.21); श्रेयाननुगन्तव्यः BālaKrī. i. 18.1 (*on* 1.7); क्वचिद्गुरुराह्वानीयो गुरुरनुगन्तव्य इत्यादौ गुरुपदमध्यापकमात्रवाचि श्रूयते ManvaVi. 210.14 (*on* 2.149); जीवन्मुक्ता महात्मानः ···। आचारैरनुगन्तव्याः YogVā. iv. 46.25; iv. 61.14; **6** to be taken as the substratum उत्तमपुरुषाभिहिता संख्या वक्तारमन्वेति ···। ततस्तदभिहितया तथापि स एवानुगन्तव्यः NyāyKuA. ii(2). 108.3; **7** to be gone through (i. e. to be recited) इयं गाथा अनुगन्तव्या अनुसरणीया SthānṬ. 156B.11; तिस्रः सूत्रसंग्रहणिगाथा अनुगन्तव्याः — अनुवर्तव्याः SthānṬ. 307B.13.

**अनुगन्तुकाम** (anugantu-kāma) *adj.* [*f.* -ā] desiring to follow इतरे वाजिगजा नराश्च महाजवास्तेऽप्यनुगन्तुकामाः । नाशक्नुवन् VarāṅgaC. 12.45; पुञ्जीभूय मूले युगपदतिवाहिततरुणातपनातपाः पुरस्तादुद्गतं ध्वान्तमनुगन्तुकामा इव प्रावर्तन्त पूर्वाभिमुखमखिलाः पादपच्छायाः TilaMañ. 350.11.

**अनुगन्तुम्** (anu-gantum) *inf.* **1** to reach, to approach, to catch up भरतस्य महत्कर्म सर्वराजसु पार्थिवाः । खं मर्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् MahāBhā. xii. 29.43; **2** to equal, to match न हि मे संप्रयातस्य त्वामितो नयतोऽङ्गने । अनुगन्तुं गतिं शक्ताः सर्वे लङ्कानिवासिनः Rāmā. v. 35.28; स्वयं स्वयंभूर्भगवान्बुद्ध्याथ वयसापि वा । न त्वानुगन्तुं शक्तः HariVaṁ. 62.22; नानुगन्तुमलं रम्भा नृत्तमस्याः समेनका BṛKathāŚloSaṁ. 11.9; सा (करेणुका) चानुगन्तुं वेगेन शक्या नान्येन दन्तिना KathāSaSāg. ii. 5.7; चित्रं चारुतरं शिवस्य चरितं को वानुगन्तुं क्षमः ParamāKā. 5.31; **3** to follow, to go after मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतम् ViṣṇuSm. 20.39; सा (शकुन्तला) हि इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता Śāk. 6.19; SaraKaṇṭhā. 583.4; अहं वः पितरम् ···। अनुगन्तुमिहेच्छामि BrahmāṇḍP. ii. 30.36; एतां रुधिरधारामनुगन्तुं प्रयतिष्ये Nāgā. 5.7(2); अहं मद्दुहितापि तीव्रगतिं भूपतिमनुगन्तुमक्षमे अभूव DaśKuC. 7.10; किं शक्नोषि मामनुगन्तुं यावदहं लक्ष्मणमन्विच्छामि ĀścaCū. 3.34(9); स्पर्शः ··· रूपानुविधायी रूपमनुविधातुमनुगन्तुं शीलमस्य यत्र रूपं तत्र नियमेन तस्य सद्भावात् NyāyKa. 106.14; अयमेनामनुगन्तुमुपक्रान्तामकथयत् RāmāCam. 2.31(1); अन्वेषद्भिर्वने नागानथ दृष्टं तु तैः पदम् । अनुगन्तुं तदारब्धा Hastyāyur. 4.11 (1.1); तमाशु यान्तं रिपुचक्रमर्दनं तदानुगन्तुं व्यषहन्त नान्ये RāghPāṇ.(Ka.) 10.13; द्वावपि भ्रातरौ सूरीननुगन्तुम् ··· भक्त्या प्रवृत्तौ MalliC. 7.676; न हि वादिविशेषेण ··· कथा विशिष्टपक्षनिविष्टा तादृगेव कथान्तरम् अनुगन्तुं अर्हति TarkSaṁ.(Ā.) 101.3; अनुगन्तुं सतां वर्त्म यदि कृत्स्नं न शक्यते । स्वल्पमप्यनुगन्तव्यम् SūktiRa. 163.1; ŚārṅgaPa. 1420; Subhāṣi. 2641; भीमभूपदुहितुः स्वयंवरम् । द्रष्टुम् ··· मां च यूयमनुगन्तुमर्हथ Nalābhyu. 3.40; यस्यामनेन पदमर्पितमेकमेव सीतां हुताशपतितां सहसानुगन्तुम् । सेयम् ··· मुनिवधूरिव पर्यणंसीर् JānaPa. 3.84; नान्यस्य पृष्ठमनुगन्तुमुशन्ति नार्यः RasSa. 50; **4** to obey बाढं शक्तोऽहं भगवतामादेशमनुगन्तुम् MāṭhVṛ. 2.16 (*on* 1); **5** to understand, to know भगवन्तमनुगन्तुमुक्तिप्रत्युक्तिक्रया के वयम् AnargharRā. 1.31(1); सर्वमेतत्परस्मिन्ब्रह्मण्याश्रीयमाणेऽनुगन्तुं शक्यते, न मुख्ये प्राणे BrahmSūBh.(Śaṅ.) 84.6 (*on* i. 1.28); अनेन हि प्रसिद्धेन आनन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते TaiUBh. 269.2 (*on* 2.8); परमात्मपरिग्रहे सत्येवानुगमादनुगन्तुं शक्यत्वात् VedāntKau. 43.12 (*on* i. 1.29); न ह्येकसंबन्धिदर्शनेनापरसंबन्धिस्मरणे प्रतिसंबन्धी अनुगन्तुं शक्यते MīmāKau. i. 121.4 (*on* i. 3.24); **6** to follow (in death) वृत्तान्ते कथिते चास्मिन्नेत्य तत्सहयायिभिः । स्वजनेभ्यो मया लब्धं नानुगन्तुं सगर्भया KathāSaSāg. iv. 1.112; **7** in order to lessen शोफस्य द्विविधा सिद्धिः ··· आलेपनैः स्वेदैः प्रच्छन्नाभ्यञ्जनैरपि । अनुगन्तुं शनैः सम्यक्प्रयतेत चिकित्सितुम् Hastyāyur. 130.11 (1.17)

**अनुगन्तुमनस्** (anugantu-manas) *adj.* having mind to follow (in death) एधान्हुताशनवतः स मुनिर्ययाचे पुत्रं परासुमनुगन्तुमनाः सदारः RaghuVa. 9.81.

**अनुगन्तृ** (anu-gantṛ) *adj.* [*f.* -trī] **1** follower, who or which accompanies दक्षिणामुखमासीनं तमनुगन्तार उपविशन्ति JaimiGS. 2.5 (30.16); गोभिर्हतं तथोद्बद्धम् ··· संस्पृशन्ति तु ये विप्राः ··· अनुगन्तारः ··· तप्तकृच्छ्रेण शुद्धास्ते कुर्युर्ब्राह्मणभोजनम् ParāSm. 4.5; स्वामिभाग्यानामनुगन्तारो वयम् SvapnVā. 6.18(1); गुरवो यूयं नानुगन्तारः MahāviC. 4.57(3); अनुगन्तॄणां त्विदानीमाह — ब्राह्मणेनानुगन्तव्यो न शूद्रो हि मृतः क्वचित् BālaKrī. ii. 9.18 (*on* 3.26); तस्मिन् शूरपुराद्याते निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणाम् RājTa.(Ka.) 7.558; सहाये स्यादनुचरस्तथैवाप्यनुगन्तरि NānārthāSaṁ. iii. 23.10; ŚabdaRaSaK. 159.2; **2** which continues or remains as common to all instances शब्दान्तरमवलम्ब्य भेदा एव सत्या इत्येतत् प्रतिपाद्यते, शब्दान्तरेण वा हेतुना द्व्यात्मकमेकमिति, अनुगन्तुरवस्तुस्वभावत्वे कल्पनाविषयत्वात् BrahmSi. 66.16; **3** which conforms to जनपदाः ।··· पर्वताः ।··· नद्यः ।··· तेषां मध्ये मध्यदेश इति कविव्यवहारः । न चायं नानुगन्ता शास्त्रार्थस्य KāvyMī. 94.15; **4** who follows (in death) नष्टं दुष्टे हते दैत्यविभावसुरसेनया । स्त्री स्थिता सानुगन्त्री तं विभावसुरसेन या Surath. 10.112; **5** who follows obediently, obeying अनुगन्ता स्वनेतॄणाम् ··· सोऽभूद् द्वितीय इव भानुमान् Yādavā. 10.116.

**अनुगन्तृता** (anugantṛ-tā) *f.* the state of being that which goes after (i.e. dependence) सर्वा एव हीन्द्रियजा वृत्तयः ··· एकमर्थमवगाहमाना उदयन्ते व्ययन्ते च, न त्वमूषामन्योऽन्यमनुगन्तृतामीक्षामहे TātpaṬ.(Vā.) 141.23 (*on* i.1.4)

**अनुगन्ध** (anu-gandha) *adj.* fragrant श्रीखण्डैश्चानुगन्धैश्च सुपुष्पैः ···। आश्रमः शोभते PadmP. ii. 97.20.

**अनुगन्धा** (anugandhā) *f.* name of a cowherdess गोपीनामपि नामानि ···। इलवानुगन्धा सुभगा BhaviP. 708A.17 (iv. 73.7)

**अनुगम्** (anu-gam-) I. P. (sometimes Ā. in epics and Purāṇas) [P. vii. 3.77; ii. 4.80 for root-aorist forms, vi. 4.98 for perfect etc.] **1A** to follow (a person or a thing), to pursue, to chase, to go after, to accompany, (pass.) to be followed **B** to follow in death **2** to imitate, to resemble, to match, (pass.) to be imitated **3** to go to, to go towards, to arrive at, to reach, to attain **4** to pass away, to die out, to be extinguished, (*caus.*) to cause to be extinguished, to cause to cease, to put out **5** to seek, to look for, to find out, (pass.) to be found out **6** to tally with, to correspond to, to agree

with, (pass.) to be tallied with, to be corresponded to, to be agreed with **7** to take or to have recourse to, to respond to **8** to practise, to observe **9** (pass.) to be accepted, to be admitted, to be applied **10** to understand, to infer, to explain, (pass.) to be understood **11** (pass.) to be continued, to be common to all instances **12** to merge into, to enter into, (pass.) to be entered into **13** to be present in, to exist in **14** to pervade, to exist throughout **15** to become applicable **16** to obey, (pass.) to be obeyed **1A** to follow (a person or a thing), to pursue, to chase, to go after, to accompany सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन् ṚV. i. 65.1; सखा ह यत्र सखिभिर्नवग्वैरभिज्ञ्वा सत्वभिर्गा अनुग्मन्। सत्यं तदिन्द्रः … सूर्यं विवेद ṚV. iii. 39. 5; परायतीं मातरमन्वचष्ट न नानु गान्यनु नू गमानि ṚV. iv. 18.3; तन्नो अनर्वा सविता वरूथं तत्सिन्धव इषयन्तो अनु ग्मन् ṚV. v. 49. 4; तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मन् ṚV. vi. 1. 2; MaiS. iv. 13. 6 (iv. 206.8); KāṭhS. 18.20 (i. 280. 12); पुरु हि वां पुरुभुजा देष्णम् …। स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन् ṚV. vi. 63. 8; इमं विधन्तो अपां सधस्थे पशुं न नष्टं पदैरनु ग्मन् ṚV. x. 46.2; एतैः सुकृतैरनु गच्छेम यज्ञम् AV. xi. 1.36; त्वं सोम दिव्यो नृचक्षास्सुगाँ अस्मभ्यं पथोऽनु गच्छ AV.(P.) i. 51.3; xvi. 51. 4; xx. 28.8; देवपाणयो वै नामासुरा आसँस्ते देवगवीरपाजँस्ता अन्वगच्छँस्ता अभ्याजन् MaiS. i. 6. 3 (i. 90. 7); सोमः … गिरिमगच्छत् तमग्निरन्वगच्छत् MaiS. ii. 1.4 (ii. 5.12); यद्यभिचरेदा तमितोस्तिष्ठेदग्निराहुतिमभित्वरमाणस्ताजगनुगच्छति MaiS. iv. 5.5 (iv. 71. 6); पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत् … स इमां प्राविशत् … तमस्यामन्वगच्छन् AitBr. 6.8(177); स होवाचर्षेऽनु वै नाविमेऽसुरा अगमन्निति JaimiBr. 1.126; नास्ति धर्मसमं मित्रं नास्ति धर्मसमः सखा। यतः सर्वैः परित्यक्तं नरं धर्मोऽनुगच्छति ŚivaU. 6. 167; तामन्वगच्छत् प्रजापतिः VādhūŚS. iv. 30.14; प्रणीतानुहरणं ब्रह्मयजमानौ चानुगच्छतः KātyŚS. v. 8. 24; vii. 6.16; x. 2.15; xi. 1.3; xiv. 3.9; अग्निप्रथमा सोमप्रथमा वा प्राञ्चो गच्छन्ति।… अनुगच्छन्त्यमात्याः HirŚS. vii. 8.22 (741. 22); VaikhāŚS. 14.15; शूलगवे च बलीन् हृ( ? ह्रि )यमाणाननुगच्छेत् LāṭyāŚS. iv. 9.4; DrāhyŚS. xii. 1.6; LāṭyāŚS. v. 5. 9; DrāhyŚS. xiv. 1.13; द्विवर्षप्रभृति प्रेतमा श्मशानात् सर्वेऽनुगच्छेयुः PāraGS. iii. 10.8; सेनां चेदभ्युत्थितां धूमोऽनुगच्छेद्विजेष्यतीति विद्यात् AVPari. 1(36).2; उपनीतो ब्रह्मचारी …। स्थिते गुरौ स्थेयात् … व्रजन्तमनुगच्छेत् VaikhāDS. i. 2. 2; तथेत्युक्त्वान्वगच्छत्तं ततो दानवसूदनः MahāBhā. i. 30.13; भगवान् रुद्रो विद्ध्वा यज्ञमृगं दिवि। अन्वगच्छत् MahāBhā. i. 36.12; तं देवराजप्रतिमम् …। द्विजक्षत्रियविट्शूद्रा निर्यान्तमनुजग्मिरे MahāBhā. i. 576*(2); सुदूरमनुजग्मुस्तं पौरजानपदास्तदा MahāBhā. i. 63.10; भक्त्या मतिमतां श्रेष्ठ सैव त्वामनुयास्यति ( v. l. त्वानुगमिष्यति ) MahāBhā. i. 109.29; स्वां पुरीं प्रययौ कृष्णः …। लोचनैरनुजग्मुस्ते तमा दृष्टिपथात्तदा। मनोभिरनुजग्मुस्ते कृष्णम् MahāBhā. ii. 2.21; अन्वगच्छंस्तथैवान्यान् क्षत्रियान् क्षत्रियर्षभाः MahāBhā. ii. 42.44; पन्थानमनुगच्छेयुः कथं तस्य पदानुगाः MahāBhā. ii. 50. 12; के चैनानन्ववर्तन्त (v. l. नन्वगच्छन्त) प्राप्तान् व्यसनमुत्तमम् MahāBhā. iii. 1. 4; सावित्री चापि दुःखार्ता यममेवान्वगच्छत MahāBhā. iii. 281. 18; पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि MahāBhā. v. 33. 64; वासुदेवश्च … पृष्ठतोऽनुजगाम ह MahāBhā. vi. 41.10; वयमेव त्रयः …। यद् वै त्वां नानुगच्छामः MahāBhā. x. 9. 39; पर्वकाले तु संप्राप्ते यो वै छेदनभेदनम्। करिष्यति नरो मोहात्तमेषा ( ब्रह्महत्या ) अनुगमिष्यति MahāBhā. xii. 273.39; विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति MahāBhā. xiii. 2. 79; तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम Rāmā. i. 1.23; विश्वामित्रम् …। अनुजग्मतुरक्षुद्रौ ( रामलक्ष्मणौ ) Rāmā. i. 21.7; अनुगच्छस्व मां भीरु सहधर्मचरी भव Rāmā. ii. 27. 30; धान्यकोशश्च यः कश्चिद्धनकोषश्च मामकः। तौ राममनुगच्छेताम् Rāmā. ii. 32. 6; राघवं वानुगच्छध्वमश्रुतिं वापि गच्छत Rāmā. ii. 42.23; ii. 92. 8; v. 1.102; मां दृष्ट्वा राक्षसाः …। अनुगच्छेयुः Rāmā. v. 35. 49; vi. 17. 27; अनुगमिष्यामि गतिं भर्तुर्महात्मनः Rāmā. vi. 23. 29; अनुजग्मुर्महावीरा ऋक्षवानरसैनिकाः Rāmā. vi. 596*(2); लक्ष्मणश्चापि परया भक्त्या मामनुगच्छति Rāmā. vi. 796*(11); अनुगच्छस्व मां भद्रे HariVaṁ. 9. 6; BrahmP. 7. 7; HariVaṁ. 78. 41; अनुजग्मुस्ततः सर्वे प्रयान्तमृषिसत्तमम् HariVaṁ. 118.6; चक्रवाकः … पृष्ठतः प्रेष्यवद् भार्यामनुवर्त्यनुगच्छति BuddhaC. 4.50; तथान्वगच्छं विगतश्रमोऽध्वनि BuddhaC. 8. 44; 10. 4; नन्दः … गुरुमन्वगच्छत् Saund. 5. 19; 14. 41; 15.59; निमन्त्रितान् हि पितर उपतिष्ठन्ति तान् द्विजान्। वायुवच्चानुगच्छन्ति ManuSm. 3. 189; मृतं शरीरमुत्सृज्य …। विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ManuSm. 4. 241; SūktiRa. 8.18; उपपातकसंयुक्तो गोघ्नः …। दिवानुगच्छेद् गाः ManuSm. 11.110; 11.144; 12. 115; कालयोगाच्च देशाद्देशान्तरमुपचारवेषलीलाश्चानुगच्छन्ति KāmSū. 132.9 (2. 5); यच्च कृतं कर्म कर्तारमनुगच्छति CāṇaNīDa. 13. 15; दैवं विधानमनुगच्छति कार्यसिद्धिः Avimā. 3. 12;

एवंगतोऽप्यनुगच्छति मां तपस्वी दुर्योधनः ŪruBha. 28(3); 44(3); रदनिके अनुगच्छात्रभवन्तम् Cārud. 1.21(15); Mṛcch. 1.38(392); सर्वत्रानुगमिष्यन्ति शरास्ते कृष्णचक्षुषः DūtGha. 31; अनुगच्छन्तु मां प्रकृतयः Prati. 3.23(1); अनुगमिष्यामि भवन्तम् MadhyaVyā. 1.15(6); 1.39(3); क्षत्रियं मृतमज्ञानाद् ब्राह्मणो योऽनुगच्छति।… पञ्चगव्येन शुध्यति ParāSm. 3. 43; प्रेतीभूतं च यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः। नियतं ह्यनुगच्छेत त्रिरात्रमशुचिर्भवेत् BṛParāSm. 8.24; तस्याः खुरन्यासपवित्रपांसुम् …। मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् RaghuVa. 2.2; स्थितः स्थितामुच्चलितः प्रयाताम् … छायेव तां भूपतिरन्वगच्छत् RaghuVa. 2. 6; SaraKaṇṭhā. 430 18; धन्विनौ तमृषिमन्वगच्छताम् RaghuVa. 11. 5; वत्से। इत इतोऽनुगच्छ माम् Śāk. 5.30(9); [illegible] दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुरशब्दः। यावदेनमनुगच्छामि Vikramo. 4 27(5); कृत्यामनुजगामाशु विष्णुचक्रं सुदर्शनम् ViṣṇuP. v. 34.37; कोष्ठागारं च कोषं च यच्चान्यद्विद्यते तव। विना …। धर्मं च सर्वधर्मज्ञ यो यान्तमनुगच्छति।… सर्वमेतत् प्रदीयताम् MārkP. 7. 29; 31. 59; देवो यदि पिता जातः [illegible]कर्मानुयोगतः। तस्यान्नममृतं भूत्वा दिव्यत्वेऽप्यनुगच्छति MatsyaP. 19. 7; भ्रमन्तमनुगच्छेतां ध्रुवं रश्मी तु तावुभौ BrahmāṇḍP. i. 22.78; ii. 7. 115; अनुगच्छस्व भद्रं ते BrahmāṇḍP. ii. 60.7; ii. 73. 27; अनुगच्छति पृष्ठतः शशी BṛSaṁ. 24. 32; मृगयूथस्य धावतः। पृष्ठतोऽनुगमिष्यामि PañcT. 2.80 (257.13); कच्छपं सुबद्धं कृत्वा — प्रायात्। ततस्तं नीयमानं दृष्ट्वा मृगमूषकवायसाः परं विषादं गच्छन्तो ( रुदन्तस् ) तमनुजग्मुः PañcT. 2. 84(14) (263 2); शतसहस्रयानेन गच्छन्तमनुगच्छति। नराणां प्राकृतं कर्म PañcT.(Kos.) 2.135 (133. 12); अनुगच्छ तदेकसंग्रहात् … सत्पथम् JānaHa. 4.45; 4.50; एह्येहि प्रियतमे क्व ( v. l. प्रियतमे मामनुगच्छ ) क्व गच्छसीति — प्रियतमामाजुहाव VāsaDa. 68. 2; 82.3; एषोऽहं सुतवत्सलं तातमेवानुगच्छामि VeṇīSaṁ. 3.207; उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः। थियासूननुगच्छन्ति GobhiSm. 1.145; भागुरायण एको मामनुगच्छतु MudrāRā. 4. 7(2); बुद्धिरनुगच्छति सर्वत्रैवावकाशम् AvantiKa. 38.24; त्वामेवानुगच्छेयम् DaśKuC. 99. 21; रक्षोगणाः …। अनुजग्मुरहो हीति मुहुर्मुखरिताननाः PadmP.(Ra.) 8. 510; 49. 38; किमहमेकोऽनुगच्छामि MahāvīC. 4. 57(5); तस्याप्यपत्यमनुगच्छति वीरवृत्तम् UttaRāC. 5. 24; धर्मस्तमनुगच्छति VṛGautaSm. 587.12(11); कामिनीमनुगच्छति। अयं नागरकः BṛKathāŚloSaṁ. 9. 35; 14. 48; इमा गाः सोम्य अनुसंव्रज अनुगच्छ ChāndoUBh. 222.12 (*on* iv. 4. 5); कर्म विहितं प्रतिषिद्धं च — अन्वालभेते अनुगच्छतः BṛĀraUBh. 606. 19 (*on* iv. 4. 2); खिन्नापि मामनुगच्छ ĀścaCū. 7. 0(4); गच्छन्तमनुगच्छन्ति BrahmSūBh.(Bhā.) 59. 8 (*on* i. 3. 22); अश्रु मुञ्चन्ननुगच्छसि प्रभुम् …। अशूनशक्तोऽपि बिभर्षि लक्ष्मण RāmC. 4. 53; शुभाशुभं यदद्राक्षीत् तत्साक्षादनुगच्छति BṛĀraUBhVā. iv. 3. 999; यथा वायुः प्राणः पुरुषं गच्छन्तमनुगच्छति, न गच्छन्तं प्राणो जहाति ManuBh. i. 287. 27 (*on* 3. 179 (? 189)); अनुजग्मुरेनम् … बहवः RāghPāṇ.(Dha.) 12. 2; अन्वगच्छन् रथैर्विप्रा व्यासधौम्यादयस्तथा BhāgP. i. 9. 2; i. 13 28; पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः BhāgP. iii. 4. 5; प्रेतीभूतं द्विजं विप्रो ह्यनुगच्छेत कामतः KūrmaP. 622.17 (2.23); नद्यः …। अनुजग्मुर्जगन्नाथम् NīlaP. 160; कलशं सुधया पूर्णं गृहीत्वा ते समुत्सुकाः। दैत्याः पातालमाजग्मुस्तदा देवा भ्रमान्विताः। अनुजग्मुः SkandP. i(1). 11.8; त्यक्त्वाश्रमाणि शून्यानि स्वानि ता मुनियोषितः। अनुजग्मुः VāmaP. 6. 64; 53. 15; 58.27; अन्वगच्छदथ तं रमाङ्गदः NavaSāC. 8.41; अनुजग्मुस्तु तं सर्वे रथिनः BrahmP. 44. 17; 163. 19; द्विजोत्तमान्। विसर्जयेत् … आद्वारमनुगच्छेच्च BrahmP. 220. 123; अतिरूपवती कन्या गच्छन्तमनुगच्छति BhaviP. 62B. 31 (i. 29.20); अनेकनटगन्धर्वाः …। अनुजग्मुर्महीशानम् PadmP. iv. 68.14; स्त्रीरूपमात्मानमवेक्ष्य भूपाः तामन्वगच्छन् KalkiP. i. 5.26; लक्ष्मणस्तु सदा राममनुगच्छति सादरम् AdhyāRā. i. 3. 61; ii. 8.12; वायुस्त्वामनुगच्छतु AdhyāRā. iv. 9.27; गन्तुमिच्छसि यत्र त्वमनुगच्छामहे वयम् AdhyāRā. vii. 9. 12; दोग्धुकामोऽहमप्येनां चिरमन्वगमं महीम् SamarāSū. 1.13; 17. 69; तामेवानुगच्छामि SaraKaṇṭhā. 737. 6; रामः … समस्तमायुधजातमादाय मामनुगच्छेति सौमित्रिमन्वग्रहीत् RāmāCam. 2. 32(7); न च धूममूर्ध्वं गच्छन्तं भूमिष्ठो वह्निरनुगच्छति NyāyRaMā. 57. 4; तामेव भगवतीमनुजगाम UdaySuKa. 118. 2; धनं रत्नानि सैन्यं च राममेवानुगच्छतु RāmāMañ. 72.5; 249. 10; 390. 8; दिवसद्युतिरनुजगाम दिवसकरम् KalāVi. 1. 26; अहो नु सरलः पन्थाः कोऽप्ययं जडचेतसाम्। यद्गताननुगच्छन्ति मत्स्यपुच्छग्रहाः स्त्रियः BṛKathāMañ. ix. 1. 521; निजमन्दिरं ययाविन्दुमुखी सोऽपि श्रीदत्तोऽनुजगाम ताम् KathāSaSāg. ii. 2. 33; iii. 4. 157; iii. 5. 71; गा अनुगच्छति तदस्य व्रतमिति गोऽनुगामी।— अनुगच्छेदिति वचनाद्यदा ता गच्छन्ति तदैव स्वयमनुगच्छेत् Mitā. 451.22 (*on* 3.263); (विनायकोपसृष्टः) तथा गच्छन्तं मां पृष्ठतः परेऽनुगच्छन्तीति मन्यते Aparā. 562. 19 (*on* 1. 273); 873. 11 (*on* 3. 11); 917. 20 (*on* 3. 26); ततस्तदनु गच्छेयुर्वारिबन्धविशारदाः Mānaso. ii. 3. 205; iv. 15. 1583; अथ तामनुजग्मुरुन्मिषद्भिर्मणिमञ्जीररवैः … विजयाद्याः प्रमथाग्रणीरमण्यः ŚrīKaC. 8.16; तं भृत्यावनुजग्मतुः RājTa.(Ka.) 5. 227; कः सिंहेन विनानुगच्छति जवान्मत्तं गजानां व्रजम्

PārthPa. 41; युद्धायाभिगच्छन्तं सुषेणमनुगच्छत TriṣaŚaPuC. i. 5. 317; एनं विभूतिरिव सानुजगाम सीता तां लक्ष्मणस्तु सुखलाभ इवान्वगच्छत् PrasaRā. 5. 20; पुण्डरीकः …। तामन्वगच्छदौत्सुक्यात् PāṇḍaC. 7. 346; कर्म आस्रवशब्दाभिधेयं पुरुषान् स्रवत्यनुगच्छति PrakaVi. 546.17; प्रौढं वा मधुरं सम्यगनुगच्छति वादनात् ।… निःसारौ सालगे गीते यस्तं गीतानुगं विदुः SaṃgīRa. iii. 467. 3 (6. 1062); आस्रवत्यनुगच्छति कर्तारमित्यास्रवः कर्म VedāntKa. 274. 24 (*on* ii. 2.19); मोक्षार्थं कर्म तु न प्रहीयते, किं त्वा ब्रह्मलयात् तमनुगच्छति ŚrutaPra. ii. 590. 25 (*on* iv. 1. 18); भूतग्रहाः स्वगृहीतं वायुवदनुगच्छन्ति CaturCin. iii(1). 1005. 18; वत्सकान्यनुगच्छन्ति येन गावः समुत्सुकाः ŚāliC. 1.122; अनुजगाम च भूवरपन्नगः Yādavā. 3. 33; 12. 88; अर्था गृहे निवर्तन्ते श्मशाने मित्रबान्धवाः। सुकृतं दुष्कृतं चैव गच्छन्तमनुगच्छति SūktiRa. 34.2; निरोधः एकैकस्मिन्क्षणे चित्तमनुगच्छति JīvanVi. 100. 18; तात त्वामनुगच्छामः KumāDeC. 12.31; 'देवदत्तमनुगच्छति यज्ञदत्तः' इत्यत्र देवदत्ते पुरोगमनदर्शनात् NyāyMāVi. 101.3 (*on* ii. 3.10); 225. 21 (*on* iv. 1. 10); सः (शंकराचार्यः) …। विलोक्य तान् शूलपिनाकहस्तान्नैवानुगच्छेयमिति ब्रुवन्त्याम् । तस्यां (जनन्याम्) … अस्तौदथो माधवम् ŚaṅkaDigVi.(Mā.) 14. 33; यदि … राजा भवितुमिच्छसि तदा मामनुगच्छ PuruṣPa. 112. 27; शौरिः … तम् … अनुजगाम YudhiVi. 2. 35; 3.94; कर्तारमभिव्याप्या श्रवत्यनुगच्छतीत्याश्रवं कर्म VedāntKau. 204. 5 (*on* ii. 2. 33); अन्ये तु कर्माण्यास्रवमाहुः।… कर्तारमनुगच्छन्तीत्यास्रवः SarvaDaKau. 35. 11; राजाप्यात्मानं गोपयित्वानुगच्छति स्म BhojPra. 68. 9; रमाम् … अन्वगमत्स्वयं हरिः HammīMaKā. 3. 76; Nyāyāmṛ. 220B.7; अनुगच्छति या महीपतीनामनघां नीतिम् YātrāPra. 5. 9; तदेतत्पक्षद्वयमपि भगवतो भर्तृहरेरुक्तिमनुगच्छति LaCandr. 317. 26; 382. 14; धनभूषणपेटिका दधाना धरणीशं कतिचित्तमन्वगच्छन् Raghunā. 8. 68; 9. 62; शिवम् । शतमन्वगमन् रुद्राः Gaṅgāva. 4. 55; 7.12; तमपि वयस्यानुगच्छति श्यामाम् ŚṛṅgāMañ.(A.) 38. 21; विधेर्विरचितं विधिम् । अनुगच्छन्ति मनुजाः ParamāKā. 22.5; रघुतनयावनुजग्मतुर्मुनीन्द्रम् Rāgh. 2. 64; भागीरथीव पृतनानुजगाम हीरम् ĀnandRa. 6. 52; वीरो मत्पुत्रः तमेनमन्वितानुगच्छत BālamBha. i. 189.13 (*on* 1. 53); (pass.) to be followed पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते Rāmā. ii. 18. 30; मद्बुद्धिरनुगम्यताम् Rāmā. ii. 18. 36; लक्ष्मणेनानुयात्रेण पृष्ठतोऽनुगमिष्यते Rāmā. vii. 38. 11; तवैव पुत्रः सत्पुत्रो येन नक्तंदिवं वने। रामः … छाययेवानुगम्यते Prati. 2.10; उदकान्तं स्निग्धोऽनुगम्यत इति स्मर्यताम् Śāk. 4.17(1); जहीहि कोपं दयितोऽनुगम्यतां पुरानुशेते तव चञ्चलं मनः Kirātā. 8.8; न शिष्टैरनुगम्यन्ते पर्याया इव साधवः VākyaP. 1. 152; परलोकगतो देवः कृतघ्नैर्नानुगम्यते MudrāRā. 2. 20; शीघ्रमनुगम्यताम् MattaVi. 20. 35; यस्माद्यस्मिन्नर्थे प्रत्यक्षस्य साक्षात्कारित्वव्यापारो विकल्पेन अनुगम्यते तस्य प्रदर्शकं प्रत्यक्षम् NyāyBiṬ. 20. 2; नलिनिका … अनुगम्यताम् BṛKathāŚloSaṁ. 19.195; धीर्वाचानुगम्यते Kapphiṇā. 16.33; स श्रियेवान्वगम्यत NavaSāC. 2.37; द्रुतमयमनुगम्यतामिदानीम् NavaSāC. 3.30; 11. 26; घटादीनामुत्पत्तिर्व्यवहारसिद्धैव कुलालादिभिरनुगम्यते AbhinBhā. i. 9. 20 (*on* 1. 7); अनुजग्मे मितं कालं पूर्वभूपालपद्धतिः RājTa.(Ka.) 1. 351; तनयैः …। अन्वगामि जगत्स्वामी TriṣaŚaPuC. i. 3. 59; ii. 4. 12; त्वयानुजोऽसावनुगम्यतां मृधे PṛthvīVi. 2. 63; दीर्घाध्वन्यनुगम्यते न पदवी यस्य स्वयूथ्यैरपि ŚārṅgaPa. 955; Subhāṣi. 671; राजानशृङ्गारेण महात्मना । अन्वगामि नृपेन्द्रस्य प्रेम्णेव स्वर्गवासिनः RājTa.(Prā.) 170; नाथोऽन्वगामि धरणेर्नरपालवर्गैः Acyutarā. 10. 21; अयमेव करालः, काश्यपेन चायमनुगम्यते JānaPa. 3. 69(9); **1B** to follow (in death) तिस्रः कोट्यर्धकोटी च यानि लोमानि मानुषे। तावत्कालं वसेत् स्वर्गे भर्तारं यानुगच्छति ŚaṅkhaLiDS. 80; ParāSm. 4. 32; ŚārṅgaPa. 608; असह्यदुःखं वैधव्यं सहमाना कथं पुनः। भर्त्रा विरहिता तेन प्रवर्तिष्ये विनिन्दिता । तस्मादनुगमिष्यामि भर्तारं दयितं मम BrahmāṇḍP. ii. 30.38; अनुगच्छते पत्नी वह्नौ दीप्ते मृतं पतिम् BṛDharmaP. i. 10.11; दग्ध्वा दहने देहं तद्भार्यार्या तमन्वगमत् EI. xxii. 290.14; कुलत्रयं पुनात्येषा भर्तारं यानुगच्छति SiṁhāDvā. 211.4; श्मशाने नीयमानं तु भर्तारं यानुगच्छति … अश्वमेधस्य फलं प्राप्नोति VetāPañ.(Śi.) 45.22; पत्न्योऽनुजग्मुर्ज्वलनं प्रविश्य तिस्रोऽनुकूलाः श्रुतशास्त्रसाराः VīraBhā. 1. 65; मृतं पतिं भार्यानुगच्छेत् VīraMi. 153.4 (*on* 1. 86); **2** to imitate, to resemble, to match अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ṚV. i. 161. 11; गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः Rāmā. iii. 12. 6; SūktiRa. 54. 3; (शुद्धोदनः) वृत्तेनान्वगमत्पितॄन् Saund. 2. 6; आस्फालितं यत्प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत्। वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् RaghuVa. 16.13; शुकावली … धनुःश्रियं गोत्रभिदोऽनुगच्छति Kirātā. 4. 36; पद्मरागमुपादाय मणिवर्णा हि ये क्षितौ । सर्वांस्तान् वर्णशोभाभिर्वैदूर्यमनुगच्छति YuktiKa. 121. 8; सर्वभाषाः – आर्यानार्यामरवाचः अनुगच्छन्ति – अनुकुर्वन्ति … ते … जिनसंकाशाः AupaSūṬ. 64. 11; (pass.) to be imitated स्वार्थोद्यतैरपि परार्थचरस्य यस्य नैवान्वगम्यत गुणप्रतिपत्तिशोभा ।… नमे तमसमं सहधर्मसंघम् JātaMā. 1. 15 (1. 4); सगरतनयैरसमञ्जसचरितमनुगम्यते ViṣṇuP. iv. 4. 13; गतिरेतस्य गजैरिवानुजग्मे Yādavā. 15.110; **3** to go to, to go towards, to arrive at, to reach, to attain नाकेँ अग्निम् …। तं पत्नीभिरनु गच्छेम देवाः TaiS. IV. vii. 13.3; VājaS. 15.50; VājaS.(K.) 16. 6; एभिः सुकृतैरनुगच्छेम देवा यत्र नः पूर्वे पितरः परेताः MaiS. ii. 12.4 (ii. 148. 5); तन्नाह जहि मारयेति मानुषं हि तत् … एतर्हि ह्येष देवाननुगच्छति ŚatBr. III. viii. 1. 15; ŚatBr.(K.) IV. viii. 1. 12; KātyŚS. vi. 5. 21; स्वर्गो वै लोकः …। तं पत्नीभिरनुगच्छेम देवाः । … एनं सर्वेणानुगच्छेम ŚatBr. VIII. vi. 3. 19; अहमपि प्रजा अस्मिन् लोके विधाय स्वर्गं लोकमनुगच्छेयम् JaimiBr. 2.220; हविष्मांश्च वै हविष्कृच्चाङ्गिरसावास्ताम् ।… अथाकामयेताम् – कथं न्विद् यत्र … सुकृत स्वर्गं लोकमितास्तदनुगच्छेवेति ।… ततो वै तौ … अन्वगच्छताम् JaimiBr. 2.235; स्त्रीप्रथमाः कनिष्ठपूर्वा अप्रतीक्षा ग्राममायन्ति। प्रतिपदं ग्राममनुगच्छेयुः GautPiMe. i. 4.15; कौसल्ये देवरस्तेऽस्ति सोऽद्य त्वानुप्रवेक्ष्यति (v. l. स त्वाप्यनुगमिष्यति) MahāBhā. i. 100.2; पञ्च पाण्डवाः। विरोधमन्वगच्छन्त MahāBhā. i. 472*(2); एवमुक्तो मुनिः … ध्यानमन्वगमत्परम् MahāBhā. vi. 4.1; vi. 9.19; गङ्गामन्वगमन्प्रीताः सर्वे जलचराश्च ये Rāmā. i. 42.23; काननं वापि शैलं वा यं रामोऽभि (v. l. नु)गमिष्यति। प्रियातिथिमिव प्राप्तं नैनं शक्ष्यन्त्यनर्चितुम् Rāmā. ii. 42.10; नीचेन स्वरितः स्वारमेकीभावेऽनुगच्छति SvarāṅŚi. 8; हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्। ऋग्यजुःसामनिर्दग्धो वियोनिमनुगच्छति MāṇḍūŚi. 3. 3; श्रावकाणां विभुत्वेन लौकिकस्याभिभूतये ।… बोधिसत्त्वविभुत्वस्य तत्कलां नानुगच्छति। तथागतविभुत्वस्य तत्कलां नानुगच्छति MaYānaSū. 40.19 (9.39); तमन्वगिन्द्रप्रमुखाश्च देवाः सप्तर्षिपूर्वाः परमर्षयश्च। गणाश्च गिर्यालयमभ्य- (v. l. मन्व)गच्छन् KumāSaṁ. 7.71; चोरिकासुरतर(स)तृप्तिमन्वगच्छत् AvantiKa. 36.19; स्थाणुम् … अन्ये … अनुसंयन्ति अनुगच्छन्ति KāṭhUBh. 163.10 (*on* 5.7); एवं विद्वान् … एकतरं परमपरं वा अन्वेति ब्रह्मानुगच्छति PraśnaUBh. 283.16 (*on* 5. 2); असत्यसंव्यवहृतिलोभविस्मयं परात्तमन्वगमदशेषतः क्षयम् RāghPāṇ.(Dha.) 2.5; यथा पुमान् धनं प्राप्य कामिनीर्नानुगच्छति PārāSū. 100.14; अन्वगच्छत्कृतं पूर्वं महाप्रस्थानमच्युतम् BrahmP. 13.129; 39.37; तत्पापम् … वक्तृनेवानुगच्छति BhaviP. 16B. 34 (i. 4. 111); श्रीः…नूनं कदर्थदा। … कर्मणा तेन तेनैषा विस्तारमनुगच्छति YogVā. i. 13. 7; तद्गुणत्वमनुगच्छति SaraKaṇṭhā. 92.13; अपरामनुगच्छति वामाम् GītGo. i. 4. 8; तूणादुदस्ताद्धनुरन्वगच्छन्नितोऽपि याताः प्रतिपक्षवक्षः। पेतुः पृथिव्यामथ यस्य बाणाश्चिरं प्रतिष्ठा क नु निर्गुणानाम् Surath. 1. 88; मुरद्विषो वामनमूर्तिभाजः पर्यायतामन्वगमच्छशाङ्कः Yādavā. 2. 64; ब्रह्मविदुपासनयानुगमिष्यति AṇuBh. 81.22 (*on* i. 3.15); संस्कृतासंस्कृतं सर्वं विनाशमनुगच्छति ParamāKā. 23.13; **4** to pass away, to die out, to be extinguished यस्याहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेत् MaiS. i. 8. 8 (i. 127. 8); i. 8.9 (i. 130. 4); यस्याग्निरुद्धृतोऽनुगच्छति यथा पुत्रो जातः प्रमीयेत एवं तद् यद्यनुगच्छेत् तामेवोखां पुनः परीन्धीत MaiS. iii. 4.7 (iii. 53.11); यदि सायमहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेत् KāṭhS. 6. 6 (i. 55. 3); अस्यैषोऽन्तरात्मन्नग्निराहितो भवति तस्माद् तन्नाद्रियेत यदनुगच्छेन्न ह वाऽ अस्यैषोऽनुगच्छति ŚatBr. II. ii. 2.17; VI. vi. 4.10; यदा वाऽअग्निरनुगच्छति । वायुं तर्ह्यनूद्राति ŚatBr. X. iii. 3.8; XI. v. 3. 8; XII. iv. 3. 1; न वा अस्यैषोऽनुगच्छति योऽस्यान्तरात्मन्याहितो भवति ŚatBr.(K.) I. ii. 2.11; यत् पूर्वस्यामाहुतौ हुतायामङ्गारा अनुगच्छेयुः क्वोत्तरां जुहुयात् JaimiBr. 1.56; यदग्नयोऽनुगच्छेयुः किं तत्र कर्म का प्रायश्चित्तिः JaimiBr. 1. 61; आहवनीये चेद् ध्रियमाणे गार्हपत्योऽनुगच्छेत् स्वेभ्य एनमवक्षामेभ्यो मन्थेयुः ĀśvaŚS. I. iii. 12. 21; नैषोऽग्निरनुगच्छेत् BhārŚS. v. 3. 17; औपासनः … नानुगच्छेत् ĀpaŚS. v. 7. 10; ix. 1.11; ix. 2.8; KātyŚS. xxv. 3.1; यदि प्रातरहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेदनुगमयित्वा पूर्वं पूर्ववन्मन्थित्वापरम् … जुहुयात् ĀpaŚS. ix. 9.7; ix. 10.1; KātyŚS. xxv. 10. 17; HirŚS. xv. 3.6 (292. 2); यदि सर्वेऽनुगच्छेयुरग्निं मथित्वा यां दिशं वातो वायात् तां दिशमुद्धृत्य वायवे स्वाहेति जुहुयात् ĀpaŚS. ix. 10. 5; HirŚS xv. 3. 17 (295.18); त्रिराहतो दक्षिणाग्निरनुगच्छेच्चेत् अनाहरणमस्य तदहरेके KātyŚS. xxv. 3. 10; HirŚS. xv. 3.11 (293. 9); यदि होमकाल आहवनीयोऽनुगच्छेत् … गार्हपत्ये जुहुयात् VaikhāŚS. 20.17; अनुगच्छेद्वाहवनीयो लिङ्गात् SaṅkarKā. iii. 2. 10; यदा धार्योऽग्निरनुगच्छति ŚābaBh. 1783.6 (*on* ix. 4. 29); सायम् उद्धरति प्रातः इति प्रतिकर्मोद्धरणं दर्शयति। तस्मादुद्धृतोऽनुगच्छेत् SaṅkarKāBh. 134.14 (*on* iii. 2. 10); लोकान्तरं रजनिकामिनि हन्त याते …। नीहारनीरकणकैतवतोऽश्रुपातमातन्वती रजनिरप्यनुगच्छति स्म Surath. 7.26; (*caus.*) to cause to be extinguished, to cause to cease, to put out यस्याहवनीये ह्याग्निर्विद्येताथ गार्हपत्य उपशाम्येत का तत्र प्रायश्चित्तिः … यद्यनुगमयेत् प्राणो यजमानं जह्यात् AitBr. 32.5 (815); अनु वा गमयन्ति ŚatBr. II. i. 4.6; XII. iv. 2. 4; ŚatBr.(K.) I. i. 4. 5; JaimiBr. 1. 55; मानुषं ह कुर्याद्यदेनं ब्रूयुर्जहीति वा मारयेति वा संज्ञपयतानुगमयतेति ŚatBr.(K.) IV. viii. 1. 12; आहवनीये चेद् ध्रियमाणे गार्हपत्योऽनुगच्छेत् स्वेभ्य

एनमवक्षामेभ्यो मन्थेयुरनुगमयेत् त्वितरः ĀśvaŚS. I. iii. 12.21; अनुगमयत्येतमग्निम् BhāŚS. v. 4.5; ix. 10.13; नात्राहवनीयमनुगमयति ĀpaŚS. ix. 7.12; HirŚS. xv. 2.29 (287.28); यद्यसंन्युप्ते स्पाशयेयुरनुगमयेयुरेनं (अग्निम्) न प्रायश्चित्तम् ĀpaŚS. ix. 10.12; xvi. 9.10; अनुगमयन्त्यग्निमुद्धरन्ति भस्म VārāŚS. I. iv. 1.22; II. i. 3.18; आत्मन्नग्निं गृहीत्वा।… अभिमन्त्र्यानुगमयति ब्राह्मौदनिकम् HirŚS. iii. 3.5 (305.14); xi. 3.14 (26.20); xv. 3.3 (291.7); VaikhāŚS. 1.8; 18.7; **5** to seek, to look for, to find out लोभान्मम कृते नूनं नानुगच्छसि राघवम् Rāmā. iii. 825*; (pass.) to be found out महतो विद्यान्तरस्यानर्थक्यमेव।… तथा ज्योतिर्विद्यायाम् … °फलानुपलम्भाच्च। तत्र तदन्यानर्थक्यसमाधानं यदि वेदान्तेषु नानुगम्येत SiddhāSi. i. 43.24; **6** to tally with, to correspond to, to agree त्रिविधं गीते कार्यं वाद्यम् …। तत्त्वं ह्यनुगतमोघः …। गीतं तु यदनुगच्छत्यनुगतमिति तद् भवेद् वाद्यम् NāṭyaŚā. 29.77; (pass.) to be tallied with, to be corresponded to, to be agreed with व्यापारविशेषः … आत्मसु प्रसिद्धः इहानुगम्यते BrahmSūBh.(Śaṅ.) 638.19 (*on* iii. 3.16); तद्रूपेण रसस्य जन्म … अयमपि प्राग्वदेवान्यैर्नानुगम्यते SaraKaṇṭhā. 582.3; **7** to take or to have recourse to, to respond to न दृश्यते क्वापि चरैः कुमारः। परीक्षितुं तं मनसोऽस्ति शक्तिर्नूनं हि मायामनुगच्छतीति Avimā. 6.10; अन्त्यपाषण्डादीन् वाङ्मात्रेणापि न (सेवेत)। कार्यगुरु(क)तयानुगच्छेत् Bārhas. 1.76; **8** to practise, to observe (भार्या) व्रतनियमविधानं स्वेन चास्यानुगच्छेत् RatiRaha. 12.6; श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं योऽनुगच्छति। पितरस्तु तयोर्मासं तस्मिन् रेतसि शेरते MārkP. 31.31; समाधिर्नाम यो गुणः। कविसार्थः समग्रोऽपि तमेनमनुगच्छति Kāvyāda. 1.100; **9** (pass.) to be accepted, to be admitted, to be applied स्मृत्यर्थमनुगम्यते VākyaP. 1.26; वाक्ये त्वर्थान्तरगतेः सादृश्यपरिकल्पने। केषांचिद् रूढिशब्दत्वं शास्त्र एवानुगम्यते VākyaP. 2.37; नियतास्तु प्रयोगा ये नियतं यच्च साधनम्। तेषां शब्दाभिधेयत्वमपरैरनुगम्यते VākyaP. 2.127; 2.265; असिद्धार्थः प्रमाणेन किं सिद्धान्तोऽनुगम्यते। हेतोर्वैकल्यतस्तस्मात् किं तदेवात्र नोदितम् PramāVār. 2.46; सर्वेणापि ततः कृत्वा प्रमाणेत्यनुगम्यते TantrVā. 102.8 (*on* i. 3.3); 226.10 (*on* i. 3.23); योगैरपि … श्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनानुगम्यते BrahmSūBh.(Śaṅ.) 288.19 (*on* ii. 1.3); प्रोद्गातॄणामित्यादौ तु न पाशन्यायोऽनुगम्यते SiddhāSi. i. 21.4; **10** to understand, to infer, to explain प्राप्तिं तु समवायाख्यां वाच्यधर्मातिवर्तिनीम्। प्रयोक्ता प्रतिपत्ता वा न शब्दैरनुगच्छति VākyaP. 3(3).19; (pass.) to be understood भिन्नं दर्शनमाश्रित्य व्यवहारोऽनुगम्यते VākyaP. 1.74; एकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः। शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते VākyaP. 2.9; सन्त एव विशेषा ये पदार्थेषु व्यवस्थिताः। ते क्रमादनुगम्यन्ते न वाक्यमभिधायकम् VākyaP. 2.50; उपकारात् स यत्रास्ति धर्मस्तत्रानुगम्यते VākyaP. 3(3).5; लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति TantrVā. 228.6 (*on* i. 3.25); 248.2 (*on* i. 3.26); तस्य भौतिकतेजोव्यतिरिक्तं ब्रह्म निर्दिष्टमनुगम्यते BrahmSūBh.(Bhā.) 59.12 (*on* i. 3.22); प्रतीतिक्रम एव अकृतकसंस्कारसारः शाब्दिकैर्लक्षणैरनुगम्यते ParāTri. 80.2; NayaVi. 170.6 (*on* i. 1.5); शब्दोऽनुपपत्त्या क्वचिदमुख्यार्थोऽनुगम्यते NyāySu.(Ja.) 14B.7 (*on* i. 1.1); (*caus.* with the primitive meaning) अथवा सर्वभाषाः – संस्कृतप्राकृतमागध्याद्या अनुगमयन्ति – व्याख्यान्तीत्येवंशीला ये ते तथा … जिनसंकाशाः AupaSūṬ. 64.12; **11** (pass.) to be continued, to be common to all instances अमाद्युपजनापाये वृक्षार्थो ह्यनुगम्यते ŚlokaVār. 7.157 (890.6); **12** to merge into, to enter into स्वयोनिं वाक्समप्येति वातं प्राणोऽनुगच्छति BṛĀraUBhVā. iii. 2.124; (pass.) to be entered into (छिद्रं च वारयेत् सर्वं श्वसूकरमुखानुगम्) श्वसूकरमुखेन यदनुगम्यते तन्मुखपरिमाणम्। तथा कुर्याद्यथा श्वमुखं न माति ManuBh. ii. 183.3 (*on* 8.239); **13** to be present in, to exist in आकाशोऽस्तीति सत्तत्वमाकाशेऽप्यनुगच्छति PañcDa. 2.60; अकारणमपि द्वारं कार्येऽनुगच्छति SiddhāLeSaṁ. 64.3; **14** to pervade, to exist throughout सादृश्यधीप्रभृति न त्रितयं निमित्तमध्यासभूमिषु जगत्यनुगच्छतीदम् SaṁkṣeŚā. 1.28 (i.38.7); **15** to become applicable वैदिके कर्मणि सामस्त्येन दक्षिणा आम्नायन्ते न प्रतिपुरुषं विभागेन …। तच्चातिदेशेन क्रत्वन्तराणि तद्विकाराण्यनुगच्छन्ति राजसूयादीनि ManuBh. ii. 170.16 (*on* 8.208); **16** to obey भुवनाधिपतीनतीत्य लक्ष्मीर्यमुपास्ते वपुषा गुणैश्च रम्यम्। स यदाह मदाननेन शुम्भः शृणु तद्देवि विचिन्त्य चानुगच्छ Surath. 8.36; (pass.) to be obeyed अनभिज्ञो गुणानां यो न भृत्यैः सोऽनुगम्यते Pañcā. 10.31.

**अनुगम** (anu-gama) *m.* [P. iii. 3.58] **1** rule or explanation **2** understanding, cognition, knowledge, comprehension, grasp **3** correlation, connection, association, construction, agreement **4** uniformity, commonness, continuity, sameness **5** approach, coming to **6** following, going after, dependence, following up **7** existence, presence **8** imitation, similarity **9** acceptance **10** repeated mention, repeated utterance **11** extinction **1** rule or explanation विंशत्यादयोऽव्युत्पन्नानि प्रातिपदिकानि। यथा सहस्रादिषु। तद्यथा। सहस्रम् अयुतम् अर्बुदमिति न चानुगमः क्रियते, भवति चाभिधानम् MahāBh. ii. 355.23 (*on* v. 1.59); अत्रापि संदेहो नासूया कर्तव्या यत्रानुगमः क्रियते MahāBh. ii. 356.2 (*on* v. 1.59); प्रयुक्तानां हि शब्दानां शास्त्रेणानुगमः सताम् VākyaP. 3(14).560; तमिमम् … भाष्यकारप्रयोगं समर्थयमानैरेवमनुगमः कर्तव्यः TantrVā. 101.20 (*on* i. 3.3); 201.22 (*on* i. 3.18); अस्या लक्षणाया मतुब्लोपाम्नानेनानुगमः TantrVā. 701.13 (*on* iii. 1.8); गोशब्दे त्वेकोऽर्थः प्रतीयते। तत्र यस्यानुगमः स साधुरितरेऽपभ्रंशाः ṬupṬ. 283.20 (*on* x. 8.4); **2** understanding, cognition, knowledge, comprehension, grasp प्राणस्तथानुगमात् BrahmSū. i. 1.28; BrahmSūBh.(Śaṅ.) 83.5 (*on* i. 1.28); AṇuBh. 47.7 (*on* i. 1.27); दृश्यभेदानुकारेण वाक्यार्थानुगमस्तथा VākyaP. 2.7; स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते। अस्मार्तेऽनुगमाभावात् क्रमात् त्रिपुरुषागता KātySm. 321; सतो मूलस्यानुगमः कार्यः ChāndoUBh. 381.6 (*on* vi. 8.5); प्रत्यक्षे इव स्वकारणशुद्धेरनुगमो विपर्यासशङ्कानिरासार्थः NyāyKa. 5.3; इन्द्रप्राणशब्दाभ्यां प्रस्तुतस्य (ब्रह्मणः) आनन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते BrahmSūBh.(Rā.) 227.1 (*on* i. 1.29); VedāntSā.(Rā.) 54.3 (*on* i. 1.29); VedāntDī. 29.9 (*on* i. 1.29); VedāntKau. 43.12 (*on* i. 1.29); BrahmSūBh.(Śrī.) i. 286.5 (*on* i. 1.29); अनुगमो नाम निश्चयज्ञानम् Subodhi. 18.3 (*on* 2.27); कीटानुविद्धरत्नादिसाधारण्येन काव्यता। दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः SāhiDa. 12.2; शक्यस्याप्युपलक्षणेनैवानुगमोऽस्तु ŚaktiVā. 98.8; तादृशभूमौ तादृशजले च प्रवृत्तिनिमित्तभेदात्तीर्थशब्दो नानार्थः। गुरुत्वेन वा द्वयोरनुगमः VīraMi.(Tīrtha.) 11.15; अनुगमः आगमाभावनिश्चयः VīraMi.(Vyavahāra.) 154.17; पद्येषु बाहुल्यमिह प्रबन्धे मितानि गद्यानि तु तावतापि। अस्येव लक्ष्मानुगमः YātrāPra. 1.11; **3** correlation, connection, association, construction, agreement वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः YogSū. 1.17 (TattvVai. संप्रज्ञातसामान्यं वितर्कविचारानन्दास्मितानां रूपैः स्वरूपैरनुगमात्प्रतिपत्तव्यम्); (आहारः) विंशतिगुणः … °सूक्ष्मस्थूलसान्द्रद्रवानुगमात् CaraS. i. 25.35 (1922 Ed.); न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते VākyaP. 1.124; साध्येनानुगमो हेतोः साध्याभावे च नास्तिता NyāyVār. 140.1 (*on* i. 1.37); साध्येनानुगमात् कार्ये सामान्येनापि साधने। संबन्धिभेदाद् भेदोक्तिदोषः कार्यसमो मतः PramāVār. 2.14; एकदेशस्य लिङ्गत्वं साध्येनानुगमोऽस्य च। द्वयं च न स्यात् ŚlokaVār. 5(4).29 (355.3); इत्येतत् 'श्रोत्रस्य श्रोत्र'-मित्यादिप्रतिवचनस्यार्थः अनुगमात् KenUVāBh. 71.5 (*on* 1.2); स्वाजन्यानुगमोऽस्त्येको धर्मरागस्तथापरः MahāP. 36.190; ध्वनिमात्रेऽपि स्वतन्त्रे पक्षीकृते न कृतकत्वस्य तेनानुगमः शक्यो दर्शयितुम् Kāśi. iii. 27.8 (*on* 5(4).30); असति कस्य चिद्रूपस्यानुगमे सादृश्यस्याप्यन(?नु)पपत्तेः। अनुगमे वा तदेव कारणम् Bhām. 426.1 (*on* ii. 2.20); अन्वयोऽनुगमः सति शब्देऽर्थावगमः PraDī. ii. 48A.3 (*on* i. 2.45); अनुगमः पूर्ववाक्यप्रकृतस्योत्तरवाक्यसंबन्धः ŚrutaPra. iB. 273.22 (*on* i. 1.29); ii. 460.19 (*on* iii. 3.9); न पुनरनुगमः सिद्धपूर्वो विशेषे TattvMu. 4.41; शब्दानुगमशून्यं यत्संमुग्धज्ञानं जायते MānaMe. 17.5; **4** uniformity, commonness, continuity, sameness तदन्यान्याभावात्परमगहनत्वादनुगमात्।… न धर्मेऽस्मिंस्त्रासो भवति MaYānaSū. 6.15 (1.15); तद्भावे च व्यक्तिद्वयान्तरालमप्याप्नुवतः कथं तदनुगमः HetuBiṬ. 30.17; न च शबलस्यान्यत्रानुगमः, यस्य त्वनुगमः स वस्तुरूपं न भवति BrahmSi. 66.14; नित्यचैतन्यस्वभावस्यात्मनोऽपि न निःशेषरूपविगमः सर्वस्यानुगमोऽपि वा TattvSaṁ. 224; 1894; स्वलक्षणस्य देशकालाकारनियतत्वेनान्यत्रानुगमाभावात् TarkBhā.(Mo.) 28.17; भेदस्तात्त्विकोऽनुगमो मृषा NyāyMañ. i. 275.10; कारणस्य च सद्रूपस्य सर्वत्रानुगमात् Bhām. 88.2 (*on* i. 1.4); धर्मिणश्च भिन्नाभिन्नरूपतया सर्वत्रानुगमः RājMār. 48.6; देवतास्तुतेः … शृङ्गारस्य सर्वत्रानुगमात् AbhinBhā. i. 171.21 (*on* 4.261); तद्रूपेण रसस्यानुगमो यथा SaraKaṇṭhā. 579.15; परमकारणस्य च सतः सर्वत्र हेमवदनुगमात् VedāntKa. 70.27 (*on* i. 1.4); सामान्यादिष्वपि सत्सदित्यनुगमः SyādvāMañ. 8(137); अग्निकार्यभूतायां प्रभायां प्रकाशशक्तेरेवानुगमात् VivaPraSaṁ. 276.16; अनुगमादनिदंप्रथमा गिरः किमपि यत्पदमेकमधीयते Yādavā. 3.15; नापि सादृश्यरूपम्। स एवेत्यनुगमात् YuktiSneha. 93.17 (*on* i. 1.5); सत्त्वादीनामनुगमाय सामान्येति SāṁkhyaPraBh. 30.11 (*on* 1.61); 44.26 (*on* 1.87); सद्रूपस्यात्मनः सर्वत्रानुगमात् SiddhāBi. 17.4; नपुंसकलिङ्गमिति शाब्दिकमर्यादया नपुंसकलिङ्गस्य स्त्रीपुंलिङ्गरूपयोरपि विकारयोरनुगमात् UpaParā. 48.15; निर्दोष° … °सर्वशक्तिमत्त्वादिरूपमहिमातिशयवद्ब्रह्मेति ब्रह्मशब्दस्य तत्पर्यायाणां शिवादिशब्दानां चार्थानुगमेन … इत्यादिश्रुतिभ्यश्चावगतम् ŚivārkaMaDī. i. 89.24 (*on* i.1.1); ii. 73.19 (*on* ii. 2.12); 'मायां तु प्रकृतिं विद्यादि'ति श्रुतेः मायाजाड्यस्य घटादिष्वनुगमात्

AlaṅkāKau.(Vi.) 30. 4.

**अनुगामिन्** (anugām-in) *adj.* [*f.* -ī] **1A** (person or thing) following, pursuing, accompanying, going after **B** subsequently occurring or resulting **2** moving in the same direction **3A** going or acting in accordance with **B** loyal **4A** running through (i. e. applicable to all instances) **B** continuing (by hereditary rights) **C** continuing (for all time i. e. eternal) **5** dependent **1A** (person or thing) following, pursuing, accompanying, going after तृष्णाभार्यानुगामिना। वशः कौलेयकेनेव ब्रह्मन्मुक्तोऽस्मि चेतसा MahāU. 3(19); दीक्षितसंवरेण पत्नीमभ्युदानीयाथाहमनुगामिनी स्वे लोके विश इहेति पश्चाद् यजमानस्योपवेशयति MānŚS. 69. 10; अदुःखार्हा परं दुःखं प्राप्तेयं मृदु (v. l. अनु)गामिनी। आश्वासय महाराज तामिमां श्रमकर्षिताम् MahāBhā. iii. 144. 7; पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनाम्। प्रस्थितानामिव समं पश्यामीह गतिं खग MahāBhā. v. 110. 6; ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः। सर्वान्यक्षगणान् MahāBhā. v. 193. 45; अद्य तावद् वयं युद्धे कर्णस्यैवानुगामिनः।… द्रक्ष्याम संयुगे MahāBhā. viii. App. I. 6(9); तं दृष्ट्वा मन्त्रिणः सर्वे त्यक्त्वा चण्डालरूपिणम्। प्राद्रवन्सहिता राम पौरा येऽस्यानुगामिनः Rāmā. i. 57. 10; सिंहव्याघ्रमृगद्विजाः। अन्वधावंस्तदा रोषात्सीताच्छायानुगामिनः Rāmā. iii. 50. 34; वायुपुत्रानुगामिनी। तस्य सा शुशुभे छाया वितता लवणाम्भसि Rāmā. v. 1.70; अधर्मशीलम् … वैरमदानुगामिनम्।… जहि रावणम् Rāmā. vi. App. I. 7(71); भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः। धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः SvapnVā. 1.2; पञ्चगव्यं पिबेद् गोघ्नः … गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति YājñaSm. 3. 263; देवपादानां वयमन्वयागता भृत्या आपत्स्वप्यनुगामिनः Tantrākhyā. 9. 25; PañcT. 1. 33(2) (30. 6); Pañcā. 10. 27; गोघ्नः … गच्छन्तीनां (गवाम्) परिचारकत्वेनानुगामी स्यात् BālaKrī. ii. 143.19 (*on* 3.260 (? 266)); शुश्रूषणं तत्र करोति वायोः सुतोऽनुगामी हनुमान्नृपस्य BrahmP. 157.22; पुलस्त्यस्तु …। मुमोच रक्षः पौलस्त्यं पौलस्त्ये(v. l. पुलस्त्ये)नानुगामिना। तस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः BhaviP. 688A. 19 (iv. 58.50); कृष्णा चास्ये भवेल्लेखा पृष्ठवंशानुगामिनी AśvaVai. 3. 104; 3.122; अदृश्यत ततः सीता … वाल्मीकिमनुगामिनी RāmāMañ. 502. 12; संनिधौ निधयस्तस्य कामगव्यनुगामिनी।… संतोषो यस्य भूषणम् YogŚā. 2.115; कपिध्वजः…पर्यश्रुमनुगामिनम्।… बलादिन्द्रं न्यवर्तयत् PāṇḍaC. 8. 386; एषा मय्यनुरक्ता चेच्छायावदनुगामिनी PrabhāC. 6.31; **1B** subsequently occurring or resulting तत्रान्यपरिवारा व्याधयो द्विविधाः पुरोगामिनोऽनुगामिनश्च AṣṭāSam̐. i. 117.22 (1.22); **2** moving in the same direction घनपत्रभृतोऽनुगामिनस्तरसाकृष्य करोति कांश्चन।… पूर इवोदकस्य यः ŚiśuVa. 16.74; महतामनुगामिनां सतां सुरभित्वं वितरद्भिरुज्ज्वलैः। चरितान्यनुचक्रिरे मुनेर्विकसत्केतकपुष्पकेसरैः NemiNir. 14. 25; **3A** going or acting in accordance with देवदेवेन भाषितं धर्ममुत्तमं श्रुत्वा देवमनुष्याश्च … भेजुः …। अनागारव्रतं केचित्स्वशक्तेरनुगामिनः PadmP.(Ra.) 4.53; तस्य सूनुः…मनुदर्शितमार्गानुगामी … कक्कराजनामधेयः EI. iv. 340. 6; आत्तव्रतस्य तातस्य सत्पथेनानुगामिनौ … एतावेवौरसौ पुत्रौ TriṣaŚaPuC. i. 1. 708; **3B** loyal संग्राहिणः कौक्षिकांश्च जङ्घालाननुगामिनः। ऊर्जस्वलान्सांयुगीनान्सैन्यमध्ये प्रचारयेत् NītiPra. 6. 16 [PāryāŚaRa. 1035]; **4A** running through (i.e. applicable to all instances) न चात्रानुगामि किंचिद्रूपमस्ति केवलं तदर्थतया ते भावा अतदर्थेभ्यो भिन्ना इति भेद एव एषामभेदः PramāVāSvopVṛ. 44.18; नित्यत्वं चानुगाम्येषामनित्येभ्यो निवर्तितम् ŚlokaVār. 6.334 (815.2); सिद्धेऽप्यन्यनिमित्तत्वे न सामान्यं प्रसिध्यति। अनुगाम्येकमध्रौव्यविविक्तं च क्रमोदयात् TattvSam̐. 743; 769; (चाक्षुषम्) तदेवास्तु प्रमाणं वा तेनापि त्ववगम्यते। व्यावृत्तं वस्तुनो रूपं नानुगामीति का प्रमा NyāyMañ. i. 282.25; i. 283. 6; (उपमायाम्) क्वचिदनुगाम्येव धर्मः RasGaṅ. 228. 16; 263. 4; अनुगामिनं विना धर्मस्वरूपस्यैवानिष्पत्तेः RasGaṅ. 438.9; **4B** continuing (by hereditary rights) आचन्द्रादित्यकालीयौ पुत्रपौत्रानुगामी (Read गामिनौ)। भुञ्जता (Read तां) न केनचिव्याघातं (Read द् व्याघातः) कर्त्तव्यः EI. iii. 262.21; xxii. 173.23; xxiii. 87.34; (ग्रामाः) ब्राह्मणेभ्यः … पुत्रपौ[त्र]ाद्यन्वयानुगामिन्याः संकल्पितभूमेः संबन्धे शासनीकृत्य प्रदत्ताः EI. iv. 158. 16; xvi. 13.23; स्वस्तिवाचनपूर्व्वंश्चन्द्रार्कसमकाल(लं)पुत्रपौत्राद्यन्वयानुगामि (? मिनी) … से(शे)षभूमिः शासनीकृत्य प्रदत्ता EI. xx. 130. 14; **4C** continuing (for all time, i. e. eternal) अस्मिंल्लिङ्गे भक्ताश्च ये नराः। न तेषां मम विघ्नानि मम वागनुगामिनी SkandP. i(2). 34. 95; **5** dependent शाक्तः सदाश्रमो गेही …। वानप्रस्थाश्रमी यो वै वैष्णवः …। यत्याश्रमः सदा रौद्रः …। ब्रह्मचर्याश्रमस्तेषामनुगामी महाश्रमः BhaviP. 586A.28 (iii(4). 20. 8); *m.* **i** attendant, servant अस्थाने यदि वा स्थाने सततं रजसावृतः (v.l. चानुगामिनि)। क्रुद्धो दण्डान्प्रणयति विविधान् स्वेन तेजसा। मित्रैः सह विरोधं च प्राप्नुते MahāBhā. iii. 29. 17; SūktiRa. 67.1; (भरतशत्रुघ्नयोः) तयोर्विलपितं श्रुत्वा व्यसनं चान्ववेक्ष्य तत्। भृशमार्ततरा भूयः सर्व एवानुगामिनः Rāmā. ii. 71.19; आदित्याः … व्याघ्राश्चैवानुगामिनः। आभूतसंप्लवे घोरे …। किमवस्था भवन्त्येते VāyuP. ii. 39. 333; BrahmāṇḍP. iii. 2 270; ŚiśuVa. 16.74; तावदेव प्रपद्यन्ते भङ्गं भीत्यानुगामिनः। यावत्स्वामिनमीक्षन्ते न पुरो विकचाननम् PadmP.(Ra.) 89.85; **ii** follower, an adherent नास्ति किंचिदविज्ञेयमन्यच्चैवानुगामिनः VāyuP. ii. 39.331; BrahmāṇḍP. iii. 2.268; व्याधवरो जगाद प्रदीयतामेष वरः सुतेष्वपि। क्रियाकलापेन तथात्मविद्यया कुलप्रसूतावपि तेऽनुगामिनः VarāP. 8. 51 [Kośas give *anugāmin* as the meaning of *anuga*- NānārthāSam̐. ii. 41.3; NāmŚil. 1788 and as the synonym of the following words — *anuga*, ŚabdaRa.(Vā.) 2732; ŚabdaRa.(Su.) 3.107; *anucara*, ŚabdaRa.(Vā.) 2732; ParaNā. 1961; ŚabdaRa.(Su.) 3.107; *anuplava*, ŚabdaRa.(Vā.) 2732; ParaNā. 1961; *anvaggāmin*, ŚabdaRa. (Vā.) 2732; *abhigāmin*, ParaNā. 1961; *abhicara*, ParaNā. 1961; *abhisara*, ŚabdaRa.(Vā.) 2732; *sevaka*, ParaNā. 1961]

**अनुगामिमात्र** (anugāmi-mātra) *n.* what is merely applicable (to both) अत्र बिम्बप्रतिबिम्बतायां न केवलं क्रियारूपमनुगामिमात्रं चमत्कारकारणम्, अपि तु कुसुमादिबिम्बप्रतिबिम्बकरम्बितम् RasGaṅ. 438. 6.

**अनुगामुक** (anu-gāmuka) *adj.* [P. iii. 2. 154; Debru. 480] habitually or constantly going through or running through स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामकः (v.l. मुकः Calcutta Ed. 1895)। न तिरोधीयते स्थायी तैरसौ पुष्यते परम् SāhiDa. 164. 12.

**अनुगामुकता** (anugāmuka-tā) *f.* the state of being one who goes after (someone) constantly शौरिमेवानुधावन्ति त्यक्त्वा वेश्मानि नः स्त्रियः। अनुगामुकतां शौरेस्तासु प्राप्तासु सर्वतः। कलत्रकर्तृका कापि शुश्रूषा नास्ति नः PāṇḍaC. 2. 105.

**अनुगाम्येकधर्मन्** (anugāmy-ekadharman) *adj.* [P. v. 4. 124, iv. 1. 11] possessed of a uniform single property स्वेन स्वस्योपमाप्यनुगाम्येकधर्मा चेदेवानन्वयो नान्यथेत्यत्रोपपत्तिमात्रपरम् CitraMī. 42. 14.

**अनुगाम्येकधर्मिका** (anugāmyekadharmi-kā) *adj.* (*f.*) possessed of a uniform single property स्वस्य स्वेनोपमा या स्यादनुगाम्येकधर्मिका। अन्वर्थनामधेयोऽयमनन्वय इतीरितः CitraMī. 42.7.

**अनुगाय** (anugā-ya) *ger.* having sung after स खलु प्रथमाऽ स्तोत्रीयामनुगाप्या(v.l. या)होरात्रे वाग्यतः परिणद्धाक्ष आसित्वा तस्याऽ संवत्सरं ब्रह्मचर्यं चरेत् NidāSū. 66.17 (4.3)

**अनुगाय** (anugā-ya-) *denom.* [P. iii. 1.11] to behave like an attendant, cf. ²**अनुगायमाना.**

**अनुगायत्** (anu-gāyat) *adj.* [*f.* -ntī] singing after or along with कचः …। गायन्नृत्यन् वादयंश्च देवयानीमतोषयत्।… देवयान्यपि तं विप्रम् … **अनुगायन्ती** ललना रहः पर्यचरत्तदा MatsyaP. 25.29; (सौभरिः) स्वलंकृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृङ्गबन्दिषु BhāgP. ix. 6.46; ददर्शाथ समायान्तं गोपैर्गोभिरधोक्षजम्। वयस्यैरनुगायद्भिः कीर्तिं परमपावनीम् ĀdiP. 14.101; आवां हरिपूजासु हर्षविह्वलचेतसौ। नृत्यन्तावनुगायन्तौ विलुण्ठन्तौ स्थिताविह KalkiP. iii. 11.18; वन्दे कृष्णम् … अनुगायद्भिः … गोपालैरुपशोभितम् PañcaRā.(Nā.) iv. 6.14.

**¹अनुगायमाना** (anu-gāyamānā) *adj.* (*f.*) singing along with कचस्तु …। गायन्नृत्यन्वादयंश्च देवयानीमतोषयत्।… देवयान्यपि तं विप्रम् … **अनुगायमाना** ललना रहः पर्यचरत्तदा MahāBhā. i. 71.24.

**²अनुगायमाना** (anugāya-mānā) *adj.* (*f.*) [P. iii. 1.11] behaving like an attendant देवयान्यपि तं विप्रम् …। अनुगायमाना ललना … रहः पर्यचरत्तदा MahāBhā. i. 71. 24 (JñānDī. अनुगायमाना अनुगवदाचरन्ती)

**अनुगायस्** (ánu-gāyas) *adj.* [AltGr. II. ii. 79 (Nt.); Debru. 235] singing or echoing after रथं वामनुगायसं य इषा वर्तते सह। न चक्रमभि बाधते ṚV. viii. 5.34 [followed by shouts or hymns, MW]

**अनुगाह्** (anu-gāh-) I. Ā. **i** to enter or plunge into आमन्त्र्य स मुनीन्सर्वान्वनमेवान्वगाहत Rāmā. iii. 2.1; (सीता) पवित्रचारित्रनिधेरधिदेवता … दहनमनुजगाहे RāmāCam 6.96(4); **ii** to follow, to chase हरिणमनुजगाहे चापमादाय रामः RāmāCam. 3. 25.

**अनुगित्त्व** (anugit-tva) *n.* the state of being that which does not end in the indicatory sounds *uk* (i.e. the sounds *u*, *ṛ*, or *ḷ*) तत्र वन्नन्तस्यानुगित्त्वाददन्तत्वासंभवाच्च वाक्यभेद आश्रीयते PradI. vi. 6.20 (*on* vii. 1.1)

**¹अनुगिरम्** (anugiram) *adv.* [P. v. 4.112; BhāṣāVṛ. *on* v. 4.112] **i** by the side of or near the mountain अयं सुजातोऽनुगिरं तमालः RaghuVa. 13.49 (comm. गिरेः समीपेऽनुगिरम्); न्यविशतानुगिरं कमलाकरान् रसमनाः समनादमलिव्रजः HarVi. 3.16 (comm. गिरिसमीपे); अनुगिरमथो सिन्धुप्रख्यं तडागमचीखनत् प्रचुरसलिलम् EI. xxi. 150. 22; **ii** on the mountain विरचय्य

काननविभागमनुगिरमथेश्वराज्ञया। भीमनिनदपिहितोरुभुवः परितोऽपदिश्य मृगयां प्रतस्थिरे Kirātā. 12.44 (comm. अनुगिरं गिरौ); अनुगिरमृतुभिर्वितायमानामथ स विलोकयितुं वनान्तलक्ष्मीम्। निरगमत् ŚiśuVa. 7.1.

**²अनुगिरम्** (anugiram) *adv.* in accordance with the sound (जलदैः) तैरुदूढतडिदूर्ध्वतन्तुभिः। नृत्यतामनुगिरं कलापिनाम्बरे बत धृता वितानता Rāgh. 11.2.

**अनुगिरि** (anugiri) *adv.* [P. v. 4.112; BhāṣāVṛ. *on* v. 4.112] towards the hill कामं कूले नदीनामनुगिरि महिषीयूथनीडोपकण्ठे गाहन्ते शष्पराजीरभिनवशलभग्रासलोला बलाकाः SubhāRaK. 10.50; SaduktiKa. 174.2.

**अनुगिरिनदम्** (anugirinadam) *adv.* in the vicinity of the river (flowing) from the mountain जात्वन्योऽन्यप्रणयकलहे जातरोषापि ··· यदकरोरश्रुदिग्धैरपाङ्गैः। तन्मे चेतस्यनुगिरिनदं स्मारयन्ति प्रकामं वीचिक्षोभोपनतसलिलान्युत्पलानां दलानि HaṁsDū.(Vā.) 111.

**अनुगीकृत** (anugī-kṛta) *adj.* who is rendered a companion मात्रा तन्मार्गरक्षार्थं तदा तदनुगीकृताः। परैराचार्यप्रसराः स्वाशीर्वादाः परं शतम् NaraP. 31.38.

**अनुगीत** (anu-gīta) *adj.* **1Ai** praised, eulogised अथाग्निं संचितमनुगीतमनुशंसेत् ĀśvaŚS. I. iv. 8.24 (comm. संचितमग्निं प्रस्तोता(?त्रा)-नुगीतमनुशंसेत्); राजा वृष्णीनामुग्रसेनः प्रतापवान्। उपगीयमानो (v.l. अनुगीतः स) गन्धर्वैः MahāBhā. i. 211.8; अनुगीतश्चित्रकण्ठीभिरुच्चैर्व्रजनवयुवतीभिर्भाति कुञ्जेविहारी StavMā. 34.4; 177.17; 242.4; **1Aii** imitated मञ्जुगीतनादस्तदावयोः। अनुगीत इवात्रस्थैः किंनरै राजगौरवात् RājTa.(Śrī.) 1(5) 101; **1B** for whom (a *sāman*) is chanted यथोक्तं सामगानमनुगीतो ब्रह्मलोकमवाप्नुयात् GautPiMe. i. 3.20; **2** advised, instructed सोऽहमेवं भगवता पित्रा ···। अनुगीतो यथान्यायं स्वमेव भवनं गतः MahāBhā. xiii. App. I. 3A (162); **3** sung in conformity with (a preceding passage) [DBHS.]

**अनुगीत** (anu-gīta) *n.* **1A** one of the three varieties of *sāmans* एतानि त्रीणि साम्न उद्गीतमनुगीतमागीतम्।···अथ यद्यथागीतं तदनुगीतम् JaimiUBr. i. 55.14; **1B** song in consonance or harmony with नूपुराणां झंकारस्यानुगीतैरनुकरणमिवारभ्यते भृङ्गसार्थैः Ratnā. 1.18; **1C** song of praise गायतः-(?गायति) सोऽनुगीतानि स्वकृतानि ···। तुष्टो महीपतिस्तस्मै व्यधात् कनकवर्षणम् RājTa.(Śrī.) 3.257; **2** sequential description by singing संवादो नारदाजयोः। अवतारानुगीतं च स्वर्गः प्राधानिकोऽग्रतः BhāgP. xii. 12.7.

**अनुगीतगाथा** (anugīta-gāthā) *f.* *gāthā* (a popular verse) repeating an episode just told in prose अनुगीतगाथा। सो तं दानं दत्त्वा ··· असुरकायं नरमरुसंघो विवर्धन्ति MaVastuAva. i. 42.5 [DBHS.]

**अनुगीतम्** (anugītam) *adv.* after a song अनुस्वामि दधावेऽथ। अहंपूर्विकया देवैरनुगीतं मृगैरिव TriṣaŚaPuC. ii. 2.346.

**अनुगीतयौवन** (anugīta-yauvana) *adj.* whose youth is repeatedly eulogised in songs घोषयोषिदनुगीतयौवनम् ··· धाम तामरसलोचनं भजे Kṛṣṇa-Ka. 3.13.

**अनुगीतसत्कथ** (anugīta-satkatha) *adj.* whose sacred story is repeatedly sung स वा अयं सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः BhāgP. i. 10.24.

**अनुगीता** (anugītā) *f.* name of a philosophical section (chapters 16-25) of the fourteenth Parvan of the Mahābhārata (*lit.* sung after the Gītā) ततोऽश्वमेधिकं पर्व ··· अनुगीता ततः पर्व ज्ञेयमध्यात्मवाचकम् MahāBhā. i. 2.66; i. 169*(1); तथा च स्मरणमनुगीतासु भगवतो व्यासस्य BṛĀraUBh. 142.10 (*on* i.4.10); 'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' इति अनुगीतासु GītāBh.(Śaṅ.) 3.8 (*on* 1.0); अनुगीतासु स्पष्टमाह SanatBh. 179.6 (*on* 1.4); तदुक्तम् ··· अनुगीतायां च YogSā. 23.9(2); परं हि ब्रह्म कथितं योगयुक्तेन तन्मयेत्यनुगीतारम्भे कृष्णेनैव ··· उक्तत्वेन ŚivārkaMaDī. i. 290.7 (*on* i. 1.31); तथा चानुगीतासु SiddhāSi. iv. 80.10.

**अनुगीति** (anu-gīti) *f.* **1** name of a particular type of musical adornment called *sama* (in which a note is repeated in the same pitch and is equal in all parts) समस्यैव विशेषोऽनुगीतिरिति स लक्ष्यते AbhinBhā. iv. 89.10 (*on* 29.35); **2** name of a metre (of two lines, the first containing twenty-seven, the second thirty-two *mātrās*) [PW., MW., APTE]

**अनुगीयमान** (anu-gīyamāna) *adj.* [*f.* -ā] **i** being glorified or eulogised (in songs) राजा वृष्णीनामुग्रसेनः प्रतापवान्। उप(v.l. अनु)गीयमानो गन्धर्वैः MahāBhā. i. 211.8; **ii** being sung गन्धर्वैरनुगीयमानां परमकल्याणीं भर्तृभगवत्कथां समुपशृणोति BhāgP. v. 19.2.

**अनुगीर्णम्** (anugīrṇam) *adv.* after the act of swallowing अयं (अव्ययीभावः) समासः पूर्वपदार्थप्रधानाच्चेद् (?नश्चेद्) भवति तदा लिङ्गं नपुंसकमित्यर्थः। इदम् उपकुम्भम्, अनुगीर्णम् इत्यादि Liṅgānu.(Ha.) 57.5.

**अनुगु** (anugu) (Gr.) the word *anugu* अनुग्वलंगामी P. v. 2.15; JaineVyā. iii. 4.138; *adv.* **i** behind or after the cow आयाम्यभिधानादन्यत्र भवति। गवां पश्चादनुगु JaineVyā. 279.13 (*on* iv. 2.86); CāndraVṛ. *on* iv. 4.69; KāśiVṛ. *on* v. 2.15; *on* v. 4.83; KātanVṛ. *on* ii. 6.31; Prasā. i. 652.12; SiddhāKau. 295A.2 (*on* v. 2.15); अनुग्वलम् CāndraVyā. iv. 2.18; ŚākaṭāVyā. iii. 3.56; SaraKaṇṭhā.(Gr.) v. 2.18; SiddhaHe. vii. 1.102; **ii** near the cow गवां पश्चात् समीपं वा अनुगु Prasā. i. 652.12.

**अनुगुञ्ज्** (anu-guñj-) I. P. to coo melodiously कलकण्ठः कलोत्कण्ठमनुगुञ्जति कुञ्जगः SkandP. iii(2). 2.16.

**अनुगुण** (anu-guṇa) *adj.* [*f.* -ā] [listed in the *ukthādigaṇa*, GaṇPā. 23.26; GaṇRa. 4.308 (347)] **1Ai** well-disposed, loyal, friendly **ii** suitable, worthy **Bi** agreeable, favourable, congenial, fit, proper, conducive, helpful **ii** auspicious **Ci** having similar qualities **ii** conforming, which is in harmony with, compatible **D** dependent, subservient, subordinate **2** having interwoven threads **1Ai** well-disposed, loyal, friendly स्वभूमिषु च राजानस्तस्मात् साम्नानुपालिताः। भवन्त्यनुगुणा राज्ञः पुत्रपौत्रानुवर्तिनः ArthŚā. ii. 348.7 (7.16); संघा हि संहतत्वादधृष्याः परेषाम्।ताननुगुणान् भुञ्जीत सामदानाभ्याम्। विगुणान् भेददण्डाभ्याम् ArthŚā. iii. 144 4 (11.1); तुल्यान्वयेत्यनुगुणेति गुणोन्नतेति ···। जानामि ··· सीते त्यजामि भवतीं न तु भावदोषात् KundaMā. 1.12; मैथुनं कर्तुम् ··· सा चेदस्मै दद्यात्, अनुगुणैव स्याद्भर्तुः BṛĀraUBh. 802.1 (*on* vi. 4.8); विस्रब्धामुभयोर्वा कृत्वा स्वसखीमिहान्तरानुगुणाम्। कुर्यात् कथाप्रसङ्गं नवोढया संस्तुता चेत् स्यात् KandaCū. iii. 2.24; करुणाशाली कामः कान्तानां कान्तमनुगुणं कुरुते Mukundā. 138; **1Aii** suitable, worthy अनुगुणेन तत्सुतां घटयन्त्या मगधेन्द्रसूनुना। यदुवंशविवृद्धये मया छलयन्त्यापि नृपो न वञ्चितः KaumuMa. 5.12; अस्या अनुगुणो लभ्यः क मया वर उत्तमः SkandP. iv. 47.9; **1Bi** agreeable, favourable, congenial, fit, proper, conducive, helpful मनसोऽनुगुणा गन्धाः ···। आनयन्त्यचिरान्निद्रां प्रनष्टा या निमित्ततः CaraS. i. 21.53; पवनेऽनुगुणे सा (अश्मरी) तु निरेत्यल्पा विशेषतः।··· शर्करेत्यभिधीयते SuśruS. ii. 3.14; RugVi. 22.73; ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् YogSū. 4.8; YogBh. 187.7 (*on* 4.8); न च स(?सं)कल्पव्यायामौ प्रज्ञास्वभावौ तस्यास्त्वनुगुणाविति ताच्छब्द्यं लभेते AbhidhKoBh. 55.15 (*on* 2.25); तस्मिंस्त्रिवर्गानुगुणा गुणौघाः ··· संनिविष्टाः JātaMā. 6.18 (2.1); 174.21 (26.42); (वीणा) उत्कण्ठितस्य हृदयानुगुणा वयस्या Mṛcch. 3.4; आत्मस्वनुगुणं दैवं दृष्ट्या मन्यामहे तव JānaHa. 2.73; प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा। ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते VākyaP. 1.84; नादैः शब्दात्मानमवद्योतयद्भिर्यथोत्तरोत्कर्षेणाधीयन्ते व्यक्तपरिच्छेदानुगुणसंस्कारभावनाबीजानि VākyaP. (DCPRI. Ed. 1966) 150.4 (*on* 1.84); कार्येऽपि संबन्धे वृद्धव्यवहारव्युत्पत्तिर्बालानामनुगुणैव Bṛha. 194.10 (*on* i. 1.5); वर्तमाने ··· प्रतिदिनमनुयोगव्यतिकरेऽनुगुणान्नपानलाभात्कतिपयैरेवाहोभिर्विरोपितव्रणः प्रकृतिस्थोऽहमासम् DaśKuC. 58.23; (हनूमान्) पवितोऽनुगुणैर्वातैः ···। बभञ्ज···वनम् Bhaṭṭi. 9.39; 12.29; वमितवानिव क्रमेणानुगुणानुप्रयुञ्जानः प्रकृतिभोजनमागच्छेत् AṣṭāSaṁ. i. 142.24 (1.27); सहकारिणः···विवक्षितकार्योत्पादानुगुणं प्रतिक्षणं प्रकृष्यमाणं विशेषमुत्पादयन्तः HetuBiṬ. 130.1; 130.28; दशामनुगुणां दग्ध्वा नाधारं तापयत्यलम्। न स्नेहं क्षपयत्युच्चैर्वंशदीपोऽपरो भवान् HarVi. 32.81; अनुगुणं हि दैवं सर्वस्मै स्वस्ति करोति ViddhaŚā. 4.16(12); तैस्तैरनुगुणैर्भावैरहं देवस्य शार्ङ्गिणः। करोमि सकलं कृत्यम् LakṣmīT. 17.36; अनुगुणेयं खलु कार्यपरिणतिः YaśasCam. ii. 363.1; गुणगणस्य यदनुगुणम् ··· तादृशमाशयं प्रकाशयन्ती भरतोपज्ञा विज्ञापना RāmāCam. 2.80(3); 5.34 (3); स तु शपथशतैः प्रपद्य सर्वम् ··· कुलपांसनत्वमाप्तः। क्षणमनुगुणमैक्षत प्रहर्तुम् VikraDeC. 6.61; अत्रावतंसनं प्रसूनेष्वनुगुणम् AlaṅkāSa. 202.1; स भृङ्ग इत्यस्य (शृङ्गारस्य) गतोऽनुजन्मतां दधत् स्वनाम्नोऽनुगुणामपि श्रियम् ŚrīKaC. 3.53; भेदाभेदस्थितानामिदमनुगुणम् (सामानाधिकरण्यम्) TattvMu. 4.94; यान्यूचिरे युवतयो वचनानि सार्धं तस्योत्तरैरनुगुणैः कथयामि तानि BhikṣāKā. 9.1; पुरुषोत्तमो यः। वाञ्छत्रसाननुगुणेन गुणेन बध्वा भूयः प्रचारयति गां भुवनान्तरेषु DaṇḍaVi 1.12; MātaLī. 11.8; गुरुचरणसकाशात् हृद्गतं निर्गतं तद्विगुणमनुगुणं वा वीक्षतां तत्क्षमात्मा BhedaDhi. 119.2; ŚivārkaMaDī. i. 14.27 (*on* i. 1.1); वन्दे ··· पाशाङ्कुशौ खट्वाङ्गं च कपालमित्यनुगुणैर्दोर्भिर्दधानं हरम् ŚilpaRa. ii. 22.182; अत्र द्वावुपध्मानीयावेव न शान्तानुगुणौ RasGaṅ. 87.12; अनुकूलादिशब्दैरनुगुणादयो लक्ष्यन्ते RasGaṅ. 186.12; प्रमाणोत्पत्त्यनुगुणस्तर्कोऽपि तत्र सहकारी MānaMe. 34.8; AdbhuDa. 7.5; अत्र वयं धीरादिभेदानामनुगुणानि लक्षणोदाहरणानि लिखामः ŚṛṅgāMañ.(A.) 6.27; इदं च भाष्यं स्वमत एवानुगुणम्

MayūMāli. 647. 9 (*on* x. 1.1); 791. 19 (*on* x. 8. 19); ग्रहानुकूल्ये एतदनुगुणं स्यात् Nāṭa. 15. 16; **1Bii** auspicious ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुगुणेषु च। प्रश्नकाले शुभे जाते परान् यायान्नराधिपः MatsyaP. 240. 16; ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः AṣṭāSaṁ. i. 6.14 (1.2); ग्रहगणोऽनुगुणः सकलोऽस्तु ते RāmC. 7. 83; नक्षत्रग्रहदैवसुमुहूर्तेषु साधकेषु दृष्टस्वप्नदर्शननिमित्तेषु चानुगुणेष्वनुलोमवातादिषु … योद्धुं गच्छेत् ManuBh. ii. 59.15 (*on* 7. 197); **1Ci** having similar qualities कान्तारतापसाविक्षू वंशकानुगतौ (v. l. °गुणौ) मतौ SuśruS. i. 45. 153 (Phadke's Ed.); (ब्रह्मपदमानन्दमयपदमानन्दपदमिति त्रितयम्) अनुगुणं तु मुख्यत्रितयमित्यर्थः VedāntKa. 113. 6 (*on* i. 1.20); **1Cii** conforming, which is in harmony with, compatible मनोरथस्यानुगुणं सर्वदा यस्य चेष्टितम् MahāvīC. 7.7; अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य UttaRāC. 1.39; तदा विशेषमात्रेण वस्तु प्रत्यवभासते। तदुद्भूत्या च सामान्यं तद्भावानुगुणं स्थितम् ŚlokaVār. 5(12). 60 (562. 2); 7.302 (930. 5); क्रयापेक्षित एवायं संबन्धः क्रियते पुनः। न चात्रानुगुणा वृत्तिर्दुर्बलापि विरुध्यते TantrVā. 710. 13 (*on* iii. 1.8); रसानुगुण औचित्यवान् वाच्याश्रयो यो व्यवहारस्ता एताः कैशिकाद्या वृत्तयः Dhvanyā. 401.9 (*on* 3.33); 443.7 (*on* 3.33); न च सकृदेव सतो निर्वर्त्यमानकार्यपरिमाणानुगुणसंख्याः परमाणव एकत्र संयोज्य कार्यमारभन्ते NyāyMañ. ii. 73. 11; PañcPā. 50. 18 (*on* i 1.1); अस्ति चानुभूयमानो रसस्यानुगुणो विगुणश्चार्थः KāvyMī. 45. 10; तस्यानुगुणान् श्लोकान् गायन्ति BhāgP. v. 6. 12; यदि प्रमाणमनुगुणं किं वस्तुविकल्पैः Kāśi. ii. 36.26 (*on* 5(2). 17); कृततानुगुणं च वेदे दर्शनम् … प्रावाहणिजन्मनः पूर्वं नासीद्वेद इत्येवमनुगुणम् NayaVi. 279. 2 (*on* i. 1.27); कश्चिदेव ध्वनिः कस्यचिच्छब्दस्यानुगुणं संस्कारमाधत्ते ŚāstrDī. 136.24 (*on* i. 1.6); 'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः' इत्यत्रापरत्वमिन्दोरनुगुणम् KāvyPra. 762.2; अनुभूतेरभिव्यक्तिः … यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्यात् BrahmSūBh.(Rā.) 48.19 (*on* i 1.1); 140.13 (*on* i. 1. 3); SmṛtiCan. i. 207.17; चरमो न केवलमविरुद्धः प्रत्युतानुगुणः VedāntKa. 234. 3 (*on* ii. 1.11); भट्टिकाव्येऽपि तदनुगुणः प्रयोगः PadMañ. *on* KāśiVṛ. *on* P. i. 3. 56; कथमुपक्रान्तमेव … प्रस्तुतस्यानुगुणं कुशलैः कुशीलवैः PratāYaBhū. 145.7; (प्रमाणम्) नियमनिरूपकमनुगुणमनुगतमास्थेयम् TattvCin. i. 308. 4; यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः SāhiDa. 442.2; VedāntSā.(Sa.) 29.17; मैत्रेयीब्राह्मणं चानुगुणं भविष्यति AṇuBh. 80. 8 (*on* i. 3. 14); YuktiSneha. 98.38 (*on* i. 1.5); पुत्रपौत्रादीनां ब्रह्मवित्त्वस्यानुगुणं तेषां सत्कर्मभिरक्षीणत्वमुच्यते ŚivārkaMaDī. i. 363.16 (*on* i. 2. 16); उपक्रमस्यानुगुणैव सेयम् … तव प्रवृत्तिः Nāray. x. 53. 2; YātrāPra. 3.25; स्वविनियोगे तु न स्वस्वत्वं तत्प्रतिबन्धकं किं त्वनुगुणमेव VīraMi.(Āhnika.) 171. 8; षोडशमानपणत्वे पणस्य तदनुगुणं कल्प्यम् VyavaNi. 223.1; विध्यश्रवणेनार्थवादत्वे सति अनुगुणैव वचनव्यक्तिः स्वीकार्या MayūMāli. 517. 7 (*on* vi. 8.1); ज्ञानार्णवेऽस्यैव कर्मणः प्रकरणे वचनं तद्यद्यपि स्तम्भनकर्मण एवानुगुणम् SetuBa. 109. 7; **1D** dependent, subservient, subordinate पुरीततोऽपि ब्रह्मप्रक्रियायां संकीर्तनात् तदनुगु[illegible] सुषुप्तिस्थानत्वं ज्ञायते BrahmSūBh.(Śaṅ.) 573. 9 (*on* iii. 2. 7); स्वतन्त्रं हि साध्यद्वयमेकवाक्यतां निरुणद्धि नानुगुणम् ĀgaPrā. 37.9; भ्रमति रजनीं वासरः खण्डयित्वा … भजते सापि सम्यक् प्रसादम्।… नार्याः पुंसि स्थितिमनुगुणां शंसति SubhāRaK. 8.33; **2** having interwoven threads, HarVi. 32.81; *m.* **1** appropriate quality शाकान्येतानि साक्षादनुगुणसहितान्यत्र लोकप्रतीतान्युक्तानि KalyāKā. 4. 47; **2** name of a figure of speech 'conformity' (wherein the quality of a thing is intensified and favoured by the presence of another) प्राक्सिद्धिः स्वगुणोत्कर्षोऽनुगुणः परसंनिधेः। कर्णोत्पलानि दधते कटाक्षैरपि नीलताम् Candrā. 5.106 (*but* comm. परसंनिधानात् स्वगुणोत्कर्षकथने प्राक्सिद्ध्यलंकारः); Kuval. 145; प्राक्सिद्धस्वगुणोत्कर्षः परसांनिध्येन वर्ण्यते। आनुगुण्यादनुगुणं तमाहुः काव्यपाठिनः AlaṅkāMañ. 193.11.

**अनुगुणकण्ठनिनाद** (anuguṇa-kaṇṭhanināda) *adj.* imitating the voice of the throat शशिमुखि मुखरय मणिरशनागुणमनुगुणकण्ठनिनादम् GītGo. xii. 23.6.

**अनुगुणगुरुगोष्ठी** (anuguṇa-gurugoṣṭhī) *f.* favourably disposed assembly of elders अनुगुणगुरुगोष्ठीदृष्टिपीयूषवर्तिर्व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट StavMā. 39. 21.

**अनुगुणग्रह** (anuguṇa-graha) *adj.* having auspicious planets यात्राम् … अनुगुणग्रहेऽह्नि जग्राह रावणसमाप्तिरणाय रामः RāmC. 25.1.

**अनुगुणघटन** (anuguṇa-ghaṭana) *n.* combination of favourable factors अनुगुणघटनेन यद्यपीयं भवति हि हस्तगतेव कार्यसिद्धिः।… तदपि न विश्वसिमो वयं विधातुः NalaCam. 7.5 (comm. अनुगुणानामनुकूलानां घटनेन संयोजनेन)

**अनुगुणतम** (anuguṇa-tama) *adj.* most helpful स्वरसतो निवर्तमानेभ्यः प्रथमक्षणेभ्यः कार्योत्पादानुगुणेन विशेषेण विशिष्टस्य क्षणस्योत्पत्तिः तेभ्योऽनुगुणतरविशेषवतां तृतीयक्षणानां तेभ्योऽनुगुणतमविशेषवतां चतुर्थक्षणानाम् HetuBiṬ. 130.17.

**अनुगुणतर** (anuguṇa-tara) *adj.* [*f.* -ā] **i** more compatible or supporting तथा च वेदाक्षराण्यस्मिन् पक्षेऽनुगुणतराणि दृश्यन्ते Bṛha. 347. 2 (*on* i. 1. 6); एवमपि चेतनप्रयुक्तत्वं नाभ्युपेयेत यदि प्रमाणान्तरविरोधो भवेत् प्रत्युत श्रुतिरनुगुणतरात्रेत्याह Bhām. 380.15 (*on* ii. 2. 1); **ii** more helpful कार्योत्पादानुगुणेन विशेषेण विशिष्टस्य क्षणस्योत्पत्तिः तेभ्योऽनुगुणतरविशेषवतां तृतीयक्षणानाम् HetuBiṬ. 130.16.

**अनुगुणता** (anuguṇa-tā) *f.* **i** the state of being favourable or appropriate मरुतः शिवा नवतृणा जगती विमलं नभः …। गुणसंपदानुगुणतां गमितः कुरुतेऽस्य भक्तिमिव भूतगणः Kirātā. 6. 33; यथा हि सेनाद्यात्मकसंघातनिवेशी पुरुषः कातरादिभिरपि (? कातरोऽपि) तदौचित्यादनुगुणतयैवास्ते Loc. 141.11 (*on* 3. 7); **ii** auspiciousness सत्यनुगुणनायुक्ते (v. l. अनुगुणतायुक्ते *nt.*) लग्ने दारकर्म … समाचरेत् YaśasCam. i. 317. 1; **iii** conformity, compatibility इह रत्नबिरुदाङ्कसंबन्धः पादे संभवतीत्युपमां प्रत्यनुगुणतां भजते। अम्बुजे तु न संभवतीति न रूपकं प्रत्यनुगुणता Ekāva. 8. 6(72) (218.1); तत्र चरणत्रयगतानि राकारूपकाण्यनुगुणतयोपात्तान्यपि नानुगुण्यमाचरन्ति RasGaṅ. 313.18; विशेषापेक्षासत्त्वेनानुगुणतया … पशोरन्वयाविरोधात् MayūMāli. 353.21 (*on* iv. 1. 5); 574.14 (*on* ix. 1. 1)

**अनुगुणत्व** (anuguṇa-tva) *n.* **i** compatibility, harmoniousness, conformity यस्त्वाश्रयाश्रयिसंबन्धः सोऽनुगुणत्वादाश्रीयते TantrVā. 1117.21 (*on* iii. 6. 43); अयमेव हि महाकवेर्मुख्यो व्यापारो यद्रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम् Dhvanyā. 401. 3 (*on* 3.32); रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः Dhvanyā. 3.33; वासुदेवाः … अनित्यत्वादिदोषरहिताः तस्मादुत्पत्त्यसंभवोऽनुगुणत्वान्न दोषः Bhām. 467. 16 (*on* ii. 2.44); सर्वसपक्षव्यावृत्तिरेव दोषो न विपक्षव्यावृत्तिरपि तस्या अनुगुणत्वात् TattvCin. ii(1). 827. 2; प्रातिपदिकेनोपनीयमानः पशुर्दुर्बलप्रमाणकोऽप्यनुगुणत्वादङ्गीक्रियते TantrRa. 57. 12; वस्तुतस्तु उपमानान्तराभावद्योतकस्य उपमेये उपमानत्वकथनरूपानन्वयालंकारस्याभेदेऽनुगुणत्वमेव MīmāKau. i. 215.7 (*on* i. 4.5); पूर्ववतेवेतिपदानां द्विर्भेदेन एवानुगुणत्वात् SetuBa. 32.31; स्वात्मावशेषविभावनां प्रत्यनुगुणत्वात् प्रथमं चक्रं त्रलोक्यमोहनं भवतीत्यादिश्रुतिगतप्रथमादिपदानुगुणत्वात् … आवरणपूजाया मुख्यत्वं च ध्वनयन्नाह SetuBa. 83. 27; **ii** the state of being favourable एष मुक्तकरपाटवो रविर्नाटयत्यनुगुणत्वमप्पतौ RāmC. 2.18; पक्षे साध्यसंदेहस्यानुगुणत्वात् पक्षभिन्न एव तस्य दूषणत्वं वाच्यम् AdvaiSi. 28.2.

**अनुगुणन** (anu-guṇana) *n.* repetition सौधस्य प्रतिफलितं निकुञ्जगर्भेष्वभ्यर्णोन्मिषितकपोतनादपुष्टम्। एकस्याप्यनुगुणने कृतोद्यमस्य स्वाध्यायध्वनितमनेकधा विभाति AmṛUda. 3.13.

**अनुगुणना** (anuguṇ-anā) *f.* [P. iii. 3. 102] auspiciousness सत्यनुगुणनायुक्ते लग्ने दारकर्म पट्टबन्धोत्सवं च सह समाचरेत् YaśasCam. i. 317. 1 (comm. अनुकूलनासंयुक्ते)

**अनुगुणनिका** (anuguṇan-ikā) *f.* repetition गायन्त्योऽन्याः … लीलावत्यः … तासामनुगुणनिकां गुञ्जितैस्त्वं विदध्याः BhramDū. 65.

**अनुगुणपदवी** (anuguṇa-padavī) *f.* path of interwoven threads (सः … ददर्श हारम्) अनुगुणपदवीविनिर्गतासु प्रतिलतमायतमौक्तिकप्रभासु। रजनिकरमरीचिसूचिदीर्घैर्बहुभिरिव ग्रथितं मृणालसूत्रैः NavaSāC. 3.58.

**अनुगुणपुरोवाद** (anuguṇa-purovāda) *m.* earlier statement which is supportive अनुगुणपुरोवादासंभवे … अनुवादकत्वमेव भवेत्। संभवति चास्यानुगुणपुरोवादः 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त' इत्यादिः ŚivārkaMaDī. i. 329.28 (*on* i. 2.8)

**अनुगुणफलद** (anuguṇaphalad-a) *adj.* bestower of the appropriate reward आराध्ये विश्वसाक्षिण्यनुगुणफलदे त्वस्ति राजादिनीतिः TattvMu. 2. 21.

**अनुगुणभारत्यागस्** (anuguṇabhāraty-āgas) *n.* defect in respect of appropriate language उद्युक्तानामुदधिमहत्त्वस्तुल्या युक्त्यैतस्मिन्ननुगुणभारत्यागः। स्थाने स्थाने भवति कवीनां कुर्वत्युक्त्यै तस्मिन्ननुगुणभारत्यागः RāghPāṇ. (Dha.) 8. 13.

**अनुगुणभाव** (anuguṇa-bhāva) *m.* helpfulness साहाय्यम्। संकटेऽनुगुणभावः NāṭaLaRaK. 1816.

**अनुगुणम्** (anuguṇam) *adv.* **A** agreeably, befittingly, in favour of चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी। न मासे प्रतिपत्तासे मां चेन्मर्तासि मैथिलि Bhaṭṭi. 8.95; (सुग्रीवे) विभीषणस्यानुगुणं भाषमाणे रघूद्वहः …। अशोकवनिकां ययौ RāmC.(App. 1) 40. 29; क्षन्तव्यं मयि सर्वम् … किं वक्तुं मम युक्तमित्यनुगुणं देवि त्वमेवादिश KarṇaSu. 3.32; मृदुपदमिति तां[Read ता]म्रशासनार्थं महितसदाशिवरायशासनेन। अभणदनुगुणं वचोमहिम्ना सरसतरेण सभापतिस्स्वयंभूः EI. xiv. 352. 231; xiv. 229.310; ix. 339.203; **B** in accordance with, in conformity with तच्चित्तानुगुणं विधित्सुरदिशत् … स[Read स्व]यंभूः EI. iii. 43. 12;

xxi. 39.10; xi. 284.9; xix. 267.7; एवमनुगुणमनुरागस्य ··· जल्पति पुष्कराक्षे ··· प्रस्तावपाठकः पपाठ NalaCam. 6.23(1); वत्सायाः ··· यत्तदा पाणिमग्रहीः। यच्च वंशे मनोजीतस्तस्यानुगुणमावरः JānaPa. 7.57; **C i** according to one's desert क्षेत्रेषु वर्षति तदानुगुणं नरेन्द्रे तस्मिन् ··· जनः···प्रतिगृहं विहितोत्सवोऽभूत् KathāSaSāg. iii. 6.228; **C ii** according to the qualities यन्ता त्रिवेत्यग्रिमो नागस्यैव तु वर्ततेऽनुगुणमत्र MātaLī. 12.3; **D** so as to make a twang दैत्याः ··· धनुरनुगुणं यावज्ज्यावल्लिभिः सह युञ्जते NīlaVi. 23.13 (comm. अनुगतः गुणः शब्दः यस्मिन् कर्मणि तत् यथा)

**अनुगुणमनस्कार** (anuguṇa-manaskāra) *m.* appropriate mental function न तावदाद्यः पक्षः, सुप्तमूर्च्छान्यचित्तानां सत्यप्यक्षेऽनुगुणमनस्काराभावादक्षबुद्धेरनुत्पत्तेः TattvSaṁPañ. 530.28 (*on* 1886)

**अनुगुणय** (anuguṇaya-) *denom.* to render favourably disposed वचोऽर्हन्मुखान्निर्गतं सत्।··· अनुगुणयतात् स्वश्रुतौ तन्मनो वः JinaŚ. 4.11.

**अनुगुणयत्** (anuguṇay-at) *adj.* rendering favourable संपदोऽनुगुणयन् सुखैषिणाम्।··· केन नास्तु विनयः सतां प्रियः Kirātā. 13.44.

**अनुगुणवत्** (anuguṇa-va(n)t) *adj.* having excellences befitting (the family) [PW.]

**अनुगुणवाताय** (anuguṇavātāya-) *denom.* to act like a favourable wind, cf. **अनुगुणवातायित.**

**अनुगुणवातायित** (anuguṇavātāy-ita) *adj.* who has acted like a favourable wind भगवन् ···। आविष्टं मां तु दैवाद् भवजलनिधिपोतायिते मर्त्यदेहे त्वं कृत्वा कर्णधारं गुरुमनुगुणवातायितस्तारयेथाः Nāray. xi. 96.5.

**अनुगुणवाद** (anuguṇa-vāda) *m.* secondary or indirect signification ऊहबाधप्रसङ्गेन नवमदशमगता चिन्ता तत्सिद्धिसूत्रेऽनुगुणवादनिमित्तमात्रकथनम् TantrVā. 36.15 (*on* i. 2.18)

**अनुगुणाकारा** (anuguṇākārā) *adj.* (*f.*) having an auspicious form ध्यायेत्ततस्त्वां देवेशि ··· सर्वतोऽनुगुणाकारां किंचिल्लज्जानताननाम् ŚivaP. vi. 7.69 (479B.2)

**अनुगुणार्थ** (anuguṇārtha) *m.* agreeable intention नारीषु निर्गमनमण्डनतत्परासु सख्यो वचांस्यनुगुणार्थमनोहराणि ··· प्रारब्धमण्डननिषेधफलान्यवोचन् BhikṣāKā. 3.1; 23.1.

**अनुगुणित** (anuguṇi-ta) *adj.* [listed in the *iṣṭādigaṇa*, KāśiVṛ. *on* v. 2.88] rendered excellent, strengthened तस्यावलोकनम् ··· निसृष्टमक्ष्णोः। स्निग्धस्मितानुगुणितम् ··· ध्यायेत् BhāgP. iii. 28.31.

**अनुगुणितिन्** (anuguṇit-in) *adj.* [with Loc. for the grammatical object, Vār. 1 *on* P. ii. 3.36] who has multiplied subsequently अनुगुणिती अनुपदे GaṇRa. 7.413(437)

**अनुगुणिनी** (anuguṇ-inī) *adj.* (*f.*) appropriate, conformable मैत्रकन्यको बोधिसत्त्वस्तेभ्योऽपि तथानुगुणिनीं कथामवधार्य ··· उवाच Divyāva. 497.28 [cf. **अनुगुणिन्** DBHS.]

**अनुगुणीकृ** (anuguṇī-kṛ-) VIII. U. to render (something) inclined towards, cf. **अनुगुणीकृत्य.**

**अनुगुणीकृत्य** (anuguṇīkṛt-ya) *ger.* having rendered (something) inclined towards अहम् ··· कथंचिदप्यनुगुणीकृत्यातिलोलं मनस्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ViśvaSta. 32.

**अनुगुणीभू** (anuguṇī-bhū-) I. P. to be congenial यथानुशेते ममायमाहार इति पथ्योऽनुगुणीभवतीत्यर्थः। तथा रागादयोऽपि तेषु धर्मेष्वनुशेरतेऽनुगुणीभवन्तीत्यर्थः Sphuṭā. i. 14.14 (*on* 1.4)

**अनुगुणीभूय** (anuguṇībhū-ya) *ger.* **i** having become agreeable (by flattery) दुर्लभाः सद्भृत्याः परमाणव इव समवायेष्वनुगुणीभूय द्रव्यं कुर्वन्ति पार्थिवं क्षुद्राः HarṣaC. 195.6; **ii** having become dependent on, HarṣaC. 195.6.

**अनुगुणोपाय** (anuguṇopāya) *m.* appropriate means संबन्धानुगुणोपायपुरुषार्थाभिधानानि च शास्त्रधर्मानप्रदर्श्यात्यन्तप्रसिद्धविषयसत्याभिधानमात्रेण प्रज्ञाप्रकर्षदुरवगाहगहनेऽपि निरत्ययितां साधयितुकामो बन्धकीमपि प्रागल्भ्येन विजयते PramāVāSvopVṛ. 117.17.

**अनुगुण्य** (anuguṇya) *n.* conformability, compatibility संप्रख्यानम्। असंख्यानम्। अनुगुण्यम् MahāVyu. 133.27 [DBHS.]

**अनुगुप्** (anu-gup-) I. P. to take care of कस्य त्वं सुभगे का वा दुःखिते मयि दुःखिता।··· किमर्थं मां जुगोपसि (v.l. किमर्थमनुगोपसि) VāyuP. ii. 36.4.

**अनुगुप्त** (anu-gupta) *adj.* [*f.* -ā] **A** well covered, protected, kept safely पुरस्तादेव द्व्यहे त्र्यहे वानुगुप्तं दुग्धं दोहयित्वा अनुगुप्तेन दध्नातनक्ति BhārŚS. i. 1.3; अनुगुप्तमन्नं ब्राह्मणान् भोजयेत् MānGS. ii. 9.10; भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः MahāBhā. iii. 90.5; साहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि। आत्मगुप्ता (v.l. अनुगुप्ता) चरिष्यामि MahāBhā. iv. 3.17; नवे कमण्डलौ चैनामनुगुप्तां (चक्षुष्यां) निधापयेत् KāśyaS. 183B.35; **B** concealed, hidden, screened, enclosed (बलिं हरति) अनुगुप्ते देशे ŚāṅkhāGS. ii. 14.15; KauṣīGS. iii. 10.15; तां दृढपुरुष उन्मथ्य प्राग्घोदग्वाऽनुगुप्त आगार आनडुहे रोहिते चर्मण्युपवेशयति PāraGS. i. 8.10; अनुगुप्तमेतं सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते वा PāraGS. ii. 1.22; अनुगुप्ता अप आहृत्य GobhiGS. i. 1.9; i. 5.19; पुरा प्रादुष्करणवेलायाः सायं प्रातरनुगुप्ता अप आहरेत् परिचरणीयाः GobhiGS. i. 1.24; परेहि नारीत्युदहृतं संप्रेष्यत्यनुगुप्तामलंकृताम् KauśiSū. 60.25; स्नपनमप्येके रात्रौ चेत् कुर्याद् गृहेषु, दिवा चेदरण्येऽनुगुप्तमुभयं दिग्बन्धं कृत्वा KāśyaS. 199A.38; अनुगुप्ता अपो गृह्य ··· अनुगुप्ताः केनाप्यदृष्टाः SmṛtiCan. ii. 405.14; CaturCin. iii(1). 624.14.

**अनुगुप्तफलाहार** (anuguptaphalāhāra) *adj.* subsisting on fruits which are properly protected अनुगुप्तफलाहाराः सर्व एव मिताशनाः।··· पाण्डवाः MahāBhā. iii. 295.4.

**अनुगुप्तम्** (anuguptam) *adv.* **A** in a protected manner पुरस्तादेव द्व्यहे त्र्यहे वानुगुप्तं दुग्धं दोहयित्वा BhārŚS. i. 1.3; **B** secretly अवोचन्मां धृतराष्ट्रोऽनुगुप्तम् MahāBhā. iii. 6.12 (*but* BhārBhāDī. *adj.* अनुगुप्तम् अनुरक्षितारम् ··· कर्तरि क्तः); **C** carefully अथैनमागतपाकमवतार्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यात् SuśruS. i. 11.11; पुनः सूक्ष्माणि चूर्णानि कारयित्वा ··· नवे कलशे समावाप्यानुगुप्तं निधापयेत् CaraS. iii. 7.22 (1941 Ed.); बस्तिमुखबन्धनार्थं सूत्रमुपधायानुगुप्तं निधापयेत् AṣṭāSaṁ. i. 147.10 (1.28); हरीतकीचूर्णप्रस्थयुक्तमाढकं घृतस्याङ्गारेष्वभिविलाय्य खजेनाभिमन्थ्यानुगुप्तं यवपल्ले मासं वासयेत् AṣṭāSaṁ. ii. 96.4 (4.17); तत्काले कर्पूरत्वग्जातीफलमिश्रितम्। स्निग्धभाण्डगतं धान्येष्वनुगुप्तं निधापयेत् RasRaSa. 26.18.

**अनुगुप्ति** (anu-gupti) *f.* protection ईश्वरः ··· क्षत्रियं दण्डधारिणम्। द्वितीयं वर्णमकरोत्प्रजानामनुगुप्तये MahāBhā. xii. 73.7.

**अनुगुरुजनम्** (anugurujanam) *adv.* towards elderly persons नृवर ··· नतिरनुगुरुजनम् ··· त्वयि जयति ChandaśCū. 2.245(4)

**अनुगूढा** (anu-gūḍhā) *adj.* (*f.*) hidden अस्य पश्य फुल्लकुसुमरचितोज्ज्वलचूडा। भीतिभिरतिनीलनिबिडकुन्तलमनुगूढा StavMā. 284.20.

**अनुगृणत्** (anu-gṛṇat) *adj.* [SiddhaHe. ii. 2.57] uttering subsequently or imitating (in order to encourage somebody) ध्वानैः प्रत्यशृणोन्मैत्रीं शिखिभ्योऽनुगृणन् घनः DvyāśraKā. 3.23.

**अनुगृध्** (anu-gṛdh-) IV. P. to covet, to be greedy after ग्रहणं धर्मराजस्य भारद्वाजोऽनुगृध्यति MahāBhā. vii. 86.14.

**अनुगृध्यत्** (anu-gṛdhyat) *adj.* being greedy after बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः (v.l. शारीरेष्वनुगृध्यतः)। यो धर्मो यत्सुखं वा स्याद्द्विषतां तत्तथास्तु नः MahāBhā. xii. 13.2.

**अनुगृहम्** (anugṛham) *adv.* **i** along the house कर्णकीलायससंबन्धोऽनुगृहं सेतुः ArthŚā. ii. 46.4 (3.8); **ii** in each and every house वक्ष्यामि कालम् ··· पातुं पयोऽनुगृहमन्वहम् HariC.(Pa.) 67; पुण्यं रामायण (? मनु)गृहं तत्र संरक्तकण्ठा गायन्त्युच्चैः ··· शकुन्ताः HaṁsDū.(Vā.) 49.

**अनुगृहयालु** (au-gṛhayālu) *adj.* [P. iii. 2.158] habitually favouring सर्वतोमुखाटोपा वाहिन्याः शौर्योदन्वन्तं भवन्तमनुप्राप्ता एव तदनुग्र(? गृ)हयालुना कटाक्षेण निरीक्ष्यन्ताम् PratāYaBhū. 165.7.

**अनुगृहवरम्** (anugṛhavaram) *adv.* in each and every excellent house अनुगृहवरं यत्र सौधस्थलीनां भासो बालारुणसवयसः कुर्वते कामिनीनाम्। लाक्षालक्ष्मीं पदकिसलये HaṁsDū.(Vā.) 63.

**अनुगृहाणतमाम्** (anugṛhāṇa-tamām) [P. iii. 1.83; v. 3.56; *superl.* of 2nd per. sg. impv. of **अनुग्रह्** to favour] *ind.* please favour highly अनुरागिणीमनुगृहाणतमामबलामिमामसमबाणहताम् Rāgh. 8.20.

**अनुगृहीत** (anu-gṛhīta) *adj.* [*f.* -ā] **1Ai** assisted, helped, benefitted, supported **ii** obliged, favoured, blessed, graced, looked with compassion **B** justified, corroborated, rendered compatible **C** accepted, admitted **2** preserved, maintained **3** brought into existence (i.e. compiled) **4** adapted **1Ai** assisted, helped, benefitted, supported अथ येन वैतानुगृहीतेत्येष वाव स व्यानः MaitrīU. 402.27 (? 362.6); यस्यानुग्रहेणानुगृहीतानि उपघाते चोपहतानि स्वविषयेषु ··· वर्तन्ते NyāyBh. 25.3 (*on* i. 1.11); बाह्येन प्रकाशेनानुगृहीतं चक्षुर्विषयग्राहकम् NyāyBh. 180.1 (*on* iii. 1.42); उभयानुग्रहादेवं कल्प्यते, एवं हि शब्दः प्रत्यक्षादयश्चानुगृहीता भवन्ति BrahmSi. 42.10; श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयते BrahmSūBh.(Śaṅ.) 296.7 (*on* ii. 1.6); स्वयं चैतन्यस्वभावोऽपि सन् विषयप्रमाणेनाचेतनेनानुगृहीतः प्रकाशते PañcPā. 18.9 (*on* i. 1.1); ManuBh. i. 311.18 (*on* 3.238); सौरीभिर्भामि(? भि)रनुगृहीतं चक्षुस्स्फुटतरं व्योम्नि

नीलिमानं प्रकाशयेत् PrakaPañ. 322.1; ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः ··· भुवि न पतन्ति BhāgP. v. 23. 3; लिङ्गपरामर्श एवानुमानमितरैरनुगृहीत इत्यर्थः TātpaṬ.(Vā.) 170. 14 (*on* i. 1.5); समुदायेनैकोऽर्थपिण्डः ··· अवयवार्थशक्त्यानुगृहीतम् ··· अभिधीयते SaraKaṇṭhā. 654. 9; न्यायानुगृहीतस्य वाक्यस्य अर्थनिश्चायकत्वात् BrahmSūBh.(Rā.) 4.20 (*on* i. 1. 1); 189.5 (*on* i. 1.13); 239.5 (*on* i. 2 2); परोक्षज्ञानहेतुरपि शब्दः ··· सहकारिणानुगृहीतोऽपरोक्षज्ञानमुत्पादयति PrakaVi. 964. 19; दिश्यवस्थितयोः पिण्डयोरिदमस्मात् संनिकृष्टमिति बुद्ध्यानुगृहीतेन दिक्पिण्डसंयोगेनापरत्वं संनिकृष्टे जन्यते TarkBhā.(Ke.) 70.13; मायोपादानत्वान्यथानुपपत्त्यादिभिश्चानुगृहीतो न दृष्टेर्द्रष्टारं पश्येरित्येवमादिको विधिः ŚatDū. 187.24; स हि (वाक्यार्थः) पूर्ववर्णस्मरणेनानुगृहीतो वा NyāySu.(Ja.) 88B.12 (*on* i. 1.1); पञ्चसंख्यया ··· पञ्चभूतपरिवृत्त्यनुगृहीतयान्नमयादयः पञ्चभूताभिमानिनः आधिकारिकपुरुषाः ŚivārkaMaDī. i. 229.3 (*on* i. 1.16); i. 391. 11 (*on* i. 2.27); ii. 85.22 (*on* ii. 2.21); श्रुतिस्मृतिषु एकवचनेन लाघवानुगृहीतेन मायाया एकत्वम् VedāntPari. 99. 5; **1A1** obliged, favoured, blessed, graced, looked with compassion श्रीराधिकयानुगृहीतास्तं रसं जानन्ति नान्ये SāmaraU. 235.17; ते ऋषयः ··· एकां कन्यां ददृशुः। श्रीराधिकयानुगृहीताम् ··· तां दृष्ट्वा ते प्रश्रयेण नम्रा बभूवुः SāmaraU. 248. 13; तया देव्या अनुगृहीतानां तेषामतिकृपाशाली स्वभावोऽयमापद्यते SāmaraU. 243. 20; तया निकुञ्जदेव्यानुगृहीतो रात्रौ दिवा ··· तल्लोकं सेवमानो भवति SāmaraU. 283. 8; स उपाध्यायेनानुगृहीतः MahāBhā. i. 3.30; धन्योऽस्म्यनुगृहीतोऽस्मि MahāBhā. i. 125. 17; iii. 42. 3; iii. 190. 41; कथं वानुगृहीतास्ताः सुरैः पितृगणैरपि MahāBhā. xiv. App. I. 4 (1494); इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये Rāmā. i. 17. 37; iii. 12. 10; अहम् ···। अनुगृहीतः पितृभिर्भविष्यामि सुनिर्वृतः Rāmā. vii. 36. 57; धन्यास्यनुगृहीतासि यस्यास्ते पतिरीदृशः। प्राप्तो देव्याः प्रसादेन पार्वत्या मत्तकाशिनि HariVaṁ. 107. 55; अनुगृहीताः स्मो यैरस्माभिः गोशुनोः प्रतिषेधो न वक्तव्यो भवति MahāBh. iii. 106. 13 (*on* vi. 1.168); तदेकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया BrahmSū. iv. 2.17 (Śaṅ. तद्भावं समापन्नः); अनुगृहीतोऽस्मि Abhiṣe. 1. 26(6); अनुगृहीतौ स्वः Avimā. 6. 12(3); भोः कर्ण ··· पुरंदरेणानुगृहीतोऽसि KarṇaBhā. 23 (3); अनुगृहीतोऽस्म्यनया मघवतः संभावनया Śāk. 6.35 (2); Vikramo. 4. 65(3); धन्यास्म्यनुगृहीतास्मि देवैश्चाप्यवलोकिता MārkP. 16. 65; और्वेणानुगृहीतोऽहम् BrahmāṇḍP. ii. 34.2; अनेन ··· अहं स्नेहानुवृत्त्यानुगृहीतः PañcT. 2. 50(3) (239.8); आत्मन[ा*] आर्य्यकपादप्रसादानुगृहीतेन ताम्ब्र(म्र)शासनमेतत् कारितमिति EI. xix. 103. 24; अनुगृहीतं भगवता रघुकुलम् KundaMā. 6. 16(1); अथ भवत्या कोऽनुगृहीतः DhūrtaViSaṁ. 12. 18; तच्छ्रुत्वा विष्णुनागोऽप्यनुगृहीत इव प्रस्थितः PādaTā. 6. 9; 6.13; तत्र भवता ··· ब्राह्मणानामुपनिमन्त्रणेन ··· कुटुम्बकमनुगृहीतम् MudrāRā. 1. 5 (4); विष्णुनाद्यानुगृहीतमिदं भरतकुलम् VeṇīSaṁ. 1. 37; कस्मात्पादपङ्कजस्पर्शेन नानुगृहीतौ मणिनूपुरौ Kād. 60.11; कतरत्कुलमनुगृहीतं भगवत्या जन्मना Kād. 135.1; HarṣaC. 120.10; AvantiKa. 9. 9; चिरमनुगृहीतोऽयं दासजनः DaśKuC. 45. 11; 65. 5; 96. 3; सुपुत्रानुगृहीतास्मि BṛKathāŚloSaṁ. 4.130; पुण्येनानुगृहीतास्ते देशाः संपत्समाश्रिताः PadmP.(Ra.) 11. 353; अनुगृहीताः स्मः MahāvīC. 5.30(6); UttaRāC. 1. 9(2); 7.3(12); अनुगृहीतमस्मद्गृहं भवत्या MālaMā. 8. 94; भगवन् परमनुगृहीता वयमेवं तत्रभवता संभाव्यमानाः AnargharRā. 1. 40(1); परमात्मानम्। कथं तर्हि पश्यन्ति ··· हृदा च हृदयस्थेन च परमेश्वरेणानुगृहीताः सन्तः SanatBh. 295. 7 (*on* 4. 6); अनेन मित्रेणाहम् ··· अनुगृहीतः Hitopa. 1.116(2); उभौ परमनुगृहीतौ स्वः SubhaDha. 2.5(5); धन्याः स्थ देवाः ··· अनुगृहीताः परमेश्वरेण VarāP. 23.24; अपार भगवन्नकूपार ··· परमनुगृहीतोऽस्मि BālRā. 7.43(19); BālBhā. 1.14(8); राजापि ··· अनुगृहीतेयमिन्दुमौलिना इत्यवधारयन् ··· तां बभाषे NalaCam. 3. 5(4); राजापि ··· परमनुगृहीतमात्मानं मन्यमानो विधानतस्तां जग्राह TilaMañ. 31. 6; प्रवर्तनाद्वारेण सोऽनुगृहीतो भवति PratyabhiVi. ii. 316.4 (*on* iv. 1.18); अनुगृहीतस्तर्हि भगवता वैवस्वतो वंशः CaṇḍaKau. 2. 27(3); यदर्थमनुकृत्य बाढमनुगृहीतोऽसि UdaySuKa. 118. 21; BhaviP. 228B. 30 (i. 153. 88); प्रीतोऽस्म्यनुगृहीतोऽस्मि दर्शनादेव तेऽद्य PadmP. i. 45.20; गङ्गातीरालयान् ··· वदेत यः। स एवानुगृहीतः स्याद् गङ्गया द्विजपुंगवः BṛDharmaP. i. 55. 52; GaṇeP. ii. 149.47; धन्यास्म्यनुगृहीतास्मि कृतार्थास्मि जगत्प्रभो AdhyāRā. i. 2.1; YogVā. i. 6. 49; KathāSaSāg. vii. 9.6; PañcaRā.(Nā.) iv. 3.194; परमपुरुषेणानुग्र(?गृ)हीतो जीवः VedāntDī. 232. 20 (*on* iv. 2.16); यत्कर्णे अनुगृहीतोऽस्मि ··· श्रीमुनिचन्द्रसूरिभिरद्भुतप्रयोगप्रदानेन MudriKu. 5.4(9); त्वया ···। रविणेवानुगृहीतं चराचरमिदं जगत् TriṣaŚaPuC. i. 6. 647; देव। किंनिमित्तमिहागमनेनानुगृहीतास्मि Pañca. 50. 19; ब्रह्मसुन्दर्यथोवाचानुगृहीता त्वयाम्बिके MalliC. 7. 859; प्रेर्यो यथोचिते कार्येऽनुगृहीतो यथा भवेत् PārśvC. 2. 385; प्रभुणानुगृहीतोऽस्मि SamarāSaṁ. 4.580; तेन जुष्टः प्रीतिविषयीकृतः अनुगृहीतः अमृतत्वमेति ŚrutaPra. iA. 40. 16 (*on* i. 1. 1); आत्मनस्तेजसस्तस्यां भवायैव मनो दधे। मनसानुगृहीतश्च गर्भस्तेन महात्मना Hastyāyur. 12.18 (1.1); एतैरनुगृहीतानामन्वयेन महात्मनां। निःसीमवैभवम् ·· अभूत् EI. i. 281.17; आर्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा SāhiDa. 341.7; अनुग्र(?गृ)हीता जानन्ति मामेकं ज्ञानविग्रहम् BṛBrahmaS. ii. 2. 38; रक्षोनिवारणादिभिः स्वव्यापारैरनुगृहीतेन (श्राद्धेन) प्रीणयन्ति VīraMi. 329. 10 (*on* 1. 269); सखासि ममेत्यनुगृहीतोऽपि यः पिशाच इव धनपालतां वव्रे NīlaVi. 37. 15; JānaPa. 3.89(2); देव्यैवानुगृहीतोऽसि Jīvān. 470.3; शक्तेरनुग्रहकर्ता पुरुषस्तेनानुगृहीता तु सा GoviBh. 140. 13 (*on* ii. 2. 43); VasaTi. 11.2; 44.17; NītiPra. 1. 6; एके शाखाः एकेऽनुगृहीताः BālamBha. i. 189. 14 (*on* 1.53); वयमनुगृहीता भवद्भिः RasSa. 11(10); **1B** justified, corroborated, rendered compatible एवं प्रकरणमनुगृहीतं भवति ŚābaBh. 596. 1 (*on* ii. 3. 8); 755. 17 (*on* iii. 2.5); प्रदाने चैषां यज्ञायुधशब्दोऽनुगृहीतः ŚābaBh. 1201. 2 (*on* iv. 1.7); 1768.17 (*on* ix. 4.5); एवं तदनुगृहीतं भवति, अन्यथा बाधितं स्यात् BrahmSi. 42. 17; इत्येवंजातीयकाः (श्रुतयः) अनुगृहीता भविष्यन्ति BrahmSūBh.(Śaṅ.) 852.1 (*on* iv. 4. 6); ManuBh. i. 440. 16 (*on* 5.43); i. 311.18 (*on* 3. 238); वेदमधीत्य स्नायादिति स्मृतिरनुगृहीता भवति SarvaDaSaṁ. 12.48; समुदायशास्त्रमनुगृहीतं भवति PariVṛ.(Sī.) 52. 5; कार्यमात्रवृत्तिजातेः किंचित्प्रति कार्यतावच्छेदकत्वनियमोऽप्यनुगृहीतो भवति MīmāKau. iii(2). 140.21 (*on* ii. 2.1); एकपशुसाध्यताप्यतिदेशप्राप्तानुगृहीता भवति MīmāKau. iii(2). 245. 5 (*on* ii. 2.20); LalitāSaBh. 51.1 (*on* 85); तत्त्वमस्यादिवाक्यान्यनुगृहीतानि स्युः GoviBh. 164.1 (*on* ii. 3. 41); **1C** accepted, admitted अनुगृहीतमेतदस्माभिः VeṇīSaṁ. 1. 234; **2** preserved, maintained पाणिग्रहणादि गृह्यं परिचरेत् ···। नित्यानुगृहीतं(?तः) स्यात् ĀśvaGS. i. 9.2 (comm. अनुशब्दः परिशब्दस्य स्थाने। नित्यं परिगृहीतं स्यात्); **3** brought into existence (i. e. compiled) पतञ्जलिः ··· येन ··· व्याकरणस्य भाष्यमनुगृहीतम् SarvaMaSaṁ. 12. 4; **4** adapted, cf. **अनुगृहीतपरोक्ष.**

**अनुगृहीतक** (anugṛhīta-ka) *adj.* favoured, blessed (नरः भवेत्) शीघ्रं पापविनिर्मुक्तो मया चानुगृहीतकः VṛGautaSm. 535.8(6)

**अनुगृहीतकुत्सापदसामानाधिकरण्य** (anugṛhīta-kutsāpadasāmānādhikaraṇya) *adj.* accepting coreferentiality with the word (expressive of) contempt प्रकृत्यर्थविशेषणपक्षे अनुगृहीतकुत्सापदसामानाधिकरण्येऽव्ययसर्वनामशब्देभ्यः प्रत्ययेन भाव्यम् Pradī. iv. 398B. 20 (*on* v. 3. 74) (*but* Uddyota अनुगृहीता वाच्यत्वेन स्वीकृता कुत्सा येन)

**अनुगृहीतचिद्दृश्** (anugṛhīta-ciddṛś) *adj.* whose vision in the form of consciousness is blessed प्रतिपन्नशाक्तविभवाः प्रसादिना भवता चिरादनुगृहीतचिद्दृशः। उपपत्तिधामसु न तेषु तेष्वमी भगवन्भवन्ति फलभोगिनोऽणवः HarVi. 6. 133.

**अनुगृहीतचेतस्** (anugṛhīta-cetas) *adj.* whose mind is blessed भवदिच्छया ह्यनुगृहीतचेतसः शतरुद्रवीरमुखरुद्रनायकाः।··· प्रविशन्ति धाम किल शैवमद्भुतम् HarVi. 6. 158.

**अनुगृहीतजन्मन्** (anugṛhīta-janman) *adj.* whose birth is blessed तेन स्वहस्तकमलानुगृहीतजन्मा वाल्मीकिराशिरुदियाय दयालुचेताः EI. i. 282.19.

**अनुगृहीततम** (anugṛhīta-tama) *adj.* most favoured देव, परमनुगृहीतोऽस्मि, क्षणमवधानादनुगृहीततमः क्रियतामयं जनः AvantiKa. 9.10.

**अनुगृहीतत्व** (anugṛhīta-tva) *n.* the state of being one who is favoured हार्दानलात्मना भुङ्क्ते अध्यक्षः परमेश्वरः। तच्छक्त्यानुगृहीतत्वात् सोऽहं प्रकृतिगः पुमान् PauṣkS. 31.179; PāraS. 7. 418.

**अनुगृहीतनामन्** (anugṛhīta-nāman) *adj.* whose name is frequently uttered कथम् एतदपि विप्रतिषिद्धम् ··· सुहृद्भिरनुगृहीतनाम्ना महेश्वरदत्तेन PādaTā. 47. 12.

**अनुगृहीतपरोक्ष** (anugṛhīta-parokṣa) *adj.* (a specific type of the Ṣaḍaha sacrifice) wherein the indirect (i.e. transferred) chants are adapted तस्य कल्पः — प्रत्यक्षाणां स्थाने परोक्षाणि सोऽनुगृहीतपरोक्षः षडहः Kṣudra. 108; NidāSū. 68.9 (4.4)

**अनुगृहीतपरोक्षतर** (anugṛhīta-parokṣatara) *adj.* (a Pṛṣṭhya-Ṣaḍaha sacrifice) wherein more (number of) indirect (i. e. transferred) chants are adapted अथातो नानापृष्ठ एव सन् षडहोऽनुगृहीतपरोक्षतरः तस्य कल्पः प्रत्यक्षयोः स्थाने परोक्षाणि Kṣudra. 110.

**अनुगृहीतपृष्ठ** (anugṛhīta-pṛṣṭha) *adj.* (a specific type of Pṛṣṭhya-ṣaḍaha sacrifice) in which various *Pṛṣṭhastotras* are adapted अथातो बृहद्रथन्तरपृष्ठः सन् षडहोऽनुगृहीतपृष्ठः।··· षष्ठस्याह्नो रैवत्याभवे गायत्र्याम्। सोऽनुगृहीतपृष्ठः षडहः Kṣudra. 107; अथाप्यनुगृहीतपृष्ठे रेवतीरेवानुगृह्णाति NidāSū. 68.8 (4.4)

**B** capable of favouring or blessing शापानुग्रहसमर्था महर्षयः श्रूयन्ते TantrVā. 135.9 (*on* i. 3.7); सभापतिरपि ··· रागादिरहितो निग्रहानुग्रहसमर्थः स्वीकरणीयः TārkiRa. 208.13; शापानुग्रहसमर्था वाक् दैवी वाक् ŚrutaPra. iB. 267.13 (*on* i. 1.27)

**अनुग्रहसंभव** (anugraha-sambhava) *m.* possibility of acceptance इह तु द्वौ प्रातःकालौ नैरन्तर्येणैव विद्येते।··· द्वयोरप्यनुग्रहसंभवान्न चोदकप्राप्तस्य बाधो युक्तः TantrRa. 269.16; सामानाधिकरण्यस्यापि अनुग्रहसंभवे तद्बाधनायोगात् PūrvottaVāNaMā. 86.5.

**अनुग्रहसंमुद्** (anugraha-sammud) *adj.* delighting in favouring नगात्मजा पुररिपुं भुवनत्रयगुप्तये। इममयाचत शोणगिरीश्वरं वरमुदारमनुग्रहसंमुदम् SkndP. i(3A). 12.88.

**अनुग्रहसर्ग** (anugraha-sarga) *m.* creation (of supportive bodies) as a favour कपिल उवाच। कथयिष्यामि।··· अनुग्रहसर्गः TattvSa. (17) 118.1; अत्राह कोऽनुग्रहसर्गः। अत्रोच्यते। बाह्यान् पञ्चतन्मात्रेभ्यश्चोत्पाद्यानुग्रहसर्गध्यानोत्पन्नेनाधारवर्जितान् पुत्रान् दृष्ट्वा तेभ्यस्तन्मात्रेभ्योऽनुग्रहसर्गमसृजद् ब्रह्मा TattvSa. (17) 136.14.

**अनुग्रहसाध्यत्व** (anugrahasādhya-tva) *n.* the state of being that which is to be accomplished through (divine) favour पुष्टिमार्गेऽङ्गीकृतेस्त्वनुग्रहसाध्यत्वात्तत्र च पापादेरप्रतिबन्धत्वाच्छ्रवणादिरूपा प्रेमरूपा च युगपत् पौर्वापर्येण वा वैपरीत्येन वा भवत्येव AṇuBh. 235.11 (*on* iii. 3.29)

**अनुग्रहसामर्थ्य** (anugraha-sāmarthya) *n.* ability to bestow favour अतिभक्तिप्रभावेन वाच्यस्यानेकरूपिणः। संमुखीकरणादीनां कर्मणा संप्रयोजितम्। तदनुग्रहसामर्थ्याद् वाञ्छितं संप्रयच्छति PauṣkS. 32.61; शापानुग्रहसामर्थ्यम् ऋषीणाम् VedavyāSm. 1.38; BhaviP. 80B.25 (i. 41.19); प्रवक्तृत्वेऽपि ब्राह्मणानां नृपसहायोपयोगितैव। द्रष्टा तु निग्रहानुग्रहसामर्थ्याद् राजैव BālaKrī. i. 202.12 (*on* 2.1); सुकृतस्यापि लेपः — महत्त्वपङ्क्तिपावनत्वशापानुग्रहसामर्थ्यकाम्यकर्मरुचिरूपः ŚrutaPra. ii. 585.2 (*on* iv. 1.13)

**अनुग्रहसिद्धि** (anugraha-siddhi) *f.* accomplishment of help दर्शपूर्णमासाभ्यां स्वर्गं साधयेत् कथमित्येतस्यामाकाङ्क्षायामविच्छिन्नं यान्यश्रुतप्रयोजनानि कर्माणि पठ्यन्ते समिधो यजति तनूनपातं यजतीत्येवमादीनि ततश्च दर्शपूर्णमासयोः कुतश्चिदनुग्रहसिद्ध्या भवितव्यम् TantrVā. 831.18 (*on* iii. 3.11)

**अनुग्रहस्मरण** (anugraha-smaraṇa) *n.* *smṛti*-statement of approval or admittance अहतं धातुरक्तं च तत्पवित्रमिति स्थितिः। इति तस्यानुग्रहस्मरणात् SmṛtiCan. ii. 298.17.

**अनुग्रहस्वभाव** (anugraha-svabhāva) *adj.* of the nature of what is pleasant or agreeable अनुग्रहलक्षणं सुखमिति। अनुगृह्यतेऽनेनेत्यनुग्रहः अनुग्रहलक्षणमनुग्रहस्वभावमित्यर्थः NyāyKa. 259.23.

**अनुग्रहस्वभावात्मन्** (anugrahasvabhāvātman) *adj.* constituted of the nature of favouring काहमल्पमतिर्योषित् क्व त्वं त्रैलोक्यनायकः। अनुग्रहस्वभावात्मा प्राप्तोऽसि मम दर्शनम् BṛDharmaP. i. 45.34; i. 48.38.

**अनुग्रहस्वरूप** (anugraha-svarūpa) *n.* essential nature or form of assistance अनुग्रहस्वरूपे पर्यालोच्यमानेऽपि न प्रयाजाद्यपेक्षा सिध्यति MayūMāli. 236.16 (*on* iii. 3.4)

**अनुग्रहहीनत्व** (anugrahahīna-tva) *n.* the state of being deficient in conferring benefit कोशवानप्यपक्षः क्षयव्ययानुग्रहहीनत्वान्न कुतश्चित् प्राप्नोति (सिद्धिम्) ArthŚā. ii. 311.3 (7.11)

**अनुग्रहहेतु** (anugraha-hetu) *m.* **A** purpose of bestowing favour इमौ चाक्षयबाणाढ्यौ तूणीरौ स्वर्णचित्रितौ। गृहाण दैत्यनाशाय ममानुग्रहहेतवे BrahmāṇḍP. iii. 17.42; **B** cause of favouring अनुग्रहहेतुभूतो यः पूर्वोक्तो गत्यनुस्मृतिसंबन्धस्तस्य यावद्देहभावित्वात् तत्कार्यस्यानुग्रहस्यापि तथात्वात् AṇuBh. 329.11 (*on* iv. 2.19)

**अनुग्रहा** (anugrahā) *f.* name of one of the nine Śaktis or deities presiding over the *pīṭha* ओमनुग्रहायै नमः TripāMaNāU. 7.48 (Vaiṣṇavopaniṣads-ALS. Madras, 1953 A.D.); शक्तयो विमलाद्यास्तु इष्टकानां तु देवताः। न्यसनीया यथान्यायं मध्ये न्यस्या स्त्व(?त्व)नुग्रहा PañcaRā.(Ha.) i. 12.8; AgniP. 41.16; अनुग्रहाख्या पट्टिकायां स्थाप्यैका च कृताञ्जलिः SkandP. ii(9). 27.11; विमलोत्कर्षिणी ज्ञाना क्रिया योगाथ सत्यया। प्रह्वीशानुग्रहा चाथ पूर्वतः केसराग्रगाः। तासां तु मध्येऽम्बुजकर्णिकायां यानुग्रहाख्या नवमी तु शक्तिः ĪśānŚiPa. i. 33.60; i. 34.65; ii. 54.28; विमलोत्कर्षिण्यौ च···। प्रह्वी सत्येशानुग्रहाश्च नवशक्तयो हरिहरीशे TantrSa. 7.45; BṛBrahmaS. iv. 2.32; VīraMi.(Pūjā.) 118.14; अनुग्रहायै कर्णिकायामेव ओं नमो भगवते विष्णवे ··· नमः VīraMi.(Bhakti.) 9.12.

**अनुग्रहाग्रह** (anugrahāgraha) *m.* insistence on grace or kindness अमुना देवि देहेन जगदन्यदवाप्यते। न कस्मादत्र मे युक्तिं कथयानुग्रहाग्रहात् YogVā. iii. 21.31.

**अनुग्रहात्मक** (anugrahātma-ka) *adj.* [*f.* -ikā] **A** having the nature of bestowing favour दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः MahāBhā. xiii. 81.24; या ह्युक्ता पञ्चमी शक्तिर्विष्णुसंकल्परूपिणी। अनुग्रहात्मिका शक्तिः सा कृपा वैष्णवी परा AhirbuS. 14.30; LakṣmīT. 13.1; अप्रतिग्रहवृत्तिश्च मतिश्चानुग्रहात्मिका।··· कर्तव्या क्षेत्रवासिना SkandP. iv. 96.78; **B** consisting in favouring or obligingness ध्यानपारमिता निश्रयः ··· व्यावसायिक एकश्च द्वितीयोऽनुग्रहात्मकः। नैबन्धिकस्तृतीयश्च चतुर्थः प्रातिपक्षिकः MaYānaSū. 142.23 (18.53)

**अनुग्रहात्मन्** (anugrahātman) *adj.* having the nature of bestowing favour or grace अनुग्रहात्मना शक्त्या सुदर्शनमयात्मना। स्वीकृतो हि यदा विष्णोः करुणावर्षरूपया (जीवः) AhirbuS. 14.31; भगवदिच्छैवोत्तारणीयमुत्तारयेत्, तदिच्छैव अनुग्रहात्मा ParāTri. 126.14; *m.* nature of divine grace or favour संकल्पः ··· पञ्चधा स विजृम्भते। सृष्टिस्थित्यन्तकारेण निग्रहानुग्रहात्मना AhirbuS. 14.14; बुद्धिः ···। अवस्थिता चतुर्धा वै शक्तित्वेन जगद्गुरोः।··· ईशित्वानुग्रहात्मना JayāS. 12.30.

**अनुग्रहात्यादर** (anugrahātyādara) *m.* great keenness for (securing) kindness द्वैधस्यान्तं व्यधित वपुषोर्यस्तमन्द्री(?द्री)न्द्रपुत्र्या साकं स्थानं कुसुमधनुषोऽनुग्रहात्यादरस्य ŚrīKaC. 5.54.

**अनुग्रहादिक** (anugrahādi-ka) *adj.* favouring etc. ईश्वरश्चाहं कृत्यं मेऽनुग्रहादिकम् ŚivaP. i. 9.36(8A.2); पूजां प्रयुज्यमानां तु गृहीत्वानुग्रहादिकम्। कर्तुं सामर्थ्यमस्यास्ति यत्तत्स्यात्संनिधापनम् ĪśānŚiPa. i. 8.22.

**अनुग्रहादिकृत्य** (anugrahādi-kṛtya) *n.* the act of favouring etc. ईशाच्चिच्छक्तिनुखतो विभोर्मिथुनपञ्चकम्। अनुग्रहादिकृत्यानां हेतुः पञ्चकमिष्यते ŚivaP. vi. 16.61 (492B.6)

**अनुग्रहाद्य** (anugrahādya) *adj.* beginning with (the act of) favouring अनात्मानः परे सर्वे जीवा एव न संशयः। अनुग्रहाद्यं सर्गान्तं जगत्कृत्यं च पङ्कजम् (?पञ्चकम्) ŚivaP. i. 9.38 (8A.2)

**अनुग्रहाद्यात्मक** (anugrahādyātma-ka) *adj.* consisting in the act of favouring etc. शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितः BrahmSūBh.(Śaṅ.) 556.15 (*on* iii. 1.25)

**अनुग्रहानभिमुखी** (anugrahānabhimukhī) *adj.* (*f.*) not inclined towards favouring नानुग्रहानभिमुखीषु हि देवतासु युष्मादृशो नयनगोचरमापतन्ति PṛthvīVi. 4.67.

**अनुग्रहानल** (anugrahānala) *m.* fire of (divine) grace or favour (पुष्टिमार्गेऽङ्गीकृते) न ह्यविद्यादिमुक्त्यन्तरूपभजनानन्दान्तरायरूपाभ्रंकषाविरलविविधमहातरुगहनानां दहने लोलुपस्यानुग्रहानलस्य तदान्तरालिकपापतूलं प्रतिबन्धकमिति वक्तुं शक्यम् AṇuBh. 235.15 (*on* iii. 3.29)

**अनुग्रहानारम्भक** (anugrahānārambhaka) *adj.* who does not initiate bestowing any favour हितो हिंसानारम्भकः शान्तोऽनुग्रहानारम्भकः BālaKrī. ii. 26.7 (*on* 3.58)

**अनुग्रहान्तर** (anugrahāntara) *n.* another (cause of) acceptance प्रसङ्गादनुग्रहान्तराण्यप्युच्यन्ते — तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे। नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति Aparā. 270.4 (*on* 1.190)

**अनुग्रहापरपर्याय** (anugrahāparaparyāya) *adj.* synonymous with divine grace ब्रह्म ··· तिरोधानानुग्रहापरपर्यायबन्धमोक्षप्रदत्वेनापि सप्रपञ्चं लक्षयितुमुपक्रमते LalitāSaBh. 29.3 (*on* 52); 76.12 (*on* 113)

**अनुग्रहापाङ्गपात** (anugrahāpāṅga-pāta) *m.* the casting of side-glances (replete) with (divine) grace or favour आप्तपापप्रमाथः पाथोनाथो भवतु भवतोऽनुग्रहापाङ्गपातैः ŚrīKaC. 16.46.

**अनुग्रहापेक्ष** (anugrahāpekṣa) *adj.* expecting help तत्कुलीनावरुद्धाभ्यां भूमिं वा तस्य हारयेत्। यथा वानुग्रहापेक्षं वश्यं तिष्ठेत् तथा चरेत् (मित्रम्) ArthŚā. iii. 365.6 (7.18)

**अनुग्रहापेक्षण** (anugrahāpekṣaṇa) *n.* expectation for assistance सहायापेक्षणमनुग्रहापेक्षणम् ŚāstrDī. 236.16 (*on* iii. 3.4)

**अनुग्रहापेक्षत्वदर्शन** (anugrahāpekṣatva-darśana) *n.* observation of being that which expects assistance यदि मतं न यागः फलं साधयत्यननुगृहीतः सर्वसाधनानामनुग्रहापेक्षत्वदर्शनात् ŚāstrDī. 236.12 (*on* iii. 3.4)

**अनुग्रहापेक्षा** (anugrahāpekṣā) *f.* expectancy for assistance सर्वेषां वा प्रत्येकं मिथोऽनुग्रहापेक्षया संघातस्य वा वाक्यत्वकल्पनम् NyāyRa. 860.15 (*on* 7.50); 926.18 (*on* 7.290); यदि मतं न यागः फलं साधयत्यननुगृहीतः ··· अतः किमस्यानुग्राहकमित्यनुग्रहापेक्षायां प्रयाजविधिरिति ŚāstrDī. 236.12 (*on* iii. 3.4); कारणस्यानुग्रहापेक्षारूपेतिकर्तव्यताकाङ्क्षाख्यप्रकरणादिनावगताङ्गभावानां प्रयाजादीनां साक्षात् प्रधानतदपूर्वार्थत्वयोरसंभवे तदव्यवहितापूर्वार्थत्वस्यैव कल्पनात् MīmāKau. iii(2). 54.19 (*on* ii. 1.6); सति कर्मण्यनुग्रहविलम्बेन संयोगविभागानुत्पत्त्य-

दर्शनान्न सर्वत्रानुग्रहापेक्षा MayūMāli. 236.15 (*on* iii. 3.4)

**अनुग्रहाब्धि** (anugrahābdhi) *m.* ocean of grace or kindness अनुग्रहाब्धेरिव वीचिभेदैराप्याययामास शुभैरपाङ्गैः। वनं पृथिव्या इव यौवनं तद् गोप्ता सतां गोधनवंशचन्द्रः Yādavā. 4.41.

**अनुग्रहाभाव** (anugrahābhāva) *m.* **A** absence of help or assistance बाह्यार्थानुग्रहाभावात्पाराार्थ्येनावशीकृताः ŚlokaVār. 5(2).192 (264.4); आत्मनः अनुग्रहाभावे अयं कार्यकरणसंघातः न व्यवहाराय कल्पते BṛĀraUBh. 528.20 (*on* iv. 3.7); द्वादशशतस्य तु कथंचिदपि अनुग्रहाभावात् सर्वथा बाध एव MayūMāli. 504.17 (*on* vi. 5.20); **B** absence of bestowing favour न च परानुग्रहार्थं तत्संहार्यस्य ततोऽनुग्रहाभावात् तदन्यानुग्रहार्थम् इत्यपि न सार्वत्रिकम् ŚivārkaMaDī. i. 338.12 (*on* i. 2.9)

**अनुग्रहामृतालोक** (anugrahāmṛtāloka) *m.* glance (full) of the ambrosia of kindness or grace अनुग्रहामृतालोकैः पावयस्व जगद्गुरो SkandP. ii(2). 39.49

**अनुग्रहाय** (anugrahā-ya-) *denom.* to function like a favour (i.e. to turn into a favour) दुःखं च जीवनं दुःखशालिषु। अनुग्रहायते येषां ते धन्याः खलु मान्त्रिकाः KaliViḍ. 12.

**अनुग्रहार्थ** (anugrahārtha) *adj.* **i** meant for the sake of blessing or favouring (मन्त्रात्मा) स्थितीस्सर्वाश्च संहृत्य विशेषेण व्यवस्थितः। परं(र ?)-सूक्ष्मयुतं(त ?) स्थूलरूपेण त्र्यक्षरे सदा। मन्त्रे ह्यनुग्रहार्थस्तु भविता भावितात्मनाम् JayāS. 16.46; (रूपाणि) अन्यान्यनुग्रहार्थानि मच्चित्तानामिति स्थितिः AhirbuS. 44.30; ननु संहारो नानुग्रहार्थः ŚivārkaMaDī. ii. 50.30 (*on* ii. 1.34); **ii** meant for the sake of assistance शब्दस्य विधेरनुग्रहार्थः सन्नयमर्थवादः MīmāKau. iii(1). 31.6 (*on* i. 2.9)

**अनुग्रहार्थत्व** (anugrahārtha-tva) *n.* the state of being meant for the sake of blessing or favour परमेश्वरकर्तृकाणां निग्रहाणामनुग्रहार्थत्वेनादोषत्वं गुणत्वं च वायुसंहितायां प्रपञ्चितम् ŚivārkaMaDī. i. 344.28 (*on* i. 2.9)

**अनुग्रहार्थम्** (anugrahārtham) *adv.* **1** for the sake of welfare or betterment पृथिव्याश्च वैभवाद् वर्णभेदाः। पीतवर्णा मृदो जायन्ते लोकानुग्रहार्थम् GopīU. 643.6; अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः। बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाच ह VāsiDS. 23.43; अनुग्रहार्थं लोकानां विष्णुः ···। वसुदेवात्तु देवक्यां प्रादुर्भूतः MahāBhā. i. 57.83; i. 93.9; अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् MahāBhā. xiii. 51.37; अनुग्रहार्थं सुगतस्तु तस्मै पात्रं ददौ Saund. 5.11; अनुग्रहार्थं भक्तानाम् ··· नाथ ह्यन्तरङ्गत्व(स्त्व)मेव हि PauṣkS. 19.110; श्राद्धम्। ··· तिष्ठत्यनुग्रहार्थं च यदि संप्रार्थितं हि यत् PauṣkS. 27.149; अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रहार्थम् ArthŚā. i. 244.2 (2.16); मन्त्राणां कल्पनादेहाः ··· अनुग्रहार्थमिह हि भक्तानाम् JayāS. 13.202; मम चाचपी(पि) (? चापि च) भट्ट[ा]रिकायाश्च दंम्पं(दाम्प)त्यस्यास्माकमनुग्रहात्र्थम्(र्थं) पराशरसगोत्राय ··· दत्तः (ग्रामः) EI. xix. 102.6; अनुग्रहार्थं भोक्तॄणां भुजिरारभ्यते यदा। देशकालाद्यभेदेन नानुगृह्णाति तानसौ VākyaP. 2.391; अनुग्रहार्थं भक्तानामवतीर्णस्य चेच्छया।··· विग्रहोऽयं प्रकाशितः PāraS. 7.481; अनुग्रहस्य भुवनं भूमिभागो न संशयः। अनुग्रहार्थं भूतानां क्षेत्रान्तर्मृत्युधर्मिणाम् SkandP. v(1). 6.115; तेषां पितृमातृवियुक्तानां बालानाम् ··· अनुग्रहार्थं भोजनयवसकवलकुवलविधानं वक्ष्यामः Hastyāyur. 253.8 (2.46); बहूनां प्राणिनामनुग्रहार्थं चार्वाकमतमाश्रयणीयम् SarvaDaSaṁ. 1.133; परोपकारः कर्तव्य इति विधिबलाद्यत्र कुत्राप्यनुग्रहार्थं दत्तम् VīraMi.(Vyavahāra.) 311.8; **2** for the sake of blessing or favour धर्मज राजर्षे ···। अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम् MahāBhā. xviii. 2.32; (इदं शास्त्रम्) अनुग्रहार्थं च पुरा कथितं नारदस्य तत् JayāS. 1.42; अनुग्रहार्थं वर्णाणां(? नाम्) योग्यतापाद-(का)नाय च।··· सात्वतादीनि शास्त्राणि ··· उपदिश्य ··· स मेऽब्रवीत् PāraS. 1.88; 6.99; याज्ञवल्क्य आवव्राज आगतवान् आत्मनो योगक्षेमार्थम्, राज्ञो वा विविदिषां दृष्ट्वा अनुग्रहार्थम् BṛĀraUBh. 494.7 (*on* iv. 1.7); ममानुग्रहार्थम् ··· त्वया उक्तम् GītāBh.(Śaṅ.) 301.9 (*on* 11.1); सानन्दः समहानन्दो निःस्पृहोऽस्मि प्रतिग्रहे। परं तेऽनुग्रहार्थं तु करिष्यामि प्रतिग्रहम् SkandP. iv. 98.57; अनुग्रहार्थं भूपानां जगतो हितकाम्यया। भवन्तो वक्तुमर्हन्ति विष्णुधर्मान् ViṣṇuDhaP. i. 1.19; LiṅgaP. i. 12.12; आत्मनोऽनुग्रहार्थं वा परार्थं श्रेष्ठमुत्तमम् ··· होमपात्रं पृथक् पृथक्। प्रपूजयेत् KulārT. 10.124; अशेषतोऽनुग्रहार्थमस्माकं धर्मान् ब्रूहि BālaKrī. i. 6.18 (*on* 1.1); यच्चानुग्रहार्थमदृष्टार्थं दत्तम्, तदेतत्सप्तविधमपि दत्तमेव न प्रत्याहरणीयम् Mitā. 269.25 (*on* 2.176); Aparā. 781.16 (*on* 2.175); (सरस्वती) मया तु सप्रश्रयमनुग्रहार्थमुपरुद्धा ··· प्रसन्नया गिरा मामनुजग्राह UdaySuKa. 151.15; अनुग्रहार्थं युष्माकं भक्त्याहूतस्त्विहागतः PadmP. v. 13.351; तेषामेवानुग्रहार्थम् ··· तमो नाशयामि GītāBh.(Rā.) 508.3 (*on* 10.11); अथवानुग्रहार्थं च लीलार्थं वा तदा मुनिः। अनिरुध्य विचेष्टेद्यः सोऽप्येवं हि सुखी भवेत् LiṅgaP. i. 9.56; बालस्त्रीमूढमूर्खाणां नृणां चारित्रकाङ्क्षिणाम्। अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः Kāvyānu.(He.) 2.4; KumāDeC. 13.33; मम त्वनुग्रहार्थं च वासेऽस्मिन् क्रियतां मतिः Hastyāyur. 16.14 (1.1); (ब्रह्मा) कदाचित्केवलं सर्वसंकल्पपरिहीनया। यदृच्छयानुग्रहार्थं लोकानां प्रतिबुध्यते YogVā. iv. 59.49; **3** for the sake of assistance or help लक्ष्यं च लक्षणं चैव लक्षणा च प्रभेदतः। अनुग्रहार्थं सत्त्वानां संबुद्धैः संप्रकाशिताः MaYānaSū. 64.6 (11.36); यत् स्मरणे बहिरिन्द्रियानपेक्षत्वमिति चेन्न, अनुभवेऽपि प्राप्तिमन्तरेणानुग्रहार्थं तदनपेक्षणात् NyāyKu. 114.13; यदि फलादिसंगत्युत्तरकालं तद्विशिष्टायां भावनायां पुरुषं नियुञ्जाने विधावनुग्रहार्थं स्तुत्यर्थावसरः तदभावे तद्ध्याकाङ्क्षाभावादर्थवादान्वयो न स्यात् NyāySu.(So.) 48.21 (*on* i. 2.7); यद्यपि प्रातिपदिकाद्धात्वर्थे इति गणसूत्रेणैव ··· णिच् विहितः तत्करोतीत्यादिना च प्रपञ्चितस्तथापीह मन्दधियामनुग्रहार्थं पुनरुच्यते Prasā. ii. 382.15.

**अनुग्रहार्थाय** (anugrahārthāya) *adv.* **i** for the purpose of (conferring) favour or grace upon जगतोऽनुग्रहार्थाय याचितो मे जगत्पतिः MahāBhā. vi. 62.7; याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः। लोकस्यानुग्रहार्थाय स्थापिता ब्रह्मणा भुवि MahāBhā. viii. 23.34; एतैर्नामभिरभ्रस्थाः संकेतां बहु तुष्टुवुः। तेषामनुग्रहार्थाय प्रचचाल च सा पुनः BrahmāṇḍP. iii. 17.21; iii. 39.46; भक्त्या परमयाकृष्टो देवदेवस्स योगिभिः। तेषामनुग्रहार्थाय रूपं भेजे चतुर्भुजम् ParaS. 3.9; एष ह्यस्मिन्प्रजातन्तौ पुरूणां पौरवर्षभ। दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि। रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना BhāgP i. 12.16; अनुगृह्याथ भगवान्वनं तत्सर्वगाण्डजम्। जगतोऽनुग्रहार्थाय तत्र वासमरोचयत् SkandP. v(1). 5.66; खिन्नौ तौ दानवौ दृष्ट्वा तपसे कृतनिश्चयौ। तयोरनुग्रहार्थाय वागुवाच शरीरिणी DevīBhāP. i. 6.35; **ii** for the sake of receiving blessings आत्मनोऽनुग्रहार्थाय शरण्यं भक्तवत्सलम्। आविर्भूतम् ··· दृष्ट्वा रामः ··· पपात भूमौ BrahmāṇḍP. ii. 24.20; तपस्तीव्रं लोकसृष्टिसमुत्सुकाः। दिव्यवर्षसहस्रं तु वायुभक्षाः समाचरन्। तिष्ठन्तोऽनुग्रहार्थाय देवि ते ऋषयः पुरा LiṅgaP. i. 85.22.

**अनुग्रहार्थिन्** (anugrahārthin) *adj.* desirous of seeking favour अकस्माद् गृहायातां श्वश्रूं तां सिद्धयोगिनीम्। अनुग्रहार्थी सोऽभ्यर्च्य प्रार्थयामास यत्नतः KathāSaSāg. xii. 1.64.

**अनुग्रहार्द्र** (anugrahārdra) *adj.* soft or tender with kindness देव दीयतामनुग्रहार्द्रं चित्तम् DaśKuC. 37.6; 144.23.

**अनुग्रहार्ह** (anugrahārha) *adj.* worthy of favour अत्यन्तमुपात्तदेहेऽपि परद्रव्यत्वात् परिग्रहोऽयं न नामानुग्रहार्हः किं तूपेक्ष्य एव TattvPradī.(A.) 301.7 (*on* 3.24); 310.2 (*on* 3.28)

**अनुग्रहालोक** (anugrahāloka) *m.* glance with kindness, kind glance भरतोऽपि ··· अनुग्रहालोकानुगृहीतपौरवर्गमग्रजन्मानम् ··· आनन्दयन्ननयत् — निजाश्रमपदम् RāmāCam. 6.106(4)

**अनुग्रहावसर** (anugrahāvasara) *m.* time of bestowing favour or blessing अयमुत्तमोऽयमधमो जात्या रूपेण संपदा वयसा। श्लाघ्योऽश्लाघ्यो वेत्थं न वेत्ति भगवाननुग्रहावसरे PraboSu. 252.

**अनुग्रहाशा** (anugrahāśā) *f.* hope of favouring तदस्मच्छरीरोपयोगात् सफलामनुग्रहाशां मे कर्तुमर्हसि JātaMā. 32.7 (6.31(7))

**अनुग्रहाश्रयता** (anugrahāśraya-tā) *f.* the state of being the abode of favour देवतायाः ··· तद्धितश्रुत्या शब्दतो गुणत्वेनैवावगतिः। अनुग्रहाश्रयतया प्राधान्यं त्वार्थिकम् VīraMi.(Bhakti.) 128.23.

**अनुग्रहासंभव** (anugrahāsambhava) *m.* **A** impossibility of assistance यत्तावदाद्यस्यान्त्यस्य सर्वेषां वा प्रत्येकं मिथोऽनुग्रहापेक्षया संघातस्य वा वाक्यत्वकल्पनं तदयुक्तमितरेतरानुग्रहासंभवादिति। अनुग्रहासंभवमेव दर्शयति NyāyRa. 860.17 (*on* 7.50); **B** impossibility of acceptance अष्टत्वसंख्यायाश्चरावनुग्रहासंभवात्तद्बाधे कपालबाधोऽपि न्याय्यः MayūMāli. 657.6 (*on* x. 1.11)

**अनुग्रहासिद्धि** (anugrahāsiddhi) *f.* non-justification of inclusion कार्यार्थित्वात् संयोगसंज्ञाया विरोधाभावादेकया संज्ञया सर्वेषामनुग्रहासिद्धया द्विर्वचनेन वैधर्म्यादविशेषेणेत्युक्तम् Pradī. i. 231B.5 (*on* i. 1.7)

**अनुग्रहास्पद** (anugrahāspada) *n.* receptacle of favour शिवः पुनर्न कस्यापि निग्रहानुग्रहास्पदम् ŚivaP. vii(1). 30.4 (534A.16); यः स्वबुद्ध्यैव प्रवृत्तिनिवृत्तिसक्तः स एव हि नियोज्यो निग्रहानुग्रहास्पदं च भवति VedāntDī. 128.4 (*on* ii. 3.40-41)

**अनुग्रहिक** (anugrahi-ka) *n.* name of one of the Pariśiṣṭas of Maitrāyaṇīya recension अतः परं परिशिष्टा मैत्रायणीयसूत्रस्य। गृह्यपुरुषः ··· अनुग्रहिकहौतृक° ··· भूतोत्पत्तिरिति द्वाविंशतिः परिशिष्टसंख्यानाम् VārāGS. 1.1.

**अनुग्रहित** (anu-grahita) *adj.* occupied with आसंस्तदानुग्रहिताः सर्वे वर्णाः स्वकर्मभिः Rāmā. i. 268* [PW. II. 840]

**अनुग्रहिन्** (anugrah-in) *adj.* **1** possessed (by an evil spirit) रुदन् नृत्यति रक्ताक्षो हूंरूपोऽनुग्रही नरः AgniP. 299.7; **2** who has received a favour यं प्रपश्यन्ति देवेशं भक्त्यानुग्रहिणो जनाः। तमाहुः ··· शंकरम् SkandP. iv. 31.27.

**अनुग्रहीकृत** (anugrahī-kṛta) *adj.* **1A** turned into a favour मम

त्वया निग्रहोऽप्यनुग्रहीकृतः RaghuVa. 11. 90; **1B** rendered an object of favour, favoured आनन्दं लेभिरे सर्वे प्रभुणानुग्रहीकृताः ŚivaP. ii(3). 32.39 (161A.8); ii(3). 51. 26 (186A. 7); **2** rendered propitious देहि नित्यं यजस्वैवं देवास्तेऽनुग्रहीकृताः ViṣṇuDhaP. i. 108. 17; **3** accepted (i. e. retained), taken over धाटयाप्तं रूप्यकुप्यादि तद्राज्ञानुग्रहीकृतम् RājTa. (Prā.) 469.

**अनुग्रहीतव्य (anu-grahītavya)** *adj.* [*f.* -ā] **1** fit to be favoured नेह कश्चित्परोऽनुग्रहीतव्य इति प्रवर्तते MahāBh. ii. 35.25 (*on* iii. 1.26); ManuBh. i. 443.13 (*on* 5. 51); नन्वयं जनो निदेशदानेनानुगृ( ? ग्र )हीतव्यः YaśasCam. ii. 319.3; (शक्रः) परमनुग्रहीतव्यः श्रीकृष्णेन मदापनोदेन PārijāHa. 34(1); आश्रिता अनुग्रहीतव्याः NityoNi. 10. 17; **2** fit to be accepted or maintained यावच्छक्यं तावद्विहारस्यानुग्रहीतव्यं विशये च तदासत्तिः MīmāSū. x. 6. 10 (Benares Ed. 1923); ŚābaBh. 1992.10 (*on* x. 6.9); तल्लिङ्गवत्तानेनोपस्थानेनानुग्रहीतव्या ŚābaBh. 776.5 (*on* iii. 2. 21); 810.2 (*on* iii. 3.9); बाधितं ह्यनुग्रहीतव्यमर्थवत्त्वाय ŚābaBh. 851.9 (*on* iii. 3. 14); 966.7 (*on* iii. 4. 31); नोभयमनुग्रहीतव्यमिति प्रमाणमस्ति BrahmSi. 42.13; हेतुवचनम् ।अनुमानप्रतिपादकं विषयतयानुमानेनानुग्रहीतव्यम् TātpaṬ.(Vā.) 57. 16 (*on* i. 1.1); कथमिदानीं चोदकप्राप्तमेकपशुनिष्पन्नैकादशावदानद्रव्यकत्वं यागस्यानुग्रहीतव्यम् ŚāstrDī. 144. 5 (*on* ii. 2.7); **3** fit to be helped एवमवश्यं त्वनुग्रहीतव्ये तत्कालसहमस्मै दण्डं दद्यात् ArthŚā. ii. 290. 5 (7.8)

**अनुग्रहीतुकाम (anugrahītu-kāma)** *adj.* desirous of bestowing favour चतुराशावर्तिजनान् युगपदिवानुग्रहीतुकामस्य । चत्वारि भवन्ति मुखान्यङ्गानि च धर्ममुपदिशतः YogŚā. 11.44; श्रुतदेव इति श्रुतं द्विजेन्द्रं बहुलाश्वं नृपतिं च … युगपत् त्वमनुग्रहीतुकामो मिथिलां प्रापिथ Nārāy. x. 88.2.

**अनुग्रहीतुम् (anu-grahītum)** *inf.* **1** to assist, to help गण एव … गणमनुग्रहीतुं समर्थः ŚābaBh. 1594.10 (*on* viii. 1. 17); सैव शेषविवक्षानेन द्योत्यते मन्दधियोऽनुग्रहीतुम् Prasā. i. 439.17; **2** to favour, to oblige, to treat with kindness, to bless तन्मा( मवश्यं ) मैत्रेणानुग्रहीतुमर्हति भवान् PañcT. 2.7 (196. 2); मैथिलम् । अनुग्रहीतुमग्रण्यं गृहिणाम् JānaHa. 6.1; कानि वा तीर्थान्यनुग्रहीतुमभिलषसि HarṣaC. 27. 5; अनुग्रहीतुमर्हसि दासीं रागमञ्जरीम् DaśKuC. 58. 7; कथं तातद्रुपदमनुग्रहीतुं महर्षयोऽपि स्वयंवरयात्रामञ्चमध्यासते BālBhā. 1. 24(9); युज्यते रत्नकूटशैलः कथमपि प्रसङ्गदृष्टो द्रष्टुमनुग्रहीतुं च सपरिग्रहस्य विविधक्रीडाभिः TilaMañ. 147.23; किंचिच्छ्लथीकृतलज्जा अनुग्रहीतुमिच्छन्ती JayaMa. 107.11 (*on* 2.3); प्रणयिषु शुभचेतसां प्रसादः प्रसरति संततिमप्यनुग्रहीतुम् VikraDeC. 6. 6; नाथः …। अनुग्रहीतुं मामेष साक्षान्मोक्ष इवागतः TriṣaŚaPuC. i. 3. 289; भवदत्तो जगामाथ स्वेषां संसारिणां गृहे । प्रव्रज्याग्राहणेनानुग्रहीतुमनुजं निजम् PariPar. 1.305; अवातरद्देवः स्वयं विश्वमनुग्रहीतुं बालमृगांकमौलिः EI. i. 281.15; देवः । आशावधूलवणिमानमनुग्रहीतुं तीर्थावगाहनमिषेण चचार सोऽयम् EI. i. 282.23; वरेण…भगवती तमनुग्रहीतुमिच्छति PuruṣPa. 9. 18; (श्वेतः गुरुः) लोकाननुग्रहीतुमवतीर्णः ŚivārkaMaDī. i. 6. 6 (*on* i. 1. 0); i. 402.10 (*on* i. 3. 2); विरूपाक्षयोगिना … तमनुग्रहीतुं द्वौ शैलौ … योधितौ Pūrvotta-VāNaMā. 202. 4; भक्तमनुग्रहीतुमालोच्य … महेशः ŚivLī. 21. 55; सामन्तक्षोणिपालेष्वहमहमिकयोपाहरद् दृष्टिपातैर्देवस्यानुग्रहीतुम् … उचितं सर्वम् Jīvān. 193.13; (with शक् in pass.) to be favoured सोऽधिकारी यः स्वामिना सति दोषे सुखेन निगृ( ? ग्र )हीतुं अनुगृ( ? ग्र )हीतुं च शक्यते NītiVā. 18. 21; स्मार्तपदार्थानां च बहुत्वात् पूर्वाह्णादिकालः … न शक्यते अनुग्रहीतुम् BhāṭṭDī. i. 41.9 (*on* i. 3. 3); वयम् … केन शक्या अनुग्रहीतुम् NīlaVi. 24.13; **3** to protect, to preserve एतैरोघत्रितयमनुग्रहीतुं गुरुक्रमो गदितः KāmkaVi. 53; **4** to take after, to resemble, to correspond परिणतवपुरेष रात्रिराजस्तव सविधेऽधरपल्लवस्य मुग्धे । प्रभवति रचनामनुग्रहीतुं प्रतिदिनपुञ्जितविभ्रमस्मितस्य ŚrīKaC. 11. 20.

**अनुग्रहीतृ (anu-grahītṛ)** *adj.* [*f.* -trī] **1** which helps जन्मान्तरसंचितानपि संस्कारविशेषान् अनुग्रहीतॄन् विद्यायां दर्शयति BrahmSūBh.(Śaṅ.) 747. 3 (*on* iii. 4.38); **2** which or who favours or blesses अग्न्यादिप्रमुखा इमाः । अनुग्रहीत्रीर्वक्ष्यामीत्यतः प्रववृते श्रुतिः BṛĀraUBhVā. i. 4.125; योगजोऽपि धर्मः कृतकत्वात् अवश्यं विनाशीति तत्प्रक्षये मनसः कोऽनुग्रहीता NyāyKa. 287.1; स्वात्मन्यनुगृ( ? ग्र )हीतेति षडाधारो य ईश्वरः । सोऽहमेवेति कुर्वीत भवं स्थिरतरं पुनः AgniP. 81.25.

**अनुग्रहीतृता (anugrahītṛ-tā)** *f.* the state of being one who favours (अनुग्रहकरं देवं प्रणतार्तिविनाशनम्) प्रकाशैक्येन प्रकाशने अनुग्रहीतृता PratyabhiHṛ. 23.16(10)

**अनुग्रहीतृत्व (anugrahītṛ-tva)** *n.* the state of being one who favours or blesses प्राणिकर्मविशेषापेक्षमेवेश्वरस्य अनुग्रहीतृत्वम् BrahmSūBh. (Śaṅ.) 343.4 (*on* ii. 1. 34)

**अनुग्रहीश (anugrahīśa)** *m.* aspect of Śiva (*lit.* the lord who bestows favours) represented by the vowel *au* सद्योजात ओ अधरे ऊर्ध्वोष्ठेऽनुग्रहीश औ AgniP. 145. 21.

**अनुग्रहेच्छ (anugraheccha)** *adj.* desirous of rendering service अनुग्रहेच्छोऽनुपघातदृष्टिः परोपघातेष्वधिवासकश्च ।… बोधिसत्वः MaYānaSū. 172. 12 (19.65)

**अनुग्रहेच्छा (anugrahecchā)** *f.* desire to bestow favour भुवनाध्वमयीं व्याप्तिमापादयति केवलात् । अनुग्रहेच्छयाचार्यो भक्तानां संप्रदर्शयेत् PauṣkS. 43.125; अथ वानुग्रहेच्छायां जगतो विचरेन्मुनिः ŚivaP. vii. 38.45 (596B. 13)

**अनुग्रहेश (anugraheśa)** *m.* **1** one of the sixteen Rudras belonging to *dvitīyāvaraṇa* of *laghimāvyūha* द्वितीयावरणं श्रुणु । स्थाणुर्हरश्च … अनुग्रहेशः … रुद्राः षोडशैव प्रकीर्तिताः । कथितं लघिमाव्यूहम् LiṅgaP. ii. 27.104; **2** term denoting the vowel *au* ततस्तनुरिह चिन्त्यः पौष्टिकेऽनुग्रहेशः ĪśānŚiPa. i. 3. 27; संकर्षणोऽनुग्रहेशो मुरारिर्व्यापिनी तथा । अधोदन्तगतः … तथौस्वरः Tantrābhi. (5) 36. 11.

**अनुग्रहेश्वर (anugraheśvara)** *m.* **1** aspect of the god Śiva (represented by the vowel *au*) चण्डीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः । अक्रूरश्च महासेनः स्युरेते व( ? स्व )रमूर्तयः BrahmāṇḍP. iii. 44.50; भौतिकः सद्योजातश्चानुग्रहेश्वरः … एताः स्वरमूर्तयः AhirbuS. 17.32; सद्योजातश्चानुग्रहेश्वरः । अक्रूरश्च … षोडशस्वरमूर्तयः ŚāraTi. 2. 30; झण्टीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः … षोडशैते स्वरेश्वराः ĪśānŚiPa. i. 2.2; दण्डीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ।… देवता अमूः AgniP. 292. 42; अनुग्रहेश्वरः क्रूरो महासेनोऽथ षोडश MālinīT. 20. 50; औकारो मनुराख्यातो दन्तान्तोऽधोरदाह्वयः । संकर्षणोऽपि देवेशि । कथितोऽनुग्रहेश्वरः Tantrābhi. (1) 2. 6; अधोदन्तानिलो मित्रः प्रद्युम्नोऽनुग्रहेश्वरः ।… औस्वरः स्मृतः Tantrābhi (6) 42. 9; **2** lord bestowing grace (which is one of his fivefold activity) विधानानुग्रहेश्वरे । न भेदोऽतस्त्वया कार्यः SkandP. i(3). 21. 17.

**अनुग्रहैकधी (anugrahaika-dhī)** *adj.* having the intention of favouring only देवोऽयम् … अनुग्रहैकधीः AhirbuS. 52.18.

**अनुग्रहैकप्रयोजन (anugrahaika-prayojana)** *n.* purpose of showing favour only ममानुग्रहैकप्रयोजनाय … यत्त्वयोक्तम् GītāBh.(Rā.) 541. 12 (*on* 11. 1)

**अनुग्रहैकसाध्य (anugrahaika-sādhya)** *adj.* to be achieved by (Lord's) blessing only अतः पुष्टिमार्गोऽनुग्रहैकसाध्यः AṇuBh. 350.4 (*on* iv. 4. 9)

**अनुग्रहैकात्मन् (anugrahaikātman)** *adj.* of the nature of favour only परमेश्वरः … सततं अनुग्रहमय्या परारूपया शक्त्या आक्रान्तो वस्तुतोऽनुग्रहैकात्मैव ParāTri. 3. 10.

**अनुग्रहोक्तचक्रस्था (anugrahoktacakra-sthā)** *adj.* (*f.*) present in the *cakra* called *anugraha* अनुग्रहोक्तचक्रस्थां देवीं ताभिर्वृतां यजेत् TantrRā. 6. 78.

**अनुग्रहोक्ति (anugrahokti)** *f.* statement of rendering help त्वष्टुस्तु प्रधानदेवतात्वादेवावाहनाविरोधः प्रक्षेपाभावाभिप्रायेण च नवम्यानुग्रहोक्तिः BhāṭṭDī. iii. 184. 13 (*on* ix. 4.13)

**अनुग्रहोचित (anugrahocita)** *adj.* worthy of favour पत्युरनुग्रहोचितस्य दारान्नित्यमन्तःपुरमौचित्यात्प्रवेशयेत् KāmSū. 291. 23 (5.5)

**अनुग्रहोद्देश्य (anugrahoddeśya)** *adj.* intended for favouring द्विविधो निग्रहः अनुग्रहोद्देश्यः तदनुद्देश्यश्च ŚivārkaMaDī. i. 344.16 (*on* i. 2. 9)

**अनुग्रहोन्मथित (anugrahonmathita)** *adj.* completely destroyed by favouring त्वमनुग्रहोन्मथितपाशसंचयान् न पशून् प्रमोचयसि HarVi. 6.128.

**अनुग्रहोपायाकाङ्क्षण (anugrahopāyākāṅkṣaṇa)** *n.* expectancy for helping means तत्र कथमित्यनुग्रहोपायाकाङ्क्षणम् TantrVā. 871. 23 (*on* iii. 3.14)

**अनुग्रा (anugrā)** *f.* name of one of the nine Śaktis or deities presiding over the *pīṭha* विमलोत्कर्षणी ज्ञाना क्रिया योगेति शक्तयः । प्रभ्वी सत्या तथेशानानुग्रा नवमी तथा PañcaRā.(Nā.) iii. 2.30; cf. **अनुग्रहा** and **अनुग्राह्या.**

**अनुग्राग्रणी (anugrāgraṇī)** *adj.* foremost amongst the gentle ones (समरसिंहः) उद्धर्त्तास्य च नंदतु प्रमदवान्न्यायादनुग्राग्रणीरन्येऽप्यस्य सनाभयो गतभया भूयासुरुत्पाततः EI. xxii. 291.31.

**अनुग्राम (anu-grāma)** *m.* adjacent village ग्रामश्च प्रतीतोऽनुग्रामश्च विवक्षितग्रामानन्तरो ग्रामः AupaSūṬ. 42.2.

**अनुग्रामम् (anugrāmam)** *adv.* inside the village नानुग्रामं प्रविशेत् LāṭyāŚS. ix. 2. 24 (comm. न ग्रामान्तः प्रविशेत्)

**अनुग्राह (anu-grāha)** *adj.* which helps न चाप्याख्यायिकारूपमनुग्राहं श्रुतौ मतम् BṛĀraUBhVā.(Sambandha.) 846 (Maheśa Yogin's Ed.)

**अनुग्राहक (anu-grāhaka)** *adj.* [*f.* -ikā] **A1** helping (for attra-

cting creatures towards the Right Faith) समासतश्चतुर्विध उपायः ··· अनुग्राहको ग्राहकः अवतारकोऽनुवर्तकश्च । तत्र दानं बोधिसत्त्वस्यानुग्राहक उपायः Bodhi-Bhū. 79.13; MaYānaSū. 116.12 (16.73); **Aii** who or which helps or promotes यदा योगजो धर्मः क्षीणो भवति तदास्य किमनुग्राहकम् NyāyVār. 89.3 (*on* i. 1.22); भगवतां कश्चिदेवार्थक्षणः कस्यचिदेव परार्थस्यानुग्राहको विबन्धको वा HetuBiṬ. 37.19; धात्वर्थस्योत्पादकोऽनुग्राहको वा कर्तृव्यापारः BhāvanāVi. 163.2; तस्मिन्नेव कर्मणि दध्नः फलं होमश्चानुग्राहकः TantrVā. 553.24 (*on* ii. 2.26); 356.3 (*on* ii. 1.1); नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्तते BrahmSūBh.(Śaṅ.) 76.15 (*on* i. 1.24); 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिकां देवतामनुगतां दर्शयति BrahmSūBh.(Śaṅ.) 293.14 (*on* ii. 1.5); जन्मान्तरकृतमप्यग्निहोत्रादिलक्षणं कर्म ··· अनुग्राहकं भवति विद्योत्पत्तिं प्रति TaiUBh. 223.14 (*on* 1.11); आदित्येन ··· चक्षुषोऽनुग्राहकेण ज्योतिषा अयं प्राकृतः पुरुषः आस्ते BṛĀraUBh. 516.9 (*on* iv. 3.5); 528.16 (*on* iv. 3.7); सर्वप्राणिकरणानामनुग्राहकः सः अधिदैवतम् GītāBh.(Śaṅ.) 235.2 (*on* 8.4); नानुग्राह्यसजातीयं नाप्यनुग्राहकं तथा BṛĀraUBhVā. iv. 3.230; राजा ··· धर्मेण युज्यते । अन्यथानुग्राहकाणामेव पालनं कुर्वन् प्रत्यवैति ManuBh. ii. 42.12 (*on* 7.144); अनुग्राहको हि करणानां संस्कारः Kāśi. i. 269.25 (*on* 4.166); मा भूवन्बाह्या देशादयः तज्ज्ञानान्येव च करणानामनुग्राहकाणि भविष्यन्ति Kāśi. ii. 191.13 (*on* 5(3).253); न हि विनष्टमनागतं चानुग्राहकमनुग्राह्यं वा भवितुमर्हति TantrRa. 249.11; विधेरेव प्रधानं प्रवृत्तिकारणं, तस्यैव त्वनुग्राहिका प्राशस्त्यावगतिः ŚāstrDī. 7.6 (*on* i. 2.1); 106.7 (*on* ii. 1.2); न च स्वाश्रयतयाभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः । प्रदीपादिष्वदर्शनात् यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च BrahmSū-Bh.(Rā.) 48.20 (*on* i. 1.1); 466.10 (*on* ii. 2.1); अतीन्द्रियं किंचित् दाहानुगुणमनुग्राहकमग्नेरुन्नीयते NyāyKuA. i. 27.6; अनुग्राहकश्च यः पलायमानममित्रम् उपरुन्धन् परेभ्यश्च हन्तारं परिरक्षन् ··· उपकरोति स उच्यते Mitā. 409.13 (*on* 3.227); (भावरूपा इतिकर्तव्यता) उभयविधा ··· निष्पादिका अनुग्राहिका च ŚrutaPra. iB. 144.15 (*on* i. 1.4); प्रकारभेदे सत्यपि सर्वाण्यङ्गान्यपूर्वनिष्पत्तावनुग्राहकाणि NyāyMāVi. 66.4 (*on* ii. 1.2); तृणादीनां पर्जन्योऽनुग्राहकः TattvPrakā. 95B.2 (*on* ii. 2.5); किमनुग्राहकस्यानुग्राह्यतायां वितर्कः PārvPa. 1.16(4); अनुग्राहकादीनाम् ··· प्रायश्चित्तगुरुलाघवं तत्रैव व्यवस्थितम् । यथा अनुग्राहकस्य पादोनं प्रयोक्तुरर्धम् DaṇḍaVi. 77.3; तथाशब्देन ··· अनुग्राहकानुमन्तृप्रयोजकनिमित्तानाम् ··· महापातकित्वं दर्शितम् VīraMi. 920.13 (*on* 3.227); BālamBha. iii. 162.5 (*on* 3.264); **Aiii** agreeable, salubrious शीतमुपघातकं नास्ति, अनुग्राहकं किलास्ति AbhidhKoBh. 7.15 (*on* 1.10); **B** who grants favours, gracious त्रिकोणे पापद्वये मान्त्रिकः ··· शुभदृष्टेऽनुग्राहकः JaimiUpaSū. i. 2.85; सर्वानुग्राहकोऽस्म्यहम् BrahmViU. 108; मैत्री कृपा मुदोपेक्षा ··· धारणास्त्विमाः । ··· 'उपेक्षा' विषये, अनुग्राहकेषु उपघातेषु च प्रसिद्धैव ManuBh. i. 520.26 (*on* 6.72); त्वयि कृतानुग्रहायामनुग्राहिका ग्रहदृष्टयः TilaMañ. 284.9; क्लेशकर्मविपाकाशयैरपरामृष्टः ··· संप्रदायप्रद्योत(वर्त)कोऽनुग्राहकश्चेति पातञ्जलाः NyāyKuA. i. 4.3; न चेद्ग्रामः कुतः सीमा कस्यानुग्राहकः शिवः ĪśānŚiPa. ii. 1.21; मयि सत्यपरोऽपि स्यात् किमनुग्राहकः Rāj-Ta.(Ka.) 8.2063; निग्राह्योऽनुग्राह्यश्च जीवः निग्राहकोऽनुग्राहकश्च परात्मा भवितुं नार्हति ŚrutaPra. iB. 219.20 (*on* i. 1.13); परमेश्वरः ··· प्राणभृतामनुग्राहकः SarvaDaSaṁ. 15.17; विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्तिस्त्वनुग्राहिका NyāyMāVi. 3.4 (*on* i. 1.0); **C** supporting, strengthening तर्कः ··· प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते NyāyBh. 5.15 (*on* i. 1.1); NyāyVār. 18.21 (*on* i. 1.1); PañcPā. 39.14 (*on* i. 1.1); BrahmSūBh.(Bhā.) 92.2 (*on* ii. 1.11); TarkBhā.(Ke.) 83.11; ŚivārkaMaDī. i. 147.27 (*on* i. 1.3); युक्तिं प्रमाणानां स्वविषयनिश्चयेऽनुग्राहिकाम् ··· आलोचयन्तः Pañc-Pā. 75.9 (*on* i. 1.1); प्रतिज्ञायास्तावदागमोऽनुग्राहक उपेयते NyāyMañ. ii. 144.5; श्लेषोऽत्र व्यतिरेकस्यानुग्राहकः Loc. 91.22 (*on* 2.22); मुनिमतं चाद्यं तयोरनुग्राहकम् AbhinBhā. i. 179.25 (*on* 4.267); स्यादप्येवं यदि नाभुक्तमित्यादिस्मृतेरनुग्राहको न्यायो न स्यात् NyāyVārPari. 377.5; तमिममनुग्राहकं तर्कम् ··· सूचयिष्यति Kiraṇā. 232.8; TārkiRa. 193.6; MānaMe. 39.7; संशये पक्षद्वयेऽप्यनुग्राहकाणि कानिचिद्वाक्यानि दृश्यन्ते Aparā. 214.7 (*on* 1.154); उपमा श्लेषानुगृहीता चातिशयोक्तिरुत्प्रेक्षया 'चुम्बतीव' इति प्रकाशिताया अनुग्राहिका AlaṅkāSa. 198.9; वेदान्तव्याख्यायामनुग्राहिका इमास्तु युक्तयः VedāntKa. 250.10 (*on* iii. 2.1); तदेवमात्मसाक्षिकनिर्विशेषानुभवस्य ··· अनुग्राहकमनुमानागमादिकमप्याद्रियामहे न वेति ŚatDū. 80.2; 155.26; पादत्रिपादव्यपदेशश्च तदविषयोऽपि तद्देशतारतम्यस्यानुग्राहको भवति NyāySiA. 235.12; लिङ्गं केवलं प्रमाणानामनुग्राहकं स्वयं न प्रमाणम् ŚivārkaMaDī. i. 81.3 (*on* i. 1.1); अस्मिन्नेव च विषादध्वनौ दुर्योधनस्येत्यर्थान्तरसंक्रमितवाच्यध्वनिरनुग्राहकः RasGaṅ. 112.7; 412.2; समासोक्तिरत्रानुग्राहिकेति तु न वक्तव्यम् RasGaṅ. 538.14; प्रागुक्तबौधायनोऽप्यत्रानुग्राहकः BālamBha. i. 529.19 (*on* 1.242); **D** lasting, durable यस्माच्च समाहितं चित्तमनुग्राहकं न च्छेदानुकूलमतोऽपि समाहितचित्तस्य च्युतिर्नास्ति Sphuṭā. iii. 81.15 (*on* 3.43)

**अनुग्राहकतर्क** (anugrāhaka–tarka) *m.* supporting hypothetical argument प्रमाणस्यानुग्राहकतर्ककृतार्थतां चार्थाद्दर्शयति ŚrutaPra. ii. 653.14 (*on* iv. 4.22); अनुग्राहकतर्काभावाच्च स्वाभिमतस्य कस्यचिद्वाक्यस्य तद्धेतुत्वकल्पनं विरुद्धमेव ŚatDū. 69.11; 192.12; Nyāyāmṛ. 137B.4; न च तदप्येतदनुग्राहकतर्कप्रदर्शनेन व्यवहारस्थितिपरमेव न वस्तुगतिपरम् VīraMi.(Vyavahāra.) 159.6

**अनुग्राहकतर्कता** (anugrāhakatarka–tā) *f.* the state of being a supporting hypothetical argument घटादिनित्यत्वप्रसङ्गो नित्यत्वेनावभासप्रसङ्गश्च विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथानुपपत्तेरनुग्राहकतर्कतयोक्तौ भवतः ŚrutaPra. iA. 138.81 (*on* i. 1.1)

**अनुग्राहकता** (anugrāhaka–tā) *f.* **i** the state of being that which helps or assists न ह्येकस्यैव वस्तुनोऽनुग्राहकता, अनुग्राह्यता च स्वात्मन्युपपद्यते PrakaPañ. 423.3; प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकतयाङ्गं यत्कर्मोक्तम्, तन्नोपयुक्तम् ŚrutaPra. iA. 46.16 (*on* i. 1.1); चरणे ··· तृतीयेऽपि लताभिर्गोपीनां निगरणम्, तस्मिन्नेवानुग्राहकतया RasGaṅ. 412.1; **ii** the state of being that which supports तत्त्वनिर्णयहेतूनां प्रमाणानामनुग्राहकतया तत्त्वाध्यवसायः फलम् TārkiRa. 193.7; तदप्यसत्, अनुग्राहकतयाभिमतानां तर्काणामपाकृतत्वात् ŚatDū. 210.24; **iii** the state of being one who obliges or blesses ननु ··· निर्लेपस्य तस्य तप्यभावः कथमुपपद्यते येन परमेश्वरोऽनुग्राहकतया कक्षीक्रियते SarvaDaSaṁ. 15.19.

**अनुग्राहकत्व** (anugrāhaka–tva) *n.* **A** the state of being lasting or durable न हि समाहितचित्तस्यास्ति च्युतिरुपपत्तिर्वा । विसभागभूमिकत्वादभिसंस्कारिकत्वादनुग्राहकत्वाच्च AbhidhKoBh. 156.6 (*on* 3.43); **B** the state of being supporting or strengthening सोऽयं (तर्कः) प्रमाणानामनुग्राहकत्वात् प्रमाणसहितो वादेऽपदिष्टः NyāyVār. 149.21 (*on* i. 2.42); अप्रतिष्ठितस्य तर्कस्यानुग्राहकत्वमपि मृग्यम् NyāyPari. 329.12; अनुग्राहकत्वेनाभिमतानां सर्वेषां प्रत्येकं विस्तरतो दूषणात् ŚatDū. 187.26; अस्तु तावत् स्मृतेरनुग्राहकत्वम् MīmāKau. ii. 20.18 (*on* ii. 3.3); **C** the state of being helpful or promoting उद्योतस्याप्यनुग्राहकत्वं कार्यसमधिगम्यमेव ··· चक्षुरादीनाम् Bṛha. 144.3 (*on* i. 1.5); होमः ··· प्रधानकथंभावेनेत्थमनुग्राहकत्वेन गृह्यते नैवं द्रव्यम् TantrVā. 390.1 (*on* ii. 1.12); 512.24 (*on* ii. 2.18); अभावोऽप्युपकुरुते लोकेऽस्मिन्भाववद्यतः । नातोऽनुग्राहकत्वादिनियमोऽयं समञ्जसः BṛĀraUBhVā. iv. 3.233; अकामेनापि ··· क्रियाया व्यञ्जकत्वमनुग्राहकत्वं चाङ्गीकर्तव्यम् TātpaṬ.(Vā.) 204.19 (*on* i. 1.7); सा (उपमा) संदेहालंकारस्याभ्युत्थानकारिणीत्वेनानुग्राहकत्वाद्गुणीभूता Loc. 41.17 (*on* 1.13); अस्मदभिप्रेतस्य चाभावादेरनुग्राहकत्वमङ्गीकृत्य निःसाधना मीमांसका अपि न विप्रतिपत्तुमर्हन्ति NyāyKuA. i. 46.6; संनिहितवाच्येतच्छब्दो देवानां करणेष्वनुग्राहकत्वेन संनिहितानां स्मारकः VedāntKa. 182.5 (*on* i. 3.33); प्रयाजादिवन्निष्पन्नस्य करणस्य ··· अनुग्राहकत्वेनाङ्गतयापेक्षा विवक्षिता ŚrutaPra. iA. 43.6 (*on* i. 1.1); ii. 551.24 (*on* iii. 4.26); अनुग्राहकत्वं तु केवलायां चेष्टायाम् ··· नाशङ्कनीयमेव NyāyKu. 3.20; 152.9; संभवति त्वस्य परत्वमनुग्राहकत्वात् NyāySu.(Ja.) 4B.3 (*on* i. 1.1); तदभावे पुरुषस्यानुग्राहकत्वं न संभवति VedāntKau. 211.5 (*on* ii. 2.43); वस्तुतस्त्वान्तरस्यैव चक्षुरादेः कारणत्वम् आलोकस्य त्वनुग्राहकत्वमेव YuktiSneha. 91.25 (*on* i. 1.5); करणतद्व्यापारतत्कार्यजनकत्वातिरिक्तस्यानुग्राहकत्वस्य दुर्वचत्वात् MīmāKau. ii. 330.24 (*on* iii. 3.11); iii(1). 26.3 (*on* i. 2.7); अनुमतत्वरूपमनुग्राहकत्वरूपं वा कर्तृत्वं कनिष्ठस्य VīraMi.(Śrāddha.) 340.7; अत्र ··· नयनयोः ··· श्रवणयोश्चारमणीयत्वम् ··· व्यज्यते । तस्य च भावध्वन्यनुग्राहकत्वेऽपि ध्वनिव्यपदेश्यत्वमव्याहतम् RasGaṅ. 493.2; (तद्गुणालंकारस्य) तस्यानुग्राहकत्वं भ्रान्तिमतश्चानुग्राह्यत्वमिति संकरः Alaṅkā-Kau.(Vi.) 410.8; **D** the state of being one who favours or obliges or blesses सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः AmṛBiU. 22; इतरेषामप्युत्तमानां विद्यासंप्रदायप्रवर्तकत्वाद्गुरुत्वमप्रवर्तकानां त्वनुग्राहकत्वादिना NyāySu.(Ja.) 566A.2 (*on* iii. 3.26); परमेश्वरस्य तदानीमाविर्भूयानुग्राहकत्वम् ··· समर्थयते Śivārka-MaDī. ii. 463.32 (*on* iv. 2.16)

**अनुग्राहकत्वकल्पन** (anugrāhakatva–kalpana) *n.* assumption of being helpful प्रयाजादिवाक्यानां विशेषसमर्पकतया ··· पार्ष्ठिकान्वये च प्रकृत एव ··· यागेऽनुग्राहकत्वकल्पनान्न सर्वार्थत्वमौपदेशिकम् BhāṭṭDī. ii. 339.21 (*on* viii. 1.1)

**अनुग्राहकत्वतस्** (anugrāhakatva–tas) *adv.* due to being that which helps भौतिकत्वेन चेज्ज्योतिर्देहानुग्राहकं मतम् । देहेऽपि तस्य सद्भावान्नापेक्षा स्यात्तदा रवौ । विशेषश्चेदपेक्ष्यः स्याद्यो देहेऽस्मिन्न विद्यते । नानुग्राह्यसजातित्वं तस्यानुग्राहकत्वतः BṛĀraUBhVā. iv. 3.228.

**अनुग्राहकत्वमात्र** (anugrāhakatva–mātra) *n.* **A** only being help-

ful यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते एवं प्रधानादीश्वरानुगृहीतं जगत् पर्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य BrahmSūBh.(Ma.) 28B.11 (*on* ii. 2.5); युक्तमेव विष्णोर्जगत्कारणत्वं स्वातन्त्र्येण न तु यथा तृणादीनां पर्जन्योऽनुग्राहकस्तथानुग्राहकत्वमात्रम् TattvPrakā. 95B.2 (*on* ii. 2.25); **B** only being supportive यत्तु सर्वेषां प्रमाणानां तर्कानुग्रहापेक्षावचनं तत्प्रमाणस्य सतस्तर्कस्यानुग्राहकत्वमात्रेणोपपन्नम् NyāyPari. 326.13.

**अनुग्राहकत्वसाम्य** (anugrāhakatva-sāmya) *n.* sameness of being helpful विवादस्तर्हि कुत्र । अनुग्राहकत्वसाम्यात्सहकारिष्वपि शक्तिपदप्रयोगात् सहकारिभेदे NyāyKuA. i. 46.3.

**अनुग्राहकत्वाभिप्राय** (anugrāhakatvābhiprāya) *adj.* having the intention of (something) being helpful 'शान्तो दान्तः' इत्यादिवचनं शमादीनामनुग्राहकत्वाभिप्रायम् NītiMā. 7.12.

**अनुग्राहकत्वाभ्युपगम** (anugrāhakatvābhyupagama) *m.* acceptance of being helpful प्रधानादेव जगदुत्पत्तावीश्वरस्यानुग्राहकत्वाभ्युपगमात् TattvPrakā. 95A.12 (*on* ii. 2.5)

**अनुग्राहकत्वायोग** (anugrāhakatvāyoga) *m.* impossibility of being helpful निर्व्यापारस्य द्रव्यस्यानुग्राहकत्वायोगात्, व्यापारानाविष्टं द्रव्यमपि नेतिकर्तव्यतात्वेन ज्ञायते MīmāKau. iii(2). 43.16 (*on* ii. 1.5)

**अनुग्राहकत्वोपपादन** (anugrāhakatvopapādana) *n.* justification of being helpful (प्रवृत्तिनिवृत्त्यनुग्रहणीये स्वसंवेद्येऽर्थे पुंसः प्रशस्ताप्रशस्तज्ञाने भवतः) अनुग्राहकत्वोपपादनाय पुंग्रहणम् NyāySu.(So.) 59.1 (*on* i. 2.10)

**अनुग्राहकदेव** (anugrāhaka-deva) *m.* god bestowing favours अनुग्राहकदेवानां सर्गोऽयं प्रस्तुतो महान् BṛĀraUBhVā. i. 4.127; प्राणाः चक्षुरादयः । ··· प्राणेभ्योऽनन्तरमादित्याद्या अनुग्राहकदेवाः VedāntKa. 109.1 (*on* i. 1.5)

**अनुग्राहकदेवता** (anugrāhaka-devatā) *f.* deity bestowing favours अनुग्राहकदेवतात्मनामग्न्यादीनां यत्सर्ववस्तुप्रकाशनसामर्थ्यं तत् सर्वमस्मद्वागादिषु संपादयेत् सविता ···। अग्निशब्द इतरासामप्यनुग्राहकदेवतानामुपलक्षणार्थः ŚvetāUBh. 125.11 (*on* 2.1); 126.5 (*on* 2.2)

**अनुग्राहकद्वैविध्य** (anugrāhaka-dvaividhya) *n.* twofold nature of what helps नन्वनन्तरग्रन्थोत्थानमनुपपन्नम्, अनुग्राहकद्वैविध्यस्य तन्निरासानुपयोगित्वात् ŚrutaPra. iA. 163.11 (*on* i. 1.1)

**अनुग्राहकन्याय** (anugrāhaka-nyāya) *m.* supporting or strengthening argument एवं च सत्येकब्राह्मणपक्षेऽप्यर्घ्यपात्रद्वित्वमेव । न चानुग्राहकन्यायविरहात्तन्नेति वाच्यम् CaturCin. iii(1). 1233.1; 'हिरण्यदा अमृतत्वं भजन्ते' इत्यादेश्चानुग्राहकन्यायाभावात् SiddhāSi. i. 13.21.

**अनुग्राहकप्रयोजक** (anugrāhaka-prayojaka) *m.* helper and instigator (in an offence) (ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः । एते महापातकिनः) तथाशब्दः प्रकारवचनोऽनुग्राहकप्रयोजकादिकर्तृसंग्रहार्थः Mitā. 409.13 (*on* 3.227); 420.19 (*on* 3.243); 508.20 (*on* 3.303)

**अनुग्राहकबुद्धि** (anugrāhaka-buddhi) *f.* idea of what supports or strengthens अनुग्राहकबुद्ध्या स्वीकृतस्यापि तर्कस्य प्रमाणविरुद्धत्वात् सोऽसमीचीनः ŚrutaPra. iA. 113.18 (*on* i. 1.1)

**अनुग्राहकमात्र** (anugrāhaka-mātra) *n.* only helpful पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।··· नियतमिति पत्नीत्वापादकमित्यर्थः। अन्यत्तु सर्वमनुग्राहकमात्रम् HārLa. 52.18; आगमे लिखितसाक्षिपरिज्ञेयक्रयादावित्यर्थः । अनेनागमलेख्यादेर्दोषशङ्कापनोदकतया स्तोकभुक्तिरनुग्राहकमात्रमेव न प्रमाणमित्यर्थादुक्तम् SmṛtiCan. iii. 154.8; यथा खलु पृथिव्येव तृणादिकार्याणां प्रधानं कारणं पर्जन्यानुग्रहेण चोत्पादयति तथा प्रधानस्यैव प्राधान्यमीश्वरस्त्वनुग्राहकमात्रम् TattvPrakā. 95A.13 (*on* ii. 2.5); 95B.3 (*on* ii. 2.5)

**अनुग्राहकमौल** (anugrāhaka-maula) *m.* helpful original inhabitant सामन्तादीनामनुग्राहकमौलादीनां सीमासाक्षिणां चाभावे इमानसभ्यानपि वक्ष्यमाणान् पुरुषाननुयुञ्जीत SmṛtiCan. iv. 540.12.

**अनुग्राहकयुक्त्यपेक्ष** (anugrāhakayukty-apekṣa) *adj.* depending on a supporting argument भेदव्यपदेशस्य जीवादन्यत्वे स्फुटतरतया निरपेक्षहेतुत्वात् स्ववाक्यस्थत्वाच्च स एव प्रथमं वक्तव्यः, न तु वाक्यान्तरस्थोऽनुग्राहकयुक्त्यपेक्षोऽभ्यासः ŚrutaPra. iB. 197.29 (*on* i. 1.13)

**अनुग्राहकरूप** (anugrāhaka-rūpa) *adj.* which is of the nature of that which helps भावनाया विजातीययागत्वावच्छिन्नस्य वानुग्राहकरूपेतिकर्तव्यताकाङ्क्षा न तु प्रयोगविशेषस्य BhāṭṭDī. iii. 10.18 (*on* viii. 1.6)

**अनुग्राहकवश** (anugrāhaka-vaśa) *m.* [Inst.] due to one who favours अवनिधरः ··· विहितः । इममाश्रित्य हिमांशोरोषधयः संनिकर्षमुपयाताः । प्रत्यासत्तिः प्रभुणा प्रायोऽनुग्राहकवशेन KuṭṭaMa. 245.

**अनुग्राहकविरह** (anugrāhaka-viraha) *m.* absence of an assisting factor अनेन क्षणक्षयिणामुपघातकाभावमाह । अनुग्राहकविरहमप्याह HetuBiṬ. 113.11.

**अनुग्राहकविषय** (anugrāhaka-viṣaya) *adj.* regarding one who assists or helps (in committing an offence), regarding an abettor यत्तु बृहद्विष्णुनोक्तम् – 'ब्रह्महत्यां कृत्वा ··· तत एतस्मात्पूतो भवति' इति — तन्निर्गुणवधविषयमनुग्राहकविषयं वा Mitā. 507.10 (*on* 3.301)

**अनुग्राहकस्वरूपैक्य** (anugrāhakasvarūpaikya) *n.* oneness with the essential form (viz. the Self) which favours यथा निग्राह्यस्य निग्राहकस्वरूपैक्यानुपपत्तिः, तथानुग्राह्यस्याप्यनुग्राहकस्वरूपैक्यानुपपत्तिः ŚrutaPra. iB. 294.16 (*on* i. 2.3)

**अनुग्राहकांशसद्भाव** (anugrāhakāṁśa-sadbhāva) *m.* existence of an element that helps नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहः संभवति । अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपप्रकरणस्वरूपासिद्धेः BrahmSūBh.(Rā.) 150.16 (*on* i. 1.4)

**अनुग्राहकापेक्षा** (anugrāhakāpekṣā) *f.* **i** dependence on that which helps यत्साधकतमत्वेन कस्यचित्किंचिदुच्यते । तस्यानुग्राहकापेक्षा न स्वशक्तिविघातिनी ŚlokaVār. 5(10).36 (507.6); अधीतेन स्वाध्यायेनार्थं जानीयादिति करणीभूतस्य वेदस्यानुग्राहकापेक्षायाम् ··· श्रुतिबलीयस्त्वेन युक्तः स्नानस्मृतेर्बाधः Kāśi. i. 45.26 (*on* 1.88½); iii. 235.17 (*on* 5(10).36); तस्याश्च स्वजन्यकरणेन फले जन्यमानेऽनुग्राहकापेक्षायां प्रकरणाधिकरणन्यायेन प्रयाजादि इतिकर्तव्यतात्वेनान्वीयते MīmāKau. iii(2). 43.15 (*on* ii. 1.5); **ii** dependence on what supports न चानुग्राहकन्यायविरहात्तन्नेति वाच्यम् । वचनस्यानुग्राहकापेक्षाविरहात् CaturCin. iii(1). 1233.2.

**अनुग्राहयितुम्** (anu-grāhayitum) *inf.* **i** to cause to be blessed किमर्थं वयमाहूताः । आर्यस्य दर्शनेनात्मानमनुग्राहयितुम् MudrāRā. 3.19(4); **ii** to cause to favour स राजा ··· कार्मुकधारणापराधविलक्षमनसं मकरलक्ष्माणमनुग्राहयितुमागतेन ··· दूतेनेव नवयौवनेनोपदर्शितेषु ··· विषयेषु परिभोगलालसं मानसमासञ्जयामास TilaMañ. 17.4.

**अनुग्राहा** (anugrāhā) *f.* name of one of the nine Śaktis or deities presiding over the *pīṭha* पीठे संपूजयेद्देवं विमलादिसमन्विते । विमलोत्कर्षिणी ज्ञाना क्रिया योगा ततः परम् । प्रह्वी सत्या तथेशानानुग्राहा नवमी तथा ŚāraTi. 15.25; cf. **अनुग्रहा** and **अनुग्रा**.

**अनुग्राहिका** (anu-grāhikā) *f.* (divine power) which bestows grace (माहेश्वरी शक्तिः) यदोन्मीलनमाधत्ते तदानुग्राहिकोच्यते MṛgendraT. i. 7.12.

**अनुग्राहिकात्वायोग** (anugrāhikātvāyoga) *m.* impossibility of being a helper तस्याः (समासोक्तेः) प्रकृतालंकारविरुद्धात्मिकात्वेनानुग्राहिकात्वायोगात् RasGaṅ. 538.15.

**अनुग्राहिन्** (anu-grāhin) *adj.* [*f.* -iṇī] [P. iii. 1.134] **A** gracious, who favours जनस्य ··· जयत्यनुग्राहि जिनेन्द्रशाश(read स)नम् EI. xxi. 110.1; या तेऽनुग्राहिणी हृदिस्थापि । दुष्टां न बुद्धिमिव तां गूढव्यभिचारिणीं वेत्सि ĀryāSaŚa. 620; **B** who or which helps or assists ज्ञानपूर्विका स्मृतिः तदुभयानुग्राहिणी अपोहनशक्तिः PratyabhiVi. i. 147.4 (*on* i. 4.1); प्रतीयमानैवोपमा व्यतिरेकस्यानुग्राहिणी भवन्ती नाभिधानं स्वकण्ठेनापेक्षते Loc. 92.20 (*on* 2.20); अनुग्राही साधकस्तु मध्यमो ग्राह्यः GoviBh. 237.13 (*on* iii. 3.29); **C** who accepts (another person) secretly, ĀryāSaŚa. 620 (comm. तेऽनु पश्चाद्ग्राहिणी । परपुरुषमिति भावः)

**अनुग्राह्य** (anugrāh-ya) *ger.* having assisted or helped भिन्नेषु प्रधानमुपगृह्य हीनेषु विक्रमयेत् । हीनाननुग्राह्य वा प्रधाने ArthŚā. ii. 330.1 (7.14)

**अनुग्राह्य** (anu-grāhya) *adj.* [*f.* -ā] **A i** who is to be shown compassion or mercy, who is to be pitied चक्रिदशमीस्थानुग्राह्यवधूस्नातकराजभ्यः पथो दानम् GautDS. i. 6.21; भारी गृहीतव्रीह्यादिगुरुद्रव्यः । सोऽपि यथोपसर्तुमशक्तोऽनुग्राह्यः ManuBh. i. 147.22 (*on* 2.138); i. 254.17 (*on* 3.102); धिङ् मामधन्यं यस्याग्रे लोकोऽयं शोकपीडितः । पश्यन्नशरणामुर्वीमनुग्राह्यो विपद्यते RājTa.(Ka.) 2.32; अनुग्राह्यो रोगार्त इति हरदत्तः VīraMi.(Saṁskāra.) 476.17; दीनो रिपुरप्यनुग्राह्यः UpadeŚ. 26; **A ii** who is fit to be favoured or obliged, to be treated with kindness यदि त्वहमनुग्राह्यः कौरवेषु दया यदि । अनुशाधि दुरात्मानं पुत्रं दुर्योधनं मम MahāBhā. iii. 11.3; iii. 149.1; v. 80.32; अनुग्राह्याः पाण्डुसुता नूनं तव पितामह MahāBhā. vi. 54.35; xii. 34.5; सर्वथाहमनुग्राह्यो देवतानामसंशयः Rāmā. iv. 8.2; vi. 109.11; धन्योऽस्म्यनुग्राह्यमिदं कुलम् BuddhaC. 1.53; अनिष्पन्ने शारीरं हैरण्यं वा दण्डं लभेत, न चानुग्राह्यः ArthŚā. i. 158.3 (2.8); हीनश्चेत्सर्वत्रानुप्रणतस्तिष्ठेत् ··· मण्डलस्य चानुग्राह्यो भवति ArthŚā. ii. 248.10 (7.3); AnargharRā. 4.14(7); यद्यहमनुग्राह्यः पादयोः समुदाचारः क्रियतां निग्रहोचितः PañcRā. 2.58(1); धर्मं कथय मे तात अनुग्राह्यो ह्यहं तव ParāSm. 1.12; BṛParāSm. 1.13; भक्ताः ··· सत्कर्तव्यप्रकारेण त्वनुग्राह्यास्सदैव हि PauṣkS. 27.12; सनाभीयाननुग्राह्यानधि-

मनुचिन्तयन् ··· गिरमित्थं व्याजहार ĀnandRa. 6.4(50); **2** remembering, recollecting, calling to mind स तत्र निवसन्राजा वैदर्भीमनुचिन्तयन्।··· श्लोकमेकं जगाद MahāBhā. iii. 64. 9; तस्य तत्कुर्वतः कर्म कालो दीर्घ इवाभवत्। अनुचिन्तयतश्चापि तामेवायतलोचनाम् MahāBhā. iv. 21.21; सः ··· महीपतिः। विललाप महाबाहू राममेवानुचिन्तयन् Rāmā. ii. 34. 3; iv. 29. 21; तामेव स्वप्नज्ञानालम्बनीभूतामनुचिन्तयतस्तस्य तदेकाकारमनसस्तत्रैव चित्तं स्थितिपदं लभते TattvVai. 42.22 (*on* 1.38); तां नारीमनुचिन्तयन्। स्ववृत्तं नैव सस्मार कामात्मा नहुषात्मजः PadmP. ii. 78.55; भरतः ··· अवसत्स्वगृहे तत्र राममेवानुचिन्तयन् AdhyāRā. ii. 7. 113; ii. 9. 70; **3** meditating on (सः) अभ्यासयोगयुक्तेन चेतसा नान्यगामिना। परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् MahāBhā. vi. 30. 8= BhagGī. 8.8 (*but* Śaṅ. अनुचिन्तयन् शास्त्राचार्योपदेशम् अनुध्यायन्); पूर्वाह्णे वाथ मध्याह्ने मुहूर्ते शोभने गुरुः। रज्जुनारोहयेद्धीशं ध्वजस्थमनुचिन्तयन् PāraS. 16. 450; शीर्षाम्भोरुहमध्ये शीतलपीयूषवर्षिणीं भवतीमनुदिनमनुचिन्तयतामायुष्यं भवति पुष्कलमवन्याम् LalitāStaRa. 211.

**अनुचिन्तयित्वा** (anu-cintayitvā) *ger.* having reflected upon अनुचिन्तयित्वा बहुकल्पकोट्यो गङ्गा यथा वालिक अप्रमेयाः SaddhaPuṇ. 23.7.

**अनुचिन्ता** (anu-cintā) *f.* **1A** anxiety महापातकदुष्टोऽपि नाप्रतीक्ष्यो भवेत्पतिः। अशुद्धे क्षयमादूरं स्थितायामनुचिन्तया(?) VedavyāSm. 2. 48; नर्मोक्तेन निमन्त्रिता स्मरकलाकेलीषु काचिन्मया, साकूतेन ··· कस्याश्चित् प्रहितः प्रसाधनविधिर्दूतीकरेण क्व वा गच्छामीत्यनुचिन्तयैव नृपतेरासीत् प्रभाता निशा PratāYaBhū. 25. 5; **1B** consideration, thought यच्चारित्रानुचिन्तापरिचयशुचयः सूक्तिमाध्वीकधाराः पाराशर्येण विश्वश्रवणपरिसरप्रीणनाय प्रणीताः EI. i. 307.4; अथामुना धर्मकथादरिद्रं त्रैलोक्यमालोक्य कलेर्बलेन। तस्योपकारे दधतानुचिन्तां चिन्तामणिः प्रादुरकारि चारुः CaturCin. i. 4.6; iii(2). 5. 13; **2** meditation, contemplation कस्तां त्वनादृत्य परानुचिन्तामृते पशूनसतीं नाम युञ्ज्यात् BhāgP. ii. 2.7; एवं कृष्णे भगवति ···। वैरेण पूतपाप्मानस्तमापुरनुचिन्तया BhāgP. vii. 1. 28 [recalling, recollection, MW., Apte]

**अनुचिन्तित** (anu-cintita) *adj.* **1** thought of त उक्ता धृतराष्ट्रेण राज्ञा ···। अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽनुचिन्तितः MahāBhā. i. 55.23; असकृदनुचिन्तितानाम् अव्याहततरनिजोपदेशानाम्। प्रामाण्यपरमसीम्नां निगमनमिदमेव निखिलनिगमानाम् SvātmNi. 103; विमानमनुचिन्तितं तदधिरुह्य भूतासनं सुमेरुगिरिसानुगं प्रययुराश्रमं काश्यपम् KathāSaSāg. viii. 2.364; **2** meditated upon बिम्बादिकेऽपि तत्रस्थे योगिनामनुचिन्तिते। भवतीति कल(?किमा)श्चर्यमनायासेन तत्फलम् MālinīT. 16. 40; **3** reflected upon अधिगतमुपाध्यायाद्विद्यानिधेरनुचिन्तितं विरलविषयग्राहिण्यापि स्वया जडया धिया।··· परिणतिरियं तस्य प्रीतस्तयास्तु परः पुमान् AmṛUda. 5. 25; [recollected, recalled, MW.]; *n.* constant thinking जयाजयौ दैववशौ तथापि धर्मे जयो नैव कृतेऽप्यधर्मे। तेषां किलाधर्मवतां नृपाणां कथं भविष्यत्यनुचिन्तितं वै DevīBhāP. iii. 22.31; अभिलषितमथानुचिन्तितं यो हृदयगुहानिहितः शृणोत्यकर्णः AmṛUda. 1.20.

**अनुचिन्तितमात्र** (anucintita-mātra) *adj.* just called to mind or thought of अनुचिन्तितमात्रस्तमुपतस्थे खगेश्वरः Yādavā. 16. 51.

**अनुचिन्तितवत्** (anu-cintitava(n)t) *adj.* who has thought over प्रवृत्तिदोषजनितत्वेन हि फलमनुचिन्तितवतस्तत्कारणयोरनुकूलप्रतिकूलयोरस्य रागद्वेषौ मा भूताम् NyāyMañ. ii. 76.23.

**अनुचिन्तितहरिचरिता** (anucintita-haricaritā) *adj.* (*f.*) who has meditated upon the deeds of Hari (राधाम्) अनुचिन्तितहरिचरितां कलहान्तरितामुवाच रहसि सखी GītGo. ix. 18. 1.

**अनुचिन्त्य** (anucint-ya) *ger.* **1** having thought of, having thought over इन्द्रत्वमर्हो राजायं तपसेत्यनुचिन्त्य वै। तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्तयत् MahāBhā. i. 57. 4; कर्मकाले पुनर्देहमनुचिन्त्य सृजाम्यहम्। प्रविश्य मानुषं देहं मर्यादाबन्धकारणात् MahāBhā. iii. 187. 30; BrahmP. 56.39; प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम्। अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः Rāmā. i. 15. 27; vi. 1012*; किंचिन्मनःक्षोभकरं प्रतीपं कथं न पश्येदिति सोऽनुचिन्त्य BuddhaC. 2.28; स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः Śāk. 2.10; SaraKaṇṭhā. 370. 22; SūktiRa. 183. 5; काव्योऽनुचिन्त्याथ ब्राह्मणो वचनं हितम्। तानुवाच MatsyaP. 47.71; अनित्यमशिवं दुःखमिति बुद्ध्यानुचिन्त्य BrahmāṇḍP. iii. 3. 63; छन्दोगब्राह्मणवराहस्वामिनः ··· दा[नाक्षे]पे च गुणागुणमनुचिन्त्य EI. xvii. 347.13; लुब्धकोऽपि दृष्ट्वा तत् ··· किमिदमित्यनुचिन्त्य कच्छपसकाशं गतः Tantrākhyā. 89. 18; 106.2; तत्र राजदुहितुः ···। आगमिष्यदनुचिन्त्य खण्डनं भीतवद्भृशमकम्पताधरम् JānaHa. 8.9; अथेयं देवीहस्ते किमित्यनुचिन्त्य स्थापिता Ratnā. 4. 19(15); तस्माद्व्यापादयाम्येनं विषेणेत्यनुचिन्त्य सा।··· कुलंकरममारयत् PadmP.(Ra.) 85.62; इति कमलदलाद्दलाम्वु(बु)वि(बि)न्दुलोलां श्रियमनुचिन्त्य मनुष्यजि(जी)वितं च EI. xxiii. 263. 34; ix. 46.41; xxi. 145. 58; xii. 158.27; vii. 93. 56; xx. 107. 26; iii. 49.27; iv. 201. 32; xv. 298. 47; आत्मबोधलाभं मुहुरप्यनुचिन्त्य मोदमानेन।··· परं पदं प्राप्यते स्म कैवल्यम् SvātmNi. 154; UdaySuKa. 130. 26; 150.25; वक्ष्यामि वाक्यानां सारमुत्तमम्। शास्त्रदृष्टेन मार्गेण चातुर्यमनुचिन्त्य च DevīBhāP. v. 10.29; दृष्ट्वाद्भुतं स्वप्नं स्वात्मन्येवानुचिन्त्य सः AdhyāRā. v. 2.18; किमपि किमपि विक्रमाङ्कदेवश्चिरमनुचिन्त्य निवेदयांचकार VikraDeC. 6. 55; देहबीभत्सतां वा। प्रतिमुहुरनुचिन्त्योन्मूलयिष्यामि कामम् PraboCan. 4.11 (72. 16); न पैतृवल्यं न च मातृवल्यं सूनो रणे सप्तवितीकवद्यत्। एकाक्यगादित्यनुचिन्त्य DvyāśraKā. 6.64; सुजनतातिरेकमनुचिन्त्य ··· इदमवर्णयत YātrāPra. 6. 86(4); राज्यमिदम् ··· संरक्ष्यतेऽस्माभिरनियुक्तैरपि साह्यमेवानुचिन्त्य भवतः NīlaVi. 70. 2; **2** having become anxious, having worried द्रोणः क्षणेनैव समाश्वसत। अनुचिन्त्यात्मनः पुत्रमविषह्यमरातिभिः MahāBhā. vii. 164.76; पुत्रमरणमनुचिन्त्य मदनसेनः ··· अवादीत् VetāPañ.(Jam.) 82.26; विषादमभ्येमि भुवं पदे पदे विपद्यमानामनुचिन्त्य Gaṅgāva. 3.10; **3** having remembered, having recollected गोविन्दवाक्यं त्वरितं विचिन्त्य (v.l. त्वरितोऽनुचिन्त्य) दध्रे मतिं शल्यविनाशनाय। स धर्मराजः MahāBhā. ix. 16. 36; प्रसादं कुरु विप्रर्षे सद्भावमनुचिन्त्य च MārkP. 7. 41; वकारमनुचिन्त्य। ध्यातं ध्वजोऽग्निबीजं वशयति RatiRaha. 14. 22; तज्जातीयस्योपकारहेतुभावमनुचिन्त्य ··· तदर्थी प्रवर्तते Bhām. 17. 16 (*on* i. 1. 1); शशिनि वितिमिरेऽनुचिन्त्य कृष्णां मतिरशिवे निपपात कीचकस्य KīcaVa 3.43; 'सि(?शि)वमयल' इत्यालापवृत्तिमनुचिन्त्य PurāPraSaṁ. 106.33; वियुक्तामनुचिन्त्य भैमीम् ··· नृपतिः पुरीं ताम् अज्ञातवासश्चिरमध्युवास Nalābhyu. 8. 20; रोहिणीशमनुचिन्त्य तमिस्रे रोमहर्षणजुषः क्षणदायाः।··· तारकैस्स्तबकितं वियदासीत् Acyutarā. 8.39; कृतं कृतम् अनुचिन्त्य च पराक्रमं राजपुत्रस्य JānaPa. 3.65(3); 7. 39(3); यद्यपि निनीषुरहं त्वाम्। नोत्सहे ··· तथापि क्रूरसत्त्वमनुचिन्त्य वनान्तम् Rāgh. 5. 65; 19.75; **4** having meditated तन्मण्डलमध्ये नवयोनिचक्रमनुचिन्त्य ParaśuKS. 3. 5 (89.24); तारमन्तरमनुचिन्त्य ··· आस्महे भवदुपासनोन्मुखाः Nāray. ii. 4.3; उदयते विवस्वते त्रिरर्घ्यं दत्वा तन्मण्डले श्रीचक्रमनुचिन्त्य तत्र ध्यायेत् ··· ललिताम्बिकाम् NityoNi. 32.28.

**अनुचिन्त्य** (anu-cintya) *adj.* [*f.* -ā] **1** to be thought of काहर्निशमनुचिन्त्या संसारासारता न तु प्रमदा PraśnoRaMāli. 16; PraśnoRaMā. 19; **2** to be meditated किमहर्निशमनुचिन्त्यं भगवच्चरणं न संसारः PraśnoRaMāli. 33; इयता गुणजातेन तस्यानुचिन्तनं भवेदतस्तदवश्यमनुचिन्त्यम् GoviBh. 242.8 (*on* iii. 3. 35)

**अनुचिन्त्यमान** (anu-cintyamāna) *adj.* **1** being thought of सूक्ष्माणि ··· अवस्थान्तराणि, यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्युः CaraS. i. 15. 5; पानीयमप्यमृतमित्यनुचिन्त्यमानं किं नाम नो विषविकारमपाकरोति KalyāMaSt. 17; गुरुभिरनुचिन्त्यमानं सर्वमेवैतत् कुशलपरिणामम् CaṇḍaKau. 1.23(1); **2** being cared for ननु किमेवमत्राहमन्यैरनुचिन्त्यमानो लघूकृतेनात्मना तिष्ठामि UdaySuKa. 56.12.

**अनुचिन्त्यमानत्व** (anucintyamāna-tva) *n.* the state of being that which is being meditated upon ऐकात्म्यस्यैव अनेन प्रकारेणानुचिन्त्यमानत्वात् BrahmSūBh.(Śaṅ.) 677.19 (*on* iii. 3 37)

**अनुचिन्वत्** (anu-cinvat) *adj.* searching for तदा क्रमेणानुचिन्वन्सीतां यास्येऽसुरालयम् AdhyāRā. iii. 8.5.

**अनुचिबुकम्** (anucibukam) *adv.* near the chin अधरोष्ठोऽनुचिबुकं सार्धाङ्गुलमथोन्नतम्। शोभते चोन्नतग्रीवो नतपृष्ठस्सदा हयः ŚukraNī. 4(7).72.

**अनुचिर** (anu-cira) *adj.* continuously or successively long (time) सम्यक्संबुद्धाः ··· अ(v. l. अनु DBHS.)चिरेण कालेन सर्वसत्त्वान्परिनिर्वापयिष्यन्ति MaVastuAva. i. 126.7 [DBHS.]

**अनुचीर्ण** (anu-cīrṇa) *adj.* [*f.* -ā] **i** following, having followed or practised अथ कल्पसहस्राणि वशिभूतसहस्रकोटीननुचीर्णम्। दृष्ट्वा तदा व्रजन्तं कालो शाक्योत्तममवोचत् MaVastuAva. ii. 401.1; **ii** followed, practised त्वं पि नरवीर चरियां अद्य निषेवसि पूर्वम् अनुचीर्णाम् MaVastuAva. ii. 403.9 [DBHS.]

**अनुचुद्** (anu-cud-) x. P. to impel दुःशासन ···। अनीकानि च सर्वाणि शीघ्रं त्वमनुचोदय MahāBhā. vi. 16.12.

**अनुचुम्बत्** (anu-cumbat) *adj.* experiencing (*lit.* kissing) अनुचुम्बतामपि चलेन चेतसा मनुजाकृतेर्मधुरिमश्रियं विभोः KṛṣṇaKa. 3. 40.

**अनुचुम्ब्य** (anucumb-ya) *ger.* having kissed द्रागैन्द्रीमनुचुम्ब्य सस्मितमुखीमामोदिनीं पद्मिनीम् ···। संरक्तोऽहिमभानुरद्य च समाश्लिष्यत्यहो ··· दिशं वारुणीम् Mukundā. 222.

**अनुचेष्टन्ती** (anu-ceṣṭantī) *adj.* (*f.*) acting in accordance with उमावनस्थिता चेला गायन्ती नृत्यती पुनः। स्त्रीभावमनुचेष्टन्ती BrahmP. 108. 61.

**अनुचोदित** (anu-codita) *adj.* [*f.* -ā] **i** directed, ordered (शूद्रः) नैशकार्याणि कृत्वा तु नित्यं चैवानुचोदितः। यथाविधिरुपस्पृश्य संन्यस्य जलभाजनम्। ··· आचार्यपुरोगाणामनुकुर्यान्नमस्क्रियाम् MahāBhā. xiii. App. I. 10(175);

देयं पुत्रकृतं तत् स्याद् यत् … अनुचोदितम् KātySm. 579; दिनकरतनयेन …। अयमहमनुचोदितो हनूमान् कुणपभुजां पुरि मार्गणाय देव्याः Rāgh. 14. 40; **ii** brought आहूयाभ्युद्यतां भिक्षां पुरस्तादनुचोदिताम्। ग्राह्यां प्रजापतिर्मेने अपि दुष्कृतकर्मणः ViṣṇuSm. 57. 11.

**अनुच्च** (an-ucca) *adj.* [*f.* -ā] **Ai** not tall, short पिण्डम् … अनुच्चमनतिनीचं कूर्मस्येव, प्रतिकृतिं करोति VaikhāŚS. 4. 10; तदा यामेवानुच्चां पश्यति शिंशपां तामेवावृक्षमवस्यति NyāyBiṬ. 106.14 (*on* 2. 16); **Aii** not high, low सः …। आहूतः पुनरादिष्टमध्यास्तानुच्चमासनम् BṛKathāŚloSaṁ. 20. 308; **B** not having a high-pitch (accent) नामानुदात्तं प्रकृतिस्वरो गतिरनुच्चो वा नाम चेत् स्यादुदात्तम्, क्रियायोगे गतिः पूर्वः, समासो यावन्तोऽनुच्चाः समर्थास्तान् समस्यते CaturA.(Śau.) (Add. notes 4) 2.3; त्वत्त्वसमसिमेत्यनुच्चानि PhiṭSū. 78; **C** not harsh, graceful राजा … तेषामन्यतममनुच्चचटुलचरणचारीचर्यया चारु संचरन्तम् … जग्राह हेलया हंसम् NalaCam. 2. 13(36)

**अनुच्चकुलजात** (anuccakula-jāta) *adj.* born in a low family अनुच्चकुलजातस्य दरिद्रस्याटतः क्षितिम्। तद्यशस्करदेवस्य राज्यप्राप्तिः कथं भवेत् RājTa.(Ka.) 5. 480.

**अनुच्चकैस्** (an-uccakais) *adv.* **i** not profusely, slightly अनुकेतनयष्टिरनुच्चकैः प्रविकचा सहकारतरोर्लता। क्षितिमवक्षतिभिर्नवकेशरैरलिपतालिपताकिकयोज्ज्वला Kapphiṇā. 8.14; **ii** not loudly नरपतेरात्मनश्च वपुषि रक्षामन्त्राक्षरमयं कवचमुपकर्णमूलमनुच्चकैरुच्चरिताक्षरपदस्तां विद्यां न्यवेदयत् TilaMañ. 31.5.

**अनुच्चचरणचलन** (anucca-caraṇacalana) *n.* gentle movement of feet तरुणकिरातकामिन्यः … स्वैरं स्वैरमनुच्चचरणचलनक्रमात्क्रेंकारितनूपुररवाकृष्टकलहंसकुलम् … ह्रदमवातरन् NalaCam. 5. 56(40)

**अनुच्चचरणप्रचार** (anucca-caraṇapracāra) *m.* gentle movement of feet दमयन्ती … चकार … अनुच्चचरणप्रचारचारुचापल्यलीलाः NalaCam. 3.26(6)

**अनुच्चचूडाचुम्बिन्** (anuccacūḍācumb-in) *adj.* coming into close contact with the short top-knot of hair तैलामलकमसृणितमौलिरनुच्चचूडाचुम्बिना निबिडेन कुसुमापीडकेन समुद्भासमानः … सुदृष्टिराजगाम HarṣaC. 131. 2.

**अनुच्चनीच** (an-uccanīca) *adj.* neither high nor low, even समा वर्षेऽनुच्चनीचे त्रिषु सर्वसदृक्षयोः AnekāK. 574.

**अनुच्चनीचचलता** (anuccanīcacala-tā) *f.* the state of being that which moves neither too high nor too low अनुच्चनीचचलतामङ्गानां चलपादताम्। कटिकूर्परशीर्षांशकर्णानां समरूपताम् SiṁhāDvā. 15.1(1)

**अनुच्चनीचम्** (anuccanīcam) *adv.* neither in a high nor in a low tone यददर्शि विच्छेदं पठतामोजः … अनुच्चनीचं पठतां साम्यम् Kāvyānu.(He.) 240. 6.

**अनुच्चपाणि** (anucca-pāṇi) *m.* hand which is not raised शक्यमर्चितुमनुच्चपाणिभिः पाशपाणिनगरीनिवासिभिः। सानुरोध इव दूरबन्धुरो बन्धुजीवकुसुमारुणो रविः RāmC. 2. 17.

**अनुच्चप्रपञ्चितपञ्चम** (anuccaprapañcita-pañcama) *adj.* in which the fifth musical note is presented in a low (pitch) अभिषिञ्चदिवामृतेन श्रवणेन्द्रियम् … अनुच्चप्रपञ्चितपञ्चमम् … अभूतिकमपि गीतम् NalaCam. 6.42(35)

**अनुच्चभाव** (an-uccabhāva) *m.* not being high न कदाचिदपि ग्रहणं मेरुगता मेरुसंनिकृष्टा वा। पश्यन्ति तिग्मरश्मेरनुच्चभावाद्रविहिमांश्वोः PañcSi. 15. 5.

**अनुच्चमधुरा** (anucca-madhurā) *adj.* (*f.*) gentle and at the same time sweet तपस्विनी कन्या … अनुच्चमधुरया गिरा जगाद UdaySuKa. 90. 10.

**अनुच्चरत्** (an-uccarat) *adj.* not expressing भूयो भूयः प्रोच्यमानोऽपि तां चिन्तामनुच्चरन् … सप्रणयं पृष्टः प्राह PrabaCin. 23.8.

**अनुच्चरित** (an-uccarita) *adj.* (sound) not emitted, not uttered, not pronounced न त्वनुच्चरिते वाक्ये प्रत्यक्षं तावदिष्यते TattvSaṁ. 1596; अनुच्चरितेऽपि शब्दे प्रतीतसामान्यस्य व्यक्तिप्रतीतेः श्रुति( ? त )शब्दस्यापि चागृहीतसामान्यस्य व्यक्तिप्रत्ययाभावात्तेनाकृतिरेव शब्दार्थः TantrVā. 276.11 (*on* i. 3.26); अनुच्चरितेऽपि शब्देऽस्ति प्रतिपादकशक्तिः, अर्थे च प्रतिपाद्यशक्तिः Kāśi. iii. 228. 5 (*on* 5(10).5); मा भूदनुच्चरितस्योच्चरितनष्टस्य वा संबन्धकरणम् NyāyRa. 795. 14 (*on* 6. 257); प्रकृते तु महत्त्वस्य महत्पदोच्चारणद्वारेणैवोपकारकत्वान्नानुच्चरितस्य साधनत्वं संभवति MīmāKau. iii(2). 93. 14 (*on* ii. 1.20); cf. **अनुच्चारित.**

**अनुच्चरितत्व** (anuccarita-tva) *n.* the state of being which is not uttered or expressed न तावत्प्रत्यक्षम्, अनुच्चरितत्वात् TātpaṬ.(U.) 401. 16 (*on* 5(7). 60)

**अनुच्चरितशब्द** (anuccarita-śabda) *m.* unuttered word अनुच्चरितशब्दज्ञानमपि सर्वज्ञज्ञानवद्धर्माधर्मज्ञानवच्चाकारणकमेव NyāyRa. 88. 16 (*on* 2.143); 89.12 (*on* 2. 146); पुरुषस्य तावदतीन्द्रियदर्शनशक्तिरभ्युपगतैव यदनुच्चरितशब्दग्रहणमङ्गीकृतम् Kāśi. i. 136. 4 (*on* 2. 146); i. 136. 6 (*on* 2. 146)

**अनुच्चरितश्रुति** (anuccarita-śruti) *f.* Vedic statement not uttered (i.e. not handed down by oral tradition) लिङ्गादीनां तु नित्यत्वान्नित्यमनुच्चरितश्रुत्यनुमानकारणत्वमविरुद्धम् TantrVā. 75. 21 (*on* i. 3.2)

**अनुच्चरितसमा** (anuccarita-samā) *adj.* (*f.*) as good as (something) without a distinctly uttered (injunction) अन्यथा ह्यनुच्चरितसमैव प्रवृत्तिरेषा स्यात् TantrVā. 282.14 (*on* i. 4.1)

**अनुच्चलत्** (an-uccalat) *adj.* not rising, not moving away from ह्यनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः। स्वस्थानादचलन् ( v.l. स्थानादनुच्चलन् C. R. Devdhar's Ed., 1986 ) अपि गत्वेव पुनः प्रतिनिवृत्तः Śāk. 1. 28; अनुच्चलन्नपि स्थानाद् भ्रूभङ्गेन चकार सः। विलोलान् … भूधरान् RājTa.(Ka.) 8.1558.

**अनुच्चलन** (an-uccalana) *n.* non-departure अनुच्चलनागमनविक्रमं कल्याणमित्रोपसंक्रमणमध्यतिष्ठत् GaṇḍVyū. 188.15 [DBHS.]

**अनुच्चलित** (an-uccalita) *n.* non-departure सुधनः … सर्वधर्मधातुनयारम्बणानुच्चलितेन सकलधर्मधातुस्फरणेन कल्याणमित्रोपसंक्रमणेन येन प्रमुदितनयनजगद्विरोचना रात्रिदेवता तेनोपसंक्रान्तः GaṇḍVyū. 188.24.

**अनुच्चस्मित** (anucca-smita) *n.* gentle smile राजा … कृत्वा च किंचिदनुच्चस्मितम् … वार्तामादरेण पृच्छन् … अवतस्थे NalaCam. 5.14(4); 7.47(1)

**अनुच्चाभिजनोद्भवा** (anuccābhijanodbhavā) *adj.* (*f.*) having birth in a low family, born in a low family सर्वावरोधप्राधान्यप्रदानं मास्मरद्यदि। मा स्मार्षीन्नाम भर्तुस्तदनुच्चाभिजनोद्भवा RājTa (Ka.) 7.726.

**अनुच्चार** (an-uccāra) *m.* non-utterance कस्मैचित्कार्यायोच्चर्यमाणो वर्ण इत्संज्ञः स्यात्। तस्य कार्येऽनुच्चारः MugdhaBo. 1. 3 (1. 11)

**अनुच्चारक** (an-uccāraka) *adj.* not uttering, not making audible वर्णानुच्चारको मूकः BālamBha. ii. 250.20 (*on* 2. 140)

**अनुच्चारण** (an-uccāraṇa) *n.* **1** non-utterance, absence of pronunciation संज्ञासमासनिर्देशः पृथग्विभक्तिसंज्ञ्यनुच्चारणार्थः Vār. 2 *on* P. i. 3. 10; अर्थान्तिके शब्द इति स्थानकरणासंभवादनुच्चारणम् NyāyBh. 116. 9 (*on* ii. 1.54); (अदर्शनं लोपः) अदर्शनमश्रवणमनुच्चारणम् KāśiVṛ. *on* i. 1. 60; ह्वयत इत्युच्चार्य तस्य निषेधकथनादपि तदनुच्चारणमेव रमणीयम् comm. *on* TaiPrāti. 4. 23 (Whitney's Ed.); होमादिमन्त्रेष्वनुच्चारणं प्रपद्येत यः स न्यायसिद्धेनार्थेनानूद्यमानेन प्रतिबोध्यते ManuBh. i. 131. 3 (*on* 2. 105); (तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात्) अनुपदेशादिति। अनुच्चारणादित्यर्थः Pradī. i. 554B.4 (*on* i. 1.69); **2** non-mention (सहोभौ चरता धर्ममिति वाचानुभाष्य च। कन्याप्रदानम्) अर्थकामयोरभिप्रेतेऽपि सहत्वे तदप्रकृतत्वादनुच्चारणम् ManuBh. i. 221.24 (*on* 3. 30); मृतशब्दस्य शूद्रसंबन्धेनोच्चारणं द्विजातिषु साक्षादनुच्चारणं चाचारशिक्षार्थमेव HārLa. 119.11; **3** non-expression प्रकृते तु धात्वर्थस्य स्वविधानार्थमनुच्चारणात् MīmāKau. i. 163.16 (*on* i. 4. 2)

**अनुच्चारणकाल** (anuccāraṇa-kāla) *m.* time of non-recitation (of the Vedas) अनुच्चारणकाले च संस्कारैरेव केवलैः। तत्कृतस्मरणैर्वायं वेदोऽध्येतृषु तिष्ठति TantrVā. 106.6 (*on* i. 3.4)

**अनुच्चारणदशा** (anuccāraṇa-daśā) *f.* stage of non-articulation अनुच्चारणदशायां वर्णानामनभिव्यक्तिः तदुच्चारणरूपव्यञ्जकाभावात् न विरुध्यते, अन्धकारस्थले घटानुपलम्भवत् VedāntPari. 229.7.

**अनुच्चारणप्रसङ्ग** (anuccāraṇa-prasaṅga) *m.* undesired contingency of the absence of (the necessity of) articulation एकस्मात् (वर्णात्) अर्थप्रतीतेरनुत्पत्तेः। उत्पत्तौ वा द्वितीयादीनामनुच्चारणप्रसङ्गः TattvVai. 140. 20 (*on* 3.17)

**अनुच्चारयत्** (an-uccārayat) *adj.* not uttering यथा खल्वेकैकं वर्णमुच्चारयत एव सर्ववेदोच्चारणं न त्वेकमपि वर्णमनुच्चारयतः NyāySu.(Ja.) 347A.1 (*on* ii. 2.6); दक्षिणहस्तेन मालां गृहीत्वा … अश्लिष्टमनुच्चारयन् … उत्तराङ्गमन्त्रान् जपदशमांशमावर्तयेत् NityoNi. 95. 6.

**अनुच्चारयितुम्** (an-uccārayitum) *inf.* not to be uttered शक्यं पृथग्विभक्तिरनुच्चारयितुम् MahāBh. iii. 340.20 (*on* vii. 3. 108)

**अनुच्चारयितृ** (an-uccārayitṛ) *adj.* non-utterer, not the agent of the action of uttering अनुच्चारयितर्यपि चैत्रेऽहं सुखीति ज्ञातायमिति प्रयोगात् अनुच्चारयितर्यपि ईश्वरे अहंपदप्रयोगः LaCandr. 763.23.

**अनुच्चारयितृत्व** (anuccārayitṛ-tva) *n.* the state of not being the agent of uttering एवं च शुद्धात्मनोऽनुच्चारयितृत्वेन लक्ष्यत्वम् LaCandr. 601. 37; स्वातन्त्र्यं चान्यबोधतात्पर्येणानुच्चारयितृत्वम् BhāṭṭCin. 127. 3 (*on* i. 1.4)

**अनुच्चारयित्वा** (an-uccārayitvā) *ger.* not having uttered स्रुवाहुतिं जुहुयात्। सर्वत्र देवोच्चारणेषु भागिनीं देवतामनुच्चारयित्वा योऽन्यामुच्चारयेत् BaudhŚS. iii. 322. 7; iii. 369. 13.

**अनुच्चारशायिनी** (an-uccāraśāyinī) *adj.* (*f.*) not sleeping where there is excretion धात्रीमानय … दोग्ध्रीमप्रमत्तामनुच्चारशायिनीम् CaraS. iv.

8.52 (1941 Ed.) (Gaṅgādhara उच्चारोऽमेध्यदेशः तत्राशयनशीलाम्)

**अनुच्चारित** (an-uccārita) *adj.* [*f.* -ā] not uttered, not pronounced, not articulated यो ह्यनुच्चारितं शब्दं गृह्णात्यर्थेऽस्य का कथा ŚlokaVār. 2.147 (89.6); न ह्यनुच्चारिते वाक्ये प्रत्यक्षं तावदिष्यते ŚlokaVār. 5(7).60 (465.7); 7.12 (849.6); (चोदनानाम्) कथमनुच्चारितानां मूलत्वोपपत्तिः TantrVā. 75.14 (*on* i. 3.2); 105.24 (*on* i. 3.4); परस्तु नानुच्चारितेन शब्देन प्रतिपादयितुं शक्यत इत्युच्चार्य प्रतिपाद्यत इति शब्दोच्चारणमात्रमधिकम् Kāśi. iii. 39.24 (*on* 5(4).53-54); अनुच्चारितस्याभिधानाशक्तेः कर्मकालोच्चारणशक्तिरिति भावः NyāySu. (So.) 20.6 (*on* i. 2.6); अनुच्चारितोऽपि मौनिश्लोकः पौरुषेय इति चेत्। न TattvCin. iv(1). 348.1; तत्र नित्यानुमेयश्रुतिमूलत्वमिह त्वनुच्चारितस्य मूलत्वा-संभवात् MayūMāli. 21.9 (*on* i. 3.2); नामपदस्येश्वरोच्चरितत्वेऽपि चैत्रादिपदं तेनानुच्चारितमेव VaiyāBhū. 188.26 (*on* 36); cf. **अनुच्चरित.**

**अनुच्चारितत्व** (anuccārita-tva) *n.* the state of being that which is not uttered or expressed सा (विश्वेदेवश्रुतिः) चात्र विधिशब्देऽनुच्चारितत्वाद-शक्या लब्धुम् TantrVā. 539.16 (*on* ii. 2.23); कल्पितं वाक्यं किंप्रमाणमूलकमिति तावद्विचारणीयम्। न तावदस्य प्रत्यक्षं मूलं अनुच्चारितत्वात् YuktiSneha. 81.24 (*on* i. 1.5); अनुच्चारितत्वेनोच्चारितस्यैव च बोधकत्वेन ततो बोधानापत्तेः Vaiyā-SiMañ. 149.11.

**अनुच्चारितमौनिश्लोक** (anuccārita-mauniśloka) *m.* unuttered verse of one who is silent किंच वाक्यमुच्चार्यते न तूच्चारणाद्वाक्यत्वम्, अन्यथा वाक्य-मुच्चारयेत्यत्रानन्वयापत्तिः, अनुच्चारितमौनिश्लोकश्च वाक्यं न स्यात् TattvCin. iv(1). 477.4.

**अनुच्चारितशब्द** (anuccārita-śabda) *m.* unuttered word पुरुषदोषाणा-मेव महिमा न शब्दानामिति चेत् मैवम्, दोषवतोऽपि पुरुषस्य मूकादेरनुच्चारितशब्दस्ये-दृशविप्लवोत्पादनपाटवाभावात् NyāyMañ. i. 144.30; यदि तु साक्षात्कारिप्रत्यक्ष-मेतदृषीणामाश्रीयते, तथा सत्यनुच्चारितशब्दश्रवणादतीन्द्रियदर्शनमेवापतितम् Kāśi. i. 135.10 (*on* 2.143)

**अनुच्चारितावस्था** (anuccāritāvasthā) *f.* the stage (in which the sounds are) not uttered यदि वर्णा एव पदं ततो राजजराशब्दयोर्वर्णभेदाभावात् अनुच्चारितावस्थायाम् … कुतस्तरां चार्थभेदावगमः NyāyRaMā. 75.20; 76.12.

**अनुच्चार्य** (an-uccārya) *ger.* not having uttered or pronounced न ह्यनुच्चार्य शब्दं लिङ्गं शक्यमासङ्क्तुम् MahāBh. i. 119.14 (*on* i. 1.49); शब्दं तावदनुच्चार्य संबन्धकरणं कुतः ŚlokaVār. 6.255 (795.2); TattvSaṁ. 2244; पापानामन्नरूपाणां तस्य भोजनमुच्यते। अनुच्चार्य पदं शंभोर्भुङ्क्ते यदि च खादति PadmP. iv. 105.77.

**अनुच्चार्य** (an-uccārya) *adj.* [*f.* -ā] not possible to be uttered शब्दब्रह्म समभ्यस्य गुणषट्कादनन्तरम्। अनुच्चार्यमवर्णं तन्निरावरणमस्वरम् PauṣkS. 33.119; तिसृणां सार्धमात्राणां विलये या विराजते। तां विद्धि भगवच्छक्तिमनुच्चार्यां निरञ्जनाम् AhirbuS. 51.34; अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः MārkP. 81.55; DevīBhāP. v. 1.24; अनाहतमनुच्चार्यं शब्दब्रह्म शिवं परम्। ध्यायन्ते … सुधियः ŚivaP. v. 26.38 (437A. 11); अक्षरं सतोऽनक्षरतां प्राप्तमनुच्चार्यं विचिन्तयेत् YogŚā. 8.24; अनुचार्या (? अनुच्चार्या) तुरीया च विश्वमातृकला परा Tantrābhi. (2) 22.20; (9) 63.7; तद्धितेन देवतात्वविशिष्टद्रव्याभिधानात् देवतात्वस्य च त्यज्य-मानहविरुद्देश्यत्वेन वृद्धव्यवहारे प्रसिद्धस्यानुच्चार्येऽर्थेऽसंभवात् … महेन्द्रपदमेवाभिधाय तस्य त्यज्यमानहविरुद्देश्यताख्यं देवतात्वं विधीयते MīmāKau. iii(2). 90.13 (*on* ii. 1.16)

**अनुच्चार्यमाण** (an-uccāryamāṇa) *adj.* **i** not being uttered or pronounced उच्चार्यमाणे पशुशब्दे … अस्मै पशव इति शक्यते संबन्धः कर्तुम्। अनुच्चार्यमाणे तु लिङ्गविशेषवचनः प्राप्नोति ŚābaBh. 1694.4 (*on* ix. 1.49); द्विरनुच्चार्यमाणस्तौ विदध्यात्प्रत्ययः कथम्। संख्यासंमार्गसंबन्धौ ग्रहोऽपि प्राप्नुवन्नुभौ TantrVā. 726.5 (*on* iii. 1.14); अथानुच्चार्यमाणस्य न वाक्यत्वं न वा अर्थानु-भावकत्वमिति चेत् न TattvCin. iv(1). 476.6; क्रमविशेषेणानुच्चार्यमाणानां वर्णानां कथं पदत्वं वाक्यत्वं वा NyāyPari. 383.17; **ii** not being stated or mentioned न हि स एव शब्दः पुनरनुच्चार्यमाणः भिन्नार्थो भवितुं युक्तः ManuBh. i. 230.7 (*on* 3.45)

**अनुच्चार्यमाणता** (anuccāryamāṇa-tā) *f.* the state of being that which is not being uttered ननु क्रमिकपदवत्त्वं वाक्यत्वम्। न चात्र पदक्रमः अनुच्चार्यमाणतयोच्चारणाधीनस्य युगपदनुमीयमानतया बुद्ध्यधीनस्य वा तस्याभावात् TattvCin. iv(1). 476.2.

**अनुच्चार्यमाणत्व** (anuccāryamāṇa-tva) *n.* the state of being that which is not being mentioned (चोदनानाम्) न चासां प्रत्यक्षेणोपलम्भसंभवः, अनुच्चार्यमाणत्वात् ŚāstrDī. 19.4 (*on* i. 3.1)

**अनुच्चार्यमाणाक्षर** (anuccāryamāṇākṣara) *adj.* syllables of which are not to be uttered (loudly) (i.e. syllables of which are to be uttered in a low voice) स्तुत्वा महेश्वरम्। जपेन … ओं ज्योतिःस्वरूपमनादिमध्यम् … अनुच्चार्यमाणाक्षरम् … शिवम् SkandP. v(3). 177.17.

**अनुच्चावच** (an-uccāvaca) *adj.* unchanging, equable सम्यक्संबुद्धा कालज्ञानसमर्थका विशुद्धनेत्रा अनुच्चावचदर्शना पूर्वान्तनयसंपन्नाः MaVastuAva. i. 176.6 [DBHS.]

**अनुच्चित** (an-uccita) *adj.* not gathered (i.e. not taken away) तत्रापश्यन्नृपसुतां तां यौवनमदोद्धताम्। लतामनुच्चितस्फीतपुष्पभारानतामिव KathāSaSāg. iii. 4.277; अत्रास्मिन् सुरतलतागृहेऽस्ति रम्यं मालत्याः कुसुममनुच्चितं परेण SūktiMu. 65.16; Subhāṣi. 1866.

**अनुच्चैःकारम्** (an-uccaiḥkāram) *ger.* [P. iii. 4.59] not having uttered in a high pitch (i.e. having uttered in a low pitch) प्राप्ताग्रगैरुज्जयिनी-त्यनुच्चैःकारं शनैःकृत्य किमात्थ तर्हि DvyāśraKā. 14.28 (comm. अनुदात्तस्वरेण)

**अनुच्चैरनुयायिन्** (anuccair-anuyāyin) *adj.* blowing gently प्रतस्थे भगवान् …। सुगन्धिशिशिरानुच्चैरनुयायिसमीरणः MahāP. 25.252.

**अनुच्चैर्धर्मक** (anuccairdharma-ka) *adj.* having non-loudness (i.e silence) as the characteristic उपांशुयाजनामकत्वाच्चास्य कर्मण इदमवगम्यते … आत्मनि साधनेषु च नोच्चैस्त्वेनास्य संबन्ध इति। तेन प्रजापतिरिति गम्यते। स ह्यनुच्चैर्धर्मकः ŚābaBh. 2088.18 (*on* x. 8.51)

**अनुच्चैस्** (an-uccais) *adv.* **i** not loudly श्वश्रूश्वशुरपरिचर्या … परिमिता-प्रचण्डालापकरणमनुच्चैर्हासः … इत्येकचारिणीवृत्तम् KāmSū. 239.23 (4.1); अहो रथस्यास्य हरेरिदानीं सत्त्वोद्धुरः संयति संप्रचारः। असावधिष्ठातृकृतो विशेषः श्विदित्य-नुच्चैरमरैर्बभाषे RāmC. (App. 1) 39.61; **ii** not in an erect posture (i.e. in a bent position) अनुच्चैः पूर्वाङ्गं निजचरणयोः पाणियुगलं तथा यष्टेः पश्चात्स्थित-पतिकराश्लिष्टमुदरम् NāgaSa. 31.1.

**अनुच्चोच्चारिताक्षरा** (anuccoccāritākṣarā) *adj.* (*f.*) who has uttered the syllables in a low tone (*lit.* not loudly) असावपि (बन्धुसुन्दरी) … सविधवर्तिनं द्वितीयशयनमधिशयानस्य मत्पितुरनुच्चोच्चारिताक्षरा श्रवसि समचारयत् TilaMañ. 327.6.

**अनुच्छन्दस** (anu-cchandasa) *adj.* [P. v. 4.103] occurring successively in the scriptures 'इन्द्राय त्वा तेजस्वते तेजस्वन्तम्' इति चतसृभिः अनु-च्छन्दसैश्चार्धर्चैः आज्यशेषे प्रतिच्छा(यां) दर्शयति ĀgniveGS. ii. 4.6 (66.16); 'आयुरसि …। यतो वा(सो ? तो) मनोजवाः' इत्यन्तैश्चतसृभिरनुच्छन्दसैरनुब्राह्मणै-राशीर्वाचनमाह ĀgniveGS. ii. 4.6 (67.1)

**अनुच्छन्दसम्** (anucchandasam) *adv.* in accordance with (the order in) the scriptures सायं हुतेऽग्निहोत्रे यज्ञोपवीत्यप आचम्य यजमानायतने तिष्ठन्नाहवनीयमुपतिष्ठत उपप्रयन्तो अध्वरमिति षड्भिरनुच्छन्दसम् BaudhŚS. i. 76.18; i. 247.12; ii. 5.2; ii. 62.6; 'आपो हि ष्ठा मयोभुव' इति तिसृभिरनु-च्छन्दसमप उपसृजति VaikhāŚS. 18.1; 18.17; संतानार्थमिदं भवति। द्व्यक्षर-णिधनत्वादनुच्छन्दसम् NidāSū. 139.4 (8.5); अथ तिरःपवित्रं मध्वानयति – 'मधु वाता ऋतायते' इति तिसृभिरनुच्छन्दसम् BaudhPiMe. ii. 9.7; तां प्रतिगृह्णीयात् … एताभिष्षड्भिरनुच्छन्दसम् BaudhGS. i. 1.17; ii. 1.3; iii. 10.4; iv. 4.1; द्वादशकलं वरुणसूक्तं 'शेपतादन्तः शापधेत्रिकोदकेन यदि वा परेपरेतीतः' (?) इति चतसृभिरनुच्छन्दसम्, 'अग्निरायुष्मान्' इति पञ्चभिः पर्यायैः। अथैतैः अभिषेचनं करोति ĀgniveGS. ii. 4.6 (66.5)

**अनुच्छल्ल** (anucchalla) *m.* name of one of the seven *pāṭas* belonging to the *samaskhalita* group and coming into existence from Īśāna समस्खलितकस्याद्यः समस्खलितसंज्ञकः …। अनुच्छल्लस्तथा खुत्तो भेदा सप्तेति सन्त्यमी SaṁgīRa. iii. 398.4 (6(3).839); धरकट धरकट इति अनुच्छल्लः … इतीशानो-द्भवाः सप्त हस्तपाटाः SaṁgīRa. iii. 402.9 (6(3).850(55))

**अनुच्छा** (anu-cchā) IV. P. cf. **अनुच्छो.**

**अनुच्छाद** (anu-cchādá) *m.* lower garment तस्य वाससोऽग्निरेव पर्यासो वायोरनुच्छादः ŚatBr.(K.) IV. i. 2.10 [a garment which hangs down (probably that part which hangs down in front from the waist to the feet) MW.]; cf. **अनुछाद.**

**अनुच्छास्त्रवर्तिन्** (an-ucchāstravartin) *adj.* not living against the rules, living according to the rules स कलिश्छिद्रं तस्यानुच्छास्त्रवर्तिनः। नल-स्यासीच्चिरं चिन्वन् KathāSaSāg. ix. 6.287.

**अनुच्छित्ति** (án-ucchitti) *f.* non-destruction, non-extermination, non-cessation अविनाशी वाऽअरेऽयमात्मानुच्छित्तिधर्मा ŚatBr. XIV. vii. 3.15; BṛĀraU. iv. 5.14; दृश्यते हि दुर्गवतामनुच्छित्तिः ArthŚā. iii. 7.4 (8.1); न नित्यः स्यादात्मवदन्यथा अनुच्छित्तिः SāṁkhyaPraSū. 6.13; नित्यस्यानु-च्छित्तिः BṛĀraUBhVā. i. 4.359; i. 5.251; iv. 4.921; कामहेतोरनुच्छित्ते-रपरात्परमीप्सति TaiUBhāVā. 44.2(2); दुःखस्य च देहोपादानैकहेतुत्वाद्देहस्य पूर्वोपचितधर्माधर्ममूलत्वादनुच्छित्तिः NaiṣkaSi. 2.2; न ह्यात्मनस्स्वतोऽविद्या युक्ता,

स्वयंज्योतिष्ट्वात्। अनुच्छित्तेश्च तस्याः IṣṭaSi. 207.12; तत्र नानुच्छित्तिरेव धर्मतया विवक्षिता ŚrutaPra. ii. 366.26 (*on* ii. 3.32); (आत्मनः) तद्धर्माणामप्यनुच्छित्तेः प्रस्तुतत्वात् ViṣṇuTaNi. 270B.11; उच्छित्तेरभावोऽनुच्छित्तिः NyāySu.(Ja.) 640B.13 (*on* iv. 2.5); अनुच्छित्तिधर्मो यस्येति विग्रहे च अविनाशीत्यनेन पुनरुक्तिः Nyāyāmṛ. 277B.7.

**अनुच्छित्ति** (**an-ucchitti**) *adj.* indestructible न विद्यते उच्छित्तिर्येषां ते तथोक्ताः। अनुच्छित्तयो धर्मा यस्य NyāySu.(Ja.) 640B.11 (*on* iv. 2.5); नास्त्युच्छित्तिर्येषां तेऽनुच्छित्तयस्तादृशा धर्माः GuruCandr. ii. 274.5.

**अनुच्छित्तिधर्मक** (**anucchittidharma-ka**) *adj.* having indestructibility as the property अपि त्वनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणामुपघातः NyāyBh. 162.1 (*on* iii. 1.6); न … प्रवर्तितुं शीलमस्येत्यप्रवर्ति, तदनुच्छित्तिधर्मकम् ChāndoUBh. 164.14 (*on* iii. 12.9)

**अनुच्छित्तिधर्मन्** (**ánucchitti-dharman**) *adj.* **AI** having indestrutibility as the property अविनाशी वाऽअरेऽयमात्मानुच्छित्तिधर्मा ŚatBr. XIV. vii. 3.15; BṛĀraU. iv. 5.14; उच्छित्तेरभावोऽनुच्छित्तिः सा धर्मो यस्यासावनुच्छित्तिधर्मा NyāySu.(Ja.) 640B.13 (*on* iv. 2.5); **AII** having the properties which have no destruction न विद्यते उच्छित्तिर्येषां ते तथोक्ताः। अनुच्छित्तयो धर्मा यस्यासावनुच्छित्तिधर्मेति NyāySu.(Ja.) 640B.12 (*on* iv. 2.5); Nyāyāmṛ. 277B.7; GuruCandr. ii. 274.5; **B** (**an-ucchittidharman**) different from that which has destructibility as the property उच्छित्तिरुच्छेदः, उच्छेदः अन्तः विनाशः, उच्छित्तिः धर्मः अस्य इति उच्छित्तिधर्मा न उच्छित्तिधर्मा अनुच्छित्तिधर्मा BṛĀraUBh. 668.4 (*on* iv. 5.14)

**अनुच्छिद्** (**anu-cchid-**) VII. P. to uproot मृत्युमूलं ह्यनुच्छिन्द्यात् कालकूटस्य पाटवम्। कलङ्कपङ्किलः शङ्के सुधाधामाप्यजायत PāṇḍaC. 11.195.

**अनुच्छिद** (**an-ucchida**) (*but* VIŚVA. **anu-cchida**) *adj.* [P. iii. 1.135] not breaking (itself), unbreakable नैनाम् … शतचर्मानुच्छिदः …। याममब … आधारयम् Suparṇādhyāya 15.4.

**अनुच्छिद्य** (**an-ucchidya**) *adj.* not to be removed or destroyed अन्तस्तापं तुहिनपयसामप्यनुच्छिद्यम् … बाला …। धत्ते PavaDū.(Dh.) 71.

**अनुच्छिद्यमान** (**an-ucchidyamāna**) *adj.* not being destroyed अत्यन्ताग्निसंयोगेनानुच्छिद्यमानप्रत्यक्षद्रवत्वाधिकरणं तैजसं जलपृथिवीभ्यामन्यत्वे सति रूपवत्त्वात् वह्निवत् TattvCin. i. 750.3; तेजस्त्वम् … चामीकरे … अनुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वेन व्यतिरेकिणा तेजस्त्वानुमानात् Upask. 74.4 (*on* ii. 1.3); 78.14 (*on* ii. 1.7)

**अनुच्छिद्यमानता** (**anucchidyamāna-tā**) *f.* the state of being that which is not being destroyed (i.e. the state of being continuous) शृङ्गारेऽनुच्छिद्यमानतयावस्थानात् रतिरेव स्थायिशब्दवाच्या SāhiDa. 163.10.

**अनुच्छिद्यमानत्व** (**anucchidyamāna-tva**) *n.* the state of being that which is not being destroyed घटपटकटादीनां संतानत्वेऽप्यत्यन्तमनुच्छिद्यमानत्वात् SyādvāMañ. 8(256); स्वाभाविकद्रवत्वे सति वह्निनानुच्छिद्यमानत्वं मूर्तिबद्धत्वम् RaseCin. 3.1(12.12)

**अनुच्छिद्यमानद्रवत्व** (**anucchidyamāna-dravatva**) *n.* liquidity which is not being destroyed पिङ्गलपृथ्वीरेणुः सुवर्णमित्युच्यते। अनुच्छिद्यमानद्रवत्वस्य नैमित्तिकत्वेऽपि तैजसान्तरे प्रदीपप्रभादावदर्शनात् LalitāTriBh. 350.18 (*on* 57); सुवर्णादिकमपार्थिवम् अत्यन्तासंयोगेऽपि अनुच्छिद्यमानद्रवत्वाधिकरणत्वात् इति Lakṣaṇā. 5.6; SarvaDaKau. 92.4; अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधारपार्थिवत्वात् TattvCin. i. 754.5; i. 760.9; SarvaDaKau. 8.18; अनुच्छिद्यमानद्रवत्वाश्रयत्वेनापार्थिवत्वात् SarvaDaKau. 8.13; 8.26; सुवर्णं तैजसम्, असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वात् SiddhāMu. 20.24 (*on* 41)

**अनुच्छिन्दत्** (**an-ucchindat**) *adj.* **1** not spilling अपः … अनुच्छिन्दन्निव हरेत् तथा ह यजमानोऽप्रच्यावुको भवति KauṣīBr. 2.1 (4.5); त्रिरुपसादमुदगुद्वास्य। अनुच्छिन्दन्निव ŚāṅkhāŚS. ii. 8.13; अथैतांश्चतुर आर्षेयानुत्तरतोऽनुदिशमुपविश्यताननुपूर्वमाचमय्य तेभ्य एनं भूमिं स्पृशन्ननुच्छिन्दन्निवोपोहति BaudhŚS. i. 56.11; ii. 207.9; ब्रह्मौदनं व्युद्धृत्य … अनुच्छिन्दन् … ऋत्विग्भ्य उपोहति ĀpaŚS. v. 5.8; xx. 2.5; HirŚS. iii. 2.3 (301.24); **2** not destroying मृत्युमूलं ह्यनुच्छिन्द्यात् (v.l. °च्छिन्दन् Bhavanagar Ed.) कालकूटस्य पाटवम्। कलङ्कपङ्किलः शङ्के सुधाधामाप्यजायत PāṇḍaC. 11.195; राज्ञा मूलधनमनुच्छिन्दतात्पोऽल्पो राष्ट्रादाब्दिकः करो ग्राह्यः ManvaMu. 270.17 (*on* 7.129); VīraMi.(Rājanīti.) 260.15.

**अनुच्छिन्न** (**an-ucchinna**) *adj.* [*f.* -ā] **AI** not moved away, not cut off प्रतिष्ठा वा अयं लोकः प्रतिष्ठायामनुच्छिन्नोऽसानि KauṣīBr. 9.4 (42.23); **AII** not moved (by others), stagnated नक्ताहृतमनुच्छिन्नं तृप्यते न च यत्र गौः।… अम्बु श्राद्धयोग्यं न ViṣṇuP. iii. 16.10; **B** uninterrupted, ceaseless, continuous अयं द्वादशाङ्गः प्रतीत्यसमुत्पादः … अनादिकालप्रवृत्तोऽनुच्छिन्नोऽनुवर्तते ĀryaŚāS. 13.10; रागद्वेषादिभिर्गुणैर्वशीकृतस्याप्यनुच्छिन्न एव जन्मसंबन्धः BālaKrī. ii. 32.24 (*on* 3.59); जगच्चानुच्छिन्नमद्य दृश्यते BrahmSūBh.(Bhā.) 82.12 (*on* i. 4.21); यथाशास्त्रमनुच्छिन्नां मर्यादां स्वामनुज्झतः। उपतिष्ठन्ति सर्वाणि रत्नान्यम्बुनिधाविव YogVā. ii. 6.31; **CI** indestructible धर्मानाहाप्यनुच्छिन्नांस्तार्किकैर्विनिवारितान् AnuVyā. 70A.5 (*on* 4.2); धर्माननुच्छिन्नानाह याज्ञवल्क्यः NyāySu.(Ja.) 641B.5 (*on* iv. 2.5); **CII** not destroyed न हि प्रदीपे अनुच्छिन्ने तत्प्रकाश उच्छिद्यते PadMañ. *on* KāśiVṛ. *on* P. iii. 1.94; **D** not weakened रामायणे शोकः। महाभारते शमः। एवमन्यत्रापि। एते ह्येष्वन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव SāhiDa. 167.3.

**अनुच्छिन्नकरणशक्ति** (**anucchinna-karaṇaśakti**) *adj.* having unweakened power of sense-organs अतश्चानुच्छिन्नकरणशक्तावपि — कटूर्वारौ यथा पक्के मधुरः सन् रसोऽपि न। प्राप्यते आत्मन्यपि तथा नापक्वकरणे ज्ञता BālaKrī. ii. 52.24 (*on* 3.132 (? 142))

**अनुच्छिन्नदीपकालोक** (**anucchinna-dīpakāloka**) *adj.* in which the light of lamps is not destroyed or extinguished सततमनुच्छिन्नदीपकालोकम् … अपश्यम् … महिष्ठमायतनम् UdaySuKa. 65.15.

**अनुच्छिन्नबुभुत्स** (**anucchinna-bubhutsa**) *adj.* whose desire to know is not destroyed (i.e. is not eradicated) अनुच्छिन्नबुभुत्सश्च प्रत्यग्चेतोरनात्मनः। दोलायमानचित्तोऽयं मुह्यते भीतवन्नरः NaiṣkaSi. 180.7.

**अनुच्छिन्नसंस्कार** (**anucchinna-saṁskāra**) *adj.* whose (former) impressions are not removed अनुच्छिन्नसंस्कार आत्मायं प्राक्प्रबोधतः BṛĀraUBhVā. ii. 1.222.

**अनुच्छिन्नसंतति** (**anucchinna-santati**) *adj.* continuity of which is not broken अर्थो हि महात्मनामनुच्छिन्नसंततिर्यशःप्रवाहः AvantiKa. 58.9.

**अनुच्छिन्नसंतान** (**anucchinna-santāna**) *adj.* continuity of which is not broken पर्वतवर्तिनो धूमस्यायं महिमा यज्ज्वलनमन्तरेणानुच्छिन्नसंतानो गगनतलमधिरोहति ĀgaPrā. 11.22.

**अनुच्छिन्नसंदेह** (**anucchinna-sandeha**) *adj.* whose doubts are not removed तच्छ्रुत्वा …। प्रागनुच्छिन्नसंदेहो राजपुत्रः स तत्सखीम् … पप्रच्छ KathāSaSāg. xii. 34.246.

**अनुच्छिन्नस्वरूप** (**anucchinna-svarūpa**) *n.* essential nature which is not destroyed बाध्यकालेऽनुच्छिन्नस्वरूपं हि बाधकं स्यात् GuruCandr. ii. 247.22; बाध्यज्ञानोत्पत्त्युत्तरकाले हि बाधकमनुच्छिन्नस्वरूपं वाच्यम् LaCandr. 519.24.

**अनुच्छिन्नानित्यद्रवत्व** (**anucchinnānitya-dravatva**) *n.* liquidity which is not permanent and (is yet) indestructible विवादाध्यासितं द्रवत्वाधिकरणं तैजसं असति द्रवद्रव्यसंयोगे अत्यन्ताग्निसंयोगेऽप्यनुच्छिन्नानित्यद्रवत्वाधारत्वात् TattvCin. i. 754.11.

**अनुच्छिष्ट** (**an-ucchiṣṭa**) *adj.* [*f.* -ā] **1AI** not enjoyed, not relished आनन्दयुता भक्ताः … अतिरसमग्नास्तदुच्छिष्टमुपभुञ्जते। अनुच्छिष्टं कदाचिन्न भुञ्जते SāmaraU. 273.4; अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः कलङ्केनास्पृष्टः … कलानाथः कोऽयं कनकलतिकायामुदयते PadyaVe. 266; PadyāTa. 135; **1AII** not used अनुच्छिष्टं तु यद्द्रव्यं दासक्षेत्रगृहादिकम्। स्वबलेनैव भुञ्जानश्चौरवद् दण्डमर्हति LaHārīSm. 50; **1B** not left over as a remainder of food after eating (i. e. food remaining in the cooking vessels after serving) हरिद्रौदनभुक्तमुच्छिष्टानुच्छिष्टेन … प्रलिप्य … अवस्नापयति KauśiSū. 26.18; द्वादश्याः प्रातः क्षीरौदनं भोजयित्वोच्छिष्टानुच्छिष्टं बहुमत्स्ये प्रकिरति KauśiSū. 47.37 (Dārila उच्छिष्टं भोजनपात्रस्थम्। अनुच्छिष्टं कुम्भीस्थम्); शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात् VāsiDS. 11.9; अनुच्छिष्टं तु दातव्यमन्नाद्यं वै विशेषतः VāyuP. ii. 17.86; अनुच्छिष्टमसंघुष्टम् … अद्यान्नित्यं सुसंस्कृतम् VedavyāSm. 3.57; क नु … पुनरसौ किमर्थं च स्वयमनुच्छिष्टानि फलान्यादाय याति UdaySuKa. 127.21; यत्तिर्यग्भिरनुच्छिष्टम् … मद्येतरस्तत्पयः पातुं वहति स्पृहयालुताम् PāṇḍaC. 13.244; प्रतिवसति समयेऽनुच्छिष्टमेवान्नं तस्मै प्रयच्छति CaitaCa. 230.14(10); **1C** fresh, original, not reproduced (from others) अनुच्छिष्टं सतां काव्यम् MahāP. 1.96; अनुच्छिष्टस्य हि शब्दस्य पारितोषिके क्षितिपतिर्लक्षद्रव्यं वितीर्य तां विससर्ज PrabaCin. 35.16; भट्टारकश्रीदेवसूरीणाम् … धर्मशास्त्रव्याख्याक्षणे वचनचातुरीमनुच्छिष्टामाकर्ण्य … कुमुदचन्द्रः … सतृणमुदकं प्रक्षेपितवान् PrabaCin. 66.9; 92.19; अनुच्छिष्टेन भूपालो वचसा तस्य रञ्जितः KumāDeC.(So.) 23.13; **1D** not impure मुख्याः विप्रुषः इत्यनुच्छिष्टं कुर्वन्ति न चेदङ्गे निपतन्ति ManuBh. i. 486.24 (*on* 5.139); **2** who has washed अनुच्छिष्टेन संस्पृष्टः येन चाचमनं व्रजेत् AṅgiSm. 164; अनुच्छिष्टेन

संस्पृष्टे स्नानं येन विधीयते YamaSm. 15; ParāSm. 7.21; BṛParāSm. 8.233; 8.257; DevīBhāP. xi. 23.6; उच्छिष्टमनुच्छिष्टो न संस्पृशेत् LaghvāśvaSm. 1.163; प्रयतः अनुच्छिष्टः ManuBh. i. 350.20 (*on* 4.50); गां ब्राह्मणमग्निम् अन्नमदनीयं, विशेषतः पक्वमशुचिर्न स्पृशेत् । पादेन त्वनुच्छिष्टोऽपि Mitā. 52.11 (*on* 1.155); Aparā. 231.11 (*on* 1.155); स्वयमनुच्छिष्टः प्रोक्तानामुच्छिष्टानां स्पर्शे यथोक्तात् पादं चरेत् ĪśānŚiPa. ii. 20.35(1); [not rejected, APTE]

**अनुच्छिष्टताभिधान** (anucchiṣṭatābhidhāna) *n.* statement of the absence of impurity अनुच्छिष्टताभिधानं च तत्स्पर्शने संभाषणे च परेषामाचमनाभावस्य ··· बोधनाय VīraMi.(Āhnika.) 116.7.

**अनुच्छिष्टत्व** (anucchiṣṭa-tva) *n.* the state of being not impure, non-impurity सत्यपि सोमेनानुच्छिष्टत्वे तत्कृते चादृष्टदोषाभावे प्रत्यक्षेणैव सहभोजनाद् व्यलीकोत्पत्तेरुपपत्तेरनुज्ञावसरो भवति TantrVā. 1058.6 (*on* iii. 5.43); पुरुषधर्मोऽयमनुच्छिष्टत्वम् TantrVā. 1070.14 (*on* iii. 5.53)

**अनुच्छिष्टत्वविधान** (anucchiṣṭatva-vidhāna) *n.* prescription of the absence of impurity मन्त्रपाठविधिबलादेवोच्छिष्टस्यापि मन्त्रपाठप्राप्तेरनुच्छिष्टत्वविधाने वैयर्थ्यात् VīraMi.(Āhnika.) 117.13.

**अनुच्छिष्टत्वोक्ति** (anucchiṣṭatvokti) *f.* statement of the absence of impurity सर्वत्रानुच्छिष्टत्वोक्त्योत्तराचमननिषेधः BālamBha. i. 457.28 (*on* 1.195)

**अनुच्छिष्टप्रदेश** (anucchiṣṭa-pradeśa) *m.* place which is not impure अनुच्छिष्टप्रदेशे तु शौचार्थं मृत्तिकां गृहेत् BṛNāraP. 25.10.

**अनुच्छिष्टयौवना** (anucchiṣṭa-yauvanā) *adj.* (*f.*) having youth which is not defiled एषा ··· दिष्ट्या चानुच्छिष्टयौवना DaśKuC. 93.10.

**अनुच्छिष्टसंपद्** (anucchiṣṭa-sampad) *adj.* whose wealth is not (yet) enjoyed कैकेयीतनयः ···। लक्ष्म्या निमन्त्रयांचक्रे तमनुच्छिष्टसंपदा RaghuVa. 12.15.

**अनुच्छिष्टाशिन्** (an-ucchiṣṭāśin) *adj.* who does not eat what is left over यद्यु परिशिंष्याद् व्रतप्रदं ब्रूयादशान वा पिब वेति । यद्यु व्रतप्रदोऽनुच्छिष्टाशी वा स्यात् परि वा शिंष्यात्, तदद्भिरभ्युक्ष्य छायायां निषेक्तवै ब्रूयात् JaimiBr. 2.64.

**अनुच्छिष्टीकुर्वत्** (an-ucchiṣṭīkurvat) *adj.* not making impure अथ परिकर्मिणः संशास्त्यनुच्छिष्टीकुर्वन्त एतं चरुं व्युद्धृत्य प्राश्नीत BaudhŚS. i. 168.18.

**अनुच्छिष्टोक्तिनिर्बन्ध** (anucchiṣṭokti-nirbandha) *m.* insistence on original expression अनुच्छिष्टोक्तिनिर्बन्धो नूत्नधातुविनिर्मितिः ।··· गुणैरेभिर्वरो वाग्गेयकारकः SaṁgīRa. ii. 151.1 (3.7)

**अनुच्छृङ्खल** (an-ucchṛṅkhala) *adj.* not unrestrained, self-controlled श्रीमानतुङ्गसूरिः ···। सदानुच्छृङ्खलः श्रीमानुच्छृङ्खलवपुर्बभौ PrabhāC. 116.33; अनुच्छृङ्खलयोः जायापत्योः ··· अवश्यं ये धर्माः ··· अनुष्ठेयाः तान्वक्ष्यामि SmṛtiCan. iv. 561.17.

**अनुच्छेद** (an-uccheda) *m.* **i** non-destruction, non-disappearance अनुच्छेदाय लोकानामनुच्छेदाय कर्मणाम् । पूर्वैराचरितो धर्मः MahāBhā. xii. 313.24; समानधर्मोपपत्तेरनुच्छेदात् संशयानुच्छेदः NyāyBh. 75.6 (*on* ii. 1.5); भेदप्रपञ्चप्रबन्धस्यानुच्छेदाद्वियोगाभावान्नित्यसंसारिता स्यात् BrahmSi. 20.4; अनुच्छेदात्तु नान्यत्वं भोक्तुर्लोकोऽवगच्छति ŚlokaVār. 5(17).25 (695.2); 6.357 (821.4); न च संस्कारापनयनं स्मृतिहेतोः संस्कारस्य सर्वत्रानुच्छेदात् ··· विनियोगः शक्यते कर्तुम् TantrVā. 844.14 (*on* iii. 3.14); उत्थितस्य पुनर्भावादनुच्छेदोऽथ शङ्क्यते BṛĀraUBhVā.(Sambandha.) 389; स्वप्रागभावतमोऽभावात् नृशृङ्गस्येव प्रदीपस्य तैलवर्त्यादिभावेऽप्यनुत्पत्तेस्तत्प्रवाहोच्छेदः । अनुच्छेदे वा तैलाद्यभावेऽपि स्थितिः प्रसज्येत IṣṭaSi. 68.6; समलचित्तक्षणानां स्वाभाविक्याः सदृशारम्भणशक्तेरसदृशारम्भं प्रत्यशक्तेश्चाकस्मादनुच्छेदात् NyāyKa. 4.2; निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते । अनुच्छेदे वा साधिकारत्वमेव TattvVai. 56.9 (*on* 1.51); योऽस्यात्यन्तमनुच्छेदः स शेष इति शब्द्यते SaraKaṇṭhā. 558.1; योग्यतायाश्च यावद्द्रव्यभावितयानुच्छेदात् तत्प्रतिबन्धो बाधः NyāyMa. 78.10; 286.11; उच्छेदानुच्छेदाभ्यामवान्तरजातिसद्भावेन विशेषगुणता स्यात् Lakṣaṇā. 9.17; अनुच्छेदे वा ज्वालाया इव प्रतिक्षणोत्पत्तिरात्मनः स्यात् ŚrutaPra. ii. 367.13 (*on* ii. 3.32); उच्छेदे सर्वस्य संप्रति संसारोऽस्तमियात् । अनुच्छेदे न कस्यचिन्मोक्षः SarvaDaSaṁ. 16.46; अन्त्ये तस्या (अविद्यायाः) अनुच्छेदादनिर्मोक्षप्रसङ्गः SiddhāBi. 30.2; सृष्टिसंहारयोः प्रवाहरूपेणानुच्छेदात् तस्यैक्ये मोक्षानुपपत्तेः SāṁkhyaPraBh. 71.8 (*on* 1.154); स्पर्शश्रुत्या वेष्टनस्मृतेर्मूलाकाङ्क्षाया अनुच्छेदान्न मूलोच्छेदलक्षणो बाधः संभवति MīmāKau. i. 13.9 (*on* i. 3.3); **ii** absence of break, non-discontinuance अनुच्छेदेनानुवृत्तेः श्रुतीनां बाधकाभावः NyāySu.(Ja.) 314B.6 (*on* ii. 2.1); 315A.11 (*on* ii. 2.1) [notion of the number of other substances consequent upon the notion of number one belonging to the atom, JainaL.]

**अनुच्छेदकत्व** (anucchedaka-tva) *n.* the state of being that which does not destroy द्योतनम् ··· परोक्षरूपतया न साक्षात्कारवतीमविद्यामुच्छिनत्ति द्विचन्द्रदिङ्मोहादिष्वनुच्छेदकत्वात् TattvVai. 3.24 (*on* 1.1)

**अनुच्छेदतृष्णा** (anuccheda-tṛṣṇā) *f.* longing for non-destruction अयं खलु शरीराद्यर्थजातमहमस्मीति व्यवसितः तदुच्छेदेनात्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णापरिप्लुतः पुनः पुनस्तदुपादत्ते NyāyBh. 288.7 (*on* iv. 2.1)

**अनुच्छेदनीया** (an-ucchedanīyā) *adj.* (*f.*) which cannot be destroyed मिथ्यार्थान् ··· भावयन्ती मायैव स्यादविद्या न कथम्, इतरथा स्यादनुच्छेदनीया TattvMu. 3.42.

**अनुच्छेदपक्षाविशेष** (anucchedapakṣāviśeṣa) *m.* absence of distinction from the view of non-destruction अनुच्छेदपक्षाविशेषे नित्यैव माया ब्रह्मस्वरूपानुबन्धिनी स्यात् ŚatDū. 178.18.

**अनुच्छेदप्रसङ्ग** (anuccheda-prasaṅga) *m.* undesired contingency of non-destruction अनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञानं जनयितव्यम् । तथा च तन्निमित्तस्य संसारस्यानुच्छेदप्रसङ्गः SāṁkhyaTaKau. 481.1 (*on* 64)

**अनुच्छेदरूप** (anuccheda-rūpa) *n.* [Inst.] in the form of continuity न चानुच्छेदरूपेण गोशब्दानामिह स्थितिः ŚlokaVār. 6.358 (821.5); बहुव्यक्त्याश्रयं तत्र संबन्धनित्यत्वं, ता ह्यनुच्छेदरूपेण सर्वदा सन्ति NyāyRa. 821.14 (*on* 6.358)

**अनुच्छेदसंभव** (anuccheda-sambhava) *m.* possibility of non-cessation or continuation मायायाः ··· मिथ्यात्वेऽप्यनादित्ववदनुच्छेदसंभवात् PrakaVi. 4.13.

**अनुच्छेदहेतुत्व** (anucchedahetu-tva) *n.* the state of being the cause of non-cessation or non-destruction इन्धनहेतुकोऽग्निरिति गम्यते । जननादिहेतुभावात् ···। उपस्तम्भहेतुरनुच्छेदहेतुत्वात् Sphuṭā. i. 33.22 (*on* 1.11)

**अनुच्छेदात्मिका** (anucchedātm-ikā) *adj.* (*f.*) possessed of indestructible nature पूर्णामप्रवर्तिनीमनुच्छेदात्मिकां श्रियं विभूतिं गुणफलं लभते ChāndoUBh. 164.16 (*on* iii. 12.9)

**अनुच्छेदाभिधान** (anucchedābhidhāna) *n.* the statement about non-destruction or non-cessation उच्छेदाभावमात्रप्रतिपादकमेतद्वचनं न जन्माभावमवगमयतीति । न, अनुच्छेदाभिधानेन जन्माभावोऽवसीयते ĀgaPrā. 27.1.

**अनुच्छेदोपपत्ति** (anucchedopapatti) *f.* tenability of non-removal तत्त्वतोऽभेदेऽपि व्यावहारिकभेदेनैव व्यावहारिकजातेरनुच्छेदोपपत्तेः AdvaiSi. 844.3.

**अनुच्छेद्य** (an-ucchedya) *adj.* [*f.* -ā] **i** which cannot be destroyed, not fit to be destroyed विज्ञानात्मनां शोकमोहाद्यभावो विशिष्यत इति चेत् तत्रापि शोकादयः ··· अनुच्छेद्याः BrahmSi. 120.15; अनुच्छेद्यो ह्युच्छेदहेतुः, तत्र असत्युच्छेदहेतावनुच्छेद्ये न तद्दर्शनकार्यं भयं युक्तम् TaiUBh. 266.16 (*on* 2.7); प्रकृतिपुरुषयोरनुच्छेदादनुच्छेद्यः स्वस्वामिभावः NyāyMa. 286.11; **ii** which cannot be terminated गृहभूम्यादिकं दत्वा पत्रं कुर्यात् प्रकाशकम् । अनुच्छेद्यमनाहार्यं दानलेख्यं तदुच्यते ŚukraNī. 2.308; [w. r. for अनुत्सेध्या, LaŚabdeŚe. i. 396.2]

**अनुच्छेद्यता** (anucchedya-tā) *f.* the state of being that which cannot be destroyed यदि च नापुरुषार्थदर्शनकरी माया तर्ह्यनुच्छेद्यतया नित्या ब्रह्मस्वरूपानुबन्धिनी स्यात् BrahmSūBh.(Rā.) 429.10 (*on* ii. 1.15)

**अनुच्छेद्यत्वापत्ति** (anucchedyatvāpatti) *f.* undesired contingency of non-terminableness प्रत्यक्षप्रमितौ ··· क्वचित् कारणत्वाकारणत्वविवादस्य चानुच्छेद्यत्वापत्तेः KhaṇḍanKhā. 1219.5.

**अनुच्छेद्यसारा** (anucchedya-sārā) *adj.* (*f.*) having strength which cannot be destroyed धत्तेऽनुच्छेद्यसारा तदियमुभयतस्पाशतां तर्करज्जुः TattvMu. 2.63.

**अनुच्छेद्यात्मक** (anucchedyātma-ka) *adj.* having indestructible nature अस्ति भयकारणमुच्छेदहेतुरनुच्छेद्यात्मकं यतो जगद्बिभेति TaiUBh. 266.19 (*on* 2.7)

**अनुच्छेद्याश्रया** (anucchedyāśrayā) *adj.* (*f.*) substratum of which cannot be destroyed महाप्रलये ··· कथं जातयोऽवतिष्ठेरन् इत्याह — अनुच्छेद्याश्रयामेके सर्वां जातिं प्रचक्षते VākyaP. 3(1).42.

**अनुच्छो** (anu-ccho-) IV.P. to cut अनु च्छ्य श्यामेन त्वचमेतां विशस्तर्यथापर्व१सिना माभि मंस्थाः AV. ix. 5.4; AV. (P.) xvi. 97.3; 'अनु च्छ्य श्यामेन' ··· इति जगत्याविति BṛSarvaAnu. 6.15 (9.5); अनु च्छ्य श्यामेनेति यथापरु विशसन्तम् KauśiSū. 64.10.

**अनुच्छोषुक** (án-ucchoṣuka) *adj.* which does not dry तानीमान्येषु छिद्रेषु लोमानि हितानि तस्माद्विमे प्राणा अनुच्छोषुकाः ŚatBr.(K.) IV. v. 4.17; अनयोरेव द्यावापृथिव्योरूर्जं रसं दधाति तत्संततमवनयेत्तथा संततवर्ष्यनुच्छोषुकः पर्जन्यो भवति ŚatBr.(K.) IV. vi. 1.20.

nning with permission नन्वनुज्ञादिहेतुत्रयं स्वरूपांशेषु मत्स्यादिष्वस्ति NyāySu. (Ja.) 454A. 2 (*on* ii. 3.18)

**अनुज्ञान** (anu-jñāna) *n.* **1A** permission, sanction to do प्रायश्चित्तैरनुध्यानैरनुज्ञानानुमन्त्रणैः। होमैश्च यज्ञविभ्रंशं सर्वं ब्रह्मा प्रपूरयेत् GopBr. ii. 2. 5 (170.5); ब्रह्मन् स्तोष्याम इत्युक्ते ··· नाप्तोर्यामण्यूर्ध्वमाश्विनान्न वाजपेयस्यातिरिक्तस्तोत्रे यथाब्राह्मणोक्तमेवात्रानुज्ञानमिति Kāṭhakaśrautasūtra 166; आमन्त्रिते प्रणवमुक्त्वा यथार्थमनुज्ञानम् VārāŚS. I. i. 2.14; सूयवसादिति प्रतिष्ठमानामनुमन्त्रयते (गाम्)। नालोहितो मधुपर्को भवति। नानुज्ञानमधीमह इति कुरुतेत्येव ब्रूयात Kauśi-Sū. 92.17; तं भोजयित्वोपासीत। आ सीमान्तमनुव्रजेदनुज्ञानाद्वा VāsiDS. 11.15; न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद् वान्यत्रानुज्ञानाद्भर्तुः VāsiDS. 15.5; अयमेव पक्षोऽभिमतः। अनुज्ञानस्यापद्विषयत्वात् BālaKrī. i. 48. 3 (*on* 1.32); स्वामिवमनेन च कृतार्थत्वान्नानेनैव शास्त्रेण देशान्तरादीनामनुज्ञानम् TantrVā. 1013. 14 (*on* iii. 4.41(? 35)); अनुज्ञानं च हृदयस्य प्रसादः ManuBh. i. 52. 21 (*on* 2. 1); i. 333.13 (*on* 4. 70); i. 440. 11 (*on* 5.43); तदिदमाह सर्वान्नानुमतिश्च प्राणात्यये। अनुमतिरनुज्ञानं कष्टायामापदि दर्शनात् Brahm-SūBh.(Bhā.) 211.9 (*on* iii. 4.28); नानुपहूतेन सोमः पातव्य इत्यत्रोपहूत-शब्देनानुज्ञानमुच्यते ŚāstrDī. 292.6 (*on* iii. 5. 13); उपहूत उपह्वयस्वेति मन्त्रः स किं समस्त एवानुज्ञानानुज्ञापनयोरन्यतरत्र प्रयोक्तव्यः ŚāstrDī. 292.16 (*on* iii. 5.15); अनुज्ञात इति वचनाद् विश्वान्देवानावाहयिष्य इत्यनुज्ञापनमावाहयेति चानुज्ञानमर्थसिद्धम् Aparā. 478. 17 (*on* 1.229); अत्र ह न किंचन वीयायेत्यनुज्ञानादुपकोसलवचनाच्च BrahmSūBh.(Ma.) 57B. 2 (*on* iii. 3. 45); भवतामपि हि न खल्वेकान्तेन हिंसानिषेधः। तत्तत्कारणजाते पृथिव्यादिप्रतिसेवनानामनुज्ञानात् SyādvāMañ. 11(234); ManvaVi. 232. 25 (*on* 2. 184); शूद्रादेरपि केषुचिद्व्रतेष्वनुज्ञानमस्ति ŚatDū. 238.30; NyāyMāVi. 175.25 (*on* iii. 5. 16); श्रुत्याद्युक्तानामनुष्ठेयानां मध्ये स्वेच्छया केषांचिच्चरणं केषांचिदचरणमित्यनुज्ञानमेव कामचारश्रुत्यर्थः TattvPrakā. 190A. 12 (*on* iii. 4.19); अनुज्ञानप्रतिषेधयोरेकत्रासंभवात् SarvaDaKau. 82. 13; **1B** granting allowance or pardon (for something disagreeable) पुरुषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः। अनुज्ञानं वा वेदवित्समवायवचनात् GautDS. ii. 3.49; अनुज्ञानं अदण्डयित्वोत्सर्जनम् SmṛtiCan. iii. 297.13; **2** acceptance, approval देवदत्तादिशब्देषु च नार्थप्रत्ययमपह्नुत्यैकपदप्रत्ययोऽनुज्ञानमर्हति SphoṭSi. 189. 1; वस्तुन एव प्रामाण्यदर्शनान्नावस्तुनोऽनुपलब्धेः प्रमाणत्वमिति।··· अनुज्ञाने दोषमाह Kāśi. iii. 210.15 (*on* 5(8).49); उपपत्तिकारणानुज्ञानादप्रतिषेध इति सूत्रारूढः स्वव्याघातः Tārki-Ra. 290.2; 'गोत्राद्यूनि' इत्यत्रैव ग्रहणमनुवर्तते, तेनैकस्यैव युवप्रत्ययस्यानुज्ञानादनेकः प्रत्ययो न भविष्यति Pradī. iv. 156A. 2 (*on* iv. 1.165); वादलक्षणे ··· अष्टानां निग्रहस्थानानामनुज्ञानात्, तेषां च निग्रहस्थानान्तरोपलक्षणत्वात् PramāMī. 63. 27 (*on* ii. 1. 30); शक्तमधिकृत्य चात्र स्वारसिकं स्वयंप्रवृत्त्यादिकमुपदिश्यते। पक्षान्तरस्याप्यन्यत्रानुज्ञानात् PāñcRāRa. 126.6; **3** (collateral) affirmation 'तस्माद्विषं भक्षय मा चास्य गृहे भुङ्क्था' इतिवत् प्रतिषेधशेषभूतमिदमनुज्ञानं न पुनरनुज्ञानमेव ManuBh. ii. 82. 1 (*on* 8.20); **4** source of knowledge ब्रह्मकाण्डं तु भक्तौ तस्यानुज्ञानाय सामान्यात् BhaktiSū.(Śā.) i. 2. 17; [Kośas give *anujñāna* as the meaning of the following — *tathā*, AnekāK. 989; *nanu*, ViśvaPra. 188. 31; DharK. 2913; *nu*, KośaKaTa. 2. 3184; *paramam* (*ind.*), AnekāSa. 526; *sammati*, ViśvaPra. 69. 161; and as the synonym of the following — *abhilāṣā*, AnekāK. 331; *sammati*, AnekāSa. 517; AnekāK. 331]

**अनुज्ञानदान** (anujñāna-dāna) *n.* granting of permission अनुज्ञेत्यनुज्ञानदानम्। उपह्वयस्व अनुजानीहीत्यर्थः VedāntKa. 433.14 (*on* iii. 3.25)

**अनुज्ञानप्रकार** (anujñāna-prakāra) *m.* mode or type of permission अनुज्ञापनानुज्ञानप्रकारः कात्यायनेन सामान्यनाम्ना दर्शितः SmṛtiCan. v. 285. 5.

**अनुज्ञानमात्रत्व** (anujñānamātra-tva) *n.* the state of being mere permission न च देवतानां स्वेच्छाचरणे विध्यभावप्राप्तेरुक्तमयुक्तम्।··· स्वेच्छाचरणेऽनुज्ञानमात्रत्वाच्चेति TattvPrakā. 191B.4 (*on* iii. 4. 24)

**अनुज्ञानवचन** (anujñāna-vacana) *n.* expression of permission अत्रानुज्ञानवचनं सर्वैरेव ब्राह्मणैर्युगपद्वाच्यमित्याह मनुः Aparā. 489. 12 (*on* 1. 235)

**अनुज्ञानानन्तरम्** (anujñānānantaram) *adv.* immediately after (giving) permission अनुज्ञानानन्तरं ब्राह्मणाः श्राद्धकर्तारं 'स्वधास्तु' इति ब्रूयुः ManvaMu. 136.3 (*on* 3.252)

**अनुज्ञानानुपपत्ति** (anujñānānupapatti) *f.* untenability of giving permission अनुज्ञापनं विनानुज्ञानानुपपत्तेरर्थादनुज्ञापनमपि कर्तव्यं बोध्यम् MayūMāli. 292.8 (*on* iii. 5.13)

**अनुज्ञानापेक्ष** (anujñānāpekṣa) *adj.* dependent on or subject to the permission कष्टमनुज्ञानापेक्षः संवृत्तोऽस्मि MahāvīC. 2.49(2)

**अनुज्ञानार्थ** (anujñānārtha) *adj.* **i** meant for the sake of permission अनुज्ञावचनम् ··· पुनरुक्तम् ··· प्रतिषेधान्तरेण वा वारितस्यानुज्ञानार्थमित्यवगम्यते TantrVā. 112.4 (*on* i. 3. 4); **ii** meant for the sake of acceptance अपसिद्धान्तादिसम्यग्दूषणादिकप्रदर्शने नैवंप्रकारवस्तुशुद्ध्यनुगुणनिग्रहस्थानजाता- (? त्या)यनुज्ञानार्थमेवेत्यभियुक्ताः NyāyMañ. ii. 151.10.

**अनुज्ञानार्हानुमति** (anujñānārhānumati) *f.* consent of one who is eligible for (giving) permission स्थावरभिन्नं स्वोपार्जितं वस्तु अनुज्ञानार्हानुमतिं विनापि पित्रा दातुं शक्यम् BālamBha. ii. 132. 23 (*on* 2.113)

**अनुज्ञानाशक्ति** (anujñānāśakti) *f.* inability to give consent or permission इच्छया वा विभागस्मृतिर्न स्यात्। न च तदनुज्ञानादनुष्ठानमिति युक्तं, जातमात्रस्यानुज्ञानाशक्तेः BālaKrī. i. 244.20 (*on* 2.123)

**अनुज्ञानाश्रय** (anujñānāśraya) *m.* substratum or abode of the consciousness (*lit.* subsequent cognition) अनुज्ञानाश्रयो नित्यो निर्विकारोऽव्ययः सदा ···। मकारवाच्यो जीवः VṛHārīSm. 6.84.

**अनुज्ञानिषेध** (anujñā-niṣedha) *m.* denial of knowledge न प्रतिपद्यते प्रतिपद्यमान इति व्याहतं, न चायमनुज्ञानिषेधो न प्रतिपद्यते TātpṬ. (Vā.) 325.18 (*on* i. 2.1)

**अनुज्ञानुग्रहदान** (anujñānugraha-dāna) *n.* granting the favour of permission एनं बटुं कुमारावष्टम्भेन पशुमारं मारयितुमनुज्ञानुग्रहदानेन प्रसीदन्तु स्वामिपादाः AdbhuDa. 2.21(5)

**अनुज्ञान्तर** (anujñāntara) *n.* another permission न हि पूर्वमनुज्ञाते स्यादनुज्ञान्तरं पुनः TantrVā. 111. 22 (*on* i. 3. 4)

**अनुज्ञापक** (anu-jñāpaka) *adj.* who grants permission उपह्वानं केन कर्तव्यमत आह उपहूत उपह्वयस्वेत्यनेनेति। उभयोरनुज्ञाप्यानुज्ञापकयोर्व्यापारप्रदर्शनाय सकलोच्चारणम् TantrVā. 1057.15 (*on* iii. 5.41) [one who commands or enjoins, MW.; one who commands or orders, Apte]

**अनुज्ञापक्ष** (anujñā-pakṣa) *m.* view of (taking) permission or consent विवाहेऽनधिकारी स्याज्ज्येष्ठकन्या स्थिता यदा। तदनुज्ञां विना वापि कनिष्ठामुद्वहेत्तदा।··· वाशब्दोऽनुज्ञापक्षं गमयति VīraMi.(Saṁskāra.) 763.22.

**अनुज्ञापद** (anujñā-pada) *n.* **i** word for granting permission ओं भूर्भुवः स्वर्जनदों३ प्रणय इति यथास्वरम् अनुजानाति। एवं सर्वत्रानुज्ञापदम् आद्यन्तयोः VaitāSū. 2. 1; **ii** abode or place of command (i.e. receiver of command) ततो दिदेश वायुं स नयैनं व्योममण्डलम्। तस्यानुज्ञापदं वायुर्युगान्तसदृशो ववौ GaṇeP. ii. 11.10.

**अनुज्ञापन** (anu-jñāpana) *n.* causing (someone) to give permission, request for permission, seeking of permission उपह्वानं चानुज्ञापनम् ŚābaBh. 1011. 14 (*on* iii. 5. 40); (उपहूत उपह्वयस्वेति मन्त्रः) अनुज्ञापने समाम्नातः, सामर्थ्याद्विनियुज्यते ŚābaBh. 1012.4 (*on* iii. 5. 41); 1013. 6 (*on* iii. 5. 43); 2041.24 (*on* x. 7.36); अग्नौकरणशब्देन चात्र 'अग्नौ करिष्य' इत्यनुज्ञापनं प्रतिषिध्यते, न पुनर्होमः ManuBh. i. 310.26 (*on* 3.237); i. 316.20 (*on* 3. 244); अनुज्ञापनानुज्ञयोः प्रज्ञातक्रमयोरुपहूत उपह्वयस्वेत्येवं मन्त्रावाम्नातौ Bhām. 623. 20 (*on* iii. 3.25); (उपहूत उपह्वयस्वेति मन्त्रः) स किं समस्त एवानुज्ञानानुज्ञापनयोरन्यतरत्र प्रयोक्तव्य इतरत्र लौकिकः शब्दः उतोभयत्रापि समस्तः ŚāstrDī. 292.16 (*on* iii. 5. 15); अनुज्ञात इति वचनाद्विश्वान्देवानावाहयिष्य इत्यनुज्ञापनम् Aparā. 478.16 (*on* 1. 229); अनुज्ञापनमनुज्ञायाचनम् VedāntKa. 433. 14 (*on* iii. 3.15); ब्राह्मणभोजनोपयोजितमन्नं स्वत एव पिण्डदानक्रियार्हमित्यनुज्ञापनमनर्थकं स्यात् CaturCin. iii(1). 1050. 21; अनुज्ञापनस्यादृष्टं प्रयोजनम् NyāyMāVi. 176.9 (*on* iii. 5. 16); त्वां चिरपरिचितम् अनुज्ञापनाय समायातोऽस्मि SiṁhāDvā. 240. 3(10); लिङ्गेन वाक्यं बाधित्वा विभज्यैवैतोऽनुज्ञापनेऽपरश्चानुज्ञायाम् BhāṭṭDī. ii. 14.21 (*on* iii. 5.12); अर्थादनुज्ञापनमपि कर्तव्यं बोध्यम् MayūMāli. 292.8 (*on* iii. 5.13); 292.17 (*on* iii. 5. 15) [NānārthāSaṁ. iii. 32.72 gives *anujñāpana* as the meaning of *āmantraṇa*] [authorization, permission, MW; authorising, issuing an order or command, Apte]

**अनुज्ञापनपूर्वकत्व** (anujñāpanapūrvaka-tva) *n.* the state of being preceded by the seeking of permission तत्रानुज्ञापनपूर्वकत्वादनुज्ञायाः मन्त्रांशयोश्च तद्विपरीतत्वान्न विभज्य विनियोगः ŚāstrDī. 292.17 (*on* iii. 3.15)

**अनुज्ञापनप्रकार** (anujñāpana-prakāra) *m.* mode of the seeking of permission विशेषनाम्नानुज्ञापनप्रकारस्तु 'पुरूरवार्द्रवसंज्ञकान्' इत्येवंरूपः स्वयमूह्यः SmṛtiCan. v. 285. 7.

**अनुज्ञापनप्रतिपादक** (anujñāpana-pratipādaka) *adj.* which conveys the seeking of permission अनुज्ञाप्रतिपादकस्याप्यनुज्ञापने विशेषणप्रतिपादकतया विनियोगः। एवमनुज्ञापनप्रतिपादकस्यानुज्ञायामिति भावः MayūMāli. 292. 18 (*on* iii. 5.15)

**अनुज्ञापनमन्त्र** (**anujñāpana-mantra**) *m.* sacred formula for the seeking of permission अनुज्ञापनमन्त्रः। अशेषजगदाधार शङ्खचक्रगदाधर। देहि देव समानुज्ञां युष्मत्तीर्थनिषेवणे SkandP. iii(1). 51.22.

**अनुज्ञापनलिङ्ग** (**anujñāpana-liṅga**) *adj.* having the force of seeking of permission अनुज्ञापनलिङ्गोऽयं मन्त्रः ŚābaBh. 1012.4 (*on* iii. 5.41)

**अनुज्ञापनवाक्य** (**anujñāpana-vākya**) *n.* statement (employed) for seeking of permission अनुज्ञापनवाक्यमपि सामर्थ्यप्राप्तम्। न हि तेऽप्रार्थिता अनुजानीरन् ManuBh i. 297.5 (*on* 3.200)

**अनुज्ञापना** (**anu-jñāpanā**) *f.* request for permission, seeking of permission एकपात्रे वा पानं त्वया सहाचरन्नहं तव चित्तप्रसादनं व्याहन्यामिति संभवत्यनुज्ञापना ŚābaBh. 1013.9 (*on* iii. 5.43); अनुज्ञापना-अवमानयोरिह विधानम्, पूर्वासामेतद्भावात् ManuBh. ii. 266.20 (*on* 9.82)

**अनुज्ञापनार्थ** (**anujñāpanārtha**) *adj.* meant for obtaining permission जोषणार्थमिदं वाक्यं नानुज्ञापनार्थम् ŚābaBh. 1683.4 (*on* ix. 1.37); (अनुवादः) अप्रोक्षितस्यापि ब्राह्मणकाम्यादिनिमित्तेष्वनुज्ञापनार्थः ManuBh. i. 432.25 (*on* 5.27)

**अनुज्ञापनार्थम्** (**anujñāpanārtham**) *adv.* for the sake of obtaining permission इक्षुवाटके सरसेक्षुरण्डान् दृष्ट्वा जिघ्क्षुरनुज्ञापनार्थं वाटिकामेवमवादीत् Bharat. 9A.6.

**अनुज्ञापनी** (**anu-jñāpanī**) *f.* expression used for the seeking of permission अनुज्ञापनी अवग्रहस्य SthānṬ. 184A.7.

**अनुज्ञापनीय** (**anu-jñāpanīya**) *adj.* to be requested for permission, to be asked for permission यत्किंचन धनं धर्मादौ विनियुज्यते तत्र यथावयः स्वपुरुषाः पत्यादयोऽनुज्ञापनीयाः ManuBh. ii. 241.21 (*on* 9.2)

**अनुज्ञापयत्** (**anu-jñāpayat**) *adj.* causing or asking (one) to give permission तं नियमं मुमुक्षुर्गुरूननुज्ञापयंस्तैरूचे PrabaCin. 84.15; KumāPraPra. 61.28.

**अनुज्ञापयितव्य** (**anu-jñāpayitavya**) *adj.* to be requested for permission अनुज्ञातेन भक्षयितव्यमिति स्थिते, किं लौकिकेन वचनेनानुज्ञापयितव्यमुत वैदिकेनेति ŚābaBh. 1012.1 (*on* iii. 5.41)

**अनुज्ञापरिहारव्यवस्था** (**anujñāparihāra-vyavasthā**) *f.* mode of permissive injunction and prohibition अनुज्ञापरिहारव्यवस्थानुपपत्त्या स्वरूपभेदो वक्तव्यः PrakaVi. 655.24.

**अनुज्ञापरिहारानर्थक्य** (**anujñāparihārānarthakya**) *n.* meaninglessness of permissive injunction and prohibition सम्यग्दर्शिनस्तर्ह्यनुज्ञापरिहारानर्थक्यं प्राप्तम् BrahmSūBh.(Śaṅ.) 485.1 (*on* ii. 3.48)

**अनुज्ञापरिहाराभाव** (**anujñāparihārābhāva**) *m.* absence of permissive injunction and prohibition न च ब्रह्मैव सदसन्तस्तु जीवा इति युक्तं सुखदुःखमुक्तिसंसारव्यवस्थाभावप्रसङ्गादनुज्ञापरिहाराभावप्रसङ्गाच्च Bhām. 502.7 (*on* ii. 3 43)

**अनुज्ञापरिहारोपपत्ति** (**anujñāparihāropapatti**) *f.* tenability of permissive injunction and prohibition पर एवैकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थित इत्यतो वक्तव्या अनुज्ञापरिहारोपपत्तिः BrahmSūBh.(Śaṅ.) 484.4 (*on* ii. 3.47)

**अनुज्ञापित** (**anu-jñāpita**) *adj.* **A** permitted, sanctioned स्वनुलिप्तेषु गेहेषु स्वेष्वनुज्ञापितेषु च।··· श्राद्धमेतेषु दातव्यम् BrahmP. 220.7; **Bi** caused or asked to give permission (to depart) अनुज्ञापितो वङ्कचूलः सूरिभिः ViviTīKa. 81.15; PrabaK 75.16; **Bii** caused or asked to give permission (to recite) अध्ययनं करोमीति यावदतिथिरनुज्ञापितो न भवति ··· नाधीयीत ManvaMu. 167.15 (*on* 4.122) [NānārthaSaṁ. iii. 32.73 gives *anujñāpita* as the meaning of *āmantrita*]

**अनुज्ञापितपानान्न** (**anujñāpita-pānānna**) *n.* food and drink which have been sanctioned समानधार्मिकेभ्यश्च, तथावग्रहयाचनम्। अनुज्ञापितपानान्नाशनमस्तेयभावनाः YogŚā. 1.29.

**अनुज्ञापितावग्रहावनि** (**anujñāpitāvagrahāvani**) *adj.* who is admitted in the area of jurisdiction (of the teacher) ददौ पदानि सप्ताष्टान्यर्हद्दिक्संमुखं हरिः। गीतार्थः शिष्य इवानुज्ञापितावग्रहावनौ TriṣaŚaPuC. ii. 3.350.

**अनुज्ञापूर्वक** (**anujñāpūrva-ka**) *adj.* preceded by permission (सोमस्य) नानुज्ञापूर्वको भक्षस्तत्पूर्वो वात्र लाघवात् NyāyMāVi. 175.7 (*on* iii. 5.14)

**अनुज्ञाप्य** (**anujñāp-ya**) *ger.* **1A** having sought permission of, having obtained permission of, having informed अनुज्ञाप्य गुरूंश्चैव चरेद्धि पृथिवीमिमाम् NāraPaU. 6.29; VāyuP. i. 17.2; अग्नौ करिष्यामीति ब्राह्मणाननुज्ञाप्य ··· प्रदक्षिणमग्निं परिस्तृणाति JaimiGS. 2.1 (25.15); बृहस्पतिप्रसूतः करवाणीत्यनुज्ञाप्यो सवितृप्रसूतः भवानित्यनुज्ञातः कुर्वीत KauśiSū. 9.9; धृतराष्ट्रमनुज्ञाप्य जातुषं गृहमादिशत् MahāBhā. i. 55.16; स (व्यासः) मातरमुपस्थाय (v.l. मनुज्ञाप्य) तपस्येव मनो दधे MahāBhā. i. 57.70; iii. 96.8; iii. 213.17; दुर्योधनमनुज्ञाप्य वनं यास्यामि कौरव MahāBhā. vii. 1.37; ix. 28.79; xii. 234.24; पितामहमनुज्ञाप्य सोऽश्वमेधमकल्पयत् MahāBhā. xii. 273.55; प्रेक्ष्य रामं शचीपतिः। शरभङ्गमनुज्ञाप्य विबुधानिदमब्रवीत् Rāmā. iii. 4.17; अनुमान्य (v.l. अनुज्ञाप्य) महाराजमिमं सौम्य विभीषणम्।··· वैदेह्या मां कुशलिनम् ···। आचक्ष्व Rāmā. vi. 100.20; vi. 3164*; या रोगिणी स्यात्तु हिता ··· सानुज्ञाप्याधिवेत्तव्या ManuSm. 9.82; अच्युतः। अनुज्ञाप्य ततः शौरिं नन्दगोपगृहेऽनयत् MatsyaP. 47.5; PadmP. v. 13.143; अनुज्ञाप्य तौ राजन् भृगुवर्यः ··· इयेषाश्रयमाश्रमम् BrahmāṇḍP. ii. 21.34; ii. 43.29; ii. 67.44; एते तप्त्वा तपस्तीव्रम् ···। आदिदेवमनुज्ञाप्य AhirbuS. 11.55; आचार्यादीननुज्ञाप्य ··· सर्वबीजानि वापयेत् PāraS. 16.176; ब्राह्मणानप्यनुज्ञाप्य ··· सर्वेण ध्याययेद्धरिम् ParaS. 22.59; मामनुज्ञाप्य रुमण्वति। निवृत्ते गोमुखेनोक्तम् BṛKathāŚloSaṁ. 8.38; स्वधनदानादि स्वामिनमनुज्ञाप्य यत्कुर्वन्ति तत्सिध्यति ManuBh. ii. 152.23 (*on* 8.163); विष्णुः ···। अनुज्ञाप्याथ योगेन प्रविष्टो ब्रह्मणस्तनुम् KūrmaP. 76.14 (1.9); यावदेताननुज्ञाप्य प्रासादे ह्यधिकारिणः। प्रदक्षिणीकृत्य विभुमायामि SkandP. ii(2). 22.2; अनुज्ञाप्य (पितरम्) विधानेन ततः पाणिं ग्रहीष्यसि VarāP. 22.26; राघवः। अनुज्ञाप्य द्विजान् प्राप्तः कैकय्या भवनं प्रति NaraP. 48.55; समीपस्थोऽप्यनुज्ञाप्य वदेत्तद्विमुखो गुरुम् LiṅgaP. i. 85.182; अनुज्ञाप्य स्वमाचार्यम् ···। व्रतमेतत्करोमीति भवत्संकल्पदीक्षितः DevīBhāP. xi. 10.8; देवा अनुज्ञाप्य पितामहम्।··· दधीचेराश्रमं ययुः PadmP. v. 19.70; v. 30.36; धर्मराजमनुज्ञाप्य गतोऽहममरावतीम् SaurP. 3.37; 31.37; तदवैति हि मत्पतिः कथंचित्तमनुज्ञाप्य किलागताहमद्य KathāSaSāg. vi. 6.194; vii. 9.90; ix. 6.405; शिवात्मानं रविं ध्यात्वा ···। अभिवाद्याप्यनुज्ञाप्य तर्पणं प्रारभेत ĪśānŚiPa. ii. 3.78; सार्थपतिं ततः। अनुज्ञाप्याचार्यवर्या विहर्तुं ययुरन्यतः TriṣaŚaPuC. i. 1.222; i. 1.700; गुरूननुज्ञाप्य ···। आजग्मतुर्द्वावपि तौ PariPar. 2.648; 7.10; 13.5; अथ देवमनुज्ञाप्य चिरं शुश्रूषणेच्छया। विनयादनयच्छौरिं मथुरां मथुरापतिः PāṇḍaC. 2.161; 2 296; 14.245; मनोरमामनुज्ञाप्य देवतापि तिरोदधे MalliC. 7.367; मन्त्री ··· अनुज्ञाप्य भूमीपतिं प्रस्थास्यन् VasaViKā. 14.44; एताननुज्ञाप्य ··· अहम्। चरितं कीर्तयिष्यामि श्रीमत्पार्श्वजिनप्रभोः PārśvC. 1.10; 5.86; 6.94; सदस्याननुज्ञाप्योद्धरेत् CaturCin. i. 223.22; तातमनुज्ञाप्य समागतः। निजं देशमसौ SamarāSaṁ. 7.92; 3.153; पितरौ चानुज्ञाप्य ···। चारित्रमग्रहीत् ··· सः PrabhāC. 118.24; 140.4; स स्वामिनमनुज्ञाप्य ···। गृहमागत्य सुप्रीतः प्रेयसीमित्यभाषत ŚāliC. 3.15; सा ··· पितरावनुज्ञाप्य निर्बन्धात्तमेवोपयेमे PrabaCin. 18.27; 110.18; विष्वक्सेनं तत्तद्द्वारपालांश्च प्रणम्यानुज्ञाप्य तत्र तत्र प्रविशेत् PāñcRāRa. 114.6; तां चानुज्ञाप्यागात् स्वमाश्रयम् RatnaCūKa. 482; गार्गी ··· याज्ञवल्क्यं प्रक्ष्यामीति ब्राह्मणाननुज्ञाप्य ··· याज्ञवल्क्य प्रति पृष्ट्वा ŚivārkaMaDī. i. 419.32 (*on* i. 3.9); सेतुं कूपं वा चिकीर्षता ··· राजानं वानुज्ञाप्य स कार्यः VīraMi. 637.18 (*on* 2.157); अनुज्ञाप्य मौहूर्तिकान् ··· प्रस्थाय दानवाः ··· कोलाहलेन बोधयामासुः ··· अमृताशनान् NīlaVi. 15.15; 21.4; 39.2; **1B** having asked permission for शेषमन्नमनुज्ञाप्यान्नशेषैः किं क्रियतामिति GautPiMe. ii. 4.21; शेषमनुज्ञाप्य प्रत्येत्य ··· प्राश्नीयात् JaimiGS. 2.5 (31.8); 2.2 (27.7); शेषमनुज्ञाप्यैनेनैव यथेतमेत्य न्नशेषान्निवेदयते BaudhGS. ii. 11.44; भुक्तवतोऽनुप्रव्रज्य शेषमनुज्ञाप्य HiGS. ii. 12.2; विप्रान् ···। अन्नशेषमनुज्ञाप्य ··· विसर्जयेत् BrahmāṇḍP. ii 12.45; अथ य एकपात्रे सोमोऽनेकेन भक्ष्यते किं तत्रानुज्ञाप्य वा भक्षयितव्यम् ŚābaBh. 1011.11 (*on* iii. 5.40); शेषमन्नं तेभ्यः (ब्राह्मणेभ्यः) एव निवेद्य तैः ··· अनुज्ञाप्य, अनुज्ञाप्येत्यर्थः BālaKrī. i. 159.10 (*on* 1.237); अनुज्ञाप्य भक्षयितव्यं वचनादिति स्थितम् ŚāstrDī. 292.10 (*on* iii. 5.14); **2** (with primitive force) having allowed (to depart), having allowed (to withdraw), तेऽप्यनुज्ञाप्य राजानं सैन्येन महता वृताः MahāBhā. ii. App. I. 11(20); परस्परमनुज्ञाप्य ···। प्रजाः सर्वा महाराज विप्रजग्मुः MahāBhā. iii. 103.18; v. 87.2; सुहृद्भिस्तत्र रामोऽपि सहासीनः प्रियंवदैः। सभाजितो विवेशाथ ताननुज्ञाप्य सर्वशः Rāmā. ii. 5.12; राक्षसाश्चापि भूताश्च येऽस्मिंस्तिष्ठन्ति भूतले। ते सर्वे व्यपगच्छन्तु स्थानं कुर्यामहं हरेः। इत्यनुज्ञाप्य भूतादींस्तां भूमिं परिशोधयेत् PañcaRā.(Ha.) i. 6.17; तामनुज्ञाप्य नारदः ···। जगाम SkandP. v(3). 27.11; कृष्णः कान्तामनुज्ञाप्य गवामभिमुखं व्रजेत् PadmP. iv. 83.77; सोऽनुज्ञाप्य च जाह्नवीम्। खण्डप्रपाताभिमुखं चचाल TriṣaŚaPuC. i. 4.548; बप्पभट्टिः ···। अनुज्ञाप्य ··· पुनरप्यागयौ PrabhāC. 92.3; सूत्रकण्ठाः ··· तमनुज्ञाप्य प्रयायुः स्वां नगरीम् PrabaK. 67.20; 'उत्तमे शिखरे' इतिमन्त्रेण गायत्रीमनुज्ञाप्य PāñcRāRa. 109.10; देवाननुज्ञाप्य गृहाय सद्यः। कात्यायनीमर्धमृगाङ्कमौलिः कैलासशैले रमयांबभूव Rāṣṭrau. 1.12; दुर्गापालमनुज्ञाप्य ··· पुरोऽभूत् स पुरःसरः ParamāKā. 83.44.

**अनुज्ञाप्य** (**anu-jñāpya**) *adj.* **1** who is to be permitted उपाह्वानं

केन कर्तव्यमत आह उपहूत उपहूयस्वेत्यनेनेति। उभयोरनुज्ञाप्यानुज्ञापकयोर्व्यापार-प्रदर्शनार्थं सवलोच्चारणम् TantrVā. 1057.15 (*on* iii. 5.41); **2** who is to be informed or ordered or instructed पुरुषश्चतुर्भिरनुज्ञाप्यो भवति मातृपितृ-गुरुदैवतैः PārāSū. 6.19.

**अनुज्ञाप्रतिपादक** (anujñā-pratipādaka) *adj.* which conveys permission समस्त इति। अनुज्ञाप्रतिपादकस्याप्यनुज्ञापने विशेषणप्रतिपादकतया विनियोगः MayūMāli. 292.17 (*on* iii. 5.15)

**अनुज्ञाप्रतीक्षा** (anujñā-pratīkṣā) *adj.* (*f.*) waiting for the command आवाहयामि कं देवं ब्रूहि तत्त्वविदां वर। त्वत्तोऽनुज्ञाप्रतीक्षां मां विद्धयस्मिन् कर्मणि स्थिताम् MahāBhā. i. 113.38.

**अनुज्ञाप्रदर्शन** (anujñā-pradarśana) *n.* display of approval 'यतो वाच' इत्यस्य वाक्यस्य निर्विशेषपरत्वं व्युदस्यति (यतो वाच इत्यादिना) यदीत्यनुज्ञा-प्रदर्शनम्, तर्हि किमवगमयेदित्यपेक्षायां न केवलमिष्टाबोधकत्वं, किं त्वनिष्टबोधकत्वं च ŚrutaPra. (Dharanidhara's Ed., 1967) iii. 141.9 (*on* i. 1.17)

**अनुज्ञाप्रभृति** (anujñā-prabhṛti) *ind.* from the permission किंप्रभृति ब्रह्मानुज्ञाताः ब्रह्मणोऽनुज्ञाप्रभृतीत्यर्थः VīraMi.(Saṁskāra.) 957.24.

**अनुज्ञाप्रार्थना** (anujñā-prārthanā) *f.* request for permission अनुज्ञाया एषणा प्रार्थना, अनुज्ञैषणा। अनुज्ञाप्रार्थनेत्यर्थः KāśiVṛ. *on* viii. 1.43; नन्वित्यनेन युक्तं तिङन्तं नानुदात्तमनुज्ञाप्रार्थनायाम् SiddhāKau. 659A.10 (*on* viii. 1.43)

**अनुज्ञाभाव** (anujñābhāva) *m.* absence of permission दोषवचनस्य विषयः दर्शितो भवति। अधमस्वीकारविषयं वा ··· अनुज्ञाभावविषयं वेति Tattv-Prakā. 178B.11 (*on* iii 3.46); BālamBha. i. 205.14 (*on* 1.68-69)

**अनुज्ञाभिनय** (anujñābhinaya) *m.* gesture of (granting) permission सुयामुनस्थस्तत्रस्थमनुज्ञाभिनयेन माम्। गच्छ गच्छेति भूपालः क्षिप्तपाणिरचोदयत् BṛKathāŚloSaṁ. 8.10.

**अनुज्ञाभ्यर्थन** (anujñābhyarthana) *n.* request for permission अग्नौकरणं तु कात्यायनमतानुसारिभिरनुज्ञाभ्यर्थनात् प्रभृत्येव प्राचीनावीतिभिः कार्यम् CaturCin. iii(1). 1121.18.

**अनुज्ञामन्त्र** (anujñā-mantra) *m.* sacred formula for (granting) permission यथानुज्ञापनानुज्ञयोः प्रज्ञातक्रमयोरुपहूत उपहूयस्वेत्येवं मन्त्रावाम्नातौ ···। उपहूत इति लिङ्गतोऽनुज्ञामन्त्रो नानुज्ञापने Bhām. 623.22 (*on* iii. 3.25)

**अनुज्ञामात्र** (anujñā-mātra) *n.* **1** mere permission ओंकरणमनुज्ञामात्रं द्रष्टव्यम् ChāndoUBh. 42.17 (*on* i. 5.3); अध्ययनस्य ···। नियोगार्थतैव शास्त्रेण बोध्यते अर्थज्ञानार्थतायां त्वनुज्ञामात्रम् ŚāstrDī. 7.15 (*on* i. 1.1); अस्त्येव ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषस्तर्हि कथमयं यथेष्टाचरणविधिः।··· एतदपि ज्ञानिन स्तुतय एवोच्यते। अथवा यथेष्टाचारेऽनुज्ञामात्रमेतत् TattvPrakā. 189B.6 (*on* iii. 4.14); **2** mere order or injunction भक्तानां च किंचित् प्रसादलवो दातव्य इत्यनुज्ञामात्रेण कथं तेषामुपास्यत्वमासीत् ŚaṅkaVi.(Ā.) 165.8; इष्टापूर्तादिकर्मकृतां चन्द्रप्राप्तिः पुनर्मर्त्यलोकप्राप्तिरित्यनुज्ञामात्रेण मुक्तिः किं वर्तते ŚaṅkaVi.(Ā.) 208.16; नामकरणे वा कृते उदकक्रियासाहचर्यादग्निसंस्कारोऽप्यनुज्ञामात्रम् Manva-Mu. 208.17 (*on* 5.70)

**अनुज्ञामुख** (anujñā-mukha) *n.* [Inst.] by means of (apparent) permission (to depart) न चिरं मम तापाय तव यात्रा भविष्यति। यदि यास्यसि यातव्यम् ···। इत्यनुज्ञामुखेनैव कान्तस्याक्षिप्यते गतिः Kāvyāda. 2.136.

**अनुज्ञाय** (anujñā-ya) *ger.* **1A** having allowed to depart तीर्थानि शोधयित्वा तु तथानुज्ञाय ताः प्रभुः। चित्राङ्गदां पुनर्द्रष्टुं मणलूरपुरं ययौ MahāBhā. i. 209.23; व्यासः सत्यवतीसुतः। अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत MahāBhā. iii. 37.35; जनको हृष्टमानसः। प्रययौ मिथिलां श्रीमांस्तमनुज्ञाय राघवम् Rāmā. vii. 38.7 (Add 1); या वैष्णवी कुमारी तु साप्यनुज्ञाय केशवम्। मन्दराद्रिं ययौ तप्तुं तपः VarāP. 90.32; प्रार्थितो दानवैरनुत्तरो भुजगपतिः ··· प्रतिष्ठध्वमित्यनुज्ञाय दानवान् ··· शनैः शनैः शिथिलीचकार भोगवलयान् NīlaVi. 83.2; असौ ··· महत्तरपौरनिकरमनुज्ञाय ···। अभिनवनगरमाससाद ĀnandRa. 3.25 (2); **1B** having given permission, having permitted राघवस्तु रथं दिव्यमिन्द्रदत्तं शिखिप्रभम्। अनुज्ञाय महाभागो मातलिं प्रत्यपूजयत् Rāmā. vi. 100.4; एवमुक्तानामेवाभिनयानां सांकर्येण प्रयोगमनुज्ञायानुक्तमपि संग्रहीतुमाह AbhinBhā. ii. 64.12 (*on* 9.163); **2** having admitted भावेष्वितरेतराभावमनुज्ञायाश्रित्य चेतरेतराभावसिद्धौ सर्वमभाव इत्युच्यते NyāyBh. 263.5 (*on* iv. 1.37); यन्नैरश्र्यं प्रकारान्तरेणाध्ययने दृष्टम्, तदनुज्ञायात्मसाधनतयापि तन्नैरश्र्यं लाघवादनुजानातु NayaVi. 29.4 (*on* i. 1.1); अन्याश्च श्रुतयो ब्रह्मणो निमित्तकारणत्वमनुज्ञायास्यैवोपादानतादि कथमिति परिचोद्य ··· ब्रह्मैवेति परिहरन्ति VedāSaṁ. 90.14.

**अनुज्ञायमान** (anu-jñāyamāna) *adj.* **1** being admitted अस्त्ययमित्यनुज्ञायमानोऽर्थः सिद्धान्तः NyāyBh. 5.7 (*on* i. 1.1); **2** being permitted अस्ति हि स्मृत्यन्तरं 'वेदमधीत्य स्नायात्' इति।··· तत्र स्नानमनुज्ञायमानं साहचर्यान्मधुमांसादीन्यपि तुल्यप्रकरणत्वादनुजानाति ManuBh. i. 159.29 (*on* 2.165); दीक्षितो न ददातीति दीक्षितस्य सर्वदानप्रतिषेधान्मधुपर्कदानमनुज्ञायमानं तद्विरुद्धं स्यात् ManuBh i. 258.30 (*on* 3.110): **3** being known (i. e. being supported) यद्यत्राभविष्यद् घटो भूतलमिवाद्रक्ष्यत ··· न च दृश्यते तस्मान्नास्तीति तेन तर्केणानुज्ञायमानम् ··· केवलमेवेदं भूतलं नेह घट इति TātpaṬ.(Vā.) 61.7 (*on* i. 1.1); TārkiRa. 201.2; नास्तीति फलद्वारेण तर्कस्यानुग्राह्यं प्रमाणं दर्शितम्। तेनानुज्ञायमानं प्रवर्तते फलं साधयति NyāyVārPari. 330.10.

**अनुज्ञायाचन** (anujñā-yācana) *n.* request for (granting) permission यः सोमं पिबति स इतरान् प्रत्यनुज्ञां याचते ते चानुज्ञां ददति। तत्रानुज्ञापनमनुज्ञायाचनम् VedāntKa. 433.14 (*on* iii. 3.25); 433.19 (*on* iii. 3 25)

**अनुज्ञायिक** (anujñāyi-ka) *m.* name of a particular type of (hermit life in) the third stage of life called *vānaprastha* (*lit.* one who seeks permission) स्वाश्रमविशेषानुष्ठानाद्विशेषधर्मो, यथा नैष्ठिकयायावरानुज्ञायिकचातुराश्रम्यसिद्धानाम् ।··· अनुज्ञायिको वानप्रस्थविशेषः VīraMi.(Paribhāṣā.) 44.16.

**अनुज्ञार्थ** (anujñārtha) *adj.* intended for (obtaining) permission किं पूर्वस्याब्रह्मत्वात्पुनरुपसरणम्। उतोक्तरीत्यानुज्ञार्थमिति संदिह्यते NyāySu.(Ja.) 143B.10 (*on* i. 1.6)

**अनुज्ञार्थत्व** (anujñārtha-tva) *n.* the state of being that which intends to convey permission सकृदुच्चरितस्य लिङ्प्रत्ययस्य विध्यर्थत्वमनुज्ञार्थत्वं चेति वैरूप्यमपि स्यात् ŚāstrDī. 7.16 (*on* i. 1.1)

**अनुज्ञार्थम्** (anujñārtham) *adv.* for the sake of (obtaining) permission भार्याद्यनुज्ञापूर्वो हि संन्यासो विहितः श्रुतौ। अतोऽनुज्ञार्थमेवाह मैत्रेयीमृषिरात्मनः BṛĀraUBhVā. ii. 4.39.

**अनुज्ञार्हानुमति** (anujñārhānumati) *f.* consent of one eligilbe to give permission स्थावरव्यतिरिक्तं स्वोपार्जितं वस्तु अनुज्ञार्हानुमतिमन्तरेणापि पित्रा प्रीत्या दातुं शक्यते Subodhi. 48.6 (*on* 2.114)

**अनुज्ञालंकार** (anujñālaṅkāra) *m.* figure of speech called *anujñā* (intended to offer censure by displaying merits) दोषस्याभ्यर्थना यत्र तत्रैव गुणदर्शनात्। क्रियते तत्र विदुषानुज्ञालंकार इष्यते AlaṅkāMañ. 187.3.

**अनुज्ञालब्ध** (anujñā-labdha) *adj.* who has obtained permission स्पृष्ट्वा पादौ नमस्कुर्याद् गुरोर्दत्त्वेति तत्फलम्। न नक्तमिति चानुज्ञालब्धस्तेन यथोदितम् ···। होमशेषं समापयेत् LaghvāśvaSm. 14.7.

**अनुज्ञावगम** (anujñāvagama) *m.* understanding of sanction स्त्रीलिङ्गे नेतराशब्देन वत्सतरीणामभिधानात् ··· विशसनादेः प्राकृतस्य कृत्स्नस्याप्यनुज्ञावगमेन तासु संदेहाभावादुक्षस्वित्युक्तम् MayūMāli. 814.8 (*on* xi. 2.12)

**अनुज्ञावचन** (anujñā-vacana) *n.* **1** expression of (granting) permission तत्रावस्थितः कृताकृतप्रत्यवेक्षणेनानुज्ञावचनेन च शक्नोत्युभावनुग्रहीतुम् ŚibaBh. 2152.26 (*on* xi. 2.45); तवानेनानुज्ञावचनेन प्रीणितोऽस्मि PañcT. (Kos.) 193.21; अनुज्ञावचनैस्तेषां मुदितो मेदिनीपतिः TriṣaŚaPuC. ii. 1.171; (अभ्यर्च्य ताभ्यामुत्सृष्टः पितृयज्ञं समारभेदिति) 'उत्सृष्टः' अनुज्ञातः ··· अत्रानुज्ञावचनात् प्रश्नोऽपि गम्यते CaturCin. iii(1). 1250.14; **2** injunction of (granting) permission देहसंबन्धमधिकृत्यानुज्ञावचनमृतावुपेयादिति परिहारः परभार्यां न गच्छेत् BrahmSūBh.(Bhā.) 142.9 (*on* ii. 3.48); संग्रामाधिकारे सर्वत्र स्मृतिष्वनुज्ञावचनानि सन्ति BālaKrī. ii. 88.11 (*on* 3.228)

**अनुज्ञावसर** (anujñāvasara) *m.* occasion of permission तत्कृते चादृष्टदोषाभावे प्रत्यक्षेणैव सहभोजनाद् व्यलीकोत्पत्तेरुपपत्तेरनुज्ञावसरो भवति TantrVā. 1058.8 (*on* iii. 5.43)

**अनुज्ञावाक्य** (anujñā-vākya) *n.* **I** statement of (granting) permission यत्कर्तारमनुजानाति तदनुज्ञावाक्यम् NyāyVār. 271.8 (*on* ii. 1.62); **II** statement of (seeking) permission कौबेराभिमुखोऽनुज्ञावाक्यं दैवे प्रकल्पयेत् MahNirvāT. 10.25; 10.29.

**अनुज्ञावाचकत्व** (anujñāvācaka-tva) *n.* the state of being expressive of permission तदेवमुपदेशे नियोज्यप्रयोजनकर्मणि व्युत्पन्नस्तानेव शब्दान् नियोक्तुं प्रयोजनकर्मण्याज्ञादौ प्रयुज्यमानानुपलभ्याध्येषणानुज्ञावाचकत्वमप्यवगच्छति TātpaṬ.(Vā.) 427.10 (*on* ii. 1.63)

**अनुज्ञाविधिमात्रत्व** (anujñāvidhimātra-tva) *n.* the state of being mere injunction of permission प्रतिग्रहाद्युपायविधेरप्यनुज्ञाविधिमात्रत्वस्य स्थापितत्वात् BhāṭṭDī. ii. 231.17 (*on* vi. 1.8)

**अनुज्ञावैयर्थ्य** (anujñā-vaiyarthya) *n.* futility of permission गुरुणा गोतमेनात्रेऽयनुज्ञा क्रियते। स्वप्रदानस्याप्राबल्येऽनुज्ञावैयर्थ्यात् TattvPrakā. 178A.3 (*on* iii. 3.45)

**अनुज्ञासमर्थानुमति** (anujñāsamarthānumati) *f.* consent of one who is eligible to give permission स्वोपार्जितेष्वपि स्थावरेषु अनुज्ञासमर्थानुमतिं

विना दानानधिकारः BālamBha. ii. 132. 26 (*on* 2.113)

**अनुज्ञासंबन्ध** (**anujñā-sambandha**) *m.* connection with consent or permission (चतुर्थकालमश्नीयादक्षारलवणं मितम्) स्थिते विशेषणसमासे विशिष्टस्यार्थस्य नानुज्ञासंबन्धः ManuBh. ii. 403.21 (*on* 11. 108)

**अनुज्ञासामर्थ्य** (**anujñā-sāmarthya**) *n.* strength of permission अनुज्ञासामर्थ्याच्च प्रार्थनापि पूर्वं कर्तव्या ManvaMu. 128. 21 (*on* 3. 210)

**अनुज्ञास्यमानत्व** (**anujñāsyamāna-tva**) *n* the state of being that which will be permitted परार्थानुमाने बोध्यानुरोधादापन्नादिकस्योदाहरणस्यानुज्ञास्यमानत्वात् PramāMī. 48.13 (*on* i. 2. 20)

**अनुज्ञेच्छावाचिन्** (**anujñecchāvāc-in**) *adj.* expressing the desire of permission अनुज्ञेच्छावाची यो ननुस्तद्योगे तिङ् नानुदात्तम् Prasā. ii. 787.8.

**अनुज्ञेय** (**anu-jñeya**) *adj.* to be accepted यथा वक्तुरभिप्रायस्तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा, न छन्दतः NyāyBh. 70.4 (*on* i. 2. 14); अयं च वाच्यवाचकभावलक्षणः संबन्धः स्वाभाविकशब्दार्थसंबन्धवादिनाप्यनुज्ञेयः NyāyVār. 266.5 (*on* ii. 1. 51); सामान्यवचनेनाहवनीयगोचरेणोख्यधारणस्याप्राप्तेस्तत्प्रापकं वचनमवश्यमनुज्ञेयम् MayūMāli. 881.11 (*on* xii. 4. 10)

**अनुज्ञैकरस** (**anujñaika-rasa**) *adj.* having the sole character of direction अनुज्ञैकरसो ह्ययमात्मा चिद्रूप एव NṛsiṁhoTāU. 2.

**अनुज्ञैषणा** (**anujñaiṣaṇā**) *f.* the seeking of or request for permission नन्वित्यनुज्ञैषणायाम् P. viii. 1.43; अनुज्ञाया एषणा प्रार्थना, अनुज्ञैषणा KāśiVṛ. *on* viii. 1.43.

**अनुज्येष्ठ** (**anu-jyeṣṭha**) *adj.* [P. vi. 2. 189; AltGr. II. 1.308] **I** who has followed the eldest one or the seniormost, next to the eldest अथ यूपस्य छेदने वक्ष्यामः ··· यद्यग्निष्ठा विच्छिद्येत प्रमायुको यजमानः ··· यदि दक्षिणा ज्येष्ठः पुत्रो यद्युत्तरानुज्येष्ठः MānŚS. 177. 14; ज्येष्ठः सुतस्ते कतमः कतमस्तदनन्तरः (v. l. तथानुज्येष्ठ एव च) MahāBhā. i. 224. 22; अनुगतो ज्येष्ठमनुज्येष्ठः KāśiVṛ. *on* vi. 2.189; **II** the eldest one who is followed (अनोरप्रधानकनीयसी) अप्रधानकनीयसी इति किम्। अनुगतो ज्येष्ठोऽनुज्येष्ठः KāśiVṛ. *on* vi. 2.189; अनुज्येष्ठः ··· उत्तरपदार्थप्रधानोऽयम्। तेन प्रधानवाचित्वं ज्येष्ठशब्दस्यास्ति Nyās. ii. 420छ.8 (*on* vi. 2. 189)

**अनुज्येष्ठक** (**anujyeṣṭha-ka**) *m.* name of a class of creatures produced by the female (called) Mātṛ ग्राहाश्चतुर्विधा ज्ञेया तथानुज्येष्ठका अपि। निष्कांश्च शिशुमारांश्च माता व्यजनयत्प्रजाः VāyuP. ii. 8. 287.

**अनुज्येष्ठतपस्विन्** (**anujyeṣṭha-tapasvin**) *m.* ascetic in the order of seniority स विद्याधरकुञ्जरः।··· अभिवाद्य ··· काश्यपप्रमुखान्मुनीन्।··· ववन्दे मातुलं मुनिम्। भर्तारमनुयान्तीभिरनुज्येष्ठतपस्विनः। देवीभिर्वन्दिताः BṛKathāŚloSaṁ. 3. 107.

**अनुज्येष्ठपत्नी** (**anujyeṣṭha-patnī**) *f.* wife next to the eldest one, younger wife ज्येष्ठानुज्येष्ठपत्नीनां भ्रातॄणां पुत्रनप्तॄणाम्। निग्रहानुग्रहौ पार्थ गार्हस्थ्यमिति तत्तपः MahāBhā. xii. 66.17.

**अनुज्येष्ठम्** (**anujyeṣṭhám**) *adv.* in accordance with seniority गवां गृहाणां रसम् ओषधीनाम् अनुज्येष्ठं वर्च आयुर् विकल्पयः। मा मा ? हिंसिषुः पितरो वर्धमानाः AV.(P.) ii. 23.1; यं कामयेतानुज्येष्ठं प्रजया ऋध्नुयादिति तस्य पूर्णमग्र्या उन्नयेत् MaiS. i. 8. 4 (i. 119. 18); VārāŚS. I. v. 2.24; अनुज्येष्ठमेवास्य पुत्रा ऋध्नुवन्ति KāṭhS. 6. 4 (i. 52.17); KapiKaS. 4. 3 (40.6); अग्नियमग्नियं पूर्णतमं योऽनुज्येष्ठमृद्धिमिच्छेत् पुत्राणाम् ĀśvaŚS. I. ii. 3. 13; अनुज्येष्ठं च ते तत्र युधिष्ठिरपुरोगमाः। चक्रुरस्त्रं महावीर्याः कुमाराः परमाद्भुतम् MahāBhā. i. 124. 22; अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुक्रमेणेत्यर्थः JaineVyā. 47. 31 (*on* i. 3. 5); KātanVṛ. *on* ii. 5.14; आनुपूर्व्ये, यथावृद्धम्, अनुज्येष्ठम् CāndraVṛ. *on* ii. 2. 2; अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुपूर्व्या भवन्तः प्रविशन्त्वित्यर्थः KāśiVṛ. *on* ii. 1.6; अनन्तरमनुज्येष्ठं देवीः संमान्य भूपतिः। वासुकिन्या महादेव्या निनाय सह यामिनीम् BṛKathāŚloSaṁ. 2.20; 18. 596; नानुज्येष्ठमयुध्यन्तेति मूलराजमिच्छवः (नृपाः) DvyāśraKā. 5.41; द्वाषष्टिरन्येऽपि शक्राश्चक्रुर्जगत्पतेः। स्नात्राङ्गरागौ पूजां चानुज्येष्ठं सोदरा इव TriṣaŚaPuC. i. 2.572; मोक्षप्राप्तमिवात्मानं मन्यमाना महामनाः। अनुज्येष्ठं निषसाद सा मध्येव्रतिनीगणम् TriṣaŚaPuC. i. 4. 797; iii. 4.40; तत्तीरे सहकारस्य नल(व)पल्लवशालिनः। छायायामतिसान्द्रायां तेऽनुज्येष्ठमुपाविशन् PāṇḍaC. 10. 7; 10.453; MalliC. 4. 153; ज्येष्ठमनुक्रम्य अनुज्येष्ठम् MugdhaBo. 6. 61 (61.15); ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् SiddhāKau. 162B.1 (*on* ii. 4. 18); अनुज्येष्ठं कार्यं कृतम्, अनुज्येष्ठं प्रणमति LaŚabdeŚe. i. 534.1.

**अनुज्योतिस्** (**anu-jyotis**) *m.* epithet of Śiva (*lit.* prevaded by refulgence) स्वयंज्योतिरनुज्योतिरात्मज्योतिरचञ्चलः ··· एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् LiṅgaP. i. 98. 93; SaurP. 41. 77.

**अनुञ्** (**an-uñ**) (Gr.) excluding the particle *u* accompanied by the indicatory sound *ñ* योऽचि वानुञि CāndraVyā. vi. 4.26 (comm. अवर्णात्परस्य रोरच्युवर्जिते यकारो वा भवति। कयास्ते, क आस्ते। अनुञीति किम्? स उ आगतः); वानुञ्यात् ŚākaṭāVyā. i. 1. 155; अस्पष्टाववर्णात्त्वनुञि वा SiddhaHe. i. 3.25.

**अनुड्डयनसामर्थ्य** (**an-uḍḍayanasāmarthya**) *adj.* not having the capacity of flying अनुड्डयनसामर्थ्यः श्राम्यति कुक्कुरो यथा RājTa.(Ka.) 8. 2931.

**अनुड्डीनसमाधिशून** (**anuḍḍīnasamādhi-śūna**) *adj.* who has grown (in perfection) of uninterrupted concentration or meditation नृपः ··· उड्डीनवद्विघ्नभयः स लग्नो ब्रह्मणि अनुड्डीनसमाधिशूनः DvyāśraKā. 10.52 (comm. अनुड्डीनोऽक्षीणो यः समाधिश्चित्तैकाग्र्यं तेन शूनो वृद्धोऽतिस्फीतसमाधिरित्यर्थः)

**अनुतंस** (**anutaṁsa**) *m.* name of a king, son of Samātaṁsa समातंसस्तु तत्सुतः।··· अनुतंसस्तदात्मजः BhaviP. 418A.14 (iii(1). 3. 30)

**अनुतक्रम्** (**anutakram**) *adv.* in the manner in which buttermilk is drunk afterwards मोदकः क्षौद्रयुतोऽनुतक्रं पाण्ड्वामये दूरगतेऽपि शस्तः SiddhYo. 8.6 (comm. अनुतक्रं तक्रानुपानम्)

**अनुतक्ष्** (**anu-takṣ-**) I. P. to create or procure for the help of उत वा यस्य वाजिनोऽनु विप्रमतक्षत ṚV. i. 86.3; अच्छिद्रा उशिजः पदानु तक्षुः TaiS. V. vi. 8.6; BaudhŚS. ii. 51. 5; अच्छिद्रोशिजः कवयः पदानुतक्षिषुः KāṭhS. 40. 6 (iii. 139. 12); आज्यं शंसिष्यन् पिता मातरिश्वा ··· उशिगसीयानुतक्षिषत् ··· इति जपित्वा ŚāṅkhāŚS. vii. 9.1.

**अनुतटतलस्थापित** (**anutaṭatala-sthāpita**) *adj.* placed on the ground near the shore कुर्वाणानां सलिलविहृतिं घोषयोषाजनानामादाय द्रागनुतटतलस्थापितान्यंशुकानि HaṁsDū.(Vā.) 44.

**अनुतटम्** (**anutaṭam**) *adv.* **AI** on the slope (of the mountain) यदेतदस्यानुतटं विभाति वनम् ŚiśuVa. 4. 39 (comm. यस्याद्रेरनुतटं तटेषु); **AII** on or along the bank (of the river) (गङ्गायाः) पारं प्राप्तस्य मित्रं तं शङ्खदत्तमपश्यतः। अन्विष्यतश्चानुतटं तस्यास्तमगमद्रविः KathāSaSāg. xii. 7. 128; सोषुपीत्यहिगणोऽनुतटम् (यस्य वहस्य) DvyāśraKā. 8. 84; **AIII** along the shore (of the sea) तस्मिन्वने निवसतामनुतटमुल्लङ्घ्य धैर्यमर्यादाम्। अबलासु निर्ममानामासीदतिरागसिन्धुरुद्वेलः PārvaPa. 3. 7; धिग्धिगम्बुधिम् ··· यस्याध्वगाः ··· दीना विवर्तितदृशोऽनुतटं प्रयान्ति Subhāṣi. 869; अनुतटमनिशं महाबलो न यदि भवानिह नाथ तिष्ठति। जलधिरभिभवेदयम् तदा जगत् YātrāPra. 7. 3; **B** on each bank गतमनुतटं पद्मे पद्मे निवेशितमाननम् ··· जलदमलिनां हंसेनाशां विलोक्य गमिष्यता SūktiMu. 15.14.

**अनुतटरुह्** (**anutaṭa-ruh**) *adj.* growing on or along the banks मन्दाकिन्याः ··· मन्दाराणामनुतटरुहां छायया वारितोष्णाः ··· संक्रीडन्ते ··· यत्र कन्याः MeghDū. *7.

**अनुतटि** (**anutaṭi**) *adv.* along the banks स्वयम् अनुतटि यस्याः स्वादु संगृह्य तोयं पृथुलफलघटीभिः प्रांशवो नालिकेराः YātrāPra. 5.22.

**अनुतन्** (**anu-tan-**) VIII. U. **1** to extend along या हृदयमुपर्षन्त्यनुतन्वन्ति कीकसाः।··· निर्द्रवन्तु बहिर्बिलम् AV. ix. 8.14; AV.(P.) xvi. 75. 4; केनापो अन्वतनुत केनाहरकरोद्रुचे AV. x. 2.16; AV.(P.) xvi. 60. 9; तव जिन ततदेहरुचिशरवण चमररुहततिः सितविहगरुचिम्। इयमनुतनुते MahāP. 23.153; **2** to carry on, to continue असंपृक्तानौ तन्वोऽसा अनु मा तन्वच्छिन्नो दिव्यस्तन्तुर्मा मानुषश्छेदि MaiS. i. 4.2 (i. 49.2); ज्योतिषे तन्तव आशिषमाशास्तेऽसा अनु मा तनु KāṭhS. 7.2 (i. 64.18); KapiKaS. 5.2 (51. 9); ĀpaŚS. iv. 16.4; MānŚS. 28.8; VārāŚS. I. i. 4.28; HirŚS. vi. 4.29 (521.14); vi. 6. 20 (538. 6); ततोऽसि तन्तुरस्यनु मा तनुहि VājaS.(K.) 2.52; KātyŚS. iii. 8.25; यजमानं वाचयेत्तन्तवे मा ज्योतिषेत्यसावनु मा तनुहि LāṭyāŚS. ii. 11. 3; DrāhyŚS. vi. 3.9; तस्मात् संजनयेत् कोशं संहृत्य परिपालयेत्। परिपाल्यानुगृह्णीयाद् (v.l. अनुतनुयाद्) एष धर्मः सनातनः MahāBhā. xii. 131.2.

**अनुतन्त्र** (**anu-tantra**) *n.* **1** subsidiary text which follows the basic text (i. e. Vārttika) नित्याः शब्दार्थसंबन्धास्तत्राम्नाता महर्षिभिः। सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः VākyaP. 1.23 (comm. अनुतन्त्रं वार्तिकम्); ततोऽत्र मूलतन्त्रस्य कर्ता पश्चिमतीर्थकृत्। गौतमश्चानुतन्त्रस्य MahāP. 1. 201; YaśasCam. ii. 35.5 (comm. अनुतन्त्रैः वार्त्तिकैः); **2** a particular kind of coitus प्रस्तुत्य ··· दण्डप्रदानानुतन्त्रप्रवृत्ताः स्मरसूत्रविवरणवतीस्तास्ताः कथाः YaśasCam. ii. 35. 5 (comm. दानादनन्तरं अनुतन्त्रे पश्चात्सुरते प्रवृत्ताः)

**अनुतन्त्रम्** (**anutantram**) *adv.* in accordance with the normal procedure, in pursuance of the normal procedure अनुतन्त्रमुक्थप्रणयौ नाना षोडशिसामनी करोति NidāSū. 102.5 (6. 6); यज्ञसामान्यादहीनेभ्यः तत्र श्यैतमनुतन्त्रम् NidāSū. 104. 7 (6. 7); यान्यायुषः सामानि तानि सामानि, अनुतन्त्रं यान्यन्यानि पृष्ठानि NidāSū. 119. 24 (7. 4); अनुतन्त्रमुक्थप्रणयः NidāSū,

120.13 (7.4)

**अनुतन्वती** (anu-tanvatī) *adj.* (*f.*) continuing तं भार्या प्रत्युवाचेदं धर्ममेवानुरुध्यती (v. l. अनुतन्वती) MahāBhā. iii. 183. 4.

**अनुतप्** (anu-tap-) IV. Ā. (rarely P.) **1** to annoy, to trouble यान॒ग्नयो॑ अ॒न्वत॑प्यन्त॒ धिष्ण्याः AV. ii. 35.1; AV. (P.) i. 88.3; TaiS. III. ii. 8. 3; MaiS. ii. 3.8 (ii. 36.16); **2A** to grieve at, to worry न हि मृत्युं तथा राजा श्रुत्वा वै सोऽन्वतप्यत MahāBhā. i. 38. 25; सततं स्मान्वतप्यन्त तमेव भरतर्षभम् । पौरजानपदाः सर्वे MahāBhā. i. 119. 4; अनुतप्ये भृशं तात तव घोरेण कर्मणा MahāBhā. iii. 192. 18; मा भवन्तोऽनुतप्यन्तां सौहृदान्निधनेन मे MahāBhā. ix. 64.27; एवं सांसिद्धिके लोके किमर्थमनुतप्यसे MahāBhā. xi. 3. 14; मा पुत्रमनुतप्यथाः MahāBhā. xii. 29.21; xii. 147. 15; स नराधिपः। अन्वतप्यच्च संस्मृत्य पुत्रम् MahāBhā. xv. 3. 7; अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य तापसम् Rāmā. ii. 37.11; न चापि चानुतेपे (सः) BuddhaC. 5. 15; उत्तममध्यमावरेषु च कर्मसु तज्जातिकमध्यक्षं कुर्यात् ... यमुपहत्य न राजानुतप्येत ArthŚā. i. 145. 3 (2.7); किं मौग्ध्यादनुतप्यसे BhāvŚ. 38; निभृतैर्व्यतपन्ते (v. l. विविधैरनुतप्यन्ते) दयितानुनयैर्मनस्विनः Vikramo. 3. 5; तेनानिमित्तेन तथा न पार्थस्तयोः (तूणयोः) यथा रिक्ततयानुतेपे Kirātā. 17.40; (राजसेवकः) व्यसने परि(v. l. ऽन्वनु)तप्यते NitiSā. 5.39; लब्धरन्ध्रा सुरन्ध्रस्य कोपश्रीः ...। परप्राणापहारार्थे प्रवृत्ता नान्वतप्यत Kapphiṇā. 16. 92; किं पृथग्जन इवानुतप्यसे RāmC. 2. 5; पितरावन्वतप्येताम् BhāgP. x. 44.18; बलिस्तु हरिभक्तत्वान्न किंचिदन्वतप्यत GaṇeP. ii. 30.1; एकोऽनुतेपे दाशः सन् KathāSaSāg. vi. 1.131; कुर्वन्तं द्विषतां हर्षमात्मानं नयनिन्दितम् । बुद्ध्वा को नानुतप्येत KīcaVa. 3.30; म्लेच्छान्धकारविध्वस्ताः मित्रदर्शनवर्जिताः। ब्राह्मणा अन्वतप्यन्त रात्रौ पद्माकरा इव RājTa.(Prā.) 896; किमेवमनुतप्यते सर्वज्ञः TripuDi. 2.8(3); म्लेच्छबलात् ... भयम्। तस्मिन् संभावयन्भूरि शिवराजोऽन्वतप्यत ParamāKā. 86.11; समयोपनतमुपेक्षमाणाः पश्चादनुतप्यामहे AdbhuDa. 8.22(12); (pass.) to be distressed नो राज्यायातप्त केनापि पश्चाद् भ्रात्रायं तत्किं जनोऽद्यान्वतप्त DvyāśraKā. 8. 20; भवद्भिर्मानुतप्यताम् PrabhāC. 158.23; अनुतेपे च तेपे च प्रभुणामुना ParamāKā. 86. 19; (*caus.*) to cause distress, to cause pain or affliction विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् RaghuVa. 8. 89; संबन्धे सति पाप्मायं स्वफलेनानुतापयेत् BṛĀraUBhVā. iv. 4.1290; **2B** to repent, to regret त्वाम् ... वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः MahāBhā. iii. 28.4; पाण्डवास्तु यथा त्वयि। नान्वतप्यन्त कौपीनं तावत्कृत्वापि दुष्करम् MahāBhā. v. 71.10; viii. 1. 7; तदानुतेपे सुरराजपुत्रः MahāBhā. viii. 49. 88; युधिष्ठिरोऽवादीत्। पुनरनुतापमवापत् पापं कृत्वानुतप्येत UpadeŚ. 28; गिरमनृतां युधिष्ठिरोऽवादीत्। (pass.) to be repented नेण् तपोऽनुतापे। अन्वतप्त MugdhaBo. 24. 4 (141.21); अन्वतप्त पापिना PrakriKau. ii. 431. 2; अन्वतप्त पापेन SiddhāKau. 465B.13 (*on* iii. 1.65); **2C** to suffer apparently दर्शितविषयत्वात्सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽनुतप्यते YogBh. 81. 9 (*on* 2.17); SāṁkhyaPraBh. 7.15 (*on* 1.1); आत्मत्वेनाभिप्रतीतस्तद्गतेन सुखदुःखेन तद्वन्तमात्मानमनुमन्यमानोऽनुतप्यते Bhām. 219. 19 (*on* i. 3. 19); 392. 5 (*on* ii. 2. 10)

**अनुतप्** (anu-tap-) I. P. (rarely Ā.) **1** to vex, to annoy, to burn continually म॒म॒ दिप्स॑न्ति॒ ये ध॒ना॑। रा॒त्रि॒ हि ताननु॑तप॒ यथा॑ स्ते॒नो न वि॒द्यते॑ AV. xix. 49. 7; तदद्य मानुतपति यत्कृतं न मया पुरा MahāBhā. iv. 395*; जितेन्द्रियं नानुतपन्ति रोगाः AṣṭāSaṁ. i. 20.20 (1. 5); **2A** to repent तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् MahāBhā. v. 47. 12; प्रतिबुद्धस्ततो राजा ...। दीक्षां जग्राह चौरोऽपि तज्ज्ञात्वानुततताप सः PārśvC. 2. 496; **2B** to grieve at अथास्माच्छ्रीरपाक्रामत् ... सागच्छत्पाकशासनम्। अथ सः (बलिः) अन्वतपत्पश्चात् MahāBhā. xii. 91. 22; **3** to practise penance यण् ... तपेस्तपःकर्मकात् कर्तरि भवति। तप्यते तपस्तापसः।... रुचादिरत्रार्थेऽनोस्तु न स्यात्। अनुतपते तपस्तापसः KātanVṛ. *on* iii. 2.31.

**अनुतपत्** (anu-tapat) *adj.* regretting, repenting केचिद्वसन्तोऽनुतपन्त एके BṛDharmaP. i. 37.77; बालोऽप्यनुतपन्नन्तः प्रगल्भमिदमब्रवीत् ŚivaP. vii(1). 34. 33 (542B.1); अद्य शुने भक्षं न दत्तमित्यनुतपता ... न तस्य दर्शनं लब्धम् CaitaCa. 230.18(10)

**अनुतप्त** (anu-tapta) *adj.* [*f.* -ā] **1** heated कुम्भीमनुतप्तां प्रावृत्योष्माणं गृह्णीयात् SuśruS. iv. 32. 5; **2A** afflicted (said of asterisms) सांघातिकेऽनुतप्ते ...। दान्तो दूर्वां जुहुयात् YogYā. 9.16; **2B** distressed, aggrieved, tormented पुत्रकृतावेन सोऽनुतप्तो महामुनिः BhāgP. i. 18. 49; इष्टे विप्रयोगादिभिर्दुःखैरनुतप्ताभिः ... धात्रीभिरनवरतमुपचर्यमाणस्य ... पञ्चवर्षाणि तस्यान्तःपुरेऽतिचक्रमुः TilaMañ. 78.9; वियोगकृशाप्यनुतप्ता चाभरणानि त्यजति Loc. 76.22 (*on* 2. 6); अनुतप्तः प्रियाबन्धुर्वीरेणाभिदधे तदा PrabhāC. 127.25; अत्यर्थमनुतप्तेयम् BrahmP. 92.46; **2C** who has repented माता ते ...। अनुतप्तास्मि KathāSaSāg. vii. 8.164; तार्क्ष्योऽत्र सोऽनुगतश्चैष दशामिमाम् । तप्तो व्यचिन्तयत् KathāSaSāg. xii. 23.177; पूर्वमनङ्गीकृतप्रणयामनुतप्ताम् ... प्रियतमः ... चाटुकं कुर्वाणः ... इति निदर्शनाध्वनिः Kāvyānu.(He.) 59. 14; स्वतनुजवनराज्या पुष्पवल्याश्लिषन्त्या ह्यनुचितकृतसङ्गोऽस्मीति शैलोऽनुतप्तः Golā. 249. 25 (30.8); ईर्ष्यामानानन्तरमनुतप्ताया नायिकायाः सखीमागतां प्रति ... नायकस्य प्रश्नः Kuval. 149(12); अनुतप्त इवाधुना व्यधादखिलं कर्म तदद्भुतं स्मरः ŚivLī. 15. 9; मानमकार्षीः संप्रति कथमनुतप्तासि ŚṛṅgāMañ.(A.) 28.16; अप्रियं श्रावयित्वा प्रागज्ञानादनुतप्तया प्रियं निवेद्यते भूयस्तापस्या JānaPa. 7. 44.

**अनुतप्तता** (anutapta-tā) *f.* the state of being one who has repented, repentance पापिनः केऽपि तन्मुख्या ददृशुः स्वामिनं हतम् ।... वदन्तम् ... अनुतप्ततताम् RājTa.(Ka.) 8.1334.

**अनुतप्ता** (anutaptā) *f.* name of one of the seven rivers in the Plakṣa region तेषां नद्यस्तु सप्तैव ...। अनुतप्ता शिखी चैव ViṣṇuP. ii. 4.11; KūrmaP. 416.2; BrahmP. 20.11; ŚivaP. v. 18.27 (426A. 12); अनुतप्ता च नाम्नैव नदी संपरिकीर्तिता VāyuP. i. 49.90; अनुतप्ता सुखी चैव ... सप्तैताः सरितां वराः BrahmāṇḍP. i. 19. 19; वर्षनद्योऽपि सप्तात्राप्यनुतप्ता शिवामृता ĪśānŚiPa. ii. 17. 99.

**अनुतप्य** (anutap-ya) *ger.* having grieved for राज्यनाशं सुहृन्नाशं सुतनाशं च भारत। अनुतर्षुल(v. l. अनुतप्योक्त Calcutta Ed.)मेवैतद्दुःखं भवति भारत MahāBhā. xi. 7.17; स चानुतप्य तच्छोकात् ...। विद्याधरेश्वरः पत्न्या सह पञ्चत्वमाययौ KathāSaSāg. x. 3.156.

**अनुतप्यतेतराम्** (anutapyate-tarām) *ind.* [*comp.* of Pre. pass. 3rd person sing. of अनुतप्] highly afflicted with grief श्रीमाधवे गच्छति राजमौलितां द्विषां समूहैरनुतप्यतेतराम् AlaṅkāMañ. 66.5.

**अनुतप्यमान** (anu-tapyámāna) (anu-tápyamāna MaiS.) *adj.* [*f.* -ā] **i** who has been distressed or sorrowful य॒ज्ञप॑ति॒मृष॑य॒ एन॑साहु॒र्निर्भ॑क्तं प्र॒जा अ॑नुत॒प्यमा॑नम् AV. ii. 35. 2; यज्ञपतिमृषय एनसाहुर्निर्भक्ता भागादनुतप्यमानाः AV.(P.) i. 88.1; यजमानमृषय एनसाहुर्विहाय प्रजामनुतप्यमानाःMaiS. ii. 3.8 (ii. 36. 20); य॒ज्ञप॑ति॒मृष॑य॒ एन॑सा आ॒हुः। प्र॒जा निर्भ॑क्ता अनुत॒प्यमा॑नाः TaiS. III. ii. 8. 2; उदयनतनयः ... मदनम(ञ्जूकया ? ञ्जुकायाः) कृतेऽनुतप्यमानः AvantiKa. 125.3; सानुतप्यमाना का मे गतिरिति विमृशन्ती कामपि वृद्धप्रव्राजिकाम् ... अपश्यत् DaśKuC. 113.10; महापातकसमूहेनेवात्यन्तमन्तरानुतप्यमानस्य ... मम ... क्षयमगाद्रजनी TilaMañ. 253.1; सः ... कलुषेणानुयतानुतप्यमानः। ... नीपवनं समाससाद ŚivLī. 3. 41; **ii** repenting, regretting स योगतापसः ... आत्मनो मृगत्वकारणम् ... अनुस्मृत्य भृशमनुतप्यमान आह BhāgP. v. 8. 28.

**अनुतमाम्** (anu-tamā́m) *adv.* most fittingly, most agreeably रा॒ज॒न्य॒बन्धवो मनु॒ष्याणामनुत॒मां गोपायन्ति ŚatBr. X. v. 2. 10.

**अनुतमालखण्ड** (anu-tamālakhaṇḍa) *adj.* resembling the grove of *tamāla* trees किमिदमुत्तरेण तरङ्गमालिनमनुतमालखण्डमाखण्डलधनुःसहस्रानुकारि कपिशयति गगनतलम् PrasaRā. 7.9(5) (*but* comm. तमालवृक्षसमूहसमीपम्)

**अनुतर** (anu-tara) *m.*, *n.* **i** charge, fees दृष्ट्वा त्वया विशेषक वलयकलापी शशिप्रभाभुजयोः। बाढं भणभण कीदृक् कानुतरः सोमयादत्तः KuṭṭaMa. 343; **ii** fare आतारानुतरावप्यत्र। 'आतरस्तरपण्यं स्यादनुतरमन्वगमन्वक्षम्' इति वोपालितः PadCan. 2.239 (285.7)

**अनुतर्क्** (anu-tark-) X. U. **i** to think सूतं तप्तहेमविभूषितम्। दृष्ट्वा पार्थः ... देवमेवान्वतर्कयत् MahāBhā. iii. 43. 9; **ii** to regard as or to take for त्वामर्थिनं विप्रसुतानुतर्कये BhāgP. viii. 18.32.

**अनुतर्ष** (anu-tarṣa) *m.* **1A** liquor which removes thirst and mental depression अनुतर्षस्य मात्रा सा यया नो दूष्यते मनः CaraS. vi. 24.148 (1941 Ed.) (comm. तृषायां मनोदैन्यमात्रहन्तृ यन्मद्यं भवति तदनुतर्षसंज्ञं भवति); **1B** drinking spirituous liquor सरकोऽनुतर्षे ...। अनुतर्षे मद्यपाने वाच्ये Liṅgānu.(He.) 148. 2; **2** wish, desire तस्य परामुपकर्तुकामतामवेक्ष्य बोधिसत्त्वस्तत्प्रियहितकामनया प्रदानानुतर्षप्राबल्यमस्मै प्रकाशयन्नुवाच JātaMā. 39. 18 (7. 33(2)); **3** thirst सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन। ते मुहूर्तमथ मूर्तमपीप्यन् प्रेम मानमवधूय वधूः स्वाः ŚiśuVa. 10.2; *n.* liquor अथ नपुंसकलिङ्गः।... अर्पिशकिल्बिषानुतर्षार्षिषम् Liṅgānu.(He.) 87. 9 (comm. अनुतर्षं मद्यम्); [Kośas give *anutarṣa* as a synonym of the following — *abhilāṣa*, AnekāK. 916; *kādambarī*, KośaKaTa. 1. 7114; *galvarka*, AbhidhāRaMā. 2.172; *caṣaka*, AbhidhāRaMā. 2.172; AnekāK. 916; *tṛṣṇā*, DharK. 2654; *maṇḍa*, KośaKaTa. 1. 7114; *śuṇḍā*, KośaKaTa. 1.7114; *saraka*, AbhidhāRaMā. 2. 172; *surā*, AnekāK. 916; *surāpānapātra*, DharK. 2654; Kośas also give the meaning of *anutarṣa* as — *abhilāṣa*, TrikāŚe. iii. 3.435; AnekāSaṁ. 4.317; ViśvaPra. 173.29; MediK. 184.50; ViśvaLoK. 383.32; ŚabdaRaSaK. 333.13;

*caṣak ı*, AnekāSaṁ. 4.317; NānārthāSaṁ. iii. 9.29; NāmŚil. 1829; *tṛṣ*, ŚabdaRa.(Vā.) 4410; *tṛṣā*, AnekāSaṁ. 4.317; *tṛṣṇā*, ViśvaPra. 173.29; MediK. 184.50; ViśvaLoK. 383.32; ŚabdaRaSaK. 333.13; *pānecchā*, TrikāŚe. iii. 3.435; *madya*, NānārthāSaṁ. iii. 9.29; NāmŚil. 1829; *madyap(r)āśana*, ŚabdaRa.(Su.) 3.338; *surā*, ŚabdaRa. (Vā.) 4410; *surāpānapātra*, ViśvaPra. 173.29; MediK. 184.50; ViśvaLoK. 383.32; ŚabdaRaSaK. 333.13; KalpaK. 483.196 gives *anutarṣa* as the meaning of *saraka* ]

**अनुतर्षण** (anu-tarṣaṇa) *n.* drinking vessel (used for drinking spirituous liquor) चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् AmaK. 2015; Hārāva. 63; AbhidhāCin. 903; ParyāŚaRa. 1607; KośaKaTa. 1.7124; KalpaK. 213.98; [distributing liquor, MW.]

**अनुतर्षपद** (anutarṣa-pada) *n.* [Inst.] under the pretext of liquor सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन। ते मुहूर्तमथ मूर्तमपीप्यन् प्रेम मानमवधूय वधूः स्वाः ŚiśuVa. 10.2.

**अनुतर्षम्** (anutarṣam) *adv.* in accordance with thirst भोजनं भोजयेन्मद्यमनुतर्षं च पाययेत् CaraS. vi. 24.147 (1941 Ed.)

**अनुतर्षिणी** (anutarṣ-iṇī) *adj.* (*f.*) hankering after संकल्पो मानसी वृत्तिः विषयेष्वनुतर्षिणी MahāP. 21.25.

**अनुतर्षुल** (anu-tarṣula) *adj.* which causes one to hanker अनुतर्षुलमेवैतद्दुःखं भवति MahāBhā. xi. 7.17; अनुतर्षुल एवार्थः स्वादु गाङ्गमिवोदकम् MahāBhā. xii. 171.28.

**अनुतलिमम्** (anutalimam) *adv.* on the floor (जीवकस्वामी) अनुतलिममवस्थापितमणिपादुकायुगलम् ... कौतुकागारं कमलदृशा सहागाहत GadyCin. 74.9.

**अनुतस्** (anu-tas) *adv.* afterwards द्वात्रिंशत्संख्यया शिष्या भविष्यन्ति ममानुतः PrabhāC. 15.23.

**अनुतस्थिवस्** (anu-tasthivas) *adj.* who has performed ईश्वरोऽपि दिवसात्ययोचितं मन्त्रपूर्वमनुतस्थिवान्विधिम् KumāSaṁ. 8.50.

**अनुताप** (anu-tāpa) *m.* **1** repentance, remorse, dismay दत्त्वा न पश्चात्कुरुतेऽनुतापम् ... सत्पुरुषार्यशीलः MahāBhā. v. 33.94; (कृतं पापं कल्याणेनोपहन्यते) ख्यापनेनानुतापेन MahāBhā. xii. 8*(1); ख्यापनेनानुतापेन प्रायः पापं विनश्यति MahāBhā. xiv. App. I. 4(240); तथानुतापात्कर्मणो जन्मनश्च ... देवैः स्वर्गं प्रापितः ... कृष्णः MahāBhā. xvi. 28*(1); तपोऽनुतापे च P. iii. 1.65; JaineVyā. ii. 1.56; ŚākaṭāVyā. iv. 3.42; SiddhaHe. iii. 4.91; MugdhaBo. 24.4 (141.20); ख्यापनेनानुतापेन तपसाध्ययनेन च। पापकृन्मुच्यते पापात् ManuSm. 11.227 (ManuBh. चित्तपरिखेदः, ManvaMu. पश्चात्तापेन); ViṣṇuDhaP. ii. 73.231; अनुतापाद्य(पो य)दा पुंसां(सो) भवेद्वै पापिनः किल। प्रायश्चित्तं तदा देयमित्याह भगवान्यमः BṛYamaSm. 4.28; विवक्षितमनुक्तमनुतापं जनयति Śāk. 3.21(9); कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते। प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ViṣṇuP. ii. 6.40; BrahmP. 22.38; अनुतापाच्च कर्मणः।... शुध्येच्च ब्राह्मणो दोषात् BrahmāṇḍP. iii. 7.78; नित्यं प्राणाभिघातात् प्रतिविरम कुरु प्राक्कृतस्यानुतापम् Nāgā. 5.24; अनुतापः पश्चात्तापः KāśiVṛ. *on* iii. 1.65; RāmC. 13.80; वातातपौ न सेवेत अनुतापं च वर्जयेत् BhaviP. 898A.6 (iv. 205.131); महानन्दाऽतिविस्मिता। अनुतापम् ... प्रपेदे ŚivaP. iii. 26.43 (326A.5); v. 16.30 (424A.14); सत्यं सत्यप्रतिज्ञानां नानुतापः प्रतिश्रुते RāmāMañ. 61.6; ततोऽनुतापेन मया महाव्रतमगृह्यत KathāSaSāg. i. 2.14; vii. 3.174; एको वनेऽस्मिन्निति नैव कार्यस्त्वया मयि स्नेहमयोऽनुतापः DaśāvaC. 9.35; योऽध्यस्मद्दासीत्त्वदयन्नधित्वद्यो मापयन्कोऽत्र तवानुतापः DvyāśraKā. 2.18; अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति RājTa.(Ka.) 8.3200; स्वामिना प्रतिपिद्धोऽस्मि सर्वथेति महीयसा। अदूयतानुतापेन TriṣaŚaPuC. i. 6.203; iv. 3.155; त्वम् ... अनुतापमवाप्स्यसि PariPar. 2.406; मातङ्गसंगरे यस्मिन् वीरसिंहेऽस्तमागते। अपरागोऽनुतापश्च विधिना प्रापि कर्कशः PṛthvīVi. 5.70; स्वस्तिकौ पादौ। तद् वक्षः स्वस्तिकं मतम्। अनाभुग्नांसमेतच्च योज्यं लज्जानुतापयोः SaṁgīRa. iv. 199.4 (7.582); KīrtiKau. 7.64; कोपानुतापाभ्यां संपृक्तः काश्यपीपतिः MalliC. 1.455; दुष्कृतेष्वनुतापेन चित्तरत्नस्य शोधनम् SamarāSaṁ. 4.487; अहो ममाविमर्शद्दुरनुतापात् फलेग्रहिः PrabhāC. 11.29; अनुतापस्य पापनाशकर्तां दृढयति ManvaVi. 1458.21 (*on* 11.229); तत्काल इदं न कृतमिदं न कृतमित्यनुतापाद् विलापः NāṭaLaRaK. 2470; BhāvPra.(Śā.) 224.12(8); कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ŚārṅgaPa. 714; अत्र व्रतकरणासमर्थस्यानुतापादिनापि शुद्धिमाह यमः DīpKa. 109.30 (*on* 3.327); मुथहारिगा चेद् दुर्बुद्धिवृद्धिः स्वकृतेऽनुतापः TājiNī. 2(2).10 (196); तपतेश्लेश्विण् न स्यात्कर्मकर्तर्यनुतापे च PrakriKau. ii. 431.2; SiddhāKau. 465B.13 (*on* iii. 1.65); TristhaSe. 267.12; CaitaCa. 150.12(6); केवलविद्याकामाद्धि विद्यावैकल्यकृतेनानुतापेन युक्तोऽधिकारी विशिष्यते ŚivārkaMaDī. i. 478.17 (*on* i. 3.33); VīraMi.(Vyavahāra.) 7.12; मा स्म मनसि व्याधानुतापं कृथाः RasGaṅ. 670.13; BhāmiVi. 1.65; मर्माण्यावेद्य दुष्टेऽस्मिन्ननुतापमुपेयुषा। ... शूलमुत्पादितं त्वया AlaṅkāMañ. 211.2; ख्यापनानुतापाध्ययनतपांस्यपि पापनाशकानि BālamBha. iii. 202.16 (*on* 3.327); युधिष्ठिरः ... अनुतापमवापत् UpadeŚ. 28; **2** distress, grief, sorrow मोहतः कष्टमनुतापं प्रपद्यते PadmP.(Ra.) 39.209; अस्मिन्प्रभौ त्रिभुवनस्य निकारलेशसंभावनापि कुरुते परतोऽनुतापम् HarVi. 8.16; सा चानुतापं युवती प्रपेदे SkandP. iii(3). 20.66; अलमित्यनुतापेन भर्त्रा त्वमपि रंस्यसे BrahmP. 205.12; दिनैस्तेनानुतापेन राजा पञ्चत्वमाययौ KathāSaSāg. vi. 8.20; किमर्थमनुतापोऽयम् SamarāSaṁ. 3.292; RasāSu. 100.3 (2.8); तावान्न मे सदनदाहकृतोऽनुतापो यावांस्तु पुस्तकविनाशकृतो मम स्यात् ŚaṅkaDigVi.(Mā.) 14.140; अशक्यप्रतीकारे विनष्टे वस्तुन्यलमनुतापेन BhartṛNi. 3.6(1); अपराधादितोऽपि स्यादनुतापो विषण्णता BhaktiRaSi. ii. 4.10; अधरद्युतिरस्तपल्लवा मुखशोभा शशिकान्तिलङ्घिनी। अकृतप्रतिमा तनुः कृता विधिना कस्य कृते मृगीदृशः। अत्र तदप्राप्तिर्विभावः। अनुतापादय आक्षेप्या अनुभावाः RasGaṅ. 102.1; इष्टाद्विद्विराजगुर्वाद्यपराधादिजन्योऽनुतापो विषादः RasGaṅ. 112.1; **3** heat यदार्द्रविरहो रामः प्रापितः प्राणसंशयम्। नूनं तेनानुतापेन जग्मुर्जलदराजयः RāmC. 1.10; बहवो दुर्मनसः कपिप्रवीराः। अनुतापमिव प्रपेदिरेऽन्ये बिलपातालविनिर्गमग्रहेण RāmC. 13.80; सः ... तथा पपौ तामपि दिव्यसिन्धुम्। कौतूहलात्प्रेरयतस्तमासीद्गङ्गाधरस्यापि यथानुतापः ŚivLī. 12.89; हरिचन्दनद्रुवाटो हरतादामूलमस्मदनुतापम् LalitāStaRa. 17; **4** anger इहानुतापो भगवन्विमुच्यताम् NavaSāC. 13.58; अनुतापः पितुस्तीव्रं विषं दहति यं सुतम्। जपादि विफलं तत्र BṛDharmaP. i. 2.19; एषः ...। वाच्यतामनुतापेन प्रयातः सत्यलोभयोः RāmāMañ. 66.10; **5** type of an act of a drama in which repentance is depicted कथान्तरेऽनिरूप्यमाने(?णे) यथाकार्यापेक्षितया संहरणं तत्संवरणम्। यथानुतापे NāṭaLaRaK. 974; cf. **अनुतापाङ्क**; [Kośas give *anutāpa* as the meaning of the following words — *anuśaya*, AmaK. 2631; NānārthaMa. 1363; ViśvaLoK. 273.121; *ambarīṣa*, MediK. 184.49; ŚabdaRaSaK. 334.2; *kaukṛtya*, TrikāŚe. iii. 3.309; ViśvaPra. 122.89; MediK. 126.81; ViśvaLoK. 266.82; Kośas also give the following words as the synonyms of *anutāpa* — *anuśaya*, AbhidhāRaMā. 4.31; AbhidhāCin. 1378; KośaKaTa. 1.1983; *uddiṣṭa*, KośaKaTa. 1.1983; *paścāttāpa*, AmaK. 412; AbhidhāRaMā. 4.31; AbhidhāCin. 1378; ŚabdaRa.(Su.) 6.6; KośaKaTa. 1.1983; *vipratisāra*, AbhidhāRaMā. 4.31; AbhidhāCin. 1378; ŚabdaRa.(Su.) 6.6; KośaKaTa. 1.1983; *vipratīsāra*, AmaK. 412; ŚabdaRa.(Su.) 6.6; KośaKaTa. 1.1983; *visūraṇa*, KalpaK. 237.24; *visūritā*, ŚabdaRa. (Vā.) 3713 and following words as the meaning of *anutāpa* — *anubandha*, NānārthSaṁ. 4.36; *paścāttāpa*, NānārthSaṁ. 4.36; *vipratisāra*, Vaija. 98.185]

**अनुतापक** (anutāpa-ka) *m.* remorse, repentance समाः स्युर्विप्रतीसारपश्चात्तापानुतापकाः ŚabdaRa.(Vā.) 1960; (anu-tāpaka) *m.*, *n.* deed which causes repentance कौकृत्यं त्वनुतापके KośaKaTa. 2.7450.

**अनुतापकला** (anutāpa-kalā) *f.* slight (*lit.* a bit of) repentance मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह BhāgP. iii. 15.36.

**अनुतापतस्** (anutāpa-tas) *adv.* due to repentance अनिर्वाहात्प्रतिज्ञायास्त्यागे भूयोऽनुतापतः। व्रीडा BhāvPra.(Śā.) 19.4(1)

**अनुतापन** (anu-tāpana) *adj.* causing misery इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने (v.l. द्विषच्चित्तानुतापने)। प्रकाशेते Rāmā. iv. 3.14; *n.* the causing of repentance गुरोरपीमां भणदोष्ठकण्ठं निरुक्तिगर्वच्छिदया विनेतुम्। श्रमः स्मरस्यैव भवं विहाय मुक्तिं गतानामनुतापनाय NaiṣC. 10.132; *m.* name of one of the sixtyone sons of Danu सुता दनोरेकषष्टिस्तेषां प्राधानिकान् श्रृणु।... पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः BhāgP. vi. 6.31.

**अनुतापपावक** (anutāpa-pāvaka) *m.* fire in the form of repentance अधुनानुतापपावकमध्यगता पच्यमानसर्वाङ्गी।... जीवाम्युच्छ्वासमात्रेण KuṭṭaMa. 726.

**अनुतापप्रयुक्त** (anutāpa-prayukta) *adj.* caused by repentance मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत। अनुपाय(v.l. अनुताप)प्रयुक्तानि मा स्म तेषु मनः कृथाः MahāBhā. v. 34.6.

**अनुतापभाज्** (anutāpa-bhāj) *adj.* **1** experiencing heat सखीसमीपेऽपि सखेदवृत्तिश्चन्द्रातपैरप्यनुतापभाजा। देहेन वैदेहसुता निनाय दिनानि दीना कतिचित् कथंचित् JānaHa. 7.33; **II** repenting अयं पिशाचलोकोऽत्र वसन्ति पिशिताशनाः। दत्त्वानुतापभाजो ये नो नो कृत्वा ददत्यपि SkandP. iv. 8.11.

**अनुतापयुत** (anutāpa-yuta) *adj.* [*f.* -ā] filled with repentance, repenting यूयमज्ञानतः प्राप्ताः पापानि सत्यभाषिणः। अनुतापयुता यस्मादनुग्राह्या

मया ततः PadmP. iv. 88. 45; निरस्तो मन्युना कान्तो नमन्नपि यया पुरः। सानुतापयुता दीना कलहान्तरिता भवेत् StavMā. 278.14.

**अनुतापरत** (anutāpa-rata) *adj.* engrossed in repentance पतितस्य च विप्रस्य अनुतापरतस्य च।… प्रायश्चित्ती(?त्तं) भवेत्तदा BṛYamaSm. 4.40.

**अनुतापवत्** (anutāpa-va(n)t) *adj.* **i** having repentance or remorse, repentant जेत्रे च येन जितं तस्मै … क्षमी चानुतापवान् पुनर्दद्यादित्यवसेयम् BālaKrī. i. 272. 26 (*on* 2.204); भद्र दृष्टस्त्वयाकार्यबीजद्रुकुसुमोद्गमः। स प्राह देवि दृष्टोऽयं सुष्ठु तेनानुतापवान् SamarāSam. 9. 594; **ii** having grief देवदत्ताख्यस्तस्यैकस्तनयस्तदा। अभूद्गोविन्ददत्तस्य नैर्घृण्येनानुतापवान् KathāSaSāg. i. 7. 51.

**अनुतापविदित** (anutāpa-vidita) *adj.* known through great trouble (i. e. learnt with effort) यतेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः BhāgP. iii. 15.47.

**अनुतापविहीन** (anutāpa-vihīna) *adj.* devoid of repentance कपटस्य शठस्यापि दुष्टस्याप्यविवेकिनः। अनुतापविहीनस्य निष्कृतिर्नैव विद्यते GaṇeP. i. 32.28.

**अनुतापव्यञ्जकत्व** (anutāpavyañjaka-tva) *n.* the state of being suggestive of regret (मुखम् … कथमप्युन्नमितं न चुम्बितं तु) अत्र 'तु' इति निपातस्यानुतापव्यञ्जकत्वम् SāhiDa. 231. 11.

**अनुतापव्यथित** (anutāpa-vyathita) *adj.* distressed because of repentance व्रीडानुतापव्यथितोऽथ पाण्ड्यः … प्रत्युद्ययौ ŚivLī. 21.45.

**अनुतापशिखिन्** (anutāpa-śikhin) *m.* fiire in the form of repentance येनानुतापशिखिना न परिप्लवध्वे HarVi. 12.76.

**अनुतापश्रवण** (anutāpa-śravaṇa) *n.* mention of repentance अथ … अननुतप्तविषयं स्मार्तप्रायश्चित्तम्। इतरविषयं तु प्रकृतमिति चेत्। न। स्मार्तप्रायश्चित्तेऽप्यनुतापश्रवणात् VīraMi.(Bhakti.) 59. 27.

**अनुतापसंतप्त** (anutāpa-santapta) *adj.* tormented by or afflicted with repentance स्तेयं च कामतः कृत्वा … अनुतापसंतप्तो मन्त्रेशं कापिलं जपेत् JayāS. 25. 28.

**अनुतापसमन्वित** (anutāpa-samanvita) *adj.* associated with repentance यस्तु रागादिनिर्मुक्तो योऽनुतापसमन्वितः।… विष्णुस्मरणतत्परः। महापातकयुक्तो वा युक्तो वा सर्वपातकैः। सर्वैः प्रमुच्यते सद्यः BṛNāraP. 28. 96; नन्दी … बाणं प्रोवाच दुःखितम्।… अनुतापसमन्वितम् ŚivaP. ii(5). 56.3 (289B. 15)

**अनुतापहताशय** (anutāpahatāśaya) *adj.* whose mind is afflicted with repentance इत्याकर्ण्य हरेर्वाक्यमनुतापहताशयः। शिशुमारो ययौ मन्दम् BṛKathāMañ. 16.549.

**अनुतापहेतु** (anutāpa-hetu) *m.* cause of misery चेतो दुनोति भवतामनुतापहेतुः कस्मात्परेण कृत एष न मानभङ्गः HarVi. 13. 35; दर्शितविषयत्वमनुतापहेतुः TattvVai. 81.24 (*on* 2.17)

**अनुतापाङ्क** (anutāpāṅka) *m.* type of an act of a drama in which repentance is expressed पश्चात्तापः। मोहादवधीरितस्यार्थस्य पश्चात्परितापः। यथानुतापाङ्के रामः NāṭaLaRaK. 1824; ŚāhiDa. 346. 10; भ्रान्तिनिवृत्तिर्विरोधः। यथा शाकुन्तलेऽनुतापाङ्के NāṭaLaRaK. 3169.

**अनुतापात्मिका** (anutāpātm-ikā) *adj.* (*f.*) of the nature of repentance तादृशे दुःखे प्राप्ते सति 'अहं पापः', 'धिङ् मां दुरात्मानम्' इत्यनुतापात्मिका तमोगुणविकारत्वेन भ्रान्तिरूपा चित्तवृत्तिरुद्रे(?द्रे)गः JīvanVi. 21.5.

**अनुतापानलतस्** (anutāpānala-tas) *adv.* on account of the fire of repentance पापात्मभिस्तन्निभृते कृतेऽपि पापेऽनुतापानलतस्त एव। दग्धा भवेयुः ĀdiP. 1.4.

**अनुतापानुवाद** (anutāpānuvāda) *m.* explanatory repetition of repentance तस्य प पकारिणो मनो यथा यथा दुष्कृतं कर्म निन्दति तथा तथा शरीरं जीवात्मा तेनाधर्मेण मुक्तो भवति। अयमनुतापानुवाद इति ManvaMu. 496. 4 (*on* 11. 229)

**अनुतापाभाव** (anutāpābhāva) *m.* absence of repentance अनुतापाभावात्समग्रो मे पुरुषार्थ इति मनः प्रीतिमवाप्नोति JayaMa. 26.1 (*on* 1. 2)

**अनुतापार्त** (anutāpārta) *adj.* afflicted due to repentance स्वप्रमादकृते भेदे …। साधको ह्यनुतापार्तो नाचरेद्यदि कीर्तितम् PāraS. 11.372; हत्वा तमनुतापार्तः स्वैरमायासितो हरिः BṛKathāMañ. 16.391.

**अनुतापार्ति** (anutāpārti) *f.* affliction due to repentance भूपतिः। न चुक्रोधानुतापार्ति पूर्वज्ञातिवधाद्गतः RājTa.(Ka.) 7.1249.

**अनुतापार्थवाद** (anutāpārthavāda) *m.* explanatory passage concerning repentance (यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हति। तथा तथा शरीरं तत्तेनाधर्मेण मुच्यते) अनुतापार्थवादोऽयम् ManuBh. ii. 442.15 (*on* 11. 228)

**अनुतापिका** (anu-tāpikā) *adj.* (*f.*) which causes repentance तस्मिन्विमृश्यैव वृते हृदैषा मैन्द्री दया मामनुतापिकाभूत् NaiṣC. 6.96.

**अनुतापित** (anu-tāpita) *adj.* parched गभस्तिभिर्भानुमतोऽनुतापिताः।… न दन्तिनः केसरिणोऽपि बिभ्यति ṚtuSam. 1.15.

**अनुतापिता** (anutāpi-tā) *f.* the state of being one who repents हृदयेऽनाहतं चक्रं शिवस्य प्रणवाकृतेः।… लौल्यप्रणाशः प्रकाशो वितर्कोऽप्यनुतापिता। … फलान्येतानि पूर्वादिदलस्थस्यात्मनो जगुः SaṃgīRa. i. 53.7 (1(2).127) (Sudhākara अनुतापिता पश्चात्तापवत्त्वम्)

**अनुतापिन्** (anutāp-in) *adj.* [*f.* -ī] **Ai** who repents, repenting संभोगसंविद्विषमेधमानो दत्तानुतापी (v.l. दत्त्वानुतापी) कृपणो बलीयान्।… एतेऽपरे सप्त नृशंसधर्माः MahāBhā. v. 43. 11; प्रीतिमांश्चाभवत्तस्मिन्ननुतापी महासुरः ViṣṇuP. i. 20. 31; नाश्वमेधफलेनापि नानुतापी विशुध्यते(ति) VṛHārīSm. 9.224; दुष्कर्मतो विमुक्तः स्यादनुतापी भवेद्यदि SkandP. v(3). 227.38; समरे यत्करवालः पीत्वा मातङ्गकुम्भकीलालम्। अनुतापीव व्रजयति रिपुनृपतीनां यशःक्षीरम् KāvyKaVṛ. 135.25 (4.5); EI. i. 29.43; **Aii** worrying कदा यास्याम्यहं गङ्गाम् …। अनुतापीति यो नित्यं स विष्णुपदमश्नुते BṛNāraP. 6 25; **Aiii** grieving, miserable ततस्तां द्रविणाभावादुःस्थितामनुतापिनीम्। दृष्ट्वा सुदर्शनोऽनङ्गप्रभामिदमुवाच KathāSaSāg. ix. 2.298; अनिमित्तमहृष्टानामनिमित्तानुतापिनाम्। न क्वापि चलचित्तानां तिरश्चामिव निश्चयः RājTa.(Ka.) 7. 247; दापयित्वा पतिं राज्यं निर्बन्धेनापि तावता। सूनौ बभूव यद्राज्ञी क्षिप्रमेवानुतापिनी RājTa.(Ka.) 7.248; **B** causing one to repent इयमुद्योगशक्तिर्मे दुराशेवानुतापिनी। … निष्फलतां गता RāmāMañ. 242. 9; स्पर्धाहीनं च निर्मायमगर्वं नानुतापि च।… दानम् … अदादयम् ŚāliC. 3.111.

**अनुतापोपबृंहित** (anutāpopabṛṃhita) *adj.* accompanied by repentance प्रायश्चित्तमिदं प्रोक्तमनुतापोपबृंहितम् BhaviP. 831B.30 (iv. 151.37)

**अनुतार** (anutāra) *m.* name of the *mantra śrīm* तारिकामनुतारं च प्रयुञ्जीयादथान्ततः LakṣmīT. 50.29 (gloss ह्रीं श्रीम् इति मन्त्रद्वयमित्यर्थः); cf. **अनुतारा**.

**अनुतारक** (anu-tāraka) *adj.* saving from न मया तर्पिता विप्राः …। इहापि च परत्रापि विपदामनुतारकाः SkandP. iv. 7. 12; *n.* (anutāraka) name of a musical register एतत्स्वरप्रमाणेन मध्ये तारेऽनुतारके। स्थाने स्थाप्याः सारिकाः स्युः SvarameKa. 3. 62.

**अनुतारा** (anutārā) *f.* **i** the *mantra śrīm* तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् AhirbuS. 22.46; तारानुतारयोरन्या विद्यास्तिस्रो निशामय AhirbuS. 51. 54; अर्थोऽयमनुताराया: … वर्णितः AhirbuS. 51. 69; तारतारानुताराणां स्वरूपं ते प्रदर्शितम् AhirbuS. 52. 1; अनुताराप्रसक्तानां यत् पदं विमलात्मनाम्।… तत्र दिव्यवपुः श्रीमान् देवदेवो जनार्दनः LakṣmīT. 17. 21; अनुतारा श्रियै पश्चान्नमस्त्वादौ च तारकः LakṣmīT. 33.51; मध्नीयात् तारया सम्यक् तथा चैवानुतारया LakṣmīT. 40. 42; 49. 101; **ii** name of one of the seven *vidyās* इत्येते रश्मयो ज्ञेया विद्यायास्तारिकाकृतेः। अनुतारादयो विद्या इतीदं तारिकामयम् LakṣmīT. 26.42.

**अनुतारिका** (anutārikā) *f.* the *mantra śrīm* तारिकायाः …। अस्या एवापरा मूर्तिर्विज्ञेया त्वनुतारिका LakṣmīT. 25. 48; 26. 5.

**अनुताल** (anu-tāla) *m.* beating time (in music) यद्दुष्कराभिधेयं चित्रं चाप्युद्धटं च यद्भवति। तद्भाणकेऽभिधेयं युतमनुतालैर्वितालैश्च BhāvPra.(Śā.) 259.21(9); 261. 15(9); वितालमनुतालांश्च भग्नतालक्रमानपि। यथावदभिगम्यैतान् प्रयुञ्ज्यान्नाट्यकोविदः BhāvPra.(Śā.) 311. 5(10)

**अनुतितिक्षमाण** (anu-titikṣamāṇa) *adj.* bearing or enduring (some condition) quietly येऽस्मिँल्लोके विजयन्तीह कामान् ब्राह्मीं स्थितिमनुतितिक्षमाणाः MahāBhā. v. 44.4; अनुतितिक्षमाणाः अनुदिनं क्षममाणाः SanatBh. 276.13 (*on* 3.6) (better read *anu* as *adn*, cf. ब्राह्मीं स्थितिमारम्भकालादनु पश्चात् तितिक्षमाणाः यावज्जीवमनुतिष्ठन्तः MahāBhāraDī.)

**अनुतितिक्षितुम्** (anu-titikṣitum) *inf.* to be endured तानि तान्यनुरक्तेन शक्यान्यनुतितिक्षितुम् MahāBhā. xii. 84. 31.

**अनुतिल** (anu-tila) (Gr.) listed in the *parimukhādigaṇa* JaineVyā. 198.9 (*on* iii. 3. 34); KāśiVṛ. *on* iv. 3.59; Prasā. i. 773. 13 [*adj.* following *tila* (as a field), APTE]

**अनुतिलम्** (anutilam) *adv.* grain after grain, very minutely परिमुख्यादिभ्यो ञ्यो भवति।… अनुतिलम् CāndraVṛ. *on* iii. 3. 23.

**अनुतिष्ठत्** (anu-tiṣṭhat) *adj.* [*f.* -ntī] **Ai** observing, practising, doing, performing, putting into practice दुष्कृतानि। अनुतिष्ठन् प्रोक्तात्मा नु तन्नि धत्ते AV.(P.) viii. 15.4; दशलक्षणकं धर्ममनुतिष्ठन्समाहितः। वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः NāraPaU. 3.23; अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽद्रोहः … तुष्टिरिति सर्वाश्रमाणां समयपदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति HirŚS. xxvi. 6.14 (91.14); ĀpaDS. i(8). 23.6; अथातः पुरुषनिःश्रेयसार्थं

धर्मजिज्ञासा। ज्ञात्वा चानुतिष्ठन् धार्मिकः VāsiDS. 1.2; सर्वथा कार्यमेतन्नः स्वधर्ममनुतिष्ठताम् MahāBhā. iii. 34.19; हन्तव्यः क्षत्रियः …। अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता MahāBhā. v. 80.16; स्वधर्ममनुतिष्ठन्तो यदि माधव संयुगे। शस्त्रेण निधनं काले प्राप्स्यामः स्वर्गमेव तत् MahāBhā. v. 125.15; ix. 60.38; तेन सत्याभिसंधेन त्रिवर्गमनुतिष्ठता। पालिता सा पुरी श्रेष्ठा Rāma. i. 6.5; श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः। इह कीर्तिमवाप्नोति ManuSm. 2.9; 5.2; तद्धयनुतिष्ठन् युगपत् संपादयत्यर्थद्वयमारोग्यमिन्द्रियविजयं चेति CaraS. i. 8.18; नैत्यकावसाने प्राणिधर्ममनुतिष्ठति मयि को नु … प्रविष्टः Prati. 3.5(2); एवं च मानवं मार्गमनुतिष्ठन्महीपतिः। धर्म्येण पालनेनैव प्रजा रञ्जयति स्म AhirbuS. 50.42; उभाभ्यां हस्ताभ्यामनुतिष्ठन्प्रधानकालं संभावयिष्यति ŚābaBh. 198.1 (*on* i. 3.6); 581.10 (*on* ii. 3.3); 732.6 (*on* iii. 1.21); प्रयाणे प्रतिविधानमनुतिष्ठता मया कुमारादयमुपालम्भोऽधिगतः MudrāRā. 5.13(5); अन्यत् साध्यमद्दृश्य यागादीननुतिष्ठतः। धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ŚlokaVār. 2.192 (104.5); 5(17).24 (694.8); यदि हि कर्मस्वरूपमात्रं स्मर्येत ततः पाकादि तदिन्द्रियैरन्यानुतिष्ठतो दृष्ट्वा परे स्मरेयुः TantrVā. 72.20 (*on* i. 3.1); चिकीर्षितमर्थमनुतिष्ठन् तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत् BrahmSūBh.(Śaṅ.) 192.4 (*on* i. 3.28); 577.1 (*on* iii. 2.9); अग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति GītāBh.(Śaṅ.) 22.4 (*on* 2.11); 196.2 (*on* 6.19); पापं प्रणुदति … विद्वान् … ईश्वरार्थं कर्मानुतिष्ठन् SanatBh. 220.13 (*on* 1.24); 233.7 (*on* 1.42); नित्यनैमित्तिकं कर्म विधिवच्चानुतिष्ठतः (मुक्तिर्भवतीति शेषः) NaiṣkaSi. 10.5; यत्तु नाद्यत्वे केचिदनुतिष्ठन्तो दृश्यन्त इति — उपदिष्टार्थस्य नित्यवत् ManuBh. ii. 274.6 (*on* 9.112); अनुतिष्ठन् परिक्लेशं मध्यमः साधकस्तु सः ParaS. 28.36; न चाध्ययनेनैवार्थमवबुध्यानुतिष्ठतां क्रतुफलभावनासिद्धिः PrakaPañ. 5.5; सोऽपि यथादिष्टमनुतिष्ठन्निदमवादीत् NalaCam. 6.74(4); यदमी ह प्रत्यक्षमेव वृत्त्यर्थमनुतिष्ठन्तो दृश्यन्ते ĀgaPrā. 8.9; अद्यत्वेऽपि … प्रासादकरण° … °प्रदक्षिणोत्सवादीनि … श्रेयस्करतरबुद्ध्यानुतिष्ठतः शिष्टान् पश्यामः ĀgaPrā. 69.6; पञ्च मलिम्लुचाः … कन्दलमपहाय समानायितमैरेयाः पानगोष्ठीमनुतिष्ठन्तः … सर्वेऽपि मग्नाः YaśasCam. ii. 328.25; महता खलु प्रयत्नेन शिष्याचार्यपरंपरया वेदान् धारयन्तो दृश्यन्ते, तदर्थं चानुतिष्ठन्तः Kāśi. i. 110.23 (*on* 2.98½); कणादमिति तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता संज्ञा NyāyKa. 2.14; यद्वृत्तमनुतिष्ठन्वै लोकः क्षेमाय कल्पते BhāgP. iii. 12.31; तव भक्तस्य विप्रस्य नित्यं कर्मानुतिष्ठतः। मोक्षदं मुनयः स्नानं गङ्गायां स्वर्गदं विदुः NīlaP. 311; तदर्थं चादरेणानुतिष्ठद्भिः परिगृहीतो वेदः Bhām. 72.14 (*on* i. 1.3); अदाम्भिकानां प्रच्छन्नमनुतिष्ठतामपि लोकपङ्क्त्यादेरभावात् TātpaṬ.(Vā.) 620.17 (*on* iv. 1.44); सः … कदाचित् शृङ्गारसरसां गोष्ठीमनुतिष्ठन् … कालमतिवाहयांचक्रे UdaySuKa. 25.18; श्राद्धम् …। कुलधर्ममनुतिष्ठद्भिर्दातव्यम् BrahmP. 220.3; आचारमनुतिष्ठन्तो व्यासादिमुनिसत्तमाः।… विप्रोत्तमाः श्रियं प्राप्ताः BhaviP. 83A.15 (i. 42.20); 269A.35 (i. 182.16); PadmP. iv. 31.32; तथानुतिष्ठतस्तस्य कालो बहुतरो ययौ YogVā. v. 37.3; वेदान्तशास्त्रैर्विहितं ज्ञानम् …। तदनुतिष्ठन्नासीन उतासीनः शयानस्तिष्ठन्गच्छंश्च विशेषाभावादनियमेनानुतिष्ठेत् BrahmSūBh.(Rā.) 718.19 (*on* iv. 1.7); कर्मयोगमनुतिष्ठतो विदुषोऽविदुषश्च विशेषं प्रदर्शयन् … कर्तृत्वानुसंधानप्रकारमुपदिशति GītāBh.(Rā.) 201.9 (*on* 3.27); प्रयत्नाद्यनुतिष्ठतः तदानीमेव विनष्टत्वात् VedāntDī. 109.5 (*on* ii. 2.27); धवळसरसतीर्थे सैष सन्यास-[Real संन्यास]धन्यां परिणतिमनुतिष्ठंनन्दिमांनिष्ठितात्मा EI. iii. 197.207; ज्ञानोद्देशेन नित्यान्यनुतिष्ठतोऽवश्यं ज्ञानं भवति VedāntKa. 32.9 (*on* i. 1.1); प्रतिदिनं जिनपूजानिष्ठामनुतिष्ठति सति तस्मिन् वणिजि ViviTīKa. 58.3; न ह्यशक्तमधिकृत्य शास्त्राणि प्रवर्तन्ते। न च तत्त्वतोऽशक्तिः, अन्येभ्यश्शक्तेभ्योऽनुतिष्ठद्भ्यो विशेषादर्शनात् ŚatDū. 241.2; कर्मयोगं परित्यज्य ज्ञानयोगमनुतिष्ठतोऽपि न दोषः NyāySiA. 217.18; आरभ्य समाप्तिपर्यन्तमनुतिष्ठतः फलं युक्तम् NyāyMāVi. 323.12 (*on* vi. 3.9); पार्वती … महान्तं नियममनुतिष्ठन्ती … तपश्चरति PārvPa. 4.0(4); श्राद्धम् … पित्राद्यन्तं तदनुतिष्ठन्ससंतानः शीघ्रं विनश्यति ManvaMu. 127.26 (*on* 3.205); 176.3 (*on* 4.171); पाषण्डम् … अनुतिष्ठन्तीनाम् … द्विजातिस्त्रीणाम् … उदकक्रियौर्ध्वदैहिकं निवर्तेत ManvaMu. 212.33 (*on* 5.90); 232.19 (*on* 6.24); स पश्चात्तत्सिद्धये तत्साधने कर्मणि मयानुष्ठेयमिदं कर्मेत्यविकारितया।… तदनुतिष्ठन् कर्तृतया TantrRaha. 58.6; प्रेमान्तरङ्गभूतानि कृत्यान्येवानुतिष्ठताम्। भक्तानां हृदि राजन्ती …। रतिरानन्दरूपैव BhaktiRaSi. ii. 1.9; यागादिकमनुतिष्ठन्तं दृष्ट्वा व्यवहारदर्शनात् ŚivārkaMaDī. i. 17.7 (*on* i. 1.1); ii. 396.25 (*on* iii. 4.25); कश्चिज्जीवः … नित्यनैमित्तिकाद्यनुतिष्ठन् … केवलहिरण्यगर्भोपासनायाः परिपाके मरणकाले … देहं विसृज्य … हिरण्यगर्भसायुज्यं गच्छति SiddhāTa. 2.21; 58.27; विद्यामनुतिष्ठता कर्माणि … अनुष्ठेयानि SiddhāSi. i. 40.8; शिष्टाश्च कातीयस्नानमनुतिष्ठन्तः … सोदकदर्भमार्जनमाचरन्ति VīraMi.(Āhnika.) 226.15; SarvaMaSaṁ. 36.16; 39.11; विधिवत् अनुतिष्ठन् कुलधर्मनिष्ठः सर्वथा कृतकृत्यो भवति NityoNi. 11.11; GoviBh. 264.11 (*on* iii. 4.2); स्मार्तं कर्मानुतिष्ठन्नौपासनस्याग्नेन मृतां पत्नीं संस्कृत्य शिष्टाग्नें पूर्ववत्कर्माणि कुर्यात् BālamBha. i. 239.5 (*on* 1.89); **Aii** carrying out, executing, accomplishing उत्तङ्को गुरुशुश्रूषुर्गुरुनियोगमनुतिष्ठमानः (v.l. °तिष्ठन्) तत्र गुरुकुले वसति स्म MahāBhā. i. 3.88; कर्मप्रियोऽपि तथा पृथिवीश्वरनिदेशमनुदिनमनुतिष्ठन्नेकदा … महादेवबलस्तिमिङ्गिलगिलो बभूव YaśasCam. ii. 332.5; रामो हि पितृवचनमनुतिष्ठन्नपराक्रमादिधर्मयोगादुत्साहयोगाच्च वीररसवान् Kāvyānu.(He.) 353.8; वचनमात्मगुरोरनुतिष्ठता नृपसुतेन समेत्य निशाचरी। अनुगतत्पिशिताशिघटोत्कचा समययुक्तमपायमवाप सा RāghPāṇ.(Ka.) 1.86; तेषां दुर्वादिनां वेदविहितहिंसामनुतिष्ठतामपि देवतादिपरितोषणे मनोराज्यमेव Syādvā-Mañ. 11(285); यथोचितं प्रायश्चित्तमनुतिष्ठन् इह समाराधनाधिकारित्वम् PāñcRā-Ra. 146.15; हीनप्रायो नटजनस्तेन गोपीजनैः सह। हरिद्वयेन विपिने संगीतमनुतिष्ठता HariC.(Pa.) 82; निष्ठया कर्माण्याचरन्तः सनिष्ठाः। लोकसंजिघृक्षया तान्याचरन्तः परिनिष्ठिताः। ध्यानमेवानुतिष्ठन्तो निरपेक्षाश्च GoviBh. 6.3 (*on* i. 1.1); **Aiii** following अपश्यत्स यमं तत्र देवम् …। विधानमनुतिष्ठन्तं प्राणिनो यस्य यादृशम् Rāmā. vii. 21.2; **B** ruling over षष्टिवर्षसहस्राणि मम जातस्य रावण। पितृपैतामहं राज्यं यथावदनुतिष्ठतः Rāmā. iii. 48.19; **C** waiting upon प्रगे च वचनैस्तैस्तैरनुतिष्ठन्तमच्युतम्। जीवबुध्या(? द्ध्या) निजस्कन्धमध्यारोप्य बलोऽचलत् PāṇḍaC. 18.50; **D** standing near or behind (गाः) प्रातस्ता एव वनं गच्छन्तीरनुगच्छन् तिष्ठन्तीरनुतिष्ठन् BālamBha. iii. 191.28 (*on* 3.325)

**अनुतिष्ठमान** (anu-tiṣṭhamāna) *adj.* **i** practising, observing धर्माननुतिष्ठमानोऽग्निना चक्रम् … नेमिना तप्ततनूस्सायुज्यं सलोकतामाप्नोति SudarU. 294.1; तेऽपि स्वशाखागृह्योक्तमर्थं यथावदनुतिष्ठमानाः ĀgaPrā. 85.9; **ii** carrying out, executing उत्तङ्को गुरुशुश्रूषुर्गुरुनियोगमनुतिष्ठमानस्तत्र गुरुकुले वसति स्म MahāBhā. i. 3.88; **iii** attending to (some work) कुटुम्बार्थे चानुतिष्ठमानानां तेषामन्येषां भ्रातृणां संबन्ध्युपविष्टं स्थापयेत् ManuBh. ii. 303.28 (*on* 9.214)

**अनुतिष्ठास** (anu-tiṣṭhāsa-) *desid.* to desire to observe or practise (इयम्) कुलस्त्रीवृत्तम् … अनुतिष्ठासति DaśKuC. 53.21; यस्त्वनुतिष्ठासति जिज्ञासति च तस्मै सच्छिष्यायाप्यन्यायेन … न देयम् NityāṢoḍa. 349.5.

**अनुतिष्ठासामात्र** (anutiṣṭhāsā-mātra) *n.* mere desire to put into practice कर्मण इव विद्याया अप्यनुतिष्ठासामात्रेणाविच्छिन्नानुवृत्तिसिद्धेः Śivārka-MaDī. ii. 443.12 (*on* iv. 1.16)

**अनुतिष्ठासित** (anu-tiṣṭhāsita) *n.* what is desired to be performed तेन तस्मिन् प्रयोगेऽनुतिष्ठासितमेव वचनात् प्रयोगान्तरे अनुष्ठेयम् MayūMāli. 504.17 (*on* vi. 5.20)

**अनुतिष्ठासितत्व** (anutiṣṭhāsita-tva) *n.* the state of being that which is desired to be performed प्रधानानां युगपदनुतिष्ठासितत्वेनानुष्ठानप्रारम्भः MayūMāli. 802.9 (*on* xi. 1.8)

**अनुतिष्ठासितस्वपदार्थ** (anutiṣṭhāsita-svapadārtha) *m.* item belonging to itself (i.e. Darśapūrṇamāsa) which is desired to be performed दर्शपूर्णमासादयो ह्यनुष्ठानकालेऽस्मृतानुष्ठानासंभवादनु(ति)ष्ठासितस्वपदार्थस्मृतिहेतुमपेक्षन्ते Kāśi. ii. 26.4 (*on* 5(2).1)

**अनुतिष्ठासितार्थस्मृति** (anutiṣṭhāsitārtha-smṛti) *f.* remembrance of the thing desired to be performed अनुतिष्ठासितार्थस्मृतेश्च ध्यानादिना सिद्धेः साकाङ्क्षत्वेन क्रमप्रकरणाभ्यां स्वरूपस्यैवाङ्गत्वावसायाद्ग्रहणम् NyāySu.(So.) 95.9 (*on* i. 2.31-39); 95.24 (*on* i. 2.31-39)

**अनुतिष्ठासु** (anu-tiṣṭhāsu) *adj.* desirous of observing or practising नैत्यकं विधिं ब्रह्मयज्ञरूपमास्थितोऽनुतिष्ठासुः सावित्रीमपि … अधीयीत ManvaMu. 55.30 (*on* 2.104)

**अनुतीरवन** (anutīra-vana) *n.* forest on the bank (of the river) तत्रानुतीरवनवासितपस्विविप्रा शिप्रा तव … भविता वयस्या NaiṣC. 11.89.

**अनुतीरविरूढ** (anutīra-virūḍha) *adj.* growing near the bank (of a lake) कोऽपि ब्रह्मचारी … बिसक्षीरेणानुतीरविरूढचरपद्मपत्रपुटं तमापूरयन् … वसन्ततिलकमुच्चैरुज्जहार AvantiKa. 222.19.

**अनुतीर्थम्** (anutīrtham) *adv.* from the part of the hand (i.e. space between the index finger and the thumb) sacred to the manes अनुतीर्थमप उत्सिञ्चन्ति 'ऊर्जं वहन्तीः …' इति ĀgniveGS. ii. 6.3 (98.9); BaudhDS. ii. 3.3; ii. 5.30; अनुतीर्थं तीर्थं लक्षीकृत्य, दैवपित्र्यादितीर्थेनेत्यर्थः VīraMi.(Āhnika.) 169.25; 364.1.

**अनुतीर्थेशम्** (anutīrtheśam) *adv.* towards the lord of the place नृपः …। कृताष्टमो रथस्थोऽनुतीर्थेशं बाणमक्षिपत् PārśvC. 4.100.

**अनुतुद्** (anu-tud-) VI. P. to push repeatedly पवमानस्य ते रसः पवमान रसस्तवेति समानमनुतुदति वैराजरूपम् JaimiBr. 3.60; 3.70; पदान्तेऽ-

स्यानुतुदति यथा वैराजस्य Kṣudra. 3.6.

**अनुतुन्न** ( anu-tunna ) *adj.* repeatedly pushed अनुतोदो वैराजस्यानुतुन्नं हि वैराजम् PañcBr. viii. 9.13; JaimiBr. 3.60; यदृचा प्रस्तौति तत्प्रथमस्याह्नो रूपम् … यदनुतुन्नं तच्चतुर्थस्य PañcBr. x. 9.1; JaimiBr. 3.333; PañcBr. x. 12.2; भेषजमेवैतेन प्रायश्चित्तिं कुर्वते। तदनुतुन्नं भवति JaimiBr. 3.66; 3.81; अनुतुन्नं यथा वैराजम् Kṣudra. 3.6 [depressed or repressed (in sound), muffled, MW.; unruffled, APTE]; *n.* repeated push अनुतुन्नाद्धि रेतो धीयते PañcBr. xii. 10.11; अनुतुन्नाद्वै प्रजाः पशवः प्रजायन्ते JaimiBr. 3.66; 3.97; 3.204; 3.268.

**अनुतुन्नम्** ( anutunnam ) *adv.* with repeated push अनुतुन्नं गायति तथा ह्येतस्याह्नो रूपम् PañcBr. xii. 9.17; आ( ? अ )नुतुन्नं गायति रेतोधेयाय PañcBr. xii. 10.11.

**अनुतुलिता** ( anu-tulitā ) *adj.* (*f.*) [ w. r. for अतुलिता ] ŚaṅkaVi. (Ā.) 104.10.

**अनुतूलन** ( anu-tūlana ) *n.* rubbing (as the point or end of grass) with cotton [APTE]

**अनुतूलय** ( anutūlaya- ) *denom.* **i** to rub (something with the tip of grass) तूलैरनुकुष्णाति अनुतूलयति JaineVyā. 91.4 (*on* ii. 1.22); Cāndra-Vṛ. *on* i. 1.45; KāśiVṛ. *on* iii. 1.25; PrakriKau. ii. 384.5; **ii** to rub (as the point or end of grass) with cotton तूलेनानुकुष्णाति — अनुतूलयति। तृणाग्रं तूलेनानुघट्टयतीत्यर्थः SiddhāKau. 451A. 4 (*on* iii. 1.21)

**अनुतृद्** ( anu-tṛd- ) VII. P. to split open, to set free अहन्नहिमन्वपस्ततर्द RV. i. 32.1; SV. (Satavalekar's Ed.) 612; AV. ii. 5.5; AV. (P.) xiii. 6.1; ऋतस्य धारा अनु तृन्धि पूर्वीः RV. v. 12.2; अन्वपां खान्यतृन्तमोजसा …। इन्द्रावरुणा RV. vii. 82.3.

**अनुतृप्** ( anu-tṛp- ) IV. U. to be pleased, to be satisfied ब्राह्मणेभ्योऽनुतृप्यन्ति ( v.l. °तृप्यन्ते ) पितरो देवतास्तथा MahāBhā. xiii. 30.5 [to take one's fill (or refreshment) after or later than another, MW.]

**अनुतृप्** ( anu-tṛp- ) X. P. to satisfy or to please तिलोदकैस्तर्पयित्वा स्वपितॄंश्च पितामहान्। प्रपितामहसंज्ञांश्च सदाराननुतर्पयेत् PāraS. 2.106.

**अनुतृप्त** ( anu-tṛpta ) *adj.* who has become pleased or satisfied एकत्रिंशत्पितृगणाः … ते मेऽनुतृप्तास्तुष्यन्तु MārkP. 96.48.

**अनुतॄ** ( anu-tṝ- ) I.P. to cross, to overcome नं वैं दीक्षितं तरन्तं देवता अनुतरन्ति … नं वैं दीक्षितं तरन्तं यज्ञोऽनुतरति MaiS. iii. 6.9 (iii. 73.12, 13); (कालि मातः) कटाक्षं ये तावकीनमनघे समुपालभन्त। ते दुस्तराण्यनुतरन्ति ParamāKā. 124.72 [to follow across or to the end, MW., APTE; to stretch lengthwise, APTE]

**अनुतेजस्** ( anu-tejas ) *n.* inferior or subordinate vigour सर्वाधिको ब्राह्मणस्तु जायते हि स्वकर्मणा। तत्तेजसोऽनुतेजांसि सन्ति च क्षत्रियादिषु ŚukraNī. 3.273.

**अनुतोद** ( anu-toda ) *m.* **A** repeated push अनुतोदो वैराजस्यानुतुन्नं हि वैराजम् PañcBr. viii. 9.13; **B** name of the two *sāmans* धृषतो मारुतस्य सामनी द्वे।… गृत्समदस्य मदौ द्वौ गौतमस्य वानुतोदौ ĀrṣeBr. iii. 11.6.

**अनुतोदन** ( anu-todana ) *m.* repeated push अनुतोदनात् पुनः पुनरभ्यासात् Sāy. *on* PañcBr. xii. 10.11.

**अनुतोदवत्** ( anutoda-va(n)t ) *adj.* having repeated push तदेतदभिपूर्वमेव शक्वरीणां रूपमुपगच्छन्ति। तास्वानूपमनुतोदवत् सिमानां रूपम् JaimiBr. 3.97.

**अनुतोयधि** (anutoyadhi) *adv.* along the sea-shore चक्रधरः …। प्रतस्थे दक्षिणामाशां जिगीषुरनुतोयधि MahāP. 29.1.

**अनुतोरणम्** ( anutoraṇam ) *adv.* on the arches स्वभावभास्वरे भर्तुः देहे स्वानवकाशताम्। मत्वेवाभरणान्यास्थुरुद्बद्धान्यनुतोरणम् MahāP. 22.145.

**अनुत्क** ( an-utka ) *adj.* not over-anxious, not repentant or regretful, self-complacent अपरः कोकिलोऽन्वक्षं ( v. l. °ऽनुत्कः ) प्रतिश्रुत्केव कूजति BuddhaC. 4.51.

**[1]अनुत्कट** ( an-utkaṭa ) *adj.* [*f.* -ā] **1** not proud or haughty भवन्ति यस्याम् …। अनुत्कटा नित्यविहस्तसंश्रया महारथा न द्विरदाः कदाचन RāghPāṇ. (Dha.) 1.44; **2** not prominent न रङ्गे अल्पतथात्वादिति तत्रानुत्कटा सा ( रङ्गवृत्तिः ) TattvCin. i. 495.2; मन्दप्रकाशजनकत्वमनुत्कटे चक्षुराद्यावरणे वस्त्रादावेव दृष्टम्, न तु उत्कटे कुड्यादौ JñānBiPra. 1.19 [ŚabdaRaSaK. 184.2 gives *anutkaṭa* as one of the meanings of *visrabdha*] [short, small, APTE]

**[2]अनुत्कट** ( an-utkaṭa ) *adj.* not in rut (*lit.* not having the temples open), RāghPāṇ.(Dha.) 1.44.

**अनुत्कटकर्णकोश** ( anutkaṭa-karṇakośa ) *adj.* having bud-like non-prominent (i.e. short) ears (बाणः) अनुत्कटकर्णकोशैः … तुरङ्गैरारचितां मन्दुरां विलोकयन् HarṣaC. 100.3.

**अनुत्कटत्व** ( anutkaṭa-tva ) *n.* **1** the state of being non-predominant, non-predominance सत्त्वरजस्तमसां तूत्कटानुत्कटत्वविशेषात् सर्गवैचित्र्यं महदादिभेदेनाविरुद्धमेव TattvSamPañ. 18.11 (*on* 7); **2** [Inst.] **i** without clear appearance समवायन्यायो यत्र ( भेदस्य ) तस्यैवानुत्कटत्वेनावस्थानम् AlaṅkāSa. 192.10; **ii** because of non-clear appearance अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते SiddhāMu. 15.4 (*on* 35)

**अनुत्कटपल्लव** ( anutkaṭa-pallava ) *adj.* leaves of which are not prominently visible वटविटपिनस्तस्याङ्कूराननुत्कटपल्लवान् … भिक्षुः प्रतिक्षणमीक्षते SubhāNī. 1.11.

**अनुत्कटभेदत्व** ( anutkaṭabheda-tva ) *n.* the state of not having clearly visible difference अनुत्कटभेदत्वमुत्कटभेदत्वं च संकरः AlaṅkāSa. 197.11.

**अनुत्कटम्** ( anutkaṭam ) *adv.* without difficulty, easily घटात् पटमुपायाति पटाद् घटमनुत्कटम्। चित्तमर्थेषु चरति पादपेष्विव मर्कटः ŚārṅgaPa. 4218.

**अनुत्कटव्यभिचारिणी** ( anutkaṭavyabhicār-iṇī ) *f.* woman whose infidelity is not apparently known तत्रानुत्कटव्यभिचारिणी सतीव भरणीया SmṛtiCan. iv. 568.16.

**अनुत्कटाकाङ्क्षाप्रतिबन्ध** ( anutkaṭākāṅkṣā-pratibandha ) *m.* obstruction of non-apparent expectancy अत उत्कटाकाङ्क्षयानुत्कटाकाङ्क्षाप्रतिबन्धान्न रङ्गे निवृत्तिः TattvCin. i. 495.3.

**अनुत्कण्ठ** ( an-utkaṇṭha ) *adj.* not having anxiety उत्कण्ठं त्वयि …। स्वकुटुम्बमनुत्कण्ठं कुरु BṛKathāŚloSaṁ. 18.427; मुहूर्तकमनुत्कण्ठैरिह युष्माभिरास्यताम् BṛKathāŚloSaṁ. 21.23; किमेवं कठिनोऽभूस्त्वमनुत्कण्ठः कुटुम्बके PariPar. 13.114.

**अनुत्कण्ठभुजङ्गम** ( anutkaṇṭha-bhujaṅgama ) *adj.* in which the serpents are devoid of anxiety इदं पुरम्। पुनरागच्छता कार्यमनुत्कण्ठभुजङ्गमम् BṛKathāŚloSaṁ. 5.134.

**अनुत्कण्ठा** ( an-utkaṇṭhā ) *f.* absence of longing for (something) 'यः कौमारहरः' इत्याद्यु( ? द्यनु )त्कण्ठाकारणसद्भावेऽपि अनुत्कण्ठाया अनुत्पत्तौ विशेषोक्तिः AlaṅkāSa. 200.8.

**अनुत्कण्ठिताकुला** ( anutkaṇṭhitākulā ) *adj.* (*f.*) afflicted (even) without longing for (something) अपीतमत्ताः शिखिनो दिशोऽनुत्कण्ठिताकुलाः। नीपोऽविलिप्तसुरभिरभ्रष्टकलुषं जलम् Kāvyālaṅ.(Bh.) 2.78.

**अनुत्कर्णकोश** ( an-utkarṇakośa ) *adj.* who has not lifted up or raised his bud-like ears ( चन्द्रापीडः ) अनुत्कर्णकोशम् … इन्द्रायुधमालोक्यापि … निरगान्नगर्याः Kād. 299.2.

**अनुत्कर्ष** ( an-utkarṣa ) *m.* **1** absence of drawing (of items from their original place to somewhere else), absence of putting off or lifting up (of items from their original place to somewhere else) दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् MīmāSū. vi. 5.38; यद्येकवचनान्तं प्रातिपदिकं नोत्कृष्यते, प्रकरणादित्युच्यते, सिद्धस्तर्ह्यनुत्कर्षस्तदेवेदम् ŚābaBh. 1753.9 (*on* ix. 3.15); गौण्या वृत्त्या पूषादिशब्दैरग्न्याद्यभिधानादनुत्कर्षो भविष्यति TantrVā. 767.6 (*on* iii. 2.1); 396.4 (*on* ii. 1.16); उत्कृष्टेषूक्थ्येषु… षोडशिग्रहस्य … अनुत्कर्षमाशङ्क्य क्रमः … कालाद् बलीयान् TantrRa. 293.18; 287.8; संप्रतिपन्नदेवतत्वाच्च पयसा सह प्रदानमस्य (पुरोडाशस्य) इति प्रकरणाच्च मन्त्रानुत्कर्षात् प्रकरणमप्यनुगृह्यते SaṅkarKāBh. 15.24 (*on* i. 2.8); उत्कर्षोऽनुत्कर्षो वेत्यस्यां विप्रतिपत्तौ पाशं पाशानिति च मन्त्रयोर्विकल्पः स्यात् VedāntKa. 113.21 (*on* i. 1.12); 191.3 (*on* i. 3.40); स्वरविधीनामृगादिधर्मत्वपक्षे उच्चैस्साम्नेत्यस्यानुत्कर्षो वक्तुं शक्यः UpaParā. 13.3; पुरोडाशदेवतापदानां पश्वङ्गतया … दाक्षिणाग्निकहोमवदनुत्कर्षात् तानि तावत् सवनीयपुरोडाशेडाभक्षणोत्तरकालं पठनीयानि BhāṭṭDī. iv. 193.13 (*on* xi. 3.15); **2** absence of excellence, inferiority सत्त्वत्यागादनुत्कर्षो वाक्यादेर्दैन्यमुच्यते SaraKaṇṭhā. 590.3; असत्प्राधान्यं क्वचिद्वाक्यादनुत्कर्षेण Kāvyānu.(He.) 125.1.

**अनुत्कर्षण** ( an-utkarṣaṇa ) *n.* absence of elevation न ह्यन्यं प्रति स्वभावोऽतद्भावो भवति, तस्य तेनापकर्षणात् अन्येन चानुत्कर्षणात् PramāVāSvopVṛ. 105.18.

**अनुत्कर्षपक्ष** ( anutkarṣa-pakṣa ) *m.* view of absence of drawing (of items) अनुत्कर्षपक्षेऽप्युक्थ्यपरभावो बाध्येत ŚāstrDī. 419.16 (*on* v. 1.18)

**अनुत्कर्षप्रतिपादक** ( anutkarṣa-pratipādaka ) *adj.* indicative of the absence of excellence यत्त्वनुत्कर्षप्रतिपादकं ऋष्यशृङ्गवचनम्।… तच्छन्दोगविषयम् CaturCin. iii(2). 397.16.

**अनुत्कर्षमात्रलिप्सा** (anutkarṣamātra-lipsā) *f.* desire to obtain only the absence of drawing (of items) अनुत्कर्षमात्रलिप्सया देवताकल्पने पूषादिदेवताः कुतो न नियम्यन्ते BhāṭṭCan. 11.3 (*on* xiii. 2.5)

**अनुत्कर्षरूप** (anutkarṣa-rūpa) *adj.* having the nature of non-drawing, characterised by absence of drawing (of items) अनेनैव पूर्वोत्तरपक्षयोरुत्कर्षानुत्कर्षरूपं प्रयोजनमित्यपि सूचितम् MayūMāli. 112.4 (*on* ii. 1. 5)

**अनुत्कर्षलाभ** (anutkarṣa-lābha) *m.* obtainment of non-drawing (of items from their original place) संतर्दनविधेः प्रकरणादनुत्कर्षलाभात् षष्ठीसमासाश्रयणं वरमेत्यधिकशङ्कावारणाय दीर्घसोमवाक्यस्य पुनर्विचारः UpaPaiā. 27.30.

**अनुत्कर्षसंभव** (anutkarṣa-sambhava) *m.* possibility of non-shifting or not drawing of (an item from its original place) श्रुया विधिगतशब्देनैव देवतायाः कर्मणि समवायात् संबन्धादिन्द्रशब्देन महेन्द्रप्रकाशनानुपपत्तेर्नानुत्कर्षसंभवः MīmāKau. iii(2). 91. 16 (*on* ii. 1.16); BhāṭṭCan. 11 5 (*on* xiii. 2.5)

**अनुत्कर्षोपपत्ति** (anutkarṣopapatti) *f.* tenability of non-shifting (of an item from its original place) अनूयाजोत्कर्षेऽपि पिष्टलेपफलीकरणहोमयोरनुत्कर्षोपपत्त्या 'प्रासङ्गिकं च नोत्कर्षे' दित्यधिकरणविरोधाभावाच्चेति भावः MayūMāli. 185. 22 (*on* iii. 1. 2)

**अनुत्कालितपौंस्न** (anutkālita-pauṁsna) *adj.* whose virility is not expelled साण्ड इति। अनुत्कालितपौंस्न इत्यर्थः MayūMāli. 596. 19 (*on* ix. 1. 14); 692. 5 (*on* x. 3. 16)

**अनुत्कीर्ण** (an-utkīrṇa) *adj.* [*f.* -ā] **A** not having any cavity, not hollowed out गार्ह[पत्यस्य पुरस्तात् प्रागग्रे]षु कुशेषु द्वन्द्वं पात्राण्यासादयति।… रौहिणहवन्यौ च स्रुचावनुत्कीर्णे KātyŚS. xxvi. 2. 10; **B** not dug out अनूख(ष)राम् … अनातपामनुत्कीर्णाम् … त्यजेयुर्दश मृत्तिकाः LaHārīSm. 73; **C** not engraved or carved out अनुत्कीर्णा यथा स्तम्भे संस्थिता शालभञ्जिका YogVā. iii. 10. 7; iii. 15. 2; अनुत्कीर्णा यथा पङ्के पुत्रिका चाथ दारुणि। यथा वर्णा मषीकल्के तथा सर्गाः स्थिताः परे YogVā. iii. 61. 24; ŚārṅgaPa. 4241; YogVā. vi(2). 194.25; अनुपस्कृतमनुत्कीर्णकाञ्चनाब्जादि ManvaVi. 664.10 (*on* 5.112)

**अनुत्कीर्णपुत्रिक** (anutkīrṇa-putrika) *adj.* on which a figure has not been engraved or carved out यथा न पुत्रिकाशून्यः स्तम्भोऽनुत्कीर्णपुत्रिकः। तथा भातं जगद्ब्रह्म तेन शून्यं न तत्पदम् YogVā. iii. 10. 9.

**अनुत्कृष्ट** (an-utkṛṣṭa) *adj.* **1** (item) not drawn (from its original place to somewhere else) वपाप्रचारेणानुत्कृष्टस्यानेनैव वाक्येनोत्कर्षः कर्तव्यः TantrVā. 1095. 9 (*on* iii. 6. 22); **2** not superior, inferior, cf. **अनुत्कृष्टजाति**; *m.* one not superior, inferior one न चोत्कृष्टासनं देयमनुत्कृष्टस्य चादरात् BrahmP. 221.78; *n.* one of the varieties of *jāti* (false argumentation or futile rejoinder based on) *anutkṛṣṭa* (same as *apakṛṣṭa*) which imposes absence of certain property in the subject on the analogy of the example वार्त्तिककारस्तु सममनुत्कृष्टमपकृष्टमुत्तरं जातिरिति मन्वान उत्तरवादिवाक्यगतमपकर्षं लक्षणया साम्यमाह TārkiRa. 248.15; सममनुत्कृष्टमपकृष्टमुत्तरं जातिरिति च जातिवादिसमः साधारणो नोत्कृष्टः अपकृष्ट इत्यर्थः NyāyPari. 222.7.

**अनुत्कृष्टजाति** (anutkṛṣṭa-jāti) *adj.* of an inferior caste हीनजातिम् उत्तमर्णादनुत्कृष्टजातिमधमर्णम् … ऋणनिस्तारार्थमुत्तमर्णः कर्म स्वापेक्षितं कृषिशुश्रूषणादि कारयेत् VīraMi. 466. 6 (*on* 2.43)

**अनुत्कृष्टजातीय** (anutkṛṣṭa-jātīya) *adj.* [P. v. 3.69] of an inferior type मृदादीनां मध्ये किंचिदनुत्कृष्टजातीयमपि तदुत्कृष्टजातीयद्रव्यसादृश्यमापाद्य Aparā. 826.3 (*on* 2.246)

**अनुत्कृष्टता** (anutkṛṣṭa-tā) *f.* the state of not being superior, inferiority ग्रामाधिपतिश्चौरादिदोषान् … प्रतिकर्तुमक्षमोऽनुत्कृष्टतया स्वयं दशग्रामाधिपतये कथयेत् ManvaMu. 268.6 (*on* 7.116-117)

**अनुत्कृष्टधर्मयुक्त** (anutkṛṣṭadharma-yukta) *adj.* associated with inferior qualities अनुत्कृष्टधर्मयुक्तस्य वर्णनीयस्यालंकरणम् … न शोभातिशयकारितामावहति VakroJī. 135. 7.

**अनुत्कृष्टपात्रप्रदान** (anutkṛṣṭapātra-pradāna) *n.* giving of a vessel of inferior (quality) तुल्यमिति आढ्यस्योत्कृष्टपात्रप्रदानात् यत्फलं तद्दरिद्रस्यानुत्कृष्टपात्रप्रदानेन फलं भवति VīraMi.(Pūjā.) 322. 5.

**अनुत्कृष्टविशेषण** (anutkṛṣṭa-viśeṣaṇa) *adj.* having improper qualifiers तदिदं (वाक्यम्) अपुष्टार्थत्वादनुत्कृष्टविशेषणमनुदारं निरलंकारमाचक्षते SaraKaṇṭhā. 35.11.

**अनुत्कृष्टविषयत्व** (anutkṛṣṭaviṣaya-tva) *n.* the state of having reference to a person of an inferior caste अनुत्कृष्टविषयत्वे तु – उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ BālaKrī. i. 277.3 (*on* 2.221)

**अनुत्कृष्यमाण** (an-utkṛṣyamāṇa) *adj.* not being removed from (the original place to elsewhere) अनुत्कृष्यमाण एव वा प्रगाथः … प्रकाशयिष्यति TantrVā. 406.18 (*on* ii. 1.21)

**अनुत्कोट** (an-utkoṭa) *adj.* devoid of crookedness (of the mind) अकुटिल्वेति राज्ञोक्तोऽनुत्कोटो नुवितेति सः।… स्माहालेखनीयकृतां वरः DvyāśraKā. 9.98 (comm. अनुत्कोटोऽकुटिलमनस्कः)

**अनुत्कोटयत्** (an-utkoṭayat) *adj.* not making crooked वचोऽनुत्कोटयन्स्माहालेखनीयकृतां वरः DvyāśraKā. 9.98.

**अनुत्क्रम** (an-utkrama) *m.* absence of going out (of the body), absence of departure न ह्यविदुषः प्राणानामनुत्क्रमः AṇuBh. 320. 3 (*on* iv. 2.5)

**अनुत्क्रमण** (an-utkramaṇa) *n.* absence of going out, absence of departure (प्रत्युत्थानाभिवादाभ्याम्) सप्राण एव भवत्यनुक्रमणात् (? अनुत्क्रमणात्) ManvaVi. 189. 8 (*on* 2.120)

**अनुत्क्रम्य** (an-utkramya) *ger.* not having gone out or departed सगुणविद्याफलस्य … अर्चिरादिगतिप्राप्यस्य अनुक्रम्य (? अनुत्क्रम्य) प्राप्त्यसंभवात् VedāntKa. 530.3 (*on* iv. 2. 1)

**अनुत्क्रान्त** (an-utkrānta) *adj.* not departed or gone out स यावदस्माच्छरीरादनुत्क्रान्तो भवति। तावज्जानाति ChāndoU. viii. 6. 4; न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृतः BrahmSūBh.(Śaṅ.) 810.4 (*on* iv. 2.13)

**अनुत्क्रान्तजीव** (anutkrānta-jīva) *adj.* whose life-breath has not departed or gone out (of the body) (i. e. who is still alive) अब्रह्मण्यमनुत्क्रान्तजीवो योगस्थितो द्विजः। अनाथशव इत्यद्य बलाद् दग्धः KathāSaSāg. i. 4.111.

**अनुत्क्रान्तप्राण** (anutkrānta-prāṇa) *adj.* whose vital breath has not gone out or departed (from the body) न ह्यनुत्क्रान्तप्राणस्य देहाद्गतिः संभवति। अतोऽन्यविषयत्वात् गतेर्विदुषो जीवत एव मुक्तिस्सिद्धा IṣṭaSi. 78. 3; संजातविद्यः पुरुषः प्रारब्धवशादनुत्क्रान्तप्राणो जीवद्दशायामेव ब्रह्मानुभवतीत्यर्थः ŚrutaPra. ii. 605. 16 (*on* iv. 2. 13)

**अनुत्क्रान्ति** (an-utkrānti) *f.* non-departure, absence of going out (of the body) अमृतिश्चाप्यनुत्क्रान्तौ सत्सु प्राणेषु का मृतिः BṛĀraUBhVā. iii. 2. 25.

**अनुत्क्रान्तिपक्ष** (anutkrānti-pakṣa) *m.* alternative view of non-departure (of the vital breath from the body) अनुत्क्रान्तिपक्षं परिगृह्य … उच्छ्वयनादीनि समामनन्ति BrahmSūBh.(Śaṅ.) 810. 4 (*on* iv. 2.13)

**अनुत्क्रान्तिपर** (anutkrānti-para) *adj.* referring to non-departure यच्च निर्विशेषब्रह्मात्मैक्यध्यायिनोऽनुत्क्रान्तिपरं तदित्याह तन्मन्दम् GoviBh. 302. 5 (*on* iv. 2. 13)

**अनुत्क्रामत्** (an-utkrāmat) *adj.* not departing, not going out (of the body) तस्मिंश्च प्राणे प्रतिष्ठमाने तूष्णीं भवति अनुत्क्रामति सति, सर्व एव प्रतिष्ठन्ते तूष्णीं व्यवस्थिता बभूवुः PraśnaUBh. 253. 16 (*on* 2.4)

**अनुत्क्रामुक** (an-utkrāmuka) *adj.* [Debru. 480] not liable to stray away तथा ह यजमानात् पशवोऽनुत्क्रामुका भवन्ति KauṣīBr. 2.4 (5.17); 8.7 (38.24); 11.6 (51.11)

**अनुत्क्लिष्ट** (an-utkliṣṭa) *adj.* not having the tendency of coming out (from the receptacle) सामान् दोषान् न निर्हरेत्। लीनान् धातुष्वनुत्क्लिष्टात् फलादामाद्रसानिव AṣṭāSaṁ. i. 114. 4 (1. 21); AṣṭāHṛ. i. 13. 28 (comm. स्वस्थानादचलितान्); प्रमाणं प्रतिमर्शस्य बिन्दुद्वितयमिष्यते। बिन्दुर्वा येन चोत्क्लेशो नानुत्क्लिष्टस्य जायते AṣṭāSaṁ. i. 157.22 (1.29)

**अनुत्क्लिष्टकफ** (anutkliṣṭa-kapha) *adj.* whose phlegmatic humour has not (got the tendency to) come out (from the receptacle) अनुत्क्लिष्टकफास्विन्नदुर्बलानां विशोधनात्। वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् CaraS. vi. 17. 91 (1941 Ed.); AṣṭāSaṁ. 33. 7 (4. 6); AṣṭāHṛ. iv. 4.18.

**अनुत्क्लेश** (an-utkleśa) *m.* condition in which a *doṣa* does not tend to come (out of the receptacle) पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते। जातीफलस्य वा शीतं शृतं भद्रधनस्य वा SiddhYo. 6. 62.

**अनुत्क्षिप्तभ्रू** (anutkṣipta-bhrū) *adj.* eyebrow of which is not raised जिह्वालेहनेनादन्तदर्शनेनानुक्षि(? त्क्षि)प्तभ्रुवा … मुखेन AvantiKa. 104.8.

**अनुत्क्षिप्ताञ्जलिपुट** (anutkṣiptāñjalipuṭa) *adj.* in which the folded palms are not raised in supplication पिङ्गलकः … असहमानस्वयंग्राहि … अनुत्क्षिप्ताञ्जलिपुटम् … राजत्वमनुभवन्नास्ते Tantrākhyā. 4.14; पिङ्गलकः … अनुक्षि(? त्क्षि)प्ताञ्जलिपुटम् … राजत्वमनुबभूव Pañcā. 4.28.

**अनुत्तरप्रकाशपञ्चाशिका** (anuttaraprakāśapañcāśikā) *f.* title of a work, *nt.*

**अनुत्तरप्रदान** (an-uttarapradāna) *n.* non-giving of a reply सव्रीलं लोकनेनैव स्वानुकूल्यप्रकाशनम्। अनुत्तरप्रदानेन स्वस्वातन्त्र्यप्रकाशनम् BhāvPra. (Śā.) 118.4(5); पूज्यक्रोधे तु चेष्टाः स्युः ··· अनुत्तरप्रदानाङ्गस्वेदगद्गदिकादयः RasāSu. 159.22 (2.135); 107.2 (2.24)

**अनुत्तरप्रभ** (anuttara-prabha) *adj.* possessed of highest brilliance प्रभावकैरेवमनुत्तरप्रभैरयं समग्रैरपि राजते गणः। न रत्नजातिः खलु सा प्रजायते रत्नाकरं या समतीत्य वर्तते Gurvā. 460.

**अनुत्तरप्राज्यपुण्य** (anuttaraprājya-puṇya) *n.* highest and abundant merit प्राप्तः स कल्पेष्विन्द्रत्वमन्यद्वा स्थानमुत्तमम्। मोदतेऽनुत्तरप्राज्यपुण्यसंभारभाक् ततः YogŚā. 3. 153.

**अनुत्तरप्राप्तनवनवोपचार** (anuttaraprāpta-navanavopacāra) *m.* newer and newer treatment received in the best (possible) manner (हरिवाहनः) उपयम्य ··· तिलकमञ्जरीम्, स्थित्वा च तन्मातृपक्षस्य चक्षुःप्रीतये यथोत्तरमनुत्तरप्राप्तनवनवोपचारचारूणि ··· अहानि TilaMañ. 425.15.

**अनुत्तरफलोदया** (anuttara-phalodayā) *adj.* (*f.*) having excellent accomplishment (*lit.* appearance) of fruit श्रीशाले: साधुमूर्धन्यामनुत्तरफलोदयाम्। विचारयन्तु चतुरा मञ्जल्यामक्षतश्रियम् ŚāliC. 7.1.

**अनुत्तरब्रह्मानन्द** (anuttara-brahmānanda) *m.* unsurpassable joy of Brahman अत्रानुत्तरब्रह्मानन्दपदानुप्रविष्टस्य मुक्तस्य ··· गानं कर्तव्यतया न विधीयते BrahmSūBh.(Śrī.) ii. 498.13 (*on* iv. 4. 19)

**अनुत्तरब्राह्मण्ययोग** (anuttarabrāhmaṇya-yoga) *m.* association of the excellent nature of a brahmin (ब्राह्मण्यं ब्रह्मचक्रं च तदेव ब्रह्मवर्तनात्) क्लेशानां वाहनाद् ब्राह्मण्य ब्रह्मचक्रं तु अनुत्तरब्राह्मण्ययोगात् AbhidhKoBh. 371.2 (*on* 6. 54) (Sphuṭā. वाहिता अनेनानेकविधाः पापका अकुशला धर्मा इति ब्राह्मणः। तद्भावो ब्राह्मण्यम् — अनास्रवो मार्गः।··· अनुत्तरब्राह्मण्ययोगादिति। अनुत्तरानास्रवमार्गयोगादित्यर्थः एष हि भगवान् ब्रह्मेति एतदुदाहरणम्)

**अनुत्तरभाषण** (an-uttarabhāṣaṇa) *n.* non-uttering or non-articulating of an answer विद्याभिजात्यसंपत्तिमदेऽनुत्तरभाषणम्। अवज्ञागर्भितं वाक्यं सुहृदामप्यनादरः BhāvPra.(Śā.) 17.17(1)

**अनुत्तरम्** (anuttaram) *adv.* **i** so that there is no reply हन्त अनुत्तरमभिहितम् Prati. 4.24(1); अनुत्तरं प्रतिहतश्चालयन्नन्यसंकथाः। कालं विलम्बयामासेष्टानध्यायकृतादरः PrabhāC. 157.13; **ii** without a reply अनन्तरं परममिति प्रपन्नवाननुत्तरं द्रुहिणसुतस्य तद्वचः।··· अङ्गदः RāmC. 15.49.

**अनुत्तरमनुष्यधर्म** (anuttara-manuṣyadharma) *m.* superior or uncommon quality of a man यः पुनर्भिक्षुरनभिजानन्नपरिजानन्नसन्तमसंविद्यमानमनुत्तरमनुष्यधर्ममल[मार्य]विशेषा[धिगमं ज्ञानं वा] दर्शनं स्पर्शविहारतां वा प्रतिजानीयात् ··· अयमपि भिक्षुः [पाराजिको भवत्यसं]वास्यः PrātiSū. 8.16.

**अनुत्तरमय** (anuttara-maya) *adj.* [*f.* -ī] consisting of that which has nothing preceding (i.e. the initial sound *a*) अवर्णोऽप्येकधा पूर्वमनुत्तरमयात्मना। स्वरव्यञ्जनभेदेन स द्विधा व्यवतिष्ठते AhirbuS. 16.41; (एवंविधा क्रियाशक्तिः) अनुत्तरमयी भूयो बिन्दौ संप्रतितिष्ठति AhirbuS. 16.66.

**अनुत्तरयोग** (anuttara-yoga) *m.* one of the Buddhist Tantric text, PW.

**अनुत्तरयोगतन्त्र** (anuttarayoga-tantra) *n.* one of the four classes of Buddhist Tantra, PW.; title of the last of the four Bauddhatantras, MW.

**अनुत्तरराज** (anuttararāja) *m.* name of a Bodhisattva अचलदेवस्य अचिन्त्यश्रियो विमोक्षचन्द्रस्य अनुत्तरराजस्य ··· बोधिसत्त्वस्य GaṇḍVyū. 348.4 [DBHS.]

**अनुत्तररूढ** (anuttara-rūḍha) *adj.* accompanied by the sound *a* क्रोधीशः श्रीकण्ठारूढः कोणत्रयं लक्ष्मीः। मांसमनुत्तररूढं वाग्भवकूटं प्रकीर्तितं प्रथमम् VarivaRaha. 9.

**अनुत्तरलक्षण** (anuttara-lakṣaṇa) *adj.* characterized as not followed by anything (अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्) अपूर्वलक्षण आदिरनुत्तरलक्षणोऽन्तः MahāBh. i. 77.26 (*on* i. 1.21)

**अनुत्तरलक्षणत्व** (anuttaralakṣaṇa-tva) *n.* the state of being characterized as followed by nothing अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन् Vār. 6 *on* P. i. 1. 21; MahāBh. i. 77.26 (*on* i. 1.21)

**अनुत्तरवङ्गसंगरजय** (anuttaravaṅgasaṅgara-jaya) *m.* victory at the battle in the southern Vaṅga यस्यानुत्तरवङ्गसङ्गरजये नौवाटहीहीरवत्रस्तैर्दि( Read त्रस्तैर्दि )क्करिभिश्च यन्न चलितं चेन्नास्ति तद्भ्रम्यभूः EI. ii. 351.15.

**अनुत्तरवादिता** (anuttaravādi-tā) *f.* the state of being one who does not utter (i.e. give) any rejoinder श्वश्रूश्वशुरपरिचर्या तत्पारतन्त्र्यमनुत्तरवादिता ··· इत्येकचारिणीवृत्तम् KāmSū. 239.22 (4.1) (JayaMa. तयोः प्रत्युत्तरं न देयम्)

**अनुत्तरवादिन्** (an-uttaravādin) *adj.* not giving (*lit.* uttering) any reply यदि च सर्वदैवानुत्तरवादिनं न पराजयेद्राजा ततो व्यवस्थाभङ्ग आपद्यते ManuBh. ii 99.28 (*on* 8.57)

**अनुत्तरवासिता** (anuttaravāsi-tā) *f.* (Jain.) the state of being one who resides in the highest heavenly region (inhabited by the gods) आराधनां समाराध्य कृत्वा कालं समाधिना। विधिनानन्तवीर्योऽपि प्राप्तोऽनुत्तरवासिताम् BṛKathāK. 46.50.

**अनुत्तरवासिन्** (anuttara-vāsin) *m.* (Jain.) one residing in the highest heavenly region (inhabited by the gods) जनेभ्यः सुखिनो भूपाः भूपेभ्यश्चक्रवर्तिनः।··· ततोऽनुत्तरवासिनः PadmP.(Ra.) 105.188.

**अनुत्तरविमर्शमयी** (anuttaravimarśa-mayī) *adj.* (*f.*) consisting of the supreme self-consciousness 'चितिः' एव भगवती ··· अनुत्तरविमर्शमयी शिवभट्टारकाभिन्ना 'हेतुः' कारणम् PratyabhiHṛ. 2. 7(1)

**अनुत्तरविमर्शलिपिलक्ष्यविग्रहा** (anuttaravimarśalipilakṣya-vigrahā) *adj.* (*f.*) whose body is defined by the alphabets *a* and *ha* (i.e. all the sounds from *a* to *ha*) स्फुटशिवशक्तिसमागमबीजाङ्कुररूपिणी पराशक्तिः। अणुतररूपानुत्तरविमर्शलिपिलक्ष्यविग्रहा भाति KāmKaVi. 3.

**अनुत्तरविमान** (anuttara-vimāna) *m.*, *n.* (Jain.) the highest heavenly region (inhabited by the gods) निहत्याशेषकर्माणि मोक्षं प्राप्तो यशोधरः। अनुत्तरविमानं च गतोऽनन्तबलोऽपि सः BṛKathāK. 46.56; अनुत्तरविमानानां विमानमिव किंचन। सुदर्शनाख्यां शिबिकां पत्ये हरिरसूत्रयत् TriṣaŚaPuC. i. 3.29; i. 6.457; अनुत्तरविमानेषु विमाने विजयाभिधे। त्रयस्त्रिंशत्सागरायुः सोऽमरः समजायत TriṣaŚaPuC. ii. 1.306; ii. 2. 33; अनुत्तरविमानानि पञ्चैव हि भवन्ति तु TriṣaŚaPuC. ii. 3. 779.

**अनुत्तरविमानतस्** (anuttaravimāna-tas) *adv.* (Jain.) from the highest heavenly region (inhabited by the gods) असाविदानीं विजयादनुत्तरविमानतः। अच्योष्ट जगदानन्दनिदानं परमेश्वरः TriṣaŚaPuC. ii. 2.39.

**अनुत्तरविमानिन्** (anuttaravimān-in) *m.* one residing in the highest heavenly region (inhabited by the gods) तस्यां पद्मोत्तराख्योऽभून्नृपः सर्वनृपोत्तरः। अनुत्तरविमानिभ्य इवैकः कश्चिदागतः TriṣaŚaPuC. iii. 8.4.

**अनुत्तरविरोधिज्ञान** (anuttaravirodhi-jñāna) *n.* knowledge not contradicted subsequently शुक्तिरियमिति ज्ञानानन्तरं रजतमिदमिति ज्ञानस्य दर्शनात्। अनुत्तरविरोधिज्ञानं बाधकमिदं तु सोत्तरमित्यपि न। कदाचिदनुत्तरस्यापि रजतज्ञानस्य संभवात् NyāySu.(Ja.) 444B.10 (*on* ii. 3. 14)

**अनुत्तरविषय** (anuttara-viṣaya) *adj.* referring to *anuttara* (i.e. Śiva) अथ शब्दार्थश्च न संगच्छते। स हि सजातीयनिश्चयानन्तर्यैवृत्तिः उत्तरस्वरूपावधारणमन्तरेण च अनुत्तरविषयस्यैकप्रश्नस्य अनुपपत्तिः ParāTri. 94.10.

**अनुत्तरवेदिक** (anuttaravedi-ka) *adj.* not connected with (i.e. not performed on) the high altar यत्किं च राजसूयेऽनुत्तरवेदिकं तदत्र सर्वं क्रियते KāṭhS. 37.4 (iii. 87.1); ĀpaŚS. xxii. 25.15; नानुत्तरवेदिके पाशुकं प्रणयनं विद्यते ĀpaŚS. viii. 1.8.

**अनुत्तरवेदीक** (anuttaravedí-ka) *adj.* not connected with (i.e. not performed on) the high altar यत्किंचँ राजसूयमनुत्तरवेदीकम्। तत् सर्वं भवति TaiBr. II. vii. 5.2.

**अनुत्तरशक्तिशालिन्** (anuttaraśaktiśāl-in) *adj.* possessed of or endowed with the highest power तदात्मकः यः अनुत्तरशक्तिशाली — सर्वातिशायिस्वातन्त्र्यशक्तिभूषितः Bhāsk. i. 25.22 (*on* i. 1.1)

**अनुत्तरशास्त्रीय** (anuttaraśāstr-īya) *adj.* (a person) taught or trained in the highest (mystic) lore अस्या ऐश्वरी वागिति नामानुत्तरशास्त्रीयाः (जनाः) कथयन्ति Bhāsk. ii. 177.6 (*on* ii. 4.11)

**अनुत्तरश्री** (anuttaraśrī) *m.* name of a Bodhisattva अनुनयगात्रस्य अभ्युद्गतकर्मणोऽनुधर्ममतेरनुत्तरश्रियो ब्रह्मदेवस्य ··· बोधिसत्त्वस्य GaṇḍVyū. 348.5 [DBHS.]

**अनुत्तरश्री** (anuttara-śrī) *f.* prosperity of the highest heavenly region (inhabited by the gods) गुणैर्यदध्ययनकलापकीर्तिता अनुत्तरा प्रशमिषु जालिमुख्यकाः। अनुत्तरश्रियमभजन् SiddhāĀSta. 18 (comm. अनुत्तराणि विजयादीनि पञ्चविमानानि तेषां श्रियमभजन्)

**अनुत्तरश्री** (anuttara-śrī) *adj.* possessing supreme glory अनुत्तरं दानमनुत्तरश्रियोऽप्यनुत्तरं मानमनुत्तरं यशः। श्रीशालिभद्रस्य गुणा अनुत्तराः ŚāliC. 7.145.

**अनुत्तरश्रीक** (anuttaraśrī-ka) *adj.* possessing unsurpassed pro-

sperity अत्रैव विजयार्धशिखरिण्युत्तरश्रेण्यामनुत्तरश्रीकमाद्यं सर्वनगराणां गगनवल्लभाभिधानं प्रधाननगरम् TilaMañ. 401.5.

**अनुत्तरश्लेष** (anuttara-śleṣa) *m.* combination with the *anuttara* (i.e. the initial sound *a*) अनुत्तरोन्मेषयोगादोकारो नाम जायते। तस्यैवानुत्तरश्लेषात् सद्योजातसमुद्भवः। अनुत्तराद्भवन्त्येते विकासा वेद्यसंश्रयाः LakṣmīT. 19.7.

**अनुत्तरस** (anutta-rasa) *adj.* from which flavour is not removed (i.e. tasty) अनुत्तरसानुतर्षसच्चाषकान्तरचितस्थितिकेसरौघैः।… यो बिभर्ति लक्ष्मीम् HarVi. 4.40.

**अनुत्तरसंयोग** (anuttara-saṁyoga) *m.* combination with the *anuttara* (i.e. the initial sound *a*) संध्यात्मान इमे कूटाश्चत्वारः समुदाहृताः। अनुत्तरेच्छायोगेन ह्येधमानः स ए स्मृतः। भूयोऽनुत्तरसंयोगादै चाप्यैश्वर्यवान् स्मृतः AhirbuS. 16.51.

**अनुत्तरसत्ता** (anuttara-sattā) *f.* transcendental Reality सा चावस्थानेन इच्छेति व्यपदेश्या इष्यमाणानुद्रेका, तत एवानुत्तरसत्तापरामर्शात्मिकैव एषा ParāTri. 167.9; 'मनुष्यदेहमास्थाय च्छन्नास्ते परमेश्वराः। निर्वीर्यमपि ये हार्दं त्रिकार्थं समुपासते' इति, तत्कथमस्योपासा, तथापि चानुत्तरसत्तयात्रापि भाव्यम् ParāTri. 260.14.

**अनुत्तरसम्यक्संबुद्ध** (anuttarasamyak-sambuddha) *adj.* who has attained perfect and unsurpassable enlightenment धर्मतैषा यद्बोधिसत्त्वश्चरमभाविकः … ततो व्युत्थाय पुनश्चतुर्थध्यानसंनिश्रयेण भावाग्रिकभावनाप्रहातव्यक्लेशप्रहाणं कृत्वा क्षयज्ञानकालात् प्रभृत्यनुत्तरसम्यक्संबुद्धो भवति Sphuṭā. ii. 83.25 (*on* 2.44)

**अनुत्तरसम्यक्संबोधि** (anuttarasamyak-sambodhi) *f.* perfect and unsurpassable enlightenment उपकारकतरांश्च स बोधिसत्त्वस्तान्सत्त्वानात्मनः समनुपश्यति। येषां तथा दानेनोपकरोति नात्मानम्। तेषामनुत्तरसम्यक्संबोध्युपस्तम्भतामुपादाय इति MaYānaSū. 102.27 (16.16)

**अनुत्तरसानु** (anuttara-sānu) *n.* highest peak अनुत्तरसानुतर्षसच्चाषकान्तरचितस्थितिकेसरौघैः।… यो बिभर्ति लक्ष्मीम् HarVi. 4.40.

**अनुत्तरसुख** (anuttara-sukha) *n.* highest happiness अर्हन् देवो गुरुः साधुर्धर्मश्च करुणेति सः। मन्त्राक्षरमिवाध्यायदनुत्तरसुखप्रदम् TriṣaŚaPuC. iv. 6.5; अनुत्तरसुखागारे तौ पञ्चानुत्तरोत्तरे। महाविमाने सर्वार्थसिद्धेऽभूतां सुरोत्तमौ ŚāliC. 7.139.

**अनुत्तरसुर** (anuttara-sura) *m.* (Jain.) class of divine beings residing in the highest heavenly region अनुत्तरसुराणां त्वं तत्रस्थानामिह स्थितः। वेत्सि छिनत्सि संदेहम् TriṣaŚaPuC. i. 3.481; आशास्यते यत् प्रयत्नादनुत्तरसुरैरपि। तत् संप्राप्तं मनुष्यत्वम् TriṣaŚaPuC. iii. 4.146; PārśvC. 2.85; ततः परमविरतिनामास्ति नगरी शुभा। त्रयस्त्रिंशद्विधमानानुत्तरसुरभासुरा MalliC. 3.96.

**अनुत्तरस्थिति** (anuttara-sthiti) *f.* **I** excellent position बृहत्क्षत्र इत्यनुत्तरस्थितिमपश्चिमानमवाचीनवृत्तिरनुकूलस्थितिर्महेन्द्राश्रयमानशे AvantiKa. 147.18; **II** stability in the south, AvantiKa. 147.18.

**अनुत्तरस्पृष्टा** (anuttara-spṛṣṭā) *adj.* (*f.*) mixed with the sound *a* (अ इत्यादिसमुन्मेषः सोऽनुत्तर उदीर्यते) सा यात्यनुत्तरस्पृष्टा कण्ठं शक्तिर्विसर्गिणी AhirbuS. 16.64.

**अनुत्तरस्वरूप** (anuttara-svarūpa) *n.* essential nature of the Absolute Reality हृदयस्वभावपरसंविदात्मकशिवविमर्शतादात्म्यं तां सिद्धिं ददाति अनुत्तरस्वरूपतादात्म्ये हि कुलं तथा भवति ParāTri. 34.5; 45.5; ततश्च विस्तरतोऽनुत्तरस्वरूपनिरूपणाय ग्रन्थान्तरावतारः ParāTri. 218.5.

**अनुत्तरस्वरूपा** (anuttara-svarūpā) *adj.* (*f.*) having the supreme nature कर्तृतापि च तैस्तत्र लौकिकी अङ्गीक्रियते, न त्वनुत्तरस्वरूपा Bhāsk. ii. 29.14 (*on* ii. 1.8)

**अनुत्तरस्वर्ग** (anuttara-svarga) *m.* (Jain.) the highest heavenly region जज्ञेऽथावधिना स्वामी स्वःसुखं चोत्तरोत्तरम्। अनुत्तरस्वर्गसुखं भुक्तपूर्वं स्वयं च यत् TriṣaŚaPuC. i. 2.1018.

**अनुत्तरस्वर्गिन्** (anuttarasvarg-in) *m.* (Jain.) one living in the highest heavenly region संशयान्नाथ। हरसेऽनुत्तरस्वर्गिणामपि Vītarā. 10.3; TriṣaŚaPuC. ii. 6.625.

**अनुत्तरस्वातन्त्र्यबल** (anuttarasvātantrya-bala) *n.* power of the autonomy or absolute freedom of the Absolute Reality पूज्यो हि स्वयं सृज्यते, स परं स्वतन्त्रचिन्मयतापरमार्थ एव अनुत्तरस्वातन्त्र्यबलात् ParāTri. 266.11.

**अनुत्तरहेतु** (anuttara-hetu) *m.* cause of the non-reply न चात्रास्मृत्यादयोऽनुत्तरहेतवः संभवन्ति ManuBh. ii. 98.26 (*on* 8.56)

**अनुत्तरा** (an-uttarā) *f.* **A** Supreme Reality क्षोभे क्षीणेऽनुत्तरायां स्थितौ तां वन्दे देवीं स्वात्मसंवित्तिमेकाम् ParāTri. 2.3; **B** epithet of Rādhā (*lit.* the most excellent woman) अनुत्तरा दुःखहन्त्री दुःखकर्त्री कुलोद्वहा … इति … राधानामसहस्रकम् PañcaRā.(Nā.) v. 5.32.

**अनुत्तरांशभूता** (anuttarāṁśa-bhūtā) *adj.* (*f.*) which has become (i.e. which constitutes) the portion of the (mystic) supreme Śrīcakra वामा ज्येष्ठा रौद्री चाम्बिका चानुत्तरांशभूताः स्युः KāmkaVi. 23 (comm. अनुत्तरांशत्वेन श्रीचक्रान्तर्गताधोमुखपञ्चत्रिकोणाकृतित्वेन भूता जाता इत्यर्थः)

**अनुत्तराकुलस्वरूप** (anuttarākula-svarūpa) *adj.* which is of the essential nature of the highest *ākula* or Śiva अनुत्तराकुलस्वरूपात् अकारात् आरभ्य शक्तिस्फाररूपहकलापर्यन्तं यत् विश्वं प्रसृतम् PratyabhiHṛ. 50.2(20)

**अनुत्तराग** (anutta-rāga) *m.* continuous passion क्रियतेतरां रतिरनुत्तरा गायता मधुपेन चानिशमनुत्तरागायता HarVi. 5.40 (comm. अनुत्तेन चाक्षुण्णेन रागेण)

**अनुत्तरात्मक** (anuttarātma-ka) *adj.* of the nature of the highest (reality) स्वोक्तनीत्या अनुत्तरात्मकस्वहृदयस्फूर्जनेन रचिता स्फारिता Bhāsk. ii. 316.24 (*on* iv. 1.18)

**अनुत्तरादि** (an-uttarādi) *adj.* other than the northern quarter or region etc. उत्तरादावप्युत्तरदिगभिधानं अनुत्तरादावप्युत्तरदिगभिधानम् KāvyMī. 96.14; Kāvyānu.(He.) 155.3.

**अनुत्तराधर** (an-uttarādhara) *adj.* not having (distinction such as) higher or lower, not hierarchical संवेऽनुत्तराधरे CāndraVyā. i. 3.33.

**अनुत्तरानन्दात्मक** (anuttarānandātma-ka) *adj.* of the form of *a* (*anuttara*) and *ā* (*ānanda*) अनुत्तरानन्दात्मकं वपुर्न व्यपसरति — अव्यपदेशरूपत्वात् ParāTri. 172.6.

**अनुत्तरानन्यसाक्षिन्** (anuttarānanya-sākṣin) *adj.* having unexcelled unique perceiver अनुत्तरानन्यसाक्षिपुमर्थोपायमभ्यधात्। ईश्वरप्रत्यभिज्ञाख्यं यः PratyabhiVi. i. 8.1 (*on* i. 1.1) (Bhāsk. अविद्यमान उत्तरः श्रेष्ठः यस्मात् तादृशश्चासौ नान्यः साक्षी ग्राहको यस्य तादृशश्च यः पुमर्थः मोक्षाख्यः पुरुषार्थः)

**अनुत्तरानुरोध** (anuttarānurodha) *adj.* having unsurpassable pleasure (i.e. highly pleased) दर्शनं पुरस्तात्तेभ्योऽहं व्यतरमनुत्तरानुरोधः ŚrīKaC. 17.49 (comm. जातानुरोधः)

**अनुत्तरापत्ति** (anuttarāpatti) *f.* undesired contingency of non-reply किन्नेति वादिन्यनुत्तरापत्तेः प्रमात्वनिरूपणवैयर्थ्यापाताच्च KhaṇḍanKhā. 449.2.

**अनुत्तरामृत** (anuttarāmṛta) *n.* supreme immortality हृदयमनुत्तरामृतकुलं मम संस्फुरतात् ParāTri. 1.8 (comm. अनुत्तरामृतकुलं स्वातन्त्र्यरूपम्)

**अनुत्तराम्नाय** (anuttarāmnāya) *m.* the highest doctrine (viz. *ūrdhvāmnāya*) अनुत्तराम्नायाख्यस्वरूपे … महात्रिपुरसुन्दरि (नमः) BrahmāṇḍP. iii. 43.14 (21); निरुत्तरपदेनोर्ध्वाम्नायतन्त्रं तस्यानुत्तराम्नायपदेनापि व्यवहारः SetuBa. 23.30.

**अनुत्तराय** (anuttarāya) *adj.* [w. r. for अनन्तराय] LaliVi. 15.68 [DBHS.]

**अनुत्तरार्थ** (an-uttarārtha) *adj.* not meant for the subsequent (modified) offering (i.e. meant for the archetype offering) उत्तरार्थस्तु स्वाहाकारः …। अनुत्तरार्थो वार्थवत्त्वात् MīmāSū. viii. 4.15.

**अनुत्तरार्ह** (an-uttarārha) *adj.* not deserving an answer (संसारस्य … अस्ति क्रमसमाप्तिर्न वेति। अवचनीयमेतत्) अवचनीयमनुत्तरार्हमेतत् TattvVai. 215.17 (*on* 4.33)

**अनुत्तराहंभाव** (anuttarāhambhāva) *m.* unsurpassable I-consciousness भैरववक्त्रं सृष्टिपरामर्शात्मकम्, अनुत्तराहंभावसाराकाराकाररूपशिवशक्तिसंघट्टसमापत्तिक्षोभात्मकम् ParāTri. 13.12.

**अनुत्तरिक** (an-uttarika) *adj.* not superior, who has not a higher aim ते तु अजीविक धर्मचराणाम् उत्तरिकाण अनुत्तरिकाणाम्।… आचर्या हि भवन्ति ŚikṣāSa. 332.1 [DBHS.]

**अनुत्तरीकृत्य** (anuttarīkṛt-ya) *ger.* having made or rendered replyless इतो जल्पन् युधे हेतुं चक्री चक्राप्रवेशनम्। न शक्योऽनुत्तरीकृत्य निरोद्धुं गुरुणापि TriṣaŚaPuC. i. 5.511.

**अनुत्तरीय** (an-uttarīya) *adj.* [*f.* -ā] **I** not wearing (*lit.* having) an upper garment नानुक्ता गृहान्निर्गच्छेत्। नानुत्तरीया ŚaṅkhaLiDS. 77; 78; सशस्त्रोऽनुत्तरीयो वा मुक्तकेशः सहासनः। वामहस्तेन वा वादं वदन्दण्डमवाप्नुयात् KātySm. 99; अनुत्तरीयः …। श्रौतम् … कर्म न नग्नश्चिन्तयेदपि। इति अनुत्तरीयस्य कर्ममात्रनिषेधात् SmṛtiCan. ii.299.19; CaturCin. iii(1). 370.7; **II** not to be used as an upper garment तत्रानुत्तरीयाणि शाणादीनि Manu-

Bh. i.96.29(*on* 2.41)

**अनुत्तरीयत्व** (anuttarīya-tva) *n.* the state of being one not wearing the upper garment 'यथाजातरूपधरो नाच्छादनं चरति परमहंसः' इत्यादिश्रुया परिग्रहराहित्यस्य मुख्यत्वाभिधानादनुत्तरीयत्वादिकं तस्य युक्तम् JīvanVi. 26.13.

**अनुत्तरीयवसन** (an-uttarīyavasana) *adj.* not wearing any upper garment अनुत्तरीयवसनमनुपस्तीर्णशायिनम्। बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः MahāBhā. xii. 261.29.

**अनुत्तरेच्छायोग** (anuttarecchā-yoga) *m.* combination of (the vowels) *a* (*anuttara*) and *i* (*icchā*) अनुत्तरेच्छायोगेन ह्येधमानः स ए स्मृतः AhirbuS. 16.51.

**अनुत्तरेच्छासंयोग** (anuttarecchā-saṁyoga) *m.* combination of (the vowels) *a* (*anuttara*) and *i* (*icchā*) अनुत्तरेच्छासंयोगादेकारो नाम जायते LakṣmīT. 19.5.

**अनुत्तरेच्छासंधान** (anuttarecchā-sandhāna) *n.* combination of (the vowels) *a* (*anuttara*) and *i* (*icchā*) अनुत्तरेच्छासंधानादेकारो नाम जायते AhirbuS. 16.48.

**अनुत्तरोत्तर** (anuttarottara) *adj.* [*f.* -ā] subsequent to (i. e. along with) *a* शक्तिर्विसर्गिणी …। अनुत्तरोत्तरा याति कण्ठे हेति विजृम्भणम् AhirbuS. 16.65; अनुत्तरोत्तरा सृष्टिर्या सा हेति पुरोदिता AhirbuS. 16.80; अनुत्तरोत्तरो बिन्दुर्मे इति प्रतिशब्द्यते AhirbuS. 16.88.

**अनुत्तरोदारसमग्रसद्गुण** (anuttarodārasamagra-sadguṇa) *adj.* possessed of all excellent and noble virtues अनुत्तरोदारसमग्रसद्गुणः स षड्विधावश्यकवम्बरः सदा।… अलंकरणं भुवोऽभवत् Gurvā. 2:2.

**अनुत्तरोन्मेष** (anuttaronmeṣa) *m.* (combination of) the vowels *a* (*anuttara*) and *u* (*unmeṣa*) दिव्यादनुत्तरोन्मेषादोकारो नाम जायते AhirbuS. 16.49.

**अनुत्तरोन्मेषयोग** (anuttaronmeṣa-yoga) *m.* combination of the vowels *a* (*anuttara*) and *u* (*unmeṣa*) अनुत्तरोन्मेषयोगादोकारो नाम जायते LakṣmīT. 19.6.

**अनुत्तरोपपातिक** (anuttaropapāti-ka) *adj.* having birth in the highest heavenly region (inhabited by the gods) अनुत्तराणि-विजयादिविमानानि तेषु य उपपातो जन्म स विद्यते येषां तेऽनुत्तरोपपातिकाः SthānṬ. 36B. 2; अनुत्तरोपपातिकानां देवानामूर्ध्वोच्चत्वेन प्रमाणम् SthānṬ. 36B. 5.

**अनुत्तरोपपातिकदशा** (anuttaropapātika-daśā) *f.* one of the twelve treatises of the Jain canon अनुत्तरोपपातिकदशाः … विपाकसूत्र, दृष्टिपात इति TattvāBh. 90.28 (*on* 1.20)

**अनुत्तरोपपातिकोपपददशा** (anuttaropapātikopapada-daśā) *f.* one of the twelve treatises of the Jain canon (same as अनुत्तरोपपातिकदशा) अनुत्तरोपपातिकोपपददशाः श्रयामि ताः SiddhaĀSta. 18.

**अनुत्तरोमन्थ** (anutta-romantha) *m.* continuous rumination श्रियं मृगीभिः प्रतनोति यः परामनुत्तरोमन्थरताभिरामताम् HarVi. 5.74.

**अनुत्तरौपपातिकदश** (anuttaraupapātika-daśa) *n.* one of the twelve treatises of the Jain canon अङ्गप्रविष्टं द्वादशविधम्।… अनुत्तरौपपातिकदशं प्रश्नव्याकरणं विपाकसूत्रं दृष्टिवाद इति SarvāSi. 1.20 (123.4)

**अनुत्तरौपपादिकदशा** (anuttaraupapādika-daśā) *f.* one of the twelve treatises of the Jain canon अनुत्तरौपपादिकदशा … विपाकसूत्रम् दृष्टिवाद इति TattvāRāVār. i. 20.12.

**अनुत्तर्य** (anuttar-ya) *n.* excellence, supremacy दर्शनानुत्तर्यम्। श्रवणानुत्तर्यम्। लाभानुत्तर्यम्। शिक्षानुत्तर्यम्। परिचर्यानुत्तर्यम्। अनुस्मृत्यनुत्तर्यम् MahāVyu. 79.1 [DBHS.]

**अनुत्तान** (an-uttāna) *adj.* [*f.* -ā] **A** not loud, not having high pitch स्फाललोकः स्थानस्थानेषु … वाद्यमानानुत्ताला- (v. l. अनुत्ताना- KANE Ed. Ucchvāsa. 4, 8.11) लाबुवीणेन … समकालदीयमानानुत्तालतालिकेन … अनुगम्यमानः HarṣaC. 188.3; **Bi** not supine, not (lying) with the face turned upwards ग्राम्यधर्मप्रवृत्तौ तु … गर्भिणीं सूतिकामनुत्तानां विकृताङ्गीम् … न गच्छेत AṣṭāSaṁ. i. 59.22 (1.9); AṣṭāHṛ. i. 7.68; सा प्रकृतिः … जले तत्र भासमाना … अनुत्ताना छिन्नभिन्ना … सात्त्विकस्यान्तिकं ययौ BṛDharmaP. i. 31.18; **Bii** not turned upwards अनुत्तानः पाणिः परधनकणस्पर्शविमुखः … यस्य स सुखी DaśāvaC. 8.598; प्रथमपैतृकद्विजवामजानुनि … स्वकीयमनुत्तानं दक्षिणकरं विन्यस्य…पितरमावाह्य…द्वितीयादावावाहयेत् CaturCin. iii(1). 1266. 6; अङ्गुष्ठग्रहणं चानुत्तानस्य हस्तस्य अनुत्तानेन हस्तेन कार्यम् VīraMi.(Śrāddha.) 239.31; अनखद्विजाङ्गुष्ठस्य अनुत्तानेन स्वदक्षिणहस्तेन सर्वेष्वन्नेषु निवेशनेनोपस्पर्शयित्वा BālamBha. i. 559.12 (*on* 1.249); **Ci** not shallow, cf. अनुत्तानाशय; **Cii** not explicit, cf. अनुत्तानता; *n.* a kind of posture or lying down in which the face is not turned upwards आपीड्य भूमिं जानुभ्यामासनं जानुपीडनम्। अनुत्तानेऽथवोत्ताने शयने शयनासनम् Mānaso. iv. 1.108.

**अनुत्तानकर** (anuttāna-kara) *m.* (palm of) hand not turned upwards (i. e. turned downwards) स्वोत्तानकरेण तस्यानुत्तानकरं हविषः प्रदक्षिणं नीत्वा … स्पर्शयित्वा … श्राद्धे विश्वेभ्यो देवेभ्यः … इत्यशनम् … दद्यात् ĪśānŚiPa. ii. 62.94(59)

**अनुत्तानतलत्व** (anuttānatala-tva) *n.* the state of having the palm not turned upwards सतामदैन्यं वदनस्य शोभा … पाणेरनुत्तानतलत्वमेव CaturSaṁ. 1.25.

**अनुत्तानता** (anuttāna-tā) *f.* the state of being that which is not explicit or open, the state of being hidden अत्र यद्यपि … स्वभावमात्रमेव वर्णितम्, तथाप्यनुत्तानतया व्यवस्थितस्यास्य विरलविदग्धहृदयैकगोचरम् … पदार्थान्तरलीनवृत्ति सूक्ष्मसुभगं तादृक् स्वरूपमुन्मीलितं येन वाक्यवक्रतात्मनः कविकौशलस्य काचिदेव काष्ठाधिरूढिरुपपद्यते VakroJī. 147.11.

**अनुत्तानम्** (an-uttānam) *adv.* **i** not upwards, downwards स्रुवेणाज्यं गृहीत्वामृतमसीति अनुत्तानमन्तरितमित्युत्तानं प्रत्युष्टमित्यनुत्तानं होम्यं प्रदक्षिणमभिमन्त्र्य VaikhāGS. 1.13; **ii** not too much upwards (i.e. touching the flesh slightly) शस्त्रविस्रावणं द्विविधं–प्रच्छानं सिराव्यधनं च। तत्र ऋज्वसंकीर्णं सूक्ष्मं सममनवगाढमनुत्तानमाशु च शस्त्रं पातयेत् SuśruS. i. 14.26 (comm. अनुत्तानं किंचिन्मांसस्पृक्)

**अनुत्तानमुष्टि** (anuttāna-muṣṭi) *adj.* having the fist (with the fingers) not raised up (i. e. turned downwards) भूमिकुन्तं समादाय दक्षिणेन च पाणिना। अशनेरग्रतो हस्तमात्रेऽनुत्तानमुष्टिना …। संगृह्य कुन्तं जाते, (न) स्थानकेन चरेल्लघु Mānaso. iv. 1.182.

**अनुत्तानावगाढम्** (an-uttānāvagāḍham) *adv.* neither upwardly nor deeply सर्वत्र चानुत्तानावगाढमृज्वसंकीर्णम् … शस्त्रमाशु पातयेत् AṣṭāSaṁ. i. 178.18 (1.36)

**अनुत्तानाशय** (anuttānāśaya) *adj.* whose character is not shallow स्पृष्टोऽप्यनुत्तानाशयोऽभूदवगाहितुम्। न शेकुस्तं यथा जाल्मनर्मवित्पिशुनादयः RājTa.(Ka.) 8.3268.

**अनुत्ताप** (an-uttāpa) *m.* absence of affliction आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचः … एते सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः BhāvPra.(Bhā.) 2.7 (comm. अनुत्तापः अक्रोधः)

**अनुत्तार** (an-uttāra) *adj.* unfordable, from which there is no escape सकलवीरगोष्ठीबाह्यस्य तस्यैवेदमुचितमनुत्तारनिरयनिपातनिपुणं कर्म HarṣaC. 259.10.

**अनुत्तारण** (an-uttāraṇa) *n.* **i** absence of straying away from तत्र भावार्थाधिकरणन्यायो यत्र धात्वर्थादनुत्तारणं विधेः MīmāKau. iii(2). 269.19 (*on* ii. 2.25); **ii** absence of removing or taking off सदोपवीतिना भाव्यम् … सदाशब्दश्रवणाच्चोपवीतस्य कण्ठादनुत्तारणं गम्यते VīraMi.(Saṁskāra.) 422.14.

**अनुत्तार्य** (an-uttārya) *ger.* **i** not having removed or taken off देवपूजायां निषिद्धकुसुमार्चनम्। अनुत्तार्यं च निर्माल्यं पूजा … अपराधास्त्रयस्त्रिंशत् समाख्याताः VarāP. 179.8; **ii** not having caused to cross (i. e. not being able to cross) दूताः … वैतरण्याम् … प्रक्षिपन्ति … अनुत्तार्यं तदा तस्या उच्छ्रिता विकृतावशाः। आवर्तादूर्मयश्चैव उत्तिष्ठन्ति सहस्रशः VarāP. 198.48.

**अनुत्ताल** (an-uttāla) *adj.* not discordant, melodious स्फाललोकः स्थानस्थानेषु … वाद्यमानानुत्तालालाबुवीणेन … समकालदीयमानानुत्तालतालिकेन … अनुगम्यमानः HarṣaC. 188.3; *m.* melodious note वैतालिकैरनुत्तालैश्चक्रे जयजयारवः TriṣaŚaPuC. ii. 2.578.

**अनुत्तालगुञ्जत्** (anuttāla-guñjat) *adj.* sounding melodiously विधेहि … प्रमदवनसहकारपादपतलेष्वनुत्तालगुञ्जन्मुरजरवमनोहरम् … पुराणवारुणीपानोत्सवम् TilaMañ. 61.11.

**अनुत्तालतरङ्ग** (anuttāla-taraṅga) *m.* melodious or harmonious (sound-) wave स पानमध्ये मणिमर्दलानकध्वनिष्वनुत्तालतरङ्गचारुषु। ददर्श नित्यं निजवारयोषितामपूर्वलीलालयरीतिरेचकम् RāmC. 18.77.

**अनुत्तितरीषु** (an-uttitarīṣu) *adj.* [SiddhaHe. iv. 4.47] not willing to come out (i.e. fixed at) मया शुष्कधुनीं तितीर्ष्वी। तितंस्यतेऽनुत्तितरीषु चक्षुर्मुधा त्वयीत्येष कयाचिदूचे DvyāśraKā. 10.43 (comm. अनुत्तितरीष्वगाधलावण्यामृतनिमग्नत्वेनोत्तरीतुमनिच्छु)

**अनुत्तिष्ठत्** (an-uttiṣṭhat) *adj.* not arising or coming into being इह तूत्प्रेक्षया … विरोधस्योत्थानमेव भग्नमिति कथमनुत्तिष्ठन्नेव विरोधश्चमत्कारमूलमलंकारभावं वहेत् RasGaṅ. 577.14.

**अनुत्तिष्ठमाना** (an-uttiṣṭhamānā) *adj.* (*f.*) not standing up, not

exerting जृम्भत्युत्कण्ठत्यनुत्तिष्ठमाना नार्या भ्राजत्यूररीकुर्वतस्तम् Ḍamaru. 76.

**अनुत्तीर्ण** (an-uttīrṇa) *adj.* **I** who has not come out (of a difficult situation) व्याध्यार्ताः … अनुत्तीर्णाश्च नासेध्याः KātySm. 108; तर्को निरसनीयः। तन्निरासे च श्रुतेः सर्वमिथ्यात्वप्रतिपादकत्वमित्यन्योऽन्याश्रयमनुत्तीर्णः कथमसावपि (वादी) तर्कस्य विरुद्धतां प्रतिपद्येत NyāySu.(Ja.) 28A.12 (*on* i. 1. 1); **II** which has not crossed नृपः … निस्तीर्णः कथंचन। अनुत्तीर्णं बलं त्यक्त्वा … तीर्णेनानुगतो ययौ RājTa.(Ka.) 8.1067.

**अनुत्तुण्ड** (an-uttuṇḍa) *adj.* the point of which has not come out शल्यं न निर्घात्यम् … प्रतिलोममनुत्तुण्डं छेद्यं पृथुमुखं च यत् AṣṭāHṛ. i. 28.20.

**अनुत्तुण्डित** (an-uttuṇḍita) *adj.* the point of which has not come out प्रतिलोममनुत्तुण्डितं छेदनीयमुखं च शल्यं न निर्घातयेत् AṣṭāSaṁ. i. 182.3 (1.37)

**अनुत्तुण्डितशल्य** (anuttuṇḍita-śalya) *n.* dart whose point has not come out अनुत्तुण्डितशल्यानि छेदनीयमुखानि च। अनिर्घात्यानि जानीयाद् भूयश्छेदानुबन्धतः SuśruS.(Calcutta Ed. 1835) i. 27.21.

**अनुत्तेजित** (an-uttejita) *adj.* not induced उत्तेजनयुक्तो ह्यङ्गाधिकारः धर्मविधौ लक्षणातात्पर्यग्राहकः, नानुत्तेजितः, प्रधानाधिकारप्रतिबद्धत्वात् MīmāKau. ii. 195.8 (*on* iii. 1. 20)

**अनुत्त्रस्तहृदया** (anuttrasta-hṛdayā) *adj.* (*f.*) whose mind is not frightened विधृतास्माभिरियं त्वनुत्त्रस्तहृदया सिद्धेव निःशङ्कमास्ते UdaySuKa. 124.30.

**अनुत्त्रास** (an-uttrāsa) *m.* absence of fear तत्रावतारणाभिसंधिः श्रावकेषु द्रष्टव्यः। शासनावतारणार्थमनुत्त्रासाय रूपाद्यस्तित्वदेशनात् MaYānaSū. 82.15 (12.17); *adj.* not having fear, not afraid प्राणातिपातात्प्रतिविरतो भवति बोधिसत्त्वो महासत्त्वः सर्वसत्त्वानामभयंददः अनुत्त्रासोऽनुपायासोऽलोमहर्षः ŚikṣāSa. 176.5.

**अनुत्त्राससुस्थित** (anuttrāsa-susthita) *adj.* free from fear and well-composed एष तिर्यग्जातावप्येवमनुत्त्राससुस्थितः UdaySuKa. 29.17.

**अनुत्त्रासित** (an-uttrāsita) *adj.* not frightened अनुत्त्रासितासंत्रस्ता परं प्रदन्ति प्राणिनाम्। कान्तारं समतिक्रम्य क्षेमं प्राप्य नरर्षभाः। आह्वायन्ति जनधीरा इहैव निर्भयं इदम् MaVastuAva. i. 177.4.

**अनुत्थ** (an-uttha) *adj.* **I** not standing up, sitting स चेत्स्वयमुत्थः स्यात् पुनरस्याग्नीनाधाय अद्भुतानि वाचको जपम्। इति हुत्वा मार्जयित्वा ततोऽयमागतः कर्माणि कुर्यात्। स चेत् पुनरनुत्थः स्यात् तथा संस्थितमेवास्य तदग्निहोत्रं भवति Atharvaprāyaścitta 3.6; **II** not raised (for use) भवतैव विनिर्मितमादियुगे सुरहेतिसमूहमनुत्थमिदम् MatsyaP. 154.37.

**अनुत्थान** (an-utthāna) *n.* **AI** absence of effort, laziness संतोषो वै श्रियं हन्ति अभिमानश्च भारत। अनुक्रोशभये (v. l. अनुत्थानभये) चोभेयैर्वृतो नाश्नुते महत् MahāBhā. ii. 45.14; v. 131. 31; अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः। अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च ArthŚā. i. 97. 7 (1.19); उत्थाने वाप्यनुत्थानेऽप्यप्रमत्तो जितेन्द्रियः। समाधिषट्कं कुर्वीत SarvaVeSāSaṁ. 900; अनुत्थानाद् भवेन्नाशः प्राप्तस्यानागतस्य च SūktiRa. 141.13; **AII** non-getting up (from sleep), absence of waking up सुप्तपुरुषगमनतत्संबोधनानुत्थानैः गार्ग्याभिमतस्य ब्रह्मणोऽब्रह्मत्वं ज्ञापितम् BṛĀraUBh. 229. 19 (*on* ii. 1.15); **AIII** non-getting away from स्वप्नास्त्वशुभाः शुभाश्च कथ्यन्ते ··· गर्तपङ्काप्सु मज्जनम्। अनुत्थानं ततः ĪśānŚiPa. ii. 18. 40; **B** non-arising, non-emergence, impossibility of occurrence सा चेयं (जातिः) कार्यकारणत्वापवादद्वारेण प्रवर्तमाना व्याहता भवति। को व्याघातः उत्तरस्य (प्राप्यार्थस्य) अनुत्थानम् NyāyVār. 512. 11 (*on* v. 1.8); सनत्कुमारस्य नामब्रह्मेत्युपास्वेति प्रतीकोपदेशरूपेणोत्तरेण नारदप्रश्नस्यापि तद्विषयत्वेन परमात्मोपदेशप्रकरणस्यानुत्थानात् Bhām. 199.22 (*on* i. 3.8); तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वात्। तस्या च द्वितीया शब्दशक्तिर्मूलम्। तया विना तस्या रूपणाया अनुत्थानात् Loc. 100. 17 (*on* 2. 22); न चास्याप्यनुसंधातृत्वादेव भोगो जीववदिति सांप्रतम्, आगमापबाधितानुमानस्यानुत्थानात् NyāyMa. 16. 8; PramāMī. 14.22 (*on* i. 1.17); SyādvāMañ. 18(88); NyāySiA. 227.28; न च विरोधोत्पत्तिहेतौ श्लेषे श्लेषस्य विरोधेन सहाङ्गाङ्गिभावः संकरः, उत्प्रेक्षाया वा निमित्तगतातिशयोक्त्या सहायं संकरः ताभ्यां विना तयोरनुत्थानात् AlaṅkāSa. 199. 2; कियन्तमप्यध्वानं गत्वा शङ्कास्वरूपस्यापि व्याघातापातेनानुत्थानात् TārkiRa. 197. 4; अस्याः प्राभाकरविभीषिकाया लोकप्रसिद्धभावाभावव्यवहारिणं मायावादिनं प्रत्यनुत्थानात् TattvPradī. (Ci.) 285. 3; सार्थापत्तिः। नेयमनुमानम्। समानन्यायस्य संबन्धरूपत्वाभावात्। असंबन्धेन तु तस्यानुत्थानात् Ekāva. 8.55(4)(309. 11); सामान्येनापरोऽक्षज्ञानानपेक्षायां कुतस्तत्कारणविशेषचिन्तेत्यनुत्थानमेव शब्दजन्यप्रत्यक्षवादस्य ŚatDū. 70.18; 91.6; संशयस्यानुत्थाने सिद्धमेकपदेनैव निर्विशेषम् ŚatDū. 163. 8; न चैकभेदबलेनान्यभेदानुमानम्। दृष्टान्तभेदाविघातेनोत्थाने दोषाभावात्।··· दृष्टान्तभेदविमर्दे त्वनुत्थानमेव SarvaDaSaṁ. 5. 56; 3. 25; 11.210; Vādā. 115. 8; न हि विचारः कर्तव्यः तद्द्वारभूतन्यायनिबन्धनं च नारम्भणीयमिति संभवति। निःसाधनस्य विचारस्यैवानुत्थानात् NyāySu.(Ja.) 12A.2 (*on* i. 1. 1); 408B. 12 (*on* ii. 2. 8); VedāntRaMañ. 1.1(8.5); येन विना यस्यानुत्थानं तत्तस्योपजीव्यम् Nyāyāmṛ. 108A. 8; 139B.8; प्रबलानुमानबाधितस्य प्रधानानुमानस्यानुत्थानात् सांख्यपक्षो न युक्तः ŚivārkaMaDī. ii. 57.30 (*on* ii. 2. 1); उत्पत्तिवाक्ये च नेतिकर्तव्यताकाङ्क्षा, इष्टविशेषाकाङ्क्षाकलुषितत्वेनेतिकर्तव्यताकाङ्क्षाया विस्पष्टम् अनुत्थानात् MīmāNyāPra. 197. 21; व्यङ्ग्यस्यैक्येन तस्यानुत्थानात् RasGaṅ. 174. 9; 512. 14; मूलप्रतीतिम् — सा मे दृगासीत् इति प्रतीतेः मूलतया स्थिताम्, अन्यथा अस्या अनुत्थानात् Bhāsk. i. 179. 17 (*on* i. 4. 6); अस्य वार्तिकस्यानुत्थानमेव स्यात् LaŚabdeŚe. i. 21. 3; **CI** non-appearance of coming to life (स शुनकः) मारित इति पुनरस्यानुत्थानम् Loc. 20.17 (*on* 1.4); **CII** absence of spreading or reaching upto चन्द्रग्रहणे छादिकाया भूच्छायाया भौमकक्षापर्यन्तमनुत्थानात् AdbhuSāg. 73.11; **CIII** absence of standing up (to show respect) देवप्रयाणकाले अनुत्थानमित्यादयोऽपराधा अन्यतोऽनुसंधेयाः VīraMi.(Pūjā.) 191. 13.

**अनुत्थान** (an-utthāna) *adj.* **I** not having exertion, inactive उत्थानं चाप्यदैवस्य ह्यनुत्थानस्य दैवतम्। व्यर्थं भवति सर्वत्र MahāBhā. x. 2.6; **II** not getting out of मूढास्ते नरकार्णवात्। अनुत्थाना भविष्यन्ति गर्तस्थः कुञ्जरो यथा SaurP. 62. 58.

**अनुत्थानचोद्यपरिहार** (anutthānacodya-parihāra) *m.* removal of the objection which does not emerge ब्रह्मणः संकल्पमात्रपरिकरत्वमयुक्तमित्यनुत्थानचोद्यपरिहारम् … आह ŚrutaPra. ii. 266.30 (*on* ii. 1. 24)

**अनुत्थानतस्** (anutthāna-tas) *adv.* due to non-getting up or not coming back to life मृतकल्पतया शयितस्य शरीरस्य वागादिप्रवेशे तस्याप्यनुत्थानतः प्राणप्रवेशमात्रेणोत्थानतश्च श्रैष्ठ्यनिर्धारणम् ŚivārkaMaDī. ii. 303. 22 (*on* iii. 3.10)

**अनुत्थानदूषित** (anutthāna-dūṣita) *adj.* marred by inability to get up विषयव्यसनित्वेन जागरात्। रात्रौ दिवा शयतया योऽप्यनुत्थानदूषितः। नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता RājTa.(Ka.) 5. 253.

**अनुत्थानपात** (anutthāna-pāta) *m.* falling (into hell) without the possibility of coming out अनुत्थानपाते प्रत्यासन्ने तदर्थमावश्यकावेव भगवद्विषां पुण्याश्लेषविनाशौ TattvPrakā. 204A. 12 (*on* iv. 1. 14)

**अनुत्थानप्रदर्शन** (anutthāna-pradarśana) *n.* pointing out of non-getting up प्राणनामभिरामन्त्रणेऽपि अनुत्थानप्रदर्शनं प्राणान्यत्वज्ञापनार्थम् ŚivārkaMaDī. i. 543. 20 (*on* i. 4. 18)

**अनुत्थानप्रसङ्ग** (anutthāna-prasaṅga) *m.* undesired contingency of non-emergence अनेकगुणविशिष्टैकवस्तुप्रतिपादकतयाभिमतानां सगुणवाक्यानामनुत्थानप्रसङ्गात् ŚatDū. 165.13; अन्यथा सर्वेषां शब्दानामन्तर्यामिण्येव शक्तिः अन्यत्र सर्वत्र लक्षणा इत्यभ्युपगमे ब्रह्ममीमांसाधिकरणेषु अन्यविषयश्रुतिलिङ्गादिमूलकानां पूर्वपक्षाणामनुत्थानप्रसङ्गात् PūrvottaVāNaMā. 122.19.

**अनुत्थानवत्** (an-utthānava(n)t) *adj.* not being industrious, lazy यो ह्येवमविनीतेन रमते पुत्रनप्तृणा। अनुत्थानवता चापि मोघं तस्य प्रजाफलम् MahāBhā. v 133.9.

**अनुत्थानवाचिन्** (anutthānavāc-in) *adj.* expressive of the absence of getting out (of hell) इतरस्याप्येवमसंश्लेषः पाते तु।··· तुशब्दोऽनुत्थानवाची BrahmSūBh.(Ma.) 68A.4 (*on* iv. 1. 14)

**अनुत्थानशील** (anutthāna-śīla) *adj.* inactive in nature (राजा हि युगमुच्यते) अनुत्थानशीलः प्रसुप्तः कलिर्भवति ManuBh. ii. 321.25 (*on* 9.302)

**अनुत्थानापत्ति** (anutthānāpatti) *f.* undesired contingency of non-emergence तेनोत्प्रेक्षोत्तरकालं विरोधसमाधिः। न प्रागुत्प्रेक्षाया अनुत्थानापत्तेः AlaṅkāRa. 52(58); निशाकरसमानोऽयमयं साक्षान्निशाकरः इत्यादौ विच्छित्तिवैलक्षण्यस्य जागरूकत्वात्। अन्यथा तत्प्रयुक्तस्य व्यतिरेकस्यानुत्थानापत्तेः RasGaṅ. 486. 12; 563.4.

**अनुत्थानाभ्युपगम** (anutthānābhyupagama) *m.* acceptance of non-emergence प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च … निर्मूलशङ्कायाश्च स्वक्रियाविरोधेनानुत्थानाभ्युपगमात् स्वस्थं प्रत्यक्षस्य प्रामाण्यम् AdvaiSi. 397. 5.

**अनुत्थानोपहत** (anutthānopahata) *adj.* **I** destroyed or refuted by non-emergence प्रतीतिरेव विशिष्टा रसना। सा च … काव्ये शाब्दप्रतीतेश्च विलक्षणतां प्रमुखतामुपेक्ष्यमाणा। तस्मादनुत्थानोपहतः पूर्वपक्षः Loc. 70. 2 (*on* 2.4); तथा हि चोद्यम् — प्रक्रान्तपरामर्शकस्य तच्छब्दस्य कथमियति सामर्थ्यमिति। उत्तरं च — रसाविष्टोऽत्र परामृष्टेति (?)। तदुभयमनुत्थानोपहतम् Loc. 131. 24 (*on* 3. 4); Kāvyānu.(He.) 64.10; पूर्वपक्षोऽयं भट्टलोल्लटपक्षानभ्युपगमादेव नाभ्युप-

गत इति तद्दूषणमनुत्थानोपहतमेव AbhinBhā. i. 277. 7 (*on* 6.31); Kāvyānu. (He.) 73.25; **II** crushed in such a way that one cannot stand up again येयम् … गदा तया … सम्यक् चूर्णितं पुनरनुत्थानोपहतं कृतमूरुयुगलम् … यस्य तं सुयोधनम् Loc. 81. 8 (*on* 2. 10)

**अनुत्थापयत्** (an-utthāpayat) *adj.* [*f.* -ntī] not awakening or rousing (from sleep) अनुत्थापयन्त्येव कृपया तम् … वनौकसमेकाकिनी समुच्चलिताहमिह UdaySuKa. 135. 18; अनुत्थापयन्नेव न यथा वेत्ति कश्चिदपि तथा त्वरितमादाय व्रजामि UdaySuKa. 141.7.

**अनुत्थाय** (an-utthāya) *ger.* not having stood up, not having got up भुक्त्वा चास्य सकाशे नानुत्थायोच्छिष्टं प्रयच्छेत् HirŚS. xxvi. 2. 58 (32.23); ĀpaDS. i(2). 6.35; अश्रमस्य भृशं चास्मान्धर्मसंरक्षकानयम् । आस्तेऽनुत्थाय निर्भीतिर्न च प्रणमते तथा SkandP. iii(1). 19.22; अन्नम् … अभोज्यम् … समानपङ्क्तौ भुञ्जानेषु वा यत्रानुत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा VīraMi.(Āhnika.) 518. 21 ; 519. 21.

**अनुत्थास्नु** (an-utthāsnu) *adj.* not getting up देवि दर्पादनुत्थास्नुरपि मित्रोपरोधतः । नृपः कर्णोऽयमभ्यर्णमभ्येति धनुषः शनैः PāṇḍaC. 4. 238.

**अनुत्थित** (an-utthita) *adj.* [*f.* -ā] **A** who has not come out of (the lying-in chamber) न … भोक्तव्यम् ।… अनुत्थितायां सूतिकायाम् HirŚS. xxvi. 5. 18 (72. 13) (*but* comm. उत्थानं नाम सूतिकागारे निवेशितानामुदकुम्भादीनामपनयनम्); ĀpaDS. i(5). 16.19; BaudhGS. ii. 1. 21; **BI** who has not got up (from the seat) अनुत्थितेभ्यः समूह्योच्छिष्टं शोधयित्वा VaikhāGS. 2. 2 (22. 10); ब्राह्मणेषु चानुत्थितेषु पित्रर्थब्राह्मणोच्छिष्टं न मार्जयेत् BālaKrī. i. 168. 5 (*on* 1.253); Aparā. 550. 15 (*on* 1.256); अवरोहणं तर्हि अनुत्थितस्य च न संभवति ManuBh. i. 182.8 (*on* 2. 202); उच्चासने स्थितं सूतमनन्तमनुत्थितम् ।… विलोक्य सः ।… चुक्रोध SkandP. iii(1). 19. 19; **BII** who has not woken up (from sleep) पश्चात्संवेशनं शयितस्य नायकस्य । पूर्वमुत्थानमनुत्थितान्नायकात् JayaMa 236. 2 (*on* 4. 1); **BIII** who has not come out of (Yogic trance) कारुणिकोऽपि … यावदिदं वृत्तम्, इदं वर्तिष्यत इति न प्रत्यवेक्षते, न तावदागमो निर्मातुं शक्यते । न चैतदप्यनुत्थितस्य संभवति Kāśi. i. 133. 9 (*on* 2. 137); **CI** not appeared or arisen तन्नाथवृत्तैरपि राजपुत्रैरराजकं नैव रराज राष्ट्रम्। तारासहस्रैरपि दीप्यमानैरनुत्थिते चन्द्र इवान्तरीक्षम् Saund. 1. 60; **CII** not appearing prominently (सिराः) याश्चाव्यध्याः व्यध्याश्चादृष्टाः, दृष्टाश्चायन्त्रिताः, यन्त्रिताश्चानुत्थिताः SuśruS. iii. 8. 3; न चाव्यधनीया यन्त्रितानुत्थिताः सिराः AṣṭāSaṁ. i. 176.13 (1. 36); नायन्त्रितां सिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम् AṣṭāHṛ. i. 27.8; **CIII** which has not come out or grown प्रागस्मात्कालादनुत्थितेषु तृणेषु लोष्ठपाषाणयोरन्यस्याश्च भूमेर्न विशेषो लक्ष्यते ManuBh. ii. 185. 8 (*on* 8. 245); **CIV** not manifest, latent उत्थितानुत्थितानेतानिन्द्रियाहीन् पुनः पुनः । हन्याद्विवेकदण्डेन YogVā. v. 8.17; **D** which has not emerged, not occurring अनुत्थितायामेव च दर्विपिठरादिश्रुतौ शूर्पं प्राप्नुवत् श्रुत्यनुमानं प्रतिबध्नाति TantrVā. 45. 19 (*on* i. 2.27); आत्मैवेत्यादिवाक्येन पूर्णब्रह्मावबोधिना । नाविध्वस्तं तमोऽतोऽस्ति न च ज्ञानमनुत्थितम् BṛĀraUBhVā. ii. 4. 101; संशयशिरोऽन्तरद्वयं तु वायुदेवलोकयोरेकत्वेऽनुत्थितं स्यात् ŚrutaPra. ii. 616.25 (*on* iv. 3.2)

**अनुत्थितासन्नराजलोक** (anutthitāsannarājaloka) *m.* nearby princes who have not stood up (as yet) अनुत्थितासन्नराजलोकपरिवृतश्च … द्विजावसरमण्डपान्निर्जगाम (पार्थिवः) TilaMañ. 65. 18.

**अनुत्थिति** (an-utthiti) *f.* non-emergence तद्धेत्यादिश्रुतेः क्वापि मनसस्तदयोगतः । शब्दत्वानुमितेर्बाधाद्व्यभिचारादनुत्थितेः TattvPradī.(Ci.) 343. 9; प्रधानकालस्य प्रबलत्वात्तद्बाधप्रसङ्गादङ्गकालानुसारेण पूर्वपक्षानुत्थितिः MayūMāli. 419. 22 (*on* v. 1.18)

**अनुत्पतनहेतुत्व** (anutpatanahetu-tva) *n.* the state of being the cause of the absence of falling (निबिडपीनकुचद्वययन्त्रणा तमपराधमधात् प्रतिबध्नती) कुचद्वययन्त्रणाया हेतुत्वोत्प्रेक्षायामुत्पतनप्रतिबन्धकत्वपरः प्रतिबध्नतीशब्दः फलतोऽनुत्पतनहेतुत्वप्रतिपादकः CitraMī. 94.12.

**अनुत्पतितबिन्दु** (an-utpatitabindu) *adj.* (water) of which drops are not tossed up अभ्युद्धृताभिः शुचिभिरद्भिर्मृद्भिश्च योजयेत् । लेपगन्धापहं शौचमनुत्पतितबिन्दुभिः AṣṭāSaṁ. i. 7. 14 (1. 3)

**अनुत्पत्ति** (an-utpatti) *f.* **AI** non-birth, non-origination, non-coming into being लीनवृत्तेरनुत्पत्तिर्मर्यादोपरतेस्तु सा AdhyāU. 42; धर्माधर्मयोरनुत्पत्तौ पूर्वसंचितयोश्चोपभोगान्निरोधे PadārthaSaṁ. 281.22; जन्माभावे दुःखाभाव इति निरायतनस्यानुत्पत्तेः NyāyVār. 28. 3 (*on* i. 1.2); न हि प्रधानात् परं किंचिदस्ति, यतः प्रधानस्यानुत्पत्तिः तस्मादहेतुमदव्यक्तम् SāṁkhyaKāBh. 7.28 (*on* 10); ननु धर्मादृतेऽर्थकामयोरनुत्पत्तिरेव DaśKuC. 43. 22; अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाद्वया GauḍKā. 4. 77; मुक्तानां च पुनरनुत्पत्तिः BrahmSūBh.(Śaṅ.) 231.5 (*on* i. 4. 3); 493.7 (*on* ii. 4.1); कारणस्य त्वनुत्पत्तेरनिषेधस्तथा सति BṛĀraUBhVā. i. 2.3; i. 4.437; इहापि न पूर्वेण क्षणेन नापि तद्विशेषेणोत्तरः क्षण उत्पद्यते, न च हेमस्थानीयमिहान्यदस्तीत्यनुत्पत्तिरेवावशिष्यते NyāyMañ. ii. 29.7; अक्रोधः उत्पत्स्यमानस्यानुत्पत्तिः ManuBh. i. 531. 19 (*on* 6.92); ii. 257. 16 (*on* 7.59); शरीरः सदाशिवः । अप्रामाण्यादनुत्पत्तेः कथं तत्रागमोत्सवः YaśasCam. ii. 259. 21; तस्मिन् (शक्तिप्रतिबन्धे) सत्यनागतानां शरीरेन्द्रियमहाभूतानामनुत्पत्तिः NyāyKa. 51. 7; न हि मातुलदुहितृपरिणयनात् प्रत्यवायोत्पत्तिरनुत्पत्तिश्च संभवतीत्यवश्यमन्यतरस्याप्रामाण्यमाश्रयणीयम् ŚāstrDī. 34.16 (*on* i. 3. 5); प्रत्यगात्मनो नित्यत्वादनुत्पत्तिमुक्त्वा … तस्य ज्ञातृत्वमेव स्वरूपमित्युक्तम् VedāntSā.(Rā.) 13.2 (*on* i. 1.2); कथं चोत्पन्नोऽपि विनश्येत् तथा च कथमुत्पद्येतापि भावस्याविनाशिनोऽनुत्पत्तेः Kiraṇā. 31. 13; 'जीवस्य अनुत्पत्तिं प्रसाध्य पूर्ववाद्युक्तमनूद्य दूषयति PrakaVi. 613.25; यस्य नादिर्न मध्यं नान्तो नोदयो न निम्लोच इत्यादिश्रुतिभ्यो वायोरनुत्पत्तिः BrahmSūBh.(Ma.) 32B. 6 (*on* ii. 3.8); सतो ब्रह्मणोऽसंभवोऽनुत्पत्तिरेव VedāntPāSau. 216. 4 (*on* ii. 3. 8); BrahmSūBh.(Śrī.) ii. 130.10 (*on* ii. 3.9); कामादीनाम् … धीवृत्त्यभावादनुत्पत्तिरेव JīvanVi. 15.6; अत्र … प्रकृतानुत्पत्तिः संबध्यते TattvPrakā. 107B.4 (*on* ii. 3.1); 115B.1 (*on* ii. 3. 18); परस्परापेक्षायां हि द्वयोरनुत्पत्तिरप्रतीतिश्च स्यात् Upask. 343. 1 (*on* vii. 2. 21); (पुत्रादीनाम्) तेषामनुत्पत्तेः पापध्वंसस्याशक्यत्वात् ManvaMu. 93. 19 (*on* 3. 37); ननु विज्ञानमयस्य जीवस्यानुत्पत्तौ सर्वव्यवहारोच्छेदः AṇuBh. 145.8 (*on* ii. 3. 16); सर्वेश्वरात् … जीवानां त्वनुत्पत्तिः GoviBh. 142.4 (*on* ii. 3.1); **AII** non-arising असंसर्गो निमित्तैश्च वस्तुनि व्यञ्जने द्वयोः । ज्ञानस्य या चानुत्पत्तिरिति सर्वज्ञताक्षणः AbhisaAlaṅ. 3. 15; संमोहात् … स्मृतेः स्यात् विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिः GītāBh.(Śaṅ.) 64. 14 (*on* 2. 63); एकाकाराया बुद्धेरनुत्पत्तिरेव Śarka. 5. 15; अनादिनोऽज्ञानस्य दाहात, अन्यस्य चानुत्पत्तेर्ज्ञानान्मोक्ष उपपन्नः IṣṭaSi. 70.14; प्रमाणाभावो हि प्रमितेरनुत्पत्तिः Kāśi. iii. 189. 13 (*on* 5(8).1); वृत्तिस्त्वेकैकत्रावयविबुद्धेरनुत्पत्तेर्व्यासङ्गादेवेष्टा NayaVi. 98.1 (*on* i. 1.5); वाक्यार्थज्ञानस्य …। अनुत्पत्तौ वा … तदर्थानुष्ठानपरिवर्जनाभावप्रसङ्गः Bhām. 38.2 (*on* i. 1.1); असति जन्मनि मिथ्याज्ञानस्यानुत्पत्तेः TātpaṬ.(Vā.) 92.4 (*on* i. 1.2); 150.13 (*on* i. 1.4); न हि … कर्तव्यताज्ञानस्य च तत्रानुत्पत्तिः शक्यते वक्तुम् NyāyRa. 937. 8 (*on* 7. 322); शाब्द्याः (प्रतिपत्तेः) तावच्छब्दादेवोत्पत्तौ विधिवैयर्थ्यमनुत्पत्तौ चाशक्यत्वम् PramāMā. 18. 26; तत्स(गोस)दृशोऽयमिति हि प्रत्ययो नेन्द्रियजन्यः, तदापातमात्रेणानुत्पत्तेरिति चेत् — न NyāyKuA. ii(1). 195.1; प्रथमकालभावि तावज्ज्ञानं न प्रमाणं फलभूतस्य द्वितीयज्ञानस्यानुपप(स्यानुत्प)त्तेः TarkBhā.(Mo.) 12.4; दुःखमनुभवामीति मतेरनुत्पत्तेः KhaṇḍanKhā. 253.15; (तत्त्वज्ञानस्य) तस्यानुत्पत्तौ रूपरसादिविषयाणां सद्भावे सति तद्गोचराश्चित्तवृत्तयो न निवारयितुं शक्यन्ते JīvanVi. 37. 8; विशिष्टज्ञानपूर्वक्षण एव द्वित्वविनाशापत्त्या द्वित्वविशिष्टद्रव्यज्ञानस्यानुत्पत्तिरेव Upask. 319. 17 (*on* vii. 2.8); तां (विप्रतिपत्तिम्) विना संशयस्य अनुत्पत्तौ … प्रवृत्त्यसंभवात् GuruCandr. i. 3. 23; LaCandr. 67.7; 'मुखं चन्द्रगतधर्मवत्' इति ज्ञानस्याप्यनुत्पत्तेः AlaṅkāKau.(Vi.) 61.9; **AIII** non-emergence, non-occurrence, non-effectuation तद्वर्णविशेषविवक्षायां च कलकलस्य च कारणाभावादेवानुत्पत्तिः स्यात् ParāTri. 70.7; यज्ञे तु हतानामुपकारः, नापकारः, नरकादिफलानुत्पत्तेः ManuBh. i. 438. 20 (*on* 5. 40); इदमेव च देशस्य कालस्य च निमित्तत्वं यदेकत्र कार्योत्पत्तिरन्यत्रानुत्पत्तिरिति NyāyKa. 25. 23; केनचित्प्रतिबद्धत्वादणिमादीनामनुत्पत्तौ तन्निबन्धनस्य … क्रोधः स तामिस्राख्यो द्वेषः TattvVai. 14.17 (*on* 1.8); फलं केचिदुपात्तस्य दुरितस्य प्रचक्षते । अनुत्पत्तिं तथा चान्ये BhaviP. 275B. 30 (i. 186. 4); यदिदं दृश्यते दृश्यमहंत्वंतादिसंयुतम् । सतोऽप्यस्यात्यनुत्पत्त्या बुद्ध्यैतदवाप्यते YogVā. iii. 9.26; विभूतेरनुत्पत्तौ कामा न पूर्यन्ते SaraKaṇṭhā. 723.12; (कामानाम्) सर्वेषामेकनिमित्तत्वात्सहैवोत्पत्तिरनुत्पत्तिर्वा TantrRa. 185.12; आश्रयाभावे किं प्रत्यासन्नम् असमवायिकारणं स्यात्। तदभावे निमित्तमपि किमुपकुर्यात् । तथा चानुत्पत्तिः … स्यात् NyāyKuA. i. 71.2; कालनियमे प्रमाणाभावात् न च सर्वोत्पत्तिमन्निमित्तादृष्टानुपपत्तौ सर्वमुक्तेरनुत्पत्तिः Kiraṇā. 10. 11; अत्र सत्यपि दाहलक्षणेऽविकले कारणेऽशक्तत्वाख्यस्य कार्यस्यानुत्पत्तिः शक्तिस्वरूपेणाविरुद्धेन धर्मेणोपनिबद्धा AlaṅkāSa. 127.10; 200. 8; विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे Candrā. 5. 78; कार्यस्यादरस्यानुत्पत्त्यादिना विशेषोक्त्यादिः AlaṅkāRa. 24(3); 54(8); अक्रमात् क्रमिणामनुत्पत्तेः PramāMī. 27.10 (*on* i. 1.32); कारणगुणाद् अप्रादुर्भावोऽनुत्पत्तिः Upask. 106.2 (*on* ii. 2. 1); तेनानुत्पत्तिं प्रत्यवायस्यान्ये मन्यन्ते SiddhāMu. 77.5 (*on* 150); तद्गुणजन्यत्वेन संभावितयोर्गुणान्तरयोरुत्पत्त्यनुत्पत्ती Kuval. 144(10); श्लेषस्याभावादतोऽनुत्पत्तिरेवार्थः AṇuBh. 310.22 (*on* iv. 1. 13); तत्र सत्यपि कारणसमवधाने कार्यस्यानुत्पत्तौ विरोधः RasGaṅ. 587.1; तृणसत्त्वे वह्निसत्त्वं तदभावेऽनुत्पत्तिः VaiyāBhū. 87. 3 (*on* 22); विप्राय दीयत इत्यादौ च त्यज्यमानद्रव्यस्य प्रक्षेपान्तप्रतीतेर्देवताविग्रहाद्यभावेन परस्वत्वमात्रस्यानुत्पत्तावपि अस्त्येव प्रक्षेपः BhaṭṭCan. 59. 18 (*on* xiv. 4.1); काम्यकर्मसंन्यसनात् पुण्यस्यानुत्पत्तौ … प्रव्रज्याकर्मैव निःश्रेयसं साधयति AmṛUda. 5. 9(8); LalitāSaBh. 207. 9

KhandanKhā. 662. 5; इन्द्रियसंनिकृष्टे ज्ञानस्य भावः उत्पादः, असंनिकृष्टे ज्ञानस्याभावोऽनुत्पादस्तन्मनः Upask. 165.11 (*on* iii. 2. 1); अनुद्भूतेऽभिभूते वा तत्तासंस्कारे प्रत्यभिज्ञाया अनुत्पादेन तत्तास्मृतिरेव तद्धेतुः PadārthaTaNi. 58. 1-3; घटत्वकपालत्वजात्योरप्यैक्यज्ञानेन उक्तबुद्धेरनुत्पादात् GuruCandr. i. 31. 5; 'पर्वतादौ वह्नयादिकं सन्न वे'त्यादिसंशयानामनुमित्यादिस्थलेऽनुत्पादः LaCandr. 319. 26; सति च बाधनिश्चये तद्वत्ताशाब्दबुद्धेरनुत्पादः RasGaṅ. 320. 4; 574.3; **C** non-emergence, non-effectuation, non-occurrence यस्य चानुत्पादाद्यन्नोपपद्यते तत्कारणम् NyāyBh. 77. 1 (*on* ii. 1. 6); प्रत्यक्षेणागमेन वा वेदे वक्त्रभावनिश्चयानुत्पादात् NyāyMañ. i. 213.30; तत्रानागताभ्यां तावत् प्रवृत्त्यभावात् अनुत्पादादेव मुच्यते TātpaṬ.(Vā.) 72. 11 (*on* i. 1. 2); अनुत्पादे वा ततोऽप्यधिकं किंचिदपेक्षणीयमस्तीति निरस्तम् NyāyKuA. i. 31.2; i. 114. 5; सात्त्विकादेरनुत्पादात्सुखानुभवस्योत्पत्तिमात्रमनुमापयति SaraKaṇṭhā. 570.20; तद्धि (पूर्णेन्दुरूपत्वम्) तत्कार्यस्य समुद्रसंक्षोभस्याविकलकारणतया संभाव्यमानोत्पादस्य सतः प्रतिबन्धकप्रत्ययबलादनुत्पादे सत्यनुमीयते नान्यथा VyaktiVi. 127. 2; अदृष्टविलम्बो हि न तन्नाशानुत्पादौ मण्यपसारणानन्तरं दाहाभावप्रसङ्गात् TattvCin. ii(2). 88. 9; या धर्मता कार्यकारणभावरूपा एषोत्पादादनुत्पादाद्वा स्थिता SarvaDaSaṁ. 2. 305; 11. 100; क्षणभङ्गपरिणामावाश्रित्य तथाभूतस्योत्पादानुत्पादौ योग्यतायोग्यते मन्यसे NyāySu.(Ja.) 256A.6 (*on* ii. 1.2); मूर्तसंयोगेन कर्मकारणस्य वेगगुरुत्वादेः प्रतिबन्धात् कर्मणोऽभावोऽनुत्पादः Upask. 98.6 (*on* ii. 1.23); **D** non-appearance, non-functioning तस्य चैकैकतदवस्थाभाविकारणभेदान्वयव्यतिरेकानुविधायितया खण्डशोऽनुत्पादात् HetuBiṬ. 96.26; अभावाख्यो न मेयोऽस्ति यदर्थं प्रार्थ्यते पुनः। प्रमाणानामनुत्पादः साधु तल्लक्षणं कृतम् PrakaPañ. 110. 21; Kāśi. iii. 193. 26 (*on* 5(8).1); (वस्तु) यत्र त्वसद्रूपेण वर्तते तत्र सद्रूपेण बोधकानां प्रत्यक्षादीनां सद्रूपबोधनायोत्पत्तुं योग्यत्वे सत्यपि योऽनुत्पादः … उक्तः ŚāstrDī. 83. 9 (*on* i. 1.5); यैरपि स्मृतेरप्रामाण्यमिष्टं तैरप्यर्थादनुत्पाद एव हेतुत्वेनोक्तः PramāMī. 5. 2 (*on* i. 1.4)

**अनुत्पाद** (an-utpāda) *adj.* not having origination (यः) सद्धर्मम् … अनुत्पादमनुच्छेदम् … अनानार्थम् … देशितवान् PrasaPa. 592.7.

**अनुत्पादक** (an-utpādaka) *adj.* **I** not a producer एकोऽर्थजनकस्तस्य भावः सामर्थ्ययोगतः। तच्चाविशिष्टमन्यस्मिन्नित्यनुत्पादकः कथम् TattvSaṁ. 1739; संयुक्तसंयोगादेरनुत्पादकस्य संनिकर्षस्य व्युदासः TātpaṬ.(Vā.) 109. 11 (*on* i. 1.4); तदुत्पादकस्यैव तत्कारणतया व्यवहारात्। न ह्यनुत्पादकादुत्पद्यते इति संभवति, नाप्यन्योत्पादकात् (अर्थात्) Vādā. 107. 8; **II** not a progenitor आहुरुत्पादकमपत्यवन्तं केचित्। अपरे क्षेत्रिणम् — यस्य सा भार्या तस्यामनुत्पादकमपि ManuBh. ii. 250.8 (*on* 9.32); ManvaMu. 369.21 (*on* 9.32)

**अनुत्पादकत्व** (anutpādaka-tva) *n.* **I** the state of being that which does not bring about कस्मान्नित्यः (पुरुषः) अकृतकत्वादनुत्पादकत्वाच्च TattvSa. 123. 13; MāṭhVṛ. 10.8 (*on* 3); निमित्तान्तरात् तददर्शनं, न तु कर्मणामनुत्पादकत्वात् BālaKrī. i. 174.5 (*on* 1.267); TātpaṬ.(Vā.) 425.20 (*on* ii. 1. 63); कालान्तरस्थायित्वे च परयत्नस्यानुत्पादकत्वात् NayaVi. 243.2 (*on* i. 1. 8); प्रमाणस्य च प्रमेयं प्रत्यनुत्पादकत्वात्, रिक्थक्रयादिषु स्वत्वकारकहेतुष्वपाठाच्च Mitā. 149. 9 (*on* 2. 24); अनुत्पादकत्वं चोत्पत्त्यनुकूलशक्तिनाशवत्त्वम् GuruCandr. ii. 196.19; **II** the state of not being a progenitor न तु क्षत्रियादिकायां ब्राह्मणस्यानुत्पादकत्वम् BālaKrī. i. 247.13 (*on* 2. 131)

**अनुत्पादक्षयज्ञान** (anutpādakṣaya-jñāna) *n.* knowledge of non-origination as well as that of decay अनुत्पादक्षयज्ञाने बोधिः AbhidhK. 6. 67; ते एव सत्यभेदेन चत्वारि एते चतुर्विधे। अनुत्पादक्षयज्ञाने ते पुनः प्रथमोदिते। दुःखहेत्वन्वयज्ञाने AbhidhK. 7. 4.

**अनुत्पादज्ञान** (anutpāda-jñāna) *n.* cognition or knowledge of nou-origination अपि खलु ज्ञेया धर्माः … अनुत्पादज्ञानगोचरतोऽपि AbhidhSa. 16. 23; 77.5; क्षयज्ञानानुत्पादज्ञानयोः को विशेषः …। अनुत्पादज्ञानं कतमत्। दुःखं मे परिज्ञातं न पुनः परिज्ञेयमिति जानाति AbhidhKoBh. 394. 9 (*on* 7.7)

**अनुत्पादन** (an-utpādana) *n.* **A** non-origination ये चित्तस्यानुत्पादनं विरोधं वापवर्गमिच्छन्ति NyāyVār. 90. 18 (*on* i. 1.22); स्वोपाधिपरिणामविशेषस्य जन्माख्यस्यानुत्पादनम् SāṁkhyaPraBh. 156. 34 (*on* 6. 44); **B** prevention आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः … अध्यायास्त्रिंशत् शारीरमुच्यते AṣṭāHṛ. i. 1.35.

**अनुत्पादनपरधातूत्तरवर्तिन्** (anutpādanaparadhātūttaravart-in) *adj.* (finite verb-ending) coming after a verbal base which does not convey the sense of bringing about अनुत्पादनपरधातूत्तरवर्तिन आख्यातस्यानन्यलभ्यतयोत्पादना वाच्या TattvCin. iv(2). 831.10.

**अनुत्पादनायोग** (anutpādanāyoga) *m.* impossibility of non-emergence वैषम्य(भीते ?)(रहि ?)तेन चेश्वरेण कारणे सत्यनुत्पादनायोगात् NyāyKu. 120. 13.

**अनुत्पादप्रसङ्ग** (anutpāda-prasaṅga) *m.* **A** undesired contingency of non-appearance अनुमानादिविकल्पानामनुत्पादप्रसङ्गः NyāyKuA. ii(2). 25. 5; **B** undesired contingency of non-origination श्यामादीनामनुत्पादप्रसङ्गात् Kiraṇā. 185. 14.

**अनुत्पादमति** (anutpāda-mati) *f.* knowledge of non-origination यद्यकोप्यः क्षयज्ञानादनुत्पादमतिः न चेत्। क्षयज्ञानमशैक्षी वा दृष्टिः सर्वस्य सार्हतः AbhidhK. 6.50; क्षयज्ञानं हि सत्येषु परिज्ञातादिनिश्चयः। न परिज्ञेयमित्यादिरनुत्पादमतिर्मता AbhidhK. 7.7.

**अनुत्पादमय** (anutpāda-maya) *adj.* [*f.* -ī] consisting of non-origination अत्यन्ताभावसंपत्तिं विनाहंताजगत्स्थितेः। अनुत्पादमयी ह्येषा नोदेत्येव विमुक्तता YogVā. iii. 21. 12; रज्ज्वां सर्पभ्रमः (?मं) सर्पशब्दार्थासंभवं स्थितम्। अनुत्पादमयं त्यक्त्वा शान्तोऽपि हि न शाम्यति YogVā. iii. 21. 13.

**अनुत्पादयत्** (an-utpādayat) *adj.* not generating, not giving rise to लाक्षणिकाः शब्दाः लक्ष्यप्रमामनुत्पादयन्तोऽपि विपरीताकारव्यावर्तनेनैव प्रयोजनवन्तो भविष्यन्ति NyāySu.(Ja.) 121B. 12 (*on* i. 1.5)

**अनुत्पादरूपेष्ट** (anutpādarūpeṣṭa) *n.* desired goal having the form of non-origination विषभोजनं न तृप्तिरूपस्येष्टस्य साधनम् … किं तु … शत्रुगृहभोजनद्वारा मृतत्वप्रतिसंधानजन्यदुःखस्यानुत्पादरूपेष्टस्य LaCandr. 698.35.

**अनुत्पादलक्षण** (anutpāda-lakṣaṇa) *adj.* having non-origination as its characteristic आत्महानं खलु विनाशलक्षणमनुत्पादलक्षणं च न संभवति NyāySu.(Ja.) 640B. 1 (*on* iv. 2.9)

**अनुत्पादवाचिधातूत्तरप्रत्यय** (anutpādavācidhātūttara-pratyaya) *m.* suffix coming after a verbal base which does not convey the sense of origination व्यापारो धात्वर्थः उत्पादनमाख्यातार्थः। तेन … उत्पादयतीत्यत्र प्रत्ययोऽनुवादकः। अनुत्पादवाचिधातूत्तरप्रत्ययस्य चोत्पादवाचित्वम् BhāṭṭCin. i. 81. 3 (*on* i. 1.4)

**अनुत्पादविकल्प** (anutpāda-vikalpa) *m.* conceptual construction regarding the non-origination (of all things) तत्र अनुत्पादविकल्पः कतमः। यदुत अनुत्पन्नपूर्वाः सर्वभावा अभूत्वा प्रत्ययैर्भवन्त्यहेतुशरीराः LaṅkāSū. 2.179 (20) (53.3)

**अनुत्पादव्ययवत्** (anutpādavyaya-va(n)t) *adj.* having non-origination and non-perishability अथार्थस्यैव कश्चित्स विशेषो व्यक्तिरिष्यते। नानुत्पादव्ययवतो विशेषोऽर्थस्य कश्चन PramāVār. 3.465.

**अनुत्पादानित्यता** (anutpādānityatā) *f.* non-origination as well as impermanency कल्पयन्ति। … अन्ये अनुत्पादानित्यतां सर्वधर्माणाम् … अनुत्पादानित्यता नाम यदुत नित्यमनित्यं सदसतोरप्रवृत्तिः सर्वधर्माणामदर्शनं परमाणुप्रविचयाददर्शनम् … अनुत्पादानित्यताया लक्षणम् LaṅkāSū. 3. 117(11) (83. 21)

**अनुत्पादानिरोधधर्मन्** (anutpādānirodha-dharman) *adj.* having the properties of non-origination and non-cessation तान्यस्य तस्मिन् समये प्रहीणानि भवन्ति परिज्ञातानि समुच्छिन्नमूलानि तालमस्तकवदनाभासगतानि आयत्यामनुत्पादानिरोधधर्माणि ĀryaŚāS. 19.7.

**अनुत्पादित** (an-utpādita) *adj.* **I** not produced, beginningless ऐश्वर्यं सकलं यस्मादनुत्पादितमव्ययम्। अबीजाद् बीजसंभूतं वरं तस्माद् वृणीमहे MahāBhā. xiii. App. I. 5(5); **II** not effectuated, not performed अनुत्पादितभ्रुकुट्यादिदारुणचेष्टाद्वारेण भगवतीमुखाम्बुरुहकालुष्यस्य करणे यदसामर्थ्यम् SaraKaṇṭhā. 332. 3; तस्मादर्थादन्यद् द्रव्यान्तरमुत्पाद्यम्। न ह्यनुत्पादिते तस्मिन् स्विष्टकृदिज्या संभवति TantrRa. 91.1.

**अनुत्पादितकार्य** (anutpādita-kārya) *adj.* which has not produced the result निशुम्भसंभ्रमस्य हेतोः … भगवतीमुखाम्बुरुहकालुष्यस्य करणे यदसामर्थ्यं तत्र तन्मुखाख्यस्य वस्तुनः स्वभावो निमित्तमिति स्वभावादनुत्पादितकार्योऽयमहेतुः SaraKaṇṭhā. 332. 5.

**अनुत्पादितचित्त** (anutpādita-citta) *adj.* in whom thought is not produced तदनेन पर्यायेण वेदितव्यमनुत्पादितचित्तस्यापि बोधिसत्त्वस्य अकृतेऽपि बोधिसत्त्वचर्याप्रयोगे गोत्रमाधारः BodhiBhū. 1.19.

**अनुत्पादितदोषदृष्टि** (anutpādita-doṣadṛṣṭi) *adj.* in whom fault-finding vision is not produced अनाहुता अप्यभियन्ति बन्धुषु। ते यद्यनुत्पादितदोषदृष्टयो बलीयसानात्म्यमदेन मन्युना BhāgP. iv. 3. 16.

**अनुत्पादितधर्माध्यास** (anutpādita-dharmādhyāsa) *adj.* not generating the superimposition of attributes अहमिति धर्मितादात्म्याध्यासमात्रं ममेत्यनुत्पादितधर्माध्यासं नानर्थहेतुरिति धर्माध्यासमेव…°संसारकारणमुदाहरणप्रपञ्चेनाह Bhām. 30.4 (*on* i. 1. 1)

**अनुत्पादितपुत्र** (anutpādita-putra) *adj.* [*f.* -ā] **I** who has not begotten a son स्त्रियम् … दाहयित्वा पतिः भर्ता अनुत्पादितपुत्रोऽनिष्टयज्ञो वा …

दारान् … आहरेत् Mitā. 30.5 (*on* 1.89); **ii** (woman) who has not given birth to a son तत्र नियोगस्यैव निमित्तत्वे अनुत्पादितपुत्राया अपि धनसंबन्धः प्राप्नोति Mitā. 240.3 (*on* 2.135); Subodhi. 63.13 (*on* 2.135-136); BālamBha. ii. 191.20 (*on* 2.135-136)

**अनुत्पादितफल** (anutpādita–phala) *adj.* which has not generated any result संचिते पापपुण्ये … अनुत्पादितफले एव … विनश्यतः GoviBh. 294.14 (*on* iv. 1.15)

**अनुत्पादितबोधिचित्तव्याकरण** (anutpādita–bodhicittavyākaraṇa) *n.* elucidation of the thought of one in whom enlightenment is not produced इदं दृढमते उच्यते। बोधिसत्त्वस्यानुत्पादितबोधिचित्तव्याकरणम् ŚikṣāSa. 91.13.

**अनुत्पादितब्रह्मानुभवा** (anutpādita-brahmānubhavā) *adj.* (*f.*) which has not brought about the realization of Brahman (ब्रह्मोपासना) न चासावनुत्पादितब्रह्मानुभवा तदुच्छेदाय पर्याप्ता Bhām. 41.15 (*on* i. 1.1)

**अनुत्पादितमन्यु** (anutpādita–manyu) *adj.* in whom anger is not aroused न हि अनुत्पादितमन्युः कश्चित् कमपि व्यापादयति TattvCin. iv(2). 212.3.

**अनुत्पादितव्यथ** (anutpādita–vyatha) *adj.* which has not caused any pain धारिण्याः पूर्वसंभवः। तत्र क्रमेण ववृधे गर्भोऽनुत्पादितव्यथः PariPar. 1.116.

**अनुत्पादितस्वत्वा** (anutpādita–svatvā) *adj.* (*f.*) in whom the ownership is not produced ततश्चानुत्पादितस्वत्वायाः कन्यायाः पाणिग्रहण-संस्कारात् पतिः स्वामी स्वत्ववान्न VīraMi.(Saṁskāra.) 584.6.

**अनुत्पादितस्वेदलव** (anutpādita–svedalava) *adj.* which has not caused (even) small drops of sweat भवतः … गीर्भिः … अस्माकम् … अनुत्पादितस्वेदलव इव … अतिक्रान्तः … मार्गः NalaCam. 6.72(6)

**अनुत्पादितहृदयाह्लाद** (anutpādita–hṛdayāhlāda) *adj.* which has not brought about or caused any delight to the heart अनुत्पादितहृदयाह्लादम् … अच्छोदम् … आससाद Kād. 306.7.

**अनुत्पादिताग्निज्ञान** (anutpāditāgnijñāna) *adj.* which has not given rise to the knowledge of fire सत्यपि वह्निनियतत्वे धूमस्य प्रमत्तस्य कुतश्चिन्निमित्तादनुत्पादिताग्निज्ञानस्य प्रामाण्याभावात् NyāyKa. 218.1.

**अनुत्पादितारोप** (anutpāditāropa) *adj.* which has not caused the superimposition (भेदाग्रहः) किमयमारोपोत्पादक्रमेण व्यवहारहेतुराहो अनुत्पादितारोप एव स्वत इति Bhām. 17.2 (*on* i. 1.1); किमयं भेदाग्रहः समारोपोत्पादनक्रमेण व्यवहारकारणमस्तूतानुत्पादितारोप एव स्वयम् SarvaDaSaṁ. 16.510.

**अनुत्पाद्य** (an–utpādya) *ger.* **i** not having procreated अनुत्पाद्यैव प्रजाः श्लोकशतसहस्रम् … कृतवान् स्वयंभूः SuśruS. i. 1.6; द्विजः … अनुत्पाद्य तथा सुतान्।… मोक्षमिच्छन्व्रजत्यधः ManuSm. 6.37; अनुत्पाद्य सुतान् … कथम् … सुगतिं गन्तुमिच्छसि MārkP. 95.7; वृषलात्मजः सवर्णायां पुत्रमनुत्पाद्य शूद्रायामुत्पादितपुत्रः (श्राद्धे निन्दितः) DīpKa. 26.32 (*on* 1.222); **ii** not having brought about यद्यन्यदनुत्पाद्य यागो विनश्येत् ŚābaBh. 390.2 (*on* ii. 1.5); मुधैषां बहुमानोऽयं वस्त्वनुत्पाद्य किंचन ŚlokaVār. 6.132 (763.9); बाह्यां वृत्तिमनुत्पाद्य व्यक्तिः स्यान्नाहमो यथा NaiṣkaSi. 141.7; ManuBh. i. 66.24 (*on* 2.6); बुद्धिपूर्वा हि प्रवृत्तिर्न बुद्धिमनुत्पाद्य शक्यसंपादना NyāyKuA. ii(1). 223.10; ii(2). 74.7; न ह्यङ्कुरमनुत्पाद्य विनष्टस्य बीजवर्गस्याङ्कुरोत्पादनसामर्थ्यं नास्तीति शक्यते वक्तुम् NyāySiA. 208.25; यदि हि प्रत्ययमनुत्पाद्यैकोऽयं भूमध्यप्रदेश इति ब्रूयात् NyāySu.(Ja.) 124A.7 (*on* i. 1.6); अपूर्वं तु हिंसामनुत्पाद्य नरकं साधयितुं न शक्नोति YuktiSneha. 27.30 (*on* i. 1.2); ŚivārkaMaDī. ii. 218.31 (*on* iii. 1.25)

**अनुत्पाद्य** (an–utpādya) *adj.* **i** not to be created (i.e. eternal) अनुत्पाद्यं परं धाम परमाणु परेशयम् VāyuP. ii. 39.224; BrahmāṇḍP. iii. 2.227; सद्योत्पत्तेरनुत्पाद्योऽनाप्यश्चापि तथात्मनः …। कौटस्थ्यादविकार्योऽयम् BṛĀraUBhVā. iv. 4.1114; अक्रियाजः अनुत्पाद्यः यथाकाशादेर्महत्त्वादिः Pradī. iv. 63A.8 (*on* iv. 1.44); **ii** not to be produced आदित्यसंयोगानुत्पाद्यपरत्वापरत्वासमवायिकारणाधारः परत्वापरत्वानधिकरणं दिक् SaptaPa. 80(25); अनुत्पाद्योऽपि प्रत्यवायप्रागभावः शङ्कितनिवृत्तिर्भवति Aparā. 1037.20 (*on* 3.219); **iii** (composition in which the plot is) not to be (newly) produced सन्ति द्विधा प्रबन्धाः …। उत्पाद्यानुत्पाद्याः Kāvyālaṅ.(Ru.) 16.2; पञ्जरमितिहासादिप्रसिद्धमखिलं तदेकदेशं वा। परिपूरयेत्स्ववाचा यत्र कविस्ते त्वनुत्पाद्याः Kāvyālaṅ.(Ru.) 16.4.

**अनुत्पाद्यत्व** (anutpādya–tva) *n.* **i** the state of being that which is not to be created (i.e. eternality) नित्यमव्यक्तमनुत्पाद्यत्वात् Sāṁkhya-KāBh. 7.29 (*on* 10); पुमानहेतुमान्, अनुत्पाद्यत्वात् SāṁkhyaKāBh. 9.8 (*on* 11); द्रव्यपरत्वे चानुत्पाद्यत्वात् … असंस्कार्यत्वम् PañcPā. 42.11 (*on* i. 1.1); ब्रह्मस्वभावस्य नित्यत्वेनानुत्पाद्यत्वात् Bhām. 41.4 (*on* i.1.1); ते हि वियदादिवदनुत्पाद्यत्वेन सत्याः VedāntDī. 159.15 (*on* iii. 2.21); प्रकाशस्यानुत्पाद्यत्वाद्विनाश एव स्यात् VedāSaṁ. 94.10; **ii** the state of being that which is not to be produced कार्यस्यानुत्पादः प्रागभावो वा स्यात्, तस्य कालान्तरप्राप्तिर्वा। न पूर्वः, तस्यानुत्पाद्यत्वात् NyāyKuA. i. 32.4; आधानवदनुत्पाद्यत्वेन स्वरूपे आनर्थक्यात् … अग्निष्टोमसंस्थाकज्योतिष्टोमाद्यङ्गत्वेन चयनं विधीयते MīmāKau. ii. 67.17 (*on* ii. 3.22); GoviBh. 282.4 (*on* iii. 4.44)

**अनुत्पाद्यत्वप्रसङ्ग** (anutpādyatva–prasaṅga) *m.* undesired contingency of being that which is not to be produced तत्र प्रतिप्रसङ्गः प्रागपि सच्चेत (कार्यम्) प्रकृत्यादिवदेवानुत्पाद्यत्वप्रसङ्गः NyāyPari. 348.14.

**अनुत्पाद्यमान** (an–utpādyamāna) *adj.* not being created (i.e. eternal) महेश्वरम् … ओं ज्योतिःस्वरूपम् … अनुत्पाद्यमानम् … न जानन्ति मोक्षापेक्षगिका नराः SkandP. v(3). 177.17.

**अनुत्पाद्यापूर्वरूप** (an–utpādyāpūrvarūpa) *adj.* not that in which a new form is to be produced परैरनुत्पाद्यापूर्वरूपं न खादिकम्। सकृच्छब्दाद्यहेतुत्वादित्युक्ते प्राह दूषकः PramāVār. 4.141.

**अनुत्पाद्येतिवृत्त** (anutpādyetivṛtta) *n.* literary composition in which the theme is not to be (newly) produced इतिहासाश्रयं कथाश्रयमुत्पाद्येतिवृत्तमनुत्पाद्येतिवृत्तं प्रतिसंस्कार्येतिवृत्तमिति पञ्च प्रबन्धशरीराणि। … अनुत्पाद्येतिवृत्तमित्यनेन यथावगतवर्तमानातीतमहाराजादिवृत्तवर्णनं विषयतामस्याचष्टे, यथा हर्षवर्धनराज्यवर्धनादीनां च वर्णनं हर्षचरिते ŚṛṅgāPra. 481.16.

**अनुत्पाव** (an–utpāva) *adj.* not having purity, unholy निग्राहस्तेस्तादवग्राह इत्युद्राहं त्वस्मिन्विद्धयनुत्पाव सत्यम् DvyāśraKā. 12.74 (comm. रे अनुत्पावापवित्र)

**अनुत्पिञ्जलमनस्** (anutpiñjala–manas) *adj.* having undisturbed mind निःसङ्गीकृतद्वारदेशः स्वयमेव यथादेशरूपमनुत्पिञ्जलमनाः … कार्याण्यपश्यम् YaśasCam. i. 372.7 (comm. अनाकुलितचित्तः)

**अनुत्पूत** (án–utpūta) *adj.* not purified यस्याज्यमनुत्पूतꣳ स्कन्दति सा वै चित्रा नामाहुतिः MaiS. i. 4.13 (i. 62.9); यदेवानुत्पूतꣳ स्यात् KāṭhS. 29.1 (ii. 167.6); KapiKaS. 4.3 (40.14); 45.2 (268.2); ṢaḍviBr. iv(v). 1.8; आसादयेत् … आज्यं सर्पिरनुत्पूतं नवनीतं वोत्पूतं ध्रुवायामाज्यं कृत्वा दक्षिणतः ĀśvaŚS. I. ii. 6.10; अभिघारयत्यनुत्पूतेन वा सर्पिषा BhārŚS. i. 7.7; ĀpaŚS. i. 8.1; ix. 13.1; (ब्रह्मौदनम्) घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्योत्तरत उद्वासयति MānŚS. 29.10; 8.23; आज्ये स्कन्ने ददात्यनुत्पूते चित्रम् MānŚS. 95.17; MānGS. ii. 2.4; नानुत्पूतं हविः KauśiSū. 2.27.

**अनुत्पूतसर्पिस्** (anutpūta–sarpis) *n.* unpurified butter दक्षिणतः स्थालीम् … आसाद्यानुत्पूतसर्पिषा पक्वमभिघार्य VaikhāGS. 4.5.

**अनुत्पूय** (an–utpūya) *ger.* not having purified अनुत्पूते पयस्यनुत्पूय तण्डुलानावपति BhārŚS. viii. 12.15.

**अनुत्प्रेक्षात्वापत्ति** (anutprekṣātvāpatti) *f.* undesired contingency of being what is other than *utprekṣā* (a figure of speech) 'poetic fancy' अस्मिन्नलंकारे हेतुत्वं निश्चीयमानम्, हेतूत्प्रेक्षायां तु संभाव्यमानमित्यस्ति विशेष इति चेत्, प्रतीयमानहेतूत्प्रेक्षाया अनुत्प्रेक्षात्वापत्तेः RasGaṅ. 666.16.

**अनुत्प्रेक्ष्य** (an–utprekṣya) *ger.* not having considered अनुत्प्रेक्ष्य … दोषमागामिनं मया।… प्रमदावचनं कृतम् BṛKathāŚloSaṁ. 22.60.

**अनुत्प्रेक्ष्यत्व** (anutprekṣya–tva) *n.* the state of being that which is not to be considered as the object of 'poetic fancy' त्वन्मते मौनस्य निमित्तत्वेनानुत्प्रेक्ष्यत्वाच्च RasGaṅ. 400.1.

**अनुत्प्लुत्य** (an–utplutya) *ger.* not having jumped हयः … अनुत्प्लुत्यावतिष्ठेत म्रियमाणस्ततो भृशम्। स भवत्युत्तमप्राणः Mānaso. iv. 4.729.

**अनुत्फुल्लविलोचन** (anutphulla–vilocana) *adj.* having eyes which are not fully opened चितानि घर्माम्बुकणैः समन्ततो मुखान्यनुत्फुल्लविलोचनानि Kirātā. 8.25.

**अनुत्रासविचित्रकाकु** (anutrāsa–vicitrakāku) *adj.* causing a peculiar tone because of fear स्वनैरनुत्रासविचित्रकाकुभिः … तयोः। उपान्तकुञ्जेषु कपिञ्जलादयः शशंसुराशंसितसिद्धिमण्डजाः RāmC. 4.4.

**अनुत्संकलित** (an–utsaṅkalita) *adj.* not permitted यदि तावदकथयित्वानिपत्य चरणयोः … सहसानुत्संकलित एव तातेनाम्बया वापक्रम्य गच्छामि ततः … मम कुतः सुखम् Kād. 260.12.

**अनुत्सद** (an–utsada) *adj.* not excessive, not over-full गम्भीरश्च तथागतस्वरः … अनुत्सदश्च MaVastuAva. iii. 343.4; बोधिसत्त्वः … सत्त्वलोकस्यैव कषायोत्सदकालतां च यथाभूतं प्रजानाति। निष्कषायानुत्सदकषायकालतां च BodhiBhū. 173.1 [DBHS.]

**अनुत्सन्न** (án-utsanna) *adj.* 1 not lost यदनुत्सन्नमिदं तद्योऽयमग्निश्चीयते ŚatBr. VII. iii. 1.42; 2 not excessive(ly loud), not too full गम्भीरश्च तथागतस्वरः … अनुत्सन्नश्च MaVastuAva. iii. 343.4 [DBHS.]; 3 not high, not raised अनुत्सन्ना ह्यनिम्नाश्च प्रदेशास्तस्य कीर्तिताः Hastyāyur. 423.4 (3.8)

**अनुत्सन्नगात्र** (anutsanna-gātra) *adj.* having limbs not excessive (too many) बुद्धानां भगवतामशीत्यनुव्यञ्जनानि भवन्ति।… बुद्धा भगवन्तो … अनुसन्धि(v. l. °त्सन्न DBHS.)गात्रा च MaVastuAva. ii. 43.12.

**अनुत्सर्ग** (an-utsarga) *m.* i not leaving (i. e. non-loss of the contact) पूर्ववदनुत्सर्गः ĀpaŚS. i. 21 4; ii non-allowing to go, withdrawal इन्द्रियाणामनुत्सर्गो मृत्युना न विशिष्यते। अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतान्यपि MahāBhā. v. 39.38 (BhārArthaPra. अत्यन्तं विषयेभ्यो निवृत्तिः, Lakṣābha. विषयेष्वप्रेषणम्); iii non-abandonment उपनाहः कतमः। तत ऊर्ध्वं प्रतिघांशिक एव वैराशयस्यानुत्सर्गः AbhidhSa. 8.15; किमुताहं नरो जात्या शक्तो ज्ञातुं हिताहितम्। सर्वज्ञनीत्यनुत्सर्गाद्बोधिं किं नाप्नुयामहम् BodhiCa. 7.19.

**अनुत्सर्गम्** (án-utsargam) *ger.* not having left or omitted, continuously यथा मध्ये समुद्रस्य प्लवमन्वर्जेयुस्तादृक् तदनुत्सर्गं बृहद्रथन्तराभ्यामित्वा प्रतिष्ठां गच्छन्ति TaiS. VII. v. 3.2; BaudhŚS. ii. 262.11; यो वै शशम् उत्सर्गं लिप्सते, नैनं स गृह्णाति। अथ य एनम् अनुत्सर्गं लिप्सते, स एवैनं गृह्णाति JaimiBr. 2. 395.

**अनुत्सव** (an-utsava) *adj.* devoid of festivals म्लेच्छभूतं जगत्सर्वम् … भविष्यति … अनुत्सवमथो तथा MahāBhā. iii. 188.29; उदके क्रियमाणे … निरानन्दमनुत्सवम्। वीरपत्नीभिराकीर्णं गङ्गातीरमशोभत MahāBhā. xi. 27.5; *m.* i absence of festivity स्त्री … नानुत्सवे गन्धमाल्याभरणानि विकृतानि वासांसि बिभृयात् ŚaṅkhaLiDS. 78; ii stoppage of festivities पाकः … भूकम्पोऽनुत्सवो दुरिष्टं च।… वर्षार्धात् BṛSaṁ. 97.5.

**अनुत्सवकल्प** (anutsava-kalpa) *adj.* as good as a non-festival, almost a non-festivity अभवदनुत्सवकल्पः सदुत्सवो विरहिणोर्यूनोः ŚṛṅgāMañ. (A.) 51.22.

**अनुत्सवोत्तरा** (anutsavottarā) *adj.* (*f.*) accompanied by absence of festivity शोकोऽयम् … अनुत्सवोत्तरासु मदनत्रयोदशीषु … हृच्छयः AvantiKa. 190.1.

**अनुत्सहमान** (an-utsahamāna) *adj.* i who is not able (to undertake) व्रतमनुत्सहमानस्याभ्युदितेष्टिः MānŚS. 95.14; ii not striving, not daring ते प्राणाः संचालिताः सन्तः स्वस्थाने स्थातुमनुत्सहमानाः अभिसमेत्य मुख्यं प्राणं तमूचुः ChāndoUBh. 265.3 (*on* v. 1.12); अपरे पुनश्चेतसोऽपि शून्यताङ्गीकारे मनःप्रत्ययमनासादयन्तः सर्वमिदमसदेव विश्वमित्यभिधातुं सहसैवानुत्सहमाना मन्यन्ते KhaṇḍanKhā. 81.3.

**अनुत्सह्य** (án-utsahya) *ger.* not having tolerated अवर्तिश्वा एषां यजमानस्यानुत्सह्य निषीदति MaiS. i. 8.8 (i. 127.6)

**अनुत्सादन** (an-utsādana) *n.* non-destruction सातकर्णेः … संबन्धाविदूरया (read अविदूर(त)या) अनुत्सादनात् EI. viii. 44.12.

**अनुत्सादम्** (an-utsādam) *ger.* not having disappeared प्रतिहारस्य चानुत्सादमनुपायाच्च निधनस्य चानिधनस्वरितत्वान्निधनमुत्सीदेत् NidāSū. 34.12 (2.8)

**अनुत्साद्य** (an-utsādya) *ger.* not having abolished एवं वेदमनुत्साद्य प्रज्ञां महति कुर्वते MahāBhā. v. 43.25.

**अनुत्सारयन्ती** (an-utsārayantī) *adj.* (*f.*) not putting aside तं पटं प्राणितमिवान्तिकादनुत्सारयन्ती दिनान्यतिवाहयामास UdaySuKa. 103.9.

**अनुत्सारितनानात्व** (anutsārita-nānātva) *adj.* which has not set aside plurality अनुत्सारितनानात्वं ब्रह्म यस्यापि वादिनः NaiṣkaSi. 39.4 (*but* comm. नानारसत्वशून्यम्)

**अनुत्साह** (an-utsāha) *m.* i lack of enthusiasm, lack of zeal अग्निष्टोमसाम्ना स्तुत्वा प्राक् पत्नीसंयाजेभ्यो यदेभिः प्रस्तुते पराध्यं व्रजितं स्यात्तद्गत्वा प्रत्याव्रज्य मनसानुत्साहे हुतेषु पत्नीसंयाजेषु गार्हपत्य उद्गाता जुहुयात् LāṭyāŚS. iii. 7.8; DrāhyŚS. ix. 3.23; यः सामर्थ्येऽप्यनुत्साहस्तदालस्यमुदीर्यते ŚārṅgaS. i. 6.26; कर्मसचिवैः … अतिमहत्त्वाद्भेदस्यानुत्साहविमुखमतिभिः EI. viii. 44.17; आलस्यमात्मध्यानादावनुत्साहः VīraMi. 884.22 (*on* 3.158); ii listlessness, languor, depression, one of the *anubhāvas* (i.e. external manifestation of emotions) वेपनानुत्साहतनुगात्रवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः NāṭyaŚā. 7.47(4); ग्लानिः … वैवर्ण्यकम्पानुत्साहक्षामाङ्गवचनक्रियाः DaśRū. 4.10; BhāvPra.(Śā.) 15.23(1); SāhiSā. 5.18; ग्लानिः। तां वैवर्ण्यक्षामनेत्रकपोलोक्तिश्लथाङ्गत्वप्रवेपनदीनसंचारानुत्साहादिभिर्वर्णयेत् Kāvyānu. (He.) 111.13; विषादः … ज्येष्ठमध्यकनिष्ठेषु स त्रिधा कथ्यते बुधैः।… वैमनस्यमनुत्साहो विघ्नैः शय्या च मध्यमे BhāvPra.(Śā.) 22.4(1); RasāSu. 100.6 (2.10); iii lack of energy, lack of vigour अनुत्साहो निराहारः स्वल्प एवोपघातेऽवसादाश्रयणम् ManuBh. ii. 387.4 (*on* 11.58); अनुत्साहः सर्वव्यसनानामागमनद्वारम् NītiVā. 17.18; YuktiKa. 14.13; अनुत्साहवयोऽवस्था न बाधन्ते कदाचन DevīBhāP. viii. 18.32; अनुत्साहान्नृपो गेहादपि निर्गन्तुमक्षमः RājTa. (Ka.) 8.763; अशक्तता चानुत्साहो रतिव्यायामकेलिषु।… चतुर्थे यौवने स्त्रीणाम् BhāvPra.(Śā.) 105.8(5); RasāSu. 41.4 (1.178); अवसादोऽनुत्साहः Prasā. ii. 161.12; iv indifference पञ्चसमितित्रिगुप्तिष्वनुत्साहः प्रमादः SarvaDaSaṁ. 3.290; अथोपास्यसांनिध्यं वक्तुं तस्य व्याप्तिर्निरूप्यते। अन्यथा संनिहिते (? अन्यथासंनिहिते) तस्मिन्ननुत्साहाद्भक्तेः शैथिल्यं स्यात् GoviBh. 216.1 (*on* iii. 2.38); *adj.* devoid of energy परिग्रहोऽप्यनुत्साहोऽपि नृपमनुययौ PurāPraSaṁ. 25.2.

**अनुत्साहजड** (anutsāha-jaḍa) *adj.* dull due to lack of enthusiasm भवाननुत्साहजडस्तु लभ्यते न नूनमस्मद्व्यसनेन तप्यते JātaMā. 79.5 (12.11)

**अनुत्साहतस्** (anutsāha-tas) *adv.* because of the absence of enthusiasm सर्वकार्येषु हि लीनचित्ततया वा भयमुत्पद्यते तदनुत्साहतः MaYānaSū. 135.14 (18.18)

**अनुत्साहता** (anutsāha-tā) *f.* the state of being depressed ग्लानिर्निष्प्राणताकम्पकार्श्यानुत्साहतादिकृत् SāhiDa. 162.9.

**अनुत्साहत्व** (anutsāha-tva) *n.* the state of not having enthusiasm प्रायेण तु परस्मैपदं पठ्यते, तत्र पापं कर्म कर्तुकामः कुटिलमाचरतीत्यर्थः अनुत्साहत्वात् परस्मैपदम् PadMañ. *on* KāśiVṛ. *on* P. iii. 1.14.

**अनुत्साहमुग्ध** (anutsāha-mugdha) *adj.* attractive even in spite of absence of energy स्वव्यापारपरिश्लथे च नयनेऽनुत्साहमुग्धं वपुः।… जातान्यैव मनोहराकृतिरहो गर्भोदये सुभ्रुवः SaduktiKa. 74.10.

**अनुत्साहवत्** (an-utsāhava(n)t) *adj.* not enthusiastic न हि अनुत्साहवतामननुतिष्ठतामलसानां भोगप्राप्तिः ChāndoUBh. 149.10 (*on* iii. 6.2)

**अनुत्साहहत** (anutsāha-hata) *adj.* miserable due to slackness or lassitude सोऽनुत्साहहतः कालो नष्टराज्य इवाभवत् RājTa.(Ka.) 8.1908.

**अनुत्साहानुभावत्व** (anutsāhānubhāva-tva) *n.* the state of being connected with external manifestation of emotion in the form of depression अभिवादन° … °इष्टदेवतास्मरणानां पूर्वरङ्गपर्यवसायित्वेनानुद्दीपनविभावत्वादनुत्साहानुभावत्वाच्च नायमनुबन्धो निष्पत्तिः प्रकर्षो वा भवति SaraKaṇṭhā. 579.1.

**अनुत्साहिन्** (an-utsāhin) *adj.* [*f.* -ī] not energetic नैतावता बुधैः। धर्मस्य रक्षणविधौ कार्यानुत्साहिनी मतिः KathāSaSāg. xii. 5.118; क्लीबोऽनुत्साही समर्थोऽपि स्वाश्रमधर्मानुष्ठानरहित इत्यर्थः SmṛtiCan. v. 185.7.

**अनुत्सिक्त** (an-utsikta) *adj.* [*f.* -ā] 1 not sprinkled (i.e. not mixed with any other substance) for increase व्रतं प्रयच्छत्यनुत्सिक्तम् KātyŚS. vii. 4.29 (comm. अभ्युच्चयाय वर्धनाय सिक्तमुत्सिक्तं न उत्सिक्तमनुत्सिक्तम्); 2 not arrogant, modest सः … विद्वत्तासूचकेनानुत्सिक्तेन … वचसा … अभिलक्षितो बभूव JātaMā. 106.8 (18.3); MahāP. 39.167; अनुत्सिक्तेन यो दत्तभूरिग्रामो महीभुजा RājTa.(Ka.) 8.2443; भोजः … धात्रीम् … व्यसर्जयत्।… भाग्योदयेष्वनुत्सिक्ता या चाखण्डितसद्व्रता RājTa.(Ka.) 8.3067; अनुत्सिक्तो जगत्स्वामी विजहार यथासुखम् TriṣaŚaPuC. i. 2.732.

**अनुत्सुक** (an-utsuka) *adj.* [*f.* -ā] not restless, not anxious, calm, controlled (आश्रमः) स्वस्थैः शान्तैरनुत्सुकैः। आकीर्णोऽपि तपोभृद्भिः शून्यशून्य इवाभवत् Saund. 1.10; अनुत्सुको वनान्तेषु वसन् शमपरायणः। आरोपयति साधूनां गुणसंभावनां हृदि JātaMā. 111.8 (19.8); इतरः … लक्ष्मीं प्रत्यनुत्सुकः AvantiKa. 175.16; अयं निहन्त्यकुपितः सृजत्ययमनुत्सुकः RāmC. 9.10; कुर्यादनुत्सुकं कृष्णा वेण्या कमलिनीलया KīcaVa. 2.8; नरपतिः … अनुत्सुकेन मनसा … अवश्यकरणीयं व्यापारमकार्षीत् UdaySuKa. 39.25; अनुत्सुकानां शक्तानां लीलापूर्वाः प्रवृत्तयः TriṣaŚaPuC. ii. 4.287; विश्वस्तानां निर्भयानामनुत्सुकानां वा JñātāDhaṬ. 2A. 9; संक्षोभाभावाद् अनुत्सुका JñātāDhaṬ. 17A. 6; निजैरनुत्सुकैः … भटैः। भृतासिदण्डैः कोदण्डमण्डपः परिवेष्टयताम् PāṇḍaC. 2.291; अनुत्सुको निरुत्सेकः सभामेयाय नेमी PāṇḍaC. 16.41; आषाढाख्यविप्रस्यानुत्सुका रच्छुका जनी SamarāSaṁ. 4.202; तौ मुनी …। अनुत्सुकावनुत्सेकौ मासक्षपणपारणे ŚāliC. 6.119.

**अनुत्सुकता** (anutsuka-tā) *f.* the state of not being eager अनुत्सेकः (v. l. अनुत्सुकता M. WILLIAMS Ed.) खलु विक्रमालंकारः Vikramo. 1.15(1)

**अनुत्सुकम्** (anutsukam) *adv.* without eagerness, calmly आपदि दीनमनोरथं संपदि हर्षपरायणम्। मा कुरु मानस चापलं संस्मर तत्त्वमनुत्सुकम् ChandaśCū. ii. 93.3.

**अनुत्सुकमहोत्साह** (anutsuka-mahotsāha) *adj.* calm yet very

energetic अनुत्सुकमहोत्साह विचारय वचो मम ŚāliC. 3.46.

**अनुत्सूत्रत्व** (anutsūtra-tva) *n.* the state of being that which has not gone beyond the rule शङ्काया अनुत्सूत्रत्वमाह ŚrutaPra. ii. 98.24 (*on* i. 4.1); ii. 207.6 (*on* ii. 1.1); ii. 483.23 (*on* iii. 3.20)

**अनुत्सूत्रपदन्यासा** (anutsūtra-padanyāsā) *adj.* (*f.*) **I** in which steps are not taken against the (political) canons अनुत्सूत्रपदन्यासा ···। शब्दविद्येव नो भाति राजनीतिरपस्पशा ŚiśuVa. 2.112 (comm. उत्सूत्र उच्छास्त्रो नीतिशास्त्रविरुद्धः पदन्यासः एकपदप्रक्षेपोऽपि स्वल्पव्यवहारोऽपीति यावत्। स नास्ति यस्यां सा ··· नीतिपूर्वकसर्वव्यवहारेत्यर्थः); **II** in which the derivation of words has not violated the (spirit of) rules, ŚiśuVa. 2.112 (*but* comm अनुत्सृष्टसूत्राक्षरः इष्ट्युपसंख्यानैरपेक्ष्येण सूत्राक्षरैरेव सर्वार्थप्रतिपादको न्यासो वृत्तिव्याख्यानग्रन्थविशेषो यस्यां सा)

**अनुत्सृजत्** (an-utsṛjat) *adj.* **AI** not leaving (the contact) अनुत्सृजन् कृष्णाजिनमुलूखलमधिवर्तयति BhārŚS. i. 21.4; ĀpaŚS. i. 19.6; VārāŚS. I. ii. 4.43; HirŚS. i. 5.45 (125.24); VaikhāŚS. 4.6; 4.8; अनुत्सृजन्नुलूखलँ हविरावपति BhārŚS. i. 21.5; ĀpaŚS. i. 19.7; HirŚS. i. 5.46 (125.27); अग्रेण होतारमध्वर्युर्दक्षिणातिक्रामत्यनुत्सृजन्निव (इडाम्) BhārŚS. iii. 1.8; ĀpaŚS. iii. 2.1; HirŚS. ii. 3.15 (208.25); VaikhāŚS. 6.11; **AII** not giving up, not abandoning अनेन ··· लवमप्यादेयमनुत्सृजता ··· भुक्तम् ··· भारतवर्षम् AvantiKa. 209.7; त्वमप्येवमसद्ग्रहमनुत्सृजन्। न ज्ञायते किमपि यत्फलमासादयिष्यसि PariPar. 3.121; पात्रमनुत्सृजन्नेव ··· अन्नत्यागं कुर्यात् SmṛtiCan. v. 344.14; **B** not giving back, not returning सोदयं द्रव्यमादायोपस्थितस्याधिमनुत्सृजन् प्रयोक्ता दण्ड्यः स्यात् BālaKrī. i. 224.1 (*on* 2.64)

**अनुत्सृजमान** (an-utsṛjamāna) *adj.* not releasing यथा ह वा इदं धृतिरभिध्मातश्शोचेदेवं ह वा एष प्रजापतिः पशूञ्छोचयत्यनुत्सृजमानः JaimiBr. 2.396.

**अनुत्सृज्य** (an-utsṛjya) *ger.* **1** not having released or passed out यच्चानुत्सृज्य विण्मूत्रं भुङ्क्ते ···। तच्च क्रमविरुद्धं स्यात् CaraS. i. 26.99 (1922 Ed.); **2** not having abandoned यस्तु शस्त्रमनुत्सृज्य म्रियते वाहिनीमुखे।···स स्वर्गान्न निवर्तते ŚivaP. v. 21.25 (430B.2); अनुत्सृज्य सतां मार्गं यत्स्वल्पमपि तद् बहु VyaktiVi. 5.17; ŚārṅgaPa. 307; SūktiMu. 88.16; Subhāṣi. 1112.

**अनुत्सृप्त** (an-utsṛpta) *adj.* not risen उत्सृप्तेऽग्निमन्थनम्। अनुत्सृप्त एके KātyŚS. iv. 8.22; अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते Nir. 12.14 (210.14)

**अनुत्सृष्ट** (an-utsṛṣṭa) *adj.* **AI** from which nothing is omitted or left out यथा वै दृतिराध्मात एवं संवत्सरोऽनुत्सृष्टो यन्नोत्सृजेयुरमेहेन प्रमायुकाः स्युः PañcBr. v. 10.2; यद्युत्सृजेयुरुक्थान्युत्सृजेयुस्तदेवोत्सृष्टं तदनुत्सृष्टम् PañcBr. v. 10.5; संवत्सरस्योत्तमेऽहन्नेकामेव स्तोत्रीयामुत्सृजेयुः। तदुत्सृष्टं चानुत्सृष्टं भवति ĀpaŚS. xxi. 25.7; **AII** not left out, not abandoned व्रतं यद् गृहीतं न तत्पुनरुत्सृष्टं शक्यते ग्रहीतुम्। अनुत्सृष्टं च तदाप्रधानापवर्गात् ŚābaBh. 2222.7 (*on* xii. 1.5); उपेतस्य व्रतस्यानुत्सृष्टस्य पुनरुपेतुमशक्यत्वात् ŚāstrDī. 861.16 (*on* xii. 2.5); **AIII** not donated, not dedicated अनुत्सृष्टेषु न स्नायात्तथैवासंस्कृतेष्वपि।··· अनुत्सृष्टमदत्तं परकीयमिति यावत् SmṛtiCan. ii. 334.12; CaturCin. iii(1). 874.17; पतितस्य ···। न स्नायादुदपानेषु ···। एवमनुत्सृष्टेष्वपि द्रष्टव्यम् CaturCin. iii(1). 874.14; पुष्करिण्यादिषु परकीयेषु परेण खातेषु सर्वार्थमनुत्सृष्टेषु ManvaVi. 552.19 (*on* 4.201); अनुत्सृष्टस्य कर्मानर्हत्वोक्तेः BālamBha. i. 421.6 (*on* 1.159); **AIV** not kept aside इह तदनभिधानं चानुत्सृष्टद्विजेष्टान्नपरिवेषणप्रतिपादकेनैव तदभिधाने ग्रन्थलाघवार्थम् VīraMi. 302.9 (*on* 1.238); **B** who has not let loose (an animal), who has not set (an animal) at liberty इष्ट्वान्यमुत्सृजेत्। नानुत्सृष्टः स्यात्। न ह्यपशुर्भवतीति विज्ञायते ĀśvaGS. iv. 9.38.

**अनुत्सृष्टरणद्वीण** (anutsṛṣṭa-raṇadvīṇa) *adj.* who has not given up the resounding lute (i.e. who was playing on the lute) अग्रस्थितमनुत्सृष्टरणद्वीणं मुनीश्वरम् YogVā. i. 33.5.

**अनुत्सृष्टस्वार्था** (anutsṛṣṭa-svārthā) *adj.* (*f.*) which has not given up its own meaning (but retains it in so far it qualifies the meaning of the main member of the Cpd.) का वृत्तिः। न तावदनुत्सृष्टस्वार्था SaraKaṇṭhā. 658.4.

**अनुत्सृष्टाध्याय** (anutsṛṣṭādhyāya) *adj.* who has not undergone the ceremony of *utsarjana* (suspension of Vedic studies) (*lit.* who has not suspended the study of Veda) नानुत्सृष्टाध्यायोऽधीयीत BhārŚS. xi. 22.9; ĀpaŚS. xv. 21.5 (*but* comm. अनुत्सृष्टेति सवर्णदीर्घस्थाने परसवर्णश्छान्दसः। अध्यायोत्सर्जनविधिना अनूत्सृष्टाध्यायः पश्चान्नाधीयीतेत्यर्थः)

**अनुत्सेक** (an-utseka) *adj.* not arrogant, not egoistic, modest ब्रह्मचारिणा ··· अनुत्सेकेनावहितेनानन्यमनसा ··· प्रविचरितव्यम् CaraS. iii. 8.13 (1941 Ed.); इयं त्वभिन्नमर्यादैः स्वनुशिष्टैः (v. l. अनुत्सेकैः) कृतात्मभिः। सर्वसहैरुपायज्ञैरमूढैरेव धार्यते PañcT. 3.14 (280.13); हे वत्स च्छेकानुत्सेक वत्सल।··· विचारय वचो मम ŚāliC. 3.46; तौ मुनी मान्यौ ···। अनुत्सुकावनुत्सेकौ ··· मासक्षपणपारणे ŚāliC. 6.119.

**अनुत्सेक** (an-utseka) *m.* absence of arrogance or pride, modesty अनुत्सेको लक्ष्म्या ··· सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ŚatTrayī. 275; SūktiRa. 168.39; Subhāṣi. 281; भोगेष्वनुत्सेकः। परिजने दाक्षिण्यम् KāmSū. 239.24 (4.1); अनुत्सेकः खलु विक्रमालंकारः Vikramo. 1.15(1); NītiVā. 5.28; अथ शिष्यगुणाः ··· अनु[illegible]कः KāśyaS. 58B.8; स्वसमृद्धिष्वनुत्सेकः ··· इति वृत्तं महात्मनाम् NītiSā. 3.36; AgniP. 237.21; सुखेष्वनुत्सेकः।··· भेषजमेतत्कलादशकम् KalāVi. 10.12; अनुत्सेकः ··· अक्षोभश्चेति विद्यायाः ··· फलम् DarpDa. 3.24; हर्षागमेष्वनुत्सेकः शोकस्थानेष्वशोकता। समता चापि सर्वेषु सोऽपि संतोष उच्यते ĪśānŚiPa. ii. 66.25; अनुत्सेकः कलावताम् PārśvC. 3.417; अनुत्सेकस्तिरोऽधत्त ज्ञाने दत्तो जलाञ्जलिः PrabhāC. 110.2; *n.* type of an external manifestation of the movement of eyes (*lit.* modesty) अरोचकमनुत्सेकमाविद्धं विद्धमेव च।··· एते प्रायेण कथिता बीभत्से च भयानके (विकाराः दृष्टिसंश्रयाः) BhāvPra.(Śā.) 119.16(5); यद्विनम्रपुटापाङ्गं तदनुत्सेकमुच्यते BhāvPra.(Śā.) 124.10(5)

**अनुत्सेकम्** (anutsekam) *adv.* without arrogance, modestly अनुत्सेकम् ··· सुखं दुःखं च सेवते AṣṭāHṛ. ii. 3.119.

**अनुत्सेकवत्** (an-utsekava(n)t) *adj.* not arrogant कर्मशेषादयं च त्राम् ···। इत्थं कदर्थयामास वत्सेऽनुत्सेकवानपि SamarāSam. 8.422; शौर्येऽप्यनुत्सेकवान् ··· विजयते रामो जगन्नायकः JānaPa. 1.46.

**अनुत्सेकविराजिता** (anutseka-virājitā) *adj.* (*f.*) adorned with modesty मनः ··· वहत्यनुत्सेकविराजितां श्रियम् Kapphiṇā. 2.40.

**अनुत्सेकविवेकाढ्य** (anutsekavivekāḍhya) *adj.* rich in modesty and discernment अस्ति ··· देशो गूर्जरसंज्ञया। अनुत्सेकविवेकाढ्यलोकः PrabhāC. 80.5.

**अनुत्सेकस्थिति** (anutseka-sthiti) *f.* presence of modesty या ··· अनुत्सेकस्थितिरिव श्रुतस्य ··· तस्य महीपतेर्मतिदेवतायाः प्रणयप्रासादाधिष्ठानभूमिरासीत YaśasCam. i. 223.2.

**अनुत्सेकिन्** (an-utsekin) *adj.* [*f.* -ī] not arrogant, modest भव ··· भोगेष्वनुत्सेकिनी Śāk. 4.20; SaraKaṇṭhā. 171.4; SaduktiKa. 75.21; SūktiRa. 26.11; निजसंपत्स्वनुत्सेकी ··· देवस्यानुरूपस्त्वमात्मजः TriṣaŚaPuC. i. 5.479.

**अनुत्सेध** (an-utsedha) *m.* absence of lifting up ह्नोऽनुत्सेधे JaineVyā. ii. 2.14.

**अनुत्सेध्या** (an-utsedhyā) *adj.* (*f.*) not to be subjected to violence वृत्तिः अनुच्छेद्या(? अनुत्सेध्या) जीविका LaŚabdeŚe. i. 396.2.

**अनुत्स्रक्ष्यत्** (an-utsrakṣyat) *adj.* who will not leave or abandon यः प्रथम एकाष्टकायां जायेत तमुत्स्रक्ष्य(v.l. तमनुत्स्रक्ष्य)न्नाग्नेयमष्टाकपालं निरूप्योत्सृज्याथाग्नये वैश्वानराय द्वादशकपालं मासिमासि निर्वपेत्संवत्सरम् MānŚS. 135.4.

**अनुद्** (an-ud) (Gr.) not accompanied by the preverb *ud* हस्तादेयेऽस्तेयेऽनुदश्चेः ŚākaṭāVyā. iv. 4.45.

**अनुद** (anud-á) *adj.* yielding, giving in, cf. **अनानुद**.

**अनुदक** (an-udaka) *adj.* [*f.* -ā́] **AI** having no waters, waterless, not containing water उदन्वतीरनुदकाश्च याः। ता अस्मभ्यं पयसा पिन्वमानाः शिवा देवीरशिपदा भवन्तु ṚV. vii. 50.4; दृशद्वत्या अप्ययेऽपोनप्त्रीयामिष्टिं निर्वपेरन्यदि सोदका स्यात्। अप्यनुदकायामिति धानञ्जय्यः LāṭyāŚS. x. 17.2; DrāhyŚS. xxxi. 2.9; अथामात्योऽनुदकं वनं कारयित्वा ··· राजानमब्रवीत्। वनमिदमुदारमनुदकम् MahāBhā. iii. 190.23; SkandP. v(2). 84.21; ततः प्रनष्टे देवेन्द्रे ··· सरांस्यनुदकानि च MahāBhā. v. 10.44; DevīBhāP. vi. 7.51; यथा ह्यनुदका नद्यः तथा राष्ट्रमराजकम् Rāmā. ii. 61.20; SūktiRa. 41.5; (विवीताध्यक्षः) अनुदके कूपसेतुबन्धोत्सान् स्थापयेत् ArthŚā. i. 342.3 (2.34); उदकधारणं सेतुं भिन्दतस्तत्रैवाप्सु निमज्जनम्। अनुदकमुत्तमः साहसदण्डः ArthŚā. ii. 170.1 (4.11); iii.110.1 (10.2); स्वप्ने चाभीक्ष्णं दर्शनमनुदकानामुदकस्थानानाम् CaraS. ii. 6.13 (1941 Ed.); अनुदकः कमण्डलुः NyāyBh. 254.12 (*on* iv. 1.24); न हि कमण्डलोरभावे अनुदकः कमण्डलुरिति युक्तमुक्तम् NyāyVār. 236.4 (*on* ii. 1.31); अनुदकेष्वरण्येषु चौरव्याघ्राकुले पथि। कृत्वा मूत्रपुरीषं च द्रव्यहस्तः कथं शुचिः ĀpaSm. 9.36; KūrmaP. 532.12 (2.13); नद्यादिषु मेहनं मूत्रपुरीषोत्सर्गं न कुर्यात्। नद्यामनुदकायाम् Aparā. 179.13 (*on* 1.134); अनुदकेऽरण्ये पर्युपासिष्ट संयतान् PadmP.(Ra.) 123.101; धनुर्दुर्गं मरुवेष्टितं चतुर्दिशं पञ्चयोजनमनुदकम् ··· एतेषु दुर्गेषु मध्यादन्यतमं दुर्गमाश्रित्य पुरं विरचयेत् (राजा) ManvaMu. 259.32 (*on* 7.70); **AII** devoid of water, dry प्रागिडाभक्षाद्विधाने

यथास्वं चमसेषूपास्यन्ति पुरोडाशमात्रा अनुदकाः पिण्डपितृयज्ञवद्दानप्रभृति प्रागवघ्राणात् KātyŚS. x. 5.11; अनुदकाम् ···। अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः MahāBhā. xii. 101.18; **B i** not taking water, not using water त्रीन्सप्तरात्राननुदक उपवसन्नृचं साम यजामहे SāmaViBr. iii. 9.1 ( Sāy. अनुदकः उक्ताचमनव्यतिरेकेणोदककार्याणि स्नानपानादीन्यकुर्वन् ); मेहेत् ···। नानुदको नामृत्कः ŚaṅkhaLiDS. 52; VīraMi.(Āhnika.) 40.8; **B ii** deprived of water, having no access to water दासः कर्मकरो वावकरादमेध्यपात्रमानीय दासीघटात्पूरयित्वा दक्षिणामुखो यदा विपर्यस्येदमुकमनुदकं करोमीति नामग्राहम् GautDS. iii. 2.4; **C** not having (libations of) water अनुदकमिति मृन्मयपात्रस्थोदकाञ्जलिरहितमित्यर्थः HārLa. 173.3; अनुदकमधूपं च ···। नवश्राद्धम् ··· 'अनुदकम्' अनर्घ्यपिण्डोदकपवनेजनपरिषेचनरूपम् CaturCin. iii(1). 1598. 18; *n.* **1** dry place, dry land अनुदकमश्ममाक्रमय्य ĀpaŚS. xx. 4. 5; HirŚS. xiv. 1.38 (216.5); दक्षिणां प्रतिगृह्णीयात् ··· नानुदके न चाकाले MānŚS. 233.2; अथान्भुतानि। - अनुदक उदकोन्मीले KauśiSū. 93.28; 121. 1; **2** very little water, dearth of water यथा ह्यनुदके मत्स्याः ···। विहरेयुः MahāBhā. xii. 68.11 ( BhārBhāDī. अल्पोदके ); नान्तरेणोदकं सस्यं नश्येदभ्युदकेन तु। य एवानुदके दोषः स एवाभ्युदके स्मृतः NāraSm. 167.19; Aparā. 766. 26 (*on* 2.157); SmṛtiCan. iv. 556. 3; (Gr.) **A** accompanied by a word other than the word *udaka* स्पृशोऽनुदकात् क्विन् CāndraVyā. i. 2. 48; स्पृशोऽनुदकात् क्विप् ŚākaṭāVyā. iv. 3.176; SiddhaHe. v. 1.149; **B** [Loc.] **i** when accompanied by a word other than the word *udaka* स्पृशोऽनुदके क्विन् P. iii. 2. 58; SaraKaṇṭhā.(Gr.) i. 4. 90; स्पृशोऽनुदके ( क्विप् ) Kātan. iv. 3.70; JaineVyā. ii. 2.56; स्पृशेर्धातोरनुदके सुबन्त उपपदे क्विन्प्रत्ययो भवति KāśiVṛ. *on* iii. 2.58; **B ii** not in the domain of water उदङ्कोऽनुदके P. iii. 3.123; Kātan. iv. 5. 100; उदङ्क इति निपात्यते, अनुदकविषयश्चेद्धात्वर्थो भवति KāśiVṛ. *on* iii. 3. 123.

**अनुदकखात** ( an-udakakhāta ) *adj.* not having a water-pond (व्रजति) प्रैषकृदग्रतः। अनावृतम्। अगोष्पदम्। अनुदकखातम् KauśiSū. 39. 24.

**अनुदकत्वादिमत्** ( an-udakatvādima(n)t ) *adj.* possessing the qualities of other than water etc. यद्यपि यज्ञदत्तशरीरमनुदकत्वादिमत् पृथिवीमात्रसमवायिकारणकं परेषां तथापि देवदत्तशरीरजनकत्वे सति अनुदकादिमज्जन्यं न भवति VedāntKa. 345.9 (*on* iii. 1. 1); 345.12 (*on* iii. 1.1)

**अनुदकप्राप्त** (anudaka-prāpta) *adj.* in which water has not accumulated अचिरोत्पन्नमनुपद्रवमनुदकमप्राप्त( v. l. अनुदकप्राप्त comm. )मुदरं त्वरमाणश्चिकित्सेत् CaraS. vi. 13. 48 (1941 Ed.) ( comm. अनुदकप्राप्तमिति अजातोदकरूपदोषावस्थम् )

**अनुदकम्** (anudakam) *adv.* **i** without (touching) water सोमानमित्यनुदकं व्रतोपायनवत् KātyŚS. iv. 12.10 ( comm. व्रतोपायनवत् इत्यनेन अपरेणाहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाण इत्येतावदतिदिश्यते। तत्र चाप उपस्पृश्येत्येतदपि प्राप्नोति तन्निषेधत्यनुदकमिति ); **ii** without (adding) water ऋजीषमिश्रमंशुमभिषुन्वन्ति यथा कथा चानुदकम् KātyŚS. x. 3.12

**अनुदकमूत्रपुरीषकरण** ( anudaka-mūtrapurīṣakaraṇa ) *n.* discharging of urine and excretion without (using) water अनुदकमूत्रपुरीषकरणे सचैलं स्नानं महाव्याहृतिहोमश्च ViṣṇuSm. 54.10; LaŚātāSm. 13; अनुदकमूत्रपुरीषकरणे इत्येतच्चिरकालमूत्रपुरीषाशौचाकरणपरम् Mitā. 353.4 (*on* 3. 30); अनुदकमूत्रपुरीषकरणे शौचकालविलम्ब इत्यर्थः Aparā. 924.20 (*on* 3.29); अनुदकमूत्रपुरीषकरणे किंचिद्विलम्बेनोदकसंस्पर्शनादित्यर्थः DīpKa. 104.18 (*on* 3.288)

**अनुदकविषय** ( an-udakaviṣaya ) *adj.* not having reference to water अनुदकविषयश्चेद् धात्वर्थो भवति KāśiVṛ. *on* iii. 3. 123.

**अनुदकादिमज्जन्य** ( anudakādimaj-janya ) *adj.* to be produced by what possesses other than the water etc. यज्ञदत्तशरीरम् ··· अनुदकादिमज्जन्यं न भवति VedāntKa. 345.10 (*on* iii. 1.1)

**अनुदकार्थ** ( an-udakārtha ) *adj.* who does not require water तीर्थमुच्यते येन मार्गेण नदीतडागादिभ्यो जलमानेतुमवतरन्ति। स हि विजनप्रायो भवति। नानुदकार्थेन तत्र संनिधीयते ManuBh. ii. 219. 22 (*on* 8.356)

**अनुदकार्थिन्** ( an-udakārthin ) *adj.* who does not require water अनुदकार्थिनश्चोदकज्ञानमप्रमाणमसंवादात् TātpaṬ.(U.) 65. 8 (*on* 2.76)

**अनुदकाहरण** ( an-udakāharaṇa ) *n.* non-bringing of water अनुदकाहरणे ( घटज्ञानस्य ) दर्शनादपि तदुत्पन्नता कथमवगम्यते TātpaṬ.(U.) 65.13 (*on* 2.76)

**अनुदकोपस्नेहा** ( an-udakopasnehā ) *adj.* (*f.*) free from water and dampness चतुरश्रां वापीमनुदकोपस्नेहां खानयित्वा ··· भूमिगृहं कारयेत् ArthŚā. i. 132.3 (2. 5)

**अनुदक्प्रवण** ( an-udakpravaṇa ) *adj.* not sloping towards the north विच्छिन्नं देवयजनम् ··· यदनुदक्प्रवणम् GopBr. i. 2.11 (44.8)

**अनुदक्या** (an-udakyā) *f.* [P. iv. 3.54] other than *udakyā* (*udakyā* is a woman in menstruation requiring water for purification) अस्वतन्त्रा स्त्री पुरुषप्रधाना। अनग्निकानुदक्या वामृतमिति विज्ञायते VāsiDS. 5.1; गोविन्दपद्येव पुरोऽस्ति वर्णासैषानुदक्येव सरिन्निषेव्या DvyāśraKā. 16.65.

**अनुदक्ष्** ( anu-dakṣ- ) II. P. to be able, to be ready त्वं वि भास्यनु दक्षि दावने ṚV. ii. 1.10 (*but* Padapāṭha *ánu dhakṣi* from *anu-dah-*); ṚPrāti. 4.41.

**अनुदक्षिणम्** ( anudakṣiṇam ) *adv.* towards the right नास्पृष्ट्वा रत्नाज्यपूज्यमङ्गलसुमनसोऽभिनिष्क्रामेत्, न पूज्यमङ्गलान्यपसव्यं गच्छेन्नेतराण्यनुदक्षिणम् CaraS. i. 8. 19; AṣṭāSaṁ. i. 9. 16 (1. 3)

**अनुदक्षिणसागरम्** ( anudakṣiṇasāgaram ) *adv.* along the southern ocean पाण्ड्यदेशोऽयमनुदक्षिणसागरम् BṛKathāŚloSaṁ. 18. 352.

**अनुदक्स्था** ( an-udaksthā ) *adj.* (*f.*) not occupying the north (i. e. southern) एवं हि लम्बाभ्यधिकानुदक्स्था क्रान्तिश्च तावत्स कुजादधःस्थः SiddhāTaVi. 163.20.

**अनुदग्गोल** ( anudag-gola ) *m.* southern hemisphere (*lit.* not the northern hemisphere) वैदेशाः शरद्धचराढ्यरहिताः सौम्यानुदग्गोलयोर्हारः GrahaLā. 4. 8.

**अनुदग्ध** ( anu-dagdha ) *m.* blazing fire अग्नावहुत्वा नाश्नीयान्न च कुर्वीत पादयोः। नानुदग्धमनुक्रोशेत्तमेव शरणं व्रजेत् ParaS. 13. 32.

**अनुदग्र** ( an-udagra ) *adj.* not sharp, mild वाग्मी प्रगल्भः ··· अनुदग्रः ···। नेता दण्डस्य निपुणः AgniP. 238.6 [not lofty, low; MW., APTE, not projecting, MW.]

**अनुदञ्च्** ( an-udañc ) *m.* [P. vi. 4.139] not of the northerners अमहन्नवं नगरेऽनुदीचाम् P. vi. 2. 89; *adj.* not northern, southern द्युमानखगुणान्तरं शिवगुणं दिनेऽल्पेऽधिके। ह्यपागुदगथानुदग्भवति यन्त्रभागापमः GrahaLā. 4.23 ( comm. अनुदक् दक्षिणदिक् )

**अनुदण्ड** (anu-daṇḍa) *m.* ? back-bone योधाश्च भद्रकाराश्च शरदण्डानुदण्डजाः।··· दण्डकेतुमुदावहन् MahāBhā. vii. 22. 58.

**अनुदण्डम्** ( anudaṇḍam ) *adv.* on each and every staff दण्डी पुमानिति विशेषणमत्र दण्डः पुंसो न जातिरनुदण्डमसौ च तस्येति ··· संबन्ध एव साक्षात्संबन्धः TattvCin. i. 829.4.

**अनुदण्डि** ( anu-daṇḍi ) *f.* back-bone योधाश्च भद्रकाराश्च शरदण्डानुदण्डजाः ( v.l. दण्डयः )।··· दण्डकेतुमुदावहन् MahāBhā. vii. 22.58 ( BhārBhāDī. शरदण्डः शरप्रकाण्ड इव अनुदण्डिः पृष्ठवंशो येषाम् )

**अनुदत्त** (anu-datta) Gr. [*ppp.* in the sense of commencement of an action, used both actively and passively, where *anu* is not a pre-verb but an indeclinable, P. iii. 4.71] **i** it has commenced the act of giving अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तमिति चेष्यते MahāBh. iii. 350. 14 (*on* vii. 4. 46); KāśiVṛ. *on* i. 4.57; SiddhaHe. iv. 4. 8; PrakriKau. ii. 571.5; SiddhāKau. 507B.8 (*on* vii. 4.47); **ii** the act of giving has been commenced by, MahāBh. iii. 350. 14 (*on* vii. 4. 46); KāśiVṛ. *on* i. 4.57; PrakriKau. ii. 571. 5; SiddhāKau. 507B. 8 (*on* vii. 4.47) [granted, given back, MW.]

**अनुदत्तहोम** ( anudatta-homa ) *m.* offering which has been commenced जजाप ··· क्षितीशः। सुदत्तचित्खे विदवत्तमन्त्रैरनूत्तपुष्पैरनुदत्तहोमैः DvyāśraKā. 10.13.

**अनुदध्यमान** ( anu-dadhyamāna ) *adj.* being presented, given in a timely manner बोधिसत्त्वः परेषामन्तिकात् ··· धनजातानि विचित्राणि प्रभूतानि प्रवराणि लभमानोऽनुदध्यमानः BodhiBhū. 111. 18 [DBHS.]

**अनुदनिपात** (anuda-nipāta) *m.* gravely accented particle अन्तर्मध्यमयोर्नाम्युदमनुदनिपाते NāraŚi. ii. 7.6.

**अनुदन्त** ( anudanta ) *m.* **1** ? technical term in architecture ( सुरसुन्दरे प्रासादे) सिंहकर्णः षड्डुच्छायो भद्रे स्यात् प्लवविस्तृतिः। द्वितीय( श्चानुदन्तश्चा ? ) ( ? श्च ) शोभितश्चारुकर्मणा SamarāSū. ii. 57.4(57); **2** name of a sage आकृतिगणोऽयम्। तेन कुदन्तानुदन्तशतकृतप्रभृतयो द्रष्टव्याः GaṇRa. 3. 223(266)

**अनुदपान** ( an-udapāna ) *n.* denial of drinking of water यस्तु परवित्तापत्यकलत्राण्यपहरति सः ··· तामिस्रे नरके बलान्निपात्यते अनशनानुदपानदण्डताडनसंतर्जनादिभिर्यातनाभिर्यात्यमानः BhāgP. v. 26.8.

**अनुदय** ( an-udaya ) *m.* **1A** non-rising यथा ह्यनुदये राजन् भूतानि शशिसूर्ययोः। अन्धे तमसि मज्जेयुः MahāBhā. xii. 68. 10; पतिव्रताया माहात्म्यान्नोद्गच्छति दिवाकरः। तस्य चानुदयाद्धानिर्मर्त्यानाम् MārkP. 16. 48; उपैत्य-

P. vii. 1.25; MahāBh. iii. 48.23 (*on* vi. 1.69); ङित्त्वाभावेऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितम् LaŚabdeŚe. i. 299.22.

**अनुनासिक्य** (anunāsik-ya) *adj.* produced in the nose, nasal कण्ठादुत्तिष्ठते षड्जः शिरसस्त्वृषभः स्मृतः। गान्धारस्त्वनुनासिक्य उरसो मध्यमः स्वरः NāraŚi. i. 5.5 (comm. मुखेनानुगता नासिका अनुनासिकायां भवः); ङञणनमा अनुनासिक्याः Ind. St. 4.122.

**अनुनिक्रम्** (anu-nikram-) I. P. **Ai** to walk in the footsteps of, to follow षट् पुदान्यनु नि क्रामति षड्हं वाङ् नाति वदति TaiS. VI. i. 8.1; दक्षिणेन पदा दक्षिणानि पदान्यनुनिक्रामति KāṭhS. 24.4 (ii. 92.16); ŚatBr. III. iii. 1.1; BaudhŚS. iii. 89.12; षट् पदान्यनुनिक्रामति दक्षिणेन पदा ĀpaŚS. x. 22.11; HirŚS. vii. 2.24 (626.27); VaikhāŚS. 12.16; **Aii** to follow (in speech) स यो नो वाचं व्याहृतां मिथुनेन नानुनिक्रामात् स सर्वं पराजयातै ŚatBr. I. v. 4.6; गृहपतिमेवाध्वर्युरुच्चैः कृष्णाजिने वाचयति तदेवेतरेऽनुनिक्रामन्ति BaudhŚS. ii. 246.12; **B** to step along (the quarters) दिशोऽनुनिक्रामति मनसा MānŚS. 187.22.

**अनुनिक्रमण** (anu-nikramaṇa) *n.* walking behind सोमक्रयण्यै पदस्यानुनिक्रमण इति BaudhŚS. iii. 89.11; cf. **अनुनिष्क्रमण.**

**अनुनिक्रान्ततर** (anunikrānta-tara) *adj.* better followed (in tradition) यावत्पार्ष्णिग्यै श्वेतमित्येकेषामेतदेव सदन्येषामनुनिक्रान्ततरं भवति BaudhŚS. iii. 209.10.

**अनुनिक्ष्** (anu-nikṣ-) I. P. to pierce, to stab along याः पार्श्वे उपर्षन्त्यनुनिक्षन्ति पृष्टीः … निर्द्रवन्तु बहिर्बिलम् AV. ix. 8.15; AV.(P.) xvi. 75.5.

**अनुनिक्षिप्तचक्षुस्** (anunikṣipta-cakṣus) *adj.* who has cast a glance towards (the sound) तद्ध्वनेरनुनिक्षिप्तचक्षुः क्षितिपतिः पुरः। … युवानमेकम् … ऐक्षत PāṇḍaC. 1.88.

**अनुनिगद्** (anu-nigad-) I. P. to recite afterwards ब्रह्म क्षत्रमित्यनुनिगदति MānŚS. 135.18; 213.11; VārāŚS. III. iii. 1.19.

**अनुनिघ्नत्** (anu-nighnat) *adj.* striking continuously यदि घ्नन्ति ततः संप्रेष्यत्यपिधाय मुखं दक्षिणापदीं प्रत्यक्शिरसीं घ्नतेति निहन्यमानायाः सव्यानि जानून्यनुनिघ्नन्तः पांसूनवमृजन्ते HirPiMe. i. 1.5.

**अनुनितुद्** (anu-nitud-) VI. P. to push afterwards, i.e. to repeat (in chanting) यत्र वै देवा इन्द्रियं वीर्यं रसमपश्यंस्तदनुन्यतुदन् PañcBr. xiii. 7.10; xv. 1.6.

**अनुनिधा** (anu-nidhā-) III. P. (*caus.*) to cause to deposit or fix in तत् … स्थालीषु वा सतेषु वानुनिधापयेत् BaudhŚS. iii. 121.10; कर्णवेधे …। स्नेहाक्तं सूच्यनुस्यूतं सूत्रं वानुनिधापयेत्।… कर्णे ViṣṇuDhaP. ii. 52.82.

**अनुनिधानम्** (anunidhānam) *adv.* after putting down एकैकं वानुनिधानमुभयतः परिषिञ्चेत् GobhiGS. i. 4.7 (*but* comm. निधानमनु लक्ष्यीकृत्य)

**अनुनिधाय** (anu-nidhāya) *ger.* having preserved afterwards यजमान एवैतमर्धमासमनुनिधाय सांनाय्यं भक्षयेत् BaudhŚS. iii. 177.11.

**अनुनिधायम्** (anunidhāyam) *absolutive* having kept back or aside एतेनैवास्यै मन्त्रेणावदानानां प्राश्याथेतरदप्स्वनुप्रहरेदिति बौधायनोऽनुनिधायमेनामद्यादित्याञ्जीगविः BaudhŚS. ii. 180.8.

**अनुनिनर्द्** (anu-ninard-) I. P. to follow or imitate the prolated (kind of) chanting नाना प्रस्तावो नाना निधने हिंकारोऽन्तरेण। तस्मान्नेतर इतरमनुनिनर्दति …। एतेन हि तद् विहृतम् JaimiBr. 1.254.

**अनुनिनी** (anu-ninī-) I. P. **i** to pour afterwards गार्हपत्यस्यैवोष्णं भस्म निरुह्य तस्मिन्नेनत्तूष्णीं निनयेत्।… अद्भिरनुनिनयेत्। अद्भिरेवैनदाप्नोति JaimiBr. 1.55; **ii** to pour or apply along समस्तेनैवास्य मन्त्रेण पदपांसून् हृत्वोत्तरवर्ग्ये आवपेदथ तूष्णीमुरस्यनुनिनयेत् BaudhŚS. iii. 152.2.

**अनुनिनीषा** (anu-ninīṣā) *f.* **i** desire to persuade न्यपतदनुनिनीषयैव भास्वानरुणदलाङ्गुलिपादपद्ममूले HarVi. 28.68; **ii** desire to please आर्षभिः पर्यणैषीत्ताः पित्रोरनुनिनीषया PariPar. 2.154.

**अनुनिनीषु** (anu-ninīṣu) *adj.* desirous of propitiating तम् … क्षितीन्द्रोऽनुनिनीषुरूचे Bhaṭṭi. 2.51.

**अनुनिनेतवै** (ánu-nínetavaí) *inf.* for pouring down अथ यदि पृषदाज्यं स्कन्देत्तदद्भिरनुनिनेतवै ब्रूयात् ŚatBr.(K.) V. vii. 4.9.

**अनुनिपत्** (anu-nipat-) I. P. (*caus.*) to make to lie down उपांशुसवनमादाय … एनम् … पवित्रेण वा पाणिनैव प्रध्वंस्यानुनिपातयति ŚatBr.(K.) V. i 1.22.

**अनुनिपतत्** (anu-nipatat) *adj.* falling or rushing towards मुखमनुनिपतन्तं वारयन्ती द्विरेफम् … इयं करेण। तमपि तदभिभूतम् … धुनीते CaitaCan. 76.7(3)

**अनुनिपद्** (anu-nipad-) IV. Ā. to lie down along इन्द्रः … (महावीरम्) तमन्वङ्ङनुन्यपद्यत ŚatBr. XIV. i. 1.12; उदपात्रं चर्मणि निदधाति।… सा पत्यावनुनिपद्यते KauśiSū. 60.35.

**अनुनिभञ्जन** (anu-nibháñjana, anu-níbhañjana) *n.* subsequent destruction आ मिनोति नि भज्यते। तस्या अनुनिभञ्जनम्। वरुणो याति वस्वभिः ṚV.(Khila.) v. 15.11; आमिनोनिति भद्यते। तस्य अनु निभञ्जनम् AV. xx. 131.2.

**अनुनियमनशील** (anuniyamana-śīla) *adj.* habitually observing restraint in accordance (with prescribed rules) अनुनियमनशीलो यो भजत्युक्तकाले स लभत इह शीघ्रं साधु चित्तप्रसादम् SarvaVeSāSam. 372.

**अनुनियान** (anu-niyāna) *adj.* following or going after, dependent तद् ब्रध्नस्य विष्टपं गच्छन्ति, तत् स्वाराज्यं गच्छन्ति, तदन्यस्याननुनियाना भवन्ति JaimiBr. 2.353.

**अनुनियुक्ता** (anu-niyuktā) *adj.* (*f.*) put up to, assigned to परिव्ययार्थकर्शितया मात्रैवानुनियुक्ता भविष्यति PādaTā. 33.13.

**अनुनियुज्** (anu-niyuj-) VII. P. to harness, to make subordinate to or dependent क्षत्रं वा इन्द्रो विण्मरुतः क्षत्रायैव विशमनुनियुनक्ति KāṭhS. 10.11 (i. 139.1); 29.9 (ii. 178.16); KapiKaS. 46.3 (277.7); ब्रह्मण्येव तत्क्षत्रमनुनियुनक्ति AitBr. 10.1(258); मरुतो वै देवानां विशो विशमेवास्मा अनुनियुनक्ति PañcBr. vi. 10.10; xix. 16.6; एवमेवैतत् पूर्वेषु स्तोत्रेषु षोडशिनमनुनियु[न]क्त्यनिर्मार्गाय JaimiBr. 1.201; स यथा प्रष्टिं प्रष्टियुगाय नियुज्यादेवमेवैतत् पूर्वस्मिंस्त्रियह उत्तरं त्र्यहम् अनुनियुनक्ति JaimiBr. 3.59.

**अनुनिरीक्षित** (anu-nirīkṣita) *adj.* looked at subsequently अव्रतः … शुना दष्टो भवेद् द्विजः। प्रणिपत्य भवेत्पूतो विप्रैश्चक्षुर्निरीक्षितः (v. l. विप्रैश्चानुनिरीक्षितः) ParāSm. 5.5.

**अनुनिरुप्य** (anu-nirupya) *adj.* [P. iii. 1.126] to be allocated and offered successively संवत्सरेऽनुनिरुप्यं संवत्सरेणैवैनं शमयति KāṭhS. 8.8 (i. 92.12); हवींषि …। संवत्सरेऽनुनिरुप्याणि KapiKaS. 7.3 (74.13)

**अनुनिर्गत** (anu-nirgata) *adj.* who has departed after (someone) लक्ष्मणश्चापि धन्योऽसौ यो राममनुनिर्गतः Rāmā. ii. App. I. 23(82) (better *adn.*)

**अनुनिर्जिहान** ('anu-nirjihāna) *adj.* proceeding out or issuing forth स सत्त्वमेवं परितोऽपि पश्यन्स्तम्भस्य मध्यादनु निर्जिहानम् BhāgP. vii. 8.19.

**अनुनिर्दह्** (anu-nirdah-) I. P. to burn down in succession तेषां पन्नानामधमा तमांस्यग्ने वास्तून्यनुनिर्दह त्वम् AV. ix. 2.9; AV.(P.) xvi. 76.8.

**अनुनिर्दिश्** (anu-nirdiś-) VI. P. to indicate, to refer to यत्किं चकर्थ कस्तच्चचारेतीति ह परोक्षाव्रतमनुनिर्दिदेश BaudhŚS. ii. 374.18.

**अनुनिर्देश** (anu-nirdeśa) *m.* **i** reference (given) in sequence (i.e. in the same order as before) भूयसामुपदिष्टानामर्थानामसधर्मणाम्। क्रमशो योऽनुनिर्देशो यथासंख्यं तदुच्यते Kāvyālaṅ.(Bh.) 2.89; KāvyālaṅSāSaṁ. 3.2; Ekāva. 8.50 (304.5); **ii** a subsequent mention उद्दिष्टस्य प्रतिपक्षतयानुनिर्देशो वैधर्म्यम् AlaṅkāRa. 25.

**अनुनिर्द्रु** (anu-nirdru-) I. P. to run away पराचीमनु संवतं पराच्यनु[निर्]द्रव AV.(P.) xv. 23.8.

**अनुनिर्मिता** (anu-nirmitā) *adj.* (*f.*) built or constructed afterwards पुष्पमण्डपिकां नागप्रतिमामनुनिर्मिताम्। विलोक्य…अवदद् नृपपुंगवः MalliC. 5.8.

**अनुनिर्वप्** (anu-nirvap-) I. P. to allocate and offer (an oblation) afterwards (i.e. subsequently or additionally) आग्निवारुणमेकादशकपालमनुनिर्वपेत् TaiS. I. v. 2.5; II. iii. 12.2; एताम्। इष्टिमपश्यन् … तां पौर्णमासं संस्थाप्यानुनिरवपन् TaiS. II. v. 4.2; BaudhŚS. ii. 328.6; अग्नीषोमीयं पुरोडाशं द्वितीयमनुनिर्वपेत् MaiS. i. 6.8 (i. 99.12); यदग्नोऽनुनिर्वपेद् रुद्राय पशूनपिदध्यात् KāṭhS. 8.8 (i. 92.11); 8.10 (i. 94.2); KapiKaS. 7.3 (74.12); तं प्रजापतये भागमनुनिरवपन् KapiKaS. 8.1 (80.13); GopBr. ii.1.7 (149.7); तद्यत् पशौ पुरोळाशमनुनिर्वपन्ति AitBr. 6.8 (177); 7.1 (189); योऽग्निमाधत्ते। ऐन्द्राग्नमेकादशकपालमनुनिर्वपेत् TaiBr. I. i. 6.5; यद्देवत्यः पशुर्भवति। तद्देवत्यं पुरोडाशमनुनिर्वपति ŚatBr. III. viii. 3.1; XI. i. 3.1; यद्यनूबन्ध्ये पशुपुरोडाशमनु देविकाहवींषि निर्वपेयुः ĀśvaŚS. I. vi. 14.15; आग्निवारुणमेकादशकपालमनुनिर्वपति BaudhŚS. i. 171.6; VaikhāŚS. 1.20; पौष्णं चरुमनुनिर्वपेत् BaudhŚS. ii. 120.16; इन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति BhārŚS. iii. 13.5; v. 14.3; v. 21.7; संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति ĀpaŚS. iii. 15.1; v. 22.6;

viii. 19.6; xviii. 12.4; दशहविषं मृगारेष्टिमनुनिर्वपति ĀpaŚS. xx. 23.2; xxii. 8.4; अध्वर्युः …। व्रीहीणां पुरोडाशमनुनिर्वपति MānŚS. 55.10; 77.9; 158.4; हवींष्यनुनिर्वपति VārāŚS. II. ii. 4.24; पशुपुरोडाशं निरू(रु)प्य दैविकानि हवींष्यनुनिर्वपति HirŚS. ix. 6.16 (952.27); ऐन्द्राग्नमेकादशकपालमनुनिर्वपति VaikhāŚS. 1.16; 4.5; शरं कद्विन्दुकोष्ठैरनुनिर्वपति KauśiSū. 48.30; सा तदपवर्गे क्रियेत यथा संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीति SaṅkarKā. i. 1.16 (AOR Ed.); (pass.) to be allocated and offered afterwards अथ वै पशुमालभ्यमानं पुरोडाशो निरुप्यते (v.l. °शोऽनुनिरुप्यते) KauṣīBr. 10.5 (47.24); पशुं पुरोडाशोऽनुनिरुप्यते ŚatBr. III. viii. 3.2.

**अनुनिर्वपण** (anu-nirvapaṇa) *n.* allocation and offering subsequently वैमृधस्यानुनिर्वपण इति। सूत्रं बौधायनस्य BaudhŚS. iii. 176.1.

**अनुनिर्वर्तनीयत्व** (anunirvartanīya-tva) *n.* the state of being fit to be performed subsequently सोमस्याग्ने वीहीत्यनेन प्रधानम(? प्रधाना)नुनिर्वर्तनीयत्वमिति प्राप्ते ब्रूमः SaṅkarKāBh. 2.11 (*on* i. 1.1)

**अनुनिर्वा** (anu-nirvā-) II. P. to lose light or glow subsequently यतस्त्वदनुवर्ती खल्वयं त्वामेवास्तमयमानमन्वस्तमयिष्यते। निर्वाणं हि सवितारं तरणिमणिरप्यनुनिर्वाति AnargharRā. 4.46(7); निर्वाणमनुनिर्वाति तपनं तपनोपलः RājTa.(Ka.) 3.296 [to become extinct, go out after, MW.]

**अनुनिर्वाप** (anu-nirvāpa) *m.* subsequent libation (with clarified butter), APTE.

**अनुनिर्वाप्य** (anu-nirvāpyà, anu-nirvā́pya) *adj.* [*f.*-ā] (*iṣṭi* or oblation) to be taken out and offered subsequently or additionally स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत् … यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृध एव तेन यजमानोऽप हते TaiS. II. v. 3.1; BaudhŚS. ii. 327.15; TaiS. II. v. 4.1; आमावास्यं वा अनुनिर्वाप्यम् ŚatBr. XI. i. 3.5; ŚatBr.(K.) III. ii. 2.5; ŚatBr. XI. i. 3.7; अपोनप्त्रीयं चरुं तृतीयसवनीयानामनुनिर्वाप्यं कुर्युः BaudhŚS. iii. 301.11; सर्वेषां वानुनिर्वाप्याणाम्। संतिष्ठते पुनराधेयम् BhārŚS. v. 21.9; एतं वानुनिर्वाप्यं कुर्वीत। एतमैन्द्रियावतमेव वा वैमृधस्य स्थाने नित्यमनुनिर्वाप्यं कुर्वीत ĀpaŚS. iii. 15.9; आदित्यं घृते चरुम् … धेनुदक्षिणं सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनः समामनन्ति ĀpaŚS. v. 22.8; v. 29.9; आरम्भणीयानुनिर्वाप्या MānŚS. 115.10; अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः MīmāSū. xii. 3.3; अनुनिर्वाप्याणां बहुत्वात् ŚābaBh. 2257.2 (*on* xii. 3.3); अनुनिर्वाप्याणां स्वाधर्म्यं पुरोडाशस्य प्रसङ्गित्वं विपरीतं वेति ŚāstrDī. 869.19 (*on* xii. 3.2); स्वाधर्म्यमनुनिर्वाप्येष्वस्ति नो वा बहुत्वतः NyāyMāVi. 687.6 (*on* xii. 3.2); न चैवमनुनिर्वाप्ये देविकाहविर्वत् … प्रयोगबहिर्भावानापत्तिः BhāṭṭDī. ii. 134.22 (*on* iv.3 .11); iv. 260.8 (*on* xii. 3.2); iv. 261.1 (*on* xii. 3.2); अनुनिर्वाप्याणां तन्त्रित्वम् MayūMāli. 869.20 (*on* xii. 3.2)

**अनुनिर्वाप्यतन्त्रित्व** (anunirvāpyatantri-tva) *n.* the state of having the (same) procedural technique as applied to the subsequent offering अनुनिर्वाप्यतन्त्रित्वे तु होतारं प्रत्येव … प्रैषापत्तेः BhāṭṭDī. iv. 261.15 (*on* xii. 3.2)

**अनुनिर्वाप्यधर्म** (anunirvāpya-dharma) *m.* nature (or procedure) of the offerings which are made subsequently अग्निचयने अग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपति अत्र किम् … एकादश प्रयाजत्वादयो ग्राह्या उत अनुनिर्वाप्यधर्माः UpaParā. 45.22.

**अनुनिर्वाप्या** (anunirvāpyā) *f.* name of an *Iṣṭi*-sacrifice (i.e. subsequent offering) अनुनिर्वाप्यया वै देवा असुरानपाघ्नत KauṣīBr. 4.1 (14.13)

**अनुनिर्वाप्याधिकरण** (anunirvāpyādhikaraṇa) *n.* name of a section dealing with the additional or subsequent offerings अनुनिर्वाप्याधिकरणे च … अनुनिर्वाप्यधर्मग्रहे प्राप्ते UpaParā. 45.20.

**अनुनिर्वृत्** (anu-nirvṛt-) I. Ā. to come into being subsequently तस्य वै मथ्यमानस्य …। अङ्गारोऽनुनिर्वर्तते JaimiBr. 1.1.

**अनुनिर्वेश** (anu-nirveśa) *m.* inner part of the shelter or abode मृत्युश्च किंकराश्चैव विष्णुदूतैः प्रपीडिताः। स्वराज्ञस्तेऽनुनिर्वेशं गत्वा ते चुक्रुशुर्भृशम् NaraP. 8.1.

**अनुनिवस्** (anu-nivas-) I. U. to dwell into afterwards अव्यक्तम् … देवगुणा भूतगुणा आत्मगुणाश्चेत्येतदनुपतन्ति। निवेश्यमानमनुनिवसन्ति Hastyāyur. 403.5 (3.7); भ्रमरमधुकरसंघाः पुष्पजं रजः प्रद्रवत्प्रद्रवन्ति निवसमान(?)मनुनिवसन्ते Hastyāyur. 403.7 (3.7)

**अनुनिविश्** (anu-niviś-) VI. Ā. [P. i. 3.17] **i** to settle down after (someone) मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनुनिविशन्ते YogBh. 117.4 (*on* 2.54); **ii** to enter into ज्ञानम् … प्रमाणं भवत्कस्मिन्ननुनिविशतामिति चिन्त्यम् NyāyMañ. i. 74.14.

**अनुनिविष्टा** (anu-niviṣṭā) *adj.* (*f.*) placed after भवति हि क्रियासंबन्धस्य वाचिका विभक्तिरेकहायनीशब्दमनुनिविष्टा न तु गुणसंबन्धस्य वाचिका ŚābaBh. 688.2 (*on* iii. 1.12)

**अनुनिवृज्** (anu-nivṛj-) VII. P. to plunge into (loc.), MW.; cf. **अनु 2** *adv.* **1A.**

**अनुनिवृत्** (anu-nivṛt-) I. Ā. (*caus.*) to bring back अभि त्वा शूर नोनुम इति रथन्तरस्य योनिमनुनिवर्तयति AitBr. 21.1(549); 21.4(565)

**अनुनिवेष्ट्** (anu-niveṣṭ-) I. Ā. to cover from behind तद्यत् पवमानसामानि पराञ्च्येव भवन्त्यथेयमनुनिवेष्टते। तेन देवा मनुष्येष्वाभक्ताः JaimiBr. 1.277.

**अनुनिशम्** (anu-niśam-) IV. P. to comprehend भिषक् पवनमतिबलमतिपरुषमतिशीघ्रकारिणमात्ययिकं चेन्नानुनिशम्येत् CaraS. i. 12.10 (1941 Ed.)

**अनुनिशम्** (anuniśam) *adv.* every night नरपतिः सर्वदाराननुक्रमात्। गच्छेदनुदिनं (v.l. अनुनिशम् ASS. Ed. No. 136) नित्यं वाजीकरणबृंहितः NītiSā. 7.56; इत्यनुनिशं निद्राति BhallaŚ. 94; तच्च विक्रीय सोऽभुङ्क्त मज्ज्येष्ठः सह वेश्यया। तथैवाहर्निशम् (v.l. वानुनिशम् BROCKHAUS Ed.) कोषममुष्णात्स च भूपतेः KathāSaSāg. vii. 9.28; अनुनिशम् … निजरुचिलवो दीयतामम्बुजेभ्यः RāghPāṇ. (Ka.) 2.17; अभजतानुनिशं शयितानि सः MadhuVi. 5.57; अद्यप्रभृत्यनुनिशं वचनान्मदीयादायात यूयमितरेतरविप्रयोगम् UnmaRā.(Vi.) 77.

**अनुनिशम्य** (anu-niśamya) *ger.* **1** having reflected upon or understood जनम् …। निपुणमनुनिशाम्य (v.l. °निशम्य) तत्त्वबुद्ध्या। व्रतमिदमाजगरं शुचिश्चरामि MahāBhā. xii. 172.28; सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते MahāBh. i. 333.16 (*on* i. 4.50); पवनमतिबलम् … च नानुनिशम्य सहसा … कथमग्रेऽभिसंरक्षितुमभिधास्यति CaraS. i. 12.10 (1922 Ed.); **2** having heard वचनमनुनिशम्य तस्य देवी भयमगमत्पुनरेव राममाता Rāmā. ii. 53.26; आत्रेयस्य भगवतो वचनमनुनिशम्य CaraS. i. 25.30; नृपतिरनुनिशम्य … मन्त्रिणां तद्वचांसि VarāṅgaC. 16.111; 20.26; रुदितमनुनिशम्य तत्र गोप्यः…। रुरुदुरनुपलभ्य नन्दसूनुम् BhāgP. x. 7.25.

**अनुनिशाम्य** (anu-niśāmya) *ger.* having reflected upon जनम् …। निपुणमनुनिशाम्य तत्त्वबुद्ध्या व्रतमिदमाजगरं शुचिश्चरामि MahāBhā. xii. 172.28.

**अनुनिशीथम्** (anuniśītham) *adv.* at midnight ज्वलतोऽनलादनुनिशीथमधिकरुचिः …। विजयी ददृशे समुन्नततरः स शैलतः Kirātā. 12.7.

**अनुनिश्चरा** (anu-niścarā) *adj.* (*f.*) coming forth successively एवं बहुप्रकारा संगीतिरवानुनिश्चरा गाथा। चोदेन्ति करुणामनसं अयं स कालो मा उपेक्षस्व LaliVi. 2.20 [DBHS.]

**अनुनिषद्** (anu-niṣad-) I. P., VI. P. to sit down near, to worship तदाहुः कां देवतां दीक्षमाणा अनुनिषीदन्ति कामनूत्तिष्ठन्ति JaimiBr. 2.23.

**अनुनिषिञ्चत्** (anu-niṣiñcat) *adj.* sprinkling over वाजिनः … असंस्थिता ह्येते सदसि प्रजायन्ते बर्हिरनुनिषिञ्चन् गृह्णाति KāṭhS. 36.4 (iii. 71.17)

**अनुनिष्क्रम्** (anu-niṣkram-) I. P. **Ai** to follow in the footsteps of षड्ढ पदान्यनुनिष्क्रामति MaiS. iii. 7.6 (iii. 82.17); KapiKaS. 37.5 (198.1); BaudhŚS. i. 169.15; MānŚS. 62.1; ŚābaBh. 1211.16 (*on* iv. 1.25); ŚāstrDī. 357.9 (*on* iv. 1.10); BhāṭṭDī. ii. 96.12 (*on* iv. 1.20); **Aii** to walk after मनाग् दक्षिणं पूर्वं पादं प्रहरति। सव्येनानुनिष्क्रामति ĀgniveGS. i. 6.3 (38.20); **B** to go or step towards एषा वै मनुष्याणां दिक्। स्वामेव तद्दिशमनुनिष्क्रामन्ति (पितरः) TaiBr. I. vi. 9.7; ब्रह्मणस्त्वा परस्पाया इत्यनुनिष्क्रामति MānŚS. 111.17; cf. **अनुनिक्रम्.**

**अनुनिष्क्रमण** (anu-niṣkramaṇa) *n.* act of following in the footsteps of अनुनिष्क्रमणं पदोपरि पदनिधानम् MayūMāli. 357.15 (*on* iv. 1.10)

**अनुनिष्क्रम्य** (anu-niṣkrámya) *ger.* having stepped or gone towards तस्मिन्ननुनिष्क्रम्याजुहोदेतर्हि खलु वा एषं सृज्यते यर्ह्याधीयते MaiS. i. 6.10 (i. 102.7)

**अनुनिष्पत्** (anu-niṣpat-) I. P. to follow in fleeing दुर्बलं तु न्यायवृत्तिमभियुक्तं प्रकृतयः परिगृह्णन्ति, अनुनिष्पतन्ति वा ArthŚā. ii. 263.3 (7.5)

**अनुनिष्पत्ति** (anu-niṣpatti) *f.* **i** concurrent production साधारणो वानुनिष्पत्तिस्तस्य साधारणत्वात् MīmāSū. xi. 3.9; **ii** subsequent production द्रव्यस्यानुनिष्पत्तौ संस्कारपरिलोप इति चेत् न, असति संस्काराभावात् SaṅkarKāBh. 219.18 (*on* iv. 4.14); तुल्यायामनुनिष्पत्तौ ज्ये द्रा घा इत्यसाधवः VākyaPa. 2.366; Pradī. iv. 401A.30 (*on* v. 3.84)

**अनुनिष्पद्** (anu-niṣpad-) IV. Ā. to come into being side by side स्वरुः … यूपप्रयुक्ते छेदने स्वयमनुनिष्पद्यते NyāyMāVi. 232.21 (*on* iv. 2.1)

**अनुनिष्पद्य** (anu-niṣpadya) *ger.* having reached subsequently आकाशमनुनिष्पद्य वायुमायान्त्यभोगिनः BṛĀraUBhVā. vi. 2.154.

**अनुनिष्पद्यमान** (anu-niṣpadyamāna) *adj.* being produced after-

wards ननु भक्षणे कृतेऽनुनिष्पद्यमानस्य तस्य (जरणस्य) पृथगनुष्ठेयत्वाभावात् न स्मारकमन्त्रापेक्षा MayūMāli. 223.11 (*on* iii. 2.9)

**अनुनिष्पन्न** (anu-niṣpanna) *adj.* **A** which has come into being side by side यूपं क्रियमाणमनुनिष्पन्नः शकलो ग्रहीतव्यः ŚābaBh. 1225.1 (*on* iv. 2.1); ŚāstrDī. 366.9 (*on* iv. 2.1); आद्यस्य यूपखण्डस्य स्वरुत्वाख्यविशेषणे। विहिते लाघवं तस्मादनुनिष्पन्न एव सः NyāyMāVi. 232.12 (*on* iv. 2.1); **B** produced subsequently अवयवानां त्वनुनिष्पन्नम् (संज्ञात्वम्) Pradī. iv. 401A.34 (*on* v. 3.84); यत्रनुनिष्पन्नस्य स्वयं कार्यानुपयोगिनोऽपि प्रतिपत्त्यर्हत्वम् TantrRa. 90.1; नानुनिष्पन्नस्यापि लोहितनिरसनादिवदियं प्रतिपत्तिः MīmāKau. iii(2). 208.11 (*on* ii. 2.17)

**अनुनिष्पन्नता** (anuniṣpanna-tā) *f.* the state of being what is produced side by side अत्र चौर्यरतेन…गमनरूपस्य प्रयत्नस्य प्रवृत्तस्यानुनिष्पन्नतया तमोहरणरूपं कार्यान्तरमपि संभाविताद्भवति AlaṅkāRa. 63(26); अनुनिष्पन्नतया यत्र फलान्तरमुत्पद्यते तत्र विशेषः AlaṅkāRa. 87(5)

**अनुनिष्पन्नत्व** (anuniṣpanna-tva) *n.* **i** the state of being what is produced successively आधानवाक्ये … अग्नीनामनुनिष्पन्नत्वेन अप्रयुक्तत्वेन नोद्देश्यत्वविघातः MīmāKau. i. 225.12 (*on* i. 4.8); **ii** the state of being what is produced side by side न ह्येषां मध्ये एकस्यैव तात्पर्यविषयता नान्येषाम्, अनुनिष्पन्नत्वादिति वाच्यम् MīmāKau. iii(1). 91.9 (*on* i. 2.44); (दध्यानयनस्य) तस्यानुनिष्पन्नत्वात्तद्यागस्य … न तत्प्रयोजकत्वं वाजिनस्य कल्पनीयम् BhāṭṭDī. ii. 95.19 (*on* iv. 1.9); ii. 99.7 (*on* iv. 1.12)

**अनुनिष्पन्नत्वाभाव** (anuniṣpannatvābhāva) *m.* **A** absence of the state of being what is produced side by side आमिक्षाप्रयुक्तदध्यानयनानुनिष्पन्नत्वाद्वाजिनस्य न दध्यानयनप्रयोजकतेति हि तन्न्यायः।… वाजिनवदवघातस्यानुनिष्पन्नत्वाभावात् MīmāKau. iii(2). 68.16 (*on* ii. 1.9); **B** absence of the state of being what results subsequently नानुनिष्पन्नस्यापि लोहितनिरसनादिवदियं प्रतिपत्तिः, पशोरिव साधनत्वेन हृदयादीनामनुनिष्पन्नत्वाभावात् MīmāKau. iii(2). 208.12 (*on* ii. 2.17)

**अनुनिष्पन्नपक्ष** (anuniṣpanna-pakṣa) *m.* view regarding concurrent production नान्यस्य वृक्षस्य स्वरुं कुर्यादित्यनुनिष्पन्नपक्षे वृक्षान्तराशङ्कापि नास्ति ṬupṬ. 20.1 (*on* iv. 2.2)

**अनुनिष्पन्नप्रतिपत्ति** (anuniṣpanna-pratipatti) *f.* concluding rite, i. e. disposal of what is produced concurrently द्व्यवदानस्यैव यागसाधनत्वादवशिष्टस्यानुनिष्पन्नप्रतिपत्तिश्शेषकार्याणीति भाष्यकारः BhāṭṭDī. i. 346.10 (*on* iii. 4.18); ii. 95.19 (*on* iv. 1.9)

**अनुनिष्पादकत्व** (anuniṣpādaka-tva) *n.* the state of being that which gives rise concurrently शाखान्तरे तासां (स्त्रीणाम्) मन्त्रविधानाद्विनिगमनाविरहेण च पतित्वस्यैव भार्यात्वानुनिष्पादकत्वे प्रमाणाभावादुभयथाविधिदर्शनाच्चोभयमपि उद्वाहभाव्यम् VīraMi.(Saṁskāra.) 585.1.

**अनुनिष्पादन** (anu-niṣpādana) *n.* act of producing or performing afterwards दुक्तं खलूपवेषस्यानुनिष्पादने नियमः सांनाय्यपक्षे स्यात् SaṅkarKāBh. 150.19 (*on* iii. 2.71); सोमाङ्गभूतमहावेद्यैवैष्टिकहविरासादनादिकार्यस्य पृथगनुष्ठेयस्याप्यनुनिष्पादनात्तदङ्गभूतदार्शपूर्णमासिकवेदिनिवृत्तिः द्वादशे वक्ष्यते MīmāKau. iii(1). 84.12 (*on* ii. 1.12)

**अनुनिष्पादनीय** (anu-niṣpādanīya) *adj.* to be produced afterwards अतश्चायमौपाधिकोऽप्यपूर्वभेदोऽनुनिष्पादनीय इति भेदलक्षणे विचारितः CaturCin. iii(2). 596.1.

**अनुनिष्पादिकल्प** (anuniṣpādi-kalpa) *m.* procedure of coming into existence afterwards अनुनिष्पादिकल्पेन येऽन्तराल इव स्थिताः। शब्दास्ते प्रतिपत्तॄणामुपायाः प्रतिपत्तये VākyaPa. 3(9).67.

**अनुनिष्पादित** (anu-niṣpādita) *adj.* produced concurrently (आसनस्य) तस्यैवानुनिष्पादितं फलमाह ततो द्वन्द्वानभिघातः RājMār. 39.17.

**अनुनिष्पादितता** (anuniṣpādita-tā) *f.* the state of being produced simultaneously भक्षमन्त्रे तृप्तेरनुनिष्पादिततयाननुष्ठेयत्वेन…अवेक्षणस्यानुष्ठेयत्वात् Nyāyāmṛ. 624B.12.

**अनुनिष्पादितत्व** (anuniṣpādita-tva) *n.* **i** the state of being produced subsequently अनुनिष्पादिकल्पेन(v.l. °तत्वेन) येऽन्तराल इव स्थिताः। शब्दास्ते प्रतिपत्तॄणामुपायाः प्रतिपत्तये VākyaPa. 3(9).67; **ii** the state of being produced concurrently अद्वैतार्थत्वे वैदिकानां कर्मणां विद्यासहितानां अन्यस्यानुनिष्पादितत्वे प्रमाणानुपपत्तिः BṛĀraUBh. 373.1 (*on* iii. 2.1); भावनाधेयवैशद्यम् … तस्योपासनाविधानादेव वाजिनवदनुनिष्पादितत्वात् Bhām. 85.7 (*on* i. 1.4); आग्नीध्रसदोहविर्धानानां क्रत्वैकान्तिकत्वात्तत्स्वरूपान्वयमात्रविधानेऽप्यनुनिष्पादितत्वेन … अनर्थकश्चोपदेशः स्यात् NyāySu.(So.) 1131.7 (*on* iii. 2.21(? 22))

**अनुनिष्पादितपदार्थस्वभाव** (anuniṣpāditapadārtha-svabhāva) *adj.* of the nature of word-referent which is produced concurrently अनुनिष्पादितपदार्थस्वभावः संसारः BṛĀraUBh. 372.16 (*on* iii. 2.1)

**अनुनिष्पादितरसान्तरनिष्ठ** (anuniṣpāditarasāntara-niṣṭha) *adj.* pertaining to another sentiment which is produced simultaneously यत्रापि प्रहसनादौ हास्यादेः प्रधानता तत्राप्यनुनिष्पादि( v. l. °दित )रसान्तरनिष्ठ एवास्वादभिन्नादिकार्थम् AbhinBhā. i. 339.16 (*on* 6.83)

**अनुनिष्पादिता** (anuniṣpādi-tā) *f.* the state of coming into being simultaneously 'भक्षेही'ति भक्षमन्त्रेषु तृप्तेरनुनिष्पादितयाननुष्ठेयत्वेन … अवेक्षणस्यानुष्ठेयत्वात् AdvaiSi. 872.14; 'ब्रह्मविदाप्नोति परम्' इत्यादिषु अनुनिष्पादितया व्यवहारो न प्रयोजनम् ŚivārkaMaDī. i. 102.18 (*on* i. 1.2)

**अनुनिष्पादित्व** (anuniṣpādi-tva) *n.* the state of coming into being simultaneously (वाजिनेज्यादि तुल्यं च नाप्रयोजकलक्षणम्) न च वाजिनादिवदवहन्तेरनुनिष्पादित्वम् TantrVā. 385.4 (*on* ii. 1.8); फलानामपि … संकरो दृश्यते। किं तु केषुचित्किंचित्फलमन्यलभ्यत्वेऽप्यनुनिष्पादित्वात् … फलत्वेन न व्यपदिश्यते VidhiRa. 10 (49.1); LaCandr. 873.29; न हि पश्चान्निष्पादित्वम् अनुनिष्पादित्वम् किंतु परनिष्पत्त्यर्थयत्नेनैव स्वार्थयत्नं विना निष्पद्यमानत्वम् MayūMāli. 357.12 (*on* iv. 1.9)

**अनुनिष्पादिन्** (anuniṣpād-in) *adj.* [*f.* -ī] **i** which comes into being or is produced subsequently क्रिया विना प्रयोगेण न दृष्टा शब्दचोदिता। प्रयोगस्त्वनुनिष्पादी शब्दार्थ इति मन्यते VākyaPa. 2.126; 2.123; 2.364; त्रिभुवनसुकृतमयानां च पार्थिवानामुत्पत्तौ नातिचित्रीयते नानुनिष्पादिनामुपकरणानां सामग्री AvantiKa. 165.13; यद्यनुष्ठानकाले दृष्टमप्यनुनिष्पादि भवति केन तन्निवार्यते TantrVā. 516.13 (*on* ii. 2.19); 800.20 (*on* iii. 2.27); द्वयोः समानीयमानयोरितरेतरयोगोऽनुनिष्पादी भवति ṬupṬ. 95.12 (*on* vi. 1.22); 237.17 (*on* x. 2.17); न पुनः फलान्तरोत्पत्तिः इति प्रमाणमस्ति। फलान्तरस्यापि अनुनिष्पादिनः संभवात् BrahmSūBh.(Śaṅ.) 838.14 (*on* iv. 3.14); अकामानामेव लीलामात्रात्सत्यप्यनुनिष्पादिनि प्रयोजने नैव तदुद्देशेन प्रवृत्तिरेवं ब्रह्मणोऽपि जगत्सर्जने प्रवृत्तिर्नानुपपन्ना Bhām. 373.2 (*on* ii. 1.33); एषामभ्यासवशात् प्रकर्षमागच्छताम् अनुनिष्पादिन्यः सिद्धयः … भवन्ति RājMār. 36.5; अनुनिष्पादिन्यः अवयवसरूपाः संज्ञा विनियोगकाले Pradī. i. 61A.11 (*on* i. 1.0); **ii** which comes into being or is produced simultaneously (संबन्धो नान्तरीयकः) यथा दण्ड्यादिशब्दतो विशिष्टार्थप्रतीतौ सत्यां संबन्धो नान्तरीयको भवति, एवमत्रापि विशिष्टे साध्यमानेऽनुनिष्पादी भवतीत्यर्थः Kāśi. iii. 28.18 (*on* 5(4).33); शेष्येव शेषं प्रयुङ्क्ते … न तु अनुनिष्पाद्यपि ŚivārkaMaDī. i. 73.33 (*on* i. 1.1); आमिक्षा पय एवात्र तच्छब्दान्मन्त्रतो रसात्। प्रायोजिकैका प्राधान्यादनुनिष्पादि वाजिनम् NyāyMāVi. 225.2 (*on* iv. 1.9); सिद्धं भार्यात्वानुनिष्पादि पतित्वम् VīraMi.(Saṁskāra.) 584.24; अनुनिष्पादीत्यस्यायत्नसिद्धत्वे तात्पर्यं न तु अनादरणीयत्वे MayūMāli. 95.12 (*on* ii. 1.1); 855.16 (*on* xii. 1.17)

**अनुनिष्पादिफल** (anuniṣpādi-phala) *n.* result which comes into being or is produced subsequently अनुनिष्पादिफलस्याप्यनुनिष्पादिफलान्तरमन्यत्राप्यूहनीयम् VidhiRa. 10 (55.18)

**अनुनिष्पादिमरणफलक** (anuniṣpādimaraṇaphala-ka) *adj.* having subsequent death as a result अनुनिष्पादिमरणफलको व्यापारो हिंसा TattvCin. iv(2). 212.4.

**अनुनिष्पादिरसान्तरनिष्ठ** (anuniṣpādirasāntara-niṣṭha) *adj.* pertaining to another sentiment which is produced simultaneously यत्रापि प्रहसनादौ हास्यादेः प्रधानता तत्राप्यनुनिष्पादिरसान्तरनिष्ठ एवास्वादभिन्नादिकार्थम् AbhinBhā. i. 339.16 (*on* 6.83)

**अनुनिष्पादिसंकर** (anuniṣpādi-saṅkara) *m.* commingling with (the result) which is produced subsequently अनुनिष्पादिसंकरो यथा 'अथातोऽग्निष्टोमेनानुयजती'ति विधितः प्रकृत्यग्निष्टोमेऽग्निप्राप्तिस्तदनुनिष्पादिनी तस्मिन्नग्न्याश्रितगुणकामानां प्राप्तिः VidhiRa. 10 (49.3); 10 (57.21)

**अनुनिहित** (anu-níhita) *adj.* deposited near each other ऋतूरनुनिहिताः परिप्लवन्ते MaiS. iv. 6.7 (iv. 89.9)

**अनुनी** (anu-nī-) I. U. **1Ai** to lead to, to bring near to, (pass.) to be led to or carried to **ii** to carry behind **Bi** to direct, i. e. to push into **ii** to direct, to impart **2A** to supplicate, (*caus.*) to beseech **Bi** to conciliate, to pacify, (pass.) to be conciliated **ii** to console **Ci** to persuade, to convince **ii** to persuade **3** to imitate **4** (pass.) to follow upon **1Ai** to lead to, to bring near to अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन्। न तत्ते सुम्नमष्टवे ṚV. iv. 30.19; नो अरमतिम् … चक्षुरिव यन्तमनु नेषथा सुगम् ṚV. v. 54.6; उरुं नो लोकमनु नेषि विद्वान् ṚV. vi.47.8; AV. xix. 15.4; AV.(P.) iii. 35.4; AitBr. 29.6 (746); KauṣīBr. 25.7 (115.8); TaiBr. I. ii. 1.9;

II. vii. 13.3; GopBr. ii. 6.4 (248.7); ĀśvaŚS. I. iii. 7.11; I. v. 3.21; II. i. 4. 7; ŚāṅkhāŚS. xviii. 4.1; BaudhŚS. i. 43.10; ii. 358.15; ĀpaŚS. v. 3.1; VārāŚS. I. i. 6.6; अदितस्य ( Read ऋतस्य ) पन्थामनु नेषि विद्वान् AV.(P.) xix. 46.4; अनुनयन्त्यजां पुंच्छगलामश्वं वृषाणमिति BhārŚS. xi. 1.9; ĀpaŚS. xv. 1.6; ( अग्नीषोमीयम् ) अजमनुनयन्ति ĀpaŚS. xi. 17.1; MānŚS. 69.16; HirŚS. vii. 8.8 (734.25); vii. 8.26 (745.27); VaikhāŚS. 14.15; HirPiMe. i. 1.2; अनुनयन्ति त्रीनश्वान्। चतुरो वा ĀpaŚS. xvii. 20.8; HirŚS. xii. 6.18 (108.5); अनुनयन्ति राजक्रयणीम् MānŚS. 62.8; अनुनयन्ति श्वानं चतुरक्षम् VārāŚS. III. iv. 1.22; ( अग्नीषोमौ ) यथार्थमनुनयन्ति HirŚS. vii. 8.24 (741.15); अनुनयन्त्येतमग्निम् BaudhGS. i.5.2; ( संयुगे ) अनुनेष्यामि भवन्तं सह बान्धवैः Rāmā. i. 592*; देवदत्ता स्वयमेव मम स्वामिनीम् ··· आर्यमूलदेवसकाशमनुनेष्यति PadmPrā. 28.1; प्रियं कांचिदुपैतुमिच्छतीं पुरोऽनुनिन्ये निपुणः सखीजनः Kirātā. 8.8; श्रीरामः सलक्ष्मणः सप्रियश्च त्वामनुनेष्यति PurāPraSaṁ. 9. 15; (pass.) to be led or carried to सिन्धुप्रजानो मदुघोऽश्वीव नीयते जनाँ अनु AV.(P.) vi. 6.6; द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च तौ। वासनौघेन शुद्धेन तत्र चेदनुनीयसे MuktiU. 2(2).3; **1Aii** to carry behind ( पात्राणि ) इतराण्यन्येऽनुनयन्ति VaikhāGS. 5.2; **1Bi** to direct, i. e. to push into न्यग्रोधावरोधम् ··· पेषयित्वा ··· अथास्या दक्षिणे नासिकाच्छिद्रेऽङ्गुष्ठेनानुनयति BhārGS. 1.22 (22.11); **1Bii** to direct, to impart अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते MahāBhā. i. 158. 43; **2A** to supplicate सः ··· प्रत्युवाचैतौ। प्रत्यनुनये ( v. l. प्रीतावनुनये ) भवन्तावश्विनौ MahāBhā. i. 3.74; भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् MahāBhā. i. 80.21; न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् Rāmā. i. 8.19; पुण्डरीक निष्ठुरोऽस्येवमप्यार्ता न गणयसि मामित्युपालभमाना मुहुर्मुहुरेनमन्वनयम् Kād. 168.7; अ(न्ध ? न्व)नैषीदथो स्वराभिज्ञानाभ्यां (?) पादयोर्निपत्य AvantiKa. 240.10; (*caus.*) to beseech स्वहृदि स्वबीजाद्रश्मिं निश्चार्य ··· बुद्धान् आकृष्याष्टमातृभिः संपूज्यानुनाययति HevajraT. i. 4.1; **2Bi** to conciliate, to pacify ऋत्विजोऽनुनयामास भूयो भूयस्त्वतन्द्रितः MahāBhā. i. App. I. 118(20); वाक्यमहीनार्थं ब्रुवन् राजा युधिष्ठिरः। सर्वानन्वनयद् भ्रातॄन् MahāBhā. iv. 398*(9); ते चेत् कुरूननुशास्य स्थ ( v. l. न चेत् कुरूननुनेष्यामि ) पार्था निनीय सर्वान् MahāBhā. v. 25.9; v. 78.17; v. 127.2; एष यो मां प्रति निश्चयस्ते। अत्रानुनेष्यामि सुहृत्तयैव ब्रूयामहं नोत्तरमन्यदत्र BuddhaC. 11.6; अहमेवैनमनुनयामि PratiYau. 2.13 (32); मान्यान् मानय [illegible]ऽप्यनुनय प्रच्छादय स्वान् गुणान् ŚatTrayī. 44 (*but* APTE to cherish love); अन्वनैषीत्ततो वाली त्रपावानिव राघवम् Bhaṭṭi. 6.140; 19.24; भवज्जनकजननीसहोदराणां पुरत आवयोः प्रेमातिशयमाख्याय सर्वथास्मत्परिणयकरणेताननुनयेः DaśKuC. 23.4; अथान्यो भिषगभिषदेत्तस्मै क्षमेत साम्ना चानुनयेत् KāśyaS. 61A.15; कथं च कुलपतिं कुपितमनुनेष्यामि TilaMañ. 336.3; वन्द्यपादा ध्यानमपूरयन्। ··· देवी साक्षादथाह तान्।··· एनामन्वनयन् PrabhāC. 50.27; (pass.) to be conciliated य एवं क्रुद्धादिः कापटिकादिचारपुरुषैर्ज्ञायते स एवात्मीयोऽनुनीयते ManuBh. ii. 34.25 (*on* 7.105); जामदग्न्यमुखाद्देवः सवनायान्वनायि यत्। सर्वं तद् विस्मृतं हन्त JānaPa. 1.42; कोपेन रज्यन्नयनो निवृत्तो मुनिर्वसिष्ठेन गिरान्वनायि Rāgh. 2.49; **2Bii** to console अबला प्ररुरोद च सुस्वरम्। ··· पितामहः। सर्वभूतहितार्थाय तां चाप्यनुनयत्तदा MahāBhā. vii. App. I. 8(131); ( विभीषणः ) ताः स्त्रियोऽनुनयामास सान्त्वमुक्त्वा पुनः पुनः AdhyāRā. vi. 12.39; (pass.) to be consoled अथोत्थाप्य प्रमृज्याश्रु जनन्या सोऽन्वनीयत PāṇḍaC. 1.149; **2Ci** to persuade, to convince यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् Rāmā. ii 16.51; **2Cii** to persuade अनुनयति समर्थः खड्गदीर्घः करोऽयम् Cārud. 1.14; अन्वनैषुरवधूतविग्रहास्तं ( अग्निमित्रम् ) दुरुत्सहवियोगमङ्गनाः RaghuVa. 19.43; शिरसा भवतीमनुनयामि Mṛcch. 1. 56(2); इयमनुनयति प्रियं क्रुद्धम् PādaTā. 13.13; मुग्धास्तेऽनुनयन्ति ये न कुपिताः DhūrtaViSaṁ. 2.3; हित्वा कूलस्थवाक्यान्यनुनय रमणम् PadmPrā. 21.18; कोपवती ··· कान्तमेव कलयन्त्यनुनिन्ये ŚiśuVa. 10.29; 11.37; मुग्धामनुनयति मृदूपायेन सान्त्वयन् ŚṛṅgāTi.(Ru.) 1.54; नानुनिन्ये न मानिनीम् MahāP. 35. 199; एकैकशोऽनुनेष्यामि कामी कामवतीरिमाः RāmC. 24.54; स्वमहिषीम् ···। अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः BhāgP. iv. 26.20; तन्न वेद्मि कुतो गतासि न तेन तेऽनुनयामि GītGo. iii. 7.7; v. 10.1; लङ्कां नयामि च गिरानुनयामि चैनाम् ··· जनकेन्द्रपुत्रीम् PrasaRā. 1.55; यामिनीमनुनयति ··· इन्दुः SaduktiKa. 58.21; अनुनयति पतिं न लज्जमाना RasMañ. 49; कोपाधिकस्फुरितचूर्णितलोचनान्तं कान्ताजनं किमनुनेष्यति कार्मुकेण SūktiRa. 168.35; नयने तस्य कदानुनेष्यतः Yādavā. 9.106; क्रोधोत्कम्पममर्षयत्यनुनयत्यस्याः स्मरक्रीडया ŚārṅgaPa. 3158; वधूस्तदानुनिन्यिरे नयेन येन येन ये Nalo. 2.54; संध्याप्रणामदोषाद् योऽनुनयति तं विजित्य Subhāṣi. 117; 122; कृतविप्रियोऽपि भृशमन्वनयत् सुदृशं परः स्मरकलाविदुरः HammīMaKā. 5.67; मृषारुषं त्वाम् ··· कदानुनेष्ये StavMā. 80.18; प्रणयकलहं स्वयं कृत्वा स्वयमनुनयति सा मध्यमा ŚṛṅgāMañ.(A.) 40.6; अनुनयति ··· मन्मथभावभिन्ना शून्यान्तरा PadyaVe. 456; (pass.) to be persuaded यः प्रिययानुरक्तयानुनेतव्ययानुनीयते DhūrtaViSaṁ. 28. 16; उज्झित्वा दौर्बल्यं सानुनीयताम् Kāvyānu.(He.) 129.5; **3** to imitate द्वन्द्वेषु कोटित्रयबल्लवीनामतः परं कोऽनुनयेच्चरित्रम् GopāKeCan. 150.21; **4** (pass.) to follow upon ( सं )ज्ञ( आम् ) संस्कारान् विज्ञानं नानुशेते तन्नानुनीयते यन्नानुनीयते न तेन संख्यां गच्छति Saṁyuktāgama i. 3.1 (572.13) [DBHS.] [to train, to discipline, to honour, APTE]

**अनुनी** ( anu-nī ) *adj.* propitiating नानूनौन्नाननोऽनुनीः ··· नैनं नानौन्नानाननो ननु StavMā. 257.22 ( comm. अनुनयतीति अनुनीः )

**अनुनीत** ( anu-nīta ) *adj.* [*f.* -ā] **1A** guided, led मया पित्रानुनीतेन व्यासेन ब्रह्मवादिना। ततो ब्रह्मोपदिष्टम् ŚukRaU. 260.3 (3.16); अनुनीतोऽस्मि गोविन्द तारितश्चाद्य माधव MahāBhā. viii. 49.114; भवद्वाक्यैः ··· अनुनीतोऽस्मि लक्ष्मण Rāmā. vii. 52.19 ( comm. शिक्षितोऽस्मि ); भृशं शङ्के वैर्वा विधिभिरनुनीता मम मतिः ĀnandL. 9; **1B** led (physically) अनुनीतास्मि ते पित्रा भर्ता मे त्वं भव प्रभो MahāBhā. i. 941* (1); अत्यर्थगुरुभोजनात् प्रवृद्धश्लेष्मा ··· नेत्रानुसारगतिभिः शिराभिरनुनीतः ··· नयनमावृतं करोति Hastyāyur. 149.2 (1.18); **2Ai** convinced उवाच ··· सुदेष्णा ···। मया च सत्यवचनैरनुनीतो महीपतिः MahāBhā. iv. App. I. 15(12); अनुनीता हि भीष्मेण ···। न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु MahāBhā. v. 3.12; **2Aii** persuaded नायकप्रयुक्तैरुपशमितरोषा तैरेवानुनीता ( नायिका ) KāmSū. 187.2 (2.10); एषा प्रियेणानुनीता प्रसीदति Ubhayābhi. 13.13; तत्कथमनेनेयमनुनीता भविष्यति PādaTā. 33.10; ( सा ) भर्तुकामा तेन धूर्तेन ···। अनुनीता DaśKuC. 118.4; स्त्रीभिः ··· दृष्टेऽपि दोषे पतयोऽनुनीताः Bhaṭṭi. 11.4; ( सा ) अनुनीता ··· तुष्यति ŚṛṅgāTi. (Ru.) 1.56; संमुखे नानुनीतासि वृथा मानं करोषि च ĀdiP. 14.61; अग्रे मानो गतः पश्चादनुनीता प्रियेण सा Candrā. 5.42; Kuval. 43; दयितस्तवानुनीतो मया सखि ChandaśCū. 4.5(17); गृह्णाति कारणाद्रोषमनुनीता प्रसीदति BhāvPra. (Śā.) 102.3(4); 164.13(5); पुनरनुनीतो निजोद्वर्तनविलेपनात् PrabaCin. 18.21; अनुनीता प्रसीदति सोत्तमा RasāSu. 36.8 (1.152); अमुना ···। अनुनीता ··· उवाच सा ParamāKā. 57.21; **2Bi** conciliated, pacified एवं स पाण्डवस्तेन ( मार्कण्डेयेन ) अनुनीतो महात्मना। विशोकः ··· काम्यके न्यवसत्तदा MahāBhā. iii. 283.16; मा रोदी राज्ञि ···। रक्षितव्यं सदास्माभिः सत्यमप्रतिमं भुवि। अनुनीतेषु चास्मासु अनुनीता त्वमप्युत MahāBhā. iv. 398* (12); सानुनीता बहुविधं पर्वतेन महात्मना।··· स्वां प्रकृतिं गता MahāBhā. xii. 30.41; सोऽनुनीतो नरव्याघ्रो विष्टरश्रवसा स्वयम्।··· व्यजहान्मानसं दुःखम् MahāBhā. xii. 38.27; xii. 323.54; स राज्ञा धर्मशीलेन भ्रात्रा बीभत्सुना तथा। अनुनीतो महाबाहुः सौहृदे स्थापितोऽपि च MahāBhā. xv. 19.6; एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना। अनुनीता वयं सर्वे धर्ममेवानुपश्यता Rāmā. ii. 80.9; स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् RaghuVa. 5.54; संरम्भरूक्षमिव सुन्दरि यद्यदासीत् त्वत्संगमेन मम तत्तदिवानुनीतम् Vikramo. 3.20; एवं तातेन तेनाहमनुनीतो महात्मना। उपसंहृतवान् सत्त्रं सद्यस्तद्वाक्यगौरवात् ViṣṇuP. i. 1.21; ( कंसः ) एवमुक्तोऽनुनीतः स जग्राह तनयांस्तदा VāyuP. ii. 34.217; BrahmāṇḍP. ii. 71.234; ii. 73.47; अनुनीतो मया स्थावरकश्चेटः Mṛcch. 8. 37 (4); प्राचेतसोऽसिक्न्यामनुनीतः स्वयंभुवा। षष्टिं संजनयामास दुहितॄः BhāgP. vi. 6. 1; ŚivaP. ii(2). 14. 4 ( 83B. 1 ); श्रीब्रह्मेशप्रजेशेन ···। अनुनीतः शंभुरासीत्प्रसन्नः ŚivaP. ii(2). 42.1 (121B.5); क्रुद्धः पृष्टोऽनुनीतोऽपि जगादैवं द्विजोत्तमः KathāSaSāg. i. 7.47; vii. 8.161; तेनैवमृजुना सोऽनुनीतः प्रमुमुदेऽधमः TriṣaŚaPuC. i. 2.103; ii. 5.155; सः ··· अनुनीतोऽपि गीतार्थैः पूज्यैरप्युदिते दृढम्। अमुञ्चन्नाग्रहम् ··· इदमभ्यधात् PrabhāC. 154.10; तेनानुनीतो वरतातभाषितं द्विजोऽनुमेने ŚaṅkaDigVi.(Mā.) 2.32; अनुनीतोऽपि कालुष्यं खलः काव्ये न मुञ्चति RājTa.(Jo.) 20; यजमानेनानुनीतः ··· उषस्तिः ŚivārkaMaDī. i. 265.6 (*on* i. 1.23); आबालवृद्धमनुनीतमिहाद्य पश्याम्याश्वासितं जनमनेन बिभीषणेन AdbhuDa. 9.21; कंसः ··· मधुरोक्तिभिरनुनीतः UpadeŚ. 8; 69; **2Bii** entreated, requested, supplicated न ह्यस्माभिः प्रतिग्राह्यं सखे देयं तु सर्वदा। इति तेन वयं राजन्ननुनीता महात्मना Rāmā. ii. 81.16; निशाचरी। अब्रवीत् कुपिता सीताम् ···। अनुनीता त्वमस्माभिः परं सान्त्वेन मैथिली Rāmā. v. 563*(5); v. 35.9; शापान्तायानुनीतश्च मामसौ मुनिरब्रवीत् Rāmā. vi. App. I. 56(216); अनुनीतोऽपि न ददावनुज्ञां स तदा MatsyaP. 10.6; पार्वती सुप्रसन्नाभूदनुनीताथ राधया BrahmāṇḍP. ii. 42.53; ii. 44.29; य एवमनुनीतोऽपि रथं नारोढुमिच्छति BṛKathāŚloSaṁ. 10.51; अजेनानुनीतेन भवेन परितुष्यता। अभ्यधायि BhāgP. iv. 7.1; अनुनीतो भरतो भवनमभजत RāmaCam. 2.72(1); अनुनीतो मद्भ्राता तेन देवप्रभेण सः KathāSaSāg. vii. 2.122; viii. 6.193; अनुनीतोऽथ शापान्तमृषिपुत्रः स मेऽवदत् KathāSaSāg. x. 9.90; तेन नृपतिरनुनीतः PrabaCin. 58.21; ब्राह्मणैरनन्योपायत्वाज्जीवदेवसूरयोऽनुनीताः

PrabaK. 9.7; वेनः … अनुनीतोऽपि न ददौ … अभयं ततः PadmP. v. 8.6; सुग्रीवेणानुनीतोऽस्मि क्षम्यतां राघव त्वया PadmP. v. 35.60; **2Biii** consoled कृतं यद्वयस्येन … कृतं सुग्रीव यत्त्वया। एष च प्रकृतिस्थोऽहमनुनीतस्त्वया सखे Rāmā. iv. 7.17.

**अनुनीतभीता** (anunīta-bhītā) *adj.* (*f.*) afraid on account of being led back पश्चात्सुचिरमनुनीतभीतया … सिक्ता कमण्डलुजलेन तथापेक्षया नोत्तरं मे दत्तम् TilaMañ. 379.18.

**अनुनीतवती** (anunīta-vatī) *adj.* (*f.*) who has persuaded सा … अनुनीतवती पतिम् PāṇḍaC. 8.14; संतर्ज्य नाथमनुनीतवती हसन्ती … प्रगल्भा ŚṛṅgāDī. 1.15.

**अनुनीति** (anu-nīti) *f.* **Ai** conciliation (one of the thirty-six characteristics of a poetic composition) अनुनीतिः परिदेवनं च … षट्त्रिंशदेतानि तु लक्षणानि प्रोक्तानि NāṭyaŚā. 16.3; अपूर्वक्रोधजनितमपराधं प्रमृज्य यत्। सेवार्थं मधुरं वाक्यं सानुनीतिः प्रकीर्तिता NāṭyaŚā. 16.38; अनुनीतिः पर्युपास्तिः पुष्पं सातिशयं वचः BhāvPra.(Śā.) 209.16(7); अनुनीतिरपूर्वस्य क्रोधस्योद्दीपनक्रिया SāhiSā. 3.23; **Aii** conciliation, pacification भजते कुपितोऽप्युदारधीरनुनीतिं नतिमात्रकेण सः ŚiśuVa. 16.55; क्व जनादरः क्व च सतामनुनीतिः PadyaVe. 391; अनुनीतावपि कर्कशां त्वामुपेक्षिता मासयुगं दशास्यः Ragh. 13.45; **B** persuasion तस्यै स्पृहयमाणोऽसौ (रावणः) बहु प्रियमभाषत। सानुनीतिश्च सीतायै नाक्रुध्यन्नाप्यसूयत Bhaṭṭi. 8.75; सायं तद्गृहमागत्य भर्ता प्राहानुनीतये PrabhāC. 113.27 [*anunīti* is given as one of the meanings of *huṁ*, ViśvaPra. 189.45]

**अनुनीति** (anunīti) *adv.* according to persuasion तेनागतेन ललना गमिता प्रसादमालिङ्गिता नवममन्दरसानुनीति HarVi. 3.93 (comm. प्रार्थना यत्र तथा कृत्वा)

**अनुनीतिचण** (anunīti-caṇa) *adj.* [P. v. 2.26] expert in persuasion कश्चन प्रकुपितां दयितामनुनीय योषिदनुनीतिचणः।… अचलन् मधूत्सवकृते सुकृती HammīMaKā. 5.48.

**अनुनीतिधृताग्रहा** (anunīti-dhṛtāgrahā) *adj.* (*f.*) who was insisted upon by way of persuasion सा भागिनी तदनुनीतिधृताग्रहापि … न चचाल तल्पात् KoṭiVi. 86.

**अनुनीय** (anunī-ya) *ger.* **1A** having requested or entreated सा धर्मतोऽनुनीयैनाम् …। भोजयामास विप्रांश्च MahāBhā. i. 99.49; i. 1181*(5); व्यवसायं करिष्येऽहमनुनीय पितामहम् MahāBhā. iii. 227.16; v. 145.34; सदनमुपगतोऽहम् …। सशपथमनुनीय ब्रह्मणा गोमयाम्भःपरिमृजितनिजोरावाशु संवेशितोऽस्मि ŚatTrayī. 778; PraboCan. 2.10 (24.3); अस्त्रवेदविदयं महीपतिः …। गोपितुं भुवमिमां मरुत्वता शैलवासमनुनीय लम्भितः Kirātā. 13.67; तेनास्मै … भीत्यानुनीय दत्ता कन्या DaśKuC. 84.14; तद्भवती त्वरिततरं देवीमुपनिषदमनुनीय मत्सकाशमानयतु PraboCan. 6.1 (99.1); भूपेन … अनुनीय तदा निन्ये हिरण्यपुरमर्जुन PāṇḍaC. 5.376; तेनानुनीय बहुलं गुरवे प्रदाप्य यत्नान्निकेतनमनायि गृहीतविद्यः ŚaṅkaDigVi.(Mā.) 2.21; स राज्यमनिच्छन्नपि मन्त्रिभिरनुनीय राजा कृतः PuruṣPa. 225.1; स राज्ञश्चैलनिर्णेजकेन व्यापाद्यमानो मयानुनीय कथं कथमप्युन्मोचितः KamVa. 5.15(11); सः … आचार्यवर्यैः … अनुनीय मधुरवचनैः … साम्राज्यपदाभिषिक्तः …। उर्वीं धर्मतः पालयामास ĀnandRa. 1.45(15); **1B** having conciliated, having pacified अन्योऽन्यमनुनीयैवं भ्रातरौ तौ …। विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् MahāBhā. iii. 7.24; iii. 14.13; अहं तु तान्शितैर्बाणैरनुनीय रणे बलात्। पादयोः पातयिष्यामि कौन्तेयस्य MahāBhā. v. 3.13; v. 31.12; अभियुक्तो बलवता कुर्यादापद्विधिं नृपः। अनुनीय तथा सर्वान् प्रजानां हितकारणात् MahāBhā. xiii. App. I. 15 (983); वासुदेवः …। अनुनीयर्क्षराजानं निर्ययौ च तदा बिलात् HariVaṁ. 28.29; VāyuP. ii. 34.49; BrahmāṇḍP. ii. 71.51; BrahmP. 16.42; कार्यसंदर्शनेन मित्रमनुनीय श्वोभूते वचनमस्तु KāmSū. 346.5 (6.5); मन्त्रिणः … भूमहेन्द्रम् … कथंचिदनुनीय … विन्ध्याटवीमध्ये … निवेशयामासुः DaśKuC. 4.10; 8.18; अनुनीय रावणिरथो विधुरं पितरम् RāmāCam. 6.63; सुपार्श्वस्त्वेवमुक्त्वा तां विनिवार्य तपस्तथा। आगच्छदात्मनो लोकमनुनीय तपस्विनीम् SkandP. iii(1). 6.16; मातरं च समाश्वास्य अनुनीय च जानकीम्। आगत्य पादौ वन्दित्वा तव यास्ये सुखं वनम् AdhyāRā. ii. 3.77; यदा श्रीरामः … अनुनीय त्वां श्वशुरगृहे प्रहिता PrabaK. 82.20; 44.24; राधेयं चानुनीय संधावहितम्। पार्थान्पुनरपायं जनार्दनः YudhiVi. 6.147; प्रेमोद्गारप्रभवमनुनीय क्रमवशात् परीवारान् भ्रातर्निशमयति चानूरमथने HaṁsDū.(Rū.) 127; अनुनीय मित्रमत्र च तादृगिहार्थस्तु संग्राह्यः KandaCū. vi. 5.16; **1C** having persuaded अनुकूलतुहिनमारु(त)स्पर्शवेजितानाम(व)यवानाम् … पुनरनुनीय स्वयमसितलोचनाभिर्वासभवनमनीयत AvantiKa. 37.6; स्वाङ्गमर्पयितुमेत्य वामतां रोषितं प्रियमथानुनीय सा NaiṣC. 18.81; कश्चन प्रकुपितां दयितामनुनीय HammīMaKā. 5.48; Subhāṣi. 1181; अनुनीय शयनं सकृदपि आरोपिता किम् … मन्दाकिनी VasaTi. 40.5; **2** having guided or instructed व्यसनैः क्लिश्यमानं हि यो मित्रं नाभिपद्यते। अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः MahāBhā. v. 91.1.; अनुनीय च तान् सर्वान् यथामान्यं यथावयः। धर्मराजस्तदा वाक्यं तत्राप्यं प्रत्यभाषत MahāBhā. v. App. I. 12 (81); अनुनीय तु दाशार्हः पाण्डवं त्वरितोऽब्रवीत् MahāBhā. vii. 216*(5); अनुनीय तथा काव्यः …। स्वैः प्राणैर्ब्राह्मणप्राणान् परित्राय दिवं गतः MahāBhā. xii. 226.16; तानुदारमनुनीय विषमहरिचन्दनालिना।… संववृते … शिवः Kirātā. 12.40 (comm. शिक्षयित्वा); **3A** having brought near, having considered अनुनीयात्मनात्मानं कृत्स्नात्मानं प्रपश्यति BṛĀraUBhVā. i. 4.1350; **3B** having led or brought near (वलितोरुकम्) हस्तौ … परिवर्तेनानुनीय वक्षःप्रदेशे शुकतुण्डावधोमुखौ स्थापयेत् AbhinBhā. i. 97.21 (*on* 4.63); अनुनीय भिषक् सम्यक् परिमृश्य च भागशः। छिन्द्यात्तु नाडीं शस्त्रेण Hastyāyur. 477.20 (3.15)

**अनुनीयता** (anunīya-tā) *f.* the state of needing to be conciliated अनुनीयता मह्य न काचिदस्ति प्रेमा च दोषश्च न मे कर्हिचित्। समं च धर्मं प्रवदामि देहिनां यथैकसत्त्वस्य तथा परस्य SaddhaPuṇ. 87.26 [DBHS.]

**अनुनीयमान** (anu-nīyamāna) *adj.* [*f.* -ā] **A** being conciliated ध्रुवं विनाशो नृप कौरवाणां (v. l. नैकप्रकारैरनुनीयमानः) न वै श्रेयो धृतराष्ट्रः परैति MahāBhā. iii. 6.16; अनुनीयमानो दुर्बुद्धिरनुनेतुं न शक्यते HariVaṁ. 15.55; **B** being requested अनुनीयमानोऽपि भृशं देववाक्याद्धि तेन सः। नैच्छद्वोढुं हविः सर्वं शरीरं च समत्यजत् MahāBhā. iii. 212.11; तच्छापप्रक्षुब्धमनसा मया सुचिरमनुनीयमानः … अनुग्रहं कृतवान् Avimā. 6.7(2); अनुनीयमानस्तद्यात्रां न चक्रे भ्रष्टमङ्गलः BhāgP. iv. 14.29; **C** being persuaded (नायिका) तत्र युक्तितोऽनुनीयमाना प्रसादमाकाङ्क्षेत् KāmSū. 186.9 (2.10); JayaMa. 186.19 (*on* 2.10); KandaCū. ii. 10.41; यदि चेयमीदृशेऽप्यपराधेऽनुनीयमानानेन प्रत्यासत्तिमेष्यति Kād. 195.17; (स्त्रियः) इमा ह्यनिशमनुनीयमाना गृहमर्कटमिव विडम्बयन्ति पुरुषम् YaśasCam. ii. 61.5; तेनानुनीयमानापि यदुदश्रुर्बभूव सा KathāSaSāg. xii. 17.30; मयानुनीयमानापि सुप्ता वेगवती पृथक् BṛKathāŚloSaṁ. 15.68; बाणपण्डितः … भावुकेनानुनीयमानां समानां जामिं निशम्य PrabaCin. 44.3; **D** being consoled दृढं दूयते देव इति सखीभिरनुनीयमानापि … अतिदीर्घं रुरोद HarṣaC. 330.18; अमात्यपुरोहितैरनुनीयमानया तया क्षणं क्षणहीनया तूष्णीमस्थायि DaśKuC. 5.1.

**अनुनीयमानकठिन** (anunīyamāna-kaṭhina) *adj.* hard(-hearted) inspite of being persuaded क्रुद्धश्चाप्यनुनीयमानकठिनो यः क्रुध्यते कान्तया DhūrtaViSaṁ. 30.14.

**अनुनीयमानकर्कशमनस्** (anunīyamāna-karkaśamanas) *adj.* harsh-hearted because of being conciliated ये त्वनुनीयमानकर्कशमनसोऽनुनयादेवानुनेतुरशक्तिं मन्यन्ते, आत्मनश्च पाण्डित्योत्कर्षं तान्प्रति साविष्कारमाह TātpaṬ.(U.) 2.17 (*on* 1.5)

**अनुनीयमानबहुलबहुलोत्कर** (anunīyamāna-bahulabahulotkara) *adj.* whose multitude of numerous cows is being conducted (by the workers) कविजनवारः … अतन्द्रितैरन्तेवसद्भिः विष्टिभिश्चानुनीयमानबहुलबहुलोत्करः … नृपाय … वृत्तशालिनो वृत्तं निवेदयामास ĀnandRa. 2.16(7)

**अनुनीषु** (anu-nīṣu) *adj.* desirous of conciliating निशङ्कं विदधत एव गोत्रभेदं वज्रस्ते निवसति वाचि यन्न पाणौ। इत्यारादभिदधुर्षी पुनः सपत्नीनाम्नैवावनतशिरा युवानुनीषुः HarVi. 17.84.

**अनुनु** (anu-nu-) II. P. (°नू VI. P.), cf. **अनुनोनु.**

**अनुनुद्** (anu-nud-) VI. P. (*caus.*) to cause to push or urge दुःशासन रथास्तूर्णं युज्यन्ताम् …। अनीकानि च सर्वाणि शीघ्रं त्वमनुचोदय (v. l. °नोदय) MahāBhā. vi. 16.12.

**अनुनूता** (anu-nūtā) *f.* kind of *iḍā* 'finale' in the chanting of a Sāman (*lit.* which is chanted continuously or with repetition) ता वा एताश्चतस्रः षडहं पराच्य इडा अतियन्त्येषा नु नूतैषा(? एषानुनूतैषा) विषूच्येषा प्रतीच्येतद्वीडम् PañcBr. x. 12.6.

**अनुनृत्** (anu-nṛt-) IV. P. **i** to dance imitatingly तदनु नर्तक्यश्चानुनृत्येयुः BaudhPiMe. i. 17.8; ĀgniveGS. iii. 8.1 (161.2); स वो विघ्नेश्वरः पायान्नमितोन्नमितेव यम्। अनुनृत्यति नृत्यन्तं संध्यासु भुवनावली KathāSaSāg. xiii. 1.1; मघवा …। ननर्त रङ्गाचार्यन्ति स्वाम्युत्सवभवा मुदः। तमन्वनृत्यन् मुदिता अपरेऽपि दिवौकसः TriṣaŚaPuC. i. 2.874; **ii** to dance imitatingly (in front) तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः MahāBhā. ix. 43.19.

**अनुनृत्यती** (anu-nṛtyatī) *adj.* (*f.*) dancing imitatingly पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति(v. l. अनुनृत्यती)। शिखिनी … एषा Rāmā. iv. 1.18.

**अनुनेतव्य** (anu-netavya) *adj.* [*f.* -ā] **A** to be treated politely नास्मा अनुनयो देयो (v. l. नास्माभिरनुनेतव्यो) नायमर्हति सान्त्वनम् MahāBhā. ii. 35.6; **B** to be persuaded तया किमनुनेतव्यया भवितव्यम् Dhūrta-

सद्भावादि विचारयितव्यम् ŚāstrDī. 526.10 (*on* vii. 1.1); अनुपदिष्टधर्मकेष्वैन्द्राग्नादिष्वतिदेशेन धर्माः सिध्यन्ति NyāyRaMā. 172.16; 169.5; **B** having a rule which is not specified बृहस्पत्यादिनाप्यनुपदिष्टधर्मकेष्वेवान्वाहितादिष्वतिदिष्टम् SmṛtiCan. iv. 425.19.

**अनुपदिष्टप्रतिक्रिय** (anupadiṣṭa-pratikriya) *adj.* for which remedy is not prescribed इदं तदलङ्घ्यविधानरूपम्। अयमसावनु(प)दिष्टप्रतिक्रियो नियत्यामयः AvantiKa. 131.12.

**अनुपदिष्टप्रवृत्तिनिवृत्तिक** (anupadiṣṭapravṛttinivṛtti-ka) *adj.* wherein either activity or inactivity is not specified पुत्रस्ते जातः कन्या ते गर्भिणीति सुखदुःखपरिणामनुपदिष्टप्रवृत्तिनिवृत्तिकानाम् … वाक्यानाम् … प्रयुज्यमानत्वात् NyāyMañ. i. 268.15.

**अनुपदिष्टप्रायश्चित्त** (anupadiṣṭa-prāyaścitta) *adj.* for which or whom expiation or atonement is not prescribed अनादिष्टेष्वनुपदिष्टप्रायश्चित्तेषु पापेषु चान्द्रायणेन शुद्धिः Aparā. 1246.22 (*on* 3.326); अनुपदिष्टप्रायश्चित्तानां मासं त्र्यहमभुक्त्वा … होमः प्रत्येकं कार्यः ManvaMu. 490.18 (*on* 11.200)

**अनुपदिष्टप्रायश्चित्तविशेष** (anupadiṣṭa-prāyaścittaviśeṣa) *adj.* for which specific atonement or expiation is not prescribed कर्मणाम् … अनुपदिष्टप्रायश्चित्तविशेषाणां च परिलोपे … सत्येकाहोपवासं प्रायश्चित्तं कुर्यात् ManvaMu. 491.3 (*on* 11.203)

**अनुपदिष्टम्** (anupadiṣṭam) *adv.* without being told इह तु भोजने कृते पुष्टिरुपजायते, यद्दुःखं तन्निवर्तत इति, बाला अपि स्तनपायिनोऽनुपदिष्टमवयन्ति ManuBh. i. 432.10 (*on* 5.27)

**अनुपदिष्टवाक्य** (anupadiṣṭa-vākya) *adj.* who has not been taught (any) statement विमतं प्रत्यक्षज्ञानं न वाक्यजन्यम्, प्रत्यक्षज्ञानत्वात् अनुपदिष्टवाक्यस्य दशमोऽहमिति प्रत्ययवत् ŚrutaPra. iB. 151.24 (*on* i. 1.4)

**अनुपदिष्टविष्णुक्रमादिक** (anupadiṣṭa-viṣṇukramādika) *adj.* for whom the Viṣṇu-steps etc. are not prescribed तत्र योऽनुपदिष्टविष्णुक्रमादिकः स केवलं यागं करिष्यति ŚābaBh. 1355.21 (*on* vi. 1.4)

**अनुपदिष्टवैशेषिकप्रायश्चित्तत्व** (anupadiṣṭavaiśeṣikaprāyaścitta-tva) *n.* the state of being that for which specific expiation is not prescribed तेषामनुपदिष्टवैशेषिकप्रायश्चित्तत्वे सति विध्यनुज्ञातत्वं क्रोडीकारकमस्तु PūrvottaVāNaMā. 66.14.

**अनुपदिष्टशिशिरोपचारा** (anupadiṣṭa-śiśiropacārā) *adj.* (*f.*) **i** for whom cool treatment is not prescribed संनिपातविद्वैद्यवाणीव प्रकृष्टतापेऽप्यनुपदिष्टशिशिरोपचारा (तिलकमञ्जरी) TilaMañ. 355.12; **ii** which has not prescribed any cool treatment, TilaMañ. 355.12.

**अनुपदिष्टस्वभाव** (anupadiṣṭa-svabhāva) *adj.* **i** whose nature is not described जातमात्रश्च पुनरनुपदिष्टस्वभावं(:)मातु(:)स्तस्य(न्य)मभिलषति BhelaS. 81.17 (4.4); **ii** whose (inherent) nature is not guided by instruction, BhelaS. 81.17 (4.4)

**अनुपदिष्टार्थप्रतिपत्ति** (anupadiṣṭārtha-pratipatti) *f.* cognition of object which is not taught (अहंकारबुद्धिः) कथं नौपदेशिकी अनुपदिष्टार्थप्रतिपत्तेः NyāyVār. 86.1 (*on* i. 1.18)

**अनुपदिष्टाविनाभाव** (anupadiṣṭāvinābhāva) *adj.* who is not taught about the invariable relationship अनुपदिष्टाविनाभावस्य पुरुषस्यार्थान्तरदर्शनेनार्थान्तरानुमित्यभावे स्वार्थानुमानकथायाः कथाशेषत्वप्रसङ्गाच्च SarvaDaSaṁ. 1.85.

**अनुपदिष्टेतिकर्तव्यताक** (anupadiṣṭetikartavyatā-ka) *adj.* whose mode of performance is not taught मासाग्निहोत्रहोमस्य अनुपदिष्टेतिकर्तव्यताकस्य … नैयमिकाग्निहोत्रधर्मातिदेशकेन … अनुष्ठानविशेषो लभ्यते PūrvottaVāNaMā. 10.8.

**अनुपदिष्टौषध** (anupadiṣṭauṣadha) *adj.* for which medicine is not prescribed चकार चेतस्यकाण्डे खल्वयं समुपस्थितो महाप्रलयः … अनुपदिष्टौषधो महाव्याधिः HarṣaC. 221.5.

**अनुपदीना** (anupad-īnā) *adj.* (*f.*) [P. v. 2.9] which is (tied) in accordance with the size of the foot सर्वान्नीनानुपदीनायानयीनागवीनाध्वनीनाः JaineVyā. iii. 4.134 (Vṛtti अनुपदं बद्धा अनुपदीना उपानत्। पदप्रमाणा); अनुपदशब्दाद् द्वितीयान्ताद् बद्धायां खो भवति। अनुपदीना उपानत् CāndraVṛ. *on* iv. 2.13; अनुपदादिभ्यः … खः प्रत्ययो भवति।… अनुपदं बद्धा अनुपदीना, उपानत्। पदप्रमाणेत्यर्थः KāśiVṛ. *on* v. 2.9; Prasā. i. 866.19; SiddhāKau. 294A.7 (*on* v. 2.9); (अनुरायामे) आयामे … यथा पदमायतं तथा च बद्धोपानदनुपदीना। सादृश्ये यथानुपदं तथा बद्धा अनुपदीना।… तुल्यप्रमाणतयैव सादृश्यम् Nyās. ii. 60.15 (*on* v. 2.9); परोपरीणपरंपरीण° … °अनुपदीनागवीन° … °सात्पदीनम् ŚākaṭāVyā. iii. 3.59.

**अनुपदीना** (anupad-īnā) *f.* foot-wear अनवानुपदीनापटलसमश्रवसम् … अष्टवङ्कनामपदम् … अनुनयन्ती च दृष्टा YaśasCam. ii. 42.8; अहम् … कयाचिदनुपदीनया … प्राणप्रयाणपर्यन्तजर्जरितकायः YaśasCam. ii. 190.4 [Kośas give *anupadīnā* as synonym of *pādukā*, AmaK. 1990; AbhidhāRaMā. 2.156; Vaija. 172.162; AbhidhāCin. 915; ParyāŚaRa. 1562; KośaKaTa. 1.7083; *pādū*, AmaK. 1990; AbhidhāCin. 915; ParyāŚaRa. 1562; ŚabdaRa.(Vā.) 3092; KośaKaTa. 1.7083; *padāyatā*, AmaK. 1990; ŚabdaRa.(Vā.) 3092; KalpaK. 209.64; *pada*, ParyāŚaRa. 1562; *pādarakṣaṇa*, AbhidhāRaMā. 2.156; AbhidhāCin. 915; *pādarakṣiṇī*, Vaija. 172.162; *pādatra*, KośaKaTa. 1.7083; *padnaddhā*, AbhidhāCin. 915; *pannaddhā*, KośaKaTa. 1.7083; *prāṇahitā*, AbhidhāCin. 915; *pāda*, ParyāŚaRa. 1562; *prāṇihitā*, KośaKaTa. 1.7083; *anupadīnā* is recorded as the meaning of *pādatrāṇa*, ParyāŚaRa. 1562]

**अनुपदृष्ट** (an-upadṛṣṭa) *adj.* [Loc.] when not looked upon (i.e. in the absence of eye-witness) स ह स्माह सुदक्षिणः क्षैमिर्यत्र भूयिष्ठाः कुरुपञ्चालास्समागता भवितारस्तन्न एष संवादो नानुपदृष्टे शूद्रा इव संवदिष्यामह इति JaimiUBr. iii. 7.6.

**अनुपदेजीव** (anupade-jīva) *m.* immediately following soul (?) श्रीवस्तुपालः … पुण्डरीकिण्यां पुरि कुरुचन्द्रराजा संजातः। स तृतीये भवे सेत्स्यति। अनुपदेजीवस्तु अत्रैव श्रेष्ठिसुता … मया दीक्षिता पूर्वकोट्यायुः PrabaK. 128.24.

**अनुपदेव** (anupadeva) *m.* name of one of the two sons of Akrūra and Ugrasenī अक्रूरादुग्रसेन्यां तु सुतौ द्वौ कुलनन्दिनौ। देवश्चानुपदेवश्च जज्ञाते VāyuP. ii. 34.112.

**अनुपदेश** (an-upadeśa) *m.* **1A** absence of mention (of a word for others) अदोऽनुपदेशे P. i. 4.70 (KāśiVṛ. अदःशब्दस्त्यदादिषु पठ्यते सोऽनुपदेशे गतिसंज्ञो भवति … अदःकृत्य); अनुपदेशेऽदः JaineVyā. i. 2.139 (Vṛtti अवचनात्मिका प्रतिपत्तिरनुपदेशः); CāndraVyā. ii. 2.32; KātanVṛ. *on* iv. 6.55; स्थित्यादिभूषानुपदेशापरिग्रहादरक्षेपे ŚākaṭāVyā. i. 1.27 (comm. स्वयंपरामर्शोऽनुपदेशः); SaraKaṇṭhā.(Gr.) i. 1.148; SiddhaHe. iii. 1.5; **1B** absence of enunciation तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात् Vār. 2 *on* P. i. 1.69; केवलस्य च वर्णस्यानुपदेशाद्वर्गग्रहणेषु लक्षणप्रतिपदोक्तपरिभाषाया अव्यापारः Pradī. vii. 117.16 (*on* viii. 2.42); **2A** absence of instruction अनुपायत्वात्तथाप्यनुपदेशात्। न श्रावकयानमिदं भवति महायानधर्माख्यम् MaYānaSū. 4.6 (1.9); सर्वं सर्वस्मै भिरुपदेष्टव्यम् … कथं तर्ह्यनुपदेशः BālaKrī. i. 173.11 (*on* 1.266); अभावस्य पृथगनुपदेशः भावपारतन्त्र्यान्न त्वभावात् NyāyKa. 7.11; ज्ञेयत्वेनानुपदेशादपि न प्रधानमिह विवक्षितम् PrakaVi. 328.20; परिपूर्णोपदेशोऽनुपदेशो वा स्यात्, कथं विकलोपदेशः ŚrutaPra. iB. 310.30 (*on* i. 2.15); शपथस्य चात्र (ब्राह्मणस्य) दृष्टप्रत्यवायहेतोरनुपदेशात् NyāyPari. 264.5; विधुगमनश्रवणादखिलानां तदुपगमे च पथोऽनुपदेशात् NayaMañ. III. i. 3.5; अत्र मार्गस्यानुपदेशेऽपि … पञ्चाग्निविद्योपदिष्टस्यैव तस्य प्राप्तिसंभवात् ŚivārkaMaDī. i. 362.11 (*on* i. 2.16); **2Bi** absence of (effective) prescription नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः SāṁkhyaPraSū. 1.9; **2Bii** absence of prescription पारिभाषिक एव स्यात्कालो गोवाजियज्ञयोः। अन्यस्यानुपदेशात् GobhiSm. 3.101; मुख्यकालसमीपवर्तिनः कालस्य … तस्यानुपदेशात् कथं ग्राह्यत्वमाशङ्क्यते CaturCin. iii(1). 303.12; विनीतानाम् … दण्डोत्सर्गे … अनुपदेशे त्रिरात्रोपवासः … पुरोहितस्य DaṇḍaVi. 6.19; 55.19.

**अनुपदेशक** (anupadeśa-ka) *adj.* **A** which does not enjoin केवलस्वार्थवृत्ति पदमनुपदेशकमिति पदान्तरेण संनिहितेनैकवाक्यत्वमभ्युपैति, नान्यथा ŚābaBh. 689.5 (*on* iii. 1.12); **B** who is not an instructor, cf. **अनुपदेशकत्व B.**

**अनुपदेशकत्व** (anupadeśaka-tva) *n.* **A** the state of not being that which enjoins यदा केवलगुणवचनतायां शब्दः प्रवर्तमानो नान्येन संबन्धं लभते, तदानुपदेशकत्वादानर्थक्यं मा भूदिति द्रव्यपरतामापद्यते ŚābaBh. 686.5 (*on* iii. 1.12); **B** the state of not being an instructor वीतरागस्य निर्व्यापारत्वेनानुपदेशकत्वाद्विप्रलिप्सुप्रणीता एवैताश्चैत्यवन्दनादिदेशनाः TātpaṬ.(U.) 78.21 (*on* 2.137)

**अनुपदेशतस्** (anupadeśa-tas) *adv.* **i** due to absence of instruction यन्त्रनिष्पीडनज्ञश्च न लोकोऽनुपदेशतः PadmP.(Ra.) 3.234; **ii** due to absence of prescription अनुपदेशतः षोडशिवाजपेययोर्नाग्निश्चेतव्यः ŚāstrDī. 784.3 (*on* x. 8.11)

**अनुपदेशत्व** (anupadeśa-tva) *n.* the state of not being that which instructs उपदिश्यते इति कोऽर्थः … स्वसादृश्येन प्रतीतिरिति चेत् … शब्दे च तदभावादनुपदेशत्वं स्यात् NyāyMañ. i. 137.27.

**अनुपदेशत्वप्रसङ्ग** (anupadeśatva-prasaṅga) *m.* undesired occa-

sion of not being that which instructs शब्दस्य च स्वावच्छेदेन प्रतीतिजनकत्व-निषेधादनुपदेशत्वप्रसङ्गादित्यभिधानक्रियास्वरूपानिश्चयान्न तस्याः करणमुपदेशः NyāyMañ. i. 137.29.

**अनुपदेशनिमित्त** ( anupadeśa–nimitta ) *n.* reason for the absence of instructing परमरहस्यं नामसहस्रम् ··· भक्तायापि मह्यं किमिति गुरुभिर्न दत्तमित्यनुपदेशनिमित्तांशे संदिहानः पृच्छति LalitāSaBh. 3.24 (*on* 4)

**अनुपदेशपाठाशक्ति** ( anupadeśa–pāṭhāśakti ) *f.* inability to study without instruction न खलु किंचिदन्यदपौरुषेयत्वाश्रयोऽन्यत्रेदानींतनानामनुपदेशपाठाशक्तेः PramāVāSvopVṛ. 81.4.

**अनुपदेशम्** ( anupadeśam ) *adv.* without instruction अनुपदेशं चैनं ( जातिभेदं ) लोकः प्रतिपद्यते PramāVāSvopVṛ. 105.28.

**अनुपदेशशिक्षित** ( anupadeśa–śikṣita ) *adj.* trained (even) without instruction सुरतपदेऽनुपदेशशिक्षितोऽपि ··· तरलदृशां रसभावसंकरोऽभूत् HarVi. 27.23.

**अनुपदेश्य** ( an–upadeśya ) *adj.* [*f.* -ā] not to be taught यद्यपि संकल्पं विना नोपपद्यते तथापि सर्वक्रियासाधारणत्वेन तं प्रत्यानन्तर्यमनुपदेश्यम् TātpaṬ.(U.) 17.17 (*on* 1.72); ( विप्रसर्वस्वनिमित्तम् ··· क्षतः शस्त्रैर्जीवन्नपि विशुध्यति ) एतच्चाक्षत्रियस्य ··· प्रायश्चित्तम्। क्षत्रियस्य त्वेतन्नित्यत्वादनुपदेश्यमेव BālaKrī. ii. 103.4 (*on* 3.241 (? 247)); अदीक्षिता अनुपदेश्या भवन्ति PārāSū. 91.7; निजजातिकुलानुरूपसंपदभावे तु रतिः पुरुषार्थरूपत्वा( भावाद )नुपदेश्या AbhinBhā. i. 311.21 (*on* 6.46); ( वेदाध्ययनोत्तरम् ) यत्किञ्चिदानन्तर्यं तावद्धर्मजिज्ञासायाः स्वभावत्वादनुपदेश्यम् NyāyRa. 24.15 (*on* 1.71); काव्यमसदुपदेशं हि दृश्यते । व्युत्पत्तिरपि च तस्मात्तादृग्विषया संभाव्यते । ततश्च तदनुपदेश्यम् Kāvyānu.(He.) 5.15; क्रियास्वरूपस्यान्तवत्त्वं लोकसिद्धतयानुपदेश्यम् ŚrutaPra. iA. 39.5 (*on* i. 1.1)

**अनुपदेश्यचरितता** ( anupadeśyacarita–tā ) *f.* the state of having a (typical) behaviour which is not to be taught सर्वो जन उत्साहवानेव । किंत्वविषय इत्यनुपदेश्यचरितता AbhinBhā. i. 324.16 (*on* 6.67)

**अनुपदेश्यतापत्ति** ( anupadeśyatāpatti ) *f.* undesired contingency of not being that which is to be taught प्रयोजने चेद्यावत् क्रियते तत्र यद्यप्यनुकार्यस्य तथापि नाट्याङ्गत्वे पृथगनुपदेश्यतापत्तिः AbhinBhā. iii. 67.16 (*on* 19.121)

**अनुपदेश्यतावच्छेदक** ( anupadeśyatāvacchedaka ) *adj.* distinguishing the state of not being fit to be taught परशिष्यत्वनास्तिकत्वाशुश्रूषुत्वानर्थप्रदातृत्वाख्याश्चत्वारो धर्माः प्रत्येकमनुपदेश्यतावच्छेदकाः SetuBa. 180.10.

**अनुपदेश्यत्व** ( anupadeśya–tva ) *n.* **A** the state of not being fit to be enjoined सत्यपि याजयतिसंबन्धे यजिसंबन्ध एवायं द्रष्टव्यो ग्रामकामं याजयेदितिवदङ्गकर्तुः प्राप्तत्वादेव निष्फलत्वेन चानुपदेश्यत्वात् TantrVā. 1062.14 (*on* iii. 5.48); **B** the state of not being fit to be taught विदितशब्दार्थसंबन्धस्य पुंसः शब्दश्रवणे सति प्रतिपत्तेः स्वतःसिद्धत्वेनानुपदेश्यत्वात् NyāyMañ. i. 269.7; तस्य प्रकाशमानत्वेनानुपदेश्यत्वात् BrahmSūBh.(Rā.) 111.13 (*on* i. 1.1); ( सोऽयमित्यत्र ) एतत्कालादिविशिष्टस्य प्रत्यक्षत्वेनानुपदेश्यत्वात् Nyāyāmṛ. 470A.6.

**अनुपदेश्यसावित्रीक** ( anupadeśyasāvitrī–ka ) *adj.* who cannot be taught the Sāvitrī-mantra सावित्रीपरिभ्रष्टाननुपदेश्यसावित्रीकान् ( व्रात्यानिति विनिर्दिशेत् ) ManvaVi. 1289.13 (*on* 10.20)

**अनुपदेष्टव्य** ( an–upadeṣṭavya ) *adj.* which cannot be taught यत् ··· वासवदत्ता ··· आत्मानमुदयनाय प्रायच्छदित्यादि तदपि साहसाभासमित्यनुपदेष्टव्य एवायमर्थः MālaMā. 2.170.

**अनुपदेष्टृ** ( an–upadeṣṭṛ ) *adj.* who does not (wish to) instruct एकलव्येनानुपदेष्टापि द्रोणाचार्यो गुरुः कृतः BṛhaspaSm. 254.160 [*m.* one who does not teach, MW.]

**अनुपदेष्टृत्व** ( anupadeṣṭṛ–tva ) *n.* the state of not being (capable of becoming) a teacher किं जातेरेवैतन्माहात्म्यं, नेत्युच्यते, श्रुताध्ययनशीलिन एवेति अन्येषामनुपदेष्टृत्वात् BālaKrī. i. 139.6 (*on* 1.197); (उपदेष्टव्याप्रतिपत्तौ) तदप्रतिपत्तौ वा अज्ञत्वेनानुपदेष्टृत्वात् ŚatDū. 142.28.

**अनुपदेहवत्** ( an–upadehava(n)t ) *adj.* not having additional excrescence अल्पस्तु रागोऽनुपदेहवांश्च ··· अनिलजाक्षिरोगे CaraS. vi. 26.129 (1941 Ed.)

**अनुपदोक्त** ( anupadokta ) *adj.* stated just before अपकर्षविधौ व्यभिचारः समान इति अनुपदोक्तावेव हेतू ग्राह्यौ PūrvottaVāNaMā. 7.3; सखीयतेः क्विप् सखीः, सख्युरिति तत्र काशिकायामुदाहृतम्, तदप्यनुपदोक्तभाष्यादिविरोधादेव 'क्वौ लुप्तं न स्थानिवत्' इति नाश्रीयत इत्यनुपपन्नमेव PāṇiTaVāNaMā. 4.19; अचिरहराद्यैर्गन्तृजनयोगः ··· स त्वनुपदोक्ते वैद्युतनिरूढे गम्यगमकत्वे पर्यवसितः स्यात् NayaMañ. IV. iii. 4.8; अनुपदोक्तपक्षावलम्बिनः केचिज्जीवैक्यमाश्रित्याहुः एको जीवः SiddhāLeSaṁ. 105.4; छायायाम् अनुपदोक्तवशिष्ठवाक्यैकवाक्यतया पथिकाद्युपजीव्यच्छायायाम् (मूत्रपुरीषयोः कर्म वर्जयेत्) VīraMi.(Āhnika.) 36.9; विशेषप्रतिपादनप्रयोजनोक्तवक्ष्यमाणकथनकैमर्थक्यानामनुपदोक्तनिषेधविध्याभासयोश्च संग्रहः RasGaṅ. 567.22; कृज्ञानात्यादेरनुपदोक्तरीतिद्वयमुत्पत्तिमावरणभङ्गं चादाय त्रेधा तदुपपादनं शक्यम् VaiyāBhū. 101.4 (*on* 24)

**अनुपदोक्तवत्** ( anupadokta–vat ) *adv.* like that which is stated just before विशेषपरत्वे हि एतच्च पुत्रग्रहणमित्यनुपदोक्तवद्विशिष्यैव ब्रूयात् BālamBha. iii. 67.23 (*on* 3.21)

**अनुपद्रव** ( an–upadrava ) *adj.* [*f.* -ā] **Ai** free from (causing physical) pain or secondary affection दशवर्षसहस्राण्यायुरनुपद्रवं चेति CaraS. vi. 1(4).7; बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः CaraS. vi. 3.50 (1941 Ed.); AṣṭāSaṁ. i. 264.4 (3.2); AṣṭāHṛ. iii. 2.53; RugVi. 2.66; त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः।··· स्मृतो व्रणः CaraS. vi. 25.36 (1941 Ed.); RugVi. 42.5; ( अक्षि ) छिन्नेऽर्मणि भवेत् सम्यग्यथास्वमनुपद्रवम् SuśruS. vi. 15.19; ( शूले ) अनुपद्रवे क्रिया प्रोक्ता भिषजां सिद्धिमिच्छता HārīS. iii. 7.68; अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः ( व्याधिः ) सुखसाध्यः AṣṭāSaṁ. i. 6.13 (1.2) = AṣṭāHṛ. i. 1.30; तदेव···आर्तवम् ··· अनुपद्रवमेवोदरं गर्भाधिष्ठितमिव वर्धयति AṣṭāSaṁ. i. 196.7 (2.1); अनुलोमे हि मारुते सुखमनुपद्रवा प्रसूते AṣṭāSaṁ. i. 208.18 (2.3); यौवनं जरया ग्रस्तं क सौख्यमनुपद्रवम् SkandP. i(2). 42.93 = ŚivaP. v. 23.60 (433A. 16); BhaviP. 617A. 34 (iv. 4.76); नवोऽनुपद्रवः शोथः साध्यः RugVi. 36.19; पश्चात्स्वेद्या हृते शल्ये मूढगर्भानुपद्रवा SiddhYo. 72.4; सुस्विन्नमिति जानीयाद्दीप्ताग्निमनुपद्रवम् Hastyāyur. 680.21 (4.24); एकदोषं नवं चोर्ध्वं बलिनश्चानुपद्रवम्। रक्तपित्तं सुखात् साध्यमधश्चेद् याप्यमुच्यते Mānaso. i. 19.202; **Aii** not harmful क रत्नमनुपद्रवम् Tantrākhyā. 30.21 = PañcT. 1.106 (106.2) = Subhāṣi. 2299; भद्रमृगाः ···। अस्माभिरतिविश्रब्धाः संवसन्तोऽनुपद्रवाः MahāP. 3.96; और्वोऽखर्वः सुधाम्भोधौ भूपाले प्रबलाः खलाः। सदर्पाश्चन्दने सर्पा न रत्नमनुपद्रवम् YaśasCam. i. 424.8; व्यनशद् दक्षिणं चक्षुर्न रत्नमनुपद्रवम् PrabhāC. 187.25; ब्राह्मणोऽहमनुग्राह्यः शान्तिकर्तानुपद्रवः ŚivaP. ii(4). 15.32 (211A. 11); **Aiii** free from disturbance (from others) तस्मादालम्बनं किंचित् कूटस्थमनुपद्रवम्। एषितव्यं मया ParaS. 30.62; मुख्यसामयिकः सोऽनुपद्रवः संपद्यते PārāSū. 67.29; **B** free from obstacles युक्त्यगम्येऽपि सद्वाक्यात्प्रतीतिरनुपद्रवा MṛgendraT. i. 12.18; **C** free from impediments कैश्चिच्चलितैरासीत्सुज्जैर्मार्गोऽनुपद्रवः RājTa.(Ka.) 8.1420; ( पृथा ) स्वयं सागरपर्यन्तां मेदिनीमनुपद्रवाम् ।··· कर्तुमीहांबभूव PāṇḍaC. 3.102; *m.* absence of (physical) trouble आनूपौदकमांसप्रायं वाहारमनुपद्रवाय बलिने उपकल्पयेत् KāśyaS. 107B. 24.

**अनुपद्रवदुःखघ्न** ( anupadrava–duḥkhaghna ) *adj.* free from (i.e. remover of) troubles and destroyer of grief कृष्णनामामृतं नाम ··· अनुपद्रवदुःखघ्नम् PañcaRā.(Nā.) iv. 1.39.

**अनुपद्रष्टृ** (án–upadraṣṭṛ) *m.* non-spectator उपद्रष्टा यदीक्षमाणो जुहुयात् प्रधीयमानानामेषामुपद्रष्टा स्यादन्यत्रेक्षमाणेन होतव्यमनुपद्रष्टैषां भवति MaiS. iv. 6.9 (iv. 93.6); पशूनामेव प्रदीयमानानामनुपद्रष्टा भवति KāṭhS. 28.6 (ii. 161.10); KapiKaS. 44.6 (262.20); स हैष कल्याण एव यज्ञक्रतुर्यस्त्वैनेनानुपद्रष्ट्रे यजेत JaimiBr. 2.304.

**अनुपद्रुत** ( an–upadruta ) *adj.* **i** who has not suffered (from any illness) न सहसा अनुपद्रुतो म्रियते BṛĀraUBh. 204.3 (*on* i. 5.21); **ii** not troubled, free from any disturbance अपराधं सकृदसकृत्कृतं लघुगुरुरूपं च, देशमुपद्रुतानुपद्रुतम् ··· ज्ञात्वा ···अपराधकारिषु दण्डे(? ण्डं) पातयेत् VīraMi. 383.17 (*on* 1.368) [Kośas give *anupadruta* as the meaning of *nirmita*, ViśvaLoK. 140.122 and *śuci*, NānārthSaṁ. 84.6]

**अनुपद्रुतचेतस्** ( anupadruta–cetas ) *adj.* whose mind is not affected आविर्भूतप्रकाशानामनुपद्रुतचेतसाम्। अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते VākyaPa. 1.37.

**अनुपद्रुततीर्थायतनम्** ( anupadrutatīrthāyatanam ) *adv.* without damaging holy water-reservoirs and temples भद्र ··· अनुपद्रुततीर्थायतनम् ··· निवेशय सेनाम् NalaCam. 6.74(1)

**अनुपद्रुत्य** ( an–upadrutya ) *ger.* not having contradicted ( माया ) कूटस्थमनुपद्रुत्य करोति जगदादिकम् PañcDa. 6.134.

**अनुपद्रूयमाण** ( an–upadrūyamāṇa ) *adj.* not being attacked राष्ट्रं जनपदस्तस्मिन्निवासिनश्च पुरुषाश्चौरैरनुपद्रूयमाणा वर्धन्ते ManuBh. ii. 201.16 (*on* 8.302)

**अनुपद्रोतृ** (an–upadrotṛ) *adj.* non-oppressor तद्यथा अनुपद्रोतारं भोजकमधिकृत्य ग्रामीणा भवन्ति वक्तारः स्वामिना स्मः सुखिता इति AbhidhKoBh. 83.3 (*on* 2.49)

**अनुपध** ( an–upadha ) *adj.* **1** not preceded by any letter, not penultimate द्विरुच्यते …। वोष्मा संयुक्तः अनुपधः ṚPrāti. 6.2; यद्यूष्मानुपधो युक्तः स चेदन्तस्थया पुनः। तस्यैव क्रमणं कार्यम् ŚaiśiŚi. 94 (*but* MW., APTE *m.* a letter or syllable (not preceded by another)); **2** devoid of dishonesty तामिमामनुपधेन चेतसा भावयन्तु भुवि भव्यबुद्धयः PadMañ. *on* KāśiVṛ. *on* P. i. 1.0.

**अनुपधत्व** ( anupadha–tva ) *n.* the state of not being preceded by any letter, i. e. not penultimate नकारस्य च लोपो न स्यात्। यथाक्रममनादित्वादनुपधत्वाच्च Nyās. i.91.20 (*on* i. 1.47); i. 550.20 (*on* iii. 1.80)

**अनुपधा** ( an–upadhā ) *f.* **1** not the penultimate (letter) एवमनुपधाया अपि प्रसज्येत MahāBh. iii. 243.9 (*on* vii. 1.6); यत्त्वाह अनुपधायाः … तत्र Nyās. ii. 539.5 (*on* vi. 4.32); **2** absence of fraud or deceit, i. e. purity of thinking चातुराश्रम्यमुपधा अनुपधाश्च VaiśeSū. vi. 2.3; भावदोष उपधादोषोऽनुपधा VaiśeSū. vi. 2.4; तत्र सामान्यानि धर्मे श्रद्धा … ब्रह्मचर्यमनुपधा … अप्रमादश्च PadārthSaṁ. 272. 14; अनुपधा भावशुद्धिः NyāyKa. 276.2; अनुपधाः श्रद्धाया भावस्यादोषाः Upask. 271.9 (*on* vi. 2.3); 272.3 (*on* vi. 2.4)

**अनुपधात्व** ( anupadhā–tva ) *n.* the state of not being the penultimate उपधाया इति वर्ततेऽनुपधात्वान्न भविष्यति MahāBh. ii. 61.10 (*on* iii. 1.78); अनुपधात्वादिति तु … न्यासे प्रमाद एव DurghVṛ. *on* vi. 3.64; सकारात् पूर्वस्यानुपधात्वाद् 'मादुपधायाः' इति वत्वं न स्यात् PadMañ. *on* KāśiVṛ. *on* P. i. 1.57; अनुपधात्वादतो वृद्ध्यसंभवात् PāṇiTaVāNaMā. 92.13; अचः परस्मिन्नित्यल्लोपस्य स्थानिवत्त्वादनुपधात्वादकारस्य गुणो नेत्यर्थः Prasā. ii. 256.12; अकारस्यानुपधात्वादप्राप्तेः LaCandr. 723.14; मित्त्वसामर्थ्यादनुपधात्वेऽपि चिण्णमुलो इति दीर्घविकल्पः SiddhāKau. 375B. 2 (*on* vii. 4.68)

**अनुपधान** ( an–upadhāna ) *n.* **1** non-addition (of a letter) अनुपधानमक्षरस्य धानञ्जय्यो मन्यते comm. *on* LāṭyāŚS. vii. 9.9; **2** absence of imposition or attribution (जीवस्य) उपधानानुपधाने तु विशेषः Bhām. 209.3 (*on* i. 3.14); **3** non-piling up (of sacrificial bricks) अत्र न तावदुपधानं विधीयते इष्टकाभिरग्निं चिनुते इत्यनेनैवार्थप्राप्तत्वात्। इष्टकानामनुपधाने चयनानिर्वृत्तेः VidhiRa. 10 (47.10)

**अनुपधानक** ( anupadhāna–ka ) *adj.* not having any pillow मञ्चे क्षणैकमुत्तानः शयीतानुपधानके ŚārṅgaS. ii. 12.66.

**अनुपधाना** ( an–upadhānā ) *adj.* (*f.*) not having any pillow शय्यायाम् … अनुपधानायां वामपार्श्वशायिनम् … विदित्वा SuśruS. iv. 38.3.

**अनुपधाभूत** ( an–upadhābhūta ) *adj.* which has not become the penultimate (letter) केन पुनरनुपधाभूतस्य नकारस्य लोपः प्राप्नोति Nyās. ii. 530.6 (*on* vi. 4.32)

**अनुपधायक** ( an–upadhāyaka ) *adj.* not productive (of a result) अनुपधायकस्यापि स्वरूपयोग्यत्वे ईशस्येशत्वमेव मानम् GuruCandr. ii. 61.11.

**अनुपधायकत्व** ( anupadhāyaka–tva ) *n.* the state of not being productive संशयं प्रत्यनुपधायकत्वात् GuruCandr. i. 5.6.

**अनुपधालोपिन्** ( an–upadhālopin ) *adj.* which does not have elision of the penultimate (letter) अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीप् प्रत्ययो न भवति। अनुपधालोपी बहुव्रीहिरिहोदाहरणम् KāśiVṛ. *on* iv. 1.12; तत्र अनुपधालोपिनो नित्यो ङीप्प्रतिषेधो भवति Pradī. iv. 37A. 14 (*on* iv. 1.7); अत एवेदमनुपधालोपिनि 'सुपर्वा' इत्यादौ नेति विकल्पोऽर्थसिद्धः LaŚabdeŚe. i. 371.12; i. 374.11.

**अनुपधि** ( an–upadhi ) *m.* non-addition (of any syllable in the *akṣarasadhātu* Sāman) ऊनाक्षरेषु पादेष्वक्षरोपधिः शाण्डिल्यः …। अनुपधिं धानञ्जय्यः LāṭyāŚS. vii. 9.9; *adj.* **1** free from fraud, guileless रहस्यं साधूनामनुपधि विशुद्धं विजयते UttaRāC. 2.2; SubhāRaK. 37.2; यः सौजन्यनिधिः स्थितावनुपधिः सख्यस्य मुख्यो विधिः EI. ii. 337.25; **2** free from hindrance न खलु …। अतिचकितजनव्रजे व्रजेऽस्मिन्ननुपधिरेष तुरंगमप्रचारः KaṁVa. 2.20.

**अनुपधि** ( anupadhi ) *adv.* **1** without any conspiracy, openly अनुपधि रचयित्वा सत्पथे पांसुलत्वम् …। कुटिलगतिरुदस्थान्मन्थरा नाम वात्या RāmaCam. 2.74; **2** without any attribution धीः … धीत्वादेस्तामवेद्यामनुपधि वदतः स्वोक्तिबाधादयः स्युः TattvMu. 4.2.

**अनुपधिक** ( an–upadhika ) *adj.* not having limitation तस्मान्मिथ्यात्मकस्य स्वयमनुपधिकं सत्यमेवास्तु सृतिः TattvMu. 3.44.

**अनुपधिचेष्टा** ( anupadhi–ceṣṭā ) *f.* non-deceptive or fraudless act युध्यमानानामपि सोपध्यनुपधिचेष्टा बुध्येत ManvaMu. 282.28 (*on* 7.194)

**अनुपधिबृहद्बन्धु** ( anupadhibṛhad–bandhu ) *m.* a relative great on account of being a non-expectant (of returns) चेतोभित्तेरनुपधिबृहद्बन्धुरेको विवेकः ŚrīKaC. 3.71 (comm. प्रत्युपकारनिरपेक्षतया)

**अनुपधिशेष** ( anupadhi–śeṣa ) *adj.* free from *upadhi-skandha*, especially of *nirvāṇa*(*dhātu*), i.e. absolute, complete अस्यामेव रात्र्यां मध्यमे यामे तथागतोऽनुपधिशेषे निर्वाणधातौ परिनिर्वास्यति SaddhaPuṇ. 13.27; 239.7 [DBHS.] [in whom there is no longer a condition of individuality, pw.; *nt.*; MW.]

**अनुपधिशेषनिर्वाण** ( anupadhiśeṣa–nirvāṇa ) *n.* emancipation without any limit and residue, absolute or complete emancipation ऐश्वर्यहेतुरभिज्ञाभिस्तदक्षयत्वहेतुश्चानुपधिशेषनिर्वाणेऽप्यनुपच्छेदात् MaYānaSū. 75.19 (11.76(2)); 11.8 (3.3(4))

**अनुपधीक** ( an–upadhīka ) *adj.* free from bonds attaching to existence दृष्ट्वा मुनिं शान्तमनुपधीकम् … न यष्टे न हुते रमामि MaVastuAva. iii. 445.2 [DBHS.]

**अनुपधीयमाना** ( an–upadhīyamānā ) *adj.* (*f.*) not being laid down or piled तस्य अनुपधीयमानाभिरिष्टकाभिश्चयनस्य कर्तुमशक्यत्वेन … स्वरूपेणेष्टकासंबन्धित्वेन च प्राप्तत्वात् MīmāKau. i. 285.18 (*on* i. 4.27)

**अनुपध्मात** ( án–upadhmāta ) *adj.* not blown, not fanned तस्मादेष नानुपध्मातो नानुपज्वलितो ज्वलति ŚatBr. XI. viii. 3.7; यथा बलवदुपध्मातेऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपध्मातो न दहेत् TantrVā. 49.10 (*on* i. 2.30)

**अनुपध्वस्यमान** ( an–upadhvasyamāna ) *adj.* [P. vi. 4.24] not being destroyed, i. e. not degraded (from greater position or status) (शाक्यादयः) अनुपध्वस्यमानाः माहात्म्यादपात्यमानाः AupaSūṬ. 64.2.

**अनुपनत** ( an–upanata ) *adj.* **1** not turned (favourable) to तस्यानुपनताग्न्याधेयस्य यावदुपनामं ब्राह्मौदनिकोत्कभरणकल्पानां याथाकामी comm. *on* ĀpaŚS. v. 7.13; **2** who was not put to or subjected to, independent अनुपनतानां राज्ञा(Read ज्ञाम्) यस्याज्ञा, भवति सर्व्वदापीडा(Read पीडः) EI. xvii. 340.6; वृक्षैर्भिक्षाकपाले … पूर्यमाणे मान्यो वैराग्ययोगेऽप्यनुपनतपरप्रार्थनालाघवोऽभूत् RājTa.(Ka.) 2.171.

**अनुपनततनयजनना** ( anupanata–tanayajananā ) *adj.* (*f.*) who has not turned to (the stage of) giving birth to a child i.e. who has not (yet) given birth to a child अनुपनततनयजननामसितनयनामवेक्ष्य हृदयसरणिधृतव्यथः परिणीरिदमभाणीत् YātrāPra. 1.26(7)

**अनुपनतमनोरथ** ( anupanata–manoratha ) *adj.* to whom desired object has not (favourably) turned, i. e. befallen अनधिगत( v. l. अनुपनत )मनोरथस्य पूर्वं, शतगुणितेव गता मम त्रियामा Vikramo. 3.22.

**अनुपनम्रता** ( anupanamra–tā ) *f.* the state of not being respectful (by way of not bringing water or bowing to a guest), absence of politeness पदोपहारेऽनुपनम्रतापि संभाव्यतेऽपां त्वरयापराधः। तत्कर्तुमर्हाञ्जलिसंजनेन स्वसंभृतिः प्राञ्जलतापि तावत् NaiṣC. 8.22 (comm. अपामनुपनम्रता जलानामनानयनम् … यद्वा … नमस्काराभावः)

**अनुपनयत्वप्रसङ्ग** ( anupanayatva–prasaṅga ) *m.* undesired occasion for the state of not being *upanaya* 'application' (the fourth member of the five-fold (syllogism) दृष्टान्तवैधर्म्येण न तथा चायमधूमवानित्यादिवचनस्यानुपनयत्वप्रसङ्गात् TattvPradī.(Ci.) 252.11.

**अनुपनयन** ( an–upanayana ) *n.* **i** absence of initiation ceremony प्रागेतस्मात् कालादापद्यप्यनुपनयने अध्यापनसामर्थ्ये तु प्राथमकल्पिकात् कालादूर्ध्वं पतनमेव BālaKrī. i. 52.9 (*on* 1.38); व्रात्यता यथाकालमनुपनयनम् DīpKa. 95.18 (*on* 3.234); **ii** non-initiation or what is other than initiation अनुपनयनेऽपि विवाहे भक्त्योपनयनत्वमुच्यते ManuBh. i. 110.26 (*on* 2.67); यदि नामोपनयनशब्दोऽनुपनयने विवाहे प्रयुक्तः ManuBh. ii. 225.22 (*on* 8.373)

**अनुपनयनपक्ष** ( anupanayana–pakṣa ) *m.* view (that approves) of non-initiation मूकोन्मत्तयोः … तयोरनुपनयनपक्षो मनुना केषांचित्पक्षत्वेन उपन्यस्तः PūrvottaVāNaMā. 288.3.

**अनुपनयनाभिप्रायप्रतीति** ( anupanayanābhiprāya–pratīti ) *f.* apprehension of what maintains non-initiation श्रुतावब्राह्मणमात्रस्यानुपनयनाभिप्रायप्रतीतेः कथं शूद्रत्वाभावेत्यसूत्रयदभाषत च TattvPrakā. 59B.12 (*on* i. 3.38)

**अनुपनामुक** ( an–upanāmuka ) *adj.* not turning (favourably) towards तदाहुर्न प्रथमयज्ञे प्रवर्ग्यं कुर्वीतानुपनामुका ह वा एनमुत्तरे यज्ञक्रतवो भवन्तीति GopBr. ii. 2.6 (171.14); अनुपनामुक एनं सोमः स्यात् तस्मात्सामानि न गेयानि Kāṭhakasaṅkalana 11.3.

**अनुपनाह** ( an–upanāha ) *m.* non-hatred अनुपनाहो धर्मालोकमुखमकौकृत्याय संवर्तते LaliVi. 4.6(51) [DBHS.] [want of close attachment or adherence (?), Buddh., MW.]

**अनुपनिगृह्णत्** ( an–upanigṛhṇat ) *adj.* not catching hold of अजाया

उपनिग्रहण इति। सूत्रं बौधायनस्यानुपनिगृह्णन्नेवाजां मन्त्रं जपेदिति शालीकिः BaudhŚS. iii. 90.13.

**अनुपनिनीय** (an-upaninīya) *ger.* not having poured out (प्रोक्षणीः) स्फ्यस्य वर्त्मन्ननुपनिनीयासादयेदिति बौधायनोऽनुपनिनीयैवेति शालीकिः BaudhŚS. iii.22.4.

**अनुपनिपतित** (an-upanipatita) *adj.* which has not occurred or appeared दधिस्वरूपमात्रानुभवः ··· सैव हि पयसो नास्तिता ···। न च तां प्रति पयस एव निरपेक्षस्य हेतुता, अनुपनिपतिते हेत्वन्तरे, पयस एवोपलब्धेः PrakaPañ. 374.22.

**अनुपनिपातिन्** (an-upanipātin) *adj.* not occurring, not appearing इष्ट एवायमर्थ इति चेत्। न। अपूर्वापूर्वोपाध्युपनिपातनियमे प्रमाणाभावात्। अनुपनिपातिनां च ज्ञानान्तरेणाप्यनाकलनात् NyāyVārPari. 173.12.

**अनुपनिबद्ध** (an-upanibaddha) *adj.* not incorporated, not mentioned or discussed (in a text) अतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगात् ··· यत् ··· ज्ञानमुत्पद्यते PadārthaSaṁ. 258.2; कथं पुनरयं धर्मशास्त्रेष्वनुपनिबद्धोऽपि चण्डालस्पृष्टवस्त्रस्पर्शननिमित्तो दोषोऽध्यवसीयते TantrVā. 99.7 (*on* i. 3.3); आचार इति स्मार्तानां सोपनिबन्धानामनुपनिबद्धानां च (उपलक्षणम्) BālaKrī. i. 27.9 (*on* 1.8); न च न्यायमीमांसाभाष्यकाराभ्यां न कृतो नमस्कारः किं तु तत्रानुपनिबद्धः NyāyKa. 1.19; अनुपनिबद्धेष्वागमाप्रतिपादितेषु (अर्थेषु) ··· ज्ञानमुत्पद्यते तदार्षम् NyāyKa. 258.10; यत्र त्वनुपनिबद्धः प्रश्नः स्यादुत्तरोन्नेयः Ekāva. 8.67 (323.8)

**अनुपनिबध्यमान** (an-upanibadhyamāna) *adj.* not being incorporated or (expressly) stated (in a text) यत्रानुपनिबध्यमानोऽपि प्रश्न उपनिबध्यमानादुत्तरादुन्नीयते AlaṅkāSa. 172.2.

**अनुपनिबन्ध** (an-upanibandha) *m.* absence of (express) statement, non-mention (in a text) न चोन्नीतप्रश्नोत्तरेऽव्याप्तिः, उन्नीतस्य प्रश्नस्यैकत्वादनुपनिबन्धाच्चोत्तरस्याप्येकत्वादिति वाच्यम् RasGaṅ. 704.1.

**अनुपनिबन्धन** (an-upanibandhana) *n.* absence of (express) statement, non-mention (वेदः स्मृतिः सदाचारः ··· धर्ममूलमिदं स्मृतम्) अनुपनिबन्धनाच्च स्मृतितो ब्राह्मणपरिव्राजकवद् भेदेनोपन्यासः (सदाचारस्य) BālaKrī. i. 13.7 (*on* 1.7)

**अनुपनिमज्जत्** (an-upanimajjat) *adj.* not dipping into (water while bathing) शिरसि गोमयं कृत्वा शुष्कमनुस्रोतसमनुपनिमज्जन्तोऽसंतापमानाः (स्नान्ति) KauṣīGS. v. 4.2 (comm. अनुपनिमज्जन्तः शिरोऽवगाहनमकुर्वन्तः। पाणिभ्यामुदकमासिच्य स्नान्ति)

**अनुपनिषादिन्** (an-upaniṣādin) *adj.* not staying in the vicinity विशांपतिः ··· द्वादशगुणेनो(?ना)नुपनिषादिनाधिष्ठितम् ··· हेमकूटमारुरोह AvantiKa. 99.18.

**अनुपनीत** (an-upanīta) *adj.* [*f.* -ā] (also used as noun) **1A** not initiated (into the Vedic studies), not invested with the sacred thread (*lit.* not brought near to a Guru) य इदमथर्वशिरो ब्राह्मणोऽधीते ··· अनुपनीत उपनीतो भवति AŚiraU. 7(3); CaturveU. 21.8; MahāU. 6(83); VaṭuU. 318.4; केशवादिद्वादशनामभिः ··· अनुपनीतोऽप्युपनीतो भवति ŪrdhvPuU. 64.13; अथ यस्य पिता पितामह इत्यनुपनीतौ स्यातां ते ब्रह्महसंस्तुताः HirŚS. xxvi. 1.30 (9.1); अनुपनीतानां कुमारीणां च संमार्जनदहनोदकक्रिया एव समन्त्रकाः तूष्णीमितरत् GautPiMe. i. 4.12; नानुपनीतानां कन्यानां वा पितृमेधः BaudhPiMe. ii. 3.11; iii. 6.1; ii. 3.12; कृतचौडमनुपनीतं (मृतं बालम्) जातकाग्निना लौकिकाग्निना वा ··· दाहयेत् VaikhāGS. 7.2; य इमां न विन्दन्ति नाधीयते संध्याकाले नोपासते ते ह्यश्रोत्रिया भवन्त्यनुपनीताः क्रियाहीनाः AVPari. 41(3).3; यो वै ब्रह्मवेदेष्वनुपनीतः स सर्ववेदेष्वनुपनीतः AVPari. 49(5).2; (मृते) बाले ··· अनुपनीते तु त्र्यहाच्छुध्यन्ति बान्धवाः ŚaṅkhaLiDS. 360; ŚaṅkhaSm. 15.5; ViṣṇuDhaP. ii. 75.8; शूद्रमपि कुलगुणसंपन्नं मन्त्रवर्जमनुपनीतमध्यापयेदित्येके SuśruS. i. 2.5; एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु। श्राद्धं साधारणम् MatsyaP. 17.63; PadmP. v. 9.192; गुणेनाध्ययनेनार्थी शूद्रोऽनुपनीतः स्वयमुपेत्याध्येष्यते ŚābaBh. 1380.1 (*on* vi. 1.34); असावनुपनीतोऽपि वेदानधिजगे गुरोः Kāvyāda. 3.178; SaraKaṇṭhā. 48.4; अनुपनीतस्य मृत(ता)शौचं न हि क्वचित् LaghvāśvaSm. 20.89; यो भुङ्क्तेऽनुपनीतेन ··· सार्धं द्विजश्चान्द्रायणं चरेत् VṛGautaSm. 613.11 (16); यस्योपनयनादयः संस्कारा विहितास्तस्य ते भवन्तु, इतरस्त्वनुपनीतः पठिष्यति ṬupṬ. 100.9 (*on* vi. 1.36); अनुपनीतस्य शूद्रसमत्वात् ··· स्मृत्यनध्ययनम् BālaKrī. i. 19.11 (*on* 1.7); अस्मिन्नपि देशेऽनुपनीतेन सहभोजनादिराचारो नैव धर्मत्वेनेष्यते ManuBh. i. 78.12 (*on* 2.18); स ह्यसंस्कृतोऽनुपनीतः शान्त्यै न कस्यचित्तिष्ठति ManuBh. i. 89.20 (*on* 2.29); ii. 378.14 (*on* 11.35); अस्ति चानुपनीतस्य श्राद्धाधिकारः ManuBh. i. 298.7 (*on* 3.202); i. 446.2 (*on* 5.58); i. 509.18 (*on* 6.36); प्रवृत्तिरेवेदृशो लोकस्य यदनुपनीता नाधीयते न च यजन्ते ManuBh. ii. 361.25 (*on* 10.110); यथा ह्यनुपनीताय कन्यां दद्याद् विमूढधीः PārāSū. 13.3; 95.13; विषेर्मानसिकान्पुत्रान् ··· पश्य ···। बालाननुपनीतांश्च पञ्चवर्षशिशून् यथा BrahmVaiP. iv. 96.26; iv. 130.27; शूद्रो वानुपनीतो वा ···। केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते BṛNāraP. 14.64; 25.17; 28.21; अनुपनीतस्यापीति शूद्रस्याप्यधिकारो विद्यासाध्ये कर्मणि स्यात् NayaVi. 13.1 (*on* i. 1.1); अनुपनीतस्यापि ब्रह्मोपदेशः श्रूयते Bhām. 271.3 (*on* i. 3.36); चतुर्थस्तु (वर्गः) विध्यभावादनुपनीत एवाधीत्य विद्यां लब्ध्वाविक्रियत इति ŚāstrDī. 454.3 (*on* vi. 1.7); अनुपनीतस्यानधीतवेदस्य BrahmSūBh.(Rā.) 328.18 (*on* i. 3.39); ŚatDū. 221.26; चशब्दादनुपनीतोऽपि (शुध्येत्) Mitā. 8.15 (*on* 1.21); (अयोग्यो योग्यकर्मकृत्।··· शतदण्डभाक्) अयोग्योऽनुपनीतोऽकृतप्रायश्चित्तो वा Aparā. 822.28 (*on* 2.234); 1037.19 (*on* 3.219); (वर्जयेत् ··· नित्यं मद्यं ब्राह्मणः) नित्यग्रहणमनुपनीतस्यापि निषेधप्राप्त्यर्थम् SmṛtiCan. i. 63.6; ii. 248.13; अव्रतोऽनुपनीतः SmṛtiCan. ii. 407.6; BālamBha. i. 80.5 (*on* 1.22); SmṛtiCan. v. 5.19; ब्रह्मचार्यनुपनीतकन्यानां लौकिकेन कापालेन वा (अग्निना) दहनम् SmṛtiCan. vi. 89.16; श्राद्धं तत्र मन्त्रोच्चारणमनुपनीतेनापि कार्यमेव ManvaVi. 225.15 (*on* 2.172); आधानं विदुषो विद्यानुपनीतस्य नास्त्यतः NyāyMāVi. 369.6 (*on* vi. 8.2); श्राद्धे वेदोच्चारणं कारयेत् यदि स्वयमनुपनीतः Subodhi. 26.18 (*on* 2.50); शूद्रस्यानुपनीतस्य पाकयज्ञादिषु ब्रह्मोच्चारणनिषेधः BrahmSūBh.(Śrī.) i. 485.6 (*on* i. 3.37); अल्पाध्यायिमूर्खव्याध्यादिपीडितानुपनीताः श्रौतान् सायंप्रातर्होमान्न कुर्युः ManvaMu. 456.17 (*on* 11.36); अनुपनीतानामपि प्रयागे वपनं कार्यम् TristhaSe. 23.25; निषादस्य त्वनुपनीतस्यापि ··· मन्त्रग्रहणमुपपद्यते ŚivārkaMaDī. i. 483.19 (*on* i. 3.36); अन्यथा द्विज इत्यादिशब्दोल्लेखेन विहितमशौचादिकमनुपनीतस्य न स्यात VīraMi. 47.11 (*on* 1.21); अनुपेतः अनुपनीतः VīraMi.(Āhnika.) 396.16; और्ध्वदेहिके चानुपनीतस्यापि पुत्रस्याधिकारः VīraMi.(Śrāddha.) 354.8; अध्ययनमपि चोपनयनस्य न नियमेनाक्षेपकम्। अनुपनीतस्यापि तत्संभवात् MīmāKau. ii. 31.16 (*on* ii. 3.4); अनुपनीतस्त्रीशूद्रादेस्तूत्तरीयेणैव सव्यापसव्ये ज्ञेये NirṇaSi. 300.7; 43.21; पिमस्त्यनुपनीतस्य वाजपेयादिभिर्मखैः SabhāŚ. 17; **1B** not trained अनुपनीतं हि चक्षुः स्फुटितपिण्डगण्डमिव महतीं करोति विचिकित्सामन्तःकरणस्य YaśasCam. ii. 65.2 (comm. अनुपनीतम् अकृतसंस्कारम्); **2A** not brought near or in contact with यथा दाहकोऽपि वह्निरुपनीतं दाह्यं दहति, नानुपनीतमदाह्यं च BrahmSi. 15.26; (बुद्धेः) वृत्तिः··· तयानुपनीतोऽर्थो नात्मनानुभूयते Kāśi. i. 225.20 (*on* 4.50); अप्रतीते संस्काराभावात्, संस्कारानुपनीतस्य चारोपयितुमशक्यत्वात् NyāyKuA. i. 102.8; **2B** not brought near (for alluring) (गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम्) गम्यास्वपि शूद्रादीनामुपरतभर्तृकासु भ्रातृभार्यासु पुष्पाञ्जल्याद्यनुपनीतासु BālaKrī. i. 295.11 (*on* 2.294)

**अनुपनीतत्व** (anupanīta-tva) *n.* **1** the state of not being brought near or in contact (बुद्धिः) तयार्थोऽनुपनीतत्वादात्मना नानुभूयते ŚlokaVār. 4.50 (148.7); **2** the state of not being initiated उक्तं चानुपनीतत्वाच्छ्रुतिविहितधर्माभावे स्मृतिविषये सामान्यविहिता धर्माः··· ते नास्य प्रतिषिध्यन्ते ManuBh. ii. 366.29 (*on* 10.127); यस्य तु प्रपितामहादेरुपनयनं न स्मर्यते तत्रार्थादेतेषामपि पुरुषाणामनुपनीतत्वं ते सर्वे श्मशानवदशुचयः Aparā. 1109.14 (*on* 3.267); 68.23 (*on* 1.39); तेषाम् ··· शूद्रत्वानुपनीतत्वप्रयुक्तं प्रतिषेधमुल्लङ्घ्याध्ययनं लिखितपाठादिना भविष्यति ŚivārkaMaDī. i. 487.19 (*on* i. 3.39); VīraMi. 930.7 (*on* 3.234); तथापि व्रात्यानामनुपनीतत्वापरिहारेणैव व्रात्यत्वोक्त्या न तत्सामान्यधर्मनिवृत्तिः VīraMi.(Saṁskāra.) 349.1.

**अनुपनीतदौहित्रभागिनेय** (anupanīta-dauhitrabhāgineya) *m.* son of a daughter (i. e. grandson) and that of a sister (i. e. nephew) who are not initiated मांसस्त्रीसंगमक्षितिशयनमलस्नानोत्सवादिवर्जम्(जनम्) ··· यद्वानुपनीतदौहित्रभागिनेयविषयमेतत् Aparā. 914.7 (*on* 3.23)

**अनुपनीतद्विज** (anupanīta-dvija) *m.* a twice-born (member of the three Hindu higher castes) who is not initiated (एकोद्दिष्टं श्राद्धम्) द्वादशाब्दत्सरादित्यनुपनीतद्विजानूढशूद्रविषयम् NirṇaSi. 367.18.

**अनुपनीतद्विजातिपर** (anupanītadvijāti-para) *adj.* pertaining to a twice-born who is not initiated प्रमाणमियत्ता तत् अनुपनीतद्विजातिपरम् VīraMi.(Āhnika.) 46.18.

**अनुपनीतधर्म** (anupanīta-dharma) *m.* duty of the uninitiated इति स्मृतिचन्द्रिकायामनुपनीतधर्माः SmṛtiCan. i. 66.15; अथानुपनीतधर्माः VīraMi.(Saṁskāra.) 326.2.

**अनुपनीतपुत्र** (anupanīta-putra) *m.* son who is not initiated अत एव निषेधादुपनीतपौत्रसत्त्वेऽप्यनुपनीतपुत्रस्यैवाधिकारः NirṇaSi. 271.6.

**अनुपनीतप्रकरण** (anupanīta-prakaraṇa) *n.* chapter or section dealing with the uninitiated एतदनुपनीतप्रकरणेऽभिहितम् VīraMi.(Saṁskāra.) 349.1.

**अनुपनीतप्रमीत** (anupanīta-pramīta) *adj.* who has died without being initiated अनुपनीतप्रमीतांश्च स्वकुलोत्पन्नाजन्तूंस्तथा ··· उद्दिश्य ··· अन्नम् ···

पृथक् त्याज्यम् Aparā. 504.12 (*on* 1.240)

**अनुपनीतप्रयाणनिमित्त** (anupanītaprayāṇa-nimitta) *adj.* caused by the death of one who was not initiated एतच्चानुपनीतप्रयाणनिमित्ते अतिक्रान्ताशौचे च त्रिरात्रादौ वेदितव्यम् Mitā. 336.8 (*on* 3.18)

**अनुपनीतबालविषय** (anupanītabāla-viṣaya) *adj.* dealing with the topic of a boy who is not initiated संपातावनयोपवासावनुपनीतबालविषयौ Aparā. 1158.27 (*on* 3.289)

**अनुपनीतवत्** (anupanīta-va(n)t) *adj.* who has not carried out the ceremony of initiation ( तं ( शूद्रम् ) प्रजापतिः ) सृष्ट्वानुपनीतवान् । अतो नोपनेय इत्यर्थः Aparā. 23.24 (*on* 1.10)

**अनुपनीतशत** (anupanīta-śata) *n.* a hundred (i.e. many) uninitiated persons अनुपनीतशतमेकमेकेनोपनीतेन तत्समम् BṛJābāU. 8(6); Nṛsiṁ-PūTāU. 5.8(3)

**अनुपनीतशवनिमित्ताशौच** (anupanītaśavanimittāśauca) *n.* impurity or defilement caused by the corpse of the uninitiated अनुपनीतशवनिमित्ताशौचस्य प्रागुक्तत्वात् SmṛtiCan. vi. 35.5.

**अनुपनीतसपिण्ड** (anupanīta-sapiṇḍa) *m. sapiṇḍa* (a kinsman who shares a riceball with departed ancestors) who was not initiated यदा तु दशरात्रजननाशौचमध्येऽनुपनीतसपिण्डमरणादि त्रिरात्राशौचं भवति HārLa. 67.14.

**अनुपनीतसहभोजनादि** (anupanīta-sahabhojanādi) *adj.* taking food etc. with one who is not initiated तस्मिन्नपि च देशेऽनुपनीतसहभोजनादयोऽनाचाराः ··· दृश्यन्ते VīraMi.(Paribhāṣā.) 56.3; MayūMāli. 34.1 (*on* i. 3.5)

**अनुपनीतसाधारण** (anupanīta-sādhāraṇa) *adj.* common to the uninitiated द्विजातिपुरस्कारेणाभिधानमनुपनीतसाधारणम् VīraMi. 957.13 (*on* 3.254)

**अनुपनीतस्त्र्याद्यश्रवणार्थम्** (anupanītastryādyaśravaṇārtham) *adv.* for the sake of not listening to by the uninitiated and women etc. ( 'शुक्रं प्रविध्य 'इत्यादिमन्त्राणाम् ) अरण्येऽनुवाक्यत्वम् ।··· अनुपनीतस्त्र्याद्यश्रवणार्थम् अदृष्टार्थं वा तत्स्यात् ŚrutaPra. ii. 487.17 (*on* iii. 3.25)

**अनुपनीतादि** (anupanītādi) *adj.* the uninitiated etc. इतरो दाक्षिणात्य इतरस्मिन्नुदीच्ये देशेऽनुपनीतादिना सह भोजनादिकं कुर्वन् दुष्यति न स्वदेशे SmṛtiCan. i. 24.16.

**अनुपनीताध्ययन** (anupanītādhyayana) *n.* study (of the Vedas etc.) by the uninitiated अनुपनीताध्ययने क्रतोर्वैगुण्यम् ṬupṬ. 100.12 (*on* vi. 1.37)

**अनुपनीतावस्थ** (anupanītāvastha) *adj.* who is in the uninitiated state उपनेयस्यैव ह्यनुपनीतावस्थस्य निषेधः, नानुपनेयस्यापि शूद्रस्य NayaVi. 13.2 (*on* i. 1.1)

**अनुपनीतोपनयन** (anupanītopanayana) *n.* initiation-ceremony of the uninitiated आदावनुपनीतोपनयनान्तरम् ··· सद्गुरुमासाद्य NāraPaU. 2.

**अनुपनीतोपरम** (anupanītoparama) *m.* cessation or death of the uninitiated तस्मिन्नेव उपनीतोपरम एव अतिक्रान्ताशौचं नानुपनीतोपरम इति SmṛtiCan. vi. 56.8.

**अनुपनीय** (an-upanīya) *ger.* **1** not having initiated तान्हानुपनीयैवैतदुवाच ChāndoU. v. 11.7; न चाध्यापयिताध्येतारमनुपनीयाध्यापयितुं क्षमः BālaKrī. i. 22.26 (*on* 1.7); तानौपमन्यवप्रभृतीननुपनीयैवाश्वपतिः प्रोवाच PrakaVi. 306.19; VedāntKa. 187.10 (*on* i. 3.38); **2A** not having taken the help of, i.e. brought near इतिकर्तव्यताम् ··· ग्रहीतुं गुणोऽपि च न धात्वर्थमनुपनीय स्वतन्त्रः शक्नोति TantrVā. 1121.4 (*on* iii. 6.43); **2B** not having brought near, not having known तत्तन्निषेध्यमनुपनीय निषेधस्य प्रतिपादयितुमशक्यत्वात् NyāyVārPari. 637.5; **2C** not having brought down (the crown in respect) सहस्रलोचनः···आदाय···मालिकां, पश्यत एव महर्षेः, अनुपनीय मकुटतटीम् ··· स्कन्ध एव सिन्धुरस्य निवेशयामास NīlaVi. 13.9.

**अनुपनीयमान** (an-upanīyamāna) *adj.* [*f.* -ā] not being brought forth, i.e. recollected or known भावना तावत् ··· आख्यातप्रत्ययान्तरेणानुपनीयमाना न कथंचित् प्रत्यभिज्ञायते TantrVā. 621.21 (*on* ii. 3.24); प्रकरणेनाश्रयेऽनुपनीयमाने साकाङ्क्षत्वादपरिपूर्णता TantrVā. 752.6 (*on* iii. 1.21)

**अनुपनेतृ** (an-upanetṛ) *m.* one who does not initiate or perform the rite of initiation यस्तर्ह्यनुपनेता कृत्स्नवेदाध्यापकश्च तस्य किं लक्षणम् ManuBh. i.149.15 (*on* 2.141); पितृव्यादीनामनुपनेतॄणां यो भार्यागामी न तस्य गुरुतल्पगत्वम् Aparā. 1049.20 (*on* 3.233)

**अनुपनेतृत्व** (anupanetṛ-tva) *n.* the state of not being an initiator विप्रग्रहणं चोपलक्षणार्थम् अनुपनेतृत्वात् BālaKrī. i. 50.10 (*on* 1.34)

**अनुपनेय** (an-upaneya) *adj.* not fit or eligible to be initiated उन्मत्तादयस्त्वनुपनेयाः कुतस्तेषां विवाहः ManuBh. ii. 300.3 (*on* 9.203); निषेधः, नानुपनेयस्यापि शूद्रस्य NayaVi. 13.2 (*on* i. 1.1); पारशवचण्डालौ ··· अनुपनेयौ ManvaMu. 438.32 (*on* 10.68); BālamBha. i. 284.20 (*on* 1.94); VīraMi.(Saṁskāra.) 126.22.

**अनुपनेयता** (anupaneya-tā) *f.* the state of not being fit or eligible to be initiated अनुपनीते माणवके कालातिपत्तावनुपनेयता प्राप्ता ManuBh. i. 95.6 (*on* 2.38)

**अनुपनेयत्व** (anupaneya-tva) *n.* the state of not being fit or eligible to be initiated अनुपनेयत्वं तु पूर्वेणैव सिद्धम् ManuBh. i. 96.6 (*on* 2.39); शूद्रस्यानुपनेयत्वम् ··· गौतमापस्तम्बवाक्याभ्यां सिद्धम् VīraMi.(Saṁskāra.) 133.22.

**अनुपन्यसनीय** (an-upanyasanīya) *adj.* not (fit) to be mentioned or stated यदा कर्मादयो विभक्त्यर्थास्तदैकत्वादयो विशेषणत्वेनेत्येतत्पूर्वपक्षवचनत्वादनुपन्यसनीयम् TantrVā. 959.4 (*on* iii. 4.13); भावग्रहणमधिकृत्य ल्युटो विधानादिदमिहानुपन्यसनीयमेव स्यात् Nyās. i. 687.1 (*on* iii. 3.18); रजतधियः शुक्तिगोचरायाः किं निबन्धनम् ···। प्रमाणान्तरं त्वसंभवादनुपन्यसनीयम् Kāśi. ii. 18.10 (*on* 5(1).19)

**अनुपन्यसनीयतापत्ति** (anupanyasanīyatāpatti) *f.* undesired contingency of the state of being what is not to be mentioned शूद्रस्य विद्याधिकारे उक्तवैदिकलिङ्गासिद्धेः वक्ष्यमाणबाधकानां चानुपन्यसनीयतापत्तेः ŚivārkaMaDī. i. 480.10 (*on* i. 3.34)

**अनुपन्यसनीयत्व** (anupanyasanīya-tva) *n.* the state of being what is not to be discussed or commented upon नैवं प्रधानविषयः प्रश्नोऽस्ति । अपृष्टत्वाच्चानुपन्यसनीयत्वं तस्य BrahmSūBh.(Śaṅ.) 236.1 (*on* i. 4.6)

**अनुपन्यस्त** (an-upanyasta) *adj.* **A** not clearly laid down or presented (in a judicial proceeding) छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः । भूतमप्यनुपन्यस्तं हीयते व्यवहारतः YājñaSm. 2.19 ( Mitā. अनभिहितम् ); भूतमपि वस्तु वादिप्रतिवादिभ्यामनुपन्यस्तमनिवेदितम् Aparā. 624.23 (*on* 2.19); Subodhi. 8.18 (*on* 2.19); DīpKa. 39.18 (*on* 2.19); अर्थिनि मृते तत्पुत्रादिना अज्ञातत्वादनुपन्यस्तेऽर्थे क्वासौ साक्षी स्यादिति मृत(? ता)न्तरोऽसाक्षी VīraMi. 500.24 (*on* 2.68–72); **B** not properly stated or mentioned अन्त्यपदवाक्यत्वं परैरनुपन्यस्तमपि संभवादुपन्यस्यते, तदनन्तरं हि वाक्यार्थः प्रतीयते NyāyRa. 860.13 (*on* 7.49); **C** not established बाधप्रतिरोधौ प्रति प्राबल्यसाम्ययोरङ्गत्वादनुपन्यस्तस्य प्रमाणस्य तन्निरूपणासंभवात् TārkiRa. 290.7.

**अनुपन्यस्तत्व** (anupanyasta-tva) *n.* **A** the state of not being mentioned (properly) न च ··· अयमर्थो निराकृत इति पाठादेवावगम्यते, पूर्वमनुपन्यस्तत्वादस्यार्थस्य Bṛha. 5.9 (*on* i. 1.1); न द्वितीयः ( विकल्पः ) ··· सिद्ध्युपायान्तरस्यानुपन्यस्तत्वात् Vādā. 68.4; पक्षान्तरपरिग्रहोऽप्यथशब्दस्यार्थो दृष्टः । सोऽत्र न संभवति । पूर्वं कस्यचित्पक्षस्यानुपन्यस्तत्वात् ŚivārkaMaDī. i. 23.18 (*on* i. 1.1); **B** the state of not being put forth or brought forward (in a syllogism) अज्ञानद्वारिकायां त्वविषयवृत्तित्वमज्ञानं हि पक्षादेर्दोषः न त्वनुपन्यस्तत्वेनापक्षादिभूतस्य TārkiRa. 280.13.

**अनुपन्यस्य** (an-upanyasya) *ger.* **Ai** not having referred to, not having stated वेदवाक्यानि ··· वेदसमाम्नायविनाशभयात्स्वरूपेणानुपन्यस्य ··· पिण्डीकृत्य स्मर्यन्ते TantrVā. 105.21 (*on* i. 3.4); न हि अमुख्यमर्थमनुपन्यस्य मुख्यस्यार्थस्य सौकर्येण प्रतिपादनं संभवति PañcPra. 44.3; वार्तिके तु ··· पक्षमतिमन्दत्वादनुपन्यस्य त्रयः पक्षा इत्युक्तम् ŚāstrDī. 285.14 (*on* iii. 5.6); सूत्रे ··· लिङ्गविशेषमनुपन्यस्य सामान्येनानुपपत्तेरित्युक्तम् ŚivārkaMaDī. i. 235.18 (*on* i. 1.17); i. 491.2 (*on* i. 3.39); यदि सृष्टिमनुपन्यस्य प्रपञ्चस्य निषेधो ब्रह्मणि प्रतिपाद्येत VedāntPari. 309.2; प्रस्तुतार्थमनुपन्यस्य ··· तत्प्रतिबिम्बभूतार्थमात्रोपन्यासाल्ललिताऽलंकारः RasGaṅ. 678.5; संशयपूर्वपक्षावनुपन्यस्य ··· सिद्धान्तमात्रमुक्तवान् MayūMāli. 692.12 (*on* x. 3.16); **Aii** not having put forth (in a syllogism) अन्वयाव्याप्तिमनुपन्यस्य तदुपन्यासस्याप्राप्तकालत्वम् TattvCin. ii(1). 590.2; **B** not having established प्रमाणमनुपन्यस्य सास्तीत्यङ्गीक्रियते ( प्रमाणसत्ता ) KhaṇḍanKhā. 90.5.

**अनुपन्यस्यमान** (an-upanyasyamāna) *adj.* not being put forth कस्मिंश्चिद्धर्मिणि प्रतिनियते तस्मिन्ननुपन्यस्यमाने निराश्रयो हेतुर्न प्रवर्तते NyāyKa. 234.21.

**अनुपन्यास** (an-upanyāsa) *m.* **Ai** improper reference, wrong illustration अपूर्व इति । एवमपदिष्टो हेतुः । तस्मादनुपन्यासः सत्त्ववदिति ŚābaBh. 1531.3 (*on* vii. 1.4); अयस्कान्तस्य ··· परिमार्जनाद्यपेक्षा चास्यास्ति – इत्यनुपन्यासः 'पुरुषाश्मवद्' इति BrahmSūBh.(Śaṅ.) 358.15 (*on* ii. 2.7); आकुमारं च यशः पाणिनेः प्रख्यातमिति सुप्रसिद्धप्रयोजनत्वादनुपन्यासः ManuBh. i. 2.10 (*on*

1.1); **Aii** improper presentation (in a judicial proceeding) पराजय एवं स्वपक्षसाधनाभावादपि। अभावनिश्चयश्च पुनः पुनरवसरेऽनुपन्यासात्कारणान्तरस्य चानुपन्यासेऽभावादिति ManuBh. ii. 99.19 (*on* 8.57); **Bi** absence of statement or mention, non-reference (संदेहस्य) वाक्यार्थेषु ··· मीमांसासिद्धत्वाद्व्याकरणेऽनुपन्यासः TantrVā. 211.18 (*on* i. 3.18); प्रथमाध्यायप्रथमसूत्रे हि धर्मज्ञानेच्छाया वक्ष्यमाणव्याख्येयत्वेनानुपन्यासात् TantrVā. 659.22 (*on* iii. 1.1); विप्रग्रहणं चोपलक्षणार्थम् ···। ये त्वन्ये वित्तादिभिर्मान्यास्तेषामत्रानुपन्यासः BālaKrī. i. 59.12 (*on* 1.34); (ईश्वरस्य) विमर्शावसरेऽस्यानुपन्यासः Bhām. 554.10 (*on* iii. 2.9); सः (आत्मा) च तत्स्थतयाभिव्यक्तावन्तर्गतः। अतस्तत्रा(द?)नुपन्यासः ŚrutaPra. iA. 161.24 (*on* i. 1.1); तद्रजतमित्यस्य भाष्यकारेणानुपन्यासात्स्वयं तत्संबन्धं दर्शयति NyāySu.(So.) 56.18 (*on* i. 2.10); 79.22 (*on* i. 2.23); न च परत्वस्य बाधप्रयोजकत्वे माध्यमिकमर्यादया त्र्यन्तानामपि बाध्यत्वमिति वाच्यम्, परत्वमात्रस्य बाधकत्वेनानुपन्यासात् ŚatDū. 129.26; ब्राह्मादिविवाहेषु ··· किम् ··· सत्यपि सापिण्ड्ये वाचनिकोऽयं विवाह इति। न ···। तादृशवचनस्य श्रीमद्भिरप्यनुपन्यासात् VīraMi.(Saṁskāra.) 717.20; (गौणी वृत्तिः) वेदेऽपि ··· उपन्यस्ता। वार्त्तिके तु प्राचुर्याभावादेवानुपन्यासः MīmāKau. i. 275.19 (*on* i. 4.23); 'शरोऽचि' इत्यस्यानुपन्यासेन ··· अनावश्यकता सूचिता LaŚabdeŚe. i. 105.10; नसाद्यादेशानां कोशेऽनुपन्यासः LaŚabdeŚe. i. 233.12; **Bii** absence of putting forth (in a syllogism) न च नीलधूमादित्यादौ विशिष्टकर्तव्यमन्येन केनापि कृतं, धूमवत्त्वादित्यनेनैव कृतमिति चेत्। न। (अप्रयोगः) तथानुपन्यासात् TattvCin. ii(1). 852.5; प्रतिज्ञातार्थे हेतूपन्यासे सनिमित्तत्वप्रसङ्गः, अनुपन्यासे च प्रतिज्ञातार्थासिद्धिः VivaPraSaṁ. 267.20 [non-addition, *nt.*; uncertainty, doubt, MW.]

**अनुपपत्ति** (an-upapatti) *f.* **1** non-accomplishment **2Ai** impossibility **ii** inapplicability **iii** untenability, unreasonableness, failure of proof **Bi** contradiction, incompatibility **ii** failure to be present together, absence of coexistence **3** adversity, non-availability, insufficiency of means **1** non-accomplishment अभ्यासानुपपत्तौ ज्योतिष्टोमः पूरणः KātyŚS. xxiv. 7.19; दीक्षाक्रयप्रसवोत्थानानि सर्वसत्त्रेषु पूर्वपक्ष उपपादयेयुः। तेषामेकस्यानुपपत्तौ क्रयोऽपरपक्षे स्यात् LāṭyāŚS. x. 1.2 (comm. असामर्थ्यं कालेऽस्य संपादने); प्रयोगैक्ये तूक्तानुपपत्तिः BālaKrī. i. 12.3 (*on* 1.4–5); व्रीहीनप्रोक्ष्य यागानुष्ठानेऽपूर्वानुपपत्तेः ArthSaṁ. 42.2; पूर्णोपमाया अन्यथानुपपत्त्या गुणक्रियासाम्यस्यैवार्थविश्लेषविषयतया ···पूर्णोपमाविषयतायुक्ता SāhiDa. 495.10; पञ्चदशत्वस्य प्रथमोत्तमसामिधेन्योस्त्रिरभिधानमन्तरेणानुपपत्तेः Upask. 9.10 (*on* i. 1.3); **2Ai** impossibility एकाजनेकाज्ग्रहणेषु चानुपपत्तिः Vār. 7 *on* ŚivSū.(Gr.) 1; पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात् Vār. 4 *on* P. ii. 2.24; लस्याप्रथमासमानाधिकरणेनायोगादादेशानुपपत्तिर्यथान्यत्र Vār. 1 *on* P. iii. 2.124; सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः Vār. 2 *on* P. iv. 1.48; संभूते ह्यर्थानुपपत्तिः Vār. 2 *on* P. iv. 3.42; प्रथमानुपपत्तिस्तु। स्ववचनात्सिद्धमिति MahāBh. i. 349.7 (*on* i. 4.97); द्विवचनबहुवचनयोरनुपपत्तिः MahāBh. i. 431.27 (*on* ii. 2.29); (आत्मा) नेतरोऽनुपपत्तेः BrahmSū. i. 1.16; i. 2.3; रचनानुपपत्तेश्च नानुमानम् BrahmSū. ii. 2.1; ii. 2.32; ii. 2.39; असंभवस्तु सतोऽनुपपत्तेः BrahmSū. ii. 3.9; न चात्मात्मानं जनयति। यदि ह्यात्मात्मानं जनयेज्जातो वा जनयेदात्मानमजातो वा, तच्चोभयथाप्ययुक्तम्। न हि जातो जनयति सत्त्वात्, न चाजातो जनयत्यसत्त्वात्, तस्मादुभयथाप्यनुपपत्तिः CaraS. iv. 3.3(3) (1941 Ed.); विचित्रभोगानुपपत्तिरन्यधर्मत्वे SāṁkhyaPraSū. 1. 17; 5. 35; अन्यतमापायेऽर्थस्यानुपपत्तेः NyāyBh. 1.13 (*on* i. 1.1); 33.6 (*on* i. 1.22); अस्तित्वेनाधिगते नास्तीति विज्ञानं मिथ्याप्रत्ययः। तस्यानुपपत्तिः NyāyVār. 25.10 (*on* i. 1.2); संबन्धानुपपत्त्या च लक्षणेति जगुर्बुधाः SarvaVeSāSaṁ. 734; तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायाम् BrahmSūBh.(Śaṅ.) 1.3 (*on* i. 1.1); 39.8 (*on* i. 1.5); अनेकधा विप्रतिपत्तेर्वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या BrahmSūBh.(Śaṅ.) 250.17 (*on* i.4.14); 412.4 (*on* ii. 2.39); पुरुषयत्नस्य इच्छातोऽनुष्ठानानुपपत्तेः अनुपपत्तिरेव तद्धेतुकस्य ··· स्यात् BrahmSūBh.(Śaṅ.) 663.13 (*on* iii. 3.28); ज्ञानकर्मणोर्विलक्षणकार्यत्वात् कार्यैकत्वानुपपत्तिः BrahmSūBh.(Śaṅ.) 792.8 (*on* iv. 1.16); शमदमादीनाम् ··· अन्याश्रमेष्वनुपपत्तेः AitUBh. 246.6 (*on* 1.0); क्रतुमयः। पुरुषः···न च पाप्मसंसर्ग ईश्वरस्य अविद्यादिदोषस्यानुपपत्तेः ChāndoUBh. 176.7 (*on* iii. 14.2); आप्तकामानां हि कामाभावे स्वात्मन्यवस्थानात्प्रवृत्त्यनुपपत्तिः TaiUBh. 188.5 (*on* 1.1); अनुपपत्तिरसंभवः···। चन्द्रिकायामुन्निद्रत्वमरविन्दस्य इत्यनुपपत्तिः KāvyālaṅSū. iv. 2.20; iii. 1.3; इह च ··· यद्विशेषस्थापनमपि कृतं तत्सामान्यस्थापनार्थमेव। तेन विना सामान्यस्यानुपपत्तेः Śarka. 2.18; रूप्यस्यापि बाधं परिकल्प्य तस्यासत्त्वकल्पनानुपपत्तेः IṣṭaSi. 40. 23; कस्मादद्वितीयश्रुत्यनुपपत्तेः BrahmSūBh.(Bhā.) 132.3 (*on* ii. 3.9); नामधेयेन पदार्थाभिधानमुद्देशः···अनुद्दिष्टस्य लक्षणपरीक्षानुपपत्तेः NyāyMañ. i. 11.24; i. 12.23; निरतिशयशक्तिश्च प्रजापतिः तत्र का नामानुपपत्तिः ManuBh. i. 20.12 (*on* 1.23); ननु पथ्यालक्षणान्तर्भूतत्वात् पुनरुक्तमेतत्। नैवम्। विपुलावर्गस्येदानीमारभ्यमाणत्वात् तद्विनानुपपत्तेः MṛtaSaṁ. 107.17 (*on* 5.17); अनुपपत्तिरेव तस्य (भावनाप्रचयस्य) NyāyKa. 4.1; संबन्धग्रहणसंस्कारादेवार्थधीसिद्धेः संबन्धकल्पनानुपपत्तेः NayaVi. 187.4 (*on* i. 1.5); 276.1 (*on* i. 1.25); न खलु सत्यं नाम न किंचिदस्तीति वाच्यम्। तदभावे तदधिष्ठानस्य अनृतस्याप्यनुपपत्तेः Bhām. 52.8 (*on* i. 1.1); 53.20 (*on* i. 1.1); 144.11 (*on* i. 1.22); प्रकृतिपुरुषसंयोगवियोगयोरीश्वरेच्छाव्यतिरेकेगानुपपत्तेः RājMār. 12.1; PratyabhiVi. i. 268.2 (*on* i. 5.15); देवादीनां नाटकनायकत्वानुपपत्तेः AbhinBhā. ii. 414.18 (*on* 18.12); द्वितीयमपि वर्णकमयुक्तमित्याक्षिपति। 'द्वितीयेऽपि वर्णके' ऽस्त्येवानुपपत्तिः TantrRa. 46.5; संबन्धः।··· अनुपपत्तिनियमाभ्यां व्यतिरेकी ĀtmaTaVi. 831.16; NyāyKuA. i. 160.2; अवश्यंभावी च भावानुभवो निरालम्बनस्य भ्रमस्यानुपपत्तेः Kiraṇā. 20.12; अनुपपत्तिर्हि न तावद्रजतावभासस्य NyāyMa. 93.1; एकदेशस्याप्याकाशस्य ··· दृष्टान्ततायां न काचिदप्यनुपपत्तिः PramāMa. 5.3; अनुपपत्तेः। तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते BrahmSūBh.(Rā.) 206.16 (*on* i. 1.17); दुःखमिश्रपरिमितसुखलवभागिनि शारीरे त्वेषां गुणानामनुपपत्तेः VedāntSā.(Rā.) 61.6 (*on* i. 2.3); विषयशून्यज्ञानस्य क्वचिदप्यनुपपत्तेः NītiMā. 24.20; धर्मस्य नित्यत्वात् तस्य च निराश्रयस्यानुपपत्तेः PramāMī. 62.4 (*on* ii. 1.29); व्यापकव्यतिरेकेण व्याप्यस्यानुपपत्तिरिहार्थापत्तिरभिमता TattvPradī.(Ci.) 244.11; मुख्यार्थबाधोऽनुपपत्तिः··· 'गङ्गायां घोषः' इत्यादावनुपपत्तिः KāvyKaVṛ. 43.17 (2.4); (अनुपपत्तेस्तु) एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव BrahmSūBh.(Ma.) 9B. 9 (*on* i. 2.3); 33A. 2 (*on* ii. 3.9); तथाविधायाः कस्याश्चिदनुपलब्धेः अनुपपत्तेश्च NyāyKu. 41.8; दानस्य दातृव्यतिरेकेणानुपपत्तेः CaturCin. i. 86.13; दोषात्ययं विनात्यन्तविज्ञानत्वस्यानुपपत्तेः SyādvāMañ. 1 (44); 9 (83); श्रूयमाणानां तदसाधारणधर्माणां तदितरस्मिन्ननुपपत्तेः VedāntPāSau. 31.24 (*on* i. 1.1); 165.23 (*on* ii. 1.22); जगत्कारणोत्पत्त्यनुपपत्तेः VedāntPāSau. 216.4 (*on* ii. 3.8); सर्वगतस्य···इति नात्र काचिदनुपपत्तिः VedāntKau. 59.20 (*on* i. 2.14); 216.9 (*on* ii. 3.8); अनुपपत्तिरेवोपपत्तिः ŚatDū. 142.13; जीवप्रापकसद्भावेऽप्यनुपपत्त्या तस्य सर्वगतत्वाभावः TattvPrakā. 31A. 2 (*on* i. 2.7); मुख्यार्थ एव शब्दोऽनुपपत्त्या क्वचिदमुख्यार्थः NyāySu.(Ja.) 14B. 6 (*on* i. 1.1); केचन बृहस्पतिवचनेऽपि तनयशब्दो दौहित्रपितॄणामुपलक्षक इति कथयन्ति। तन्मन्दम् अनुपपत्त्या हि लक्षकत्वं शब्दानाम् Subodhi. 74.4 (*on* 2.135-136); जगत्प्रसूतिहेतुत्वादीनां परमेश्वरधर्माणां तस्मिन्ननुपपत्तेः BrahmSūBh.(Śrī.) i. 234.3 (*on* i. 1.17); ii. 99.9 (*on* ii. 2.30); तेन व्यपदेशादुपमानात्तदन्यथानुपपत्तेः ArthSaṁ. 104.1; यत्र ··· अन्वयोऽनुपपत्त्या बाध्यते SāhiDa. 260. 8; तद्विनाशस्याश्रयविनाशमन्तरेणानुपपत्तेः Upask. 304.3 (*on* vii. 1.18); एतत्प्रत्ययान्यथानुपपत्त्यैव भेदाभेदसिद्धिः SarvaDaKau. 91.3; 142.2; संबन्धानुपपत्तिभ्यां गुणयोगाच्चार्थप्रतीतिसंभवे तत्रापि शक्तिकल्पनमयुक्तम् TantrRaha. 33.29; श्रवणेनाज्ञानं निवृत्तमित्यनुभवस्य चानुपपत्तेः Nyāyāmṛ. 625B. 1; न चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम् SiddhāMu. 15.33 (*on* 36); स्वप्रकाशात्मन्यविद्याया अप्यनुपपत्तेः SiddhāBi. 30.1; भाष्यकारेणोपन्यस्तस्योदाहरणस्यानुपपत्तिः PāṇiTaVāNaMā. 8.13; लिङ्गैकत्वे प्रमातृभेदस्याप्यनुपपत्तेः SiddhāTa. 18.6; विशेषणत्वस्यैवानुपपत्तावेकार्थीभावलक्षणसामर्थ्यानुपपत्तेः MīmāKau. iii(1). 52.20 (*on* i. 2.27); तत्र निर्विकल्पकरूपस्य स्मरणस्यानुपपत्तिः ŚaktiVā. 67.3; MānaMe. 118.2; लोहापवृत्ते चलिते त्ववश्यं तदाश्रितं खेटभवं तथैव।··· द्विधैव चलत्यतो नानुपपत्तिरत्र SiddhāTaVi. 46.8; 195.23; अवशिष्टग्राहिणो ज्ञानस्यानुपलम्भादनुपपत्तेश्च YatīndraDī. 5.5; GoviBh. 19.10 (*on* i. 1.16); 133.6 (*on* ii. 2.32); अनुपपत्तेः तदुपपादकत्वासंभवात्। अनुपपत्तेरिति पाठस्तु युक्तः BālamBha. iii. 120.7 (*on* 3.219); **2Aii** inapplicability श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात् Vār. 1 *on* P. iii. 1.46; आमन्तस्याधातुत्वाददृष्टमात्मनेपदम्, तत्कथं कृञोऽतिदिश्यते, स्यादियमनुपपत्तिः PadMañ. *on* KāśiVṛ. *on* P. i. 3.63; अर्थस्याविवक्षितत्वाद्विभक्तेरनुपपत्तिः Prasā. i. 12.2; 'तं पराञ्चमुक्थेभ्यो गृह्णाति' ··· दिगर्थविवक्षयैव पञ्चम्या अपि नानुपपत्तिः BhaṭṭDī. iv. 15.21 (*on* x. 5.10); **2Aiii** untenability, unreasonableness, failure of proof अश्मादिवच्च तदनुपपत्तिः BrahmSū. ii. 1.23; अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् BrahmSū. iii. 3.36; न चैतत् पदमस्तीत्युपपन्नैवेयमनुपपत्तिः Bṛha. 162.5 (*on* i. 1.5); 'योऽन्येद्युर्दृष्टवान्' इति प्रत्यभिज्ञानुपपत्तिः Bṛha. 237.4 (*on* i. 1.5); प्रत्यवायक्रियाया नित्याकरणं लक्षणमिति शतृप्रत्ययस्य नानुपपत्तिः TaiUBh. 189.12 (*on* 1.1); अर्थभेदाभिधाने वा तत एव सिद्धेस्तदभिधानानुपपत्तेः TattvBi. 151.5; प्रत्यक्षादीनामनुमानविरोधानुपपत्तिः Kāśi. ii. 123.6 (*on* 5(3). 64); जीवतो गृहाभावस्य बहिर्भावं विनानुपपत्तिः NayaVi. 154.7 (*on* i. 1.5); प्रमाणस्य सतोऽत्रैवान्तर्भावात्। अनन्तर्भावे वा प्रमाणत्वानुपपत्तेः TātpaṬ.(Vā.) 18.21 (*on* i. 1.1); 21.24 (*on* i. 1.1); बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः BrahmSūBh.(Rā.) 137.6 (*on* i. 1.3); 134.13 (*on* i. 1.2); तद्विरह एव तद्ग्रहणमिति विपरीतमिति महत्यनुपपत्तिः Kiraṇā. 16.22; 104.9; तत्र तावद्बहिर्भावमन्तरेण गृहाभावस्य कानुपपत्तिरिति वाच्यम् TārkiRa. 97.6; तेषामनुपपत्तिमभिप्रयन् पदं विगृह्णाति

ŚrutaPra. iA. 15.12 (*on* i. 1.1); iB. 151.10 (*on* i. 1.4); द्युमणितत्प्रभयोस्तैजसत्वसाम्येऽपि … धर्मिधर्मभावस्य दृष्टचरत्वान्नानुपपत्तिः VedāntRaMañ. 1.1 (4.25); तत्राह — अनुपपत्तेश्चेति। उपपत्त्यभावादित्यर्थः ŚatDū. 86.9; स्वाध्यायेनावगतस्य ‘श्रोतव्यः’ इत्यस्य श्रवणविधेरनुपपत्तिस्तदवस्थैवेति VivaPraSaṁ. 6.7; 7.18; NyāySu.(Ja.) 19B. 1 (*on* i. 1.1); अनुपपत्तिश्चात्र संदेहः TantrRaha. 12.18; तदपि अनुपपत्त्या नैवमेव विज्ञायते क्नौ लुतं न स्थानिवदिति PāṇiTaVāNaMā. 3.12; 15.9; लक्षणस्यानुपपत्तिमाशङ्क्याह Kuval. 68(28); ‘निशानेषु’ इति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः SiddhāKau. 377A. 4 (*on* vii. 4.68); अत्र त्वनुपपत्त्या कर्तर्येव शक्तिरित्याहुः VaiyāBhū. 7.3 (*on* 2); 74.13 (*on* 22); 249.1 (*on* 65); कारणताया अनुपपत्तिः — अयोग्यता Bhāsk. i. 214.11 (*on* i. 5.5); **2Bi** contradiction, incompatibility अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्यात् MīmāSū. i. 2.9; पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः ArthŚā. i. 177.5 (2.10); तस्मात् पञ्चैव खलु ऋतवोऽपि, तदनुपपत्तेर्नास्ति षड्त्वम् KāśyaS. 65A. 20; दृष्टे ह्यनुपपत्तिर्नास्ति Bṛha. 222.8 (*on* i. 1.5); PrakaPañ. 77.8; ŚivārkaMaDī. i. 557.14 (*on* i. 4.23); न … प्रयोगपथमवतरत्यनुपपत्तिरुपपत्तिमती SphoṭSi. 84.1; यजन्ति याजका इत्यनुपपत्तिः BhāvanāVi. 109.4; न चाप्यनुपपत्तिः स्याद्गस्यावयवैर्विना ŚlokaVār. 5(11). 13 (513. 6); शास्त्रदृष्टविरोधिका यात्रानुपपत्तिर्विधिकल्पनायामुक्ता तामस्मत्पक्षप्राप्तां मन्यामहे TantrVā. 25.10 (*on* i. 2.9); न हि प्रमाणावगतस्य दाहादेरनुपपत्तिर्युक्ता TātpaṬ.(U.) 387.13 (*on* 5(7).1); कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते — यश्चायमीश्वरोऽन्तर्यामी, यश्चायमितरः शारीरः। का पुनरिहानुपपत्तिः BrahmSūBh.(Śaṅ.) 122.11 (*on* i. 2.20); न चात्यन्ताविषये निरूपणा संभवति … एकस्या विषयविषयिभावानुपपत्तेः IṣṭaSi. 8.20; मायागिरोऽज्ञाननिवेदनेऽपि न काचिदत्रानुपपत्तिरस्ति SaṁkṣeŚā. 3.98 (ii. 206.19); स्वलक्षणेन योगित्वाद् व्यवहारस्य सर्वतः। लोके चानुपपत्तेश्च प्रमा च व्यवहारगा ŚivDṛ. 4.81; सर्वासामेवानुपपत्तीनामनवकाशः PrakaPañ. 409.7; परममहतां च वर्णानां तदनुपपत्तेः TattvBi. 9.8; 81.1; अस्तु लौकिकानाम् … सन्दर्भितुरभिप्रायमनुरुध्यमानानामनुपपत्त्या अनधिगतार्थलक्षणापरत्वम् TattvBi. 135.2; स्वात्मानमेवालंकरोतीति चेत्तदयुक्तमनुपपत्तेः VakroJī. 24.17; तद्वृत्तस्य पूर्वप्रकृतपरामर्शात्मनः तेन विनानुपपत्तेः Kāśi. i. 17.11 (*on* 1.41); iii. 145.5 (*on* 5(6). 18); iii. 185.11 (*on* 5(7). 79); ‘अनात्मत्वाच्चैष त आत्मेति’ श्रुतेरनुपपत्तेर्न प्रधानस्यान्तर्यामिता Bhām. 180.17 (*on* i. 2.18); तत्र चैषां स्वार्थस्य सर्वथानुपपत्तेरन्धशब्दोक्तेन न्यायेन तिरस्कृतवाच्यत्वम् Loc. 205.20 (*on* 3.35); उत्तरग्रन्थस्य चानुपपत्तिः AbhinBhā. i. 3.6 (*on* 1.1); अनुपपत्तिं मन्यमानाः श्रोतारोऽसंबद्धप्रलापित्वं सूत्रकारस्य … मन्येरन् NyāyRa. 7.8 (*on* 1.20); दिवाकराद्रक्षति यो गुहासु … इहान्धकारम् … अत्र न काचिदनुपपत्तिरवतरति KāvyPra. 785.6; अनुपपत्तयः सहस्रशः सन्ति VedāntDī. 97.7 (*on* ii. 1.36); (स द्रोणकलशात् इज्येत सर्वार्थत्वात्) तत्र श्रूयते ‘द्रोणकलशाद्धि गृह्यते एष वा एतेषां योनिः’ इति यथा ध्रौवाज्यम्।… वाक्यस्यान्यथानुपपत्तेः SaṅkarKāBh. 3.5 (*on* i. 1.2); 101.14 (*on* ii. 3.38); इतीमाम् … अनुपपत्तिं मनसि मे रुजामाविर्भावादनुभवविरोधः शमयति SubhāRaK. 23.34; विरोधोऽनुपपत्तिश्चेद् गुणद्रव्यक्रियादिषु Candrā. 5.74; वस्तु क्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान् यदि विमोहयितुं समर्थाः। न स्युर्विटाः RājTa.(Ka.) 5.379; सेयं न धत्तेऽनुपपत्तिमुच्चैर्मच्चित्तवृत्तिस्त्वयि चिन्त्यमाने NaiṣC. 8.45 (comm. अघटमानताम्); TarkSaṁ.(Ā.) 14.16; उत्तरभावित्वादनित्यस्य च शरीरस्यानुपपत्तेश्च VedāntPāSau. 209.10 (*on* ii. 2.39); क्रतुज्वलनयोर्ज्योतिःशब्द इव नात्र काचिदनुपपत्तिः VedāntKau. 25.6 (*on* i. 1.7); तत्र न काचिदनुपपत्तिरिति नीतिनेत्राचार्याः Ekāva. 1.1(18) (7.5); अत्र … प्रागुक्तैवानुपपत्तिः TattvPrakā. 41B.5 (*on* i. 2.31); 221B. 8 (*on* iv. 4.12); ज्ञानाभावस्येव भावान्तरस्यापि नानुपपत्तिर्नियन्तुं शक्यते NyāySu.(Ja.) 62B. 6 (*on* i. 1.1); 475B. 2 (*on* iii. 2.1); द्रव्यनाशे सर्वासामनुपपत्तीनामुभयसमावेयत्वात् Upask. 290.8 (*on* vii. 1.6); एवं परिहृतेऽपि दोषे स्वमत्यानुपपत्तिमुद्भाव्य सर्वसंप्लवं वदन् मन्दमतिः सद्भिरुपेक्ष्यः AṇuBh. 127.15 (*on* ii. 1.27); योऽर्थः प्रतीतोऽपि पूर्वपरिदृष्टस्वरूपपरिवृत्त्या संशयरूपामनुपपत्तिं भजते सोऽर्थः … प्रमाणम् TantrRaha. 13.9; अविद्यायामनुपपत्तिरलंकारो वास्तु Nyāyāmṛ. 340A. 7; बुद्ध्यादिष्वव्यवस्थया मनआदिप्रयोगस्य पातंजलादिसर्वशास्त्रेष्वनुपपत्तेश्च SāṁkhyaPraBh. 33.39 (*on* 1.64); 9.12 (*on* 1.6); 27.27 (*on* 1.57); 63.29 (*on* 1.143); सौरपक्षे तु न काचिदनुपपत्तिरधिकापातेऽपि TristhaSe. 43.15; आवरणनाशेऽपि न काचिदनुपपत्तिः SiddhāBi. 64.4; न चात्यन्ताभावाधिकरणे प्रागभावस्याप्यनुपपत्तिरिति वाच्यम् AdvaiSi. 185.1; SiddhāLeSaṁ. 143.7; प्रथमजनौ द्वयोरनुपपत्तिमागताम् NayaMañ. II. iii. 1.1; परमेश्वरस्यातीतानागतज्ञातृत्वकल्पने कानुपपत्तिः ŚivārkaMaDī. i. 160.18 (*on* i. 1.3); (अभ्युपगमः) यत्रानुपपत्तिर्नास्ति गृहमेधीयादिवाक्ये, तत्र पारमार्थिकस्य तदभ्युपगमस्य ज्ञापकः — इत्यभिप्रेत्य। तस्मात् न कोऽपि विरोधः PūrvottaVāNaMā. 26.9; न तयोः काव्यलिङ्गोदाहरणत्वे काचिदनुपपत्तिः Kuval. 121(68); शक्तिज्ञ(?ज्ञा)प्यश्च यथा पदार्थः तथा वाक्यार्थोऽपि इति न काचिदनुपपत्तिः VedāntPari. 210.7; VīraMi.(Pūjā.) 33.9; न चैतावता सर्वत्रैव तथा प्रसङ्गः, अनुपपत्तेरभावात् MīmāKau. iii(2). 95.21 (*on* ii. 1.23); BhāṭṭDī. iii. 81.17 (*on* ix. 1.14); इत्यनुपपत्तिं परिहर्तुमायासोऽपि नापतति RasGaṅ. 191.4; 151.15; व्यञ्जकं तु नानुपपत्तिमपेक्षते RasGaṅ. 503.14; 637.13; प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि पितरो देवता इत्यादेरनुपपत्तिः VyutpaVā. 6.7; ब्रह्मणा स्वोद्देशेन दत्ताप्याहुतिः … फलजनिकेति न काप्यनुपपत्तिः Vidvanmo. 5.14(10); युष्मदस्मदोश्चेतनार्थकतयाचेतनार्थेऽनुपपत्तिः BhāṭṭCin i. 81.14 (*on* i. 1.4); ते त्वनन्तस्यैव प्रत्यक्षा इति न काप्यनुपपत्तिः SiddhāTaVi. 58.16; 305.15; एकवाक्यत्वमनुपपत्त्या परित्याज्यम् MayūMāli. 12.16 (*on* i. 2.2); 345.4 (*on* iv. 1.1); लौकिकलिङ्गवाच्यत्वपक्षे च नानुपपत्तिः VaiyāBhū. 124.11 (*on* 25); 83.23 (*on* 22); अस्मिन्नेव प्रकरणे कथनस्यानुपपत्तेश्च SetuBa. 166.6; प्रधानभूतोपमाया अप्यलंकारत्वं स्वीकर्तुमुचितमिति नानुपपत्तिः AlaṅkāKau.(Vi.) 26.14; 14.5; **2Bii** failure to be present together, absence of co-existence सत्त्वस्यानुपपत्तौ च देशकालं विवर्जयेत् MārkP. 39.50; VāyuP. i. 11.31; पूर्वे गुणा नित्याः। तैर्विना काव्यशोभानुपपत्तेः KāvyālaṅSū. iii. 1.3; बाह्यगन्धादिविषयज्ञानायौगपद्यानुपपत्तेस्तद्ग्रहणे … स्मृत्यादिक्रियाकारिणा च करणेन भवितव्यम् NyāyMañ. ii. 14.10; न च विरुद्धधर्माणामेकत्रानुपपत्तिः। किं कारणम्। कल्पितानामवस्तुत्वात्स्यादेकत्रापि संभवः NaiṣkaSi. 75.6; कोऽयं विरोधः … यस्यानुपपत्तेस्तमःप्रकाशवदिति निदर्शनम्।… प्रकाशभावे तमसो भावानुपपत्तिः PañcPā. 3.10 (*on* i. 1.1); (राज्ञा रक्षासमन्वितम्) रक्षाशब्दस्य स्त्रीलिङ्गस्य श्रवणात् पुंसां सामानाधिकरण्यानुपपत्तेः ManuBh. i. 91.26 (*on* 2.32); न च प्रकारान्तरेण वृत्तिरिति वक्तुं शक्यत्, अनुपपत्तेः प्रकारान्तरस्य PrakaPañ. 68.3; प्रमाणस्य सतोऽत्रैवान्तर्भावात्। अनन्तर्भावे वा प्रमाणत्वानुपपत्तेः TātpaṬ.(Vā.) 18.21 (*on* i. 1.1); **3** adversity, non-availability, insufficiency of means कुम्भानां विहितं कर्म न कृतं यदि …। कया त्वनुपपत्त्या तु तदा तत्सर्वमाचरेत् PāraS. 14.513; सर्वकर्तुर्ब्रह्मणः का वानुपपत्तिः स्यात्। येन तस्यापि शरीरं कल्पयेत् AṇuBh. 40.21 (*on* i. 1.19); आयुर्घृतमितिवत् कार्यकारणभावसंबन्धमुपचारनिमित्तमन्तरेणानुपपत्तेः PūrvottaVāNaMā. 46.3; लक्ष्यार्थस्य न शाब्दबोधे प्रवेशः, अपि तु स्मृतस्य तस्य समभिव्याहृतपदार्थैरसंसर्गाग्रहमात्रं तथा च नानुपपत्तिः ŚaktiVā. 24.17; *adj.* **A** untenable व्यवहारे किमन्येन बाह्येनानुपपत्तिना ĪśvaPraSū. i. 5.6; **B** inapplicable नन्वेवं यदि भगवति प्रमाणमनुपयोग्यनुपपत्ति च PratyabhiVi. ii. 139.8 (*on* ii. 3.1)

**अनुपपत्तिक** (anupapatti-ka) *adj.* possessed of untenability इदमसंबद्धमेवानुपपत्तिकं च … अन्यस्मिन्नेवार्थे योजितम् TantrVā. 184.10 (*on* i. 3.11)

**अनुपपत्तिकल्पन** (anupapatti-kalpana) *n.* assumption of impossibility उपपादककल्पनापदेशेनानुपपत्तिकल्पनमेवेत्यायातम् ŚatDū. 102.21.

**अनुपपत्तिकार्थ** (anupapattikārtha) *adj.* having the sense of contradiction भाष्यकारोऽनुपपत्तिकार्थं वचनं क्षणमप्यक्षममाणः प्रतिज्ञासूत्र एव … युक्तिलेशमस्पृशत् Kāśi. i. 61.9 (*on* 2.4)

**अनुपपत्तिक्षय** (anupapatti-kṣaya) *m.* **1** termination of adversity यदा तु स्वाध्यायाध्ययनोपात्तविद्यान्द्विजन्मनो लभन्ते तदा तैरेव लब्धात्मानोऽनुपपत्तिक्षयान्न चतुर्थस्य विद्यामाक्षिपन्ति ŚāstrDī. 454.13 (*on* vi. 1.7); **2** loss of non-accomplishment श्रौतोऽर्थः। एवं श्रुत्या विशिष्टं विदधत्प्रयोगवचनः … अर्थादुपकारात् पदार्थांश्च पुरोडाशार्थतयानुष्ठापयितुं प्रवृत्तः … तैरेव तद्वत्तासिद्धिं लाघवादनुमन्यमानोऽनुपपत्तिक्षयान्न स्वयं पृथक्पदार्थानुपकारांश्चानुष्ठेयतया विधत्ते MayūMāli. 844.30 (*on* xii. 1.1)

**अनुपपत्तिगन्ध** (anupapatti-gandha) *m.* slightest trace (*lit.* smell) of not being applicable अस्मन्मते च धातूपात्तां भावनां प्रत्यन्वयादनुपपत्तिगन्धोऽपि नेति VaiyāBhū. 45.26 (*on* 9); 149.14 (*on* 30)

**अनुपपत्तिगम्यत्व** (anupapattigamya-tva) *n.* the state of being knowable through contradictory argumentation (वैदिकलिङ्गाद्यर्थस्य) अनुपपत्तिगम्यत्वे चापूर्वत्वानुपपत्तिः PrakaVi. 75.19; भाष्ये उपात्तत्वं नाभिधेयत्वं किं त्वनुपपत्तिगम्यत्वं तदेव दर्शयति VedāntKa. 215.27 (*on* i. 4.16)

**अनुपपत्तिग्रस्तत्व** (anupapattigrasta-tva) *n.* the state of being affected by contradictory argument समन्वयसूत्रे सर्वेषां शब्दानां भगवद्वाचित्वमुक्तं तच्चानुपपत्तिग्रस्तत्वेऽसत्स्यादित्यारम्भणीयमेतत् TattvPrakā. 72B.6 (*on* i. 4.16)

**अनुपपत्तिचोदन** (anupapatti-codana) *n.* rule regarding inapplicability समासस्यानुपपत्तिचोदनाद् मूलाभावाद् द्विवचनप्रसङ्गो न चोदितः Pradī. ii. 454A. 40 (*on* ii. 2.24)

**अनुपपत्तिचोद्य** (anupapatti-codya) *adj.* to be laid down as impossible अज्ञानलक्षणे तु प्रपञ्चविलासेऽनुपपत्तिचोद्यं चाचोद्यमेव BālaKrī. ii. 33.10 (*on* 3.60(?70))

**अनुपपत्तिज** (anupapatti-ja) *adj.* originating from contradiction बाधज्ञानस्यानुपपत्तिजलक्षणाजन्यशाब्दबोधेऽप्रामाण्यग्रहजनकत्वस्याभावात् VaiyāSiMañ. 142.11.

**अनुपपत्तिज्ञान** (anupapatti-jñāna) *n.* cognition of contradiction जीवो देवदत्तो गृहे नास्तीति ज्ञाने सति ··· बहिरस्तीति धीरस्ति तत्रान्वयव्यतिरेकाभ्यामनुपपत्तिज्ञानं करणम् TattvCin. ii(1). 673.5; सर्वत्रानुपपत्तिज्ञाने अनवस्थानात् AdvaiSi. 518.16; स्वरूपज्ञानमात्रेण स्वरूपात्मकलक्षणस्य व्यावृत्तिं विनानुपपत्तिज्ञानमात्रेण LaCandr. 688.28; अर्थापत्तौ तु ··· अनुपपत्तिज्ञानमवान्तरव्यापारः BhāṭṭCin. i. 47.9 (*on* i. 1.4); i. 66.33 (*on* i. 1.4); अर्थापत्तिरिति चेन्न। अनुपपत्तिज्ञानमन्तरेणापि गां दद्यादित्यादितो बोधदर्शनात् VaiyāBhū. 117.24 (*on* 25)

**अनुपपत्तिज्ञानकाल** (anupapattijñāna-kāla) *m.* time of the knowledge regarding contradiction पद्मत्वादिना पद्मादेस्तादात्म्येन हेतुत्वात् पद्मान्वये अनुपपत्तिज्ञानकाले लक्षणयैव कुमुदादौ प्रयोगः LaCandr. 449.35.

**अनुपपत्तिज्ञानापेक्षा** (anupapattijñānāpekṣā) *f.* expectancy of the cognition of contradiction पृथक्पृथगनुपपत्तिज्ञानापेक्षायां सर्वत्रानुपपत्तिज्ञाने अनवस्थानात् क्वचिद्धाराविश्रान्तौ तत्रैव लब्धावकाशा श्रुतिः सर्वाद्वैते पर्यवस्यति AdvaiSi. 518.16.

**अनुपपत्तिज्ञानाभाव** (anupapattijñānābhāva) *m.* absence of the knowledge of contradiction अनुपपत्तिज्ञानाभावेन लक्षणाध्याहाराद्यसंभवाच्च दूरापेतं धर्माधर्मप्रामाण्यम् BhāṭṭCin. ii. 5.4 (*on* i. 2.1)

**अनुपपत्तितस्** (anupapatti-tas) *adv.* **1A** because of impossibility नात्मनो ध्रौव्याद्विक्रियानुपपत्तितः BṛĀraUBhVā. (Sambandha.) 142; 654; TattvBi. 156.6; य एव म्रियते जन्तुः स एवोत्पद्यते पुनः। इत्येतदपि वाङ्मात्रं सर्वथानुपपत्तितः TriṣaŚaPuC. i. 1.339; पक्षान्तरेषु सर्वेषु बहु कल्प्यमसंगतम्। लाघवानुभवाभ्यां च सत्त्वस्यानुपपत्तितः PrakaVi. 12.11; ततो माध्यमिकस्यैव पक्षस्तत्रापि शिष्यते। न च तत्रापि निस्तारः सर्वथानुपपत्तितः NyāyPari. 46.2; BhāṣāPa. 82; **1B** due to contradiction ब्रह्मणोऽपरिणामित्वश्रुतेश्चानुपपत्तितः NītiMā. 27.12; **2** because of non-accomplishment तस्माद्भूमाग्निवद्वार्थफलभावोऽवतिष्ठते। न च व्यापारवचसोरन्यथानुपपत्तितः BhaviP. 78B. 30 (i. 40.18); **3** due to non-availability विध्युपादानयोरैक्यादेशादेरनुपपत्तितः। आवश्यके कर्मविधौ तद्भेदः पुनरुक्तितः NyāyMāVi. 103.13 (*on* ii. 3.13)

**अनुपपत्तितादवस्थ्य** (anupapatti-tādavasthya) *n.* **A** the state of being in the same condition (as that) of contradiction मन्देन गम्यते मन्द इत्यादौ···मन्दान्यसमवेतमन्दवृत्तिक्रियाया अप्रसिद्ध्यानुपपत्तितादवस्थ्यात् VyutpaVā. 200.12; **Bi** the state of being in the same condition (as that) of untenability तवापि यतते यत्नं करोतीत्यादावनुपपत्तितादवस्थ्याच्च VaiyāBhū. 31.23 (*on* 6); **Bii** the state of being in the same condition (as that) of inapplicability अवैयाकरणानां प्रत्येकं तदज्ञानेऽपि समुदाये व्युत्पन्नानां बोधदर्शनात् घटेनेत्यादावप्यनुपपत्तितादवस्थ्यम् VaiyāBhū. 239.24 (*on* 63)

**अनुपपत्तित्व** (anupapatti-tva) *n.* the state of being impossible (प्रतीतिः) व्याप्यस्य सामर्थ्यं सेति चेन्न। तस्याः ··· अनुपपत्तित्वे व्याप्त्यनुप्रवेशात् KhaṇḍanKhā. 734.7.

**अनुपपत्तिदर्शन** (anupapatti-darśana) *n.* observation of contradiction न मुख्यानुपपत्तिरमुख्यवृत्तेः कारणम्। प्रयोगोत्तरकालीनत्वादनुपपत्तिदर्शनस्य। किं तु मुख्यार्थानुपपत्तिदर्शनममुख्यार्थग्रहणस्य हेतुः NyāySu.(Ja.) 187B. 10 (*on* i. 4.2); लाक्षणिक शब्दः ··· पूर्वधीस्थे वाच्यार्थेऽनुपपत्तिदर्शने सति तत्त्यागेन स्वरूपतो वाच्यार्थसंबन्धित्वेन चावगतस्यार्थान्तरस्य बोधकः Nyāyāmṛ. 538A. 5; 595B. 9.

**अनुपपत्तिधी** (anupapatti-dhī) *f.* knowledge of incompatibility अनुपपत्तिधीरद्वयश्रुतिं न बाधते GuruCandr. ii. 244.19.

**अनुपपत्तिधीकरणका** (anupapattidhīkaraṇa-kā) *adj.*(*f.*) possessed of the knowledge of incompatibility as means (of knowledge) अर्थापत्तीति। अनुपपत्तिधीकरणका GuruCandr. ii. 99.13; LaCandr. 470.28.

**अनुपपत्तिधीकरणिका** (anupapattidhīkaraṇ-ikā) *adj.* (*f.*) possessed of the knowledge of incompatibility as means (of knowledge) भेदं विना भेदविषयकत्वमनुपपन्नमित्यनुपपत्तिधीकरणिकार्थापत्तिरास्तां भेदग्राहिका GuruCandr. ii. 243.22; LaCandr. 517.43.

**अनुपपत्तिनिबन्धनत्व** (anupapattinibandhana-tva) *n.* the state of being connected with incompatibility बाधकस्य चानुपपत्तिनिबन्धनत्वात् यावत्यबाधितेऽनुपपत्तिप्रशमो न भवति तावद्बाधनीयम् Mitā. 351.5 (*on* 3.28)

**अनुपपत्तिनिराकरण** (anupapatti-nirākaraṇa) *n.* removal of incompatibility मन्त्रसामर्थ्यमपि ब्राह्मणभोजनादिना नष्टमन्नं कथं प्रापयतीत्यनुपपत्तिनिराकरणाय मत्स्येनोक्तम् SmṛtiCan. v. 298.7.

**अनुपपत्तिनिराकरणार्थम्** (anupapattinirākaraṇārtham) *adv.* for the sake of removing the incompatibility कथं पुनस्सर्वेषां पुरुषाणाम् ··· स्वर्गनरकादिगतानां दूरस्थकव्यभोक्तृत्वसामर्थ्यरहितानामुपभोगाय ··· अन्नादि द्रव्यं गच्छतीत्यनुपपत्तिनिराकरणार्थमुक्तम् SmṛtiCan. v. 298.2.

**अनुपपत्तिपराहत** (anupapatti-parāhata) *adj.* refuted due to contradiction कल्पनशब्देनातस्मिंस्तद्भावारोपणं च परोक्तं सूत्राक्षरानुगुणमिव प्रतीयते, तथाप्यनुपपत्तिपराहतम् ŚrutaPra. ii. 121.8 (*on* i. 4.10)

**अनुपपत्तिपरिक्षय** (anupapatti-parikṣaya) *m.* loss of contradiction ततश्च प्रथमावगतेन शब्देनैवानुपपत्तिपरिक्षयात् NyāyRa. 469.23 (*on* 5(7).78); YuktiSneha. 81.34 (*on* i. 1.5)

**अनुपपत्तिपरिहार** (anupapatti-parihāra) *m.* **A** removal of impossibility न चाविद्याया दौर्घट्यं भूषणम्।··· अनादित्वादिनानुपपत्तिपरिहारायोगाच्च Nyāyāmṛ. 353A. 6; दृश्यत्वेऽनुपपत्तिपरिहाराय तदेव दृष्टान्तीकुर्वन् पशुरस्तीत्याह GuruCandr. ii. 106.19; **B** removal of contradiction सामान्यश्रुतिकल्पने तत्प्रवर्तितयोः स्मृत्याचारयोरपि सर्वविषयत्वापत्तेः नानुपपत्तिपरिहारोऽपि MīmāKau. i. 100.3 (*on* i. 3.15); 'पचति' इत्यादिजबोधे नाप्रामाण्यग्रहः। तथा सत्यनुपपत्तिपरिहाराभावादित्यग्रे निरूपयिष्यामः VaiyāSiMañ. 138.14.

**अनुपपत्तिप्रतिभास** (anupapatti-pratibhāsa) *m.* appearance of contradiction अनुपपत्तिप्रतिभासेऽध्ययनविधिसामर्थ्यावधारितस्तुतिनिन्दापरत्वेनार्थवादानां विधिनिषेधग्रहणान्निर्वाहः क्रियते NyāySu.(So.) 38.1 (*on* i. 2.7)

**अनुपपत्तिप्रतिभासवृत्ति** (anupapattipratibhāsa-vṛtti) *f.* mental modification of an appearance of contradiction सदसत्सदसद्विकल्पितप्रतिबद्धा न भवन्ति वर्णिते। परमात्मतमोनिवर्तनेऽनुपपत्तिप्रतिभासवृत्तयः SaṁkṣeŚā. 4.13 (ii. 367.20)

**अनुपपत्तिप्रतिसंधान** (anupapatti-pratisandhāna) *n.* **Ai** comprehension or knowledge of incompatibility न वयमविनाभावमर्थापत्तावपजानीमहे, किंतु तज्ज्ञानम्। न चासौ सत्तामात्रेण तदनुमानत्वमापादयतीति चेत् न ··· अनुपपत्तिप्रतिसंधानस्यावश्याभ्युपगन्तव्यत्वात् NyāyKuA. ii(1). 225.9; Kiraṇā. 324.16; **Aii** knowledge of contradiction न च व्यक्तौ लक्षणा, अनुपपत्तिप्रतिसंधानं विनापि व्यक्तिबोधात् SiddhāMu. 48.5 (*on* 81); अनुपपत्तिप्रतिसंधानं विनैव योऽर्थः प्रतीयते स मुख्यः LaCandr. 763.40; पद्मस्यानुपपत्तिप्रतिसंधानम् ··· विना बोधात् VaiyāSiMañ. 107.12; 150.16; **Bi** recollection of impossibility न च पर्वतनृत्याप्रसिद्धौ तेन विनानुपपत्तिप्रतिसंधानमपि नेति कथमर्थापत्तिरपीति वाच्यम् TattvCin. ii(1). 682.7; **Bii** recollection of contradiction तस्माद्वैश्वदेव्यामिक्षा ··· इति सामानाधिकरण्यस्य विनैवानुपपत्तिप्रतिसंधानं शब्दादेव प्रतीतेस्तदनुसारेण द्रव्यवाचित्वमास्थेयम् VaiyāBhū. 18.25 (*on* 2)

**अनुपपत्तिप्रतिसंधाननिबन्धना** (anupapattipratisandhāna-nibandhanā) *adj.* (*f.*) dependent on the comprehension of contradiction लक्षणयोपस्थितिर्ह्यनुपपत्तिप्रतिसंधाननिबन्धना MayūMāli. 141.9 (*on* ii. 2.6)

**अनुपपत्तिप्रभव** (anupapatti-prabhava) *adj.* originating from contradiction स्वर्गकामकार्यविषयो याग इति शाब्दानुभवानन्तरमर्थाद् यागविषयकं कार्यमिति ज्ञानम् अनुपपत्तिप्रभवम् TattvCin. iv(2). 403.3.

**अनुपपत्तिप्रमाणक** (anupapattipramāṇa-ka) *adj.* possessed of the evidence of contradiction यदि हि फलसंबन्धमात्रपर्यवसाय्येव वाक्यं भवेत्ततः कदाचिदपि सर्वाणि फलेन संबध्येरन्। इह तु तावन्मात्रेणासिद्धेरपूर्वमन्यत्कल्पयितव्यं तच्चानुपपत्तिप्रमाणकम् TantrVā. 339.15 (*on* ii. 1.1)

**अनुपपत्तिप्रशम** (anupapatti-praśama) *m.* cessation of incompatibility दशाहबाधपुरस्सरमेव हि 'एकाहाद्ब्राह्मणः शुध्येत्' इति विधायकं भवति। बाधकस्य चानुपपत्तिनिबन्धनत्वात् यावत्यबाधितेऽनुपपत्तिप्रशमो न भवति तावद्बाधनीयम् Mitā. 351.6 (*on* 3.28)

**अनुपपत्तिप्रसङ्ग** (anupapatti-prasaṅga) *m.* **A** undesirable occasion of impossibility मनसो भगवति निवेशनासंभवे स्मर्तव्यः सततं विष्णुरित्यादिविधीनामनुपपत्तिप्रसङ्गात् TattvPrakā. 202A. 13 (*on* iv. 1.7); सत्यस्यापि विषस्य गरुडध्यानेन निवृत्तिदर्शनात् ···। विषं न सत्यमिति चेन्न। तथा सति नीलविशिष्टद्रव्यादेरपि तथासत्यत्वेन तन्निवृत्त्यापादानस्यानुपपत्तिप्रसङ्गात् NyāySu.(Ja.) 23B. 13 (*on* i. 1.1); **B** undesirable occasion of contradiction रेवतीपु वारवन्तीयमित्यंशस्य ··· विशेषणे ··· न हि तद्विशेषणम् ··· विशिष्टविधाविव तात्पर्यवत् वक्तुं शक्यम्। अनुपपत्तिप्रसङ्गात् ŚivārkaMaDī. i. 456.34 (*on* i. 3.25); वासनायाः ··· लुप्तत्वेऽपि औपाधिकभेदप्रतीतितद्वासनावृत्त्योः सत्त्वात्। अन्यथा ··· 'तमेव चाद्यं पुरुषं प्रपद्ये' इति कर्मकर्तृनिर्देशस्य ··· अन्येषां च ··· निर्देशानाम् अनुपपत्तिप्रसङ्गात् PūrvottaVāNaMā. 179. 7; भगिनीत्वस्य पैतृष्वस्रेयीविशेषणत्वाभावे चतुष्ट्वापत्तेस्तिस्र इत्यस्यानुपपत्तिप्रसङ्गात् MīmāKau. i. 68.24 (*on* i. 3.9)

**अनुपपत्तिप्रसूतत्व** (anupapattiprasūta-tva) *n.* the state of being originated from incompatibility पश्यतः श्वेतमारूपम् ··· श्वेतोऽश्वो धावतीति धीः। इत्यत्रापि संसर्गबुद्धेरनुपपत्तिप्रसूतत्वात् PrakaVi. 75.4.

**अनुपपत्तिबल** (anupapatti-bala) *n.* force of incompatibility अनुपपत्तिबलेन विधेस्तयोः करणतैकतयोरवगम्यते।··· संगतिः SaṁkṣeŚā. 1.505 (i. 363.22); महावाक्यावान्तरवाक्ययोरन्यथानुपपत्तिबलाद् भेदरहितेऽपि ब्रह्मणि ··· शक्तिविशेषोऽङ्गीकरणीयः प्राप्नोति NyāySu.(Ja.) 105B.6 (*on* i. 1.2); स्तोत्र-

शास्त्रवाक्येऽनुपपत्तिबलात् लक्षणयाग्निशब्दस्य तद्युक्तक्रतुपरत्वमात्रेण ··· यागनामत्वमग्निशब्दस्य नाभ्युपेयम् MayūMāli. 172.23 (*on* ii. 3.10)

**अनुपपत्तिबाधित** (anupapatti–bādhita) *adj.* set aside due to impossibility गङ्गायां घोष इत्यादावपि गङ्गादयोऽर्थाः स्वात्मन्यनुपपत्तिबाधितघोषाद्यधिकरणभावाः ··· अर्थान्तरमेव तटादिरूपमनुमापयन्ति VyaktiVi. 24.22.

**अनुपपत्तिमती** (anupapatti–matī) *adj.* (*f.*) **1** possessed of impossibility (बुद्धेः) दीर्घकालादरनैरन्तर्येण सेविताया योगजधर्मानुग्रहसमासादितशक्तेः प्रकर्षपर्यन्तप्राप्तिर्नानुपपत्तिमती NyāyKa. 197.9; **2** possessed of non-accomplishment or loss हृदयमप्यनलंकृतमद्य ते ···। क सहतामवलम्बलवच्छिदामनुपपत्तिमतीमतिदुःखिता NaiṣC. 4.110.

**अनुपपत्तिमात्र** (anupapatti–mātra) *n.* mere impossibility न चाविद्यायामनुपपत्तिरलङ्कारः, अनुपपत्तिमात्रं नालङ्कारः किं तु सत्त्वादिप्रापकयुक्तावनुपपत्तिः AdvaiSi. 577.17.

**अनुपपत्तिमूलक** (anupapattimūla–ka) *adj.* based on incompatibility यमर्थमनालम्बमानानुमितिः पक्षे साध्यसंबन्धं न विषयीकरोति स पक्षधर्मताबलात्सिध्यतीत्यनुपपत्तिमूलकोऽन्वयी TattvCin. ii(2). 80.12.

**अनुपपत्तिमूला** (anupapatti–mūlā) *adj.* (*f.*) based on impossibility भवदेवस्तु लक्षणा ह्यनुपपत्तिमूला MayūMāli. 52.7 (*on* i. 3.10)

**अनुपपत्तियोग** (anupapatti–yoga) *m.* occasion of impossibility (प्राप्तस्य प्रतिबन्धः प्रत्यूहः) इह तु प्रतिबन्धकवशेन कारणाभावादनुपपत्तियोगान्न विरोधसंसर्ग इति प्रतीतिभेदात् सिद्ध एव भेदः AlaṅkāRa. 73(35)

**अनुपपत्तिरूपबीज** (anupapattirūpa–bīja) *n.* source in the form of impossibility गत्यर्थकेण धातुना जहत्स्वार्थलक्षणयाभ्युपगमनपूर्वकमुदकदानमुच्यते ···। अनुपपत्तिरूपबीजमाहैवं मातेति BālamBha. iii. 9.13 (*on* 3.3)

**अनुपपत्तिलक्षण** (anupapatti–lakṣaṇa) *adj.* of the nature of contradiction विद्यायां सत्याम्, सह कार्येण अविद्याया अनुपपत्तिलक्षणश्च विरोधः तैर्न विज्ञातः BṛĀraUBh. 297.17 (*on* ii. 4.1)

**अनुपपत्तिलभ्य** (anupapatti–labhya) *adj.* attainable through impossibility जीवस्य ··· न केवलमनुपपत्तिलभ्यमेवामरणं किंतु श्रुतिसिद्धमपि PrakaVi. 610.17; 634.23.

**अनुपपत्तिलेश** (anupapatti–leśa) *m.* **A** slight trace of contradiction अर्थान्तराण्यपि कर्तृत्वाभिमानत्यागादिरूपाणि प्रत्यक्षाद्यविरुद्धानि ···। अतो नानुपपत्तिलेशः ŚatDū. 188.10; **B** slight trace of impossibility आक्षिप्त एव व्यतिरेकः, न तु व्यङ्ग्य इति कदापि भ्रमितव्यम्। सत्यनुपपत्तिलेशे व्यञ्जनाया अप्ररोहात् RasGaṅ. 473.16; पदानां नित्यत्वात् ··· अर्थानां च तथात्वात् ··· तत्संबन्धस्य सुतरां नित्यतेति नानुपपत्तिलेशः BhāṭṭCin. i. 34.19 (*on* i. 1.4); तत्रापि चन्द्रपदस्य तद्वृत्तित्वे लक्षणा। उक्तरीत्यानुशासनसंमतत्वात्। अतो नानुपपत्तिलेशोऽपि AlaṅkāKau.(Vi.) 76.8; 62.17.

**अनुपपत्तिवश** (anupapatti–vaśa) *m.* [Abl.] due to impossibility शक्त्या जात्युपस्थितावपि तस्याः कर्मत्वाद्यन्वयप्रमितेः प्रागेवानुपपत्तिवशात् व्यक्तिलक्षणायामपि न ··· दूषकताबीजम् MīmāKau. i. 148.5 (*on* i. 3.33)

**अनुपपत्तिवासना** (anupapatti–vāsanā) *f.* impression of contradiction अथ वास्तवावास्तवास्वन्तरोदयान्तरप्रसङ्गे तिथ्यादिष्वनुपपत्तिवासना ŚeṣaVā. 3.23.

**अनुपपत्तिविरह** (anupapatti–viraha) *m.* absence of impossibility गङ्गायां पयांसि यादांसि गङ्गायामित्यत्रापि स एव (गङ्गाशब्दः) लाक्षणिकोऽस्तु। अनुपपत्तिविरहान्नैवम् TattvBi. 136.3.

**अनुपपत्तिविशेषपरिहार** (anupapattiviśeṣa–parihāra) *m.* removal of the particular contradiction तृतीयसूत्रेणानुपपत्तिविशेषपरिहाराय त्रिवृद्भवनान्तरोपन्यासपरं द्वितीयसूत्रमित्यप्ययुक्तम् ŚrutaPra. ii. 405.18 (*on* ii. 4.19)

**अनुपपत्तिवेद्यत्व** (anupapattivedya–tva) *n.* the state of being fit to be known through contradiction न च ··· लिङ्गादयः शब्दाः ··· क्रियातिरिक्तमेव कार्यमवगमयन्ति, आशुतरविनाशिन्याः क्रियायाः कालान्तरभाविस्वर्गादिसाधनतानुपपत्तेरिति युक्तं वक्तुम्। अनुपपत्तिवेद्यत्वे मानान्तरगोचरत्वप्रसङ्गात् TattvPradī. (Ci.) 96.4.

**अनुपपत्तिव्युत्पादन** (anupapatti–vyutpādana) *n.* explanation of untenability नेति। यद्यपि नैवं मायावादिनो मन्यन्ते। तथापि सूत्रार्थनिराकरणाय प्रवृत्तस्य तत्रैवानुपपत्तिव्युत्पादनं श्लाघ्यम् NyāySu.(Ja.) 206A.11 (*on* i. 4.6)

**अनुपपत्तिशङ्का** (anupapatti–śaṅkā) *f.* **A** objection regarding incompatibility अर्थानुपपत्तिं परिहरति। त्रिधा चानुपपत्तिशङ्का ŚrutaPra. iA. 34.10 (*on* i. 1.1); **B** doubt regarding contradiction उत्तराधिकरणारम्भात् प्राक् क्षणमपि शिष्याणामनुपपत्तिशङ्का मा भूदिति कृपयेत्यर्थः VedāntKa. 52.9 (*on* i. 1.2); ईश्वरो जगत्कारणमित्युक्तम् ··· मन्दस्यानुपपत्तिशङ्का स्यात् TattvPrakā. 103B.9 (*on* ii. 2.33); अनुपपत्तिशङ्काकषलुषित(? कलुषित)वेदार्थविचारात्मकं शास्त्रं नारम्भणीयम् ŚivārkaMaDī i. 90.31 (*on* i. 1.1)

**अनुपपत्तिशत** (anupapatti–śata) *n.* a hundred (i. e. many) contradictions वरमनुपपत्तिशतैकवेषायाः ··· जातेस्तद्बुद्धिशब्दनिर्वाहकत्वाङ्गीकारादुभयवाद्यभ्युपगतसुसदृशसंस्थानस्यैकबुद्धिशब्दनिबन्धत्वाश्रयणम् NītiMā 41.13; न हीदमिति ··· ज्ञानं रजतभ्रमं निवर्तयतीत्यादिकमनुपपत्तिशतं पूर्वोक्तत्वादिह लेशतः दर्शितम् ŚrutaPra. ii. 150.15 (*on* i. 4.22)

**अनुपपत्तिशमनासमर्थत्व** (anupapattiśamanāsamartha–tva) *n.* the state of not being capable of the removal of contradiction दृष्टार्थापत्तौ साक्षादुपपादकेऽर्थ एवार्थापत्तेः प्रामाण्याभ्युपगमात् श्रुतार्थापत्तावपि तत्रैव तस्याः प्रामाण्यं युक्तम्, न शब्दे। तस्य साक्षादनुपपत्तिशमनासमर्थत्वात् PrakaPañ. 389.18.

**अनुपपत्तिशान्ति** (anupapatti–śānti) *f.* pacification, i. e. removal of contradiction पीनत्वानुमितं भोजनं दिवानिषिद्धं रात्रिवर्ति ··· तथापि शब्दविकल्पितं तत् कल्प्यमिति तद्वाचकशब्द एव ··· कल्प्यते ततोऽप्यर्थबोधादनुपपत्तिशान्तेः NayaVi. 156.3 (*on* i. 1.5); 156.8 (*on* i. 1.5); ब्रह्मण्ययमनुपपत्तिशान्तिहेतुविशेषो नाम शक्तिविशेषोऽङ्गीकरणीयः प्राप्नोति।··· अङ्गीकृतेऽपि विशेषे नानुपपत्तिशान्तिः NyāySu.(Ja.) 105B. 6 (*on* i. 1.2); लिङ्गादीनां श्रुतिस्वरूपमात्रकल्पनेनापि अनुपपत्तिशान्तेस्तत्र श्रुतिस्वरूपमात्रमेव कल्प्यते MayūMāli. 21.8 (*on* i. 3.1); यावत्यर्थे लक्षितेऽनुपपत्तिशान्तिस्तावानेव तनयाशब्देन लक्ष्यते BālamBha. ii. 213.12 (*on* 2.135); iii. 9.15 (*on* 3.3)

**अनुपपत्तिसत्त्व** (anupapatti–sattva) *n.* existence of impossibility अनुपपत्तिसत्त्वे लक्षणापि न दोषः LaCandr. 873.39.

**अनुपपत्तिसंबन्ध** (anupapatti–sambandha) *m.* relation through incompatibility अनुपपत्तिसंबन्धमात्रप्रभावितं च तात्पर्यमुपपादके न शक्तिमपेक्षते TattvBi. 155.3.

**अनुपपत्तिसाम्य** (anupapatti–sāmya) *n.* similarity of impossibility ईश्वरप्रवर्तने स्वकार्ये पूर्वं कर्म ततः पूर्वभाविकर्मप्रवर्तितेनेश्वरेण प्रवर्तितमिति वक्तव्यं तथा च सर्वत्रानुपपत्तिसाम्यादन्धपरम्परा VedāntKa. 305.5 (*on* ii. 2.37)

**अनुपपत्तिसिद्धि** (anupapatti–siddhi) *f.* attainment of non-accomplishment अभिसारिकाणामभिसरणविघ्न एव न संभवतीति तत्प्रतिषेधप्रणयप्रयासस्सख्यास्तस्यामनर्थक एवेति प्रतिषेधविधेरनुपपत्तिसिद्धिः VyaktiVi. 116.18.

**अनुपपत्तिस्फोरणार्थम्** (anupapattisphoraṇārtham) *adv.* in order to reveal the impossibility ईशानशब्दस्य देहेन्द्रियाद्यपेक्षया संकोचस्यानुपपत्तिस्फोरणार्थम् ··· भूतभव्यशब्दोपादानम् ŚrutaPra. ii. 51.13 (*on* i. 3.23)

**अनुपपत्तिस्वरूप** (anupapatti–svarūpa) *n.* nature of impossibility (नेतरोऽनुपपत्तेः) अनुपपत्तेरित्यस्मिन् पदे पञ्चम्यर्थं पश्चाद्वक्ष्यन् अनुपपत्तिस्वरूपमाह ŚrutaPra. iB. 231.19 (*on* i. 1.17)

**अनुपपत्तिस्वीकार** (anupapatti–svīkāra) *m.* acceptance of untenability अनुपपत्तिस्वीकारो न कुलधर्मः किं तु परिहर्तुमशक्यानुपपत्तिरनिर्वाच्यताख्यापकत्वेन स्वीक्रियते GuruCandr. iii. 11.13; LaCandr. 577.39.

**अनुपपत्त्यदर्शन** (anupapatty–adarśana) *n.* non-observation of contradiction पक्षद्वयेऽप्यनुपपत्त्यदर्शनं संदेहबीजम् TattvPrakā. 147B. 7 (*on* iii. 1.29)

**अनुपपत्त्यनवकाश** (anupapatty–anavakāśa) *m.* absence of the scope for inapplicability क्रमेण चैत्रपदस्वपदाभ्यां तृतीयाद्वितीययोरनुपपत्त्यनवकाशात् VyutpaVā. 111.17.

**अनुपपत्त्यनुद्धार** (anupapatty–anuddhāra) *m.* non-removal of untenability तावतापि 'चन्द्र इव मुखमाह्लादयति' इत्यादावनुपपत्त्यनुद्धारात् AlaṅkāKau.(Vi.) 67.7.

**अनुपपत्त्यन्तर** (anupapatty–antara) *n.* **A** another (case of) untenability तत्रान्योऽन्याश्रयादीन्यनुपपत्त्यन्तराणि पूर्ववत् ŚrutaPra. ii. 449.3 (*on* iii. 2.29); अनुपपत्त्यन्तरमाह – तथा रामायणादीनां भविता दुःखहेतुता SāhiDa. 83.1; **B** another (case of) contradiction अनुपपत्त्यन्तरेण ब्रह्मस्वरूपपरत्वे चावश्यंभाविनि ··· ब्रह्मात्र सदिति प्रतिपाद्यते ŚatDū. 204.28; अनुपपत्त्यन्तरस्य ··· अग्रहणात् GuruCandr. ii. 244.12.

**अनुपपत्त्यन्तरप्रदर्शन** (anupapattyantara–pradarśana) *n.* demonstration of another contradiction प्रधानत्वजीवत्वपक्षयोरनुपपत्त्यन्तरप्रदर्शनपरत्वेनोत्तरसूत्रमवतारयति ŚivārkaMaDī. i. 383.19 (*on* i. 2.23)

**अनुपपत्त्यन्तरशान्ति** (anupapattyantara–śānti) *f.* pacification, i. e. removal of another contradiction न हि स्वयमनुपपन्नमनुपपत्त्यन्तरशान्त्यै प्रभवति NyāySu.(Ja.) 107A. 4 (*on* i. 1.2)

**अनुपपत्त्यन्तराग्रहण** (anupapattyantarāgrahaṇa) *n.* non-perception of another contradiction तयोस्तत्र भेदग्रहेऽप्यनुपपत्तावनुपपत्त्यन्तराग्रहणात् AdvaiSi. 518.2.

**अनुपपत्त्यभाव** (anupapatty–abhāva) *m.* **1A** absence of untenabi-

lity मुक्तानामपि पुनस्सा (माया) स्यात्, अनुपपत्त्यभावात् IṣṭaSi. 325.17; अनुपपत्त्यभावेऽपि तत्पूर्वकत्वमाक्षिप्येत NyāyRa. 135.11 (*on* 4.6); Nyāyāmṛ. 201B. 7; धूमादेः कारणत्वेऽनुपपत्त्यभावात् GuruCandr. ii. 18.7; संसर्गज्ञानस्य विशिष्टबुद्धावहेतुत्वेनानुपस्थितस्यापि संसर्गतया भानसंभवेन संसर्गतामतेऽनुपपत्त्यभावात् VyutpaVā. 34.4; VaiyāBhū. 220.4 (*on* 50); **1B** absence of contradiction न चार्थापत्तितस्तन्मूलश्रुतिसिद्धिः, अनुपपत्त्यभावात् ĀgaPrā. 5.8; TantrRa. 287.4; सिद्धे तस्मिन्नाऽौ (नियोज्यः) कल्पयितुं शक्यते अनुपपत्त्यभावात् NyāyRaMā. 2.15; 13.8; NyāyRa. 868.12 (*on* 7.81); प्रकृतौ यस्मिन्वाससि सोमो मितः … तेनैव … उपावहरणमनुष्ठितम्, अहर्गणे तु मानवेलायामनुपपत्त्यभावादेकस्मिन्नेव वाससि…सोमे… स्थापिते … अन्यदुत्पाद्यते ŚāstrDī. 754.3 (*on* x. 6.22); MayūMāli. 754.2 (*on* x. 6.22); न चार्थापत्तिः। अनुपपत्त्यभावात् KarmaNi. 2B.1; TattvCin. iv(2). 783.4; अनुपपत्त्यभावस्य वक्ष्यमाणत्वात् ŚatDū. 160.24; नाप्यत्र यवागूपाकवदर्थो नियामकः। वसन्तमन्त्रेण यस्य कस्यचित् प्रयाजस्यानुमन्त्रणेऽप्यनुपपत्त्यभावात् NyāyMāVi. 266.13 (*on* v. 1.3); ज्ञानेऽनुपपत्त्यभावेऽपि रूपस्य सत्त्वेनानुभूयमानस्य मिथ्यात्वं विरुद्धम् VivaPraSaṁ. 43.18; 132.6; अप्रमितत्वमनुपपत्त्यभावः … इत्यर्थापत्तिदूषणानि NyāySu.(Ja.) 25A. 13 (*on* i. 1.1); 441B. 9 (*on* ii. 3.14); YuktiSneha. 94.30 (*on* i. 1.5); प्रथमे द्वितीये च पक्षे अनुपपत्त्यभावात् AdvaiSi. 386.23; न च … निष्फलानुवादत्वकल्पनं युक्तमिति चेन्नैवम्। … मन्त्रप्रतीकोपादानमात्रस्यानुवादकत्वकल्पनायामनुपपत्त्यभावात् VidhiRa. 27 (144.21); विचाराभावे … अनुपपत्त्यभावाद् विचारोऽपि न विध्याक्षिप्तः स्यात् ŚivārkaMaDī. i. 29.23 (*on* i. 1.1); ii. 422.30 (*on* iv. 1.1); इह तृतीयायाः कर्त्रर्थत्वकारकविभक्तित्वयोरनुपपत्त्यभावात् न मद्धेतोः प्रागुक्तशेषः PūrvottaVāNaMā. 216.17; 184.5; अर्थादितरसाधनाभावप्रतीतिरिति चेन्न। अनुपपत्त्यभावात् SiddhāTa. 32.17; MīmāKau. iii(1). 93.11 (*on* i. 2.44); LaCandr. 517.18; विना ताभ्यां (कर्तृकर्मभ्याम्) प्रातिपदिकस्य तदर्थस्य वानुपपत्त्यभावात् SiddhāSi. i. 18.12; BhāṭṭCin. i. 92.17 (*on* i. 1.4); अतिरिक्तप्रतियोगितापक्षेऽनुपपत्त्यभावात् AlaṅkāKau.(Vi.) 10.1; उत्पादकस्योपपाद्यं विनानुपपत्त्यभावात् AlaṅkāKau.(Vi.) 97.4; LaŚabdeŚe. i. 220.13; **1C** absence of impossibility यत्र विधिमन्तरेण प्रवृत्तिर्न लभ्यते तत्रैव कल्प्यते नान्यत्रानुपपत्त्यभावात् TantrRa. 11.12; द्वैतसत्यत्वं विनानुपपत्त्यभावात् न परमार्थभेदकल्पनं न्याय्यम् PrakaVi. 423.15; न गवादिपदानां कार्यान्वितस्वार्थशक्तिकल्पनाप्रसक्तिः। अनुपपत्त्यभावात् ŚivārkaMaDī. i. 170.19 (*on* i. 1.4); तत्प्रतिपादनसंभवेनानुपपत्त्यभावात् MīmāKau. iii(1). 26.14 (*on* i. 2.7); तद्व्यतिरेकेऽनुपपत्त्यभावात् LaCandr. 154.17; 320.5; तस्य समासस्य तावदर्थे शक्तावनुपपत्त्यभावेनार्थवत् सूत्रेणैव तत्संभवात् VaiyāBhū. 161.17 (*on* 31); **1D** absence of inapplicability तस्मात् सख्युरित्युदाहरणे अनुपपत्त्यभावात् न पदान्तसूत्रे 'नैवं विज्ञायते' इति भाष्यम् … न योजनीयम् PāṇiTaVāNaMā. 5.21; **2** absence of non-accomplishment तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम्। स्वरूप आनर्थक्यात्। व्रीहिस्वरूपस्य प्रोक्षणं विनानुपपत्त्यभावात् MīmāNyāPra. 207.8.

**अनुपपत्त्यभिधान** (anupapatty-abhidhāna) *n.* statement of impossibility कस्यचिद्विशेषणधर्मस्य तद्रूपत्वमतद्रूपत्वं वेति विकल्प्योभयथाप्यनुपपत्त्यभिधानेन धर्मिणस्तद्विशिष्टत्वखण्डनं नित्यसमः TārkiRa. 300.7.

**अनुपपत्त्यर्थता** (anupapattyartha-tā) *f.* the state of having incongruity as meaning अनुपपत्त्यर्थतायां फलविरोधात् KhaṇḍanKhā. 783.19.

**अनुपपत्त्यविशेष** (anupapatty-aviśeṣa) *m.* **A** non-difference (i.e. sameness) of impossibility तं विशेषं विना व्यक्तेरप्यनुपपत्त्यविशेषात् KhaṇḍanKhā. 580.3; जीवधर्माणामिवेश्वरधर्माणामप्यनुपपत्त्यविशेषात् ŚrutaPra. iB. 294.28 (*on* i. 2.3); **B** non-difference (i. e. sameness) of untenability संघातारम्भवादयोरनुपपत्त्यविशेषे कथं तरप्प्रयोगः VedāntKa. 272.9 (*on* ii. 2.18)

**अनुपपत्त्यसंभव** (anupapatty-asambhava) *m.* impossibility of non-accomplishment प्रयाजशेषप्रतिपत्तेः संनिहितहविर्मात्रेणापि सिद्ध्या धारणं विनानुपपत्त्यसंभवान्न धारणप्रयोजकत्वम् MayūMāli. 361.4 (*on* iv. 1.14)

**अनुपपत्त्यादि** (anupapatty-ādi) *adj.* contradiction etc. तदेवानुपपत्त्यादेः क्वाप्यत्यन्ततिरस्कृतम् BhāvPra.(Śā.) 173.2 (6)

**अनुपपत्त्यादिज्ञान** (anupapattyādi-jñāna) *n.* knowledge of incongruity etc. अर्थान्तरे अनुपपत्त्यादिज्ञानं विनैवोपादाने प्रयोगात् तदेव मुख्यार्थः LaCandr. 763.42.

**अनुपपत्त्यापात** (anupapatty-āpāta) *m.* occurrence of untenability प्रतियोग्यादिसंबन्धे त्वयापि स्वीकृतेऽनुपपत्त्यापातात् GuruCandr. ii. 105.13.

**अनुपपत्त्यापादक** (anupapatty-āpādaka) *adj.* causing contradiction न तस्य किंचिदर्थान्तरमनुपपत्त्यापादकमस्ति PrakaPañ. 276.4.

**अनुपपत्त्याभास** (anupapatty-ābhāsa) *m.* semblance of incongruity व्याप्त्याभासोऽनुपपत्त्याभास उदाहरणमात्रदर्शनं चेत्येतत् त्रयं संभावनाबुद्धिजनकत्वेन युक्तिरित्युच्यते VivaPraSaṁ. 268.21.

**अनुपपत्त्युक्ति** (anupapatty-ukti) *f.* statement of impossibility लक्षणादेर्मिथ्यात्वेन तत्रानुपपत्त्युक्तेरनौचित्यादिति भावः LaCandr. 503.26.

**अनुपपत्त्युद्घाटन** (anupapatty-udghāṭana) *n.* act of revealing untenability एवं ज्ञानस्वरूपमिति श्लोकस्य प्रपञ्चमिथ्यात्वपरत्वमनुपपत्त्युद्घाटनेन निरस्तम् ŚrutaPra. iA. 224.31 (*on* i. 1.1); अनुपपत्त्युद्घाटनेनार्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनं चोद्यम् ŚrutaPra. ii. 35.14 (*on* i. 3.13)

**अनुपपत्त्युद्धार** (anupapatty-uddhāra) *m.* removal of contradiction सावयवत्वपरिच्छिन्नत्वयोरपि तत्र (गगने) भावान्न तत्प्रतिबिम्बदर्शनम् अनुपपत्त्युद्धारे प्रयोजकम् VedāntRaMañ. 1.1 (5.21)

**अनुपपत्त्युपन्यास** (anupapatty-upanyāsa) *m.* mention of untenability सिद्धमर्थान्तरग्रहणायोगं तत्र तत्रानुपपत्त्युपन्यासेन दृढीकरोति ŚivārkaMaDī. i. 22.15 (*on* i. 1.1)

**अनुपपत्त्युपपत्तियुक्त** (anupapattyupapatti-yukta) *adj.* associated with unreasonable (turned into) reasonable वस्तु क्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान्यदि विमोहयितुं समर्थाः। न स्युर्विदाः RājTa.(Ka.) 5.379.

**अनुपपत्त्युपशम** (anupapatty-upaśama) *m.* removal of non-accomplishment अनुपपत्त्युपशमेऽपि प्रवृत्तिसिद्ध्यर्थमर्थान्तरं कल्प्यते Mitā. 405.8 (*on* 3.219)

**अनुपपत्त्येकशरण** (anupapatty-ekaśaraṇa) *adj.* having untenability alone as the refuge मन्त्रोच्चारणस्य तु दृष्टेनैवार्थवत्त्वात्तत्रानुपपत्त्येकशरणमदृष्टकल्पनमनवकाशम् ŚāstrDī. 16.3 (*on* i. 2.4)

**अनुपपद्** (an-upapad-) IV. Ā. to be unsuitable यद्यानन्दमयस्य ब्रह्मत्वं न स्यान्निर्विषयत्वादुपसंक्रमश्रुतिरुपरुध्येत द्वितीयाविभक्तिश्चानुपपद्येत BrahmSūBh.(Bhā.) 28.32 (*on* i. 1.19)

**अनुपपद** (an-upapada) *n.* (Gr.) other than an *upapada* (word standing near, a subordinate word indicated by Loc.) अनुपादाने ह्यनुपपदे प्रत्ययप्रसङ्गः Vār. 4 *on* P. iii. 1.92; अक्रियमाणे हि निमित्तोपादानेऽनुपपदेऽपि प्रसज्येत MahāBh. ii. 76.18 (*on* iii. 1.92); *adj.* what is not an *upapada* अकारादनुपपदात् कर्मोपपदो विप्रतिषेधेन Vār. 6 *on* P. iii. 2.1 = LaŚabdeŚe. ii. 765.13; PadMañ. *on* KāśiVṛ. *on* P. i. 4.3; अनुपपदस्यावकाशः पचतीति पचः MahāBh. ii. 94.18 (*on* iii. 2.1); अकारादनुपपदात् सोपपदो भवति विप्रतिषेधेनेति वचनाच्च PariVṛ.(Sī.) 83.9.

**अनुपपदत्व** (anupapada-tva) *n.* **A** the state of not having an *upapada*, i. e. a prefixing word (इष्टकाः) समचतुरश्रा अनुपपदत्वाच्छन्दस्य HirŚS. xxv. 4.2. (938.14); ĀpaŚuS. iv. 11.3; **B** the state of not being an *upapada* (i. e. subordinate word indicated by Loc. in P. iii. 1.92) व्याख्यानादेव लक्षणस्यानुपपदत्वं विज्ञायते Nyās. i. 610.22 (*on* iii. 2.52); अणुत्पत्तेः प्राक् षष्ठ्यभावेन षष्ठ्यन्तस्यानुपपदत्वात् LaŚabdeŚe. ii. 768.10.

**अनुपपदार्थ** (anupapadārtha) *adj.* meant for a word which does not have any prefix क्विब्विधिरनुपपदार्थः Vār. 1 *on* P. iii. 2.178; अनुपपदार्थोऽयमारम्भः MahāBh. ii. 135.18 (*on* iii. 2.178)

**अनुपपद्यमान** (an-upapadyamāna) *adj.* [*f.* -ā] **1** not becoming available, not being met with अनुपपद्यमानासु प्रगाथा एव स्युरनाचारो हि षडहेऽन्यत्र तृतीयादह्नः सतोबृहतीनाम् LāṭyāŚS. x. 8.5; DrāhyŚS. xxix. 3.6; अथानुपपद्यमानायां प्रकृतौ निर्णीय यथा मन्येत तथा संशयेषु प्रतिपादयेत् NidāSū. 179.8 (10.5); (पशौ) अनुपपद्यमान आज्यं जुहुयात् KauśiSū. 138.11; **2** not being derived, not derivable सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत् Nir. 2.2 (44.17); **3Ai** not being congruous or compatible संबन्धेऽनुपपद्यमानेऽवश्यं मत्वर्थलक्षणा परिग्रहीतव्या दधिमता होमेनेति TantrVā. 550.14 (*on* ii. 2.26); 891.22 (*on* iii. 3.24); यच्चानुपपद्यमानं दृष्ट्वा अर्थापत्तिज्ञानमुत्पद्यते TātpaṬ.(U.) 142.18 (*on* 4.89); YuktiSneha. 37.14 (*on* i. 1.4); विरोचनः … अनुपपद्यमानमपि विपरीतमर्थं शरीरमात्मेति प्रतिपन्नः KenUBh. 42.7 (*on* 2.1); नाप्यर्थापत्तिग्राह्यः तद्विनानुपपद्यमानस्यासंभवात् …। अप्रमेयः (विष्णुः) ViṣṇuSaBh. 47.5 (*on* 19); प्राभवं च नियम्यलोकोद्भवं विना अनुपपद्यमानं तदन्तर्गततत्कार्यमर्थापत्त्या सिध्यति LalitāTriBh. 273.3 (*on* 9); दृष्टान्तपदं लोकप्रसिद्ध्यानुपपद्यमानम् … विध्यन्तरम् … कल्पयति BālaKrī. i. 17.23 (*on* 1.7); वाक्यात्मा वाक्यार्थधीहेतुरनुभवाद्वा व्यवस्थाप्यते, अर्थधीभेदाद्वा अन्यथानुपपद्यमानात् TattvBi. 9.2; 132.7; 156.3; यत्तु अनुपपद्यमानमुपलभ्य प्रवर्तते तत् प्रत्यक्षपूर्वकं भविष्यति Kāśi. i. 241.25 (*on* 4.89); इदमेव चाग्नौ दर्शनमनग्नौ चादर्शनमनुपपद्यमानमग्निना नियमं प्रतिपादयति Kāśi. iii. 18.2 (*on* 5(4).12); iii. 183.22 (*on* 5(7).76); न च गृहाभावेन वा सत्त्वमपह्नूयते, येन सत्त्वमेवानुपपद्यमानमात्मानं न बहिरवस्थापयेत् SāṁkhyTaKau. 195.1 (*on* 5); PāṇiTaVāNaMā. 33.10; प्रथमश्लोकेन … क्रियादेः बाह्यवादे विरुद्धधर्माध्यासदूषणेन अनुपपद्यमानस्याप्यवश्यसमर्थनीयं वपुः इति दर्श्यते PratyabhiVi. ii. 32.2 (*on* ii. 2.1); यस्त्वनुपपद्यमान उपायतामात्रेणार्थान्तरप्रतिपत्तिं कृत्वा पलायत इव स तिरस्कृतः

551.10.

**अनुपलब्धिप्रमाणैकगोचरत्व** (anupalabdhipramāṇaikagocara-tva) *n.* the state of being an object merely of *anupalabdhi* (negative perception) as a means of knowledge स्तम्भः पिशाचो न भवतीति तद्वदेतदपि भविष्यतीति चेन्न, व्यावृत्तेरनुपलब्धिप्रमाणैकगोचरत्वात् NyāyKa. 75.8.

**अनुपलब्धिप्रयोग** (anupalabdhi-prayoga) *m.* usage of *anupalabdhi* (negative perception) इमे सर्वे कार्यानुपलब्ध्यादयो दशानुपलब्धिप्रयोगाः स्वभावानुपलब्धौ संग्रहमुपयान्ति NyāyBi. 2.42.

**अनुपलब्धिप्रसङ्ग** (anupalabdhi-prasaṅga) *m.* undesired occasion of non-perception वस्तुनः … विशेषोपजनने च कथं सत उत्पत्तिर्विशेषस्यैव प्रागसत्त्वात् सत्त्वे वा प्रागप्यनुपलब्धिप्रसङ्गः TātpaṬ.(Vā.) 443.8 (*on* ii. 2.13); परमाण्वादिष्वपि सत्तादिकं प्रत्यक्षमापद्येत स्वरूपयोग्यताया अविशेषात्। अयोग्यत्वे घटादावनुपलब्धिप्रसङ्गात् Kiraṇā. 283.14; 107.19; माया …। सा च नात्मनो भिन्ना। अनुपलब्धिप्रसङ्गात् SarvaMaSaṁ. 41.10.

**अनुपलब्धिबल** (anupalabdhi-bala) *n.* strength of non-perception अभेदेऽपि किं प्रमाणमिति चेत्। मा भूत् तावत् संदेहस्थितावपि अनुपलब्धिबलालम्बनविलयात् ĀtmaTaVi. 240.4.

**अनुपलब्धिबाध** (anupalabdhi-bādha) *m.* **A** contradiction through *anupalabdhi* (negative perception) आनन्तर्यं बोधयतः सामर्थ्यस्यैवानुपलब्धिबाधः NyāyRa. 495.12 (*on* 5(9).6); **B** contradiction through non-perception न चादृश्यस्य कर्तुरनुपलब्धिबाधः TattvCin. ii(2). 33.1; iv(2). 645.9; सूक्ष्मरूपेणावस्थानस्य वायोग्यत्वस्य वा कल्पनात् नानुपलब्धिबाधः MayūMāli. 104.16 (*on* ii. 1.2)

**अनुपलब्धिबाधपरिहार** (anupalabdhibādha-parihāra) *m.* removal of the contradiction of non-perception अनुपलब्धिबाधपरिहाराय सूत्रम् TattvPrakā. 83A.11 (*on* ii. 1.7)

**अनुपलब्धिबाधित** (anupalabdhi-bādhita) *adj.* [*f.* -ā] **A** contradicted by non-perception or non-availability तत्त्वान्तरप्रकाशाभ्युपगमस्त्वनुपलब्धिबाधितो न दूषणान्तरं प्रयोजयति ĀtmaSi. 64.12; स्पर्शनप्रत्यक्षो वायुरुपलभ्यमानस्पर्शाधिष्ठानत्वाद् घटवदित्यनुमानम् … अनुपलब्धिबाधितम् NyāyKa. 46.8; उद्दिष्टो वेदितव्य इति अनुपलब्धिबाधितं (पूर्वपक्षम्) मन्यमान उत्तरग्रन्थमवतारयति NyāyVārPari. 219.7; शरीरमयोनिजमेवेति … नन्वनुपलब्धिबाधितमेतत् Kiraṇā. 71.13; ननु पर्वते वह्निसाधनमप्यनुपलब्धिबाधितं स्यात् PrakaVi. 42.13; अनुपलब्धिबाधितमेतत् PadMañ. *on* KāśiVṛ. *on* P. i. 2.45; **B** contradicted by *anupalabdhi* (negative perception) आचार्योक्तत्वादिति हेतूक्तिस्तु अनुपलब्धिबाधितैव BhāṭṭDī. ii. 142.19 (*on* iv. 4.3); ननु स्मृतिमूलभूतवेदोऽनुपलब्धिबाधितः MayūMāli. 21.6 (*on* i. 3.1)

**अनुपलब्धिबाधितत्व** (anupalabdhibādhita-tva) *n.* **A** the state of being contradicted by non-perception or non-availability अस्तु वैजात्यमिति चेन्न। अनुपलब्धिबाधितत्वात् ĀtmaTaVi. 767.12; ननु सर्वमेतद्बाधकत्वातिरिक्तैतन्निष्ठधर्मान्यधर्मवत् प्रमेयत्वात् पटवत्। न, अनुपलब्धिबाधितत्वात् PrakaVi. 515.21; न जीवस्येश्वराधीनकर्तृत्वं वाच्यम् … न च श्रुत्या तत्सिद्धिः। तस्यानुपलब्धिबाधितत्वात् TattvPrakā. 89B.8 (*on* ii. 1.26); न चासतः शशविषाणादेरुत्पत्तिनाशयोरदर्शनात्… शक्त्यात्मनावस्थितधर्माधर्मवशेन वैचित्र्योपपत्तिरिति वाच्यम्। मृत्पिण्डकपालावस्थयोर्घटसत्त्वस्यानुपलब्धिबाधितत्वात् BhāṭṭCin. i. 40.18 (*on* i. 1.4); **B** the state of being contradicted by *anupalabdhi* (negative perception) यत्तु … वस्त्रान्तरितौदुम्बरीस्पर्शेऽप्यविरोध इत्युक्तम्, तन्न, … कुशवस्त्रान्तरितौदुम्बरीस्पार्शनप्रत्यक्षस्यानुपलब्धिबाधितत्वात् MīmāKau. i. 17.22 (*on* i. 3.3)

**अनुपलब्धिभेद** (anupalabdhi-bheda) *m.* **i** type of non-availability कारणानुपलब्ध्या सर्वे एवानुपलब्धिभेदा उपलक्षिताः NyāyVārPari. 219.8; **ii** a type of means of knowledge namely *anupalabdhi* (negative perception) तानि च प्रमाणानि षट्, प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिभेदात् VedāntPari. 26.3.

**अनुपलब्धिमात्र** (anupalabdhi-mātra) *n.* **Ai** non-availability or non-perception alone असद्व्यवहारस्योपलब्धिलक्षणप्राप्तस्यानुपलब्धिमात्रवृत्तिसाधनम् HetuBi. 54.15; ननु नानुपलब्धिमात्रादभावः सिध्यति TātpaṬ.(U.) 57.12 (*on* 2.52); 396.18 (*on* 5(7).37); खपुष्पादेस्तु सविशेषणयानुपलब्ध्याभाव एव निश्चीयते न तस्यानुपलब्धिमात्रम् NyāyMañ. i. 58.13; योग्यानुपलब्धिनिर्धारणे च अनुपलब्धिमात्रात् निध्यादीनामपि विरहो निर्धार्येत TarkSaṁ.(Ā.) 108.14; न चादृश्यस्य कर्तुरनुपलब्धिबाधः अनुपलब्धिमात्रस्य बाधकत्वे अतीन्द्रियोच्छेदात् योग्यानुपलब्धेश्चासिद्धेः TattvCin. ii(2). 33.1; अयोग्योपाधेर्निराकर्तुमशक्यत्वात्। अनुपलब्धिमात्रेण |निरासे सर्वातीन्द्रियनिरासप्रसङ्गात् SarvaDaKau. 42.7; ज्ञाताज्ञातत्वविशेषं विहायानुपलब्धिमात्रेण एकाकारत्वोपपत्तेः SarvaDaKau. 98.13; अनुपलब्धिमात्रादप्यभावज्ञानोपपत्तेः BhedaDhi. 22.5; अनुपलब्धिमात्रस्याभावग्राहकत्वे त्वतीन्द्रियमात्रस्यैवाभावग्रहणापत्तिः GuruCandr. iii. 147.11; LaCandr. 639.31; **Aii** *anupalabdhi* (negative perception) alone यदि गत्यैवानुपलब्धेरभावसिद्धिः नानुपलब्धिमात्रात् ततः सर्वानग्निदेशगमनासंभवान्न तद् व्यतिरेकः सिध्येत् NyāyRa. 460.12 (*on* 5(7).39); **B** non-availability in general अश्रवणादिशब्दोच्चारणे शब्दस्यैवानुपलब्धिः प्रतीयते। नानुपलब्धिमात्रम् Nyās. i. 117.8 (*on* i. 1.60); न प्राप्तानुपलब्धिर्दृशः। नाप्यनुपलब्धिमात्रं स्वाभावादन्यत् IṣṭaSi. 7.19.

**अनुपलब्धिमात्रसहाय** (anupalabdhimātra-sahāya) *adj.* having the support of non-perception alone भावभूतप्रमाणाविष्टमेव चेत उपयुज्यते …। न ह्यनुपलब्धिमात्रसहायं तत् NyāyKuA. ii(1). 239.8.

**अनुपलब्धिमात्रोपन्यास** (anupalabdhimātropanyāsa) *m.* statement of non-availability or non-perception alone कुतश्च ज्ञानमतीन्द्रियम्। … अनुमानोपन्यासे (अनुमानपक्षे) साध्याविशिष्टत्वात्। अनुपलब्धिमात्रोपन्यासे तु योग्यताविशेषितासौ कथमैन्द्रियिकोपलम्भाभावं गमयेत् NyāyKuA. ii(2). 16.7.

**अनुपलब्धिमानगम्यत्व** (anupalabdhimānagamya-tva) *n.* the state of being knowable through *anupalabdhi* (negative perception) as means of knowledge अभावमात्रस्यानुपलब्धिमानगम्यत्वे तु न भेदे साक्षिवेद्यत्वशङ्का LaCandr. 517.25.

**अनुपलब्धियुक्ति** (anupalabdhi-yukti) *f.* reasoning (in the form) of non-availability or non-perception परमेश्वरो नानुपलब्धियुक्त्या निराकार्यः TattvPrakā. 90A.1 (*on* ii. 1.26)

**अनुपलब्धियोग्य** (anupalabdhi-yogya) *adj.* **A** fit for (being the object of) *anupalabdhi* (negative perception) यस्तु न केनचिदन्वितस्तस्य कथं अनुपलब्धियोग्यात् सर्वतो व्यतिरेकः प्रतीयेत Kāśi. iii. 61.14 (*on* 5(4).88); **B** fit for non-perception अणुभिः आरब्धमतिसूक्ष्ममनुपलब्धियोग्यं शरीरं परिकल्प्यते NyāyKa. 310.24.

**अनुपलब्धियोग्यत्व** (anupalabdhiyogya-tva) *n.* the state of being fit for *anupalabdhi* (negative perception) तेषामनुपलब्धियोग्यत्वात् न स्वात्मनोऽभावस्तेषु शक्यतेऽवगन्तुम् Kāśi. iii. 175.7 (*on* 5(7).46)

**अनुपलब्धिरहस्य** (anupalabdhi-rahasya) *n.* name of a work, K. H. POTTER, BIBLIOGRAPHY, 1.223 (Ms.)

**अनुपलब्धिरूप** (anupalabdhi-rūpa) *adj.* **A** having a form which is not available वस्तुनः प्रागनुपलब्धिरूपस्य पश्चादुपलब्धिः NyāyVār. 489.12 (*on* iv. 1.49); **B** of the nature of *anupalabdhi* (negative perception) बाधकं च प्रमाणमनुपलब्धिरूपमेव PrakaPañ. 199.8; ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम् VedāntPari. 241.2; 253.1; *n.* non-perception in form सा चोपलब्धिः स्वात्मन्यनुपलब्धिरूपेण वर्तते चेत् साप्युपलभ्या स्यात् TārkiRa. 294.9.

**अनुपलब्धिरूपत्व** (anupalabdhirūpa-tva) *n.* the state of being of the form of non-availability or non-perception विरुद्धस्याप्यनुपलब्धिनिषेधस्य अनुपलब्धिरूपत्वात् तत्राप्यर्थान्तरनिषेधे कार्यकारणमन्तरेण विरोधाप्रतिपत्तिः PramāVāSvopVṛ. 3.23.

**अनुपलब्धिरूपप्रमाण** (anupalabdhirūpa-pramāṇa) *n.* means of valid cognition in the form of *anupalabdhi* (negative perception) घटादौ ज्ञानाभावस्यानुपलब्धिरूपप्रमाणेनैव धीः LaCandr. 550.36.

**अनुपलब्धिरूपप्रमाणान्तरवेद्यत्व** (anupalabdhirūpapramāṇāntara-vedya-tva) *n.* the state of being knowable through another means of valid cognition in the form of *anupalabdhi* (negative perception) तस्य (अभावस्य) अनुपलब्धिरूपप्रमाणान्तरवेद्यत्वम् BhāṭṭCin. i. 47.1 (*on* i. 1.4)

**अनुपलब्धिलक्षण** (anupalabdhi-lakṣaṇa) *adj.* [*f.* -ā] of the characteristic of non-availability or non-perception त एते कार्यस्वभावानुपलब्धिलक्षणास्त्रयो हेतवः PramāVāSvopVṛ. 2.3; प्रतिपत्तुः प्रमाणाभावात् निवृत्तं सत्त्वमनुपलब्धिलक्षणं स्वनिमित्तान् शब्दव्यवहारान् निवर्तयति PramāVāSvopVṛ. 67.12; प्रमाणम् … तच्चानुपलब्धिलक्षणं लिङ्गमेवेति … नानुमानाद्भिद्यते NyāySu.(Ja.) 476A.11 (*on* iii. 2.1); 476B.12 (*on* iii. 2.1); प्रमाणान्तरवादिनोऽप्यनुपलब्धिलक्षणा प्रमाणानुत्पत्तिर्न सत्तयाभावबोधिका TantrRaha. 16.21.

**अनुपलब्धिलक्षणप्राप्त** (anupalabdhilakṣaṇa-prāpta) *adj.* which has conformed to the characteristic of non-perception, fulfilling the condition of non-perception अविद्यमानमपि प्रमाणस्यालम्बनं स्वतन्त्रं न भवति तदप्यनुपलब्धिलक्षणप्राप्तम् NyāyVār. 92.18 (*on* i. 1.23); तमःशब्दस्याप्यनुपलब्धिलक्षणप्राप्तानि द्रव्यगुणकर्माणि विषयः NyāyVār. 341.2 (*on* iii. 1.1); अनुपलब्धिलक्षणप्राप्तेषु देशकालस्वभावविप्रकृष्टेष्वर्थेष्वात्मप्रत्यक्षनिवृत्तेरभावनिश्चयाभावात्

NyāyBi. 2.27.

**अनुपलब्धिलक्षणप्राप्तता** ( anupalabdhilakṣaṇaprāpta-tā ) *f.* the state of conforming to, i.e. fulfilling the characteristic of non-perception तद्देशसन्निहितमप्यनुपलब्धिलक्षणप्राप्ततयाग्न्यादिसामग्रीसन्निधानात् प्रागनुपलब्धम् HetuBiṬ. 45.17; 47.16.

**अनुपलब्धिलक्षणाप्राप्त** ( anupalabdhilakṣaṇāprāpta ) *adj.* which has not conformed to the characteristic of non-perception न च दृष्टसंभवे नादृष्टं कल्पयितुं युक्तम् ··· अनुपलब्धिलक्षणाप्राप्तस्याशक्यनिराकरणत्वात् TātpaṬ.(Vā.) 161.3 (*on* i. 1.5)

**अनुपलब्धिलिङ्ग** ( anupalabdhi-liṅga ) *adj.* having non-perception or non-availability as the sign, i.e. probans प्रत्यक्षात् प्रमाणान्तरस्य स्वभावकार्यानुपलब्धिलिङ्गस्यानुमानस्य सद्भावः NyāyKa. 255.21; दृश्यते तावदिदमिति चेत् — गोत्वाश्वत्वयोरपि न द्रक्ष्यत इति का प्रत्याशा, तथा च ( अनुमानेन ) गतमनुपलब्धिलिङ्गेनापि, क्वचिदपि विरोधासिद्धेः NyāyKuA. i. 61.5.

**अनुपलब्धिलिङ्गक** ( anupalabdhiliṅga-ka ) *adj.* having non-perception or non-availability as the sign, i.e. probans अनुमानं प्रमाणम् ··· अनुपलब्ध्या गम्यते चेत् तर्ह्यनुपलब्धिलिङ्गकमनुमानं स्यात् NyāyKa. 255.16; अनुपलब्धिलिङ्गकमनुमानमाह VedāntKa. 273.1 (*on* ii. 2.18); अनुपलब्ध्या कंचिदर्थं प्रतिषेधयतानुपलब्धिलिङ्गकमनुमानम् SarvaDaSaṁ. 2.36.

**अनुपलब्धिलिङ्गकत्व** ( anupalabdhiliṅgaka-tva ) *n.* the state of having non-availability or non-perception as the sign, i.e. probans वाय्वादौ रूपाद्यभावप्रतीतीनामनुपलब्धिलिङ्गकत्वात् TattvCin. i. 680.4.

**अनुपलब्धिलिङ्गकानुमान** ( anupalabdhiliṅgakānumāna ) *n.* inference having non-availability or non-perception as the sign, i.e. probans असति त्वग्नौ धूमो नास्तीत्यत्र किं प्रमाणम्, नन्वनुपलब्धिलिङ्गकानुमानमेव PrakaPañ. 199.14; अनुपलब्धिलिङ्गकानुमानसाध्योऽभाव इति सौगतमतमपास्तम् NyāyVārPari. 331.3; अभावस्याप्रत्यक्षत्वेऽप्यनुपलब्धिलिङ्गकानुमानवेद्यताभ्युपगमात् NyāySu.(Ja.) 476B.13 (*on* iii. 2.1)

**अनुपलब्धिलिङ्गत्व** ( anupalabdhiliṅga-tva ) *n.* the state of having non-availability as the sign, i.e. probans नन्वियमनवस्था मेघाभावेन वृष्ट्यभावानुमाने भवतोऽपि समानैव, अभावस्यानुपलब्धिलिङ्गत्वात् Kāśi. iii. 94.10 (*on* 5(4).168)

**अनुपलब्धिलिङ्गवादिन्** ( anupalabdhiliṅga-vādin ) *adj.* upholder of the view that non perception or non-availability is the sign, i.e. probans ( of inference ) इदानीमनुपलब्धिलिङ्गवादिनो बौद्धस्य प्रत्यवस्थानमाह Kāśi. iii. 207.3 (*on* 5(8).38); संप्रत्यनुपलब्धिलिङ्गवादी सौगतश्चोदयति NyāyRa. 486.17 (*on* 5(8).38)

**अनुपलब्धिलिङ्गानुमेय** ( anupalabdhiliṅgānumeya ) *adj.* to be inferred through non-perception or non-availability as the sign, i.e. probans एषाप्यनवस्था शाक्यानामेव अनुपलब्धिलिङ्गानुमेयमभावं वदताम् NyāyRa. 400.13 (*on* 5(4).170)

**अनुपलब्धिवत्** ( anupalabdhi-vat ) *adv.* as in the case of non-availability येऽपि ··· वदेयुः पक्षधर्मत्वं शब्दस्यानुपलब्धिवत् ŚlokaVār. 5(5).73 (425.6)

**अनुपलब्धिवाद** ( anupalabdhivāda ) *m.* title of a work, *nt.*

**अनुपलब्धिवादिन्** ( anupalabdhi-vādin ) *adj.* upholder of the theory of *anupalabdhi* (negative perception) ज्ञानाभावविषयोऽयं नाभिप्रेतमर्थं गमयतीति चेत् न, तावदनुपलब्धिवादिनश्चोद्यमेतत् SarvaDaSaṁ. 16.695.

**अनुपलब्धिविद्** ( anupalabdhi-vid ) *adj.* knower of non-perception or non-availability न ह्युपलब्धिप्रतिषेधात्मिकाम् ··· अनुपलब्धिमनुपलब्धिविदो वदन्ति NyāyMañ. i. 54.2.

**अनुपलब्धिविरुद्ध** ( anupalabdhi-viruddha ) *adj.* contradictory to non-availability or non-perception अश्वमेधविद्यायाश्च मृत्युतरणादिफलत्ववचनं प्रशंसार्थत्वान्नानुपलब्धिविरुद्धम् NyāySu.(So.) 65.14 (*on* i. 2.16); मृदादौ कारणे च घटादिकार्यसत्त्वमनुपलब्धिविरुद्धम् YuktiSneha. 114.35 (*on* i. 1.5); न च यत्र प्रतियोगिनः सत्त्वमनुपलब्धिविरुद्धं तद्विशेषणाभावस्येन्द्रियप्रत्यासत्तिरिति वाच्यम् BhedaDhi. 22.1.

**अनुपलब्धिविरोध** (anupalabdhi-virodha) *m.* **A** contradiction to *anupalabdhi* (negative perception) सर्वप्रमाणानुपपत्तेरनुपलब्धिविरोधः TantrVā. 965.24 (*on* iii. 4.13); अनुपलब्धिविरोधेन साधयितुमशक्यत्वात् ŚāstrDī. 68.2 (*on* i. 1.5); उक्तविधकर्तृकत्वसाधने प्रत्यक्षविरोधोऽनुपलब्धिविरोधो वा PrakaVi. 42.10; **Bi** contradiction due to non-availability नरविषाणवदनुपलब्धिविरोधात् TattvBi. 48.2; **Bii** contradiction due to non-perception यथाश्रुतवर्तमानफलत्वसंकीर्तनस्य चानुपलब्धिविरोधात् NyāySu.(So.) 16.4 (*on* i. 2.3); 64.32 (*on* i. 2.15); TattvPrakā. 89B.9 (*on* ii. 1.26)

**अनुपलब्धिविरोधपरिहार** ( anupalabdhivirodha-parihāra ) *m.* removal of the contradiction due to non-perception सूत्रोक्तस्य प्रशंसार्थत्वस्यानुपलब्धिविरोधपरिहारार्थत्वं दर्शितम् NyāySu.(So.) 65.6 (*on* i. 2.15); स्मृतीनां श्रुतिमूलत्वेऽवगते अनुपलब्धिविरोधपरिहारमात्रार्थत्वेन उत्सन्नत्वकल्पनात् न शाक्यादिग्रन्थानां तदापत्तिः MīmāKau. i. 3.4 (*on* i. 3.1)

**अनुपलब्धिविरोधिन्** ( anupalabdhi-virodhin ) *adj.* contradicting (or opposing) non-availability or non-perception यत्र हि यत्सत्त्वमनुपलब्धिविरोधि तत्र तस्याभाव इन्द्रियसंनिकर्षेण गृह्यते TattvCin. i. 666.1; iv(1). 396.1; यत्र हि यत्सत्त्वमनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः Nyāyāmṛ. 567B.6; BhedaDhi. 10.5; यत्र यत्सत्त्वमनुपलब्धिविरोधि तत्र तस्याभावो योग्यः AdvaiSi. 810.8.

**अनुपलब्धिविशेषणवचन** (anupalabdhiviśeṣaṇa-vacana) *adj.* expressive of a qualifier (in the form) of non-perception अश्रवणानुच्चारणशब्दौ त्वनुपलब्धिविशेषणवचनौ Nyās. i. 117.7 (*on* i. 1.60)

**अनुपलब्धिविषय** ( anupalabdhi-viṣaya ) *m.* object of non-perception or non-availability अनुपलम्भो ह्ययमावरणविषयो नानुपलब्धिविषयः NyāyMañ. ii. 185.13; यावान् प्रतिषेधः स सर्वोऽप्यनुपलब्धिविषयः NyāyKa. 209.2.

**अनुपलब्धिवेद्यता** ( anupalabdhivedya-tā ) *f.* the state of being knowable through *anupalabdhi* (negative perception) अपोहात्मकत्वे गोत्वादेः अनुपलब्धिवेद्यता स्यात् NyāyRa. 603.22 (*on* 5(13).138)

**अनुपलब्धिषष्ठ** ( anupalabdhi-ṣaṣṭha) *adj.* having *anupalabdhi* (negative perception) as the sixth (means of knowledge) ( प्रमाणानीत्याहुः ) अनुपलब्धिषष्ठानि तान्येव तौतातिताः NyāyPari. 487.17.

**अनुपलब्धिसद्भाव** ( anupalabdhi-sadbhāva ) *m.* existence of non-perception अनुपलम्भादपि अनुपलब्धिसद्भावात् नावरणानुपपत्तिरनुपलम्भात् NyāySū. ii. 2.20.

**अनुपलब्धिसम** (anupalabdhisama) *m.* name of a futile rejoinder, parity per non-perception तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः NyāySū. v. 1.29; अनुपलब्धिसमप्रतिषेधस्य लक्षणं दर्शयितुं तत्प्रतिषेध्यं तावदाह भाष्यकारः TātpaṬ.(Vā.) 688.3 (*on* v. 1.29); ( विषयिधर्माः ) स्वात्मनि ताद्रूप्येण वर्तन्ते उताताद्रूप्येणेति विकल्प्योभयथापि स्वरूपव्याघातप्रसञ्जनेन प्रत्यवस्थानमनुपलब्धिसमः TārkiRa. 293.14.

**अनुपलब्धिसमा** ( anupalabdhisamā ) *f.* name of a futile rejoinder, parity per non-perception अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिः PramāMī. 61.24 (*on* ii. 1.29)

**अनुपलब्धिसंभव** ( anupalabdhi-sambhava ) *m.* **A** possibility of non-perception नन्वभावादेवानुपलब्धिसंभवे किमर्थं सौक्ष्म्यं कल्प्यते SāṁkhyPraBh. 53.6 (*on* 1.110); उक्ताभावप्रतियोगित्वस्य तत्र सत्त्वेऽपि तन्निरूपकाभावानाम् अतीन्द्रियत्वाल्लौकिकसंनिकर्षाद्यभावाच्च अनुपलब्धिसंभवात् GuruCandr. i. 213.14; व्यवहितविप्रकृष्टतादृशाधिकरणवृत्तित्वस्य सत्त्वेऽप्यनुपलब्धिसंभवात्तदुपलब्धेरापादनासंभवात्तादृशाभावो न प्रत्यक्षः LaCandr. 337.9; 810.27; **B** possibility of not being found or available तोलनसमये स्वल्पन्यूनत्वस्यानुपलब्धिसंभवात् LaCandr. 853.43.

**अनुपलब्धिसहकारिन्** ( anupalabdhi-sahakārin ) *adj.* expedient for *anupalabdhi* (*lit.* associate of non-cognition) प्रतियोगिग्राहकेन्द्रियजन्यमधिकरणज्ञानमनुपलब्धिसहकारि तदा स्याद्यदि तेन विना सा नाभावं बोधयेत् TattvCin. i. 687.6.

**अनुपलब्धिसहायत्व** ( anupalabdhisahāya-tva ) *n.* the state of being expedient for *anupalabdhi* (negative perception) अभावज्ञानेऽपि तथात्वमुपगम्यत इति अनुपलब्धिसहायत्वं नोपपद्यते TārkiRa. 105.8.

**अनुपलब्धिसहायेन्द्रिय** ( anupalabdhisahāyendriya ) *n.* sense-organ having non-availability as an expedient स्थाणुर्वा पुरुषो वेति संदिहानस्य प्रत्यासीदतोऽनुपलब्धिसहायेन्द्रियेण स्थाणुरेवायं न पुरुष इति संदेहबाधेन प्रत्यक्षज्ञानं जायते NyāyRa. 613.11 (*on* 5(13).172)

**अनुपलब्धिसाधनकत्व** ( anupalabdhisādhanaka-tva ) *n.* the state of having *anupalabdhi* (negative perception) as the cause सर्वत्र निषेधानामनुपलब्धिसाधनकत्वात् PrakaPañ. 199.18.

**अनुपलब्धिसामान्यवचन** ( anupalabdhisāmānya-vacana ) *adj.* expressive of common non-perception ननु चादर्शनानुपलब्धिशब्दौ अनुपलब्धिसामान्यवचनौ Nyās. i. 117.6 (*on* i. 1.60)

**अनुपलब्धिसिद्धि** ( anupalabdhi-siddhi ) *f.* **A** establishment of negative perception अनुपलब्धौ सिद्धायामनुमाननिरासः अनुमाननिरासे च सत्य-

नुपलब्धिसिद्धिः NyāyMañ. i. 218.2; **B** establishment of non-availability अनुपलब्धेः अन्यस्यासत्त्वे नियमसिद्धिः इति चेत् न, विद्यमानस्यैव निध्यादिवदनुपलब्धिसिद्धेः TarkSaṁ.(Ā.) 15.25.

**अनुपलब्धिस्वरूपविरोध** (anupalabdhisvarūpa–virodha) *m.* contradiction to the nature of non-perception आवरणानुपलब्धेस्तावदुपलब्धिर्न संभवति । अनुपलब्धिस्वरूपविरोधात् TātpaṬ.(Vā.) 454.24 (*on* ii. 2.19)

**अनुपलब्धिस्वीकार** (anupalabdhi–svīkāra) *m.* acceptance of *anupalabdhi* (negative perception) तस्य (भूतलस्य) जात्युत्तरत्वमेव न चेदेवमनुपलब्धिस्वीकारेऽप्यप्रतीकारात् Kiraṇā. 328.7.

**अनुपलब्धिहेतु** (anupalabdhi–hetu) *m.* cause (in the form) of non-perception स्वभावहेतुः ।··· अनुपलब्धिहेतुः MahāVyu. 199.56.

**अनुपलब्धिहेतुकत्व** (anupalabdhihetuka–tva) *n.* the state of having non-perception as the cause प्रत्युपलब्ध्यविघटितकारणशक्तेः प्रयोजकत्वेनानुपलब्धिहेतुकत्वव्यवहारस्यापि संभवात् LaCandr. 587.23.

**अनुपलब्धोत्तरावस्थ** (anupalabdhottarāvastha) *adj.* whose later (i.e. future) state is not found, i.e. not manifested मनुष्यादिभूतानि सन्त्येव द्रव्याणि ··· अनुपलब्धोत्तरावस्थानि GītāBh.(Rā.) 102.4 (*on* 2.28)

**अनुपलब्ध्यनवस्थान** (anupalabdhy–anavasthāna) *n.* infinite regress of non-perception नन्वविद्यासद्भावे किं प्रमाणम् ।··· अनुपलब्ध्या जन्यत इति चेत् ··· नापि ज्ञातैव करणम् । अनुपलब्ध्यनवस्थानात् SarvaDaSaṁ. 16.700.

**अनुपलब्ध्यन्तर** (anupalabdhy–antara) *n.* another non-perception अनुपलब्धेः अभावात्मकत्वादनुपलब्ध्यन्तरपरिच्छेद्यत्वादनवस्था NyāyMañ. i. 54.4; विपक्षे वृत्त्यभावप्रतीत्या तदभावप्रतीतिश्चानुपलब्ध्यन्तरसापेक्षा NyāyKa. 209.1; अनुपलब्धिरप्युपलब्ध्यभावरूपत्वात् अनुपलब्ध्यन्तरमपेक्षते NyāyRa. 400.12 (*on* 5(4).170); न चानुपलब्ध्यन्तराण्यपि तन्निषेधे प्रभवन्ति TātpaṬ.(Vā.) 161.3 (*on* i. 1.5); अत एवानुपलब्ध्यन्तरमपि निरवकाशम् NyāyKuA. i. 60.3; अनुपलब्धेरपि अभावरूपत्वेनानुपलब्ध्यन्तरसाधनीयत्वात् NyāyVārPari. 494.6.

**अनुपलब्ध्यन्तरानुमेय** (anupalabdhyantarānumeya) *adj.* to be inferred through another non-perception स्मरणाभावो(ऽप्य)नुपलब्ध्यन्तरानुमेय इत्यनवस्थेत्यपि नास्ति NyāySu.(Ja.) 477A.1 (*on* iii. 2.1)

**अनुपलब्ध्यन्तरापेक्षा** (anupalabdhyantarāpekṣā) *f.* **A** expectancy of another *anupalabdhi* (negative perception) बाधकप्रमाणभूतानुपलब्धावपि चोक्तेन न्यायेन अनुपलब्ध्यन्तरापेक्षायामनवस्थाप्रसङ्गात् PrakaPañ. 199.19; **B** expectancy of another non-perception न ह्यनुपलब्धिः प्रमाणान्तरसंवेद्या अभावरूपत्वात् अनुपलब्ध्यन्तरापेक्षायां चानवस्था स्यात् NyāyKa. 227.12; न तूपलब्ध्यभावो नाम कश्चिदुपलब्धिव्यतिरेकेणानुपलब्धिसंज्ञोऽस्ति, यतस्तस्यानुपलब्ध्यन्तरापेक्षयानवस्था स्यात् NyāyRa. 487.4 (*on* 5(8).38); 487.21 (*on* 5(8).38); (अनुपलब्धेः) तस्या अप्यभावरूपत्वेनानुपलब्ध्यन्तरापेक्षायामनवस्थाप्रसङ्गात् TārkiRa. 105.3; NyāySu.(Ja.) 476B.10 (*on* iii. 2.1); अनुपलब्धिरपि भूतलेऽभावज्ञाने जनयितव्ये न ज्ञाता, अनुपलब्धेरभावत्वेन तज्ज्ञानायानुपलब्ध्यन्तरापेक्षायामनवस्थानात् SarvaDaKau. 56.9.

**अनुपलब्ध्यप्रामाण्यवाद** (anupalabdhyaprāmāṇyavāda) *m.* name of a section propounding the theory of invalidity of *anupalabdhi* अथानुपलब्ध्यप्रामाण्यवादः TattvCin. i. 673.1; इति ··· तत्त्वचिन्तामणौ ··· अनुपलब्ध्यप्रामाण्यवादः TattvCin. i 692.4.

**अनुपलब्ध्यभाव** (anupalabdhy–abhāva) *m.* absence of non-perception शब्दो नास्ति अनुपलब्धत्वादिति प्रयोगे अनुपलब्धेः स्वात्मनि अनुपलब्धिरूपेण वृत्तौ विषयवत् ··· अभावप्राप्तौ अनुपलब्ध्यभावश्चोपलब्धिरिति विपरीतापत्तिः SarvaDaKau. 82.26.

**अनुपलब्ध्यव्यवस्था** (anupalabdhy–avyavasthā) *f.* uncertainty (regarding the existence and non-existence of an entity) attached to non-perception तस्मान्नोपलब्ध्यनुपलब्ध्यव्यवस्था पृथक् संशयकारणम् NyāyVār. 100.19 (*on* i. 1.23); 187.10 (*on* ii. 1.6); अत्र भाष्यकारः उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च पृथक् संशयकारणत्वं मत्वा ··· आह TātpaṬ.(Vā.) 256.9 (*on* i. 1.23); 257.20 (*on* i. 1.23); गौतमीये लक्षणे उपलब्ध्यनुपलब्ध्यव्यवस्थेत्यस्य पृथगेव संशयकारणत्वं कैश्चिदुक्तम् Upask. 124.11 (*on* ii. 2.20)

**अनुपलब्ध्यव्यवस्थातस्** (anupalabdhyavyavasthā–tas) *adv.* due to uncertainty (regarding the existence and non-existence of an entity) attached to non-perception समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः NyāySū. i. 1.23; अनुपलब्ध्यव्यवस्थातश्च भवति संशयः '··· किंचिदसदेव नोपलभ्यते ··· उत सदिति' NyāyMañ. ii. 125.4.

**अनुपलब्ध्यव्यवस्थान** (anupalabdhy–avyavasthāna) *n.* uncertainty (regarding the existence and non-existence of an entity) attached to non-perception नायं समानधर्मादिभ्य एव संशयः किं तु तद्विषयाध्यवसायादुपलब्ध्यनुपलब्ध्यव्यवस्थाने च सति विशेषस्मृतिसहितादेवं च सति नासंशयो नात्यन्तसंशयः NyāyVār. 187.22 (*on* ii. 1.6)

**अनुपलब्ध्याख्यप्रमाणान्तर** (anupalabdhyākhya–pramāṇāntara) *n.* distinct means of cognition called *anupalabdhi* अनुपलब्ध्याख्यप्रमाणान्तरगम्योऽपोहः NyāyRa. 585.18 (*on* 5(13).76)

**अनुपलब्ध्यानन्त्य** (anupalabdhy–ānantya) *n.* endlessness of non-perception अनुपलब्धिः तस्याप्यभावस्यानुमानवेलायामन्वयग्रहणवेलायां चानुपलब्ध्यन्तरापेक्षा तस्यामपि तथा इति अनुपलब्ध्यानन्त्यादनवस्था NyāyRa. 487.22 (*on* 5(8).38)

**अनुपलब्ध्युक्ति** (anupalabdhy–ukti) *f.* expression (in the form of) *anupalabdhi* माभावस्याप्यभावेऽस्मिन् संसिद्धेरनुभूतितः । सैवातोऽनुपलब्ध्युक्त्या भवद्भिरुपवर्ण्यते BṛĀraUBhVā. iv. 3.796 (comm. अनुपलब्धिरुपलभ्याभावे मानमित्युक्त्या सैवानुभूतिरुच्यते)

**अनुपलब्ध्युपन्यास** (anupalabdhy–upanyāsa) *m.* statement of non-obtainment ननु एवं ग्रन्थे व्याख्यायमाने 'पशवो नोपलभ्यन्त' इत्यादिरनर्थको ग्रन्थः ।··· अनुपलब्ध्युपन्यासो न घटते इत्युक्तम् Bṛha. 127.2 (*on* i. 1.5)

**अनुपलब्ध्युपयोगिन्** (anupalabdhy–upayogin) *adj.* conducive to non-perception उपलब्धिनिबन्धनमेव च विपर्यासस्य निमित्तम् ··· विपर्यासस्याप्युपलब्धिरूपत्वात् अनुपलब्ध्युपयोगि कथं तत्रोपयुज्यते SphoṭSi. 148.1.

**अनुपलभमान** (an–upalabhamāna) *adj.* **A** not getting, not finding आग्रयणाद्वानुपलभमानेषु पूर्ववत् KātyŚS. xxv. 12.25; स पुनः ··· परःशतैरप्युपायैरर्थाननुपलभमानः ··· प्रतस्थे PrabaCin. 1.17; अर्थवादाः स्वार्थप्रतिपादने प्रयोजनमनुपलभमाना लक्षणया क्रतोः प्राशस्त्यं प्रतिपादयन्ति MīmāNyāPra. 194.28; **B** not knowing, not perceiving प्रचारचरित्रसंस्थानान्यनुपलभमानो हि प्रकृतः समुदयमज्ञानेन परिहापयति ArthŚā. i. 146.2 (2.7); न वै (हेतुम्) अनुपलभमानस्य तावता नास्तीति भवति PramāVāSvopVṛ. 7.24; यद्यपि पूर्वोपलब्धया स्मृत्या श्रुतिमनुपलभमानस्य ··· श्रुत्यनुमानं क्रियेत TantrVā. 95.13 (*on* i. 3.3); तथापि प्रेक्षारूढस्य साधारणधर्मदर्शिनो विशेषानुपलभमानस्यापि न दृष्टः संशयः NyāyMañ. ii. 119.19; तस्मादुपाधिं प्रयत्नेनान्विष्यन्तोऽनुपलभमानाः नास्तीत्यवगम्य स्वाभाविकत्वं संबन्धस्य निश्चिनुमः TātpaṬ.(Vā.) 165.24 (*on* i. 1.5); उक्तप्रकारकं लिङ्गस्वरूपं नानुमन्यामहे पारमार्थिकमप्राणिषु लिङ्गमनुपलभमानाः Kāśi. ii. 177.27 (*on* 5(3).214); येन ह्येकदा बीजादङ्कुरो दृष्टः सोऽन्यदा ··· अनुपलभमानः ··· आशङ्कते Kāśi. iii. 176.22 (*on* 5(7).48); सुषुप्त्यवस्थायामात्मानमनुपलभमानः नास्तीत्यवधारयेत् NyāyKuA. i. 147.2; अयं तातः ··· इत्यादिप्रयोगेषु तातायंशब्दयोरन्वयमर्थादनुपलभमानस्य तदा शब्दात्सामानाधिकरण्येनान्वयमुपलभमानस्यार्थस्य ··· अन्वयज्ञानं फलमिति किं नोपपद्यते NyāyKu. 6.5; तांश्चात्मनो विविक्तानपि विस्पष्टतयानुपलभमानस्तद्धर्मान् दुःखादींस्तत्यानेवात्मीयत्वेन पश्यन् ··· प्रतिपद्यते NyāySu.(Ja.) 26B.4 (*on* i. 1.1); स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते (मध्यम्) तदनुपलभमानास्तर्कयन्तोऽपि लोकाः Kuval. 171(161); प्रमाता हि गोषु गोत्वं प्रत्यक्षेण पश्यन् अश्वादिषु तदनुपलभमानः ··· गोत्वं निश्चिनोति Bhāsk. i. 233.12 (*on* i. 5.8)

**अनुपलभ्य** (án–upalabhya) *adj.* [*f.* -ā] **Ai** not obtainable अथाप्तवे द्वितीयामाहुतिं जुहोत्येष उ हवैतत्सोम उवाचाप्तुं मा कृत्वातिनयतानुपलभ्यमिति ŚatBr.(K.) IV. vi. 3.7; IV. vi. 3.11; यानि (रमणीयानि अद्भुतानि वा) ··· स्वप्नेऽप्यनुपलभ्यानि ··· तान्येकस्मिन्नहनि ··· अद्य मे दृष्टिपथमुपागतानि TilaMañ. 219.21; तप्तलोहसमावर्तितं जलम् । तद्धि जलं जलरूपेणानुपलभ्यम् ··· पुनर्जलपरिणामशक्तियुक्तं लोहादन्यत्वबुद्ध्यविषयस्तिष्ठति ŚrutaPra. ii. 227.8 (*on* ii. 1.12); **Aii** not obtainable (in marriage) इन्द्रदत्तो नामाहमासं शिष्यः । तस्य विरूपेति विपरीतनामधेया कन्या । तां च गुरुश्चतुर्भिर्वेदैरङ्गैश्च षड्भिर्विनानुपलभ्यामकल्पयत् AvantiKa. 181.10; **B** not perceptible, not knowable श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत् ViṣṇuP. i. 2.23; यस्य पुनरवस्तुकः स प्रचयविशेषः सूक्ष्मं च कारणमनुपलभ्यं तस्यावयव्यभावादतद्रूपप्रतिष्ठं मिथ्याज्ञानम् YogBh. 48.1 (*on* 1.43); जयति ··· शम्भुः । संवृतमन्त्रार्थार्थिरशब्दादिगुणैरनुपलभ्यः EI. xvii. 4.11; रराज सूचिका कृष्णा ···। अदृश्यया जीवसूच्या संततानुश्रिता स्थिता ···। क्षीणदीपांशुसूचीवत्तीक्ष्णयानुपलभ्यया YogVā. iii. 70.15; अनुपलब्धेरप्यभावरूपतया तद्ज्ञानमप्यनुपलभ्यमित्यनवस्था TantrRaha. 16.27.

**अनुपलभ्य** (an–upalabhya) *ger.* **A** not having perceived, not having known (इन्द्रविरोचनौ) तौ हान्वीक्ष्य प्रजापतिरुवाच — अनुपलभ्यात्मानमननुविद्य व्रजतः ChāndoU. viii. 8.4; नायमनुमाता पूर्वमनुपलभ्याग्निं धूमविशेषणं प्रतिपद्य प्रतिसंधत्ते अयं धूमोऽयं चाग्निरिति NyāyVār. 211.12 (*on* ii. 1.28); मन्वादिभिरपि किमष्टकाश्रुतीरुपलभ्य वेदमूलत्वं स्वनिबन्धनानां प्रतिज्ञातम् उत अनुपलभ्यैव TantrVā. 70.17 (*on* i. 3.1); न हि दृढत्वमनुपलभ्य कश्चिद्दण्डीति प्रत्येति Kiraṇā. 278.13; शिष्टाः ··· आत्मानमनुपलभ्य निरयगामिणो(? नौ) भवेयुः

GītāBh.(Rā.) 198.5 (*on* 3.23); **Bi** not having obtained, not having found रागस्यापि विवक्षायामभिप्रेतमनुपलभ्य विरागः स्यात् न वेति द्वेषसंशयः KāmSū. 356.19 (6.6); इमौ (अनिमित्तकौ शब्दौ) त्वनुपलभ्य क्रियामाकृतिमात्रे प्रयुज्येते ŚābaBh. 1563.23 (*on* vii. 5.29); कृते कर्मण्यनन्तरं फलमनुपलभ्य कालान्तरफलोत्पादद्वारमपूर्वकल्पनम् TantrVā. 363.9 (*on* ii. 1.5); (पश्यतो युवतिं दूरान्नखोच्छिष्टपयोधराम्) दूरादिति तत्प्रकारमनुपलभ्यापि … रागेण युज्यते JayaMa. 124.6 (*on* 2.4); अभिनवं पटादिकं क्रियमाणमनुपलभ्यापि वर्तमानदशायां तन्त्वादिसंयोगापेक्षजन्मा पटादिरित्यध्यवसाय YuktiSneha. 148.26 (*on* i. 1.6); न हि ब्रह्माभिधानश्रुत्यादिकमनुपलभ्य अयमुपक्रमो ब्रह्मविषय इत्याद्यवधारयितुं शक्यते Śivārka-MaDī. i. 38.10 (*on* i. 1.1); सा … सुचिरमितस्ततोऽन्विष्यान्विष्यानुपलभ्य (मुकुन्दम्) क्वापि मत्सकाशमागत्य … गतवती Mukundā. 197(8); **Bii** not having received मत्सुता … परिभ्रम्यानुपलभ्य भर्तृवृत्तान्तम् … पृथुकमेनं प्रसूतवती Avanti-Ka. 191.18; **Biii** not having reached अनुपलभ्य युधो विरतिं शुचा …। सः … विजयि वैधसमस्त्रमुपाददे Rāgh. 19.46.

**अनुपलभ्यता** (anupalabhya-tā) *f.* the state of not being knowable अनुपलभ्यतायां च तद्दर्शनाश्रयाः व्यपदेशप्रत्यभिज्ञानादयो न भवेयुः PramāVā-SvopVṛ. 45.7.

**अनुपलभ्यत्व** (anupalabhya-tva) *n.* the state of not being knowable or perceptible दृष्टं जीवस्य संसारित्वमिति चेत्, न, उपलब्धुरनुपलभ्यत्वात् TaiUBh. 295.20 (*on* 3.10); न तावत् सहोपलभ्यत्वनियमः दृशो अनुपलभ्यत्वात् IṣṭaSi. 14.18; अन्तर्धानं परैरनुपलभ्यत्वम् BālaKrī. ii. 71.18 (*on* 3.203)

**अनुपलभ्यत्वप्रसङ्ग** (anupalabhyatva-prasaṅga) *m.* undesired occasion of the state of not being knowable or perceptible स्पर्शवत्त्वं तु द्रव्यारम्भकत्वेनाप्रयोजकं द्रव्यानारम्भे स्पर्शवत्तायां प्रमाणाभावादनुपलभ्यत्वप्रसङ्गात् Kiraṇā. 156.12.

**अनुपलभ्यमान** (an-upalabhyamāna) *adj.* [*f.*-ā] **A** not being seen or perceived गर्भशरीरं चतुर्दशेन्द्रियकायास्समनुप्रविशन्ति विधृताश्चानुपलभ्यमानाश्च सप्त दिव्याः सप्त मानुषाः BhelaS. 88.14 (4.5); अग्न्यादयोऽप्रत्यक्षेणानुपलभ्यमानाः कपोतादिभिरनुमीयमानत्वादनुपाख्याः JaineVyā. 311.29 (*on* iv. 3.188); Kāśi-Vṛ. *on* vi. 3.80; Prasā. i. 674.11; SiddhāKau. 216B.3 (*on* vi. 3.80); कथमनुमेयत्वम्। प्रत्यक्षतोऽनुपलब्धेः। यथानुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयते NyāyBh. 114.2 (*on* ii. 1.50); एवं प्रधानपुरुषावनुपलभ्यमानावप्युपलभ्येते हेतुभिः MāṭhVṛ. 25.18 (*on* 14); प्राणचेष्टाचैतन्यस्मृत्यादयश्च … बहिश्च अनुपलभ्यमानाः BrahmSūBh.(Śaṅ.) 700.3 (*on* iii. 3.53); न हि स्वतन्त्रो भासमानः सर्व(स्या ? स्य) स्यान्न वा कस्यचिद् वनवह्निरिवानुपलभ्यमानः केनापि Kāśi. ii. 123.20 (*on* 5(3).64); देवदत्तः … अनुपलभ्यमानो नास्तीति निश्चीयते Kāśi. iii. 172.7 (*on* 5(7).36); सोऽयम् … अन्विष्यमाणोऽनुपलभ्यमानः TātpaṬ.(Vā.) 44.6 (*on* i. 1.1); पयोधरभरस्थितिः सान्यथानुपपद्यमाना धारकं मध्यमनुपलभ्यमानं बोधयति SaraKaṇṭhā. 392.22; 395.2; Kāvyānu.(He.) 340.21; 'न भावोऽनुपलब्धेः' इति — न तादृशस्याप्रत्यक्षस्य भावः, अनुपलब्धेः अनुपलभ्यमानस्य व्याप्तिग्रहणयोगादिति वर्णितम् ŚrutaPra. ii. 307.25 (*on* ii. 2.30); पुरुषान्तरेऽनुपलभ्यमानं पुरुषार्थप्रदत्वं तस्य चेत् कीदृशोऽसौ (भगवान्) TattvPrakā. 2A.1 (*on* i. 1.0); (स्रक्ष्यमाणसूक्ष्मत्रैलोक्यस्थूलत्रैलोक्ययोः) ननु प्रलयकालेऽनुपलभ्यमानयोस्त्रैलोक्ययोरुत्पत्तिर्न संभवति SetuBa. 134.23; **B** not being known or experienced तत्र संनिधिविशेषाम्नानसामर्थ्यात् क्रमवतः संनिधावाम्नातस्यानुपलभ्यमानमेवाकाङ्क्षावत्त्वमस्तीत्यवगन्तव्यम् ŚābaBh. 855.4 (*on* iii. 3.14); कथमिच्छाद्यनुपलभ्यमानमात्मानं गमयति NyāyVār. 66.18 (*on* i. 1.10); अनुपलब्धावपि — यत् सद् उपलब्धिलक्षणप्राप्तं तद् उपलभ्यत एव इत्युक्ते अनुपलभ्यमानं तादृशमसद् इति प्रतीतेः अन्वयसिद्धिः NyāyBi. 3.33; PramāVāSvopVṛ. 67.11; विक्रिया अनुपलभ्यमानापि च केवले ज्वलने, ज्वलनादेव भवति BrahmSūBh.(Śaṅ.) 353.13 (*on* ii. 2.2); बुद्ध्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमानं नास्त्येव ब्रह्म KāṭhUBh. 176.6 (*on* 6.12); (शक्तिम्) कार्यकारणविनिर्मुक्तपूर्णानन्दाद्वितीयब्रह्मात्मनैवानुपलभ्यमानाम् ŚvetāUBh. 66.13 (*on* 1.3); किमनुपलभ्यमानैव चोदना व्यवहारं प्रवर्तयति BālaKrī. i. 21.9 (*on* 1.7); न चानुपलभ्यमानोऽप्यसौ कल्पयितुं पार्यते न ह्यात्मा पटादिरिव सावयव उपलभ्यते NyāyMañ. ii. 39.30; ii. 119.25; धर्मिण्यनुपलभ्यमाने संशयः स्यात् TātpaṬ.(Vā.) 246.18 (*on* i. 1.23); 396.4 (*on* ii. 1.36); अनुपलभ्यमानस्य तु विषयत्वकल्पनायां सर्वसर्वज्ञतापत्तिः Nyāy-VārPari. 174.1; प्रारब्धस्य चानुभवसिद्धत्वात् मनसोऽनुपलभ्यमानधर्मस्य स्वयमनुपलभ्यमानस्य च वैयर्थ्यादेवारम्भानुपपत्तिरिति साम्प्रतम् Kiraṇā. 18.5; ननु फलानुमेयेऽभिधानव्यापारः ततः प्रागनुपलभ्यमानः कथं वर्तमानतया व्यपदिश्यते NyāyRa. 531.10 (*on* 5(11).80); 880.11 (*on* 7.122); न ह्यनुपलभ्यमानाश्चोदनाः स्वप्रमेयं प्रतिपादयन्ति ŚāstrDī. 19.3 (*on* i. 3.1); स्मृतिः। वेदेऽनुपलभ्यमाने सा धर्मे प्रमाणम् ManvaVi. 101.10 (*on* 2.6); तद्रूपस्य अनुपलभ्यमानस्य अनभ्युपगमनीयत्वात् TarkSaṁ.(Ā.) 115.11; यद्वा ब्रह्मैव निषेधति, तस्यानुपलभ्यमानस्य निषेधे प्रमाणाविरोधात् ŚrutaPra. ii. 445.28 (*on* iii. 2.29); भूते भविष्यति वर्तमाने चानुपलभ्यमानेऽर्थे व्यभिचारशङ्काया अनिवारणात् SarvaDaSaṁ. 2.7; ईश्वरस्तावदनुपलभ्यमानो नास्त्येव TattvPrakā. 88B.13 (*on* ii. 1.22); यमवचनं च स्वरूपतो गन्धतश्चानुपलभ्यमानस्यामेध्यस्य संबन्धे सति शुद्धिप्रतिपादकमित्यविरोधः VīraMi. 273.18 (*on* 1.197); अनुपलभ्यमानमपि भ्रान्त्यादिकारणानन्तरं धर्मबुद्धेः कल्प्यते MīmāKau. i. 64.11 (*on* i. 3.9); ईश्वरः खल्वनुपलभ्यमानोऽपि कल्प्यः GoviBh. 104.9 (*on* ii. 1.24); **Ci** not being found or available पुंस्त्वादीनि … बाल्यादिष्वनुपलभ्यमानानि … आविर्भवन्ति BrahmSūBh.(Śaṅ.) 464.12 (*on* ii. 3.31); शारीरे व्यभिचारेऽनुपलभ्यमाने परपुरुषरूपगुणानुचिन्तनेन मनोदुष्टा रजसा … शुध्यति स्त्री ManuBh. i. 471.1 (*on* 5.107); तदन्यत्रानुपलभ्यमाने संशेते पुमान् NyāyMañ. ii. 125.6; यथा हि द्रव्येण वा क्षेत्रेण वा कालेन वा भावेन वा कार्तस्वरात् पृथगनुपलभ्यमानैः … पीततादिगुणैः TattvPradī.(A.) 127.8 (*on* 2.4); अमी पुनः पशवः … स्वहेतुसमनन्तरमनुपलभ्यमानाः … श्वेतचित्रादिफलतया न शक्यन्तेऽवगन्तुम् Kāśi. iii. 214.12 (*on* 5(9).2); सहानुपलभ्यमानयोर्घटपटयोर्भेददर्शनमनुकूलतर्कः BhāṭṭCin. i. 20.4 (*on* i. 1.4); **Cii** not being heard पराणुभ्यः वर्णप्रतीतिध्वनिभ्यः शब्दप्रतीतेरनुत्पादात्, अतिद्रुतोच्चिचारयिषयानुपलभ्यमानवर्णविभागाच्च शब्दादर्थप्रत्ययाभावात् NyāyMañ. i. 348.15; शङ्खादिध्वनावनुपलभ्यमानेऽपि गकारे Upask. 137.11 (*on* ii. 2.37)

**अनुपलभ्यमानकरणत्व** (anupalabhyamānakaraṇa-tva) *n.* the state of being that whose instrumentality is not being known or perceived अनुपलभ्यमानकरणत्वमेव प्रयोजके चक्षुरादिकल्पने NyāyKuA. ii(1). 239.2.

**अनुपलभ्यमानकरणिका** (anupalabhyamāna-karaṇikā) *adj.* (*f.*) whose instrumentality is not being known or perceived न ह्यनुमित्यादिभिरुपलभ्यमानकरणिकाभिश्चक्षुरादिव्यवस्थापनम्, अपि त्वनुपलभ्यमानकरणिकाभी रूपाद्युपलब्धिभिरेव NyāyKuA. ii(1). 238.10.

**अनुपलभ्यमानकर्तृक** (anupalabhyamānakartṛ-ka) *adj.* whose agent is not available or being perceived क्वचिदनुपलभ्यमानकर्तृके कलशादौ कर्त्रनुमानमिति युक्तम् NyāyMañ. i. 179.8.

**अनुपलभ्यमानकर्तृकत्व** (anupalabhyamānakartṛka-tva) *n.* the state of being that whose agent is not available or being perceived क्षित्यादिकं विकर्तृकम्। अनुपलभ्यमानकर्तृकत्वाद्गगनवदित्यादिनासत्प्रतिपक्षता च सर्वानुमानानाम् NyāySu.(Ja.) 110A.4 (*on* i. 1.3)

**अनुपलभ्यमानकारण** (anupalabhyamāna-kāraṇa) *adj.* having a cause which is not being known एवमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं च भवति तदप्यदृष्टकारितम् PadārthaSaṁ. 309.11; NyāyKa. 311.5.

**अनुपलभ्यमानकारणदोष** (anupalabhyamāna-kāraṇadoṣa) *adj.* for which the fault of cause is not being known or perceived विषयविशेषः … अनुपलभ्यमानकारणदोषे विज्ञानेऽवभासमानोऽपि … अपोह्यमानो दृश्यते PañcPā. 6.11 (*on* i. 1.1)

**अनुपलभ्यमानकारणविशेष** (anupalabhyamāna-kāraṇaviśeṣa) *adj.* whose specific reason is not being known or perceived तथाप्यनुपलभ्यमानकारणविशेषे विंशतिवार्षिकभोगेऽनन्तरादर्शितविषये बन्धरूपताभ्युपगन्तुं युक्ता ManuBh. ii. 140.14 (*on* 8.148)

**अनुपलभ्यमानक्षय** (anupalabhyamāna-kṣaya) *adj.* whose decay is not being perceived (मूलद्रव्यम्) क्षयस्यातिसूक्ष्मतयानुपलभ्यमानक्षयम् Bhām. 488.7 (*on* ii. 3.26)

**अनुपलभ्यमानगन्ध** (anupalabhyamāna-gandha) *adj.* in which the smell (of liquor) is not being experienced (अन्नादि … प्राश्य … पुनः संस्कारमर्हन्ति … द्विजातयः) अज्ञानादपि किं पुनर्ज्ञानतः सुरासंस्पृष्टमनुपलभ्यमानगन्धम् ManvaVi. 1420.1 (*on* 11.150)

**अनुपलभ्यमानगुण** (anupalabhyamāna-guṇa) *adj.* whose qualities are not being observed यो यः सर्वत्रानुपलभ्यमानगुणः स सर्वगतो न भवति यथा घटः SyādvāMañ. 9(29)

**अनुपलभ्यमानघटत्व** (anupalabhyamānaghaṭa-tva) *n.* the state of being a jar which is not being perceived कुलालादिव्यापारात्प्राक् मृद् घटरहिता तदानीं योग्यत्वे सत्यनुपलभ्यमानघटत्वात् VedāntKa. 234.20 (*on* ii. 1.12)

**अनुपलभ्यमानजातिकोटि** (anupalabhyamāna-jātikoṭi) *f.* the point (of category) of class which is not being known एतावतैव सर्वस्मिन् समञ्जसे अनुपलभ्यमानजातिकोटिकल्पना केन प्रमाणेन केन वोपयोगेन येन कल्पनागौरवप्रसङ्गदोषो न स्यात् ĀtmaTaVi. 81.7.

**अनुपलभ्यमानता** (anupalabhyamāna-tā) *f.* the state of being

what is not being perceived or known (भ्रान्त्याः) तस्या अनुपलभ्यमानतया तन्मूलत्वस्यात्यन्तासंभावितत्वात् MayūMāli. 18.30 (*on* i. 3.1)

**अनुपलभ्यमानत्व** (anupalabhyamāna-tva) *n.* **A** the state of not being known न वात्र षष्ठी विद्यते। अनुपलभ्यमानत्वाल्लुप्तेति चेत् ? उच्यते ṬupṬ. 102.10 (*on* vi. 1.51); यच्चानुपलभ्यमानत्वं सदपि नोपलभ्यते Upask. 121.4 (*on* ii. 2.17); यत्तु विमतं ज्ञानव्यतिरेकेणासद् ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात् …। तत्र ज्ञानाद्भेदेनानुपलभ्यमानत्वं वा हेतुः Nyāyāmṛ. 88A.5; विमतं, ज्ञानव्यतिरेकेणासत्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात् AdvaiSi. 325.6; GuruCandr. i. 186.12; LaCandr. 325.28; **Bi** the state of not being perceived सूक्ष्मः प्राणः, उत्क्रान्तौ पार्श्वस्थेन अनुपलभ्यमानत्वात् BrahmSūBh. (Śaṅ.) 511.4 (*on* ii. 4.13); उपाधेरनुपलभ्यमानत्वात् क्वचिद् व्यभिचारस्यादर्शनादनुपलभ्यमानस्यापि कल्पनानुपपत्तेः TātpaṬ.(Vā.) 165.11 (*on* i. 1.5); TarkBhā.(Mo.) 23.6; ननु कार्यमुपादानाद्भिन्नं, तस्मिन्नुपलभ्यमानेऽप्यनुपलभ्यमानत्वात् PrakaVi. 443.21; अयोग्यस्य (उपाधेः) शङ्कितुमशक्यत्वात्, योग्यस्य च अनुपलभ्यमानत्वात् TarkBhā.(Ke.) 37.11; ननु परिच्छिन्नत्वे सत्यनुपलभ्यमानत्वमणुत्वम् ŚrutaPra. ii. 386.9 (*on* ii. 3.52); ii. 393.25 (*on* ii. 4.6); हर्षादिना स्वस्मिन्ननुपलभ्यमानत्वेन स्वस्मादन्यतयैवानुमातुं शक्यते ŚatDū. 150.14; प्राप्यत्वं तु क्रियाकृतविशेषेणानुपलभ्यमानत्वम् GuruCandr. ii. 125.24; **Bii** the state of not being available ननु किमर्थं षडेव पदार्था उद्दिष्टा नापरे, तेषामेव भावात् तदन्येषामभावाच्च तदभावश्च सर्वैः सर्वप्रमाणैरनुपलभ्यमानत्वाच्छशविषाणवत् NyāyKa. 15.14; धूमवानयं योग्यधूमवत्तया अनुपलभ्यमानत्वात्। निरग्निकत्वात् जलाशयत्वात् TattvCin. ii(1). 860.3; **C** the state of not being acquired तनुहरणे सत्यपि बलहरणस्य कार्यस्याभावेऽनुपलभ्यमानत्वादचिन्त्यं निमित्तम् AlaṅkāRa. 54(23)

**अनुपलभ्यमानधर्म** (anupalabhyamāna-dharma) *adj.* whose attribute is not perceptible प्रारब्धस्य चानुभवसिद्धत्वात् मनसोऽनुपलभ्यमानधर्मस्य … आरम्भानुपपत्तिः Kiraṇā. 18.4.

**अनुपलभ्यमाननित्यधर्मक** (anupalabhyamānanityadharma-ka) *adj.* in which the eternal property is not available प्रज्ञापनं त्वनित्यः शब्दो नित्यधर्मानुपलब्धेरित्यनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि NyāyBh. 63.1 (*on* i. 2.7)

**अनुपलभ्यमानपूर्वावस्थत्व** (anupalabhyamānapūrvāvastha-tva) *n.* the state of being unknown in the previous condition सर्वं कार्यमभावपुरःसरम्, योग्यत्वे सत्यनुपलभ्यमानपूर्वावस्थत्वात् VivaPraSaṁ. 265.8; GuruCandr. i. 50.23.

**अनुपलभ्यमानपृथक्त्व** (anupalabhyamāna-pṛthaktva) *adj.* whose individuality is not being known उपलभ्यमानरूपेष्वेव कुतश्चिन्निमित्तादनुपलभ्यमानपृथ(क्त्वे)षु मिथ्याभेदबुद्धिर्भवति TātpaṬ.(Vā.) 396.3 (*on* ii. 1.36)

**अनुपलभ्यमानफलाभिधायकत्व** (anupalabhyamānaphalābhidhāyaka-tva) *n.* the state of being denotative of result which is not being perceived (immediately) स्मृतीनामप्यनुपलभ्यमानफलाभिधायकत्वेनाविद्यमानार्थत्वात् TattvPrakā. 81A. 2 (*on* ii. 1.4)

**अनुपलभ्यमानबाधकत्व** (anupalabhyamānabādhaka-tva) *n.* the state of being that for which a sublating factor is not being known उक्तश्रुतिधीविषयत्वाभ्याम् अद्वैतवाक्यार्थरूपमखण्डं ब्रह्म …। न च बाध्यते, साक्षिस्वरूपत्वादनुपलभ्यमानबाधकत्वात् GuruCandr. i. 459.11.

**अनुपलभ्यमानभेद** (anupalabhyamāna-bheda) *adj.* wherein difference is not being noted (प्रत्ययानाम्) अनुपलभ्यमानभेदानामप्यनुमानतो भेदोऽनुमेयः NyāyVār. 286.11 (*on* ii. 2.12-13); आकारोऽनुपलभ्यमानभेदः NyāyMañ. i. 287.23; स्वच्छस्य हि ज्ञानात्मनः स्वयमनुपलभ्यमानभेदस्यानादिवासनोपप्लावितनीलाद्याकारकलुषितत्वमेव भेदकारणमिति बौद्धैराश्रितम् Kāśi. ii. 84.20 (*on* 5(2). 179)

**अनुपलभ्यमानमद्यरसोदक** (anupalabhyamāna-madyarasodaka) *adj.* from which either fluid of intoxicating drink (stored earlier) or water cannot be obtained (अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा। पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीशृतं पयः) अपरिशुष्कसुराभाजन आर्द्रे च मद्यभाण्डे चानुपलभ्यमानमद्यरसोदके पानान्तरप्रच्छर्दने च सति स्त्रीबालादेरेतत् Aparā. 1161.2 (*on* 3.289)

**अनुपलभ्यमानमूलवत्** (anupalabhyamānamūla-va(n)t) *adj.* possessed of the origin which is not being known यः कश्चिदिदानीमनुपलभ्यमानमूलवान् वेदोऽपि कस्यचित् संकीर्णस्यापि सर्वेषां वेदानां यत् ज्ञानं तत्प्रायो हि स इत्यनुपधापयेपि( v. l. °अनुमेयोऽपि DAVE's Ed. 1972) तस्य स वेदः प्रत्यक्ष एवेत्यर्थः ManvaVi. 102.20 (*on* 2.7)

**अनुपलभ्यमानमूलान्तरत्व** (anupalabhyamānamūlāntara-tva) *n.* the state of being that for which no other source is being known अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वस्य तत्त्वात्। न ह्यस्मदादीनां प्रत्यक्षादि मूलम् NyāyKuA. ii(2). 60.2.

**अनुपलभ्यमानरसविषय** (anupalabhyamānarasa-viṣaya) *adj.* referring to a fluid which is not being located भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते। एतच्चानुपलभ्यमानरसविषयम् VīraMi. 271.23 (*on* 1.195)

**अनुपलभ्यमानरूप** (anupalabhyamāna-rūpa) *adj.* whose form, i. e. colour is not being perceived अनुपलभ्यमानरूपस्य स्पर्शाधिष्ठानस्य पृथिवीत्वे गुरुत्वमपि स्यात् Kiraṇā. 85.7.

**अनुपलभ्यमानरूपादिक** (anupalabhyamānarūpādi-ka) *adj.* whose form, i. e. colour etc. cannot be perceived यदायमनुपलभ्यमानरूपादिकं वस्तूपलभते तदास्य तद्विशिष्टः प्रत्यय उपजायते NyāyVār. 351.4 (*on* iii. 1.1)

**अनुपलभ्यमानवचन** (anupalabhyamāna-vacana) *n.* statement about that (result) which is not being perceived अदृश्योक्तौ अनुपलभ्यमानवचने TattvPrakā. 82A. 13 (*on* ii. 1.5)

**अनुपलभ्यमानविशेष** (anupalabhyamāna-viśeṣa) *m.* particularity which is not being known विशेषस्यापेक्षा आकाङ्क्षा सा चानुपलभ्यमानविशेषे युक्ता NyāyVār. 92.10 (*on* i. 1.23); *adj.* whose (mutual) distinction is not being known विशेषदर्शनं बाधकमिति चेत् तर्हि स्थैर्यदर्शनं कुतो न बाधकम्। अतोऽनुपलभ्यमानविशेषयोरनयोर्बाध्यबाधकभावायोगात् NyāySu.(Ja.) 399A. 6 (*on* ii. 2.7)

**अनुपलभ्यमानविशेषस्मरण** (anupalabhyamānaviśeṣa-smaraṇa) *n.* recollection of a particular (feature) which is not being known अनुपलभ्यमानविशेषस्मरणेऽपि रजतादिविपर्यासाभावात् NyāyVārPari. 389.2 (Ṭīkā विशेषस्याननुभवेऽपि स्मरणमस्त्येवेत्यर्थः)

**अनुपलभ्यमानवेदमूल** (anupalabhyamāna-vedamūla) *adj.* whose Vedic basis is not being known or available अनुपलभ्यमानवेदमूलेषु कर्मसु … श्रुतेरपि प्रामाण्यतः प्रमाणत्वेन सिद्धेः तदुक्ते स्वधर्मे … निविशेत ManvaVi. 103.13 (*on* 2.8)

**अनुपलभ्यमानव्यभिचार** (anupalabhyamāna-vyabhicāra) *adj.* in whose case deviation or discrepancy is not being known रजते रजतधियां व्यभिचारशङ्कावत् प्रत्यक्षविरोधात् अनवस्थानाच्च अनुपलभ्यमानव्यभिचारोदाहरणेषु तथात्वनिश्चयः ĀgaPrā. 70.10; (व्याप्तिग्रहणम्) न चानुपलभ्यमानव्यभिचारमपि सोपाधिकम् उपाधेरनिरूपणात् NyāySu.(Ja.) 279A. 2 (*on* ii. 1.3); *m.* discrepancy or deviation which is not being perceived अनुपलभ्यमानस्यापि कल्पनानुपपत्तेः। अनुपलभ्यमानव्यभिचारकल्पनाद्वारभूतोपाध्यभावादित्यर्थः NyāyVārPari. 674.8; 675.1 (Ṭīkā प्रत्यक्षो व्यभिचारो नास्त्येव तत्कल्पनाबीजं चोपाधिर्नास्तीत्यर्थः)

**अनुपलभ्यमानशब्दक** (anupalabhyamānaśabda-ka) *adj.* in which the word (in the form of *codanā*) is not available धर्मस्य चोदनारूपशब्दमूलत्वात् अशब्दम् अनुपलभ्यमानशब्दकं स्मृत्यादि MīmāKau. i. 6.10 (*on* i. 3.1)

**अनुपलभ्यमानशशविषाणादिसारूप्य** (anupalabhyamāna-śaśaviṣāṇādisārūpya) *n.* similarity with the hare's horn etc. which is not available कामं वानुपलभ्यमानशशविषाणादिसारूप्यादभावात्मकत्वोपमानप्रसङ्गः TantrVā. 361.5 (*on* ii. 1.5)

**अनुपलभ्यमानश्रुति** (anupalabhyamāna-śruti) *adj.* whose Vedic or scriptural basis is not available or being known प्रत्यक्षश्रुतिविरुद्धम् अनुपलभ्यमानश्रुति च वचनमुच्यते MīmāKau. i. 93.5 (*on* i. 3.14)

**अनुपलभ्यमानश्रुतिकस्मार्तत्व** (anupalabhyamānaśrutikasmārta-tva) *n.* the state of being prescribed by the *smṛti* texts for which Vedic basis is not available or being known अनुपलभ्यमानश्रुतिकस्मार्तत्वेन दानादिवदन्यत्रापि निवृत्तिप्रसङ्गे विशेषं वाचनिकमाह BālamBha. iii. 53.27 (*on* 3.17)

**अनुपलभ्यमानश्रुतिका** (anupalabhyamānaśruti-kā) *adj.* (*f.*) for which there is no (direct) Vedic basis available or being known (निवृत्तिः) स्मार्तेति। अनुपलभ्यमानश्रुतिकेत्यर्थः BālamBha. iii. 51.27 (*on* 3.17)

**अनुपलभ्यमानश्रुतिस्मृतिवाक्य** (anupalabhyamāna-śrutismṛtivākya) *adj.* for which the (supportive) Vedic or *smṛti* statement is not available or being known तैर्यदाचरितमनुपलभ्यमानश्रुतिस्मृतिवाक्यं तद् … अनुष्ठापयेत् ManuBh. ii. 93.7 (*on* 8.46)

**अनुपलभ्यमानसंख्यादिक** (anupalabhyamānasaṅkhyādi-ka) *adj.* for which number etc. cannot be available अप्रत्यक्षस्यापि नानात्वं संमूर्च्छनेनानुमीयते …। अत एवानुपलभ्यमानसंख्यादिके तोयतेजसी अपि त्वचा नोपलभ्येते Kiraṇā. 84.13.

तदात्मापि तदात्मक इव प्रत्यवभासते YogBh. 89.7 (*on* 2.20); SyādvāMañ. 15(62); SarvaDaSaṁ. 15.30; यमो योनीश्च नरकं निरूपयति कर्मणा । पूरणीयाश्च तेनैव यमं चैवानुपश्यताम् AgniP. 368.7; इदं दानं सद्धर्ममनुपश्यद्भिरेषोग्रहारोनुपाल्यः EI. iv. 144.12; xii. 5.10; संसार इति को भारस्तं सारमनुपश्यतः SabhāŚ. 92; **2** observing, i.e. practising यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् MahāBhā. ix. 60.48; लक्ष्मणस्तं तदोवाच रक्ष्यमाणास्त्वयानघ । नात्र भीता वयं सर्वे धर्ममेवानुपश्यता Rāmā. ii. 45.8; iv. 18.29; **3** looking towards, following with looks ततो मम निवृत्तस्य तुरगा बाष्पविक्लवाः । राममेवानुपश्यन्तो हेषमाणा विचुक्रुशुः Rāmā. ii.1273*(2)

**अनुपश्यना** (anu-paśyanā) *f.* viewing, consideration कामे कायानुपश्यना स्मृत्युपस्थानमिति वचनात् । का पुनरनुपश्यना । प्रज्ञा AbhidhKoBh. 342.6 (*on* 6.15); इह कुलपुत्र बोधिसत्त्वो वेदनासु वेदनानुपश्यनास्मृत्युपस्थानं भावयन् … सत्त्वेपु महाकरुणां प्रतिलभते SikṣāSa. 232.7; 236.13 [DBHS.]

**अनुपश्यमान** (anu-páśyamāna, ánu-páśyamāna) *adj.* [P. vi. 2.139] **i** perceiving, beholding प्रत्नं॑ सधस्थ॑मनु॒पश्य॑माना (v. l. °नः) आ तन्तु॑म॒ग्निर्दि॒व्यं॑ ततान MaiS. ii. 13.22 (ii. 167.15); KāṭhS. 40.12 (iii. 146.16); BaudhŚS. ii. 150.12; ĀpaŚS. ix. 8.6; HirŚS. xii. 4.4 (95.18); xv. 2.35 (289.19); प्र॒त्नं॑ स॒धस्थ॑मनु॒पश्य॑मानः । आ तन्तु॑म॒ग्निर्दि॒व्यं॑ ततान TaiBr. II. iv. 2.6 (BhaṭṭaBhāskara पितापुत्रयोः … अनुपश्यमानः अनुरूपत्वं पश्यन्); **ii** looking along अतिसर्गं ददतो मानवायजुं पन्थानमनुपश्यमानाः ĀpaŚS. xvii. 13.2; HirŚS. xii. 4.4 (95.21)

**अनुपश्यिन्** (anu-paśyin) *adj.* regarding, looking upon, considering पुत्र तस्मिन् समये दुःखानुपश्यिना विहरितव्यम् अनित्यानुपश्यिना विहरितव्यम् MaVastuAva. iii. 266.1; चित्तानुपश्यी च योगी चित्तं चित्ते न पश्यति LaṅkāSū. 10.771 (158.1); अनुपश्यमस्यास्ति दर्शनमित्यनुपश्यी । कायेऽनुपश्यी कायानुपश्यी AbhidhKoBh. 342.7 (*on* 6.15) [DBHS.]

**अनुपश्रुति** (an-upaśruti) *f.* absence of hearing कंसः … दुर्निमित्तानि दुर्मतिः । बहून्यचष्ट …। छिद्रप्रतीतिच्छायायां प्राणघोषानुपश्रुतिः BhāgP. x. 42.29.

**अनुपश्रूयमाण** (an-upaśrūyamāṇa) *adj.* not listening to (for showing reverence) वैश्रवणो राजा …। अनुपस्थीयमानो (v.l. अनुपश्रूयमाणम्) मां संक्रुद्धो व्याजहार ह Rāmā. iii. 3.21.

**अनुपश्लिष्ट** (an-upaśliṣṭa) *adj.* not closely connected with क्वचिच्च ग्राह्याकारानुपश्लिष्टकेवलग्राहकावमर्शनमपि दृश्यते NyāyMañ. ii. 110.16; आश्लिष्टो योऽनुपश्लिष्टः स कदाचित्प्रतीयते (अर्थः) VākyaPa. 2.438; न ह्युपश्लेषो व्याप्तिः । उक्तं हि 'संबन्धनियमोऽसाविति' स चानुपश्लिष्टेनापि भवति Kāśi. iii. 11.21 (*on* 5(4).10); संगतकरणमुपश्लेषमात्रं मित्रकरणं त्वनुपश्लिष्टस्यापि मैत्रीसंबन्धः Pradī. ii. 163A.18 (*on* i. 3.25)

**अनुपश्लिष्टशब्द** (anupaśliṣṭa-śabda) *adj.* wherein words are not combined (काव्यम्) अनुपश्लिष्टशब्दं यत्तद्विसन्धीति कीर्तितम् NāṭyaŚā. 16.94.

**अनुपश्लिष्य** (an-upaśliṣya) *ger.* not having embraced अथाहं न शक्ष्यामि चानुपश्लिष्य शयितुम् DaśKuC. 93.18.

**अनुपश्लेष** (an-upaśleṣa) *m.* **A** absence of combination (of sounds or words) भागानामनुपश्लेषान्न वर्णो न पदं भवेत् VākyaPa. 2.29; **B** absence of close (physical) contact ललाटं पश्यति, लालाटिकः सेवकः । ललाटदर्शनेन दूरावस्थानं लक्ष्यते, तेनानुपश्लेषः कार्येषु चानुपस्थानम् CāndraVṛ. *on* iii. 4.44.

**अनुपष्टम्भन** (an-upaṣṭambhana) *adj.* devoid of support (of bodily elements) एवं नाम जरसा दुःखेन च … तपोभिरात्तरसधातुरनुपष्टम्भनोऽद्यापि न मे दग्धदेहः पतति UttaRāC. 4.3(2)

**अनुपसंहरणीय** (an-upasaṁharaṇīya) *adj.* not to be clubbed together श्रुतयः संप्रत्यपि विप्रकीर्णाः … शाखान्तराध्यायिभिः शाखान्तरगतानामनुपलम्भात् … तदुपलम्भेऽपि वा मन्दधीभिरनुपसंहरणीयानामुपसंहारफलं स्मृतिप्रणयनमिति न वैयर्थ्यमतः स्मृतयः प्रमाणम् ŚāstrDī. 21.6 (*on* i. 3.1)

**अनुपसंहरणीयार्थ** (anupasaṁharaṇīyārtha) *adj.* whose meanings are not fit to be combined or (mutually) reconciled संभवति च युगपदनुपसंहरणीयार्थमपि श्रुतिद्वयं व्रीहियवबृहद्रथन्तरग्रहणादिविषयश्रुतिवत् ŚāstrDī. 22.3 (*on* i. 3.2)

**अनुपसंहरणीयार्थक** (anupasaṁharaṇīyārtha-ka) *adj.* whose meanings are not fit to be combined or (mutually) reconciled व्रीहिभिर्यजेत यवैर्यजेतेति श्रुतिद्वयं स्वस्वविषयस्येतरनिरपेक्षतया साधनताबोधकत्वेन युगपदनुपसंहरणीयार्थकम् MayūMāli. 22.2 (*on* i. 3.2)

**अनुपसंहरणीयार्थश्रुतिद्वय** (anupasaṁharaṇīyārtha-śrutidvaya) *n.* pair of Vedic statements whose meaning is not fit to be combined or (mutually) reconciled स्मृतेः प्रमाणत्वात्तन्मूलभूतश्रुतेः क्वचित्कदाचित्केनापि पुरुषेणानुपलम्भस्य निष्प्रमाणत्वादनुपसंहरणीयार्थश्रुतिद्वयस्य च ग्रहणाग्रहणवत्संभवात् किंनिमित्तमननुष्ठानम् VīraMi.(Paribhāṣā.) 28.25.

**अनुपसंहरत्** (an-upasaṁharat) *adj.* not completing or concluding परस्याः पूजाया अपरपूजापरापरपूजे प्रत्यङ्गत्वं मन्यमानः परपूजामनुपसंहरन्नेवापरां पूजां परां च पूजां तन्त्रेणाह SetuBa. 277.2.

**अनुपसंहर्तृ** (an-upasaṁhartṛ) *m.* one who does not club together (many attributes in Brahman) युक्त एव ब्रह्मादीनां बहुगुणोपसंहारः । बहुगुणोपसंहारेण तेषामनुपसंहर्तृभ्यो विलक्षणफलसद्भावात् TattvPrakā. 166A.13 (*on* iii. 3.11)

**अनुपसंहार** (an-upasaṁhāra) *m.* **1Ai** non-inclusion (of all members of a class), non-comprehension 'पृथिवी धातुः कतमः' इत्यधिकृत्याह 'केशा रोमाणी'ति । सन्ति च तत्रान्येऽपि रूपादयः । एवमत्रापि यथाप्रधानं निर्देशः स्यात् । अनुपसंहार एषः AbhidhKoBh. 136.21 (*on* 3.28); **1Aii** (Log.) absence of inclusion (or of knowledge of negative invariable concomitance leading to a type of fallacy) व्यतिरेकव्याप्तिग्रहविरोधी दोषः अनुपसंहारः MaṇiKa. 50.1; cf. **अनुपसंहारिन् ii**; **1B** not combining together, absence of bringing together, non-reconciliation (यागविषये स्वर्गस्य) निमित्तत्वे च यावज्जीवश्रुत्युपसंहारे तदानर्थक्यम्, अनुपसंहारे त्वेतस्याः (कामश्रुतेः आनर्थक्यम्) BhāvanāVi. 72.4; वीर्यसंभृत्यादीनां शाण्डिल्यविद्यादिषु अनुपसंहारः BrahmSūBh.(Śaṅ.) 652.15 (*on* iii. 3.23); तस्मात् क्रियान्तरविशिष्टस्य (स्वस्य) अनुपसंहारादकृत्स्नो हि सः (जीवात्मा) BṛĀraUBh. 104.7 (*on* i. 4.7); तत्रानुपसंहारोऽश्रुतत्वात् BrahmSūBh.(Bhā.) 179.2 (*on* iii. 3.10); VedāntKau. 306.13 (*on* iii. 3.10); युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् BrahmSūBh.(Ma.) 53B.9 (*on* iii. 3.10); 'आत्मेत्येवोपासीते'त्यनुपसंहारे प्रमाणम् BrahmSūBh.(Ma.) 54A.11 (*on* iii. 3.16); विद्याभेदे सत्यनुपसंहार उक्तः PrakaVi. 847.16; VedāntKau. 313.13 (*on* iii. 3.21); न च निषेधानन्त्यादनुपसंहारः VedāntKa. 446.17 (*on* iii. 3.33); आत्मेत्येवोपासीतेत्युपसंहारवदनुपसंहारस्यापि विहितत्वात् TattvPrakā. 165A.10 (*on* iii. 3.7); न च सर्वगुणोपसंहारे विधिरस्तीत्युक्तमिति । अनुपसंहारेऽपि मोक्षप्राप्तेरुक्तत्वात् TattvPrakā. 167B.11 (*on* iii. 3.15); ब्रह्मस्वरूपनिरूपकधर्मव्यतिरिक्तानां तत्तद्विद्याप्रतिनियतगुणानाम् … विद्यासु परस्परमनुपसंहारः PāñcRāRa. 8.14; अन्येषामनुपसंहारे हेत्वन्तरमप्याह AṇuBh. 220.3 (*on* iii. 3.15); 224.23 (*on* iii. 3.21); तृतीयपादे संजातशिवप्राप्तिकुतूहलस्योपासकस्य गुणोपसंहारानुपसंहारादिर्निरूपितः ŚivārkaMaDī. ii. 196.17 (*on* iii. 1.1); कर्मणाम् … तेषां कल्पसूत्रकारैरनुपसंहारेण … एकैकस्य कर्मणो द्वौ द्वौ प्रयोगाविष्टावेव SetuBa. 201.7; **2** non-accomplishment (of a rite) वर्त्माद्यधिकरणता …। साहवनीय उपादीयमाने नोपसंह्रियेत । अनुपसंहारे च प्रयोगवचनो बाध्येत ŚābaBh. 2071.7 (*on* x. 8.16); **3A** absence of withdrawal (into the self) वागादिप्रकृतौ प्राणशब्दो घ्राणेऽवगम्यते । (प्राणस्य) मुख्यस्यानुपसंहारान्न तद्वाचक इष्यते BṛĀraUBhVā. ii. 1.259; **3B** absence of withholding (a general statement), non-restriction or non-limitation यज्ञे निमित्ते अर्वागपि संवत्सरात्प्राप्त्यर्थोऽयम् (नियमः) इति केचित् । अन्ये तु पूर्वस्यैव राजश्रोत्रिययोरुपसंहारमाहुः । अनुपसंहारे हि न त्वयज्ञ इति नोपपद्यते ManuBh. i. 258.17 (*on* 3.110); 'यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति' सामान्यतोऽग्नीषोमीयात्प्राचीनेषु उपांशुत्वविधेरपि … उपसन्मात्र उपसंहारः प्रसज्येत । न च यत्किंचिदिति वीप्सानुसारेण अनुपसंहारः UpaParā. 30.22.

**अनुपसंहारप्रमाण** (anupasaṁhāra-pramāṇa) *n.* (textual) authority, i.e. evidence for not combining together उपसंहारानुपसंहारप्रमाणमाह । आध्यानाय प्रयोजनाभावात् BrahmSūBh.(Ma.) 54A.6 (*on* iii. 3.15)

**अनुपसंहारप्रमाणत्वानुपपत्ति** (anupasaṁhārapramāṇatvānupapatti) *f.* non-justification of the state of being the (textual) authority for not combining together आत्मशब्दोक्तगुणानां सर्वोपास्यत्वाभावादनुपसंहारप्रमाणत्वानुपपत्तिः TattvPrakā. 169A.2 (*on* iii. 3.18)

**अनुपसंहारप्रमाणत्वोक्ति** (anupasaṁhārapramāṇatvokti) *f.* statement regarding the state of being the authority for not combining together आत्मशब्दोक्तगुणानां सर्वोपास्यत्वाभावादनुपसंहारप्रमाणत्वोक्तिरयुक्ता TattvPrakā. 170A.9 (*on* iii. 3.22)

**अनुपसंहारप्रमाणोक्ति** (anupasaṁhārapramāṇokti) *f.* statement regarding the authority for not combining together अन्यथानुपसंहारप्रमाणोक्तिर्व्याहन्यते TattvPrakā. 168B.11 (*on* iii. 3.17)

**अनुपसंहारसिद्ध्यर्थम्** (anupasaṁhārasiddhyartham) *adv.* for the sake of establishing non-combination अन्यत्रानुपसंहारसिद्ध्यर्थं मन्त्रकर्मणाम् ।… विद्याङ्गत्वं निरस्यते VedāntKa. 421.2 (*on* iii. 3.25)

**अनुपसंहाराभिप्राय** (anupasaṁhārābhiprāya) *m.* [Inst.] with the intention of not combining together, i.e. non-reconciliation वार्त्तिके … संमार्गः, सिद्धान्ते त्वाहवनीयादीनां सर्वेषामिति प्रयोजनमुक्तम्, तत् …

कल्पसूत्रकारवचनमूलभूतश्रुत्या ··· अनुपसंहाराभिप्रायेण MīmāKau. iii(2). 80.7 (*on* ii. 1.12)

**अनुपसंहारार्थकत्व** (anupasaṁhārārthaka-tva) *n.* the state of having non-combination as the purport अतद्धर्मत्वबोधनस्यानुपसंहारार्थकत्वे कानुपपत्तिः AṇuBh. 212.6 (*on* iii. 3.3)

**अनुपसंहारार्थम्** (anupasaṁhārārtham) *adv.* for the sake of non-combination उक्तन्यायेनान्यत्रापि तदुपसंहारस्य वक्तुं शक्यत्वात् । न चानुपसंहारार्थमेवातद्धर्मत्वं बोध्यत इति वाच्यम् AṇuBh. 212.3 (*on* iii. 3.3)

**अनुपसंहारित्व** (anupasaṁhāri-tva) *n.* the state of being (a fallacious reason called) *anupasaṁhārin* सपक्षविपक्षवृत्तित्वमुभयव्यावृत्तत्वमनुपसंहारित्वं चानुमितिविरोधि TattvCin. ii(1) 802.2; स हेत्वभिमतोऽनुपसंहारी, स च अन्वयेन व्यतिरेकेण वा सर्वस्य पक्षत्वे दृष्टान्ताभावात् ··· साध्यसाधनसाहचर्याज्ञानात्तस्य विरुद्धत्वाज्ञानदशायामनुपसंहारित्वेनेष्टत्वात् TattvCin. ii(1). 839.1; सर्वपक्षकत्वम् अनुपसंहारित्वम् Tarkāmṛ. 19.12.

**अनुपसंहारित्वप्रतिसंधान** (anupasaṁhāritva-pratisandhāna) *n.* ascertainment of the state of being *anupasaṁhārin* अनुपसंहारित्वप्रतिसंधाने यदि व्याप्तिग्रहस्तदा अनुमितिरेव TattvCin. ii(1). 841.1 (comm. अनुपसंहारित्वस्य दोषरूपस्य 'प्रतिसंधाने' निश्चये)

**अनुपसंहारिन्** (an-upasaṁhārin) *adj.* (used as noun) inconclusive (name of one of the three varieties of *savyabhicāra* or *anaikāntika hetvābhāsa* 'discrepant reason') **i** which has neither positive nor negative pervasion or example (हेत्वाभासाः) अनैकान्तिकाः ··· मुख्यतः षडेव ··· अन्तिमस्तु पक्षमात्रधर्मत्वात् अनुपसंहार्येव NyāyVār. 171.4 (*on* i. 2.45); अनुपसंहारी पक्ष एवोभयसाहचर्येण कोटिद्वयोपस्थापकः TattvCin. ii(1). 797.2 (comm. सर्वमनित्यं प्रमेयत्वादित्यनुपसंहारीत्यर्थः); व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वभिमतोऽनुपसंहारी स चान्वयेन व्यतिरेकेण वा सर्वस्य पक्षत्वे दृष्टान्ताभावात् ··· साध्यसाधनसाहचर्याज्ञानात् तस्य विरुद्धत्वाज्ञानदशायामनुपसंहारित्वेनेष्टत्वात् TattvCin. ii(1). 838.3; वस्तुमात्रपक्षकोऽनुपसंहारी TarkKau. 14.3; 13.14; अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी TarkSaṁ.(A.) 45.3; **ii** which has unnegatable property (as its *sādhya*) and has no negative pervasion or example अनुपसंहारी ··· केवलान्वयिधर्मावच्छिन्नपक्षको वा TattvCin. ii(1). 838.3; ii(1). 834.3; तृतीयोऽनुपसंहारी Upask. 157.4 (*on* iii. 1.15) (Vṛtti व्यतिरेकव्याप्त्यभावश्चानुपसंहार्यम्); तथैवानुपसंहारी केवलान्वयिपक्षकः BhāṣāPa. 74; 72; अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः । अनेन व्यतिरेकव्याप्तिज्ञानप्रतिबन्धकः क्रियते SiddhāMu. 42.9 (*on* 72); व्यतिरेकव्याप्तिग्रहविरोधी दोषः अनुपसंहारः, तद्वान् अनुपसंहारी MaṇiKa. 50.2; 48.8.

**अनुपसंहारिपूर्वपक्ष** (anupasaṁhāripūrvapakṣa) *m.* name of a section of Tattvacintāmaṇi dealing with *prima facie* view regarding *anupasaṁhārin* अथानुपसंहारिपूर्वपक्षः TattvCin. ii(1). 832.1; ii(1). 837.4.

**अनुपसंहारिभेद** (anupasaṁhāri-bheda) *m.* a type of the discrepant reason, viz. *anupasaṁhārin* सव्यभिचारस्त्रिविधः – साधारणासाधारणानुपसंहारिभेदात् Tarkāmṛ. 19.9; TarkSaṁ.(A.) 44.20.

**अनुपसंहारिसिद्धान्त** (anupasaṁhārisiddhānta) *m.* name of a section of Tattvacintāmaṇi dealing with the established view regarding *anupasaṁhārin* अथानुपसंहारिसिद्धान्तः TattvCin. ii(1). 838.1; ii(1). 841.5.

**अनुपसंहार्य** (an-upasaṁhārya) *adj.* (used as noun) **A** (Log.) not to be concluded अथ स्वावयवेनासंयोगित्वात् सोऽप्यनुपसंहार्यः नास्यान्वयो न व्यतिरेक इति NyāyVār. 235.1 (*on* ii. 1.31); ईदृश एव चासाधारणो हेतुः वैश्चिवैयायिकैः अनुपसंहार्य इत्युक्तम् DharmoPra. 222.18; अनुपसंहार्यस्यापि सपक्षविपक्षशून्यत्वात् KhaṇḍanKhā. 852.19; अनुपसंहार्यो नासत्सपक्षविपक्षः सिद्ध्यसिद्धिविरोधात् TattvCin. ii(1). 832.2; ii(1). 835.2; cf. **अनुपसंहारिन् i**; **B** not to be combined तृतीयाध्यायस्य···तृतीये तु (पादे) ब्रह्मोपासनैकत्वनानात्वपूर्वकमुपासनेषूपसंहार्यानुपसंहार्यगुणविशेषाः प्रपञ्चिताः VedāntDī. 9.14 (*on* i. 1.0); ब्रह्मस्वभावभूतोपसंहार्यधर्मचिन्तानन्तरमस्वभावस्यानुपसंहार्यस्याप्यर्थादिपरत्वरूपधर्मस्य ब्रह्मप्रतिपत्त्युपायत्वचिन्तनादवान्तरसंगतिः VedāntKa. 409.16 (*on* iii. 3.14)

**अनुपसंहार्यत्व** (anupasaṁhārya-tva) *n.* the state of not being fit to be combined कोऽत्रानुपसंहार्यत्वशङ्कावकाशः ŚivārkaMaDī. ii. 299.18 (*on* iii. 3.10); अनुपसंहार्यत्वेन यत्कथनं तत्तु ··· ब्रह्माप्येवंभूतमेवेति ज्ञापनाय AṇuBh. 226.14 (*on* iii. 3.23)

**अनुपसंहार्यव्याप्ति** (anupasaṁhāry-avyāpti) *f.* non-pervasion of *anupasaṁhārin* अनुपसंहारिहेतौ अव्याप्तिः — नापि सपक्षविपक्षगतसर्वसपक्षविपक्षव्यावृत्तान्यतरत्वं, व्यर्थविशेषणत्वात् अनुपसंहार्यव्याप्तेश्च TattvCin. ii(1). 809.1.



**अनुपसंहित** (an-upasaṁhita) *adj.* who is not connected, i. e. independent सहायाननुरक्तांस्तु यतेतानुपसंहितान् । परस्परमसंत्रुष्टान् MahāBhā. xii. 112.23.

**अनुपसंहृत** (an-upasaṁhṛta) *adj.* **A** not drawn together, i. e. not referred to, not included उपनयं चान्तरेण साध्येऽनुपसंहृतः साधको धर्मो नार्थं साधयेत् NyāyBh. 51.9 (*on* i. 1.39); अन्यगता गुणाः ··· प्रयोगवचनेनानुपसंहृता नाङ्गं भवन्तीति नानुष्ठेयाः TantrVā. 648.6 (*on* ii. 4.20); एकैकं प्राणं चक्षुरिति वा विशिष्टमनुपसंहृतेतरविशिष्टक्रियात्मकम्, मनसा अयमात्मेत्युपास्ते ··· न स जानाति ब्रह्म BṛĀraUBh. 105.8 (*on* i. 4.7); यदि परिपूर्णेऽपि प्रयोगेऽभ्युदयाय गुणान्तरोपसंहारः, नित्यवत्करणं त्वनुपसंहृतैरप्युपपन्नमित्यविरोधः BālaKrī. i. 11.16 (*on* 1.4–5); **B** not withheld नैमित्तिकविधिभिः सामान्यतो विहितानामुपसंहारः । अनुपसंहृतानां तु पक्षाणां सर्वकर्मसु सर्वेषां विकल्पः BhāṭṭCan. 113.22 (*on* xvi. 3.2)

**अनुपसंहृतत्व** (anupasaṁhṛta-tva) *n.* the state of not being drawn (i. e. absorbed) within (one's own self) गिरिनद्यादिकं च परमेश्वरेणानुपसंहृतत्वाद्यथापूर्वमवतिष्ठमानं सत् सर्वैरन्यैः प्राणिभिर्विस्पष्टमवलोक्यते JīvanVi. 16.8.

**अनुपसंहृतवाक्यशेषा** (anupasaṁhṛta-vākyaśeṣā) *adj.* (*f.*) who has not withheld the remaining sentence नववधूः ···। आलीजनेष्वनुपसंहृतवाक्यशेषा भर्तुश्चकार सविशेषकुतूहलत्वम् HarVi. 26.80; Subhāṣi. 2054.

**अनुपसंहृति** (an-upasaṁhṛti) *f.* non-inclusion 'नैकत्र कात्स्न्र्यं धर्मस्ये'ति, तद् वैतानिकानेककर्मकलापानभिधानात् ···। अखिलपरोक्षार्थाश्रयित्वेन कात्स्न्र्यमिति चेत्, तदपि कर्मवेधाद्यनुपसंहृतेरसिद्धम् BālaKrī. i. 11.9 (*on* 1.4-5)

**अनुपसंहृतोक्ति** (anupasaṁhṛtokti) *adj.* who has not completed the speech इति ब्रुवाणेऽनुपसंहृतोक्तौ निशाचरे तत्र निशाचरेन्द्रः ।··· बभाण Rāgh. 9.52.

**अनुपसंह्रियमाण** (an-upasaṁhriyamāṇa) *adj.* **A** which is not being withdrawn (from applying) पुरुषप्रधानः संस्कारो न शक्नोत्यनुपसंह्रियमाणस्तस्याधिकारं व्यावर्तयितुम् ŚābaBh. 1379.2 (*on* vi. 1.32); **B** which is not being included आख्यातार्थे पुनः प्रधाने न तस्याकृतिलक्षितेन संबन्धः । तत्र तदाकृतिकान्तरेऽनुपसंह्रियमाणेऽपि कृतमेव प्रधानम् ŚābaBh. 1442.2 (*on* vi. 4.23); **C** which is not being accomplished वर्त्मादिहोमसंबन्धोऽत्र विधीयते । स च प्रधानभूतः, न होमः । तस्मिन्ननुपसंह्रियमाणे न यथाश्रुतं कृतं स्यात् ŚābaBh. 2072.5 (*on* x. 8.16)

**अनुपसंक्रम्य** (an-upasaṅkramya) *ger.* not having reached, i. e. connected with सविशेषणौ च विधिनिषेधौ न कथञ्चिद्विशेषणमनुपसंक्रम्य स्याताम् KhaṇḍanKhā. 347.3.

**अनुपसंक्रान्त** (an-upasaṅkrānta) *adj.* not transferred to न च तेऽपि (गुणाः) द्रव्यान्तरवर्तिनो द्रव्यान्तरेऽनुपसंक्रान्ता विशिष्टप्रत्ययानुत्पादयन्ति Kiraṇā. 123.3.

**अनुपसंख्यातत्व** (anupasaṅkhyāta-tva) *n.* the state of not being reckoned with सादृश्यं न तावद् द्रव्यगुणकर्मणामन्यतमम्, पदार्थपण्डितैस्तेष्वनुपसंख्यातत्वात् Kāśi. iii. 142.24 (*on* 5(6).17)

**अनुपसंख्यान** (an-upasaṅkhyāna) *n.* non-mention, absence of description अस्तिक्षीरा समासश्च तेन सद्धाचिनेष्यते । अस्तिक्षीरा गौरिति तिङन्तसमासत्वेनानुपसंख्यानात् TantrVā. 252.21 (*on* i. 3.26)

**अनुपसंगृह्य** (an-upasaṅgṛhya) *ger.* not having taken together with प्रणीताः ··· स्फ्येनोपसंगृह्य हरत्यनुपसंगृह्य वा BhārŚS. i. 18.6.

**अनुपसंग्रह** (an-upasaṅgraha) *m.* **A** non-inclusion येषु देवताशब्दो मन्त्रब्राह्मणे श्रूयते, अग्निर्देवता, वातो देवता ··· इत्येवमादिषु ··· तत्राप्यहरादीनामनुपसंग्रह एव ŚābaBh. 1927.12 (*on* x. 4.23); प्रयोगवचनेनानुपसंग्रहात् तल्लक्षण एव बाधः NyāyRaMā. 179.12; 180.11; परस्परप्रतिषेधरूपत्वात्तयोः ··· भावाभावयोः स्वरूपस्यानुपसंग्रहे प्रत्येकमव्याप्तिर्मिलितस्यासंभव एव KhaṇḍanKhā. 849.10; प्रतियोगिन्यवच्छिन्ने न स्यादनुपसंग्रहः NyāyKu. 180.15; धर्मस्य च चतुर्दशेति संख्यानिर्देशः ··· उपलक्षणमात्रतया ···। अन्यथा रामायणशिष्टाचारादीनामप्यनुपसंग्रहादप्रामाण्यापत्तेः VīraMi.(Paribhāṣā.) 24.1; **B** non-collection कर्तारः ··· संगृहीतसाधनाः ··· दृश्यन्ते, ब्रह्म चासहायं तवाभिप्रेतम्, तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत BrahmSūBh.(Śaṅ.) 330.10 (*on* ii. 1.24)

**अनुपसंजातबाधभ्रम** (anupasañjātabādha-bhrama) *m.* delusion of the sublation which has not (yet) arisen बाधकाभावश्चानुपसंजातबाधभ्रमे समानः NyāySu.(Ja.) 43B.6 (*on* i. 1.1); प्रमाणानाम् ··· याथार्थ्यलक्षणम् ··· किं वा विसंवादाभावेन ··· न ··· अनुपसंजातबाधभ्रमेष्वपि प्रामाण्यनिश्चयापातात् Vādā. 121.5.

**अनुपसंजातविरोधावस्था** (anupasañjātavirodhāvasthā) *f.* condi-

tion wherein contradiction has not emerged न केवलमनुपसंजातविरोधावस्थायां श्रुतत्वादयमुपक्रमे(?मो)ऽनुग्राह्यः NyāySu.(So.) 1501.6 (*on* iii. 4.35)

**अनुपसंजातविरोधित्व** (anupasañjātavirodhi-tva) *n.* the state of having contradiction which has not arisen बलवच्चोपक्रमे यद्विज्ञानमनुपसंजातविरोधित्वात् BrahmSūBh.(Bhā.) 48.7 (*on* i. 2.24); अनुपसंजातविरोधित्वेन पूर्वबलीयस्त्वात् पत्न्येव गृह्णाति Subodhi. 69.21 (*on* 2.136); प्रत्यक्षस्य जात्यैव प्राबल्यम् …। उपक्रमाधिकरणन्यायेनोपसंहारादुपक्रमस्यैवानुपसंजातविरोधित्वाच्च Nyāyāmṛ. 100B.7; 267A.8; भेदश्रुतिरेव प्रबला अनुपसंजातविरोधित्वात् Nyāyāmṛ. 588B.11; अनुपसंजातविरोधित्वात् पूर्वनिमित्तकमनुष्ठेयम् UpaParā. 5.21; लोकप्रसिद्धेरेव प्राबल्यम् ।… अनुपसंजातविरोधित्वेन लौकिक्येव बलीयसी MīmāKau. i. 74.15 (*on* i. 3.9); एकवाक्यत्वाद्यभावान्नानुपसंजातविरोधित्वादिकमपि BhāṭṭDī. iv. 2.1 (*on* x. 5.1); अनुपसंजातविरोधित्वात् मुख्यधर्मस्य प्राबल्यम् MayūMāli. 863.7 (*on* xii. 2.7)

**अनुपसत्ति** (an-upasatti) *f.* non-attendance समासादः । पर्षदुपस्थानम् ।… अनुपसत्तिः पर्षदनुपस्थानम् BālamBha. iii. 159.8 (*on* 3.262)

**अनुपसदम्** (anupasadam) *adv.* without the *iṣṭi*-rite called *upasad* अनुपसदमग्निं चिनोति द्व्यहम् ĀpaŚS. xvi. 35.8; xxiii. 11.4 (*but* VIŚVA. अनूपसदम्, also GARBE's Index); आहत्यविधानादनुपसदमेवाग्निश्चेयः स्यात् SaṅkarKāBh. 69.1 (*on* ii. 1.49); केषांचिदनुपसदमग्निचयनम् ŚivārkaMaDī. ii. 366.24 (*on* iii. 3.45)

**अनुपसंतानर्गावानम्** (anupasantānaṛgāvānam) *adv.* without continuity (of one *ṛc* with another) and reciting the (entire) *ṛc* in one breath (with no stop in the middle) प्रगाथान्तेषु चानुपसंतानर्गावानमेकपदाः शंसेत् ĀśvaŚS. II. ii. 2.20.

**अनुपसन्न** (an-upasanna) *adj.* **A** who has not approached or sat near (the teacher for instruction) 'सर्वेषामेव शर्म भवानी(v. l. °नि)ति'। ते तथेत्युक्त्वा तूष्णीमतिष्ठन्नानुपसन्नेभ्य इति GopBr. i. 1.28 (20.12); नैकपदानि निर्ब्रूयात् । .. नानुपसन्नाय Nir. 2.3 (46.1); ते (महर्षयः) तथेत्युक्त्वा तूष्णीमतिष्ठन्नानुपसन्नेभ्य इत्युपोपसीदामेति नीचैर्बभूवुः PraṇU². 36.9; ŚāṭyāU. 33; तच्च अनुपसन्नाय न वक्तव्यम् BṛĀraUBh. 228.12 (*on* ii. 1.14); अधीयानेनानुपसन्नेन यदि नाशितम् ManuBh. i. 133.9 (*on* 2.110); **B** who is not closely connected अनुपसन्ने समानग्रामिणे संनिहिते एकाहः ।… सद्यःशौचम् BālamBha. iii. 75.23 (*on* 3.74)

**अनुपसन्नशूद्राभिप्राय** (anupasannaśūdrābhiprāya) *adj.* intended in the case of a *śūdra* who has not (duly) approached यत्तु … शूद्रस्य व्रतोपदेशनिषेधपरं वचनं, — तदनुपसन्नशूद्राभिप्रायम् Mitā. 451.6 (*on* 3.262)

**अनुपसमुह्य** (án-upasamuhya) *ger.* not having contracted (the wings) प्रजापतिः … स एतं वयोविधमात्मानमपश्यदग्निं तं व्यधत्त सोऽनुपसमुह्यानुपाधायोदपिपतिषत् ŚatBr. X. ii. 1.1.

**अनुपसंपन्न** (an-upasampanna) *adj.* **i** unordained यः पुनर्भिक्षुरनुपसंपन्नाय पुद्गलाय पदशो धर्मं वाचयेत् पायन्तिका PrātiSū. 20.17; MahāVyu. 261.58 [DBHS.]; **ii** who has not (yet) completed (Vedic study) मातुलो मातुः सोदर्यः श्रोत्रियश्चानुपसंपन्नः, अनाश्रितप्रातिवेश्यादिः BālaKrī. ii. 8.17 (*on* 3.22)

**अनुपसंप्राप्त** (an-upasamprāpta) *adj.* unapproached तत्तु सूर्योदयं यावत्सर्वं परिसमुत्सुकम् । तस्थावनुपसंप्राप्तं किंस्विदित्युपशङ्कितम् Rāmā. ii. 1503*(4)

**अनुपसरणीय** (an-upasaraṇīya) *adj.* unapproachable अनासाद्यं दानैरनुपसरणीयं च तपसा । भवन्तं पश्यन्तः … कृतार्था जाताः स्मः NīlaVi. 43.9.

**अनुपसर्ग** (an-upasarga) *adj.* **1** devoid of any addition (of cakes to other deities) अथ सवकारीयाग्नेय एवाष्टाकपालोऽनुपसर्गः (पुरोडाशः) ĀpaŚS. xix. 27.13; HirŚS. xxii. 6.23 (792.2); **2A** devoid of a prefix (mainly a verb-root) अनुपसर्गात्षकारः APrāti. 205; अनुपसर्गाद्वा P. i. 3.43; SaraKaṇṭhā.(Gr.) ii. 4.35; अनुपसर्गाज्ज्ञः P. i. 3.76; SiddhaHe. iii. 3.96; अनुपसर्गाज्जानातेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति KāśiVṛ. *on* i. 3.76; यसोऽनुपसर्गात् P. iii. 1.71 = ŚākaṭāVyā. iv. 3.24 = SaraKaṇṭhā.(Gr.) i. 3.114; गदमदचरयमश्चानुपसर्गे P. iii. 1.100; Kātan. iv. 2.13; ŚākaṭāVyā. iv. 3.69; SaraKaṇṭhā.(Gr.) i. 3.142; SiddhaHe. v. 1.30; मिश्रं चानुपसर्गमसंधौ P. vi. 2.154; iii. 1.138; iii. 1.142; iii. 3.75; viii. 2.55; (समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात्) अनुपसर्गाद्वा Vār. 4 *on* P. i. 1.20; Vār. 2 *on* P. viii. 4.16; Vār. 1 *on* P. iii. 1.100; Vār. 2 *on* P. iii. 1.135; Vār. 1 *on* P. iii. 2.135; चिण्णमुलोरनुपसर्गस्य (धातोः) Vār. 1 *on* P. vii. 1.69; Vār. 1 *on* P. vi. 2.47; अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम् KāśiVṛ. *on* ii. 3.60; क्रमोऽनुपसर्गात् ŚākaṭāVyā. i. 4.21 = SiddhaHe. iii. 3.47; क्त्योरनुपसर्गस्य ŚākaṭāVyā. iv. 1.127 = SiddhaHe. iv. 1.92; ज्वलह्वलह्मलनमोऽनुपसर्गा वा SaraKaṇṭhā.(Gr.) i. 1.202; SiddhaHe. iv. 2.32; DhātuPra. 1.822 (58.22); PrakriKau. ii. 324.1; पष अनुपसर्गे । पषयति । उपसर्गात्तु प्रपषति DhātuPra. 10.305 (148.9); अपवादः समीपमेवानुपसर्गे कं बाधते PariVṛ.(Sī.) 89.19; अनुपसर्गाद्यसो वा श्यन् स्यात् कर्तरि सार्वधातुके ।… अनुपसर्गात् किम् । प्रयस्यति PrakriKau. ii. 246.7; ii. 324.3; एतेषां नित्यमित्त्वं प्राप्तम् अनुपसर्गाणां विकल्प्यते Prasā. ii. 324.12; श्रिणीभुवोऽनुपसर्गः इति विधानादनुपसर्गाद्भूधातोः घञ्प्रत्ययेन भाव्यम् ŚivārkaMaDī. i. 126.24 (*on* i. 1.2); ग्लास्नावनुवमां च । अनुपसर्गादेषां मित्त्वं वा स्यात् SiddhāKau. 378A.3 (*on* vii. 4.68) (Tattvabodhinī अनुपसर्गादिति तु षष्ठ्यर्थे पञ्चमीत्येवं क्लेशेन व्याख्येयमिति भावः); 483A.7 (*on* iii. 1.106); आदन्ताद्धातोरनुपसर्गात् कर्मण्युपपदे कः स्यान्नाण् । आतो लोपः, गोदः SiddhāKau. 491A.6 (*on* iii. 2.3); पणबन्धेनैकार्थ्यं संधिस्तत्रागम्यमाने 'मिश्र' इत्युत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तम् LaŚabdeŚe. ii. 5.4; **2B** devoid of a prefix (an object, i.e. action indicated by a verb-root) सोपसर्गं कर्मेति चेत् कर्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म Vār. 2 *on* P. iii. 1.7; **3** free from any trouble or obstacle यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गस्तथायमपि बुद्धेः प्रतिसंवेदी पुरुषः YogBh. 34.10 (*on* 1.29); निर्मृष्टनिखिलप्रपञ्चजालमनुपसर्गमपराधीनप्रकाशमात्मज्योतिः सिद्धं भवति Bhām. 222.10 (*on* i. 3.19); अत एवानुपसर्गः । उपसर्गा जात्यायुर्भोगाः TattvVai. 34.22 (*on* 1.29); गुहायाम् … ब्रह्म … स्वयंप्रकाशमनावरणमनुपसर्गं प्रद्योतते TattvVai. 206.12 (*on* 4.22); *m.* **A** absence of a prefix आतोऽनुपसर्गे कः P. iii. 2.3; iii. 3.24; iii. 3.61; iii. 3.67; इगुपधेभ्य उपसर्गे कविधिर्भेषाद्यर्थः । न वा बुधादीनां दर्शनादनुपसर्गेऽपि Vār. 2 *on* P. iii. 1.135; MahāBh. ii. 92.2 (*on* iii. 1.135); **B** other than a prefix यद्यपि तावदयं पराशब्दो दृष्टापचार उपसर्गश्चानुपसर्गश्चायं तु खलु विशब्दोऽदृष्टापचार उपसर्ग एव MahāBh. i. 279.10 (*on* i. 3.19); उपेत्युपसर्गोऽत्र प्रधानं न । तेनोपसर्गान्तरादप्यनुपसर्गादपि भवति Prasā. ii. 579.13.

**अनुपसर्गग्रहण** (anupasarga-grahaṇa) *n.* **Ai** assumption (by *anuvṛtti*) of *anupasarga* (absence of preposition) वदः सुप्यनुपसर्गग्रहणम् Vār. 1 *on* P. iii. 1.106; MahāBh. ii. 83.19 (*on* iii. 1.106); ii. 107.22 (*on* iii. 2.61); अनुपसर्गग्रहणानुवृत्तिमन्तरेणैवोपसर्गनिवृत्तेः सिद्धत्वादनुवृत्तिप्रदर्शनमपि न युज्यते Pradī. iii. 172A.21 (*on* iii. 2.61); 'अहीने द्वितीया' इति सूत्रादनुपसर्गग्रहणमत्रानुवर्तते LaŚabdeŚe. ii. 1048.6; **Aii** mention of (the word) *anupasarga* (in an aphorism indicating absence of preposition) उत्तरसूत्रे पुनरनुपसर्गग्रहणात् तन्निवृत्तौ तत्संबद्धं विभाषाग्रहणमपि निवृत्तम् Prasā. ii. 503.21; मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम् 'मिश्रं चानुपसर्गमसंधौ' इत्यत्रानुपसर्गग्रहणात् SiddhāKau. 168A.10 (*on* ii. 1.31); उप समीपे उच्चारितं पदमुपपदम् । सामीप्यं च … न त्वानुपूर्व्येव्यवधानम् … 'आतोऽनुपसर्गे' इत्यत्रानुपसर्गग्रहणात् LaŚabdeŚe. ii. 60.7; **Bi** acceptance of the absence of a prefix अनुपसर्गग्रहणे चेह क्रियमाणे प्रवृद्धादिषु खट्वारूढशब्दो न पठितव्यः Pradī. v. 191B.16 (*on* vi. 2.47); **Bii** acceptance of (a word) not having any preposition यदयं 'मिश्रं चानुपसर्गमसंधौ' इत्यनुपसर्गग्रहणं करोति PadMañ. *on* KāśiVṛ. *on* P. ii. 1.31.

**अनुपसर्गता** (anupasarga-tā) *f.* the state of not being a prefix येन क्रियापदाक्षेपः स कारकविभक्तिभिः । युज्यते विधिथा तस्य लिखावनुपसर्गता VākyaPa. 2.202.

**अनुपसर्गत्व** (anupasarga-tva) *n.* the state of not being a prefix न वानुपसर्गत्वात् Vār. 6 *on* P. viii. 3.65; (पर्यागतः कार्श्येन परिकृशः) गम्यमानार्थत्वादप्रयोग एव लोपस्तत्र गमिं प्रति परिरुपसर्गो न तु कृशिमित्यनुपसर्गत्वात्परेर्निष्ठान्त एव कृशशब्दः Pradī. vii. 125.13 (*on* viii. 2.55); LaŚabdeŚe. ii. 786.19; सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्न षः SiddhāKau. 139B.13 (*on* i. 4.94); ऋषभस्य समीपमुपर्षभं तदिच्छति उपर्षभीयतीत्यत्र तु न वृद्धिः । उपेत्यस्यानुपसर्गत्वात् LaŚabdeŚe. i. 105.8.

**अनुपसर्गमिश्र** (anupasarga-miśra) *n.* word *miśra* without any prefix मिश्रं च । तृतीयान्तादुत्तरपदमनुपसर्गमिश्रमन्तोदात्तम् LaŚabdeŚe. ii. 1083.2 (better read अनुपसर्गं मिश्रम्)

**अनुपसर्गवेदिनी** (an-upasargavedinī) *adj.* (*f.*) **1** not knowing (i.e. not used to) any trouble या (अमरावती) … अनुपसर्गवेदिनीभिः … अपरशाब्दिकीभिरिवाकालप्रत्याख्यायिनीभिः वेशविलासिनीभिर्विलासदेवताभिरिव संचरन्तीभिः … अमरभवनभित्तिचित्रेष्वादर्शयति दिव्यसीमन्तिनीजनम् AvantiKa. 7.3; **2** (anupasarga-vedinī) proclaiming or announcing (even) without prefixes or affixes, AvantiKa. 7.3.

**अनुपसर्गार्थ** (anupasargārtha) *adj.* **i** meant for the absence of a prefix अन्तः । अस्मात्परं वनमन्तोदात्तम् । अन्तर्वणो देशः । अनुपसर्गार्थमिदम् SiddhāKau. 654B.13 (*on* vi. 2.179); **ii** meant for a non-preposition

'सुपि स्थः' इत्यतोऽनुवर्तमानं सुब्ग्रहणं 'सत्सूद्विष —' इति सूत्रस्थोपसर्गग्रहणेनानुपसर्गार्थमिति ज्ञापितम् Prasā. i. 6.3.

**अनुपसर्जन** (an-upasarjana) *n.* **A** non-subordinate or principal nominal stem, other than *upasarjana* (subordinate) अनुपसर्जनात् P. iv. 1.14; MahāBh. i. 87.25 (*on* i. 1.27); ii. 205.7 (*on* iv. 1.14); अकारान्तकारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ। यद्येवमतियुष्मत् अत्यस्मदिति न सिध्यति। प्रश्लिष्टनिर्देशोऽयम् MahāBh. i. 87.26 (*on* i. 1.27); एवमप्यौपगवी म.णविका अनुपसर्जनादितीकारो न प्राप्नोति। मा भूदेवमण्योऽनुपसर्जनमिति अणन्तादनुपसर्जनादित्येवं भविष्यति MahāBh. ii. 249.15 (*on* iv. 1.93); स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः SiddhāKau. 115B.5 (*on* vii. 3.47); अनुपसर्जनादित्यनुवृत्तमप्यत्र न संबध्यते LaŚabdeŚe. i. 374.8; **B** non-subordination, principal sense उपसर्जनमिति नायं संबन्धहेतुः तथा अनुपसर्जनमित्यपि Bṛha. 92.1 (*on* i. 1.5); युवतीनां स्मरणमलंकार्यस्यान्यस्याभावादनुपसर्जनम् RasGaṅ. 293.17; तस्य च संख्याबोधकशब्दपरत्वात् ··· अनुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव न LaŚabdeŚe. i. 304.9; ननु उपसर्जनमनुपसर्जनमिति नायं संबन्धहेतुः BālamBha. i. 203.25 (*on* 1.89); *adj.* which is not subordinate नैवं विज्ञायते अस्त्यस्मात्पतिशब्दात्पूर्वः सोऽयं सपूर्वः सपूर्वात्पतिशब्दादनुपसर्जनादिति MahāBh. ii. 214.22 (*on* iv. 1.34); ii. 215.1 (*on* iv. 1.34); नैवं विज्ञायते करणं पूर्वमस्मात्क्रीतशब्दात्सोऽयं करणपूर्वस्तस्मात्करणपूर्वात्क्रीतशब्दादनुपसर्जनादिति MahāBh. ii. 221.10 (*on* iv. 1.50); iii. 20.21 (*on* vi. 1.13); अनुपसर्जनात्रित इतीकारो यथा स्यात्। दितोऽनुपसर्जनाद्भवत्युगित उपसर्जनाच्चानुपसर्जनाच्च MahāBh. iii. 237.21 (*on* vii. 1.1); संप्रसारणाभावार्थमनुपसर्जनस्त्रीप्रत्ययविषयस्तदादिनियमप्रतिषेधः Pradī. ii. 55A.33 (*on* i. 2.48); न स्त्रीप्रत्यये चानुपसर्जने इति लभ्यते PariVṛ. (Sī.) 51.10; टिदादिभ्योऽनुपसर्जनेभ्यः स्त्रियां ङीप् स्यात् PrakriKau. i. 334.6; वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् स्यात् SiddhāKau. 122A.13 (*on* iv. 1.39); स्त्रीप्रत्यये चानुपसर्जने न PariVṛ.(Nī.) 15.12; LaŚabdeŚe. i. 374.8.

**अनुपसर्जनग्रहण** (anupasarjana-grahaṇa) *n.* acceptance of being other than *upasarjana* (subordinate) अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात् Vār. 1 *on* P. iv. 1.14; MahāBh. ii. 205.11 (*on* iv. 1.14); तस्मादण एव अनुपसर्जनग्रहणं विशेषणम् Pradī. iv. 130A.13 (*on* iv. 1.93)

**अनुपसर्जनता** (anupasarjana-tā) *f.* the state of not being subordinate (in sense) अर्थसंबन्धे हि यस्मादर्थात्काङ्क्षैव हेतुः, नोपसर्जनता अनुपसर्जनता वा Bṛha. 92.6 (*on* i. 1.5); अनुपसर्जनतया पदेनोपस्थितत्वात् तेनैवान्वयः MayūMāli. 73.4 (*on* i. 4.6)

**अनुपसर्जनत्व** (anupasarjana-tva) *n.* the state of not being *upasarjana* (subordinate) न वा समासस्यानुपसर्जनत्वाज्जातिवाचकत्वाच्च शब्दस्य सामान्येन ङीब्विधानम् Vār. 7 *on* P. iv. 1.14; Vār. 5 *on* P. iv. 1.14; समासस्यानुपसर्जनत्वात्तस्य च जातिवाचकत्वाच्छब्दस्य सामान्येन ङीष् भविष्यति MahāBh. ii. 207.1 (*on* iv. 1.14); ii. 206.25 (*on* iv. 1.14); एवं चानुपसर्जनत्वादभेदोपचारेण प्रमेयवृत्तित्वादप्राप्तो ह्रस्व इति इत्त्वं विधीयते Pradī. ii. 59B.11 (*on* i. 2.50); अनुपसर्जनत्वं चाप्रथमानिर्दिष्टत्वादनेकविभक्तित्वाच्च PadMañ. *on* KāśiVṛ. *on* P. ii. 4.2; उत्तरपदावयवत्वस्य भाष्यासंमतत्वेन टितोऽनुपसर्जनत्वान्ङीप् LaŚabdeŚe. ii. 71.6.

**अनुपसर्जनभाव** (anupasarjana-bhāva) *m.* the nature of being non-subordinate ये गुणाः स्वशब्दैर्द्रव्यं प्रति अनुपसर्जनभावापन्ना एव प्रत्याय्यन्ते तैः सह षष्ठी समस्यते Nyās. i. 383.7 (*on* ii. 2.9)

**अनुपसर्जनलक्षण** (anupasarjana-lakṣaṇa) *adj.* characterised by what is not subordinate यदि तर्ह्युपसर्जनान्यप्येवंजातीयकानि भवन्ति तित्तिरिकल्माषी कुम्भकपाललोहिनी अनुपसर्जनलक्षण ईकारो न प्राप्नोति MahāBh. i. 397.16 (*on* ii. 1.55); LaŚabdeŚe. i. 394.18; i. 408.10; इह तर्हि पालाशी समिदित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति। मा भूदेवमण्योऽनुपसर्जनमिति। अणन्तादनुपसर्जनादित्येवं भविष्यति MahāBh. ii. 325.12 (*on* iv. 3.155)

**अनुपसर्जनष्यङन्त** (anupasarjanaṣyaṅ-anta) *adj.* (word) ending with *ṣyaṅ* which is not subordinate उपसर्जने ष्यङि न संप्रसारणम्।··· अनुपसर्जनष्यङन्तस्य तु स्यादेव Prasā. i. 657.19.

**अनुपसर्जनादि** (anupasarjanādi) *adj.* non-subordinate etc. न ह्यनुपसर्जनादीनामाधानेनैकवाक्यता संभवति TantrVā. 599.9 (*on* ii. 3.4)

**अनुपसर्जनाधिकार** (anupasarjanādhikāra) *m.* (Gr.) governing rule about *anupasarjana* (other than subordinate) अनुपसर्जनाधिकारे जातेर्ङीब्विधाने सुपर्ण्या उपसंख्यानम् Vār. 6 *on* P. iv. 1.14; विभक्त्युदात्तार्थं तद्वचनमिति चेत् किं गौरादिषु पाठेन प्रयोजनम्। अनुपसर्जनाधिकाराच्चातिमहतीत्यत्र गौरादिङीषभावादुगिल्लक्षणो ङीप् कर्तव्यः Pradī. iv. 32B.14 (*on* iv. 1.1); v. 161B.13 (*on* vi. 1.173); गौरादिङीषोऽप्यनुपसर्जनाधिकारात् Pradī. v. 297B.23 (*on* vi. 4.22); अजादिभ्य इति व्याख्यानेऽमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च ··· तदन्तविधिसंभवः LaŚabdeŚe. i. 367.9; i. 399.11.

**अनुपसर्जनार्थ** (anupasarjanārtha) *adj.* **1** which is for the sake of non-subordination टित्करणमनुपसर्जनार्थम् Vār. 8 *on* P. vii. 1.1; **2** having the sense which is not subsidiary, i.e. pre-eminent भावशब्दोऽनुपसर्जनार्थः PramāMī. 18.22 (*on* i. 1.23)

**अनुपसर्जनावस्थ** (anupasarjanāvastha) *adj.* which is in the state of not being subordinate बहुव्रीहिणैकदेशस्योपसर्जनस्यापि 'कस्य' इति साकाङ्क्षस्यानुपसर्जनावस्थस्य वाक्यभेदाद्विशेष्यता NayaVi. 116.1 (*on* i. 1.5)

**अनुपसर्जनीकार्य** (an-upasarjanīkārya) *adj.* not fit to be made subordinate (आक्षेपः) विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्य अशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव यः KāvyPra. 654.3.

**अनुपसर्जनीभूत** (an-upasarjanībhūta) *adj.* which has not become *upasarjana* (i.e. not subordinate) अपरे त्वाश्रयाद्विभक्तं द्रव्यं प्रति अनुपसर्जनीभूतं गुणमाहुर्यथा चन्दनस्य गन्धः Nyās. i. 383.5 (*on* ii. 2.9)

**अनुपसर्पण** (an-upasarpaṇa) *n.* absence of moving to यथा मरुमरीचिकानिचये समुपजातसलिलविभ्रमस्य पुंसोऽनुपसर्पणात्सलिलस्वभावविविक्तमरुस्थलीनिर्भासि ज्ञानं नोपजायते TattvSaṁPañ. 791.13 (*on* 3018)

**अनुपसर्पत्** (an-upasarpat) *adj.* **A** not moving near, i.e. running away जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन। इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा AnargharRā. 7.51 (comm. अनुपसर्पतेव पलायमानेनेव); **B** not moving near (openly) विराटः ··· हायनमेकमनुपसर्पद्भिः स्वैः स्वैर्वेषैः ··· समुपास्यमानस्य युधिष्ठिरस्य चरणनलिनयोः पलितंभावुकेन मौलिना मरालयुवकेलिमुल्लयांचकार BhārCam. 7.70.3)

**अनुपसाद्य** (án-upasādya) *ger.* not having put down सोऽनुपसाद्य पूर्वामाहुतिं जुहोति ŚatBr. II. iii. 1.17; ŚatBr.(K.) I. iii. 1.10.

**अनुपसृत** (an-upasṛta) *adj.* not gone together, i.e. not combined समूढः पुञ्जिते मुग्धे सद्योजातेऽनुपप्लुते (v.l. °सृते) ŚabdaRaSaK. 103.4.

**अनुपसृत्य** (an-upasṛtya) *ger.* not having approached मृगयां गच्छतामुना नीतः ··· लज्जया पित्रोरन्तिकमनु(प)सृत्य तीर्थयात्राप्रसङ्गेन दिगन्तराण्यभ्रमत् AvantiKa. 10.8.

**अनुपसृष्ट** (an-upasṛṣṭa) *adj.* [*f.* -ā] **1A** free from *upasarga* (liturgically interpolated or added syllables in the original *ṛc* while chanting) अथापि शश्वदेना अनुपसृष्टा आथर्वणिका अधीयते NidāSū. 39.22 (2.12); **1B** not having a prefix (generally a verb-root) इणोऽनुपसृष्टस्य Kātan. iii. 4.71 (Vṛtti इणो धातोरनुपसृष्टस्यैवाशिषि ये दीर्घो भवति); अनुपसृष्टयोगेतिनिवृत्तौ धारणे च शक्तिरभिव्यज्यते NyāyRa. 925.21 (*on* 7.287); YuktiSneha. 159.8 (*on* i. 1.7); अध्याद्युपसृष्टशीङ्प्रभृतीनामेव च तादृशार्थे निरूढलक्षणा, न त्वनुपसृष्टानाम् VyutpaVā. 144.8; (धातोः) अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते SiddhāKau. 376B.1 (*on* vii. 4.68); 492A.4 (*on* iii. 2.8); **2Ai** not brought in contact, not affected भग्निकर्दमाख्यौ (विसर्पौ) पुनरनुपसृष्टे मर्मणि ··· साधारणक्रियाभिः ··· प्रशान्तिमापद्येयाताम् CaraS. vi. 21.42 (1941 Ed.); **2Aii** not touched, not disturbed दस्युव्यालमृगरोगादिभिरनुपसृष्टपूर्वेणनगरनिगमजनपदानाम् ··· विषयाणां पतिना ··· सेतुं विधाय ··· दर्शनतरं कारितम् EI. viii. 43.10; **2B** not possessed of any flaw or blackness, pure लौगाक्षिः — 'अनुपसृष्टं सुवर्णं धारयेत्'। अनुपसृष्टं कालिकारहितम् Aparā. 176.19 (*on* 1.133)

**अनुपसेचन** (an-upasecana) *adj.* not having any onpouring स य ओदनस्य महिमानं विद्यात्। नाल्प इति ब्रूयान्नानुपसेचन इति AV. xi. 3.24 (Sāy. अनुपसेचनः उपसिच्यते अनेनेति उपसेचनं क्षीराज्यदध्यादि तद्रहितः); AV.(P.) xvi. 54.10.

**अनुपसेवत्** (an-upasevat) *adj.* not waiting upon, not serving चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः।··· अध्रुवो मित्रसंग्रहः MahāBhā. v. 36.37.

**अनुपसेवन** (an-upasevana) *n.* **A** absence of the act of practising स्नानाभ्यङ्गोत्सादनादीनाम् ··· सर्वशोऽनुपसेवनमयोगः CaraS. i. 11.37; **B** non-indulgence धर्मार्थकामानामहितानामनुपसेवने ··· प्रयतितव्यम् CaraS. i. 11.46; (क्रिमीणाम्) चिकित्सितम् ··· निदानोक्तानां भावानामनुपसेवनम् CaraS. iii. 7.14.

**अनुपसेवमान** (an-upasevamāna) *adj.* not indulging in शरीरम् ··· अनुवर्तते यावदायुःसंस्कारात्। संस्कारमहितमनुपसेवमानस्य CaraS. i. 11.35.

**अनुपसेवित** (an-upasevita) *adj.* [*f.* -ā] **A** not made use of पश्य भल्लातकान्फुल्लान्नरैरनुपसेवितान् Rāmā. ii. 50.7; **B** not resorted to अतः परमिमां प्रज्ञां प्राज्ञैरनुपसेविताम्।··· नाभिगन्तुं त्वमर्हसि Rāmā. ii. 2237*(11)

**अनुपसेविन्** (an-upasevin) *adj.* not waiting upon, not serving

चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः (v.l. °सेविनः)।… अध्रुवो मित्रसंग्रहः MahāBhā. v. 36.37.

**अनुपसेव्य** (an-upasevya) *ger.* **1** not having stayed at or resorted to अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य (v.l. अनुपसेव्य) च।… दरिद्रो नाम जायते MahāBhā. iii. 80.39; **2** not having served न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च। धर्मो वै वेदितुं शक्यः MahāBhā. iii. 149.26; न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य च। धर्मार्थौ वेदितुं शक्यौ MahāBhā. v. App. I. 1(12); युगक्षये…। सर्वः सर्वं विजानाति वृद्धाननुपसेव्य च HariVaṁ. 116.31; BrahmP. 230.32.

**अनुपस्कार** (an-upaskāra) *adj.* not having any addition, non-elliptical साकाङ्क्षमनुपस्कारम् … व्याकुर्यात्कः प्रियं वाक्यम् Kirātā. 11.38 (Malli. अध्याहारदोषरहितम्)

**अनुपस्कारम्** (anupaskāram) *adv.* in the manner which is bereft of addition देवी …। नृपं प्रसन्ना रभसादुपस्कुर्वाणानुपस्कारमिदं बभाषे DvyāśraKā. 10.72.

**अनुपस्कृत** (an-upaskṛta) *adj.* [*f.* -ā] [P. vi. 1.139; MugdhaBo. 15.4(120.15)] **1Ai** blameless न हीदानीं सहाया मे परीप्सन्त्यनुपस्कृताः। श्रेयो हि पाण्डून् मन्यन्ते MahāBhā. vii. 125.26; देवी स्मितज्योतिरुपस्कृतेनोपस्कुर्वती द्यामनुपस्कृतं तम्।… बभाषे DvyāśraKā. 10.72; **1Aii** doubtless सुव्रताः सत्यवादिनः। लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः MahāBhā. xii. 11.25 (BhārBhāDī. निःसंशयाः); **1Aiii** flawless एषोऽनुपस्कृतः प्रोक्तो योधधर्मः सनातनः ManuSm. 7.98 (*but* ManvaVi. अनुपस्कृतोऽधुनासंस्कृतः परंपरागतः इदानीमपि तदवस्थ एव वर्तमानः); ManuBh. ii. 32.25 (*on* 7.98); **1Aiv** not tarnished, genuine सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः पुत्राः … अनुपस्कृता रतिश्च KāmSū. 190.10 (3.1); अनुपस्कृता रतिरकृत्रिमा। विश्वासातिशययोगात् JayaMa. 190.17 (*on* 3.1); अनुपस्कृता रतिः स्यात्पक्षाधिक्यं च जायते तस्मात् KandaCū. iii. 1.9; **1Bi** not cultivated प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतम् MahāBhā. xiii. 65.25; **1Bii** not prepared (by cooking or boiling) मुन्यन्नानि … मांसं यच्चानुपस्कृतम्।… प्रकृत्या हविरुच्यते ManuSm. 3.257; क्षीरमनुपस्कृतं मात्रावच्छीतं काले काले पिबेत् CaraS. iv. 8.32 (1941 Ed.); अनुपस्कृतं कार्यान्तरार्थत्वेनापक्वम् Aparā. 500.28 (*on* 1.239); ManvaVi. 433.4 (*on* 3.257); **1Biii** not refined, not decorated भाण्डमद्भिरेव विशुध्यति … राजतं चानुपस्कृतम् ManuSm. 5.112; (काञ्चनम्) अनुपस्कृतं ताम्रादिना यन्न संस्पृष्टम् Aparā. 254.9 (*on* 1.183); भज वत्स … राज्यसंपदम् …। भवतश्चिराय विरहार्तिमज्जै रनुपस्कृतानुपचितैर्व्यनक्ति या Surath. 14.25; अनुपस्कृतमनुत्कीर्णकाञ्चनाब्जादि ManvaVi. 664.10 (*on* 5.112); राजतमनुपस्कृतं रेखादिगुणान्तराधानरहितम् ManvaMu. 217.24 (*on* 5.112); **1Biv** who is not prepared or treated with अविरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताः SuśruS. iv. 33.30; न च द्रागौषधं दद्यात् स्नेहस्वेदानुपस्कृते BhelaS. 24.4 (1.14); न विरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताः SiddhYo. 74.25; **1C** free from defilement (decay etc.) 'अनुपस्कृतम्' अविकृतम्। अप्रशस्तविकाररहितम्, अप्रतिषिद्धं च CaturCin. iii(1). 541.22; अनुपस्कृतमविकृतं पूतिगन्धादिरहितं मांसम् ManvaMu. 137.6 (*on* 3.257); VīraMi.(Āhnika.) 326.2; **2A** not expecting any reward, selfless, unrequited ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ManuSm. 10.62; ViṣṇuSm. 16.18; अनुपस्कृतो धनमगृहीत्वा ManuBh. ii. 347.22 (*on* 10.62); अनुपस्कृतः स्वकीयदृष्टकार्याभिसंधिरूपोपस्कारशून्यः ManvaVi. 1309.26 (*on* 10.62); **2B** undifferentiated, pure अर्धमात्रा तु या दिव्या मकारोत्था प्रकाशिनी। वासुदेवमयीं शक्तिं विद्धि तामनुपस्कृताम् AhirbuS. 51.33 [not requiring any evident object, APTE]

**अनुपस्कृतविद्य** (an-upaskṛtavidya) *adj.* whose knowledge has not been influenced ततोऽनन्तरमाचार्यं परीक्षेत, तद्यथा … अनुपस्कृतविद्यमनहंकृतम् CaraS. iii. 8.4; iii. 8.17.

**अनुपस्कृति** (anupaskṛti) *n.* (Dramat.) name of a type of side-glance विकारा दृष्टिसंश्रयाः।… अनुल्बणमसंभ्रान्तमव्याजमनुपस्कृति। … वीरस्यैते प्रकीर्तिताः BhāvPra.(Śā.) 119.14(5); प्रौढरागारुणापाङ्गं यत्स्यात्तदनुपस्कृति BhāvPra.(Śā.) 124.6(5)

**अनुपस्कृत्य** (an-upaskṛtya) *ger.* not having supplemented or added वृत्तिस्तत्राजहत्स्वार्था जहत्स्वार्थापि वर्तताम्। प्रधानमनुपस्कृत्य न तदर्थो निव(? वं)र्तते SaraKaṇṭhā. 563.16.

**अनुपस्तब्धा** (an-upastabdhā) *adj.* (*f.*) not based, not supported तस्य हि समाधौ वशित्वम्। क्लेशैश्चानुपस्तब्धा संततिः AbhidhKoBh. 44.6 (*on* 2.10)

**अनुपस्तीर्ण** (an-upastīrṇa) *adj.* not spread over, not bestrewn अनुपस्तीर्णे शय्यासने HirŚS. xxvii. 4.154 (208.7) = ĀpaDS. ii(9). 22.23; यद्यनुपस्तीर्णे स्थण्डिले उपविशेत्तदनुमन्त्रयते BhārGS. 2.29 (63.3)

**अनुपस्तीर्णशायिन्** (anupastīrṇa-śāyin) *adj.* sleeping on what is not bestrewn, i.e. on bare ground तं वै सदा कामचरमनुपस्तीर्णशायिनम्।… प्रशंसन्ति दिवौकसः MahāBhā. xii. 170.13; अनुपस्तीर्णशायिनम्।… तं देवा ब्राह्मणं विदुः MahāBhā. xii. 261.29.

**अनुपस्तीर्णासनशायिन्** (anupastīrṇāsanaśāyin) *adj.* sitting or having a bed, i.e. sleeping on what is not bestrewn कृष्णं चेदनुपस्तीर्णासनशायी स्यात् HirŚS. xxvi. 1.76 (15.2)=ĀpaDS. i(1). 3.4.

**अनुपस्तीर्य** (án-upastīrya) *ger.* not having spread below अनुपस्तीर्य वाज्यं द्विर्हविषोऽवदायोपरिष्टादाज्यमभिघारयति ŚatBr.(K.) II. vii. 2.9.

**अनुपस्तृणत्** (an-upastṛṇat) *adj.* not spreading (clarified butter) below प्राशित्रम् …। अनुपस्तृणन्नभिघार्य … सादयति VārāŚS. I. iii. 5.2.

**अनुपस्थकृत** (an-upasthakṛta) *adj.* not seated with a particular position of lap, i.e. cross-leggedly आचार्यमुपासीत …। अनुपस्थकृतः HirŚS. xxvi. 2.37 (30.9)=ĀpaDS. i(2). 6.14.

**अनुपस्थातृ** (an-upasthātṛ) *adj.* who does not present himself क्रियाद्वेषिणोऽनुपस्थातुश्च हीनतायास्तेनैव (कात्यायनेन) विवरणं कृतम् VīraMi. (Vyavahāra.) 73.2.

**अनुपस्थान** (an-upasthāna) *n.* **1** absence of praying or worshipping अनुपस्थानं वा प्रातः ŚāṅkhāŚS. ii. 13.9; अथ धिष्ण्यानुपतिष्ठेरन् … अनुपस्थानं शाण्डिल्यः LāṭyāŚS. ii. 7.3; DrāhyŚS. v. 3.4; **2** non-acceptance, refusal सोऽयं माम(v.l. ममा)नुपस्थानाद्व्यक्तं नैराश्यमागतः Rāmā. vi. 80.43; **3A** not approaching i.e. non-attainment पञ्च तं नाभ्यवर्तन्त विपरीतेन कर्मणा। वेदो धर्मः क्षमा सत्यं श्रीश्च नारायणाश्रया। स तेषामनुपस्थानात् सक्रोधो दानवेश्वरः HariVaṁ. 38.2; MatsyaP. 178.2; PadmP. v. 38.246; **3Bi** not presenting (oneself) निवेदितस्याकथनमनुपस्थानमेव च। पक्षार्थिदोषौ BṛhaspaSm. 41.36; आह्वानादनुपस्थानात् सद्य एव प्रहीयते KātySm. 199; SmṛtiCan. iii. 107.1; VīraMi.(Vyavahāra.) 73.5; अङ्गिरसः प्राप्तपापस्य परिषदोऽनुपस्थानात्पूर्वं भोजनं निषिद्धम् BālamBha. iii. 203.34 (*on* 3.327); **3Bii** absence of being present or referred to, i.e. not known भावना त्वनुपस्थानाद्विद्यमानावधार्यते TantrVā. 621.17 (*on* ii. 3.24); ŚāstrDī. 175.3 (*on* ii. 3.11); कार्यस्यात्र — बोधकेनानुपस्थानात् NyāyKu. 5.21; **3C** absence, not being present कोटिद्वयस्य चादृष्टस्यानुपस्थाने कः संदेहार्थः NyāyKuA. i. 66.6; इतरत्र पुरुषार्थपक्षे क्रतुवैगुण्याभावात् क्रतोश्चानुपस्थानात्तत्समाधानापेक्षा नास्ति TantrRa. 18.7; श्रूयमाणं च पदं नान्विताभिधायकम्। तदानीं प्रतियोगिनोऽनुपस्थानात् TantrRaha. 35.16; साधारणधर्मस्योपमाप्रयोजकत्वसंभवात्तद्वारणाय पाण्डुरत्वादिधर्मो वाच्यतां नीयते।… न नीयते च क्वचित्, वक्तुरन्यस्यानुपस्थानात् RasGaṅ. 295.5; **4** non-application अथ निमित्तसप्तम्यामप्यस्यां कस्मादेव व्यवहितस्य प्रतिषेधो लभ्यते। तत्र तस्मिन्नित्यादिकायाः परिभाषाया अनुपस्थानात् Nyās. i. 46.9 (*on* i. 1.5); तिङ्भाविनः (लकारस्य) कृत्संज्ञानिषेधात् कर्तरि कृदित्यस्यानुपस्थानात् स्वार्थे भावे विधानं प्राप्नोति Pradī. iii. 273B.23 (*on* iii. 4.69); Prasā. ii. 6.8; Pradī. vi. 47.8 (*on* vii. 1.37); सर्वेषां च स्वरूपेणानुक्रियमाणत्वात् लक्षणप्रतिपदोक्तयोर्निरनुबन्धकेति च परिभाषयोरनुपस्थानम् PadMañ. *on* KāśiVṛ. *on* P. i. 1.20; *on* P. i. 2.29; एवं च सति सन्नियोगपरिभाषाया अनुपस्थानान्नकारादेशो न निवर्तते PariVṛ.(Sī.) 133.6; यत्र कार्यविधौ अचोरानन्तर्येणाश्रयणम्, तत्र निषेधादनुपस्थानं परिभाषायाः PāṇiTaVāNaMā. 27.7; 69.23; 116.22; **5** name of a variety of (nine) expiations (*lit.* non-presentation) (prescribed for one to be debarred from observing the *mahāvratas*) प्रमादबहुदृष्टापराधप्रत्यनीकवृत्तिविरुद्धदृष्टीनां यथाक्रमं छेदमूलभूम्यनुपस्थापन(v. l. °स्थानं)-पारञ्चिकविधानं क्रियते TattvāRāVār. ix. 22.10; cf. **अनवस्थाप्य** *n.*, **अनुपस्थापन B** (*but* JainaL. one of the two types of *parihāra* 'expiation')

**अनुपस्थानादिदोषप्रसङ्ग** (anupasthānādidoṣa-prasaṅga) *m.* undesired occasion of the defects, viz. not being present etc. ननु च महाप्रलयसर्जने नैव पण्डितैरिष्येते स्रष्टुरनुपस्थानादिदोषप्रसङ्गादिति वदद्भिः BālaKrī. ii. 33.8 (*on* 3.60(? 70))

**अनुपस्थानीय** (an-upasthānīya) *adj.* not to be worshipped सत्यपीन्द्राभिधानसामर्थ्ये वचनाभावादनुपस्थानीय इन्द्र इत्येव गम्यते ŚābaBh. 844.15 (*on* iii. 3.14)

**अनुपस्थापकत्व** (anupasthāpaka-tva) *n.* the state of not being that which causes (something) to be present, i.e. known ननु होमत्वसामान्यस्यातिप्रसङ्गादनुपस्थापकत्वेऽपि विधीयमानानां होमविशेषाणामेवोपस्थापकत्वमस्तु MayūMāli. 696.16 (*on* x. 4.1); 697.1 (*on* x. 4.1)

**अनुपस्थापन** (an-upasthāpana) *n.* **A** non-presentation (अतिचाराः) अनादरः। स्मृत्यनुपस्थापनं च स्मृताः सामायिकव्रते YogŚā. 3.115; अनादरः स्मृत्यनुपस्थापनं चेति पोषधे YogŚā. 3.117; न च नाम तत्संनिधापयति अन्यत्र

